वृत्तिप्रतिबिंबितचैतन्येनैव तदज्ञाननिवृत्तिवत्तत्प्रकाशस्याप्युपपत्तौ तदधिष्ठानचैतन्याभिव्यक्त्यादिकल्पनायोगादित्युक्तत्वात्।

किंच, वृत्तेस्तदाकारत्वं न तावत्तद्विषयत्वम्। त्वयैव निरासात्। नापि तस्मिन् चैतन्योपरागयोग्यतापादकत्वं वा, तदज्ञानाभिभावकत्वं वा। तयोस्तदाकारत्वप्रयोज्यत्वेन तत्त्वायोगात्। नापि घटादिवत् पृथुबुध्नोदराद्याकारत्वम्। साकारवादापातात्। संस्थानहीनगुणकर्मजात्यभावादिवृत्तेस्तदाकारत्वायोगाच्च। घटपटौ, पटतद्रूपे, घटतदभावावित्यादिसमूहालंबनवृत्तेस्सर्वविषयकयोगिनिष्ठवृत्तेश्च युगपद्विरुद्धनानाकारत्वायोगाच्च। चरमसाक्षात्कारस्य निराकारब्रह्माकारत्वायोगाच्च। तस्मात्पक्षत्रयमप्ययुक्तम्।

किंच न तावद् विषयदृग् जीवचैतन्यमिति पक्षो युक्तः। तथा हि– तत्र विषयाध्यासो न तावद्विशिष्टे ब्रह्मणि, चिन्मात्रे वा। दृग् दृश्ययोराध्यासिकसंबंधासिद्धेः। नापि जीवे, तस्यावच्छिन्नस्य स्वयं कल्पितत्वात्। अत एव विषयदृग् ब्रह्मचैतन्यमिति पक्षो न युक्तः। सविशेषस्य ब्रह्मणोऽपि कल्पितत्वात्। शुद्धस्य चाऽसंसारमावृतत्वेन जगदान्ध्यापातात्। अनवच्छिन्नस्याऽवृतत्वेऽपि घटाद्यवच्छिन्नं वृत्त्या प्रकाश्यत इति चेन्न। अवच्छिन्नस्य कल्पितत्वेनात्माश्रयापातेन च घटाद्यनधिष्ठानत्वेनाध्यासिकसंबंधस्यातंत्रत्वात्। विशिष्टज्ञानेऽधिकप्रकाशेऽपि चरमवृत्तिविषयस्य विशेष्यस्य प्रकाशेन तद्वैयर्थ्याच्च। न ह्यखण्डार्थपरवेदान्तजन्यायां तस्यां भावोऽभावो वा विशेषणमुपलक्षणं वा प्रकारः प्रकाशते। अन्तःकरणावच्छिन्नस्य जीवत्वे त्वन्मते तस्य सुषुप्त्यादावभावेन कृतहान्याद्यापाताच्च।

किंचोपरागार्थत्वपक्षेऽपि चितः स्वतो वृत्तिमात्रोपरक्तत्वं न तावद्दर्पणे मुखस्येव प्रतिबिम्बितत्वम्। अनुद्भूतरूपांतःकरणे शब्दान्यप्रतिबिंबनोपाधिताया अचाक्षुषे च चैतन्ये प्रतिबिम्बनस्य चायोगात्। नापि मूषास्थद्रुतसुवर्णादिवत् तदात्मना विकृतत्वम्, चितो निर्विकारत्वात्। नापि गोत्वादिवत् तदाश्रितत्वं तत्राभिव्यक्तत्वं वा। चित आकाशवत् अनाश्रितत्वात्। उपरागार्थत्वपक्षे चितोऽनावृतत्वेन सर्वत्राभिव्यक्तत्वाच्च। नापि घटाकाशादिवत् तदन्तःस्थत्वम्। आकाशादिवत् सर्वगता चित् स्वतो वृत्त्यन्तःस्था न तु घटाद्यन्तःस्थेत्यस्यायोगात्। नापि प्रभाया रूपं प्रतीव प्रकाशकत्वम्।

प्रभायास्तमोविरोधित्वस्य रूपं प्रतीव गन्धादीन् प्रत्यपि सत्त्वात्। न हि सा गन्धदेशस्थं तमो न निवर्तयति। प्रभायामज्ञानविरोधित्वस्य रूपं प्रत्यप्यभावात्। प्रभाया रूपग्राहिचक्षुस्सहकारित्ववद् गंधादिग्राहिघ्राणादिसहकारित्वस्याभावेऽपि चितो ग्राहकान्तरासहकारित्वेन दार्ष्टांतिकानानुगुण्यात्। तस्माच्चितस्सर्वगतत्वेन सर्वसंबंधाद्रूपादेरिव गुरुत्वादेरप्याश्रयद्वारा साक्षाद्वा चित्संबंधित्वात्, चित्संबंधित्वस्यैव च प्रकाशकत्वात् सर्वप्रकाशो दुर्वारः। ''असंगो ह्ययम्'' इति श्रुतिरीश्वरस्य तत्तत्कृतलेपाभावपरा, ''स यत्तत्र किंचित्पश्यति अनन्वागतस्तेन भवति'' इतिपूर्ववाक्यात्। ''यथाकाशस्थितो नित्यं वायुस्सर्वत्रगो महान्'' इत्यादिस्मृतेश्च।

अपि च वृत्तितः पूर्वमाध्यासिकसम्बन्धोऽस्त्येव, अन्यस्तूपरागो न दृश्यत्वे तंत्रमिति किं तदर्थया वृत्त्या? किं च जीवचैतन्यमसंगं चेद्, ब्रह्मचैतन्यं सुतरां तथेति मानोपाधिकविषयोपरागत्वात् स्वतस्सार्वज्ञ्यं न स्यात्। ननु ब्रह्म सर्वोपादानत्वादुपाधिं विनैव स्वस्वरूपवत् स्वाभिन्नं जगद्भासयतीति चेत्, उपादानत्वं हि न तावद्विशिष्टनिष्ठं परिणामित्वम्। आध्यासिकसंबंधस्यातंत्रत्वापातात्। अनाद्यविद्यादिकं प्रतिं तदभावाच्च। नापि शुद्धनिष्ठमधिष्ठानत्वम्। सार्वज्ञ्यादेर्विशिष्टनिष्ठत्वात्।

आवरणाभिभवार्थत्वपक्षोऽप्ययुक्तः। विवर्ताधिष्ठानचिन्मात्रस्याज्ञानादिसाक्षित्वेन सदा प्रकाशनाद्, अन्यस्य चाज्ञानकल्पितस्याभावात्। किं चाज्ञानस्य नयनपटलवत्पुंगतत्वे, चैत्रस्याज्ञाननाशेऽपि मैत्रस्य तदनाशादप्रकाशो युक्तः। विषयगतत्वे तु चैत्रगतया वृत्त्या अज्ञाने दीपेन तमसीव नाशिते मैत्रस्यापि प्रकाशः स्यात्।

अपि च किं ''आत्माश्रयमात्मविषयं चाज्ञानमन्तरेणानात्मसु प्रतिविषयं भावरूपाज्ञानसद्भावे मानाभावादिति'' विवरणोक्तरीत्याऽज्ञानमेकम्? किं वा ''अनन्तान्येव शुक्त्यज्ञानानि। यद्यनन्तानि शुक्तिज्ञानानि'' इति इष्टसिद्धिरीत्या प्रतिविषयमनेकानि? नाद्यः, शुक्तिज्ञानेनाज्ञाननिवृत्तौ सद्य एव मोक्षापातात्। अनिवृत्तौ रूप्यादेस्सविलासाविद्यानिवृत्तिरूपबाधायोगात्। नन्वस्मिन्पक्षे शुक्तिज्ञानेन रूप्यादेः

स्वकारणे प्रविलयमात्रं क्रियते मुद्गरप्रहारेणेव घटस्य, न त्वज्ञानं निवर्तते, ब्रह्मज्ञानेन तु विरोधित्वादज्ञानमेव निवर्तत इति चेन्न। ज्ञानस्याज्ञानद्वारैवान्य-विरोधित्वेनाज्ञानमनिवर्त्य रूप्यादिनिवर्तकत्वायोगात्। शुक्तिज्ञानेनाज्ञानानिवृत्ता-वभिव्यक्तचैतन्यासंबंधेन भ्रांताविव बाधेऽपि शुक्तेरप्रकाशापाताच्च। न च खद्योतादिप्रकाशैर्महान्धकारस्येवाज्ञानस्यैकदेशेन नाशाद्वा, भीरुभटवदपसरणाद्वा, कटवत्संवेष्टनाद्वा चैतन्यस्याप्येकदेशेन प्रकाश इति युक्तम्। अनाद्यज्ञान-चैतन्ययोर्निरवयवत्वात्। न च मण्यादिना वह्न्यादिगतदाहादिशक्तेरिव शुक्त्यादिज्ञानेनो-विद्यागतावरणशक्तेरभिभवात् तत्तत्प्रकाशः। वृत्त्या च स्वोपादानभूताया अप्यविद्याया अभिभवो वृश्चिकवृक्षादिना गोमयमृदादेरिव युक्त इति वाच्यम्। चक्षुरादिजन्यशुक्तिवृत्ते रूपादिहीनशब्दैकगम्यशुद्धात्माविषयतया तदावरण शक्त्यप्रतिबंधकत्वात्। शुक्ति-वृत्तेस्तदवच्छिन्नचिद्विषयत्वेन तत्प्रतिबंधकत्वे च तयैव तदा शुद्धात्मप्रकाशापातात्। अविद्याकल्पितमप्रसक्तप्रकाशं च जडं प्रति चाविद्याया इवाविद्यागतावरणशक्तेरप्ययोगाद्, अस्वीकाराच्च। जडविशिष्टात्मानं प्रति तत्स्वीकारे च विशेषणानावरक-विशिष्टावरकशक्त्यभिभवस्य विशेष्यावरकशक्त्यभिभवं विनाऽयोगेन शुक्तिवृत्त्यैव तदा शुद्धात्मप्रकाशापातात्। प्रच्युतगोमयत्वाद्यवस्था एव पार्थिवावयवा वृश्चिकाद्युपादानानीति न वृश्चिकादिनोपादानस्वभावाभिभवः। शिष्टमविद्यानिवर्तकभंगे वक्ष्यते।

न च मूलाज्ञानस्यैवावस्थाविशेषा रजताद्युपादानानि शुक्तिज्ञानेन साध्यासं निवर्तंत इति वाच्यम्, तेषामज्ञानविशेषत्वेऽनेकाज्ञानवादापातात्। न चेत्साक्षाज्ज्ञानेन निवृत्तेर्भ्रमोपादानतायाश्चायोगात्। तेषामिव रूप्यस्यैवोपादाननिवृत्तिं विना निवृत्तिप्रसंगाच्च। शुक्त्यज्ञानं नष्टमित्यनुभवविरोधाच्च। द्वितीयेऽप्येकया वृत्त्या किं सर्वतदज्ञानानां निवृत्तिः? उतैकतदज्ञानस्य? आद्ये शुक्तेः पुनः कदाऽप्यप्रकाशो न स्यात्। अन्त्ये तदाऽपि प्रकाशो न स्याद्, एकस्यावरणस्य निवृत्तावपि अन्यस्य सत्त्वात्। अयं च दोषः अवस्थाविशेषपक्षेऽपि योज्यः। कथं च सादिशुक्त्यादेस्तदवच्छिन्नचैतन्यस्य वाऽनाद्यज्ञानविषयत्वम्? निर्विषयस्या-वरणस्यानवस्थानात्। न च पूर्वमनवच्छिन्नावरणमिदानीमवच्छिन्नावरणं जातम्। शुक्तिज्ञानेनैव मोक्षापातात्। एतेन व्यक्तितः पूर्वं जातिरिव विषयात् पूर्वमज्ञानमस्तीति निरस्तम्। प्रतिविषयमनेकाज्ञानांगीकारायोगात्।

यत्तूक्तं कौमुद्यां ज्ञानेन– तत्प्रागभावनिवृत्तावप्ययं विकल्पः समः। ततश्च सत्स्वप्यनंतेष्वज्ञानेषु बहुजनसंकीर्णदेशे वैद्युतनिपातवत्, त्रिदोषहरौषधवच्च ज्ञानमितराज्ञानापसारणेनैकमज्ञानं नाशयतीति, तन्न, न हि मन्मते ज्ञानप्रागभावाः आवरणानि, किंतु दंडप्रागभाववद् हेत्वभावरूपाः। नापि ज्ञानं तन्निवर्तकत्वेन हेतुः, किं तु दण्डादिवत् स्वरूपेणैव। एवं च एको दण्ड इवैकं ज्ञानं स्वसजातीयांतरप्रागभावे सत्यपि स्वकार्यं जनयेदेव। कार्योत्पत्तौ हि कारणसत्ता तंत्रम्, न तु कारणजातीयसर्वप्रागभावनिवृत्तिः, असम्भवात्। त्वन्मते तु वृत्तेरावरण-निवर्तकत्वादेकस्मिन्नज्ञाने निवृत्तेऽप्यन्यस्य यवनिकान्तरवत् सत्त्वात् कालान्तर इव वृत्तिकालेऽप्यप्रकाशः स्यात्। न चाऽलोकाभावस्तम इति मते तमः कुड्यादिवदावरणम्, हेत्वभावरूपत्वात्। नाप्यालोकस्तन्निवर्तकत्वेन ज्ञानहेतुः, किंतु स्वरूपेणैव। नाप्येकैकालोकाभावस्तमः किन्त्वालोकत्वावच्छिन्नतदभावः। न चैकस्मिन्नप्यालोके सति सोऽस्ति। भाविज्ञाननिवर्त्यमज्ञानं त्वेतज्ज्ञानकालेऽप्यस्तीति वैषम्यम्। न चेहाप्यज्ञानसमुदाय एवावरणम्, एकेन च ज्ञानेनैकस्मिन्नज्ञाने निवृत्ते स नास्तीति प्रकाशोपपत्तिरिति वाच्यम्। वृत्तिनाशेऽपि समुदायाभावस्य सत्त्वेन सदा प्रकाशापातात्। अयुक्तं चामूर्तानामज्ञानानामपसारणम्। तस्मादनुकूलतर्कहीना मिथ्यात्वहेतवः। इति प्रतिकर्मव्यवस्थाभंगः।

## श्रीमधुसूदनसरस्वतीविरचिता

## अद्वैतसिद्धिः

ननु– विश्वस्याध्यासिकत्वे प्रातिभासिकस्थल इव विषयेन्द्रियसन्निकर्षाधीनायाः प्रतिकर्मव्यवस्थायाः अनुपपत्तिरिति चेन्न। वृत्तेः पूर्वमेव घटादीनां चैतन्येऽध्यासेन प्रातिभासिकस्थलापेक्षया वैलक्षण्यात्। तथा हि– अन्तःकरणं चक्षुर्वत्तेजोवयवि। तच्चेन्द्रियद्वारेण तत्संयुक्तं विषयं व्याप्य तदाकारं भवति। यथा नद्याद्युदकं प्रणाल्या निःसृत्य केदाराद्याकारं भवति। सैव वृत्तिरित्युच्यते। तत्र जीवचैतन्यमविद्योपाधिकं सत् सर्वगतं अन्तःकरणोपाधिकं सत् परिच्छिन्नमिति मतद्वयम्। तत्राऽद्ये विषयप्रकाशकं जीवचैतन्यम्। द्वितीये ब्रह्मचैतन्यम्। आद्ये पक्षेऽपि जीवचैतन्यमविद्यानावृतम्, आवृतं च। तत्राऽद्ये वृत्तिर्जीवचैतन्यस्य

वेषयोपरागार्था। द्वितीये त्वावरणाभिभवार्था। परिच्छिन्नत्वपक्षे तु जीवचैतन्यस्य वेषयप्रकाशकतदधिष्ठानचैतन्याभेदाभिव्यक्त्यर्था। अनावृतत्वपक्षे ह्यनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकारवृत्त्यैवोपरज्यते, न तु विषयैः, असङ्गत्वात्, यथा गोत्वं सर्वगतमपि सास्नादिमद्व्यक्त्याऽभिव्यज्यते, न तु केसरादिमद्व्यक्त्या। यथा वा प्रदीपप्रभा आकाशगन्धरसादिव्यापिन्यपि तानप्रकाशयन्ती रूपसंसर्गितया रूपमेव प्रकाशयति तद्वत्। केवलाग्न्यदाह्यस्यापि अयःपिण्डादिसमारूढाग्निदाह्यत्ववच्च केवलचैतन्याप्रकाश्यस्यापि घटादेस्तत्तदाकारवृत्त्युपारूढचैतन्यप्रकाश्यत्वं युक्तम्। एवञ्चानावृतत्वपक्षे तत्तदाकारवृत्तिद्वारा चैतन्यस्य तत्तदुपरागे तत्तदर्थप्रकाशः। आवृतत्वपक्षे तत्तदाकारवृत्त्या तत्तद्विषयावच्छिन्न-चैतन्यावरणाभिभवेन तत्तदर्थप्रकाशः। अन्तःकरणावच्छिन्नचैतन्यरूपत्वे जीवस्यावच्छेदका-न्तःकरणतत्तद्विषयाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्याभिव्यक्तौ तत्तत्प्रकाशः।

यद्यपि प्रकाशकमधिष्ठानचैतन्यं सर्वगतं जीवचैतन्यं चान्तःकरणावच्छिन्नम्, तथापि चैतन्याभेदेनाभिव्यक्तत्वाद् व्यवस्थोपपत्तिः।

ननु— इयं प्रतिकर्मव्यवस्था नोपपद्यते। तथा हि– स्वसन्निकृष्टेन्द्रियजन्यस्वज्ञानात् पूर्वं घटादेः सत्त्वे प्रतीतिमात्रशरीरत्वव्याप्तकाल्पनिकत्वायोगः। न च काल्पनिकत्वविशेषः प्रातिभासिकत्वादिरेव तद्व्याप्तः, गौरवात्। न च प्रतीतिमात्रशरीरत्वाभावेऽपि ज्ञाननिवर्त्यत्वादिनैव कल्पितत्वं भविष्यति। प्रतीतिमात्रशरीरत्वाभावेन ज्ञाननिवर्त्यत्वा-भावस्याप्यापाद्यत्वात्। प्रतीतेर्विश्वसत्यत्वेन वा मिथ्यात्वेऽपि स्वप्नादिवदिन्द्रिय-सन्निकर्षनिरपेक्षतयैवोपपत्तेः। व्यावहारिकत्वस्यापि भ्रान्तिदैर्ध्यमात्रेणोपपत्तेश्चेति चेत्, मैवम्। प्रतीतिमात्रशरीरत्वस्य कल्पितत्वं न व्याप्यम्। दृग्दृश्यसंबन्धानुपपत्त्यादिसहकृतोक्तानुमानात् प्रपञ्चे कल्पितत्वे सिद्धे प्रत्यभिज्ञाबलाच्च स्थायित्वे तत्रैव व्यभिचारात्। न च– शुक्तिरूप्यादिप्रत्यभिज्ञासाम्यं प्रकृतप्रत्यभिज्ञाया इति — वाच्यम्, प्रतीत्यविशेषेऽपि वणिग्वीथीस्थशुक्तिरूप्ययोः परीक्षितत्वापरीक्षितत्वाभ्यां स्थायित्वास्थायित्वरूपविशेषसंभवात्। तथापि परोक्षवृत्तेरिवापरोक्षवृत्तेरपि प्रकाशकत्वमस्तु, किं तदुपरक्तचैतन्येनेति चेन्न। परोक्षस्थलेऽपि परोक्षवृत्त्युपरक्तचैतन्यस्यैव प्रकाशकत्वात्। अथ तत्राप्यपरोक्षैकरसचैतन्योपरागे विषयापरोक्ष्यप्रसङ्गः, न। विषयचैतन्याभिव्यक्तावेव विषयस्यापरोक्ष्यम्। न च परोक्षस्थले तदस्ति। विषयेन्द्रियसन्निकर्षाभावेन विषयपर्यन्तं वृत्तेरगमनाद्। अन्तरेव तत्र धीसमुल्लासात्।

(अद्वैतसिद्धिः)

अपरोक्षस्थले तु प्रमातृचैतन्याभेदाभिव्यक्ताधिष्ठानचैतन्योपरागो विषयेऽस्ति। तत्र विषयस्य कर्मकारकत्वात्। न च वृत्तिगतविशेषादापरोक्ष्यम्, तत्र हि विशेषो विषयकृतश्चेदोमिति ब्रूमः। जातिकृतस्तु विशेषो न संभवति। सोऽयमिति प्रत्यभिज्ञायां परोक्षत्वापरोक्षत्वयोः संकरप्रसंगाद्, अव्याप्यवृत्तित्वात्, प्रमात्वादिना संकरप्रसङ्गाच्च।

किं च वृत्तेर्जडत्वादेव न प्रकाशकत्वम्। न च– वृत्तावन्तःकरणावृत्त्यपि स्वप्रकाशकत्वं ज्ञानत्ववदिति वाच्यम्। स्वप्रकाशात्मसंबन्धेनैव तस्याः प्रकाशत्वोपपत्तौ तत्स्वप्रकाशत्वे मानाभावात्। किं च घटं जानामीत्यनुभूयमानसकर्मकवृत्त्यन्या संविद् घटप्रकाशरूपा घटः प्रकाशत इत्याकारकानुभवसिद्धैव। न च करोति यतते चलति गच्छतीत्यादावेकार्थत्वेऽपि सकर्मकाकर्मकत्वस्वभावत्वदर्शनाद् अत्राप्येकार्थत्वेऽपि तथा स्यादिति वाच्यम्। तत्राप्येकार्थत्वाभावात्। अनुकूलयत्नो हि कृञ्धात्वर्थः। यत्यर्थस्तु यत्नमात्रम्। एवं गम्यर्थ उत्तरसंयोगफलकः स्पन्दः। चलत्यर्थस्तु स्पन्दमात्रम्। तथा चैकार्थकत्वे कुत्रापि न सकर्मकत्वाकर्मकत्वव्यवस्था। न च– त्वन्मते परिणतेरकर्मकत्वात् परिणतिविशेषभूताया वृत्तेः कथं सकर्मकत्वमिति वाच्यम्। एकस्य हि सकर्मकत्वाकर्मत्वे एकरूपेण विरुद्धे, न तु रूपान्तरेणापि, मानाभावात्। यथा स्थितेरकर्मिकाया अपि अगमनत्वेन रूपेण सकर्मकत्वम्, तथा परिणतित्वेन रूपेणाकर्मिकाया अपि वृत्तेः ज्ञानत्वेन सकर्मकत्वं भविष्यतीत्यदोषः। ननु तर्ह्यतीतः प्रकाशते इति धीर्न स्यात्, इष्टापत्तेः। तत्रापि वृत्तिप्रतिबिम्बितचैतन्यसत्त्वेन प्रकाशत इत्यादिप्रयोगसंभवाच्च। ननु यथा अज्ञानविरोधिवृत्तावनुभवत्वं नास्ति, किंतु अन्यत्र, तथा द्वेषविरोधिवृत्तेरन्यत्रेच्छात्वमित्यपि स्यादिति चेन्न। बाधकसत्त्वासत्त्वाभ्यां विशेषात्। अत्रेव तत्र सकर्मकाकर्मक-विलक्षणक्रियाननुभवाच्च। यथा च वृत्त्यतिरिक्तभानसिद्धिस्तथा स्वयंज्योतिष्ट्वप्रस्तावे विस्तरेण वक्ष्यामः।

ननु– अस्तु चैतन्यस्य विषयप्रकाशकत्वम्, तथाप्यन्तःकरणस्य देहान्निर्गतिः न कल्प्या। परोक्षवैलक्षण्याय विषयस्याभिव्यक्तापरोक्षचिदुपराग एव वक्तव्यः। चिदुपरागादौ चापरोक्षवृत्तेस्तदाकारत्वमेव तन्त्रम्। तस्य च तत्संश्लेषं विनापि परोक्षवृत्तेरिव तत्सन्निकृष्टकरणजन्यत्वेनैवोपपत्तिः, न तु प्रभाया इव वृत्तेस्तदावरणनिवर्तकत्वादौ तत्संश्लेषस्तन्त्रम्। नेत्रान्निर्गच्छद्ध्रुवाद्याकारवृत्त्यैव स्वसंश्लिष्टनेत्रस्थकज्जलादेर्ध्रुवनेत्रमध्यवर्तिनः

(अद्वैतसिद्धिः)

परमाण्वादेश्चापरोक्षत्वापातादिति– चेत्, न। विषयेष्वभिव्यक्तचिदुपरागे न तदाकारत्वमात्रं तन्त्रम्, परोक्षस्थलेऽपि प्रसङ्गात्, किंतु तत्संश्लेषः। प्रभाया विषयसन्निकृष्टतेजस्त्वेना-वरणाभिभावकत्वदर्शनात्। तैजसस्य मनसोऽप्यज्ञानरूपावरणाभिभवाय तत्संश्लेष आवश्यकः। ध्रुवादिदेहमध्यवर्तिपरमाण्वादावतिप्रसङ्गस्तु तदाकारत्वप्रयोजकसामग्रीविरहादेव परिहरणीयः। अन्यथेन्द्रियसन्निकर्षादेर्विद्यमानत्वात् परमाण्वाद्याकरताया दुर्निवारत्वापत्तेः। तस्मात् प्रभावदविशेषान्वयव्यतिरेकाभ्यां यत् क्लृप्तं सन्निकृष्टतेजस्त्वेनावरणाभिभावकत्वं, तस्य तदाकारत्वरूपविशेषापेक्षायामपि न त्यागः। न हि पृथिवीत्वगन्धत्वादिना कार्यकारणभावे आवश्यके अनित्यगुणत्वद्रव्यत्वादिना तत्त्यागः। अत एव– तदितरहेतुसाकल्ये सति घटचक्षुःसन्निकर्षस्यैव घटानुभवजनकत्वम्, न तु घटमनःसन्निकर्षस्य, तद्विलम्बेन तद्विलम्बाभावादिति निरस्तम्। आवरणभङ्गे सन्निकृष्टतेजःकारणत्वावधारणेन तस्याप्या-वश्यकत्वात्। न च स्पार्शनप्रत्यक्षे चक्षुरादिवन्नियतगोलकद्वाराभावेनान्तःकरण-निर्गत्ययोगादावरणाभिभवानुपपत्तिरिति वाच्यम्। सर्वत्र तत्तदिन्द्रियाधिष्ठानस्यैव द्वारत्वसंभवात्। न च अन्तःकरणवृत्तित्वाविशेषादिच्छाद्वेषादिरूपवृत्तयोऽपि देहान्निर्गत्य विषयसंसृष्टा भवन्तीति कथं न स्वीक्रियत इति वाच्यम्। आवरणाभिभावकतेजस्त्वस्य तत्प्रमापकस्य ज्ञानवत् तत्राभावात्।

ननु घटप्रकाशकं चैतन्यमुपदेशसाहस्रचनुसारेण घटाकारधीस्था चिद्वा? परागर्थप्रमेयेष्वित्यादिवार्त्तिकोक्तरीत्या धीप्रतिबिम्बितचैतन्याभेदाभिव्यक्तविषयाधिष्ठानचैतन्यं वा? नाद्यः। आध्यासिकसंबन्धस्यातन्त्रतापातात्। न द्वितीयः। आवश्यकेन विषयसंश्लिष्टवृत्तिप्रतिबिम्बितचैतन्येनैव तदज्ञाननिवृत्तिवत् तत्प्रकाशस्याप्युपपत्तौ किं विषयाधिष्ठानचैतन्याभिव्यक्तिकल्पनेनेति चेन्न। प्रकाशकं तावद् अधिष्ठानचैतन्यम्। तच्चाध्यासेन विषयैः सह साक्षात्संबद्धम्। प्रकाशस्य च स्वयं भासमानस्य स्वसंबद्धसर्वभासकत्वमपि क्लृप्तमेव। एतदनभ्युपगमे कल्पनान्तरे गौरवापत्तेः। तच्चानभिव्यक्तं निर्विकल्पक-रूपमाच्छादितदीपवन्न प्रकाशकमिति तदभिव्यक्तिरपेक्षिता। तच्च परोक्षस्थले वृत्त्यवच्छेदेनैवाभिव्यज्यते। अपरोक्षस्थले तु वृत्तिसम्पर्कादापन्नजाड्याभिभवे विषयोऽभिव्यज्यते, वृत्तेर्विषयपर्यन्तत्वात्। न च परोक्षस्थलेऽप्येवं प्रसङ्गः। द्वाराभावेनान्तःकरणनिर्गत्यभावात्। ननु– वृत्तेस्तदाकारत्वं न तावत्तद्विषयत्वम्। त्वयैव निरासात्। नापि तस्मिन्

(अद्वैतसिद्धिः)

चैतन्योपरागयोग्यतापादकत्वं, तदज्ञानाभिभावकत्वं वा। उभयोरपि तदाकारत्वप्रयोज्यत्वेन तत्त्वायोगात्। नापि घटादिवत् पृथुबुध्नोदराद्याकारत्वं, साकारवादापातात्। संस्थानहीनजातिगुणादिवृत्तेर्निराकारत्वप्रसङ्गाच्च। घटपटाविति समूहालम्बने विरुद्ध-नानाकारत्वापत्तेश्चेति चेन्न। अस्तीत्यादितद्विषयकव्यवहारप्रतिबन्धकाज्ञाननिवर्तनयोग्यत्वस्य, तत्सन्निकृष्टकरणजन्यत्वस्य वा तदाकारत्वरूपत्वात्। तदुभयं च स्वकारणाधीनस्वभावविशेषात्। न चात्माश्रयः। निवृत्तिजननस्वरूपयोग्यतया फलोपधानस्य साध्यत्वेन स्वानपेक्षणात्।

ननु— दृशि विषयाध्यासस्वीकर्तुर्जीवचैतन्यं वा विषयदृक्? ब्रह्मचैतन्यं वा? नाद्यः, जीवे अवच्छिन्नचित्स्वरूपे कल्पिते अध्यासायोगात्। न च विषयदृक् जीवचैतन्यमेव, अध्यासस्तु ब्रह्मचैतन्य इति वाच्यम्। दृश्ययोरेवाध्यासिकसंबन्धापत्तेः, अध्यस्ता-धिष्ठानयोरुभयोरपि दृग्भिन्नत्वात्। अत एव न द्वितीयोऽपि। सविशेषब्रह्मणोऽपि कल्पितत्वेन तत्राध्यासायोगाच्च। न च शुद्धचैतन्यमेकमेव। तदेवाधिष्ठानम्। तत्रावच्छेदकमविद्यादिकं नाधिष्ठानकोटौ प्रविशति। तदेव च जीवशब्देन ब्रह्मशब्देन च व्यपदिश्यते, उपाधिविशेषात्। तथा च जीवचैतन्यस्य दृक्त्वेऽपि दृश्याध्यासो नानुपपन्न इति वाच्यम्। शुद्धचैतन्यस्य आसंसारमावृतत्वेन जगदान्ध्यप्रसङ्गादिति चेन्न। मूलाविद्यानिवृत्त्यभावेन सर्वत आवरणाभिभवाभावेऽपि घटाद्यवच्छेदेनावरणाभिभवाद् आन्ध्यविरहोपपत्तेः। ननु तर्हीदानीमपि ब्रह्मस्फुरणे चरमवृत्तिवैयर्थ्यम्। अधिकभानेऽपि तस्य स्फुरणात्। न ह्यखण्डार्थवेदान्तजन्यायां वृत्तौ भावो अभावो वा विशेषणमुपलक्षणं वा प्रकारः प्रकाशत इति चेन्न। उपाध्यविषयकब्रह्मस्फुरणस्य चरमप्रवृत्तिप्रयुक्तत्वेन तस्याः साफल्यात्। प्रकारास्फुरणं तु तस्याः भूषणमेव। इदानीन्तनस्फुरणस्य सप्रकारकत्वेनोपाधिविषयत्वात्। 'एकधैवानुद्रष्टव्यम्' इत्यादिश्रुतिबलात् स्वसमानविषयज्ञानादेव चाज्ञाननिवृत्तेरखण्डचिन्मात्रज्ञानस्यैव मोक्षहेतुत्वावधारणात्। न च अन्तःकरणावच्छिन्नचैतन्यस्य जीवत्वे सुषुप्तिदशायां तदभावेन कृतहान्याद्यापत्तिरिति वाच्यम्। तदाऽप्यस्य कारणात्मनाऽवस्थानात्। स्थूलसूक्ष्मसाधारण-स्यान्तःकरणस्योपाधित्वात्। 'तदपीतेः संसारव्यपदेशात्' इत्यस्मिन् सूत्रे चायमर्थः स्पष्टतरः। न च वृत्त्युपरक्तत्वं चैतन्यस्य न तत्प्रतिबिम्बितत्वम्। दर्पणे मुखस्येवानुद्भूतरूपेऽन्तःकरणे शब्दान्यप्रतिबिम्बनोपाधिताया अचाक्षुषचैतन्यस्य प्रतिबिम्बनायाश्चायोगादिति वाच्यम्। उद्भूतरूपवत्त्वं न प्रतिबिम्बनोपाधिताप्रयोजकम्। अस्वच्छेऽपि लोष्टादौ प्रतिबिम्बापत्तेः।

(अद्वैतसिद्धिः)

किन्तु स्वच्छत्वम्। तच्च प्रकाशस्वभावत्वेन मनसस्तत्परिणामभूताया वृत्तेश्चास्त्येव, त्रिगुणात्मकस्याप्यज्ञानस्य स्वच्छसत्त्वात्मकताया अपि सत्त्वेन तत्रापि प्रतिबिम्बनोपाधितायाः सत्त्वात्। नापि चाक्षुषत्वं प्रतिबिम्बितत्वप्रयोजकम्। अचाक्षुषस्याप्याकाशादेः प्रति-बिम्बितत्वदर्शनात्।

ननु– चाक्षुषवृत्त्युपारूढचितः कथं रूपमात्रप्रकाशकत्वम्? न च प्रभावन्नियमः, वैषम्यात्। तथा हि– प्रभायां तमोविरोधित्वं रूपं प्रतीव गन्धादीन् प्रत्यपि समम्। न हि सा गन्धदेशस्थं तमो न निवर्तयति। न च अज्ञानविरोधित्वलक्षणं प्रकाशकत्वं रूपं प्रत्येव, न तु रसादीन् प्रतीति वाच्यम्। अज्ञाननिवर्तकत्वस्य वृत्तिभिन्नेऽनङ्गीकारात्। भाया रूपग्राहकचक्षुःसहकारित्ववत् गन्धादिग्राहिघ्राणादिसहकारित्वाभावेऽपि चितो ाहकान्तरासहकारित्वेन तद्वत्सहकारिविलम्बेन विलम्बस्य वक्तुमशक्यत्वात्। तथा च चितः सर्वगतत्वेन सर्वसम्बन्धाद्रूपादिवद् गुरुत्वादेरप्याश्रयद्वारा साक्षाद्वा सम्बन्धित्वात् प्रकाशापत्तिः, वृत्त्युपरक्तचित्सम्बन्धस्यैव प्रकाशकत्वात्। 'असङ्गो ह्ययं पुरुषः' इति श्रुतिस्तु (ईश्वरस्य) तत्कृतलेपाभावपरा, न तु संबंधनिषेधिका। 'स यत्तत्र यत्किञ्चित्पश्यत्यनन्वागतस्तेन भवति' इति पूर्ववाक्यात्, 'यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्' इत्यादिस्मृतेश्चेति चेन्न। प्रभाया रूपरसादिदेशगततमोनाशकत्वं तत्संबंधाद्युज्यते, चैतन्यस्य तु स्वभावतोऽसंबद्धत्वात् दाकारवृत्त्या तदेकसंबन्धस्योपादानात् कथमन्यावभासकत्वप्रसङ्गः? स्वभावतो ह्यसङ्गत्वे असङ्गो ह्ययं पुरुषः' इति श्रुतिः प्रमाणम्। न चैषा लेपाभावपरा। अकर्तृत्वप्रतिपादनाय सबन्धाभावपरत्वात्। यथा चैतत्तथा व्यक्तमाकरे।

एवं स्मृतिरप्येतत् श्रुत्यनुरोधेन नेया। अतः सर्वैः सह सम्बन्धाभावात् न सर्वावभासः, किंतु यदाकारा वृत्तिस्तस्यैव। अत एव 'इदं रजतम्' इति भ्रमे इदमाकारवृत्त्यवच्छिन्नचैतन्येन रजतभानानुपपत्तेः रजताकाराऽप्यविद्यावृत्तिरभ्युपेयते। स्वतश्चिद्बिम्बाग्राहके चैतन्यस्य तदाकारत्वायोगात्। स्वतश्चिद्बिम्बग्राहके त्वन्तःकरणवृत्त्यादौ न वृत्त्यपेक्षेति नानवस्था। न च आश्रयसंबन्धाविशेषेऽपि रूपाकारा वृत्तिर्न गन्धाद्याकारेति कुत इति वाच्यम्। यथा तव चाक्षुषज्ञाने आश्रयसंबन्धाविशेषेऽपि न गन्धो विषयः। तथाऽस्माकमपि चक्षुर्द्वारकवृत्तौ न गन्धाद्याकारत्वम्। इन्द्रियविषयसंबन्धानां स्वभावस्य नियामकस्य समानत्वात्। ननु आध्यासिकसंबन्धो वृत्तेः पूर्वमप्यस्त्येव। अन्यस्तूपरागो न दृश्यत्वे तन्त्रमिति किं तदर्थया

(अद्वैतसिद्धिः)

वृत्त्येति चेन्न। जीवचैतन्यस्याधिष्ठानचैतन्यस्य वाऽभेदाभिव्यक्त्यर्थत्वाद् वृत्तेः। अन्यथा मयेदं विदितमिति संबन्धावभासो न स्यात्।

ननु जीवचैतन्यस्यासङ्गत्वे ब्रह्मचैतन्यं सुतरामसङ्गम्। तथा च मायोपाधिकविषयोपरागत्वात् स्वतः सार्वज्ञ्यं न स्यात्। न च ब्रह्म सर्वोपादानत्वादुपाधिं विनैव स्वस्वरूपवत्स्वाभिन्नं जगदवभासयतीति वाच्यम्। उपादानत्वं न तावद्विशिष्टनिष्ठं परिणामित्वम्। आध्यासिकसंबन्धस्यातन्त्रतापत्तेः। अनाद्यविद्यादिकं प्रति तदभावाच्च। नापि शुद्धनिष्ठमधिष्ठानत्वम्। शुद्धस्य सर्वज्ञत्वसर्वशक्तित्वादेरभावादिति चेन्न। ब्रह्मणोऽसंगत्वेऽपि सर्वेषां तत्राध्यासेन मायोपाधिं विनैव तस्य सर्वप्रकाशकतया सार्वज्ञ्योपपत्तेः। न च शुद्धनिष्ठमधिष्ठानत्वं नोपादानत्वम् सार्वज्ञ्याभावादित्युक्तमिति वाच्यम्। अविद्याकल्पितानां सर्वज्ञत्वादीनां शुद्धे सत्त्वात्। अन्यथा तेषां तटस्थलक्षणत्वमपि न स्यात्। ननु आवरणाभिभवार्थत्वपक्षो न युक्तः। विवर्ताधिष्ठानस्य चिन्मात्रस्याज्ञानादिसाक्षित्वेन सदा प्रकाशनात्। अन्यस्याज्ञानकल्पितस्यावरणस्याभावादिति चेन्न। अज्ञानादिसाक्षित्वेन स्वप्रकाशेऽप्यशनायाद्यतीतत्वादिना प्रकाशाभावादावरणस्यावश्यत्वात्। ननु अज्ञानस्य नयनपटलवत् पुंगतत्वे चैत्रस्याज्ञाननाशेऽपि मैत्रस्य तदनाशाद् अप्रकाशो युक्तः। विषयगतत्वे तु चैत्रार्जितया वृत्त्या अज्ञाने दीपेन तमसीव नाशिते मैत्रस्यापि प्रकाशः स्यादिति चेन्न। चैत्रावरणशक्तेरेवाज्ञानगतायाश्चैत्रार्जितवृत्त्या नाशितत्वेन स पश्यति, न मैत्रः तत्प्रतियोगिकावरणशक्तेरनाशाद्। आवरणशक्तीनां द्रष्टृविषयभेदाभ्यां भिन्नत्वात्। तमस्तु न तथेत्येकानीतप्रदीपेनाप्यन्यान् प्रति प्रकाशो युज्यते। एतेन– एकाज्ञानपक्षे शुक्तिज्ञानेन तदज्ञाननिवृत्तौ सद्य एव मोक्षापातः। अनिवृत्तौ रूप्यादेः सविलासाविद्यानिवृत्तिरूपबाधायोग इति निरस्तम्। आवरणशक्तिनाशेऽपि मूलाज्ञाननाशाभावेन सद्यो मोक्षाभावस्य रूप्यादौ सविलासशक्तिमदविद्यानिवृत्तिरूपबाधस्य चोपपत्तेः।

ननु एकाज्ञानपक्षे रूप्यादेः शुक्तिज्ञानेन स्वकारणे प्रविलयमात्रं क्रियते। मुद्गरप्रहारेणेव घटस्य। न त्वज्ञानं निवर्त्यत इति ते मतं न युक्तम्। यतो ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिबलात् ज्ञानस्याज्ञाननिवृत्तिद्वारैवान्यविरोधित्वेनाज्ञानमनिवर्त्य रूप्यादिनिवर्तकत्वायोगात्। शुक्तिज्ञानेनाज्ञानानिवृत्तावभिव्यक्तचैतन्यसंबन्धाभावेन भ्रान्ताविव बाधेऽपि शुक्तेरप्रकाशापत्तेश्चेति चेन्न। यतो ज्ञानमज्ञाननिवर्तकमिति व्याप्तेरुच्छेदविषयत्वात्। स्वकारणे

(अद्वैतसिद्धिः)

सूक्ष्मरूपेणावस्थाने तदनङ्गीकारात्। शुक्तिज्ञानस्य चानवच्छिन्नचैतन्यावरणरूप-मूलाज्ञानानिवर्तकत्वेऽपि अवच्छिन्नचैतन्यावरणरूपतूलाज्ञाननिवर्तकत्वेनाभिव्यक्तचैतन्य-संबन्धात् बाधदशायां रूप्यनिवृत्तिशुक्तिप्रकाशयोरप्युपपत्तेः। न च उपादेयभूतया वृत्त्योपादानभूताविद्याभिभवो न घटते। उपादेयेनोपादानाभिभवादर्शनादिति वाच्यम्। वृश्चिकादिना गोमयादेरुपादानस्याप्यभिभवदर्शनात्। आरम्भवादानभ्युपगमाच्च न गोमयावयवानामुपादानत्वशङ्का।

ननु चक्षुरादिजन्यशुक्त्यादिवृत्तेः सप्रकारिकायाः निष्प्रकारकशुद्धचैतन्याविषयतया तदावरणरूपमूलाज्ञानाभिभवाभावेऽप्यवच्छिन्नविषयया तया अवच्छिन्नचैतन्यावरण-रूपतूलाज्ञानाभिभवो युज्यत इति ते मतमयुक्तम्। अवच्छिन्ने अविद्याकल्पिते अप्रसक्तप्रकाशे मूलाविद्याया इव तदावरणशक्तेरयोगात्। त्वयानभ्युपगतत्वाच्च। जडविशिष्टात्मानं प्रति तदभ्युगमे च विशेषणानावरकविशिष्टावरकशक्त्यभिभवस्य विशेष्यावरकशक्त्यभिभवं विनाऽयोगेन शुक्त्याकारवृत्त्यैव शुद्धात्मप्रकाशापातादिति चेन्न। अनवबोधात्। न ह्यविद्याकल्पितेऽवच्छिन्ने अस्माभिरविद्या वा तच्छक्तिर्वाभ्युपेयते। किं तु चैतन्यमात्र एव। तस्मिंस्तु सर्वं जडमध्यस्तमस्तीत्येकाश्रयाश्रितत्वसंबन्धात् जडावच्छिन्नचैतन्यमावृतमिति व्यपदेशः। घटाद्याकारवृत्त्या तु तदधिष्ठानचैतन्याभिव्यक्तौ तदवच्छेदेनैव तन्निष्ठावरणाभिभवो जायत इति न शुद्धात्मप्रकाशापत्तिः। तदुक्तं संक्षेपशारीरके–

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥
बहु निगद्य किमत्र वदाम्यहं शृणुत संग्रहमद्वयशासने ।
सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसव्यवहारभाक् ॥

इति च। तस्मादविद्यायां सत्यामपि शक्त्यभिभवाद्वा, तूलाज्ञाननाशाद्वा, अवस्थाविशेषप्रच्यवाद्वा, एकदेशनाशाद्वा, भीरुभटवदपसरणाद्वा, कटवत् संवेष्टनाद्वा, आवरणभङ्गानिर्मोक्षबाधानामुपपत्तिः।

ननु अवस्थाविशेषाणामज्ञानाभिन्नत्वे एकाज्ञानपक्षक्षतिः। अज्ञानभिन्नत्वे च साक्षात् ज्ञानेन निवृत्तिः भ्रमाद्युपादानत्वं च न स्यात्। तेषामिव रूप्यस्यैवोपादाननाशं विना

(अद्वैतसिद्धिः)

नाशप्रसङ्गश्च। शुक्त्यज्ञानं नष्टमित्यनुभवविरोधश्चेति चेन्न। यतोऽवस्था तावदवस्थावतोऽभिन्नैव। अज्ञानैक्यं तु सर्वावस्थानुस्यूतैकाकारमादाय। एवं चाज्ञानावस्थाया अज्ञानत्वेन न ज्ञानसाक्षान्निवर्त्यत्वाद्यनुपपत्तिः। यत्त्ववस्थाविशेषाणामिव रूप्यस्यैवोपादाननिवृत्तिं विना निवृत्त्यापादनं तदयुक्तम्। अज्ञान एव ज्ञानस्य साक्षाद्विरोधावधारणेनाज्ञानावस्थायास्तदभिन्नाया ज्ञानसाक्षान्निवर्त्यत्वार्हत्वात्। न तु रूप्यादीनाम्, अनीदृक्त्वात्। अनेकाज्ञानपक्षे तु शङ्कापि नोदेति। नन्वस्मिन्पक्षे एकया वृत्त्या सर्वतदज्ञानस्य निवृत्तिः? उत एकतदज्ञानस्य? आद्ये पुनः शुक्तेः कदाऽप्यप्रकाशो न स्यात्। अन्त्ये वृत्तिकालेऽपि प्रकाशो न स्यात्। एकस्यावरणस्य निवृत्तावप्यावरणान्तरानिवृत्तेरिति चेन्न। एकया वृत्त्या एकाज्ञाननाशेऽपि तयैवावरणान्तराणां प्रतिरुद्धत्वाद्। यावत् सा तिष्ठति तावत्प्रकाशः। तस्यामपगतायां पुनरप्रकाशश्चोपपद्यते। अज्ञानस्य ज्ञानप्रागभावस्थानीयत्वात्। यथा तव एकं ज्ञानमेकमेव प्रागभावं नाशयति, तन्नाशरूपेणोदयात् प्रागभावान्तरनिबन्धनमज्ञातत्वादिव्यवहारं च प्रतिबध्नाति तथा ममाप्येकं ज्ञानमेकमेवाज्ञानं निवर्तयति, अज्ञानान्तरनिबन्धनं च प्रयोजनं प्रतिबध्नातीति किमनुपपन्नम्? अत्र च प्रतिबन्धपदेन कार्यानुत्पत्तिप्रयोजकत्वं कारणाभावप्रतिबन्धकसाधारणमभिहितम्। एवमवस्थाविशेषपक्षेऽपि प्रकाशाप्रकाशावुपपादनीयौ। एवममूर्तस्याज्ञानस्य यद्यपि दण्डादिना गवादीनामिवापसारणं करादिना कटादीनामिव संवेष्टनं च न संभवति, तथापि कार्याक्षमत्वसाम्येनापसारणसंवेष्टनपक्षौ योजनीयौ। यथा हि उत्तेजकाभावसहकृतस्य मणेः प्रतिबन्धकतायामुत्तेजकसत्त्वे प्रतिबन्धककार्याक्षमत्वं, तथा वृत्त्यभावसहकृतस्याज्ञानस्य प्रतिबन्धकतायां वृत्तौ सत्यां तत्कार्यानुदय इति द्रष्टव्यम्।

ननु चैतन्यस्य निरवयवत्वात् तस्यैकदेशेन प्रकाशो न युज्यते। अथाकाश इव तत्तदर्थावच्छिन्नत्वमेकदेशशब्दार्थः, तर्हि नागन्तुकपदार्थावच्छिन्नं चैतन्यमनाद्यज्ञानस्य विषयः। निर्विषयस्यावरणस्यायोगात्। प्रागनवच्छिन्नावरणमेवेदानीमवच्छिन्नावरणं जातमित्यपि न। अवच्छिन्नचैतन्यज्ञानेनैवानवच्छिन्नावरणनाशापत्तेः। एतेन व्यक्तितः पूर्वं जातिरिव विषयात्पूर्वमज्ञानमस्तीति निरस्तमिति चेन्न। अनाद्यज्ञानविषये अनादिचैतन्ये तत्तदागन्तुकपदार्थावच्छेदाभ्युपगमाद्। 'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला' इत्युक्तत्वात्। यदवच्छिन्नगोचरा च वृत्तिस्तदवच्छेदेनैवावरणापसारणात् नानवच्छिन्नचैतन्या-

(अद्वैतसिद्धिः)

वरणभङ्गप्रसङ्गः। अत एव वृत्तिविषयावच्छिन्नचैतन्यात् प्रागज्ञानमस्तीत्यभिप्रायेण विषयात्प्रागज्ञानमस्तीति साधूक्तम्। तस्मादधिष्ठानचैतन्यं स्वाध्यस्तं भासयतीति सिद्धम्।

तदयमत्र निष्कर्षः– यद्यपि विषयप्रकाशकं विषयाधिष्ठानभूतं प्रमेयचैतन्यम्। अन्तःकरणा-वच्छिन्नचैतन्यं तु तस्य प्रमातृ। अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं तु प्रमाणम्। तथापि यदीयान्तःकरणवृत्त्या विषयपर्यन्तं चक्षुरादिद्वारा निस्सृतया यत्प्रकाशकं चैतन्यं यत्प्रमातृचैतन्याभेदेनाभिव्यज्यते तमेव स एव जानाति नान्यं नान्यो वा। अत एवैकवृत्त्युपारूढत्वलक्षणैकलोलीभावापन्नं प्रमातृप्रमाणप्रमेयचैतन्यं भवति। ततस्तदवच्छेदे-नाज्ञाननिवृत्त्या भासमानं प्रमेयचैतन्यमपरोक्षं फलमित्युच्यते। तत् स्वयं भासमानं सत् स्वाध्यस्तं घटाद्यपि भासयतीति तत् फलव्याप्यमित्युपेयते। यन्निष्ठा च यदाकारा वृत्तिर्भवति तन्निष्ठं तदाकारमज्ञानं सा नाशयतीति नियमात् प्रमातृप्रमेयोभयव्यापिन्यपरोक्षवृत्तिः स्वावच्छेदेनावरणमपसारयति। प्रकाशस्य स्वावच्छेदेनावरणापसारकत्वदर्शनात्। अतः प्रमात्रवच्छिन्नस्यासत्त्वावरणस्य प्रमेयावच्छिन्नस्याभानावरणस्य चापसारणाद् घटोऽयं मे स्फुरतीत्याद्यपरोक्षव्यवहारः। परोक्षस्थले तु इन्द्रियसन्निकर्षलक्षणद्वाराभावादन्तः-करणनिस्सरणांभावेन विषयपर्यन्तं वृत्तेरगमनाद्विषयावच्छिन्नप्रमेयचैतन्येन सह प्रमातृ-चैतन्यस्यैकवृत्त्युपारूढत्वाभावेनापरोक्षतयाऽभिव्यक्त्यभावेऽपि प्रमातृप्रमाणचैतन्ययोरेकलोली-भावापत्त्या प्रमात्रवच्छिन्नमसत्त्वावरणमात्रं निवर्तते। तावन्मात्रस्य वृत्त्यवच्छिन्नत्वात्। इदमेव सुषुप्तिव्यावृत्तिशब्देन विवरणाचार्यैर्व्याख्यातम्। विषयावच्छिन्नाभानावरणतत्कार्यसद्भावेऽपि प्रमात्रवच्छिन्नासत्त्वावरणनिवृत्त्या अनुमानादौ व्यवहारोपपत्तिः। अत एव जानाम्यहं पर्वते वह्निरस्तीति, स तु कीदृश इति मे न भातीत्यादिव्यवहारः। त्रयाणामेकलोलीभावे अपरोक्षत्वम्, द्वयोरेकलोलीभावे तु परोक्षत्वमिति न सङ्करः। वृत्तेश्च विषयेण समं साक्षादेवापरोक्षस्थले संबन्धः। परोक्षस्थले त्वनुमितेरनुमेयेन तद्व्याप्यज्ञानजन्यत्वम्। शाब्द्याः संसर्गेण सह तदाश्रयवाचकपदजन्यत्वम्। स्मृतेः स्मर्तव्येन सह तद्विषयानुभवजन्यत्वम्। एवमन्यत्रापि परम्परासंबन्ध एवेति परोक्षापरोक्षविभागः। विस्तरेण व्युत्पादिताऽस्माभिरियं प्रक्रिया सिद्धान्तबिन्दौ। तस्माद्विषयस्य मिथ्यात्वेऽपि प्रतिकर्मव्यवस्थोपपत्तेरिति दिक्।

इत्यद्वैतसिद्धौ प्रतिकर्मव्यवस्थोपपत्तिः॥

## श्रीव्यासरामाचार्यविरचिता

## न्यायामृततरङ्गिणी

दृश्यस्य दृगध्यस्तत्वे प्रातिभासिकस्थल इव इंद्रियसन्निकर्षायोगेन त्वदुक्तप्रतिकर्मव्यवस्थाऽयोग इति वक्तुं प्रस्तौति ॥ यच्चोक्तमिति ॥ कुल्या कृत्रिमजलप्रवाहः । केदाराः क्षेत्राणि ॥ सावयवमिति ॥ अत एव विषयाकारेण परिणमते ॥ तैजसम् ॥ अत एव चक्षुरादिसूक्ष्मद्वारेण निर्गच्छति। तत्र एतादृशी वृत्तिरिति मते ॥ जीवचैतन्यमिति ॥ सर्वगतं परिच्छिन्नमिति मतद्वयमित्यन्वयः । अविद्यायाः सर्वगतत्वात्तदुपाधिको जीवोऽपि सर्वगत इत्यर्थः ॥ अंतःकरणेति ॥ अंतःकरणस्यासर्वगतत्वात्तदुपाधिको जीवोऽपि तथेत्यर्थः ॥ तत्राऽद्य इति ॥ जीवचैतन्यस्य सर्वगतत्वात्तत्रैव विषयस्याध्यस्तत्वेन जीवचैतन्यमेव विषयप्रकाशकमित्यर्थः ॥ सर्वगतत्वपक्ष इति ॥ असर्वगतत्वपक्षे त्वनावृतमेवेति बोध्यं ॥ विषयेति ॥ विषयेण सहोपरागः संश्लेषविशेषः । स च वृत्तिद्वारकः । आवरणविरहस्य स्वतः सिद्धत्वादिति भावः ॥ आवरणेति ॥ स्वत एव चैतन्यमुपरज्यत इति नोभयार्था वृत्तिरिति भावः । परिच्छिन्नत्वपक्षे वृत्त्युपयोगमाह ॥ परिच्छिन्नत्वेति ॥ ब्रह्मचैतन्ये विषयस्याध्यासात्तदेव विषयप्रकाशकं । जीवोपाधेरंतःकरणस्य परिणामे च वृत्त्या ब्रह्माकारया विषयाधिष्ठानब्रह्मचैतन्येऽप्यावृते जीवब्रह्म-चैतन्ययोरेकांतःकरणोपाधियुक्तत्वेन ब्रह्मचैतन्येन सह जीवचैतन्यस्याभेदाभिव्यक्त्या जीवोऽपि घटप्रकाशको भवतीत्यर्थवती वृत्तिरिति भावः । वृत्तिर्विषयोपरागार्थेति पक्षमुपपादयति ॥ अनावृतत्वपक्ष इति ॥ ॥ वृत्त्यैवेति ॥ स्वत इति शेषः । ननु वृत्तिरुपरागार्थेति न युक्तम् । असंगस्यापि चैतन्यस्य वृत्त्येव विषयेणाप्युपरागसंभवात् । गोत्वदृष्टांतोऽप्ययुक्तः । तस्य सास्नादिमव्द्यक्त्युपरागो नाम तज्ज्ञेयत्वम् । ब्रह्म तु न वृत्त्या ज्ञायते । किंतु तया घटादिज्ञानरूपं ब्रह्म भवति । प्रभादृष्टांतोऽप्ययुक्तः । तस्याः प्रकाशकत्वं नाम विषयदेशस्थतमोनिवर्तकत्वमेव नान्यत् । एवं प्रभा रूपसंसर्गितमो निवर्तयंती रूपं प्रकाशयतीत्युच्यते । तथा आकाशगंधरससंसर्गितमोऽपि निवर्तयंती आकाशादीनपि प्रकाशयत्येव । न ह्याकाशादिसंसर्गितमो न निवर्तयति । अन्यथा तद्देशे रूपप्रकाशोऽपि न स्यादित्यत उदाहरणांतरमाह ॥ केवलेति ॥ तथाच विषयप्रकाशनशक्तिरेव विषयोपरागः । स च चैतन्यस्य वृत्त्यधीन इति वृत्तिरुपरागार्थेति भावः । वृत्तिरावरणाभिभवार्थेति पक्षमुपपादयति ॥ आवृतत्वेति ॥ ननु जीवचैतन्यमसर्वगतमिति पक्षे तदनावृतमित्यंगीकारादावरणविरहस्य स्वतः सिद्धतया वृत्तिर्व्यर्थेति शंकां परिहरति ॥ परिच्छिन्नत्वपक्ष इति ॥ एतच्चोपपादितम् ॥ ब्रह्मचित्त्वेऽपीति ॥ अस्मिन् पक्षे ब्रह्मचित्येव विषयाध्यासादिति भावः ॥ जीवचित्त्वमिति ॥ विषयानुभवस्येत्यनुषंगः ॥ इतीति ॥ इतिशब्दः

(तरङ्गिणी)

प्रकारवचनः। वृत्तिर्विषयोपरागार्थेति पक्षे, आवरणाभिभवार्थेति पक्षे, प्रमातृजीवचैतन्यस्य विषयप्रकाशकब्रह्मचैतन्याभेदाभिव्यक्त्यर्थेति पक्षे चेति पक्षत्रयेऽपीत्यर्थः ॥प्रतिकर्मेति॥ व्यापकचैतन्येऽध्यासेऽपि तस्य घटादिकं कर्म प्रति नियम इत्यर्थः।

॥तन्नेति॥ स्यादिति शेषः। इति च यदुक्तं तन्न स्यादिति पूर्वेणान्वयः। दृश्यस्य दृगध्यस्तत्वे प्रातिभासिकस्थल इव इंद्रियसन्निकर्षाधीना प्रतिकर्मव्यवस्था न स्यादित्यर्थः। ननु वृत्तेः पूर्वमेव घटादीनां चैतन्येऽध्यासेन प्रातिभासिकवैलक्षण्यमित्यत आह ॥स्वसन्निकृष्टेति॥ स्वज्ञानात्पूर्वं घटादेः सत्त्वे प्रतीतिमात्रशरीरत्वाभावेन तस्य कल्पितत्वव्यापकस्य घटादेः सकाशान्निवृत्तौ प्रतीतिमात्रशरीरत्वस्य व्याप्यभूतं यत्कल्पितत्वं तदपि घटादौ न स्यादित्यर्थः। यद्वा, सर्वस्यापि दृश्यस्यैकस्यां दृश्यध्यस्तत्वे प्रकाशसांकर्यमाशंक्य वृत्तिद्वारा प्रतिकर्मव्यवस्थया न सांकर्यमिति यच्चोक्तं परैस्तन्नेति यथान्यासमेव वाक्यार्थः। विषयेन्द्रियसन्निकर्षे बाह्येंद्रियद्वारा निस्सृतांतःकरणीयविषयाकारवृत्तौ प्रतिबिंबितचैतन्येनाभिव्यक्तं विषयाधिष्ठानचैतन्यं घटादि-ज्ञानमिति परप्रक्रियां क्रमेणापाकर्तुं प्रथमं सन्निकर्षं दूषयति ॥स्वेति॥ स्वज्ञानात्पूर्वं घटादेः सत्त्वे कल्पितत्वायोगः, असत्त्वे सन्निकर्षायोग इत्यर्थः। ननु कल्पितस्यैकः सामान्यधर्मः कल्पितत्वम्, अन्यस्तु प्रातिभासिकत्वं विशेषधर्मः। तत्र विशेषस्यैव प्रतीतिमात्रशरीरत्वं प्रति व्याप्यता नान्यस्येत्याशंक्य परिहरति ॥न चेति॥ कल्पितत्वविशेषः कल्पितत्वात्सकाशाद्विशेष इत्यर्थः। यथा– श्रुते प्रातिभासिकत्वस्य कल्पितत्वे अवृत्तेर्न तस्य तद्विशेषत्वमिति ध्येयम् ॥गौरवादिति॥ यद्यपि कल्पितत्वप्रातिभासिकत्ववृत्तिधर्मयोस्तत्तद्वृत्तिव्याप्यवच्छेदकयोर्नैकत्र समावेश इति न नीलधूमादिवद्गौरवमव्याप्यताबीजं संभवति। तथापि सामान्यस्यैव व्याप्यत्वे संभवति न विशेषस्य तथात्वम्। यथा कर्तृजन्यत्वव्याप्यं जन्यत्वमेव न तु शरीरजन्यत्वमिति भावः। नन्वपर्वतीयधूमे धूमत्वस्यापर्वतीयधूमत्वस्य च व्याप्यतावच्छेदकत्वेन प्रसक्तौ गुरोस्त्यागेन धूमत्वस्य लघोः तदवच्छेदकत्वे सिद्धे धूममात्रस्य वह्निव्याप्यत्वम्। प्रकृते तु न तथेत्यनुशयेन॰ दृष्टांतांतरमाह ॥अप्रामाणिकत्वादिकमिति॥ प्रातिभासिकत्वस्यैवेति॥ न तु कल्पित-त्वस्येत्येवशब्दार्थः। तथाच कल्पितत्वेनाप्रामाणिकत्वानुमानं न स्यादित्यर्थः। ननु कल्पितत्वस्य व्यापकं न प्रतीतिमात्रशरीरत्वम्। येन तन्निवृत्त्या तन्निवर्तेत। किंतु ज्ञानविवर्त्यत्वमेवेत्याशंक्य परिहरति ॥न चेति॥ दोषप्रयुक्तभानत्वमादिशब्दार्थः ॥प्रतीतिमात्रेति॥ तस्यापि तद्व्याप्यत्वादिति भावः। ननु कल्पितस्यापि दृश्यस्य प्रतीतिः सर्वसिद्धा। सा च तदिंद्रियसंनिकर्षं विनाऽनुपपन्नेतींद्रियसंनिकर्षार्थं स्वज्ञानात्पूर्वं दृश्यस्य सत्त्वमाक्षेप्स्य तीत्यत आह ॥प्रतीतेस्त्विति॥

(तरङ्गिणी)

अन्यथोपपन्नाया दृश्यप्रतीतेर्न तदाक्षेपकत्वमित्यर्थः। ननु कल्पितत्वाविशेषेऽपि वणिग्वीथिस्थरुप्यस्य शुक्तिरूप्यस्य च परीक्षितत्वापरीक्षितत्वाभ्यां स्थायित्वास्थायित्वरूपविशेषे सिद्धे स्वज्ञानात्पूर्वं सत्वं सेत्स्यतीत्यत आह ॥ व्यावहारिकत्वस्येति॥ स्थायित्वादेरित्यर्थः ॥ भ्रांतीति॥ स्वप्नेऽपि परीक्षादेः सत्त्वादिति भावः।

दृश्यस्य दृश्यनध्यासाय दृशं निरूपयति ॥ तत्तदिति॥ ॥ अपरोक्षेति॥ तस्यां च न ज्ञेयस्याध्यास इति भावः ॥ उक्तमिति॥ दृश्यत्वभंग इति शेषः. ॥ अभिव्यक्तेति॥ एतच्चावरणदशाव्यवच्छेदाय। अपरोक्षैकरसेति घटादिसंबंधेऽपि न पटादीनामापरोक्ष्यं यथा तथा चैतन्यसंबंधेऽपि न स्यादिति शंकापरिहाराय। ननु परोक्षस्थले परोक्षवृत्त्युपरक्तचैतन्यं प्रकाशः। न तु वृत्तिः। अप्रकाशरूपांतःकरणपरिणामरूपायास्तस्याः प्रकाशत्वे मानाभावात्। न च तत्र तद्विषयस्यापरोक्षप्रसंगः। विषये चैतन्याभिव्यक्तावेव विषयस्यापरोक्ष्यम्। न हि परोक्षस्थले तदस्ति। विषयेन्द्रियसन्निकर्षाभावेन विषयपर्यंतं वृत्तेरगमनात्। अंतरेव तत्र धीसमुल्लासात्। अपरोक्षस्थले तु प्रमातृचैतन्याभेदाभिव्यक्ताधिष्ठानचैतन्योपरागो विषयेऽस्ति। अत एव तत्र विषयस्यापरोक्ष्यम्। एवं चापरोक्षस्थलेऽपि वृत्तिर्न विषयप्रकाशः। नतरां परोक्षस्थल इत्याशंक्य प्रथममपरोक्षवृत्तौ प्रकाशत्वमाह ॥ वृत्तेरेवेति॥ यथेच्छोपादाने अंतःकरणे अविद्यमानमपीच्छात्वं तदुपादेयायामिच्छायामस्ति तथा प्रकाशत्वमपि वृत्तावस्त्वित्यर्थः। ननु अपरोक्षवृत्तेरस्तु प्रकाशत्वं, न तु परोक्षवृत्तेः प्रकाशत्वमित्यत आह ॥ अन्यथेति॥ परोक्षवृत्तेरप्रकाशत्व इत्यर्थः। तदिति ज्ञानत्वं परामृश्यते। तेन अपिशब्दः संबध्यते। तदपि ज्ञानत्वमपि। परोक्षानुभवस्य न स्यादित्यर्थः। यथाश्रुते तु परोक्षस्थलेऽपि वृत्तेरप्रकाशत्वस्य परेणाशंकितत्वादसंगतिः स्यादिति बोध्यम्। तस्माद्वृत्तिभिन्ने घटादिज्ञाने उक्तप्रक्रियायां मानाभावात्सर्वत्र वृत्तिरेव घटादेर्ज्ञानं प्रकाशश्च। तस्यां च न ज्ञेयस्याध्यास इति भावः। वृत्तिभिन्नं घटादिज्ञानमस्तीत्याशंक्य निराकरोति ॥ न चेति॥ एकस्या एव वृत्तेरुभयरूपत्वं विरुद्धमिति भावः ॥ क्रियैक्य इति॥ वृत्तेरेकत्वेऽपि तत्प्रतिपादकशब्दभेदात्कर्मसंबंधप्रतीत्यप्रतीती न विरुद्धेति भावः। धात्वोः जानातिकाशत्योः। उपरागः संबंधः।

ननु अर्थैक्ये शब्दभेदमात्रेण नोभयसंभवः। करोति प्रयतत इत्यादावपि नार्थैक्यम्। अनुकूलयत्नो हि कृञ्धात्वर्थः। यत्यर्थस्तु यत्नमात्रम्। एवं गत्यर्थ उत्तरसंयोगफलकः स्पंदः। चलत्यर्थस्तु स्पंदमात्रमिति। मैवम्। भावनैक्येऽपि नामपदाख्यातपदाभ्यां कारकान्वयायोग्यतदन्वययोग्यरूपभावनायाः प्रतीतेराघोषितत्वात्। नाहि भवति यागेन भावनेति। भवति

(तरङ्गिणी)

तु यागेन कुर्यादिति। तदुक्तं वार्तिके। ''यस्मादाख्यातशब्दस्य न व्यक्त्याकृतिवाचिता'' इति। प्रत्ययो भावनायाः व्यक्तिमाकृतिं वा न वदति। किंतु अव्यपदेश्यां भावनां वदतीत्यर्थः। एकमेव च कारकं कारकांतरान्वयायोग्यं तदन्वययोग्यं च विभक्तिकारकशब्दाभ्यामभिधीयते। न हि यागेनेत्यत्र तृतीयाभिहिते कारके कारकांतरान्वयोऽस्ति। कारकशब्दाभिहिते तु कारके कारकं कारकेणेति कारकांतरान्वयो दृश्यते। तदुक्तं वार्तिके– कृदंतेन हि कारकविशिष्टं द्रव्यमेवोच्यते न विभक्तिवत् निष्कृष्टशक्तिः, तथाच करणं करणेन करणायेति कारकांतरयोगो दृश्यत इति करोतियतत्योरपि न भिन्नार्थत्वम्। उभयोरपि यत्नार्थत्वात्। तदुक्तं मणौ ''कृञो यत्नार्थत्वात् तेनाख्यातविवरणात् तस्यापि यत्नोऽर्थ'' इति। कुसुमाञ्जलावप्युक्तं ''कृताकृतविभागेन कर्तृरूपव्यवस्थया। यत्न एव कृतिः, पूर्वापरस्मिन् सैव भावने''ति। यततेर्भावे नङि प्रत्यये यत्न इति भवति। करोतेः क्तिनि कृतिरिति भवतीति यत्नकृत्योरेकत्वाच्च तयोरेकार्थत्वमिति भावः ॥अन्यथेति॥ शब्दस्वभावानादर इत्यर्थः। परिणतेः परिणामस्य अकर्मकत्वात्। घटः परिणमत इत्यकर्मकधातुप्रयोगविषयत्वात्। यद्यपि नमतिः सकर्मकः तथाप्यर्थांतरे वर्तमानोऽकर्मकः। यथाहुः ''धातोरर्थांतरे वृत्तेरि''त्यादि। सकर्मकज्ञानत्वं सकर्मक-जानातिप्रयोगविषयत्वम्। तथाच वृत्तेः परिणामत्वं वा सकर्मकजानातिप्रयोज्यत्वं वा न स्यादित्यर्थः। ननु एकस्य सकर्मकत्वाकर्मकत्वे एकरूपेण विरुद्धे। न तु रूपांतरेणापि। मानाभावात्। यथा स्थितेरकर्मिकाया अप्यगमनत्वेन सकर्मकत्वं, तथा परिणतित्वेनाकर्मिकाया अपि वृत्तेः ज्ञानत्वेन सकर्मकत्वं भविष्यतीति चेत्, न। अत्रापि ज्ञानत्व-प्रकाशत्वाभ्यामुभयरूपतोपपत्तेः। न च तयोरभेदः। तेजोज्ञानयोः साधारणस्योपाधिरूपस्य प्रकाशत्वस्य त्वयापि वक्तव्यत्वात्। अत एव विवरणे दीपप्रभादृष्टांतीकृताऽविद्यानुमाने।

॥अतीतमिति॥ वृत्त्यतिरिक्तचैतन्यरूपज्ञानस्य प्रकाशत्वे अतीते चैतन्यरूपज्ञानाभावेन प्रकाशाभावादतीतं प्रकाशत इति धीर्न स्यादित्यर्थः। यथा च परोक्षस्थले चिद्रूपज्ञानाभावः तथोक्तम्। घटादिषु वृत्त्यतिरिक्तचिद्रूपज्ञानानंगीकारे मदिष्टसिद्धिरित्याह ॥एवं चेति॥ अन्यद्वारा वृत्तिद्वारा। तदुपरक्तत्वं अनुभाव्येन संबद्धत्वं। तत्प्रति अनुभाव्यं प्रति। आदिशब्देन मुख्याज्ञानाविरोधिनोऽपि मुख्यज्ञानत्वादि दृष्टविरुद्धम्, इच्छादिषु यादृशं साक्षादेवेष्यमाणोपरक्तत्वं इष्यमाणं प्रत्यनावृतत्वम् इष्यमाणे द्वेषविरोधित्वं दृष्टं तदपेक्षया विरुद्धमित्यर्थः ॥अन्यथेति॥ दृष्टविरुद्धस्यापि कल्पन इत्यर्थः। ननु ''तमेव भांतमनुभाति सर्वमि''ति श्रुत्या ब्रह्म प्रकाशमानमनुसृत्य सर्वस्य प्रकाश उच्यते। अतश्चिद्रूपघटादिज्ञानं सिध्यतीत्यत आह ॥तमेवेति॥

(तरङ्गिणी)

मुंडके ''न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः। तमेव भांतमनुभाति सर्वमि''त्यत्र प्रकृतस्य सूर्यप्रकाशस्येत्यर्थः। ननु सर्वशब्देन कारणाभावे सूर्यादिमात्रग्रहो न युक्तः, तस्य सर्वोपस्थापकत्वादित्यत आह ॥सर्वशब्दस्येति॥ नित्यातींद्रियस्येति॥ अतीतादिषु वर्तमानतादशायां चित्प्रकाश्यत्वेऽपि नित्यातींद्रिये सर्वदापि चित्प्रकाश्यत्वाभाव इत्यभिसंधिः ॥प्रकृतेति॥ अस्य लोकस्य का गतिरित्यादाविदंशब्दः प्रकृतपर इति ''प्रकृतां पृथिवीं वक्ति प्रश्नस्थं सर्वनाम यत्'' इति वदद्भिर्भवद्भिरप्यंगीकारात्। ''तस्य भासा सर्वमिदं विभाती''त्यत्रेदंशब्दस्य प्रकृतपरत्वे सिद्धे तदेकार्थस्यापि सर्वशब्दस्य प्रकृतसूर्यादिपरत्वं न घटादिपरत्वमपीत्यर्थः ॥यदादित्येति॥ यदादित्यगतं तेज इत्यादि-सूत्रोदाहृतस्मृतौ सूर्यादितेजसां भगवदधीनत्वरूपतत्संबधित्वस्यैवोक्तेरित्यर्थः। ॥शतृप्रत्ययस्येति॥ कर्त्रर्थे लडादेशत्वाच्छतुर्भानकर्त्रुपस्थापकत्वं तस्येति षष्ठ्या तत्पदार्थस्य ब्रह्मणो भासा सह संबंधो बोध्यते। भानरूपे ब्रह्मणि भानकर्तृत्वभानसंबंधस्याप्यसंभवात्तयोरनुपपत्तिः ॥प्रपंच इति॥ ''तमेव भांतमनुभाति सर्वम्'' इत्यत्र प्रपंचकर्तृकभानरूपक्रियायाः, भांतमिति ब्रह्मज्ञानक्रियातो भेदावगमादनुशब्दस्याप्यनुपपत्तिरित्यर्थः ॥गच्छंतमिति॥ अथातोऽग्निमग्निष्टोमेनानुयजंतीत्यादौ सजातीयक्रियाभेदाभावेऽप्यनुशब्दद्योतितावधेः सकाशात्तदन्वितार्थस्य भेदोऽस्त्येवेति भावः।

अंतःकरणस्य चक्षुरादिद्वारेण बहिर्निर्गमनं दूषयति ॥अस्तु वेति॥ ननु परोक्षवैलक्षण्यायांतःकरणस्य बहिर्निर्गमनं भविष्यतीत्यत आह ॥परोक्षादिति॥ परोक्षस्थले त्वन्मते विषयस्याभिव्यक्तापरोक्षैकरसचिदुपरागाभावादपरोक्षस्थले च तत्सत्त्वात्परोक्षापरोक्षयोर्वै-लक्षण्यं स्यादित्यर्थः। ननु विषयस्य वृत्तिसंबंधं विना तस्य चिदुपराग एव न संभवति सास्नाद्यवच्छिन्नगोत्वाद्युपरागवद्वृत्त्यवच्छिन्न एव चिदुपरागस्य सत्त्वादित्यत आह ॥चिदिति॥ ॥अपरोक्षेति॥ इंद्रियसन्निकर्षजन्यया वृत्त्या बहिर्निर्गमनं विनाऽप्यंतरेव विषयाकारेण परिणतया विषयस्य इंद्रियसंनिकर्षद्वारा संबद्धत्वमात्रेण तस्मिन्निरुक्तचैतन्योपरागसंभवाद्वृत्त्यवच्छिन्न एव तदुपराग इति कल्पने मानाभाव इत्यर्थः। ननु विषयसंबंधं विना वृत्तेर्विषयावरणनिवर्तकत्वं न संभवति, प्रभायां तथा दर्शनादित्यत आह ॥न त्विति॥ तुशब्दश्चशब्दार्थे तदाकारत्वमुक्तहेतुं समुच्चिनोति। आवरणनिवर्तकत्वे तदाकारत्वं तंत्रम्। न तु तत्संश्लेषः। ज्ञानस्य प्रभापेक्षया वैलक्षण्यादिति भावः। वृत्तिसंश्लेषस्यावरणनिवर्तकत्वादौ प्रयोजकत्वे बाधकमाह ॥नेत्रादिति॥ मम मते तु नेत्रस्थकज्जलादावतिसामीप्यदोषात् परमाण्वादौ च महत्त्वविशेषादिकारणविरहान्न तदाकारवृत्तिरिति न दोष इति भावः। अस्तु तर्हि मम मतेऽपि तदाकारत्वमपि तंत्रमित्यत

(तरङ्गिणी)

आह ।। द्वयोरिति ।। संश्लेषतदाकारत्वयोः । नन्वस्तु तदाकारत्वार्थमेव बहिर्निर्गमनम् । बहिर्निर्गमनेन विषयसंश्लेषे सति तदाकारतायाः जायमानत्वादित्यत आह ।। तदाकारत्वस्येति ।। तदाकारतायां तत्संश्लेषस्य प्रयोजकत्वे परोक्षवृत्तौ तदाकारत्वं न स्यादित्यर्थः । मनसो बहिर्निर्गमनं व्यभिचारि चेत्याह ।। न चेति ।। ।। घटमानइति ।। बहिर्निर्गच्छन्मनःसंनिकर्षाभावेनेत्यर्थः । बहिर्निर्गत्य विषयमाश्लिषंत्या एव वृत्तेर्विषयावरणनिवर्तकत्वमिति नियमानंगीकार आवश्यक इत्याह ।। एवं चेति ।। तन्नियमांगीकारे दोषमप्याह ।। चक्षुरिति ।। नियतेति ।। न च त्वगिंद्रियस्य सर्वेंद्रियगोलकाधिष्ठानत्वात्तत्तदिंद्रियगोलकद्वारा बहिर्निगमनं तस्य संभवतीति वाच्यम् । इंद्रियांतरगोलकस्येंद्रियांतराधिष्ठानत्वे मानाभावात् । एकस्मिन् गोलके एकेंद्रियस्यैव श्रुतिप्रसिद्धत्वात् । ''ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्'' इति नियतस्य गोलकांतरासंकीर्णस्य त्वक्स्थानत्वात् । तस्मान्न त्वगिंद्रियस्य गोलकांतरद्वारा बहिर्निर्गमनम् ।। अन्यथेति ।। नियतगोलकाभावेऽपि बहिर्निगमने ।

चैतन्यं घटादिज्ञानमित्येतद्दूषयितुं प्रस्तौति ।। अस्तु वेति ।। घटप्रकाशत्वेनाभिमतं चैतन्यम् पृच्छति ।। तथापीति ।। धीस्था वृत्तिस्था । ब्रह्मचैतन्यं साक्षाज्ज्ञातो घट इत्यादिरूपः ।। परागिति ।। व्याख्यातमेतत् ।। अभिव्यक्तमिति ।। अपगतावरणं सत्साक्षिचैतन्याभेदेनाभिव्यक्तमित्यर्थः । अतात्विकान्यथाभावो विवर्तः ।। आध्यासिकेति ।। वृत्तिप्रतिबिंबितचैतन्ये घटादीनां ज्ञाने तेषामनध्यासादित्यर्थः ।। आवश्यकेनेति ।। विषयविवर्ताधिष्ठानचैतन्यावरणनिवृत्त्यर्थमवश्य-वक्तव्येनेत्यर्थः । न च विषयाधिष्ठानचैतन्यमेव तत्प्रकाशकमिति नियमात्तथेति वाच्यम् । तन्नियमस्यैवासिद्धेरिति भावः ।

अंतःकरणपरिणामस्य विषयाकारत्वं दूषयति ।। किंचेति ।। ।। त्वयैवेति ।। विषयत्वनिरुक्तिं दूषयतेत्यर्थः ।। तयोरिति ।। तदाकारत्वेन हि अस्तीत्यादितद्विषयकव्यवहारप्रतिबंधकाज्ञाननिवृत्त्यादि भवतीत्यर्थः ।। तत्त्वेति ।। प्रयोज्यप्रयोजकयोरेकत्वं न संभवति । आत्माश्रयादित्यर्थः । ननु नात्माश्रयः । तादृशाज्ञाननिवर्तनयोग्यत्वं तदाकारत्वम् । तथाच तन्निवृत्तिजननयोग्यतारूपेण तदाकारत्वेन तादृशाज्ञाननिवृत्तिरूपं फलं भवतीत्यंगीकारादिति चेत् । मैवम् । उक्तयोग्यत्वस्य तादृशाज्ञाननिवृत्तिघटितत्वेन तां प्रत्यप्रयोजकत्वात् । तोयत्वपिपासोपशमनसामर्थ्ययोस्तु परस्पराघटितत्वादिति भावः ।। साकारेति ।। विज्ञानवादिमते तथात्वादित्यर्थः ।। तस्मादिति ।। हेतुपरामर्शोऽयं नोपसंहारः ।। पक्षत्रयमिति ।। अविद्योपाधिकं सर्वगतं जीवचैतन्यमविद्यानावृतं विषयप्रकाशकम् । वृत्तिस्तु जीवचैतन्यस्य विषयोपरागार्थेत्येकः पक्षः । उक्तरूपजीवचैतन्यमविद्यावृतं

(तरङ्गिणी)

विषयप्रकाशकम्। वृत्तिश्चावरणाभिभावार्थेति द्वितीयः पक्षः। अंतःकरणोपाधिकमसर्वगतं जीवचैतन्यं न विषयप्रकाशकम्। किंतु ब्रह्मचैतन्यं तथा। वृत्तिस्तु विषयप्रकाशकब्रह्मचैतन्येन प्रमातृजीवचैतन्याभेदस्याभिव्यक्त्यर्थेति तृतीयः पक्षः। इति पक्षत्रयमप्ययुक्तम्। तत्र हेतुः तस्मादिति। उक्तरीत्या चैतन्यस्य घटप्रकाशकत्वायोगादित्यर्थः ॥तत्रेति॥ विषयदृक् जीवचैतन्यमिति पक्ष इत्यर्थः। विशिष्टे घटादिविशिष्टे ॥दृगिति॥ अध्यस्तस्य घटादेस्तदधिष्ठानस्य ब्रह्मणश्चिन्मात्रस्य च विषयदृक्जीवचैतन्याद्भिन्नत्वादित्यर्थः। ननु विषयाध्यासो विषयविशिष्ट-जीवचैतन्य एवेत्याध्यासिकसंबंधसिद्धिरित्यत आह ॥कल्पितत्वादिति॥ अध्यस्तानधिक-सत्ताकत्वान्नाध्यासाधिष्ठानमित्यर्थः ॥अत एवेति॥ विषयदृक् ब्रह्मचैतन्यमिति पक्षे विषयाध्यासो जीवे वा चिन्मात्रे वा न संभवति। आध्यासिकसंबंधासिद्धेरित्युक्तहेतोरित्यर्थः।

ननु विषयदृक् ब्रह्मचैतन्यमिति पक्षे ब्रह्मचैतन्य एव विषयाध्यासोऽस्तु। एवं च नाध्यासिकसंबंधासिद्धिरित्याशंक्य विषयाध्यासाधिष्ठानत्वेन विषयदृक्त्वेन चाभिमतं ब्रह्म सविशेषं निर्विशेषं वेति विकल्प्य आद्ये दोषमाह ॥सविशेषस्येति॥ द्वितीये दोषमाह ॥शुद्धस्येति॥ ॥जगदिति॥ जगतः प्रकाशः स्यादित्यर्थः ॥अनवच्छिन्नस्येति॥ मूलाविद्यानिवृत्त्यभावेन सर्वत आवरणाभिभवाभावेऽपि घटाद्यवच्छेदेनावरणाभिभवसंभवादांध्यविरह उपपद्यत इत्यर्थः ॥अवच्छिन्नस्येति॥ वृत्त्या अभिभूतावरणस्यैव घटाद्यवच्छिन्नस्य घटादिदृक्त्वमित्यायातम्। तस्य च न तदधिष्ठानत्वम्। तत्र हेतुः कल्पितत्वेनेति। अध्यस्तानधिकसत्ताकत्वादित्यर्थः ॥आत्माश्रयेति॥ घटस्य घटाधिष्ठानकोटौ प्रवेशादित्यर्थः। घटाध्यासेन घटस्वरूपे सिद्धे चैतन्यस्य घटावच्छिन्नत्वसिद्धिः, तत्सिद्धौ च तादृशेऽधिष्ठाने घटाध्याससिद्धिरित्यन्योन्याश्रयोऽपि द्रष्टव्यः। ननु शुद्धचैतन्यमेकमेव। तदेवाधिष्ठानम्। तत्रावच्छेदकमविद्यादिकं न तदधिष्ठानकोटौ प्रविशति। ततो न कल्पितत्वादिति शेषः। वृत्त्याऽपगतावरणे शुद्धे प्रकाशमाने तत्राध्यस्तं जगदपि प्रकाशत इति न तदांध्यम्। नाप्याध्यासिकसंबंधस्यातंत्रत्वमित्यत आह ॥विशिष्टेति॥ तद्वैयर्थ्यादिति॥ चरमवृत्तिवैयर्थ्यादित्यर्थः। ननु न चरमवृत्तिवैयर्थ्यम्। उपाध्यविषयकब्रह्मस्फुरणस्य चरमवृत्तिप्रयुक्तत्वेन तस्याः साफल्यात्। इदानींतनस्फुरणस्य सप्रकारकत्वेनोपाधिविषयत्वात्। एकधैवानुद्रष्टव्यमिति श्रुतिबलात्स्वसमानविषयकज्ञानादेवाज्ञाननिवृत्तेः। अखंडचिन्मात्रज्ञानस्यैव मोक्षहेतुत्वावधारणादिति चेन्न। ब्रह्मविषयकसप्रकारकज्ञानस्यैव ब्रह्मविषयकसप्रकारक-संशयादिविरोधित्वात्। एकधेति श्रुतिस्तु ज्ञानानंदादिप्रकारेषु तद्विरोध्यज्ञानदुःखादिकं व्यवच्छिनत्ति। अन्यथा प्रकारार्थधाप्रत्ययो व्यर्थः स्यात्। निवर्तकतायां ज्ञानाज्ञानयोः

(तरङ्गिणी)

समानविषयकत्वं तु भिन्नविषयकत्वं निवारयति। न त्वधिकविषयत्वमपि। अन्यथा घटपटाविति समूहालंबनात् घटज्ञानं निवृत्तमिति व्यवहारो न स्यात्। तदज्ञाननिवर्तकतायां हि तद्विषयकत्वं तंत्रम्। न तु तदितराविषयकत्वमपि। गौरवादिति भावः।

॥ त्वन्मत इति॥ सुषुप्तावेवांतःकरणस्य लयांगीकारादिति भावः ॥ कृतहानीति॥ यदंतःकरणावच्छिन्नेन यत्कर्म कृतं तदंतःकरणस्य सुषुप्त्युत्तरकालेऽसत्त्वेन तत्कर्मजन्यभोगस्य हानिः। परदिने यदंतःकरणावच्छिन्नस्य भोगो भवति तदंतःकरणावच्छिन्नत्वेन तद्भोगहेतुभूतं कर्म न कृतमित्यकृताभ्यागम आदिशब्दार्थः। ननु न कृतहान्यादि। सुषुप्तावप्यंतःकरणस्य कारणात्मनाऽवस्थानात्। स्थूलसूक्ष्मसाधारणस्यांतःकरणस्य जीवोपाधित्वात्। तदपीतेस्संसार-व्यपदेशादिति सूत्रे चास्यार्थस्य स्फुटतरमुक्तत्वादिति चेन्मैवम्। अंतःकरणस्य सूक्ष्मरूप-मविद्यैव। अवयवद्वाराऽऽरंभस्य भवदभिमतत्वात्। तथाचास्य पक्षस्याविद्यावृतत्वपक्ष एवांतर्भावापत्तेरिति भावः।

॥ प्रतिबिंबितत्वमिति॥ एतस्मात्प्राक् वृत्ताविति शेषः ॥ अनुद्भूतेति॥ उद्भूतरूपवत्त्वस्य प्रतिबिंबनोपाधितायां प्रयोजकत्वादित्यर्थः। नन्वनुद्भूतरूपेऽपि गुहाकाशादौ प्रतिबिंबनोपाधित्वं दृश्यत एवेत्यत उक्तम् ॥ शब्दान्येति॥ ननु नोद्भूतरूपवत्त्वं प्रतिबिंबनोपाधितायां प्रयोजकम्। अस्वच्छेऽपि लोष्टादौ प्रतिबिंबापत्तेः। किंतु स्वच्छत्वम्। तच्च प्रकाशस्वभावत्वेन मनसस्तत्परिणामभूताया वृत्तेश्चास्त्येव। नापि चाक्षुषत्वं प्रतिबिंबत्वे प्रयोजकम्। अचाक्षुषस्याप्याकाशादेः प्रतिबिंबितत्वदर्शनादिति चेत्। मैवम्। उद्भूतरूपवत्त्वविशेषातिरिक्तस्य स्वच्छत्वस्याभावादाकाशस्य प्रतिबिंबोऽसिद्ध एव। प्रभामंडलस्यैव जलादौ प्रतिबिंबनात्। आकाशस्यापि रूपित्वाच्च। अन्यथा वाय्वादेरपि प्रतिबिंबनापत्तेरिति भावः ॥ तदात्मनेति॥ वृत्त्यात्मनेत्यर्थः ॥ सर्वत्रेति॥ तथाचाभिव्यक्तत्वरूपोपरक्तत्वस्य चितः सर्वत्र सत्त्वेन चितः स्वतो वृत्तिमात्रोपरक्तत्वमिति प्रतिज्ञाहानिरित्यर्थः। तदंतस्थत्वं वृत्त्यंतस्थत्वम् ॥ प्रभाया इति॥ यथा प्रभा रूपमात्रप्रकाशकत्वेन स्वतो रूपोपरक्तेत्युच्यते तथा चिदपि वृत्तिमात्रप्रकाशकत्वेन स्वतो वृत्त्युपरक्तेत्युच्यत इत्यर्थः। प्रभाया रूपमात्रप्रकाशकत्वं नाम रूपमात्रदेशस्थतमोनिवर्तकत्वं वा, रूपाज्ञाननिवर्तकत्वं वा, रूपमात्रग्राहिमानसहकारित्वं वेत्यभिप्रेत्य प्रभायामाद्यौ न स्त इत्याह ॥ प्रभायामिति॥ तथाच न प्रभादृष्टांतेन चितः स्वतो वृत्त्युपरक्तत्वम्। चितस्तमोनिवर्तकत्वाभावात्। वृत्तावज्ञानाभावाच्च दार्ष्टांतिकेऽपि नैतदस्तीतिभावः। तृतीयो यद्यपि दृष्टांते प्रभायामस्ति। तथापि दार्ष्टांतिके चिति नास्तीत्याह ॥ प्रभायामिति॥ तथाच प्रभादृष्टांते

(तरङ्गिणी)

न चिति वृत्तिमात्रग्राहकमानसहकारित्वं नास्तीत्यर्थः ॥ चित्संबंधित्वस्येति॥ अनावृत-चित्संबंधस्येत्यर्थः। विषयप्रकाशिका चिदनावृतेति पक्ष एव वृत्तिरुपरागार्थेत्यभ्युपगमादिति भावः ॥ सर्वेति॥ अनावृतचित्संबंधस्य सर्वेषां सत्त्वादित्यर्थः।

ननु वृत्तिमात्रं संबध्य प्रकाशनिवर्तकत्वमेव चितः स्वतो वृत्त्युपरक्तत्वम्। न च प्रभादृष्टांतानानुगुण्यम्। इष्टापत्तेः। प्रभायाः गंधादिदेशस्थतमोनिवर्तकत्वं तत्संबंधाद्युज्यते। चैतन्यस्य तु स्वभावतोऽसंबद्धत्वात्तदाकारवृत्त्या तद्देशसंबंधस्योपादानात् कथं सर्वप्रकाशप्रसंगः। स्वभावतो ह्यसंगत्वे "असंगो ह्ययं पुरुष" इति श्रुतिः प्रमाणम्। अतः सर्वैः सह संबंधाभावान्न सर्वावभासप्रसंगः। किंतु यदाकारा वृत्तिस्तस्यैव। अत एवेदं रजतमिति भ्रमे इदमाकारवृत्त्यवच्छिन्नचैतन्येन रजतभानानुपपत्ते रजताकाराऽप्यविद्यावृत्तिरभ्युपेयते। स्वतश्चि-द्बिंबग्राहकत्वे वृत्तिमंतरेण चैतन्यस्य तदाकारत्वायोगादिति चेन्मैवम्। दत्तोत्तरत्वात्। अनावृतायाः सर्वगतायाश्चितो मनःपरिणामेनेवान्येनापि कुलटाया इव संबंधोपपत्तेः। न हि तस्या एकतरस्मिन्पक्षपातोऽस्ति, वृत्तावस्तीति चेन्न। वृत्तेरपि वृत्त्यंतराधीनचित्संबंधेऽनवस्थापत्तेः। स्वतश्चिद्बिंबग्राहकत्वेंऽतःकरणतद्वृत्त्यादौ न वृत्त्यपेक्षेति नानवस्थेति चेन्न। अनुद्भूतरूपेंऽतःकरणादौ प्रतिबिंबनोपाधित्वमेव नास्ति। नतरां स्वतस्त्वेतु। तस्मात्सर्वसंबंधादनावृतचितः सर्वप्रकाशो दुर्वारः। असंगश्रुतेस्तर्हि का गतिरित्यत आह ॥ असंगइति॥ ननु संगशब्दस्य संबंधे प्रसिद्धत्वात्कथं लेपपरत्वमित्यत आह ॥ स यदिति॥ ज्योतिर्ब्राह्मणे सुषुप्तिस्वप्नजाग्रत्सु जीवस्य रमयितुश्चारयितुः पुण्यपापे दर्शयितुरीश्वरस्य तत्कर्मलेपो नास्तीत्यत्र असंगत्वं हेतुरुच्यते। न तु सर्वासंबंधित्वम्। स्वप्नेन शारीरमभिप्रहत्य सुप्तस्सुप्तानभिचाकशीति। शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एक हंस इति पूर्वोदाहृतश्लोके ईश्वरस्य प्रकृतत्वात्। श्रुतौरत्वेत्यादीन्यंतर्भावितणिजर्थानीति ॥ यथेति॥ 'तथा सर्वाणि भूतानि मत्स्थानीत्युपधारये'ति सर्वसंबंधोक्तेरित्यर्थः। ननु सर्वगतमपि चैतन्यं स्वभावाद्वृत्त्यैव स्वतःसंबध्य तेन विषयैरित्यत आह ॥ अपि चेति॥ वृत्तितः पूर्वं विषयैश्चैतन्यमेव स्वतःसंबद्धं प्रकाशोपयोगि। संबंधस्तु पूर्वमस्तीति सर्वप्रकाशो दुर्वार इत्यर्थः। ॥ अन्य इति॥ अनावृतचित्संबंधादिति शेषः। उपरागः संबंधः। दृश्यत्वे प्रकाशे ॥ मानेति॥ वृत्तिद्वारा विषयैः संबध्य तत्प्रकाशकत्वात् ॥ स्वत इति॥ प्रमाणं विनेत्यर्थः ॥ सर्वोपादानत्वादिति॥ तथाच विषयैः साक्षात्संबंधोऽसंगस्यापि ब्रह्मणोऽस्तीत्यर्थः ॥ आध्यासिकेति॥ विशिष्टनिष्ठेन परिणामित्वरूपेण सर्वोपादानत्वेन विशिष्टब्रह्मणः सर्वज्ञत्वे यत्र यदध्यस्तं तत्र तदाध्यासिकसंबंधेन प्रकाशत इति भवदभिमतनियमभंगप्रसंगः। आध्यासिकसंबंधभिन्नेन जगत्प्रकाशांगीकारादित्यर्थः।

(तरङ्गिणी)

ननु परिणामिनि ब्रह्मण्येव जगदध्यासोऽस्त्वित्यत उक्तम् ॥ विशिष्टनिष्ठेति॥ विशिष्टस्याध्यस्तसमानसत्ताकत्वान्नाध्यासाधिष्ठानत्वमिति भावः ॥ अनादीति॥ उपादानत्वेन जगत्प्रकाशेऽविद्यां प्रत्युपादानत्वाभावात्तत्प्रकाशो ब्रह्मणो न स्यादित्यर्थः ॥ नापीति॥ शुद्धनिष्ठेन जगदधिष्ठानत्वरूपेण जगदुपादानत्वेन ब्रह्मणो जगत्प्रकाशे शुद्धस्यैव सार्वज्ञापत्तिः। अस्तु शुद्धस्यैव सार्वज्ञमित्यत आह ॥ सार्वज्ञादेरिति॥ विशिष्टनिष्ठत्वात् विशिष्टनिष्ठत्वेनांगीकारात्। शुद्धे सार्वज्ञांगीकारेऽपसिद्धांत इत्यर्थः।

वृत्तिरावरणाभिभवार्थेति पक्षे दोषमाह ॥ आवरणेति॥ ॥ सदेति॥ प्रकाशमाने चावरणं न संभवति। नतरां चावरणनिवृत्तिर्वृत्तेरित्यर्थः ॥ अन्यस्य चेति॥ चिन्मात्रादन्यस्याज्ञानकल्पितत्वेनाप्रसक्तप्रकाशतयाऽऽवरणप्रयोजनाभावेन तत्रावरणाभावादेव न वृत्त्या चिन्मात्रादन्यत्रावरणनिवृत्तिः क्रियत इत्यर्थः। ननु चिन्मात्रस्याज्ञानादिसाक्षित्वेन सदा प्रकाशेऽप्यशनायाद्यतीतत्वादिना प्रकाशाभावादावरणस्यावश्यकत्वात्तन्निवृत्त्यर्थमर्थवती वृत्तिरिति चेन्न। युक्तमिदं सविशेषब्रह्मवादे। भावाभावात्मकविशेषगंधविधुरं ब्रह्मेति मते अशनायाद्यतीतत्वस्य प्रकाशमानब्रह्ममात्रत्वेन तदप्रकाशासंभवान्न तदर्थमावरणमिति भावः। आवरणासंभवमभिधायाऽवरणाभिभवासंभवमाह ॥ किंचेति॥ नयनपटलं नयनगतकाचादि। पुंगतत्वे प्रमातरि पुरुषे विद्यमानत्वे ॥ दीपेनेति॥ चैत्रकृतदीपस्थो घटो यथा निवृत्तावरणत्वात्सर्वैरपि ज्ञायते तथा चैत्रगतया वृत्त्या निवृत्ताज्ञानावरणो घटादिः सर्वान्प्रति प्रकाशेतेत्यर्थः। ननु चैत्रगतवृत्त्या चैत्रावरकशक्तेरेवाज्ञानगताया नाशितत्वेन चैत्रः पश्यति न मैत्रः तत्प्रतियोगिकावरणशक्तेरनाशात्। आवरणशक्तीनां द्रष्टृविषयभेदाभ्यां भिन्नत्वात्। तमस्तु न तथेत्येकानीतप्रदीपेनाप्यन्यप्रकाशो युज्यत इति चेन्न। शक्तीनामज्ञानत्वे नानाज्ञानमतप्रवेशः। तद्भिन्नत्वे साक्षाज्ज्ञाननिवर्त्यत्वस्य विषयावरकत्वस्य चायोगात्। ज्ञानमज्ञानस्यैव निवर्तकमिति भवत्स्वीकारात्। शक्तीनामेवाज्ञानकार्यकारित्वसंभवे शक्तिमतोऽज्ञाने अन्यथासिद्धेश्च। गौरवस्य विपरीतत्वेन नानाज्ञानवादस्यैव समीचीनत्वाच्चेति भावः।

पक्षद्वयेपि विशिष्य दोषं वक्तुं पृच्छति ॥ किमिति॥ किंशब्दस्याज्ञानमेकमित्यनेनान्वयः ॥ किं वेति॥ किं वाऽनेकानीत्यन्वयः। अज्ञानानीति शेषः ॥ यद्यनंतानीति॥ यदिशब्दो निमित्तार्थः। यदि रथंतरसामा सोमः स्यादैंद्रवायवाग्रान्ग्रहान् गृह्णीयादितिवत्। ज्ञानानामनंतत्वात्तन्निवर्त्यान्यज्ञानान्यप्यनंतानीत्यर्थः ॥ शुक्तीति॥ अज्ञानस्यैकत्वेन मूलाज्ञानस्यैव रजतभ्रमोपादानत्वात् शुक्तिज्ञानेन च तन्निवृत्तेरित्यर्थः ॥ सद्य इति॥ परमते मुक्तिर्द्विविधा।

(तरङ्गिणी)

सद्योमुक्तिः क्रममुक्तिश्चेति। तत्र क्रममुक्तौ उत्क्रमणादिद्वारेण ब्रह्मप्राप्तिः। सद्योमुक्तौ नोत्क्रमणादिः। न तस्य प्राणा उत्क्रामंतीति श्रुतेः। शुक्तिज्ञानेन उत्क्रमणादिकमंतरेण सद्योमुक्तिः स्यादित्यर्थः। ननु शुक्तिज्ञानेन मूलाज्ञानं न नश्यति। किंतु तद्गतावरणशक्तिरेव नश्यति। तथाच न तज्ज्ञानेन सद्योमोक्षापात इत्यत आह ॥ अनिवृत्ताविति॥ ॥ सविलासेति॥ कार्यसहितेत्यर्थः। यथोक्तं 'अज्ञानस्य वर्तमानेन प्रविलीनेन वा स्वकार्येण सह निवृत्तिर्बाध' इति। तथाचाज्ञाननिवृत्तेरभावात् रजतादिबाधाभावेन शुक्तिसाक्षात्कारेऽपि रजतानुवृत्तिः स्यादिति भावः। अज्ञाननिवृत्त्यभावे इष्टापत्तिं शंकते ॥ नन्विति॥ अस्मिन्पक्षे मूलाज्ञानमेव रजताद्युपादानमिति पक्षे। शुक्तिसाक्षात्कारेण रजतोपादानमज्ञानं न निवर्तते। ननु तर्हि रजतोपादानाज्ञाननिवृत्त्यभावात्तदधीनरजतनिवृत्तिरपि न स्यादित्यत आह ॥ रूप्यादेरिति॥ स्वकारणे मूलाज्ञाने। प्रविलयः कारणात्मना अवस्थानम्॥ ब्रह्मज्ञानेनेति॥ श्रवणादिद्वारकेणेत्यर्थः ॥ विरोधित्वादिति॥ ज्ञानमज्ञानस्य निवर्तकमेवेति व्याप्त्याश्रयणादित्यर्थः। एवशब्दस्य निवर्तत इत्यनेनान्वयः ॥ ज्ञानस्येति॥ यतो ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्त्याश्रयणादित्यर्थः ॥ रूप्यादीति॥ रूप्योपादानमूलाज्ञानमनिवर्तयन् शुक्तिसाक्षात्कारः तदुपादेयं रजतं निवर्तयितुं न शक्त इत्यर्थः।

॥ शुक्तीति॥ शुक्तिज्ञानेनाज्ञानमनिवर्त्य तद्गतावरणशक्तिमात्रनिवर्तने बाधेऽपि शुक्तिप्रकाशो न स्यात्। निवृत्ताज्ञानचित्संबंधरूपस्याभिव्यक्तचैतन्यसंबंधस्याभावात्। नन्वज्ञानगतावरण-शक्तिनाशाद्भग्नावरणचित्संबंधरूपोऽभिव्यक्तचैतन्यसंबंधोऽस्तीति चेन्न। आवरणशक्तेरज्ञाना-तिरिक्तत्वे आवरणत्वायोगात्। अज्ञानरूपत्वे तन्नाशं विना तन्नाशायोगात्। ननु 'यतो ज्ञानमज्ञानस्यैव निवर्तकम्' इति व्याप्तिः स्वरूपोच्छेदविषया। स्वकारणे सूक्ष्मरूपेणावस्थाने तदनंगीकारात्। शुक्तिज्ञानस्य चानवच्छिन्नचैतन्यावरणरूपमूलाज्ञानानिवर्तकत्वेऽप्यवच्छिन्न चैतन्यावरणरूपतूलाज्ञाननिवर्तकत्वेनाभिव्यक्तचैतन्यसंबंधाद्बाधदशायां रूप्यनिवृत्तिशुक्तिप्रकाशयो-रुपपत्तिरिति चेन्न। तस्य रूप्यभ्रमोपादानत्वे तस्यैवाविद्यात्वापत्तेः। भ्रमोपादानमविद्येति तल्लक्षणात्। तेनैवाविद्याया अन्यथासिद्धेश्चेत्युक्तत्वाच्च। रूप्यभ्रमानुपादानत्वे तन्निवृत्तावपि तदुपादानस्य मूलाज्ञानस्यानिवृत्तेर्बाधदशायामपि रूप्यानिवृत्तिः स्यात्। उपादानानिवृत्तावपि उपादेयनिवृत्तौ ज्ञाननिवर्तनीयं प्रपंचोपादानमज्ञानं प्रपंचस्य श्रुतज्ञाननिवर्त्यत्वसिध्यर्थं न कल्पनीयं स्यात्। सत्यस्यापि प्रपंचस्योपादानमनिवर्त्यापि ज्ञाननिवर्त्यत्वोपपत्तेरिति ॥ खद्योतेति॥ खद्योतस्य प्रकाशेन महांधकारस्यैकदेशे नष्टे तद्देशस्थवस्तु दृश्यते यथा तथा वृत्त्या ज्ञानस्यैकदेशस्य

(तरङ्गिणी)
नाशे सति विषयः प्रकाशत इत्यर्थः ॥भीरुभटवदिति॥ प्रतिभटे प्रबले दृष्टे भीरुभटो यथा तं देशमपहायापसरति तथा वृत्तौ सत्यामज्ञानमपसरतीत्यर्थः ॥अनादीति॥ अनादित्वेनाज्ञानचैतन्ययोर्निरवयवत्वादेकदेशादिविरहेण खद्योतादिदृष्टांतो न संभवतीत्यर्थः। अस्मिंश्च पक्षे चैत्रगतवृत्त्या मैत्रस्यापि प्रकाशापत्तिः। खद्योतद्योतितदेशस्थविषयस्य सर्वैरपि दर्शनादिति बोध्यम्। दंडादिना गवादीनामिवापसरणं करादिना कटादीनामिव संवेष्टनं च न संभवति। अज्ञानस्यामूर्तत्वादित्यपि बोध्यम्।

ननु मण्यादिना वह्नेरिव कार्याक्षमत्वमेवापसरणादीति शंकां निवर्तयितुमधिकदूषणं वक्तुं च शक्तिपक्षं विशिष्योत्थापयति ॥नेति॥ यद्वा सिद्धांत्युद्भावितसर्वप्रकाशापत्तौ पूर्वपक्षिणा शक्तिमंगीकृत्य समाहितायामभिप्रायतस्तद्दूषणं पूर्वत्र, इह तु शुक्तेरप्रकाशे सिद्धांतिनापादिते पूर्वपक्षिणः शक्तेरभिभवात् शुक्तिप्रकाशो भवतीति समाधानमाशंक्य निराक्रियत इति न दोषः। ननु शुक्तिज्ञानेनाविद्याशक्त्यभिभवो न युक्तः। उपादेयेनोपादानाभिभवादर्शनादित्यत आह ॥वृत्त्येति॥ ॥अविद्याया इति॥ शक्तेरिति शेषः। अविद्यागतावरणशक्तिः किं शुद्धात्मविषया उत जडविषया जडविशिष्टात्मविषया वेति विकल्प्याऽद्ये दोषमाह ॥चक्षुरिति॥ आवरणशक्तेः शुद्धात्मविषयायाः शुद्धात्माविषयकशुक्तिवृत्त्याभिभवो न संभवति। तस्याविशिष्टविषयत्वेन भिन्नविषयत्वादित्यर्थः। ननु शुक्तिवृत्तिरपि शुद्धात्मविषयास्त्वित्यत उक्तं ॥चक्षुरादिजन्येति॥ ननु चक्षुरादिजन्याऽपि सा आत्मविषयाऽस्त्वित्यत उक्तं ॥रूपादिहीनेति॥ ननु रूपादिहीनस्य रूपादेरिवात्मनोपि चाक्षुषत्वमस्त्वित्यत उक्तम् ॥शब्देति॥ तं त्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुतेरित्यर्थः। ननु शुक्तिवृत्तेर्विशिष्टविषयत्वेऽपि विशेष्यभूतचिद्विषयत्वमस्त्येवेति ततोऽपि तदभिभवोऽस्तु, नीरूपायाश्रितः शुक्त्याद्युपरागेण चाक्षुषत्वं तु राहोरिव चंद्राद्युपरागेण भवतीत्यत आह ॥शुक्तिवृत्तेरिति॥ तयैवेति॥ शुक्तिवृत्तेरधिकविषयत्वेऽपि चिद्विषयत्वस्य त्वयैव स्वीकारादित्यर्थः। द्वितीयं निराकरोति ॥अविद्येति॥ ॥अप्रसक्तेति॥ सति पुष्कलकारणे कार्याभावप्रयोजकस्यैव प्रतिबंधकत्वात् जडे च कारणपौष्कल्याभावादित्यर्थः। तृतीयं निराकरोति ॥जडेति॥ विशेष्येति॥ विशिष्टविषयविधिनिषेधयोर्विशेष्यबाधे विशेषणविषयत्ववद्विशेषणबाधे विशेष्यविषयत्वस्यापि वा सस्वीदर्शनादिति भावः।

नन्वविद्याकल्पिते अवच्छिन्ने अस्माभिरविद्या वा तच्छक्तिर्वा नाभ्युपेयते। किं तु चैतन्यमात्र एव। तस्मिंस्तु सर्वं जडमध्यस्तमस्तीत्येकाश्रयाश्रितत्वसंबंधाज्जडावच्छिन्नचैतन्यमावृतमिति व्यपदेशः। घटाद्याकारवृत्त्या तु तदधिष्ठानचैतन्याभिव्यक्तौ तदवच्छेदेनैव तन्निष्ठावरणाभिभवो

(तरङ्गिणी)

जायत इति न शुद्धात्मप्रकाशापत्तिरिति। मैवम्। वाङ्मात्रत्वात्। यथा हि तमसा सह एकस्मिन्भूतले विद्यमानस्य घटस्य प्रकाशसंबंधे सति यत्र तमश्च घटश्च वस्तुतोऽवर्तिषातां तद्भूतलं प्रकाशत एव, तथा घटाकारवृत्त्या तदधिष्ठानचैतन्याभिव्यक्तौ यत्र ज्ञानं घटश्चाध्यस्तौ शुद्धे तदपि प्रकाशत एव। अज्ञानाध्यासाधिष्ठानस्यैव शुद्धत्वात्। एवं च घटाद्याकारवृत्तौ घटावच्छिन्नमेव प्रकाशते न शुद्धात्मेति तु वाङ्मात्रमेव। शुद्धात्मप्रकाशापरिहारादिति भावः।

॥प्रच्युतेति॥ अवस्थांतरं प्राप्ता इत्यर्थः ॥पार्थिवेति॥ तेषां च पार्थिवावयवानां वृश्चिकोपादानानां तदुपादेयेन वृश्चिकादिना न नाश इत्यर्थः ॥अवस्थे इति॥ ग्रीष्मवर्षादिषु नदीनामपचयोपचयाः कार्यविशेषकरा दृष्टा यथा तथेत्यर्थः ॥साध्यासमिति॥ रजततद्वृत्तिभ्यां सहेत्यर्थः। तेषां अवस्थाविशेषाणाम् ॥अनेकेति॥ ननु सर्वावस्थानुस्यूतैकाकारतामादायाज्ञानैक्यं स्यादिति चेन्न। अवस्थारूपाज्ञानानामनंतत्वेऽपि जात्यैक्याद्धटवत्तदैक्यमित्युक्तं स्यात्। तत्र चानेकाज्ञानवादापातोऽपरिहार्य इति भावः ॥न चेदिति॥ अवस्थाविशेषाणामज्ञानभिन्नत्वे ॥साक्षादिति॥ यतोऽज्ञानमज्ञानस्यैव निवर्तकमिति त्वदभिमतत्वादिति भावः ॥भ्रमेति॥ भ्रमोपादानमज्ञानमिति तल्लक्षणस्याज्ञानभिन्नेऽवस्थाविशेषे अतिव्याप्त्यापत्तेरित्यर्थः ॥तेषामिति॥ अवस्थाविशेषाणां स्वोपादानमूलाज्ञाननिवृत्तिं विना निवृत्त्ययोगेनावस्थाविशेषनिवृत्त्यर्थं तदुपादानमूलाज्ञाननिवृत्तेरावश्यकत्वात् शुक्तिज्ञानादेव निर्मोक्षापत्तिः। उपादाननाशं विनाऽवस्थाविशेषनाशश्चेत्तर्हि रजतोपादानं मूलाज्ञानमेवास्तु। तन्नाशं विनैव रजतनाशोऽस्तु। किमवस्थाविशेषाणां रजतोपादानत्वादिकल्पनयेत्यर्थः ॥शुक्त्यज्ञानमिति॥ अवस्थाविशेषाणां अज्ञानभिन्नानां रजतोपादानत्वे तन्निवर्तकशुक्तिज्ञानेन रजतोपादानमवस्थाविशेषा निवर्तंत इत्यभ्युपेयम्। तथाच शुक्तिज्ञानेन शुक्त्यज्ञानं नष्टमित्यनुभवविरोध इत्यर्थः। किंच शुक्तिविषयकाज्ञानस्य सर्वे शुक्त्यावरकावस्थाविशेषा एकया शुक्तिवृत्त्या निवर्तंते, यः कोऽपि वा? आद्ये पुनः कदाऽप्यप्रकाशो न स्यात् शुक्तेः। सर्वतदावरणानां निवृत्तत्वात्। अंते शुक्तिवृत्तिकालेऽपि शुक्तिप्रकाशो न स्यात्। एकस्यावरणस्य नाशेऽप्यावरणांतरस्य सत्त्वादित्यपि दोषो बोध्यः। तस्मादेकाज्ञानपक्षे मूलाज्ञानस्यैव रजतोपादानत्वे शुक्तिवृत्त्या तदज्ञाननाशेऽपि रजतस्य प्रविलयात्तददर्शनम्। शुक्त्यावरकस्य तस्यानाशेऽपि तस्यैकदेशनाशाद्वा, अपसरणाद्वा, संवेष्टनाद्वा, मण्यादिना वह्नेरिव शक्तेरभिभवाद्वा बाधकाले शुक्तेः प्रकाश इत्येतानि समाधानानि न संभवंति। अवस्थाविशेषाणां उपादानत्वमित्यपि न संभवतीति एकाज्ञानपक्षो न संभवतीति भावः।

(तरङ्गिणी)

इष्टसिद्धिकारमते नानाऽज्ञानपक्षे दोषमाह ॥ द्वितीयेऽपीति॥ सर्वेति॥ भाविवृत्तिनिवर्त्यानां तदज्ञानानां रजताद्युपादानशुक्त्यज्ञानानामित्यर्थः ॥आद्यइति॥ शुक्त्यावरणत्वेन संभाविता-नामज्ञानानामेकया शुक्तिवृत्त्या निवर्तितत्वादित्यर्थः ॥कदापीति॥ वृत्तिनाशानंतरमपीत्यर्थः ॥तदापीति॥ वृत्तिकाले पीत्यर्थः। ननु एकया वृत्त्या एकाज्ञाननाशेऽपि तयैवावरणांतराणां प्रतिबद्धत्वात् यावत्सा तिष्ठति तावत्प्रकाशः, तस्यामपगतायां पुनरप्रकाशश्चोपपद्यत इति। मैवम्। तर्ह्येकाज्ञानपक्ष एवास्तु, लाघवात्। तस्यैव वृत्त्या प्रतिबंधेन विषयप्रकाशोपपत्तेः। श्रवणाद्युपार्जितवृत्तेस्तु मूलाज्ञाननिवर्तकत्वं कल्प्यतामिति किं नानाज्ञानकल्पनया ॥ अयं चेति॥ ॥व्याख्यातमेतत्॥ ॥सादीति॥ शुक्त्यादेरुत्पत्तेः पूर्वमज्ञानस्य निर्विषयत्वं स्यादित्यर्थः। अस्तु निर्विषयत्वं तस्येत्यत आह ॥निर्विषयस्येति॥ अस्यास्मिन्नावरणमिति आश्रयविषयो-पेतस्यैवावरणस्य प्रतीतेरित्यर्थः ॥पूर्वमिति॥ अनाद्यज्ञानविषये अनादिचैतन्ये तत्तदागंतुक-पदार्थोऽवच्छेदक इत्यर्थः ॥शुक्तीति॥ शुद्धचैतन्यावरणस्यैवाज्ञानस्य शुक्त्यवच्छिन्नावरणत्वात् शुक्तिसाक्षात्कारेण च शुक्त्यवच्छिन्नाज्ञाननिवृत्तौ शुद्धचैतन्यावरणाज्ञाननिवृत्तेरपि सत्त्वात्तेनैव मोक्षापात इत्यर्थः। अनेकाज्ञानवादहानिश्चेत्यपि बोध्यम्॥ प्रतिविषयमिति॥ यथाऽनेकव्यक्तिविषया एकैव जातिस्तथा अज्ञानमप्येकमेव स्यात्। न तु प्रतिविषयं भिन्नम्। तत्र च शुक्तिसाक्षात्कारान्मोक्षापत्तिर्दोष इत्यर्थः। ननु यदवच्छिन्नगोचरा वृत्तिः तदवच्छेदेनैवावरणा-पसरणान्नानवच्छिन्नचैतन्यावरणभंगप्रसंग इति चेत्, मैवम्। शाखावच्छेदेन संयोगाधारस्य वृक्षत्ववत् घटावच्छेदेन भग्नावरणस्यापि शुद्धत्वान्मोक्षप्रसंगो दुर्वार इत्यर्थः ॥कौमुद्यां वेदांतकौमुद्यां ॥ज्ञानेनेति॥ चैत्रनिष्ठघटज्ञानेन चैत्रनिष्ठघटज्ञानप्रागभावानां सर्वेषां नाशे कदापि घटाप्रकाशो न स्यात्। अनाशे प्रागभावांतरसत्त्वेन घटज्ञानकालेऽपि घटव्यवहारो न स्यादिति समो दोष इत्यर्थः ॥तत इति॥ यथा तव एकं ज्ञानं एकमेव प्रागभावं नाशयति प्रागभावांतरनिबंधनमज्ञानमज्ञानत्वादिव्यवहारं च प्रतिबध्नाति, तथा ममाप्येकं ज्ञानं एकमेवाज्ञानं नाशयति अज्ञानांतरनिबंधनं प्रयोजनं प्रतिबध्नातीत्यर्थः। एकेन ज्ञानेन एक एव प्रागभावो नश्यतीति पक्षमाश्रित्य समाधत्ते ॥तन्नेति॥ आवरणानीति॥ घटज्ञानकार्यस्य व्यवहारादेः, विषयभूतस्य घटस्य तज्ज्ञानप्रागभावाः नावरणानीत्यर्थः ॥ दंडेति॥ यथा दंडप्रागभावो दंडकार्यस्य घटादेर्नावरणं किंतु घटकारणदंडस्याभावरूपः, तथा ज्ञानप्रागभावोऽपि ज्ञानकार्यव्यवहार-कारणज्ञानस्याभावरूप इत्यर्थः ॥नापीति॥ ज्ञानं स्वकार्यव्यवहारं प्रति यदि ज्ञानप्रागभावनिवर्तकत्वेन हेतुर्भवेत्तदा ज्ञानांतरप्रागभावसत्त्वेन तन्निवृत्तिरूपकारणाभावा-देकस्मिन्ज्ञाने सत्यपि घटव्यवहारो न स्यात्। न तु तदस्तीत्यर्थः ॥किंत्विति॥ यथा

(तरङ्गिणी)

दंडो दंडत्वेनैव घटं प्रति कारणं तथा ज्ञानमपि व्यवहारादिषु ज्ञानत्वेनैव हेतुरिति मयांऽगीकारादित्यर्थः ॥ सजातीयेति ॥ प्रागभावस्य ज्ञानकार्यव्यवहारविषयानावरकत्वादित्यर्थः ।

ननु मा भूवन् ज्ञानप्रागभावा आवरणं, मा च भूत् ज्ञानं प्रागभावनिवर्तकत्वेन हेतुः, किंतु स्वरूपेणैवास्तु तथापि ज्ञानांतरप्रागभावसत्त्वेन तदभावरूपज्ञानांतराख्य-कारणाभावादेकस्मिन्ज्ञाने विद्यमानेऽपि तवापि व्यवहारो न स्यादित्यत आह ॥ कार्येति ॥ कारणतावच्छेदकावच्छिन्नयत्किञ्चित्सत्त्वस्यैव तत्र तंत्रत्वादित्यर्थः ॥ सर्वप्रागभावनिवृत्तिरिति ॥ सर्वसत्त्वमित्यर्थः ॥ असंभवादिति ॥ अतीतानागतवर्तमानकारणानामेकदा असत्त्वादित्यर्थः । एवं च मम मते ज्ञानं स्वप्रागभावनिवृत्तौ लब्धस्वरूपं सत् ज्ञानांतरप्रागभावस्यानावरकस्य सत्त्वेऽपि स्वविषये स्वकार्यं व्यवहारादिकं करोत्येव। तव मते त्वेकस्मिन् ज्ञाने सत्यपि तद्विषयावरणस्याज्ञानांतरस्य सत्त्वाज्ज्ञानकार्यं व्यवहारादिकं ज्ञानकालेऽपि न स्यादित्याह ॥ त्वन्मते त्विति ॥ आवरणेति ॥ अनावृतविषयकत्वसंपादकत्वेनेत्यर्थः । ननु आलोकस्य भूतभावितमो-निवर्तकत्वाभावेऽपि स्वविषये यत्किञ्चित्स्वकालीनतमोनिवर्तकत्वेनैव स्वविषयव्यवहारादिप्रयोजकत्वं यथा, तथा ज्ञानस्यापि यत्किञ्चित्स्वविषयावरणाज्ञाननिवर्तकत्वेन स्वविषयव्यवहारादिप्रयोजकत्वं भविष्यतीत्याशंक्य निराकरोति ॥ न चेति ॥ हेत्विति ॥ आलोकरूपस्य हेतोरभाव इत्यर्थः ॥ तदिति ॥ आलोकस्य तमोनिवृत्तिरूपत्वान्न तन्निवर्तकत्वे न हेतुत्वमित्यर्थः । स्वरूपेण आलोकत्वेन। ननु यत्किञ्चिज्ज्ञानसत्त्वेऽप्यज्ञानांतरनिबंधनाप्रकाशवदालोकसत्त्वेऽपि तमोंऽतर-निबंधनोऽप्रकाशः स्यादित्यत आह ॥ नाप्येकेति ॥ ॥ इहेति ॥ सर्वालोकाभावस्य तमसो यथावरणत्वं तथेत्यर्थः ॥ वृत्तीति ॥ वृत्तिकाले यः समुदायनाशः स्थितः स वृत्तिनाशकालेऽप्यस्तीत्यर्थः । भावस्तम इति मते तस्यावरणत्वेप्यालोकस्य स्वसमानाधि-करणसर्वतमोनिवर्तकत्वादालोककाले तमोंऽतरस्यावरणस्यासत्त्वाद्विषयप्रकाशः ज्ञानकाले त्वज्ञानांतरसत्त्वादप्रकाशः स्यादिति भावः ॥ अमूर्तानाम् अनिबिडावयवानाम् ॥ अनुकूल-तर्काभावोपपादनमुपपादयति ॥ तस्मादिति ॥

व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगंयुजि।
न्यायामृततरंगिण्यां सत्तर्का न मृषानुमा॥

॥ प्रतिकर्मव्यवस्थाभङ्गः ॥

## पाण्डुरङ्गि आनन्दभट्टारकविरचितः

## न्यायामृतकण्टकोद्धारः

किंच दृग्दृश्ययोराध्यासिकसम्बन्धे दृश्यस्य प्रातिभासिकत्वापत्त्या विषयसन्निकर्षसाध्यवृत्त्ययोगेन तत्प्रयुक्तप्रतिकर्मव्यवस्था न स्यादिति वक्तुं परोक्तप्रतिकर्मव्यवस्थाप्रकारं दर्शयति– यच्चोक्तमिति। अविद्येति। अविद्याया अपरिच्छिन्नत्वादिति भावः। अन्तःकरणेति। तस्य परिच्छिन्नत्वादिति भावः। तत्रेति। सर्वगतत्वपरिच्छिन्नत्वपक्षयोरित्यर्थः। आद्ये सर्वगतत्वपक्षे। तत्र। अनावृतत्वावृतत्वपक्षयोः। आद्येऽनावृतत्वपक्षे। विषयेति। स्वच्छस्य चैतन्यस्य वृत्तिं विनाऽस्वच्छेन विषयेणासंबन्धात् वृत्तेश्च स्वच्छत्वात् संबन्धोपपत्तिरिति भावः। द्वितीये। आवृतत्वपक्ष इत्यर्थः। चैतन्यस्यावरणाभिभवहेतुत्वे तस्य सर्वदा विद्यमानत्वेन सर्वदाऽऽवरणनिवृत्तौ सर्वदा प्रकाशः स्यादिति भावः। अनावृतत्वपक्षे वृत्त्युपयोगमुपपादयति ॥ अनावृतत्वपक्ष इति॥ केवलाप्रकाश्यं वृत्त्युपारूढे घटादिकं प्रकाश्यमित्युपपादयति। केवलेति। नन्वावरणाभिभवपक्षे वृत्त्याऽऽवरणस्य निवृत्तत्वात् सर्वदा प्रकाशः स्यादित्यत आह– आवृतत्वपक्षेऽपीति। ननु परिच्छिन्नत्वपक्षे ब्रह्मचैतन्यस्य प्रकाशत्वात् तस्य च सर्वसाधारणत्वात् सर्वप्रकाशत्वापत्तिरित्यतिप्रसङ्ग इत्यत आह। परिच्छिन्नत्वपक्षेऽपीति। ब्रह्मचैतन्यस्य प्रकाशत्वेऽपि अभिव्यक्तस्यैव प्रकाशत्वात् अभिव्यञ्जिकायाश्च वृत्तेस्तत्तदन्तःकरणीयत्वात् नातिप्रसङ्ग इति भावः। नन्वस्मिन् पक्षेविषयप्रकाशस्य ब्रह्मचित्त्वात् जीवचित्त्वं न स्यात्। तथा च जीवचैतन्येन प्रकाश इति न स्यादित्यत आह। विषयानुभवस्येति।

एतावता वृत्त्या प्रतिकर्मव्यवस्थोक्ता। वृत्तिश्च विषयेन्द्रियसन्निकर्षजत्वात् स्वस्मात् पूर्वं विषयसत्त्वापेक्षा। तथा च विषयस्य सत्त्वमवश्यं स्वीकर्तव्यम्। तदङ्गीकारे कल्पितत्वं न स्यात्। तस्य प्रतीतिमात्रशरीरत्वव्याप्यत्वाद् इत्याह। स्वसन्निकृष्टेति। ननु कल्पितत्वं न प्रतीतिमात्रशरीरत्वव्याप्यम्। प्रपञ्चे दृग्दृश्यसम्बन्धानुपपत्तिसहितोक्तानुमानेन कल्पितत्वे सिद्धे तत्सत्त्वेऽपि तदभावाद् व्यभिचारः। न च प्रपञ्चोऽपि प्रतीतिमात्रशरीर इति वाच्यम्। तस्य प्रत्यभिज्ञया स्थायित्वावगमात्। न च शुक्तिरूप्यतुल्येयं प्रत्यभिज्ञेति वाच्यम्। परीक्षितत्वापरीक्षितत्वाभ्यां विशेषादिति चेन्मैवम्। दृग्दृश्यसंबन्धानुपपत्तेः परिहृतत्वेन अप्रयोजकत्वेन तेन कल्पितत्वासिद्धेः प्रपञ्चे व्यभिचाराभावात्। यच्चोक्तं परीक्षितप्रत्यभिज्ञया प्रपञ्चस्य स्थायित्वसिद्धिरिति तदप्यशोभनम्। स्थायित्वे कल्पितत्वानुपपत्तेः। कल्पितत्वस्थायित्वयोः परस्परपरिहारेणैवोपलब्धेः। शुक्तिरजतस्य कल्पितत्वेन स्थायित्वाभावात् ब्रह्मणः स्थायित्वेऽपि कल्पितत्वाभावात्। न च वास्तवस्थायित्वाभावात् कल्पितत्वोपपत्तिरिति वाच्यम्। ब्रह्मणोऽपि तादृशस्थायित्वाभावेन कल्पितत्वापत्तेः। श्रुतिविरोधात् तत्र न कल्पितत्वमिति यदि, तदत्रापि तुल्यम्। तस्माद् घटादेः स्वज्ञानात् पूर्वं सत्त्वे प्रतीतिमात्रशरीरत्वव्याप्यकल्पितत्वानुपपत्तिरिति साधूक्तम्। गौरवादिति। कल्पितत्वविशेषापेक्षया कल्पितत्वमात्रस्य लघुत्वादित्यर्थः। ननु गौरवं प्रामाणिकमिति चेन्न। प्रमाणाभावस्योक्तत्वात्। उक्तानुमानस्य त्वप्रयोजकत्वात्। किं च यदि कल्पितत्वविशेषः प्रातिभासिकत्वमेव प्रतीतिमात्रशरीरत्वव्याप्यं, न सामान्यं, तर्हि वह्नेः पर्वतातिरिक्तवृत्तिर्धूमः, अप्रामाणिकत्वं प्रति बाध्यत्वविशेषः प्रातिभासिकत्वमेव व्याप्यं स्यात्। तथा च सर्वानुमानोच्छेदप्रपञ्चप्रामाणिकत्वे च स्यातामित्याह ।वह्निमतीति। ननु घटादेः कल्पितत्वेन

(कण्टकोद्धारः)

प्रातीतिकत्वे तत्प्रतीतिरेव न स्यात्। प्रतीतिकारणसन्निकर्षायोगादित्यत आह। प्रतीतेस्त्विति। तर्हि स्वप्नसाम्ये तद्वत् व्यावहारिकत्वं न स्यादित्यत आह व्यावहारिकत्वस्य चेति। ननु दीर्घभ्रान्तिविषयत्वमात्रेण कथं व्यावहारिकत्वम्? शुक्तिरूप्यादावदर्शनादिति चेन्न। तर्हि व्यावहारिकत्वे प्रयोजकान्तराभावेन सत्त्वस्यैव स्वीकारप्रसंगात्। न चाप्रातिभासिकत्वं तत्र तन्त्रम्। तथा सति कल्पित्वायोगादेरुक्तत्वात्।

तत्तदाकारेति। प्रमाणाभावान्न चैतन्यकल्पना युक्तेति भावः। ननु विषयापरोक्षार्थमपरोक्षैकरसचैतन्यस्य तत्प्रकाशकत्वादि कल्प्यत इत्यत आह। विषयापरोक्ष्यं त्विति। उक्तम्। दृश्यत्वभङ्ग इति शेषः। ननु परोक्षवृत्त्याऽपि चैतन्यव्यक्त्यङ्गीकारात् दृष्टान्तोऽसिद्ध इत्यत आह। न चेति। अभिव्यक्तेति। ननु विषयाधिष्ठानचैतन्याभिव्यक्तावेव विषयापरोक्ष्यम्। तदभिव्यक्तिश्च परोक्षस्थले नास्ति। विषयसन्निकर्षजन्यवृत्त्यैव हि तदभिव्यक्तिः। विषयसन्निकर्षश्च नास्ति। विषयस्य विप्रकृष्टत्वादिति चेन्न। लाघवेन वृत्त्यभिव्यक्तचैतन्योपरागमात्रस्यैव विषयापरोक्ष्ये तन्त्रत्वेन परोक्षस्थले चैतन्योपरागे विषयापरोक्ष्यावश्यंभावात्। अन्यथाऽविद्यावृत्तिप्रतिबिम्बितचैतन्योपरागेण शुक्तिरूप्यस्याप्यापरोक्ष्यं न स्यात्। न च परोक्षस्थले चैतन्योपराग एव नेति वाच्यम्। तदुपरागाभावे तत्प्रकाश्यत्वानुपपत्तेः। न च वृत्तिद्वारकसंबन्धात् तदुपपत्तिरिति वाच्यम्। वृत्तेरप्यान्तरत्वेन तत्संबन्धानुपपत्तेः। वृत्तिद्वारकसंबन्धोपपत्तौ वा तत एवापरोक्षस्थलेऽपि प्रकाशोपपत्तावाध्यासिकसंबन्धस्वीकारवैयर्थ्यापत्तेः। न चापरोक्षवृत्त्यभिव्यक्तचैतन्योपरागो विषयोपरोक्ष्यप्रयोजक इति वाच्यम्। एवं तर्ह्यावश्यकवृत्तिगतपरोक्षापरोक्षत्वाभ्यामेव विषयपरोक्षत्वापरोक्षत्वयोरुपपत्तौ चैतन्याभिव्यक्तिकल्पनावैयर्थ्यात्। न चाऽपरोक्ष्ययोग्यस्य चिदुपराग आपरोक्ष्य कारणमिति वाच्यम्। तथा सत्यापरोक्ष्ययोग्यतायां चिदुपरागः, सति च तस्मिन्नापरोक्ष्ययोग्यत्वमित्यन्योन्याश्रयात्। अत एव वृत्तिगतापरोक्षत्वजातिखण्डनमपि परास्तम्। प्रत्यभिज्ञायामपरोक्षत्वस्यैव स्वीकारेण जातिसाङ्कर्याभावात्। अंशे परोक्षत्वानङ्गीकारेण अव्याप्यवृत्तित्वाभावाच्च। इन्द्रियत्वेनेन्द्रियजन्यत्वादिरूपोपाधिरूपस्यापरोक्षत्वस्य संभवाच्च। परोक्षस्थले चैतन्याभिव्यक्तिस्वीकारे विवरणे परोक्षस्थले सुषुप्तिनिवृत्तिमात्रमित्युक्तत्वेन तद्विरोधाच्च।

ननु वृत्तेरपरोक्षानुभवत्वे स्वप्रकाशत्वमपि स्यात्। तस्य तन्नियतत्वादित्यत आह। वृत्तेरिति। न चान्तःकरणरूपोपादानानिष्ठं तद् उपादेयनिष्ठं कथमिति वाच्यम्। ज्ञानत्वादिवदुपपत्तेः। अन्यथेति। यदि उपादानानिष्ठत्वात् तदुपादेयापरोक्षवृत्तेः स्वप्रकाशत्वं न स्यात् तदेत्यर्थः। तन्न स्यात्। ज्ञानत्वादिकं न स्यादित्यर्थः। ज्ञानत्वादेरपरोक्षानुभवोपादानानिष्ठत्वादिति भावः। इदं चापरोक्षानुभवस्य स्वप्रकाशत्ववचनं प्राभाकरमतमाश्रित्योक्तम्। न वस्तुतः। परोक्षापरोक्षानुभवयोर्वृत्तिरूपयोः साक्षिवेद्यत्वादिति। ननु घटादौ वृत्यन्यानुभवो नास्ति, प्रमाणाभावादिति न युक्तम्। अनुभवस्यैव प्रमाणत्वादित्याशंक्य निषेधति। न चेति। एकस्या एव विलक्षणधातुप्रतिपाद्यत्वेन सकर्मकत्वाकर्मकत्वयोरुपपत्तौ न क्रियाभेदो युक्त इति सदृष्टान्तमाह। क्रियैक्येऽपीति। ननु दृष्टान्तेऽर्थैक्यमसिद्धम्। कृधातोरनुकूलयत्नोऽर्थः। यतिधातोस्तु यत्नमात्रम्। एवं गम्यर्थ उत्तरसंयोगफलकः स्पन्दः। चलत्यर्थस्तु स्पन्दमात्रम्। अन्यथा सकर्मकाकर्मकत्वव्यवस्था न स्यादिति चेन्न। एवं तर्हि वृत्तेरपि अनुकूलत्वादिना सकर्मकत्वम्। केवलाया अकर्मकत्वमित्यस्तु। यथा

(कण्टकोद्धारः)

त्वन्मते वृत्तेः परिणतित्वेनाकर्मकत्वं, ज्ञानत्वेन सकर्मकत्वं तथेत्यभ्युपगन्तव्यम्। न चैतन्यरूपं ज्ञानान्तरम्। अन्यथा यातिचलत्यादेर्यत्नाद्यन्य एवार्थः स्यात्। किं च कृयत्योर्न भिन्नार्थत्वम्। तथाऽननुभवात्। अनुकूलता तु पदान्तरसमभिव्याहारलभ्या। न तु कृधात्वर्थः। अन्यथा यत्नार्थकाख्यातव्याख्यानं कृञा न स्यात्। व्याख्यानव्याख्येययोरेकार्थत्वात्। न हि भिन्नार्थेन व्याख्यानम्। अतिप्रसङ्गात्। एवं गमिचलत्योरेकार्थत्वमेव। उत्तरसंयोगस्तु फलम्। न हि फलं धात्वर्थे प्रविशति। अन्यथा स्वर्गस्यापि यज्यर्थत्वापत्तेः। सकर्मकत्वाकर्मकत्वव्यवस्था तु धातुस्वभावादेवोपपन्ना। अयमेव धातुस्वभावो यत् कर्माकाङ्क्षा-जनकक्रियाप्रतिपत्ति जनकत्वम्। अतो नोक्तदोषः। अथवा भिन्नभिन्नरूपेण सकर्मकत्वाकर्मकत्वे क्रियायामेव भवेताम्। तथापि न क्रियाभेदः। एवं वृत्तेरपीति क्व तदन्य चैतन्यरूपं ज्ञानमित्यलम्। अन्यथेति। यदि सकर्मकत्वाकर्मकत्वाभ्यां व्यक्तिभेदस्तदेत्यर्थः। अतीत इति। न च तत्रापि चैतन्याभिव्यक्तिरङ्गीक्रियत इति वाच्यम्। चैतन्याभिव्यक्तौ विषयापरोक्ष्यापातात्। अन्यथा तद्वैयर्थ्यात्। अनुभवविरुद्धा चैषा कल्पनेत्याह– एवं चेति। अनुभवविरोधान्नैवं कल्प्यमिति भावः। अन्यथेति। यद्यनुभवविरुद्धं घटाज्ञानाविरोधि चैतन्यं कल्प्यते तदेत्यर्थः। यथा चैतत्तथोक्तं दृश्यत्वभङ्गे।

ननु श्रुत्या चैतन्यरूपं ज्ञानमङ्गीक्रियत इति तत्राह– तमेवेति। ननु सर्वशब्दस्यासङ्कुचितवृत्ति तं भान्तमनु सर्वं घटादिकं भातीत्यर्थे घटादिविषये चैतन्यरूपं ज्ञानमायातीति चेत् तत्राह– सर्वशब्दस्येति। किञ्च सर्वमिदं विभातीति इदंशब्दप्रयोगाच्च संकोचः सर्वशब्दस्य कार्यः। तस्य प्रकृतपरत्वात्। अन्यथा तस्य वैयर्थ्यादित्याह– प्रकृतेति। स्मृतिसमाख्यानाच्च सर्वशब्दसंकोच इत्याह ।एतदिति। अन्यथैतद्वाक्यनिर्णायकसूत्रे संकोचकस्मृत्युदाहरणं त्वद्भाष्यादौ न स्यादिति भावः। त्वन्मत इति। न च द्रष्टुर्दृष्टेरित्यादिवत् प्रत्ययादिकं भक्तमिति वाच्यम्। बाधकं विना बहूनां भक्तत्ववर्णनस्यानुचितत्वात्। अन्यथा आनन्दादिरूपताऽप्यौपचारिकी स्यात्। अत्रापि आनन्दं ब्रह्मण इत्यादिश्रुतेः। नन्वनुशब्दस्य क्रियाभेदोपपादकत्वं क्व दृष्टमित्यत आह। गच्छन्तमिति। अन्यथैकस्मिन् गच्छत्यनुशब्दप्रयोगः स्यादिति भावः। तथा च प्रमाणाभावात् न वृत्त्यतिरिक्तं चैतन्यरूपं ज्ञानं कल्पनीयम्।

तथापीति। परोक्षस्थल इवापरोक्षस्थलेऽपि अन्तर्वृत्त्यैव विषयप्रकाशसंभवादिति भावः। ननु परोक्षवैलक्षण्यार्थमेव देहान्निर्गतिः कल्प्यत इत्यत आह। परोक्षे हीति। नन्वभिव्यक्तचिदुपराग एव वृत्तेर्विषयसन्निकर्षं विनाऽनुपपन्न इति तदर्थमेव देहान्निर्गतिः कल्प्यत इत्यत आह। चिदुपरागादाविति। विषयोपरागादेस्तत्तदाकारवृत्त्यैवोपपत्तेर्न तदर्थं विषयसंश्लेषः प्रयोजक इति भावः। ननु परोक्षवैलक्षण्यार्थं वृत्तिसंश्लेषः स्वीकर्तव्यः। अन्यथा तत्रापि वृत्तेस्तदाकारत्वेन चिदुपरागाद्यापत्तौ विषयापरोक्ष्याद्यापत्तेरिति चेन्न। तत्रापि त्वया चिदुपरागस्वीकारेण तवापि तद्दोषतादवस्थ्यात्। न च विषयावच्छेदेन न तत्र चिदुपरागादीति वाच्यम्। विषयस्य चिदुपरागाद्यभावे तत्प्रकाश्यत्वानुपपत्तेः। न च वृत्तिद्वारक एव तत्र संबन्ध इति वाच्यम्। तस्यैवापरोक्षस्थलेऽपि प्रयोजकत्वे आध्यासिकसंबन्धस्यातन्त्रत्वप्रसङ्गात्। इन्द्रियजन्यतत्तदा-कारवृत्तित्वादेरेव चिदुपरागादौ प्रयोजकत्वं कल्प्यताम्। न तु संश्लेषो, गौरवात्। न च प्रभादौ

(कण्टकोद्धारः)

विषयसंश्लिष्टतेजस्त्वेनावरणाभिभावकत्वदर्शनात् तैजसमनसोऽप्यज्ञानावरणाभिभवाय तत्संश्लेषः कल्पनीय इति वाच्यम्। तर्हि परोक्षस्थलेऽपि तदर्थं तत्कल्पना स्यात्। न च परोक्षस्थलेऽज्ञानाभिभव एव नेति वाच्यम्। परोक्षतो ज्ञाते न जानामीति प्रत्ययापत्तेः। किं च प्रभाया विषयसंश्लिष्टत्वेनैव प्रकाशकत्वदर्शनात् परोक्षस्थलेऽपि वृत्तेस्तदभिव्यक्तचैतन्यस्य वा विषयसंश्लेषापत्तिः। यदि च तत्र वृत्तेस्तदाकारत्वेनैव सर्वं समञ्जसं तर्हि अपरोक्षस्थलेऽपि तदाकारत्वेनैव सर्वं भविष्यति। परोक्षवैलक्षण्यं चेन्द्रियजन्यवृत्तित्वेनेत्युक्तम्। ननु विषयसंश्लेष एव चिदुपरागादौ तन्त्रम्, न तु तदाकारत्वमित्यत आह। नेत्रादिति। यद्व्यतिरेकप्रयुक्तः कार्याभावः तदेव तन्त्रम्। एवं च तदाकारत्वव्यतिरेकप्रयुक्तकार्याभावोऽस्तीति तदेव तन्त्रम्। न तु विषयसंश्लेषोऽपि। तद्व्यतिरेकप्रयुक्तकार्याभावाभावादिति भावः। ननु विषयसंश्लेषं विना तदाकारत्वमेव न भवतीत्यत आह। तदाकारत्वस्य चेति। नन्वन्वयव्यतिरेकाभ्यां तदाकारत्वे घटमनः सन्निकर्षः कारणमित्यत आह। नचेति। प्रभादौ चान्वयव्यतिरेकाभ्यां विषयसन्निकृष्टप्रभात्वेनैव प्रकाशकत्वादीति न तत्प्रतिबन्दिग्रहो युक्तः। अन्यथा मनसश्चिदभिव्यक्तिहेतुत्वेन प्रकाशकत्वे प्रभया अपि तथा स्यादित्यापद्येत। तत्रापि चिदभिव्यक्त्यादौ मनोवृत्तित्वापेक्षया तेजस्त्वस्यैव लाघवेन प्रयोजकत्वसंभवादिति। चक्षुरादेरिवेति। न च तत्र यदवच्छेदेन विषयसन्निकर्षः तस्यैव नियतद्वारत्वं भविष्यतीति वाच्यम्। तत्रेन्द्रियाधिष्ठानस्य विषयस्याव्यवहितसन्निकर्षेण बहिर्निर्गमनासंभवात्, प्रयोजनाभावाच्चेति भावः। अन्यथेति। न चावरणाभिभावकतेजस्त्वस्य तत्प्रमापकस्याभावात् न बहिर्गतिरिति वाच्यम्। तदपेक्षया विरोधिनिवर्तकतेजस्त्वस्यैव सामान्यतया लघुत्वात्। परोक्षस्थलेऽतिप्रसङ्गश्चोभयथा तुल्य इति।

घटैकाकारधीस्था चित्। घटैकाकारवृत्तिप्रतिबिम्बिता चिदित्यर्थः। आध्यासिकसंबन्धस्येति। वृत्तिप्रतिबिम्बित चैतन्यस्य घटसत्त्वसापेक्षत्वेन तत्र तस्याध्यासेऽन्योन्याश्रयात् न तयोराध्यासिकसंबन्ध इत्यर्थः। आवश्यकेनेति। न च प्रकाशे साक्षात्संबन्धस्तन्त्रम्। वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य वा तत्कल्पनोपपत्तेः। धर्मिकल्पनात इति न्यायात्। न च वृत्तेस्तत्प्रतिबिम्बितस्य वा न प्रकाशत्वं, जडत्वादिति वाच्यम्। जडत्वेऽपि प्रभाया इव प्रकाशोपपत्तेः। अन्यथा जडत्वादेवावरणाभिभावकत्वमपि न स्यात्। न च प्रकाशत्व एव चित्त्वं तन्त्रं, नावरणाभिभावकत्व इत्यत्र राजाज्ञास्ति। न चाधिष्ठानचैतन्यमेवावरणाभिभावकमिति वाच्यम्। सर्वदा तस्य विद्यमानत्वेन सर्वदावरणनिवृत्तिः स्यात्। तस्मादधिष्ठानादि-चैतन्याभिव्यक्त्यादिकल्पनमप्रामाणिकम्। परोक्षस्थले च चैतन्याभिव्यक्तिकल्पनं तु प्रागेव निरस्तम्। अस्तु वा यत् किंचित् चैतन्यं प्रकाशकम्। तथापि वृत्तेस्तदाकारत्वमवश्यमपेक्षितम्। अन्यथाऽभि-व्यक्तिप्रतिबिम्बोपरागाणामसंभवात्। वृत्तेश्च तदाकारत्वं त्वया न निर्वक्तुं शक्यम्। तथा च पक्षत्रयमप्ययुक्तमित्याह किञ्चेति। त्वयैवेति। किंचेदं विषयत्वमित्यादिना गतभङ्गे निरस्तत्वादिति भावः। न च मया निराकृतत्वेऽपि भवद्भिः साधितत्वात् तदेव विषयत्वं भविष्यतीति वाच्यम्। मदुक्तविषयत्वाङ्गीकारे तेनैव सर्वस्योपपत्तौ चैतन्यादिकल्पना वृथा स्यादिति। तत्त्वायोगात्। तदाकारत्वायोगादित्यर्थः। अन्यथा चैतन्योपरागापादकत्वं तदावरणाभिभावकत्वं च कुत इत्युक्ते तदाकारत्वादिति वक्तव्यम्। तदाकारत्वं च तदेवेति कुत इति प्रश्नो निरुत्तरः स्यात्। प्रयोज्यप्रयोजकभावस्य भेदव्याप्तत्वाच्च। परोक्षस्थले उभयोरभावेन वृत्तेस्तदाकारत्वं

च न स्यादित्यपि द्रष्टव्यम्। साकारवादेति। ननु वृत्तेरन्तःकरणपरिणामत्वेन साकारत्वात् कथमनिष्टापादनम्? त्वयापि वृत्तिरन्तःकरणपरिणाम इत्यङ्गीक्रियते। साकारवादता हि विषय एव ज्ञानाकार इत्यङ्गीकारे भवति। न त्वस्माभिस्तथाङ्गीक्रियते। येन साकारबादः स्यात्। किन्तु तत्सदृशाकारत्वम्। तथा च न कोऽपि दोष इति चेन्न। अत्र हि किञ्चित्सादृश्यं वा प्रयोजकत्वेन विवक्षितम्, अत्यन्तसादृश्यं वा? नाद्यः। घटान्तरवृत्त्या घटान्तरप्रकाशापातात्। न द्वितीयः। अत्यन्तसादृश्येऽभेदेन विषय एव तदाकार इत्युक्तं भवेत्। तथा च साकारवाद इति साधूक्तम्। ननु संस्थानविशेषेण सादृश्यमुच्यते, तच्च नातिप्रसङ्गीत्यत आह– संस्थानहीनेति। ननु गुणादीनां गुण्यादिभिरभेदात् तत्संस्थानेनैव तस्य संस्थानवत्तेति कथं संस्थानहीनत्वमिति चेन्न। गुणादीनां गुण्यादिभिरभेदवादेऽपि न निर्विशेषाभेदः। न वात्यन्ताभेदः। अन्यथा गुणादिगुण्यादिशब्दानां पर्यायत्वं स्यात्। तथाचापर्यायतानिर्वाहकेण न तत्संस्थानेन संस्थानवत्तेति भावः।

घटपटाविति। न च तत्तद्विषयावच्छेदेन विरुद्धाकारत्वे न दोषः। एकस्यैव वृक्षस्य भिन्नभिन्नावच्छेदेन संयोग तदभावयोर्दर्शनात्। एकस्यैव ज्ञानस्यांशे सप्रकारत्वनिःप्रकारत्वयोरङ्गीकाराच्चेति वाच्यम्। संयोगस्य स्वात्यन्ताभावसमानाधिकरणत्वानङ्गीकारात्। निर्विकल्पकस्य च स्वरूपतोऽनङ्गीकाराच्च। किंच तत्तदाकारत्वे तत्तद्विषयावच्छेदः, तत्तद्विषयावच्छेदे च तत्तदाकारत्वमित्यन्योन्याश्रयः। न च तत्तद्विषयत्वावच्छेदेन तत्तदाकारत्वमिति वाच्यम्। त्वयैव विषयत्वस्य दूषितत्वात्। न च तत्तत्सन्निकर्षावच्छेदेन तत्तदाकारत्वमिति वाच्यम्। असद्विषयकवृत्तेर्निराकारत्वापातात्। असतो निराकारत्वेन तद्विषयकवृत्तेस्तदाकारत्वासंभवाच्च। तद्विषयत्वेनैव तदाकारत्वोपपत्तावनुभवविरुद्धतदाकारत्वकल्पनाऽयोगाच्च। चरमेति। न चाकारो न संस्थानविशेषः। किन्तु तत्तदसाधारणं स्वरूपम्। तत्र ब्रह्मणः संस्थानविशेषाभावेऽपि ज्ञानानन्दादिरूपासाधारणाकारः संभवतीति वाच्यम्। वृत्तेरप्यानन्दाद्याकारापातात्। तच्चानुभवविरुद्धम्। असतोऽसाधरणस्वरूपाभावेन तद्वृत्तेर्निराकारत्वापाताच्च। अस्मत्पक्षे च तद्विषयत्वमेव तदाकारत्वम्। विषयत्वं च प्रागेव निरस्तमिति न कश्चिद् दोषः। तस्माद् वृत्तेस्तदाकारत्वायोगात्, देहान्निर्गत्ययोगात्, चैतन्याभिव्यक्त्यादेरयोगाच्च पक्षत्रयमयुक्तमित्युपसंहरति– तस्मादिति।

एवं पक्षत्रयं साधारणदोषेण दूषयित्वा विशिष्य दूषयितुमाह– किंचेति। विशिष्टे मायावच्छिन्न इत्यर्थः। दृग्दृश्ययोरिति। प्रकाशकजीवचैतन्य प्रकाश्यविषययोराध्यासिकसम्बन्धासिद्धेः जीवेऽनध्यासात् मायाविशिष्ट एवाध्यासात् तस्य चाप्रकाशकत्वादिति भावः। अत्र मायाविशिष्टस्य कल्पितत्वेन तत्र विषयाध्यासो न संभवतीत्यपि द्रष्टव्यम्। अत एवेति परामृष्टं हेतुमाह सविशेषस्येति। ननु न विशिष्टं ब्रह्म विषयदृक्। येनोक्तदोषः। किन्तु शुद्धमेव चैतन्यमित्यत आह– शुद्धस्य चेति। स्वयं प्रकाशमानं हि इतरत् स्वसंबन्धात् प्रकाशयतीति वक्तव्यम्। शुद्धं च न प्रकाशते। तत्प्रकाशस्य चरमवृत्तिसाध्यत्वात्। न च चरमवृत्त्यभावेन मूलाविद्यानिवृत्त्यभावेन सर्वत आवरणाभिभवाभावेऽपि घटाद्यवच्छेदेनावरणाभिभवात् जगदान्ध्यविरहोपपत्तिरिति वाच्यम्। घटाद्यवच्छेदेनापि आवरणं मूलाविद्या वा, तदतिरिक्तमेव वा? नाद्यः। तन्निवृत्तौ सर्वत आवरणाभिभवः स्यात्। नह्यविद्या अंशवती। येनैकांशेन निवृत्तावप्यन्यांशेनावस्थानम्। न द्वितीयः। अविद्यातिरिक्तस्य

(कण्टकोद्धारः)

ज्ञाननिवर्त्यस्यावरणस्याभावात्। तथा च मूलाविद्याया एवावरणत्वात् तस्याश्चानिवृत्तत्वात् शुद्धप्रकाशो न स्यादेव। शुद्धप्रकाशे श्रवणादिवैयर्थ्यं सद्यो मोक्षश्चेति। आसंसारमावृतत्वमनवच्छिन्नस्यैव। न तु घटाद्यवच्छिन्नस्य। एवं च शुद्धाप्रकाशेऽपि घटाद्यवच्छिन्नतत्प्रकाशेन विषयप्रकाशोपपत्तिरिति शङ्कते— अनवच्छिन्नस्येति। विशिष्टज्ञान इति। न च चरमवृत्तिविषयस्य प्रकाशेऽपि अन्याविषयत्वार्थं तदनुसरणमिति वाच्यम्। अन्याविषयत्वस्याप्रयोजकत्वेन तदर्थं तदनुसरणवैयर्थ्यात्। अविद्यानिवृत्तिर्ह्यपेक्षिता। सा च तद्विषयत्वमात्रेणोपपन्ना नान्याविषयत्वमपेक्षते। न हि घटादिवृत्तिर्विशेषणादिविषयिणीत्येतावता न घटादिविशेष्या ज्ञाननिवर्तिका। न चैकधैवानुद्रष्टव्यमिति श्रुतिबलात् अन्याविषयकवृत्तिरेव तदज्ञाननिवर्तिकेति वाच्यम्। एकधैवेत्यस्य एकेन मुख्येन सर्वोत्तमत्वादिनैवेत्यर्थात्। ननु घटाद्यवच्छिन्नवृत्त्यविषयविशेषणादि विशिष्टप्रकाशार्थमेव चरमवृत्त्यनुसरणमित्यत आह— न हीति। तथाऽभ्युपगमेऽपसिद्धान्त इति भावः। अन्तःकरणावच्छिन्नस्येति। न च कारणात्मनान्तःकरणादेरवस्थानात् न जीवत्वापगम इति वाच्यम्। कार्याकारस्यैव जीवत्वप्रयोजकत्वात्। अन्यथा घटे नष्टेऽपि घटावच्छिन्नाकाशावस्थानं स्यात्। घटस्यापि कारणात्मनाऽवस्थानात्।

अनावृतमेव जीवचैतन्यं विषयदृक्। वृत्तिस्तूपरागार्थेति पक्षे दूषणमाह— किंचेति। अनुद्भूतरूप इति। ननूद्भूतरूपवत्त्वं न प्रतिबिम्बनोपाधिताप्रयोजकम्। लोष्टेऽपि प्रतिबिम्बनापत्तेः। किन्तु स्वच्छत्वम्। तच्च प्रकाशस्वभावत्वेन मनसस्तत्परिणामवृत्तेश्चास्तीति प्रतिबिम्बनोपाधित्वं युक्तमेवेति चेन्न। स्वच्छत्वस्यैवोद्भूतरूपवत्त्वमन्तरेण निरूपयितुमशक्यत्वात्। तथाहि— किमिदं स्वच्छत्वम्? न तावत्प्रकाशस्वभावत्वम्। ऊष्मादेरपि प्रतिबिम्बनोपाधितापत्तेः। न च प्रतिबिम्बनोपाधितायोग्यत्वम्। योग्यतायास्तदवच्छेदकमन्तरेण दुर्निरूपत्वात्। न च योग्यत्वं फलबलकल्प्यम्। तस्य प्रकृतेऽसंमतेः। न चोद्भूतरूपवत्तेजस्त्वम्। प्रकृतेऽभावात्। जलादौ प्रतिबिम्बाभावप्रसङ्गाच्च। तस्मादुद्भूतरूपविशेषत्वं प्रयोजकम्। रूपे विशेषोऽनुभवसाक्षिको जातिरूप एव। न च साङ्कर्यम्। तस्योपाधिसांकर्यवददोषत्वात्। तत्तद्व्याप्यनानात्वेनापि तददोषत्वाच्च। किञ्च प्रयोजकस्यातिप्रसक्तिर्न दोषः। अन्यथा धूमे आर्द्रेन्धनस्य प्रयोजकतानापत्तेः। तथा च यद्व्यतिरेकप्रयुक्तो यद्व्यतिरेकः तत्तत्र प्रयोजकम्। अस्ति च प्रकृते उद्भूतरूपवत्त्वम्। तद्व्यतिरेकप्रयुक्तव्यतिरेकस्योष्मादावेव दर्शनात्। तथाचोद्भूतरूपवत्त्वाभावेनान्तःकरणतद्वृत्त्योः न प्रतिबिम्बनोपाधित्वम्। शब्दस्य चानुद्भूतरूपे दिगादौ प्रतिबिम्बदर्शनात् शब्दान्येति विशेषणम्। न च शब्दवद् ब्रह्मणोऽप्यनुद्भूतरूपे प्रतिबिम्बः किं न स्यादिति वाच्यम्। दृष्टान्तमात्रेणार्थासिद्धेः। फलबलात् तस्य प्रतिबिम्बः स्वीक्रियते। न च प्रकृते तदस्ति। न वा तद्विनाऽनुपपत्तिः। उक्तप्रकारेणैव घटाद्यनुभवोपपत्तेः। अचाक्षुष इति। न चाक्षुषस्याकाशादेः प्रतिबिम्बिततत्वदर्शनात् अचाक्षुषत्वं नाप्रतिबिम्बने प्रयोजकमिति वाच्यम्। अचाक्षुषपदस्य नीरूपद्रव्यपरत्वात्। न चाकाशस्यापि नीरूपत्वात् कथं प्रतिबिम्बनमिति वाच्यम्। आकाशो नीलिमोदेतीति श्रुतेः तस्यापि रूपवत्त्वात्। पञ्चीकरणपक्षे रूपवत्त्वावश्यंभावाच्च। एवं च चाक्षुषत्वसंभवात् यथास्थितमेव वा चाक्षुषपदम्। यद्वाऽचाक्षुषस्याकाशस्य प्रतिबिम्बनमसंमतम्। किन्तु तत्स्थोद्भूतरूपवन्मेघादेरेवेति न कश्चिद् दोषः। किंचास्मिन् पक्षे जीवचैतन्यस्य वृत्तिप्रतिबिम्बितत्वे जीवचैतन्यं

(कण्टकोद्धारः)
सर्वगतं विषयदृगिति भग्नम्। किन्तु वृत्तिप्रतिबिम्बितं परिच्छिन्नमाभासरूपं तथा। तथा चापसिद्धान्तः। न च तयोरैक्यम्। बिम्बप्रतिबिम्बयोर्यथाकथंचिद् भेदस्य त्वयाऽप्यङ्गीकारात्। अन्यथा संसार्यादिव्यवस्था न स्यादित्यलं क्षुद्रपीडनेन।

चित इति। न च चिन्मात्रस्य निर्विकारत्वेऽपि अविद्योपाधिकस्य तत्वं किं न स्यादिति वाच्यम्। विकारित्वे जडत्वापातेन मोक्षानन्वयात् श्रवणादिवैयर्थ्यापत्तेः। आकाशवदिति। ऊर्ध्वाधरीभाव-रूपाश्रितत्वाभावादित्यर्थः। अन्यथा तदन्तस्थत्वमित्यनेन पौनरुक्त्यापत्तेरित्यवधेयम्। अत्र प्रकाशकत्वं तमोविरोधित्वं वा ज्ञानविरोधित्वं वा? नाद्य इत्याह– प्रभायामिति। तमोविरोधित्वस्य जीवचैतन्येऽप्यभावेन दार्ष्टान्तिकानुपपत्तेश्च। न द्वितीय इत्याह– प्रभायामज्ञानेति। ननु प्रभाया रूपग्राहक चक्षुःसहकारित्वमेव रूपप्रकाशकत्वम्। न चेदमतिप्रसक्तमित्यत आह– प्रभायां रूपेति। एतावता ग्राहकविशेषसहकारित्वं प्रकाशकत्वमित्युक्तं स्यात्। तच्च जीवचैतन्ये न संभवति। तदतिरिक्तग्राहकाभावात्। भावे वा तत एवोपपत्तावेतस्याकिंचित्करत्वमिति भावः। उपसंहरतितस्मादिति।

नन्वसंगो ह्ययमितिश्रुत्या संबन्धाभावाभिधानात् कथं तत्प्रयुक्तं सर्वप्रकाशनमित्यत आह– असंगो हीति। ननु संबन्धसामान्यपरैव किं न स्यादित्यत आह– स यत्तत्रेति। न चाकर्तृत्वप्रतिपादनार्थं संबन्धाभावपरत्वमेव श्रुतेरिति वाच्यम्। अकर्तृत्वस्य कर्तृत्वश्रुतिविरोधेन प्रतिपादयितुमशक्यत्वात्। संबन्धाभावमात्रपरत्वस्य वृत्त्यैवोपरज्यत इत्यनेन व्याहतत्वाच्च। न च वृत्तेः स्वच्छत्वेन तत्सम्बन्धो युक्त इति वाच्यम्। तथापि श्रुतिसंकोचापातात्। स्वच्छजलादर्शप्रभादौ वृत्त्यनपेक्षापाताच्च। यथा चैतत् तथाग्रे स्फुटम्। अत एव चैतन्यस्य सर्वसंबन्धोपपत्तेः इदमाकारवृत्त्यवच्छिन्नचैतन्येनैव रजतभानोपपत्तेर्न तदर्थमविद्यावृत्तिकल्पनमिति द्रष्टव्यम्। ननु चैतन्यस्य सर्वसंबन्धे विद्यमानेऽपि न सर्वप्रकाशः। तस्य प्रकाशप्रयोजकत्वाभावात्। किन्तूपरागविशेष एव। स च वृत्त्या भवतीत्यावश्यकी वृत्तिः। अतो नातिप्रसङ्गः इत्यत आह– अपि चेति। दृश्यत्वप्रयोजकः किमाध्यासिकसंबन्धो वा, तदतिरिक्तो वा? नाद्य इत्याह– वृत्तित इति। तथा च पूर्वमपि प्रकाशः स्यादिति भावः। न द्वितीय इत्याह– अन्य इति। अन्यस्य प्रयोजकत्वे आध्यासिकसंबन्धस्यातन्त्रत्वापातः। न च द्वयमपि प्रयोजकम्। गौरवात्। वृत्तिप्रयुक्तोपरागे सत्याध्यासिकसंबन्धव्यतिरेकप्रयुक्तकार्य व्यतिरेकाभावाच्च। आध्यासिकसंबन्धेनैव प्रकाशोपपत्तावस्या-प्रयोजकत्वाच्च। किं च जीवचैतन्यस्या विद्योपाधिकतया नासङ्गत्वमुपपद्यते। यद्येवमप्यसंगत्वं तर्हि सुतरां ब्रह्मणोऽसङ्गत्वं स्यात्। ततः किम्? तत्राह– किंचेति। अनादीति। न चाविद्यादेः प्रवाहेणानादित्वेऽपि स्वरूपेण नानादित्वम्। अतोऽविद्यादिकं प्रत्यपि विशिष्टस्योपादानत्वात् तत्प्रकाशोपपत्तिरिति वाच्यम्। विशिष्टस्याविद्याकल्पितत्वेन तत्परिणामत्वानुपपत्तेः। अप्रामाणिकप्रवाहकल्पनापेक्षया स्वरूपस्यैवानादित्व-कल्पनोपपत्तेश्च। सार्वज्ञादेरिति। अन्यनिष्ठोपादानत्वेनान्यस्य सार्वज्ञ्ये जीवेऽपि तदापत्तिरिति भावः। न च शुद्धे सार्वज्ञादीनामारोपितत्वेन मानोपाधिकत्वाभावेन स्वतः सार्वज्ञोपपत्तिरिति वाच्यम्। आरोपस्याविद्याधीनत्वेन स्वतः सार्वज्ञानुपपत्तेः। अन्यथा शुक्तेरपि रूप्यत्वं स्वत एव स्यात्। विशिष्टे

(कण्टकोद्धारः)

तदध्यासाभावेन तस्य तदनुपपत्तेश्च। न च सार्वज्ञं न स्वत इति वाच्यम्। तस्य परोपाधिकत्वे सदात्वानुपपत्तेः। सदात्वं च 'तुर्यं तत् सर्वदृक् सदा' इति श्रुतिसिद्धम्। स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्या स्पष्टं स्वाभाविकत्वस्य सिद्धत्वाच्च। अत एव सार्वज्ञादीनां तटस्थलक्षणत्वमपि प्रत्युक्तम्।

विवर्तेति। तथा च न किमप्यावरणकृत्यमिति भावः। न च चिन्मात्रस्य प्रकाशेऽपि अशनायाद्यतीतत्वेन न भासते। तदेवावरणकृत्यमिति वाच्यम्। एवं ह्यशनायाद्यतीतत्वमज्ञानेनावृतमिति वाच्यम्। तस्य चैतन्यातिरिक्तत्वेनाज्ञानकल्पितत्वेनाज्ञानविषयत्वानुपपत्तेः। चैतन्यमात्रत्वे चोक्तमेव दूषणम्। किंच वेदान्तैरशनायाद्यतीतत्वावरणनिवृत्त्यर्थं तद्विशिष्टमेव बोधनीयम्। तथा चाखण्डार्थत्वहानिः। अज्ञानमावरणमेव न संभवतीत्याह– किञ्चेति। अज्ञानं किं ज्ञात्राश्रितमावरणं, विषयाश्रितं वा? नाद्यः। अपसिद्धान्तात्। द्वितीये दोषमाह– विषयगतत्वे त्विति। न चाज्ञानावरणशक्तीनां बहुत्वात् देवदत्तीयान्तःकरणवृत्त्या तन्नाशे तं प्रत्येव प्रकाशो नान्यं प्रतीति वाच्यम्। एकावरणशक्तिनाशेऽप्यन्यावरणशक्तेर्विद्यमानत्वेन तं प्रत्यपि प्रकाशो न स्यात्। न च प्रातिस्विक्येवावरणशक्तिरिति वाच्यम्। विषयगतावरणस्य तथाऽदृष्टत्वेनादृष्टकल्पनाप्रसंगात्। किं चावरणशक्तिरज्ञानात्मिका तद्भिन्ना वा? नाद्यः। एकवृत्त्याऽवरणशक्तिनाशेऽज्ञानस्यैव नष्टत्वेन पुनरावरणशक्त्यवस्थानानुपपत्तेः। न द्वितीयः। तथासति तस्या भ्रमोपादानत्वादिनाऽज्ञानत्वादज्ञानशक्तित्वकल्पनायोगात्। शुक्तिज्ञानेनेति। शुक्तित्वप्रकारकज्ञानेनेत्यर्थः। अनिवृत्ताविति। आवरणशक्तिनिवृत्तिरिति तु पूर्वमेव दूषितमिति भावः। ज्ञानस्येति। न चेयं व्याप्तिरुच्छेदविषया। न तु कार्यस्य स्वकारणे सूक्ष्मरूपेणावस्थाने। अतः स्वकारणे प्रविलयमात्रेण बाधकत्वोपपत्तिरिति वाच्यम्। अनुभवानुरोधेनोच्छेदविषयत्वस्यैवावश्यकत्वात्। न हि शुक्तिज्ञानेन रजतं नष्टमित्यनुभवः। किन्तु शुक्तिज्ञानेन शुक्त्यज्ञानं नष्टमित्येव। स्वकारणे प्रविलयमात्रेण मिथ्यात्वासिद्धेश्च। दण्डेन घटस्येव ज्ञानेन स्वकारणे प्रविलयस्य सत्यत्वेऽप्युपपत्तेः। तथा च ज्ञानेनाज्ञानस्यैव नाशो वक्तव्य इति सद्यो मोक्षापातस्तदवस्थः। शुक्तिज्ञानेनेति। नन्वनवच्छिन्नविषयमूलाज्ञानानिवृत्तावपि अवच्छिन्नविषयस्य तूलाज्ञानस्य शुक्तिज्ञानेन निवृत्तेरभिव्यक्तिप्रकाशोपपत्तिरिति चेन्न। एकाज्ञानपक्षे तदयोगात्। किञ्चावच्छिन्नस्य जडत्वेनाज्ञानकल्पितस्य तद्विषयत्वानुपपत्तिः। अवच्छिन्नविषयाज्ञाननिवृत्त्या तदभिव्यक्तावपि तत्संबन्धेनापरोक्षत्वानुपपत्तेश्च। तस्य जडत्वेनापरोक्षैकरसत्वाभावात्। मिथ्याभूतस्य जडस्य तस्यापरोक्षैकरसत्वाङ्गीकारे वृत्तेरेव तत्स्वीकारेण सर्वोपपत्तेः चैतन्योपरागादि व्यर्थम्। मूलाज्ञाननिवृत्तिर्वाच्या। तथा च सद्यो मोक्ष इति साधूक्तम्।

अनादीति। सावयवत्वेऽनादित्वमेव न स्यादिति भावः। प्रवाहतोऽनादित्वमिति तु निरस्तम्। शुक्तिज्ञानेन तदावरणशक्त्यभिभवमात्रं क्रियते। चरमान्तःकरणवृत्त्या तु स्वोपादानाज्ञाननिवृत्तिरित्याशङ्क्य निषेधति– न चेति। न च वृत्तेरज्ञानोपादेयत्वाद् उपादेयेन चोपादाननिवृत्त्यदर्शनात् कथमेतदिति वाच्यम्। तथा दर्शनादित्याह– वृश्चिकवृक्षादिनेति। शुक्तिज्ञानस्य शुद्धचैतन्यं प्रत्यावरणशक्तिप्रतिबन्धकत्वं वा, अविद्याकल्पितजडं प्रति वा, जडविशिष्टात्मानं प्रति वा? नाद्य इत्याह– चक्षुरादीति। रूपादिहीनस्यापि कालादिवत् चाक्षुषवृत्तिविषयत्वमिति तु निरस्तम्। तदविषयस्यापि तत् प्रत्यावरणशक्तिप्रतिबन्धकत्वेऽतिप्रसङ्गः। ननु

(कण्टकोद्धारः)
शुक्तिज्ञानस्यावच्छिन्नचिद्विषयत्वेन शुद्धं प्रत्यावरणशक्तिप्रतिबन्धकत्वमस्तु, को दोष इत्यत आह– शुक्तिवृत्तेरिति। ततश्च सद्यो मोक्षः स्यादिति शेषः। न चावरणशक्त्यभिभवेऽपि अज्ञानाभिभवाभावात् कथं सद्यो मोक्षापादनमिति वाच्यम्। आवरणशक्त्यभिभवे विद्यमानस्य तस्योत्तेजकसमवहितमणिवद् अजागलस्तनायमानत्वात्। आवरणशक्तेरज्ञानस्वरूपत्वेन तदभिभवं विना तदभिभवायोगात्। न हि दाहशक्तिप्रतिबन्धेऽपि मण्यवस्थानवत् आवरणशक्तिप्रतिबन्धेनाज्ञानावस्थानमावयोः क्वापि संप्रतिपन्नम्। अनुपपत्त्या तत्कल्पनं तु अनुपपत्तेर्निरस्तत्वादेवायुक्तमिति। न द्वितीय इत्याह– अविद्याकल्पितमिति। अत्र जडे आवरणानङ्गीकारे अविद्याकल्पितमप्रसक्तप्रकाशमिति हेतुगर्भविशेषणद्वयम्। तृतीय आह– जडविशिष्टेति। न चावरणशक्तेर्नावच्छिन्नविषयत्वम्। किन्तु शुद्धविषयत्वमेव। अवच्छिन्नविषयत्वोक्तेस्तु अवच्छेदकाज्ञानयोरेकचिदध्यस्तत्वात् इति वाच्यम्। तथात्वे शुक्तितत्वाज्ञानं रजतविषयकं स्यात्। तत्रापि सामानाधिकरण्यस्य वक्तुं शक्यत्वादिति। किंचैवं वदताऽन्यत्रौपचारिकमावरणविषयत्वम्। चितं प्रति तु मुख्यमिति मुख्य एवावरणाभिभवः संपादनीय इति तदावरणाभिभवे तत्प्रकाशापत्त्या सद्यो मोक्षापत्तिरिति। किञ्चोपादेयेनोपादाननिवृत्तेरदर्शनात् कथं वृत्त्या तदज्ञाननिवृत्तिः? गोमयादौ दृष्टमिति चेत् तत्राह प्रच्युतेति। न चात्र विनिगमकाभाव इति वाच्यम्। अप्रच्युतावस्थानामुपादानत्वे कार्ये तदुपलब्धिः स्यात्। उपादेयेन तन्निवृत्तिश्चायुक्ता। उपादानोपादेययोरन्योन्याभेदेनाविरोधेन चेति विचारणीयम्। ननु चरमवृत्तिरेव चैतन्यविषयकाज्ञानविरोधिनी, मोक्षोद्देशेन श्रवणविधानात्। न त्विन्द्रियजारतोपसरणाद्यन्यतमकल्पनयैव सर्वं सुस्थमित्यत आह– शिष्टमिति।

न चेति। एवं च शुक्तिज्ञानेनावस्थाविशेषस्य निवृत्तावपि अवस्थावतोऽज्ञानस्य सत्त्वात् न सद्यो मोक्ष इति भावः। अत्र प्रष्टव्यम्। तेऽवस्थाविशेषाः परस्परं भिन्ना उताभिन्नाः? आद्ये अज्ञानात्मका अथवा तद्व्यतिरिक्ताः? आद्य आह– तेषामिति। तथाच द्वितीयपक्षनिक्षेप इति भावः। अज्ञानातिरिक्ता अवस्थाविशेषा इति द्वितीय पक्ष आह– न चेदिति। भ्रमोपादानत्वादेरज्ञानासाधारण धर्मत्वात् अन्यत्रासंभवः। अन्यथा ज्ञानसिद्धिरेव न स्यादिति भावः। अथावस्थानां परस्परमज्ञानेन चाभेद एवेति तृतीय एव पक्षोऽस्त्विति चेन्न। तथात्वेऽवस्थानिवृत्तिर्नामाज्ञाननिवृत्तिरेवेति शुक्तिज्ञानेनैव सद्यो मोक्षो वा बाधाभावो वा स्यादिति भावः। न च शरीरस्य बाल्याद्यवस्थापगमेऽप्यवस्थानवत् अज्ञानस्यावस्थापगमेप्यवस्थानमविरुद्धमिति वाच्यम्। परिमाणभेदेन द्रव्यभेद इति पक्षे तस्य नाशात् शरीरान्तरस्यैवोत्पादात्। अज्ञाने च तथाभावासंभवात्। परिणामवादे चावयवोपचयापचयरूपावस्थोपगमापगमादेर्निरवयवाज्ञानेऽसंभवात्। संभवे वाऽनादित्वायोगात्। अवस्थानां सादित्वे च भ्रमोपादनत्वाद्ययोगात्। अनन्तान्यज्ञानानीति द्वितीयपक्षे दोषमाह– द्वितीय इति। आद्य इति। अप्रकाशप्रयोजकसर्वावरणानां निवृत्तत्वात् प्रयोजकाभावे च प्रयोज्याभावनियमादिति भावः। एकस्येति। एकयवनिकापगमेऽपि यवनिकान्तरसद्भावे यथा पदार्थप्रकाशप्रतिबन्धस्तथेहापि प्रकाशो न स्यादित्यर्थः। नन्वेकया वृत्त्या एकाज्ञाननाशेऽपि आवरणान्तराणां सद्भावेऽपि प्रकाशो युज्यते। तयैव वृत्त्याऽऽवरणान्तराणां प्रतिरुद्धत्वात्। एवं च सा यावत्तिष्ठति तावत् प्रकाशः। तस्यां नष्टायां पुनरप्रकाशश्चोपपद्यते। यथा भवतां मते एकं ज्ञानं एकं प्रागभावं नाशयति। प्रागभावान्तरप्रयुक्तमज्ञातत्वव्यवहारं च प्रतिबध्नाति।

(कण्टकोद्धारः)

एवं प्रकृतेऽपि द्रष्टव्यम्। अज्ञानस्य प्रागभावस्थानीयत्वात्। तथाच न कश्चिद् दोष इति चेन्न। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तथाहि– ज्ञानेन एकस्य प्रागभावस्य नाशो युज्यते। यदेव ज्ञानमुत्पन्नं तत्प्रागभावमेव नाशयति, नान्यप्रागभावम्। ज्ञानेनाज्ञानस्य नाशे तु समानविषयकस्येत्युत्तरं वाच्यम्। एवं च सर्वेषां समानविषयकत्वात् सर्वेषां निवृत्तिः स्यात्। न वा कस्यापि। विनिगमकाभावात्। किंचाज्ञाननाशाभावेऽपि तत्प्रतिरोधकत्वमात्रेण प्रकाशस्तर्हि कस्यापि नाशो न स्यात्। सर्वेषामज्ञानानां प्रतिबन्धमात्रेण प्रकाशोपपत्तेः। एवमेव ब्रह्माज्ञानप्रतिबन्धमात्रेण ब्रह्मप्रकाशतत्कार्योपपत्तेर्मोक्षेऽप्यज्ञाननाशो न स्यात्। अपि च न ज्ञानं ज्ञानप्रागभावमात्रविरोधि। किं तु या ज्ञानव्यक्तिरुत्पद्यते तत्प्रागभावस्यैव। ज्ञानं चाज्ञानमात्रविरोधि, प्रभा यथा तमस इति वैषम्यम्। एतेनाज्ञानस्यापसरणादेरसंभवेऽपि कार्याक्षमत्वकरणमेव, यथोत्तेजकेन मण्यादेरित्यपास्तम्। तथात्वे प्रभया तमसोऽज्ञानस्य ज्ञानेन कार्याक्षमत्वकरणमेव सर्वत्र, क्वापि न नाश इति स्यात्। अनुभवश्चाविशिष्ट इति एकत्र नाशे सर्वत्रापि तथा स्यात्। एवं च ज्ञानेन सर्वत्र नाश एवेति वृत्त्यनन्तरमप्रकाशाभावो वा कदाप्यप्रकाशो वा एवेति साधूक्तम्।

कथं चेति। शुक्त्यादेः सादित्वेन ततः पूर्वं तस्य विषयाभावप्रसंगात्। न चाज्ञानमपि सादीति वाच्यम्। अपसिद्धान्तापातात्। ननु निर्विषयमेव तदस्त्वित्यत आह– निर्विषयस्येति। न चेश्वरज्ञानस्य घटादिरूपविषयाभावेऽपि यथावस्थानं तथा स्यादिति वाच्यम्। तस्य विषयान्तरसंभवात्। अस्य च तदभावात्। नन्वतीतादिज्ञानस्य विषयाभावेऽपि यथावस्थानं तथा स्यादिति चेन्न। ज्ञानस्य विषयानाश्रितत्वात्। अज्ञानस्य च त्वया विषयाश्रितत्वाङ्गीकारात्। शुक्तिज्ञानेनेति। शुक्तिज्ञानेनाज्ञानं नष्टमित्यस्ति तावदनुभवः। तदज्ञानमनवच्छिन्नचैतन्यावरणं चेत् शुक्तिवृत्त्यैव शुद्धाज्ञानस्य नष्टत्वात् सद्यो मोक्षः स्यादिति भावः। न चैकावरणनाशेऽप्यावरणान्तरसद्भावात् न सद्यो मोक्ष इति वाच्यम्। तथात्वे चैतन्यप्रकाशाभावेन शुक्तेरपि प्रकाशो न स्यात्। न च शुक्त्यवच्छेदेनैवावरणापसरणात् शुक्तिप्रकाश इति वाच्यम्। शुक्तिवृत्त्याऽनवच्छिन्नविषयापसरणानुपपत्तेः। संभवे वा सद्यो मोक्षप्रसंगानिस्तारात्। अविशेषेण शुक्तिवृत्त्यैवानवच्छिन्नसर्वावरणानां निरस्तत्वात्। एतेनेति परामृष्टं हेतुमाह प्रतिविषयमिति। तथाचैकाज्ञानपक्षानेकाज्ञानपक्षयोर्दुष्टत्वात् वृत्त्या तदभिभवेन प्रतिकर्मव्यवस्थेत्यनुपपन्नम्। तथाच सर्वप्रकाशो दुर्वारः।

सम इति। न तावत् ज्ञानेनैकज्ञानप्रागभावनिवृत्तिः। प्रागभावान्तरसद्भावेन घटप्रकाशाभावापत्तेः। न सर्वज्ञानप्रागभावनिवृत्तिः। पुनर्ज्ञानान्तरानुदयप्रसंगादिति साम्यमित्यर्थः। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येण दूषयति– नहीति। ननु तथापि तमो दृष्टान्तो भविष्यति। तमो ह्यालोकाभावः। तस्य चावरणत्वं स्वीकृतम्। तत्रालोकेन यावदालोकाभावानां निवृत्तिरशक्या। तथाच य आलोक उत्पन्नस्तेन स्वाभावनिवृत्तावपि आलोकाभावान्तरसद्भावात् घटप्रकाशो न स्यादिति। तत्र यथा समाधानमुक्तं तथा प्रकृतेऽपीत्यत आह– न चेति। अत्रापि दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमेवेति भावः। नन्वत्रापि आलोकाभावसमुदायस्यावरणत्ववत् अज्ञानसमुदायस्यैवावरणत्वमङ्गीक्रियते। अतो न वैषम्यमित्याशङ्क्य निषेधति– न चेति। ननु

(कण्टकोद्धारः)

वृत्त्याऽज्ञानापसरणमात्रं क्रियते, न निवृत्तिः। वृत्तौ नष्टायां पुनरज्ञानोपगम इति समुदायसत्त्वान्न सदा प्रकाश इत्यत आह– अयुक्तं चेति। नचापसरणं कार्याक्षमत्वमात्रम्। तच्चामूर्तत्वेऽपि युक्तमिति वाच्यम्। तथात्वे समुदायस्य सत्त्वे पुनः स एव दोषः। प्रभादावपि तथैव वक्तुं शक्यत्वाच्चेत्यलं प्रपञ्चेन। उपसंहरति तस्मादिति।

एतेनैते परेषां कण्ठकोलाहलाः परास्ताः। यथाहुः– अधिष्ठानचैतन्यं विषयप्रकाशकम्। न च सर्वदा प्रकाशप्रसङ्ग इति वाच्यम्। चैतन्यत्रयस्यैकलोलीभावाभावात्। अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्। वृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्। विषयावच्छिन्नं प्रमेयचैतन्यम्। एवं च यदीयान्तःकरणवृत्त्या चैतन्यत्रयस्यैकलोलीभावः तत्रावरणनिवृत्त्या तस्यैव तदवच्छेदेन चैतन्यं प्रकाशमानं स्वाध्यस्तं घटादिकं प्रकाशयतीति नातिप्रसङ्गः। एवं च यत्रान्तःकरणबहिर्गमनेन चैतन्यत्रयस्यैकलोलीभावः तत्रचापरोक्षव्यवहारः। यत्र चान्तःकरणस्य बहिर्निर्गमनाभावेन प्रमातृप्रमाणचैतन्ययोरेकलोलीभावस्तत्र परोक्षव्यवहारः। एतदेवाभिप्रेत्य विवरणे परोक्षे सुप्तिव्यावृत्तिमात्रमित्युक्तम्। एवं च न कोऽपि दोष इति। परोक्षस्थले च वृत्तेः प्रमेयेन परम्परासंबन्ध एव। अनुमितावनुमेयेन तद्व्याप्यज्ञानजन्यत्वंशाब्द्याः संसर्गेण सह तदाश्रयवाचकपदजन्यत्वं, स्मृतेः स्मर्तव्येन तद्विषयानुभवजन्यत्वमित्यादीति। अस्यां प्रक्रियायां मानाभावात्। आध्यासिकसंबन्धस्यैव तन्त्रत्वेन चैतन्यत्रयैकलोलीभावस्यानपेक्षितत्वेनाप्रयोजकत्वाच्च। अपरोक्षस्थले तत्सन्निकृष्टेन्द्रियजन्यत्वमात्रेण चैतन्यत्रयस्यैकलोलीभावसंभवेऽन्तःकरणस्य बहिर्निर्गमस्याप्रयोजकत्वाच्च। परोक्षस्थले प्रमाणप्रमातृ चैतन्ययोरेकलोलीभावेपि तस्याधिष्ठानचैतन्यत्वाभावेन तत्राध्यासिकसंबन्धस्यातन्त्रत्वापातेन तद्दृष्टान्तेन सर्वत्र तस्याप्रयोजकत्वापाताच्च। परोक्षस्थले चैतन्याभिव्यक्त्यादिकल्पनाया व्यर्थत्वाच्च। चैतन्याभिव्यक्तिकल्पनायोगाच्च। परोक्षस्थले च वृत्तेरेव प्रकाशकत्वोपपत्तेश्च। एवं च विवरणस्यान्यथाभिप्रायवर्णनं सिद्धान्तविरुद्धं न च कल्प्यमित्यलमतिविस्तरेण। ॥ प्रतिकर्मव्यवस्थानुपपत्तिभङ्गः ॥

श्रीनिवासतीर्थविरचितः

## न्यायामृतप्रकाशः

प्रतिकर्मव्यवस्था युक्तेत्यंतेन। कुल्या कृत्रिमजलप्रवाहः। केदाराः क्षेत्राणि। विषयाकारेण परिणामोपपादनायोक्तं ॥ सावयवमिति ॥ शीघ्रगमनोपपादनायोक्तं ॥ तैजसमिति ॥ ध्रुवादिविषयेति ॥ तन्मंडलादिरूपविषयेत्यर्थः। तत्रेति। जीवचैतन्यं सर्वगतं परिच्छिन्नं चेति मतद्वयमित्यन्वयः ॥ अविद्येति ॥ अविद्यायास्सर्वगतत्वेन तदुपाधिकजीवचैतन्यमपि सर्वगतमित्यर्थः ॥ अंतःकरणेति ॥ अंतःकरणस्या-सर्वगतत्वात्तदुपाधिकजीवोऽप्यसर्वगत इत्यर्थः ॥ तत्राऽद्यइति ॥ जीवचैतन्यस्य सर्वगतत्वात्तत्रैव विषयस्याध्यस्तत्वेन जीवचैतन्यमेव विषयप्रकाशकं घटादिज्ञानमित्युच्यत इति यावदित्यर्थः ॥ द्वितीय इति ॥

(प्रकाशः)

अंतःकरणपरिच्छिन्नस्यांऽतरत्वेन बाह्यप्रपंचाध्यासाधिष्ठानत्वाभावात् ब्रह्मचैतन्यं यदनावृतं तत्रैवाध्यस्तं तदेव च विषयप्रकाशकमित्यर्थः ॥ सर्वगतत्वेति ॥ अविद्योपाधिकं सत् सर्वगतमिति पक्षेऽप्यविद्यावृतस्वभावं तदनावृतस्वभावं चेति मतद्वयमित्यर्थः। असर्वगतत्वपक्षे त्वनावृतमेवेति बोध्यम्। नन्वेतेषु मतेषु वृत्तेः कोपयोग इत्यतस्तदुपयोगमाह ॥ तत्राऽद्य इति ॥ अविद्योपाधिकं यत्सर्वगतं जीवचैतन्यं तदविद्यानावृतमेव विषयाध्यासाधिष्ठानम्, अत एव विषयप्रकाशकमिति मत इत्यर्थः ॥ विषयेति ॥ सर्वगते जीवचैतन्ये विषयादिकमस्ति तत्संश्लेषो जीवचैतन्ये नास्ति। असंगत्वात्। वृत्तिरगत्याऽसंगेऽपि तत्संश्लेषं संपादयतीत्यर्थः। आवरणविरहस्य स्वतः सिद्धत्वेनावरणाभिभवार्थत्वमेतन्मते नास्तीति ध्येयम् ॥ द्वितीय इति ॥ अविद्योपाधिकं जीवचैतन्यं सर्वगतमविद्यावृतमिति मत इत्यर्थः ॥ आवरणेति ॥ आवरणे चाभिभूते चैतन्यं स्वत एव विषयेणोपरज्यतेऽत आवरणाभिभवार्थैव वृत्तिर्न संश्लेषार्थेति भावः। अंतःकरणोपाधिकं जीवचैतन्यं परिच्छिन्नं ब्रह्मचैतन्यमेव विषयप्रकाशकमिति मते वृत्त्युपयोगमाह ॥ परिच्छिन्नत्वपक्षे त्विति ॥ ॥ अभेदेति ॥ वृत्त्या आवरणेऽभिभूते सति वृत्तिप्रतिबिंबितचैतन्यस्य विषयाधिष्ठानचैतन्यस्य च वस्तुगत्याऽभेदोऽस्ति। स व्यज्यत इत्यर्थः। तथा च वृत्तिप्रतिबिंबितचैतन्येनाभिव्यक्ताभेदमधिष्ठानचैतन्यं भवतीति यावत्। अविद्योपाधिकं सर्वगतं जीवचैतन्यमनावृतं विषयाध्यासाधिष्ठानमिति मते वृत्तिश्चिदुपरागार्था नावरणाभिभवार्थेत्युक्तम्। तत्राऽवरणाभावेन चैतन्यस्य स्वत एव विषयेण संश्लिष्टत्वाद्वृत्तिर्व्यर्थेत्यतस्तत्सार्थक्यमुपपादयति ॥ अनावृतत्वेति ॥ जीवचैतन्यं असंगत्वाद्विषया-संश्लिष्टमेवावतिष्ठत इति शेषः ॥ उपरज्यत इति ॥ विषयैरिति शेषः। विषयाकारवृत्तिरगत्याऽसंगत्वं परिहृत्य संश्लेषापरपर्यायमुपरागं संपादयतीत्यर्थः ॥ न त्विति ॥ वृत्तिं विना पूर्वं विषयैः स्वतो नोपरज्यतेऽसंगत्वादित्यर्थः। ननु सर्वगतस्यानावृतस्य विषयाध्यासाधिष्ठानस्य विषयैः सह वृत्तेः पूर्वमुपरागो नास्ति, वृत्त्यैवोपरज्यत इत्येतदयुक्तमदृष्टत्वादित्यतोऽत्र तार्किकादिसंमतं दृष्टांतमाह ॥ यथेति ॥ ॥ सास्नेति ॥ केसरादिमत्सिंहादि-व्यक्तावप्यस्ति गोत्वं, परं तु तस्य तदुपरागः संश्लेषविशेषः समवायरूपो नास्ति। सास्नादिमद्व्यक्त्यैव तूपरज्यत इत्यर्थः ॥ आकाशेति ॥ आकाशदेशव्यापिनी तथा घटादिपदार्थस्थितगंधरसादिप्रदेशव्यापिनीत्यर्थः ॥ रूपीति ॥ रूपोपेतपदार्थेत्यर्थः। अनावृतत्वपक्षे केवलजीवचैतन्या प्रकाश्यस्यापि घटादेस्तदाकारवृत्त्युपारूढसर्वगतचैतन्येन प्रकाश्यत्वं युक्तमित्यत्र दृष्टांतमाह ॥ केवलेति ॥ ॥ वृत्त्युपारूढेति ॥ वृत्तिसहकृतेत्यर्थः। एवं वृत्तेरुपयोगमुपपाद्य चैतन्यस्य सर्वान्प्रत्यविशिष्टत्वात्सर्वस्य सर्वं प्रतीयेतेत्यतिप्रसंगं परिहरन् एतेषु पक्षेषु घटप्रकाशकं चैतन्यं विवेचयन् प्रतिकर्मव्यवस्थामुपपादयति ॥ एवं चेत्यादिना ॥ ननु जीवचैतन्यस्य परिच्छिन्नत्वपक्षे ब्रह्मचित एव विषयाध्यासाधिष्ठानतया विषयप्रकाशकत्वेन विषयानुभवरूपत्वादिदं जीवज्ञानमिति व्यवहारः कथम्। ब्रह्मचैतन्यज्ञानमित्येव व्यवहारः स्यादित्यत आह ॥ विषयानुभवस्येति ॥ जीवचैतन्येन वृत्त्युपारूढज्ञातृचैतन्येन साकं योऽभेदस्तद्वत्त्वेन घटाधिष्ठानभूतब्रह्मचैतन्यस्याभिव्यक्तत्वाज्जीवचित्त्वं विषयानुभवस्य युक्तमित्यर्थः।

एवमनूदितां प्रक्रियां दूषयति ॥ ॥ तत्रेत्यादिना ॥ प्रतिकर्मव्यवस्थासिद्ध्यर्थं चैतन्यस्य विषयप्रकाशकत्वार्थं इंद्रियसन्निकर्षद्वारिका वृत्तिः कल्प्यते। तत्रादौ सन्निकर्ष एवायुक्तः। तथा च तदधीनवृत्तिद्वारकं यत् विषयोपरक्तत्वं तेन चैतन्यस्य विषयप्रकाशकत्वमयुक्तम्। अस्तु वा चैतन्यस्य विषयप्रकाशकत्वं तथापि देहांतरेव वृत्त्यवस्थानोपपत्तेर्देहाद्बहिर्वृत्तेर्निर्गमनकल्पनमप्रामाणिकम्। अस्तु वा देहाद्बहिर्वृत्तेर्निस्सरणं, तथापि तस्या

(प्रकाशः)

एवाज्ञाननिवर्तकत्वेन विषयप्रकाशकत्वोपपत्तौ तत्प्रतिबिंबितचैतन्यं तदभेदनाभिव्यक्ताधिष्ठानचैतन्यमिति चैतन्यद्वयकल्पनमप्रामाणिकमित्येवमुत्तरग्रंथप्रवृत्तिरिति निष्कर्षः। तत्र प्रतिकर्मव्यवस्थासिद्ध्यर्थं चैतन्यस्य विषयप्रकाशकत्वसिद्ध्यर्थं च विषयसन्निकृष्टेंद्रियजन्यवृत्तिद्वारकः संबंधः कल्पितः। तत्राऽदौ सन्निकर्षं खण्डयति ॥स्वसन्निकृष्टेत्यादिना॥ चैतन्यस्य विषयप्रकाशकत्वसिद्ध्यर्थं संनिकर्षकथनमयुक्तम्। तथात्वे सन्निकर्षात्पूर्वं घटादेः सत्त्वं स्यात्। अन्यथा संनिकर्षस्यैवायोगात्। न च सन्निकर्षात्पूर्वं घटादिकमस्त्येवेति वाच्यम्। तथात्वे त्वदंगीकृतकल्पितत्वायोगात्। कुत इति चेत्। कल्पितत्वे प्रतीतिमात्रशरीरकत्वस्य प्रयोजकत्वेन कल्पितत्वांगीकारे प्रतीतिमात्रशरीरकत्वापत्त्या सन्निकर्षजन्यज्ञानात्पूर्वं घटादेरसत्त्वेन सन्निकर्षस्यैवायोगादित्यर्थः। एवमापादयतः प्रातिभासिकत्वातिरिक्तं व्यावहारिकत्वं नास्तीति हृदयम्। ननु न कल्पितत्वं प्रतीतिमात्रशरीरत्वव्याप्यं किंतु कल्पितत्वविशेषः प्रातिभासिकत्वमेव। एवं च प्रकृते कल्पितत्वांगीकारे न प्रतीतिमात्रशरीरत्वप्राप्तिः। तथा च सन्निकर्षात्पूर्वं घटादेः सत्त्वोपपत्त्या युक्तः संनिकर्ष इत्याशंक्य निराकरोति ॥न चेति॥ गौरवादिति॥ कल्पितत्वं सामान्यरूपत्वेन सर्वग्राहकत्वाल्लघुभूतं, प्रातिभासिकत्वं तु कल्पितत्वविशेषरूपत्वाद्गुरुभूतमित्यर्थः। ननु विपरीतमेव गौरवं किं न स्यादित्यतोऽतिप्रसंगमाह ॥वह्निं प्रतीति॥ वह्निमत्त्वं प्रति धूमविशेषोऽपर्वतीयधूम एवास्तु व्याप्यः। महानसादौ दर्शनात्। विशेषरूपत्वेन लाघवात्। ततश्चापर्वतीयधूमस्य पक्षेऽभावेन स्वरूपासिद्ध्या तेन वह्निर्न सिद्ध्येत्। तथाऽप्रामाणिकत्वं प्रति कल्पितत्वविशेषः प्रातिभासिकत्वमेव व्याप्यमस्तु न कल्पितत्वम्। तथाच तेनाप्रामाणिकत्वानुमानं न स्यात्। एवं च घटादीनां प्रामाणिकत्वापातः। अतस्त्वया विशेषस्य गुरुभूतत्वात्सामान्यं धूमवत्त्वमेव कल्पितत्वमेव च वह्निमत्त्वमप्रामाणिकत्वं च प्रति व्याप्यमिति वाच्यम्। तत्प्रकृतेऽपि तुल्यमिति न विपरीतगौरवमिति भावः। दोषप्रयुक्तज्ञानत्वमादिशब्दार्थः।

ननु प्रतीतिमात्रशरीरत्वव्याप्यं कल्पितत्वमित्ययुक्तम्। अप्रयोजकत्वात्। कल्पितत्वेऽपि प्रतीतिमात्र-शरीरत्वाभावोपपत्तेः। ननु प्रतिभासमात्रशरीरत्वाभावे कल्पितत्वमेव न स्यादिति हेतूच्छित्तिरेव बाधिकेति चेन्न। प्रतिभासमात्रशरीरत्वाभावेऽपि ज्ञाननिवर्त्यत्वेन कल्पितत्वोपपत्तेरिति तर्केणाप्रयोजकत्वमेवेति न कल्पितत्वस्य प्रतीतिमात्रशरीरत्वव्याप्यत्वसिद्धिरित्याशंक्य निषेधति ॥न चेति॥ प्रतीतिमात्रशरीरत्वाभावमंगीकृत्य कल्पितत्वस्य ज्ञाननिवर्त्यत्वेनोपपत्तिर्वक्तुं न युज्यते। प्रतीतिमात्रशरीरत्वाभावेनैव ज्ञाननिवर्त्यत्वाभावस्यापाद्यमानत्वादित्याह ॥प्रतीतीति॥ तथा च नाप्रयोजकत्वमिति भावः। ननु कल्पितस्यापि दृश्यस्य प्रतीतिस्तावत्सर्वसिद्धा। सा चेंद्रियसन्निकर्षं विनाऽऽनुपपन्नेतींद्रियसन्निकर्षार्थं स्वज्ञानात्पूर्वं दृश्यस्य सत्त्वमंगीकार्यमित्यंत आह ॥प्रतीतेश्चेति॥ स्वप्नवदिति॥ स्वाप्नप्रतीत्यन्यथानुपपत्त्या सन्निकर्षो वा तत्पूर्वं विषयसत्त्वं वा नांगीक्रियते, तद्वदिति भावः। ननु स्वप्नवदिति दृष्टांतो न युक्तः तस्य प्रातिभासिकत्वेन तत्र सन्निकर्षापेक्षाभावात्, प्रपंचस्य तु व्यावहारिकत्वात्सन्निकर्षार्थं विषयसत्त्वमपेक्षितमिति चेत्तत्राह ॥व्यावहारिकत्वस्येति॥ ॥भ्रांतिदैर्ध्यमात्रेणेति॥ इदानीं बाधाभावमात्रेणेत्यर्थः।

एवं सन्निकर्षं खंडयित्वा वृत्त्युपारूढचैतन्येनाभेदेनाभिव्यक्ताधिष्ठानचैतन्यस्य विषयप्रकाशकत्वकल्पनप्रक्रियां खंडयति ॥तत्तदाकारेति॥ परोक्षधर्माद्याकारा वृत्तिरंतरेव भवति। तत्र वृत्तेरेव धर्मादिप्रकाशरूपत्वं कल्पितं

(प्रकाशः)

न चैतन्यस्य, तत्र चैतन्यप्रतिफलनाभावादित्युच्यते। तद्वदेवापरोक्षवृत्तावप्यस्त्विति भावः ॥वृत्त्युपरागादीति॥ वृत्त्युपारूढचैतन्येनाभेदेनाभिव्यक्ताधिष्ठानचैतन्यस्येत्यर्थः। ननु चैतन्यस्य विषयप्रकाशकत्वाभावे विषये आपरोक्ष्यं न स्यात्। अपरोक्षचित्संबंधेनैवापरोक्ष्यस्य वक्तव्यत्वादित्यत आह ॥विषयेति॥ वृत्तिगतेति॥ वृत्तिगतापरोक्षत्वविशेषेणेत्यर्थः। परोक्षवृत्तेश्चैतन्याभिव्यंजकत्वाभावेन चैतन्याभिव्यंजकत्वार्थं स विशेषस्तवाप्यावश्यक इति भावः। तथाचापरोक्षवृत्तिविषयत्वादेवाऽपरोक्षत्वमस्त्विति भावः। ननु परोक्षवृत्तेरिवेति दृष्टांतो न युक्तः। तत्रापि परोक्षवृत्त्युपरक्तचैतन्यस्यैव विषयप्रकाशकत्वांगीकारादित्यत आह ॥न चेति॥ कुतो नास्तीत्यत आह ॥अभिव्यक्तेति॥ एतच्चावरणदशाव्यवच्छेदाय। ननु चैतन्यस्य विषयप्रकाशकत्वेनापरोक्षानुभवत्वमनंगीकृत्य वृत्तेरेवापरोक्षत्वमस्त्वित्युक्तमयुक्तम्। तथात्वेऽपरोक्षानुभवत्वप्रयुक्तं प्रकाशकत्वमपि वृत्तेरंगीकार्यं स्यात्। न चास्त्विति वाच्यम्। वृत्तेरंतःकरणोपादानकतया उपादानेंऽतःकरणे प्रकाशकत्वाभावेन तत्कार्यभूतायामपि वृत्तौ तदयोगादिति चेन्न। उपादानगतस्यैवोपादेये प्राप्तिरिति नियमाभावात्। अंतःकरणस्येच्छाकारेण परिणतत्वादुपादानांतःकरणानिष्ठमपीच्छात्वमुपादेयेच्छावृत्तावंगीकृतम्। यथा वा अंतःकरणानिष्ठमपि ज्ञानत्वं तदुपादेयवृत्तावंगीकृतम्। एवमंतःकरणानिष्ठमपि प्रकाशकत्वं तदुपादेयवृत्तावस्तु अन्यथा उपादानांतःकरणानिष्ठत्वादपरोक्षवृत्तौ प्रकाशकत्वं नास्तीत्यंगीकारे अंतःकरणपरिणामपरोक्षवृत्तौ चैतन्यप्रतिफलनाभावेन तस्या एव विषयानुभवत्वप्रयुक्तं प्रकाशत्वमंगीकृतम्। तदपि न स्यात्। त्वन्मते उपादानेंतःकरणे तस्याभावादित्याह ॥वृत्तेरेवेत्यादिना॥ अंतःकरणानिष्ठं तत् प्रकाशकत्वम्। अत्राद्वैतसिद्धिकारेणोक्तं– सावयवं तैजसमंतःकरणमिति परेणांगीकृतत्वात्प्रकाशकत्वमप्यंतःकरणेऽस्तीत्येतदयुक्तमिति। तन्न। न हि तैजसत्वं प्रकाशकत्वे तंत्रम्। तथात्वे 'तेजो वै घृतं' 'तेजो वै हिरण्यम्' इत्यादिश्रुतेर्घृतादीनामपि प्रकाशकत्वापातात्। तत्र पार्थिवादिभागकल्पनेऽत्रापि तथास्त्विति तुल्यमिति। ननु वृत्तिरूपज्ञानस्य प्रकाशत्वमयुक्तम्। घटं जानामीति वृत्तिरूपज्ञानस्य सकर्मकत्वप्रतीतेः। घटः प्रकाशत इति प्रकाशस्याऽकर्मकत्वप्रतीतेः। अतोऽकर्मकप्रकाशः चैतन्यरूपज्ञानमेवेत्यंगीकार्यमित्याशंक्य निराकरोति ॥न चेति॥ क्रियैक्येऽपि तत्प्रतिपादकशब्दस्वभावादेव कर्मसंबंधप्रतीत्यप्रतीती। यथा करोति, यतत इत्यत्र करणस्य प्रयत्नरूपत्वेन तेनैक्येऽपि करोतेः सकर्मकत्वं यततेस्त्वकर्मकत्वं दृष्टं, यथा वा गच्छति चलतीत्यत्र गमनस्य चलनत्वेऽपि गच्छतेः सकर्मकत्वं चलतेस्त्वकर्मकत्वं दृष्टमेवमिहापि वृत्तेरेव प्रकाशत्वेन तयोरैक्येऽपि ज्ञानरूपतया वृत्तेः सकर्मकत्वं, प्रकाशस्य त्वकर्मकत्वमुपपद्यत एव। सकर्मकत्वादेर्धातुस्वाभाव्यादित्याह ॥क्रियैक्येऽपीति॥ धात्वोः जानातिकाशत्योः। उपरागः संबंधः ॥अन्यथेति॥ शब्दस्वभावानादर इत्यर्थः ॥परिणतेरिति॥ घटः परिणमत इति धात्वर्थभूतायाः परिणामरूपक्रियाया इत्यर्थः ॥अकर्मकत्वादिति॥ अकर्मकधातुप्रयोगविषयत्वादित्यर्थः। परिणतिविशेषस्य अंतःकरणपरिणतिरूपक्रियायाः ज्ञानविशेषस्य। सकर्मकज्ञानत्वं सकर्मकजानातिप्रयोगविषयत्वम् ॥अतीतमिति॥ वृत्तिव्यतिरिक्तस्य चैतन्यरूपज्ञानस्यैव प्रकाशत्वेऽतीते चैतन्यरूपज्ञानाभावेन प्रकाशाभावादतीतं प्रकाशत इति धीर्न स्यादित्यर्थः। घटादौ वृत्त्यतिरिक्तचिद्रूपज्ञानांगीकारे दृष्टविरुद्धं बहुकल्पनीयं स्यादित्याह ॥एवं चेति॥ इष्यमाणे इच्छाविषये, यथा स्वविषये। इच्छा स्वत एव नान्यद्वारेणेत्यर्थः। अनुभाव्ये अनुभवविषये घटादौ स्वतः प्रवणस्य स्वत एव प्रवणतास्वभावस्येत्यर्थः। अन्यद्वारा वृत्तिद्वारा। तदुपरक्तत्वं

(प्रकाशः)

अनुभाव्येन संबद्धत्वम्। तत्प्रति अनुभाव्यं प्रति। अज्ञानेनावृतत्वं वृत्त्यभावप्रयुक्तघटादिविषयकत्वाभाव इति यावत् ॥घटाज्ञानेति॥ घटज्ञानस्यैव घटाज्ञानविरोधित्वदर्शनादिति भावः ॥तदिति॥ घटाज्ञानेत्यर्थः। तदज्ञानस्फोरकत्वेन तदविरोधित्वम्। आदिपदेन सुखाज्ञानाविरोधिनश्चैतन्यस्य सुखज्ञानं त्वग्राह्यम् ॥दृष्टविरुद्धमिति॥ इच्छादिषु यादृशं साक्षादेवेष्यमाणोपरक्तत्वम्, इष्यमाणं प्रत्यनावृतत्वम्, इष्यमाणे द्वेषविरोधित्वं दृष्टं तदपेक्षया विरुद्धमित्यर्थः ॥अन्यथेति॥ अज्ञानविरोधिन्या वृत्तेर्ज्ञानित्वानंगीकार इत्यर्थः। वृत्तेः अंतःकरणवृत्तेः। अन्यस्यैव इच्छाभिव्यक्तचैतन्यस्यैव।

ननु 'तमेव भांतम्' इति श्रुत्या चैतन्यरूपब्रह्मप्रकाशमनुसृत्य घटादिसर्वप्रपंचस्य प्रकाश उच्यतेऽतश्चिद्रूपं वृत्त्यन्यज्ञानमंगीकार्यमित्यत आह ॥तमेवेति॥ ननु सर्वशब्देन नियामकं विना सूर्यादिमात्रग्रहणमयुक्तम्। तस्य समस्तघटादिप्रपंचोपस्थापकत्वादित्यत आह ॥सर्वशब्दस्येति॥ ॥सर्वेभ्यः कामेभ्य इति॥ 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाभ्यां यजेत' इति श्रूयते। चतुर्थी द्वितीयार्थे। सर्वान्कामानुद्दिश्येत्यर्थः। अत्र सर्वशब्दः पशुपुत्रधनादिसमस्तवाची न वेति संशये नियामकं विना सर्वशब्दसंकोचायोगेन तस्य सर्वोपस्थापकत्वात्पशुपुत्रादिसमस्तकामनावान् दर्शपूर्णमासाभ्यां यजेतेति पूर्वपक्षे प्राप्ते सर्वशब्दस्य संकोच एव। न च नियामकाभावः। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति पूर्ववाक्ये स्वर्गकाम इत्युक्तत्वात्प्रकृतस्वर्गमात्रपरत्वमेवेति सिद्धांतितं पूर्वत्रे तद्वदित्यर्थः। सर्वशब्दस्तवापि संकुचितार्थक इत्याह ॥त्वन्मतेऽपीति॥ अतीतादेर्वर्तमानतादशायां चित्प्रकाश्यत्वेऽपि नित्यातींद्रिये कदापि चित्प्रकाश्यत्वं नास्तीत्याशयेन नित्यातींद्रियस्येत्युक्तं ॥संकोचाच्चेति॥ संकोचस्यावश्यकत्वाच्चेत्यर्थः। सर्वशब्दस्य प्रकृतपरत्वज्ञापकमस्तीत्याह ॥प्रकृतपरेति॥ ॥स्मृतेरेवेति॥ तत्र सूर्यादितेजसां मामकमिति मदधीनत्वरूपतत्संबंधित्वस्यैवोक्तत्वादित्यर्थः ॥शतृप्रत्ययस्येति॥ सन् संतौ संत इतिवत् भान् भांतौ भांत इति भाच्छब्दस्य भांतमिति द्वितीया। शतुः कर्त्रर्थकलडादेशत्वाज्ज्ञानकर्त्रुपस्थापकत्वेन भानरूपे ब्रह्मणि भानकर्तृत्वस्यासंभवाच्छतृप्रत्ययस्यायोगः। तथा तस्य भासेति षष्ठ्या ब्रह्मणो भासा संबंधो बोध्यते। भानरूपे च ब्रह्मणि तत्संबंधासंभवात् षष्ठ्या अयोगः। तथा 'तमेवभांतमनुभाति' इत्यत्र प्रपंचकर्तृकभानरूपक्रियाया भांतमित्युक्तब्रह्मभानरूपक्रियातो भेदावगमादनुशब्दस्याप्यनुपपत्तिरित्यर्थः। क्रियाभेदे सत्येवानुशब्दप्रयोग इत्यत्रोदाहरणमाह ॥गच्छंतमिति॥

एतत्पर्यंतं सन्निकर्षस्यैवायोगेन सन्निकृष्टेंद्रियजन्यवृत्तेरसंभवाच्चैतन्यस्य विषयप्रकाशकत्वं नास्तीत्युक्तं। इदानीं तदंगीकृत्य सावयवं तैजसमंतःकरणं चक्षुरादिद्वारा बहिर्निस्सरतीति 'वृत्तेर्बहिर्निस्सरणं यदुक्तं तत्प्रक्रियां दूषयति ॥अस्तु वेत्यादिना॥ परोक्षस्थले जायमानवृत्तितो वैलक्षण्यायांतःकरणस्य देहान्निर्गतिरपरोक्षस्थले कल्प्यत इति चेत्तत्राह ॥परोक्षधीति॥ ननु विषयस्य वृत्तिसंबंधं विना चिदुपराग एव न संभवति। चिदुपरागे वृत्तिसंबंधस्य तंत्रत्वात्। सास्नाद्यवच्छिन्ने गोत्वाद्युपरागवत् वृत्त्यवच्छिन्नविषय एव चिदुपरागस्य सत्त्वात्तस्य वृत्तेर्बहिर्निर्गतिं विनाऽयोगात्सा कल्पनीयेत्यत आह ॥चिदुपरागादाविति॥ इंद्रियसन्निकर्षद्वारा वृत्तेर्बहिर्निस्सरणाभावेऽपि विषयाकारेण वृत्तेरंतरेव परिणाममात्रेण चैतन्यविषययोरुपरागासंभवेन चिदुपरागे

(प्रकाशः)

तदाकारत्वस्यैव प्रयोजकत्वात् तया वृत्त्यवच्छिन्न एव तदुपराग इति कल्पने मानाभावादित्यर्थः। ननु प्रभायामावरणनिवर्तकत्वे प्रकाशकत्वे च विषयसंश्लेषस्यैव प्रयोजकतया दृष्टत्वेन विषयसंबंधं विना वृत्तेरावरणनिवर्तकत्वासंभवेन तदर्थं बहिर्निर्गतिः कल्प्येति चेत्तत्राह ।।न त्विति।। विषयप्रकाशकत्वमादिशब्दर्थः। वृत्तेरावरणनिवर्तकत्वादौ तदाकारत्वमेव तंत्रं न तु तत्संश्लेषः। ज्ञानस्य प्रभापेक्षया आंतरत्वेन वैषम्यादिति भावः। वृत्तेर्देहाद्बहिर्निर्गत्या विषयसंश्लेषावरणनिवर्तकत्वे बाधकमाह ।।नेत्रादिति।। ध्रुवमंडलज्ञानार्थमेव नेत्रान्निर्गच्छंती ध्रुवमंडलाद्याकारा अंतःकरणवृत्तिस्तयेत्यर्थः ।।स्वेति।। वृत्तीत्यर्थः ।।आपरोक्ष्यापातादिति।। संश्लेषावरणनिवृत्तिद्वारा आपरोक्ष्यापातादित्यर्थः। ननु सिद्धांतेऽपि नयनरश्मीनां बहिर्निर्गमनांगीकारादतिप्रसंगस्तुल्य इति चेन्न। कज्जलादावतिसामीप्यादिदोषात्परमाण्वादौ महत्त्वविशेषादिकारणविरहादित्यादि द्रष्टव्यमित्याहुः। ननु क्वचिद्विषयसंश्लेषस्तदावरणनिवर्तकत्वे तंत्रं क्वचिद्वृत्तेस्तदाकारत्वमपि। तथा च नातिप्रसंगः। नेत्रस्थकज्जलपरमाण्वादौ वृत्तेस्तदाकारत्वाभावात्। किंतु ध्रुवमंडलाद्याकारत्वमेवेत्यत आह ।।द्वयोरिति।। संश्लेषतदाकारत्वयोः। ननु तर्हि मास्तु विषयसंश्लेषार्थं वृत्तेर्बहिर्गमनं किंतु तदाकारत्वार्थमेव। वृत्तेर्बहिर्निर्गमनेन विषयसंश्लेषे सति तदाकारताया जायमानत्वादित्यत आह ।।तदाकारत्वस्य चेति।। वृत्तेर्बहिर्गमनद्वारा विषयसंश्लेषाभावादित्यर्थः। तर्हि वृत्तेः कथं तदाकारत्वमित्यत उक्तम् ।।परोक्षेति।। तत्सन्निकृष्टेति।। परोक्षविषयसन्निकृष्टमनोरूपकरणेत्यर्थः। मनसस्तत्सन्निकर्षस्तु ज्ञानादिरूपोऽलौकिकः कश्चिदंगीकृतोऽस्ति। तद्वदपरोक्षवृत्त्युपपत्त्या बहिर्निस्सरणमयुक्तमित्यर्थः। ननु वृत्तेर्बहिर्निस्सरणमयुक्तमित्यसत्। तथाहि। घटचक्षुस्सन्निकर्षवत्साक्षादर्थे मनस्सन्निकर्षस्यापि ज्ञानहेतुत्वान्मनसो बहिर्निर्गत्यभावे तदयोगाद्घटानुभवो न स्यादित्याशंक्य निषेधति ।।न चेति।। ।।दृष्ट इति।। तथा च यद्व्यतिरेकेण यद्व्यतिरेक इति कारणत्वग्राहको व्यतिरेकांशो नास्ति, येन तस्य कारणत्वं प्रतीम इति भावः। यथोक्तं पदार्थविद्भिः 'आत्मा मनसा संयुज्यते मन इंद्रियेण इंद्रियमर्थेन' इति। तथा चार्थमनस्संयोगस्य ज्ञानहेतुतया तार्किकाद्यनंगीकृतत्वान्न तदर्थं बहिर्निर्गतिः कल्प्येत्यर्थः। किंच बहिर्निर्गत्य विषयमाश्लिषंत्या एव वृत्तेर्विषयावरणनिवर्तकत्वमिति नियमानंगीकारे स्पार्शनज्ञानमप्यनुकूलितं स्यात्। तथाहि। चाक्षुषज्ञाने मनसो बहिर्निर्गमने चक्षुरादिरूपनियतद्वारमिव स्पार्शनज्ञाने तन्नास्ति। कुत इति चेत् 'त्वगिंद्रियं सर्वशरीरव्यापि' इत्यभियुक्तवचनेन त्वगिंद्रियस्य सर्वशरीरव्यापित्वावगमेनांतःकरणस्य बहिर्निर्गमने नियतद्वाराभावात्। द्वारविशेषोक्तौ च विनिगमनाविरहप्रसंगात्। अतस्तत्र वृत्तिरंतरेव भवतीति वाच्यम्। एवमेवान्यत्रापि भवत्विति चक्षुरादिद्वारा बहिर्निर्गमनकल्पनमयुक्तमित्याह ।।एवं चेत्यादिना।। अन्यथेति।। नियतगोलकाभावेऽपि मनसो बहिर्निर्गमनांगीकार इत्यर्थः। वृत्तयः मनोवृत्तयः। गच्छेयुः संबध्येरन्।

घटादिप्रकाशकं चैतन्यमेवेति प्रक्रियां दूषयति ।।अस्तु वेत्यादिना।। किं वृत्तिप्रतिबिंबितं चैतन्यमित्यर्थः। उपदेशसहस्रीति मायिग्रंथविशेषस्य संज्ञा। भारतीतीर्थः कश्चिन्मायिभिक्षुः। उपदेशसहस्र्यनुसारिणी या भारतीतीर्थादिरीतिस्तयेत्यर्थः। उपदेशसहस्रीवाक्यं पठति ।।घटैकाकारेति।। घटैकाकारतया परिणता या धीर्वृत्तिस्तत्स्था चिदेव तत्प्रतिबिंबितचैतन्यमेव घटमवभासयेदित्यर्थः। घटस्य ज्ञातता व्यवसायविषयता ब्रह्मचैतन्येन साक्षिरूपानुव्यवसायेन ।।परागर्थेति।। परांचो येऽर्थास्तद्रूपाणि यानि प्रमेयानि तेषु फलभूता या संवित् घटादिभासकचैतन्यं स एवाऽधिकारिभिर्वेदांतोक्तिरूपप्रमाणतो मेयोऽर्थ इति श्लोकार्थः ।।अभिव्यक्तमिति।।

(प्रकाश:)

वृत्तिप्रतिबिंबितचैतन्याभेदेनाभिव्यक्तं घटाधिष्ठानचैतन्यमित्यर्थः ॥ आध्यासिकेति । वृत्तिप्रतिबिंबितचैतन्यरूपज्ञानस्य विशिष्टस्य त्वन्मते मिथ्यात्वेन तत्र घटादीनामध्यासाभावेन ज्ञाने आरोपितत्वरूपस्याध्यासिकसंबंधस्य प्रतिकर्मव्यवस्थाऽसिद्धावतंत्रत्वापातादित्यर्थः। एवमेवोत्तरत्राप्यर्थो द्रष्टव्यः ॥ आवश्यकेनेति ॥ अधिष्ठानचैतन्यस्य विषयप्रकाशकत्वपक्षेऽपि विषयाधिष्ठानचैतन्यावरकाज्ञाननिवृत्त्यर्थं वृत्तिप्रतिबिंबितत्वस्याऽऽवश्यकत्वादित्यर्थः।

सावयवं तैजसमंतःकरणं विषयं व्याप्य तदाकारं भवतीत्युक्तप्रक्रियां दूषयति ॥ किंचेति ॥ तदाकारत्वं विषयाकारत्वम् ॥ तदिति ॥ विषयत्वनिरासादित्यर्थः। तस्मिन् विषये। पूर्वं चैतन्यं विषयासंबद्धमेवावतिष्ठते वृत्त्या तूपरज्यत इति वृत्तेश्चिदुपरागार्थत्वांगीकारादित्यर्थः ॥ तदज्ञानेति ॥ विषयावरकाज्ञानेत्यर्थः ॥ तदाकारत्वप्रयोज्यत्वेनेति ॥ अयमर्थः। घटवृत्तेर्घट एव चैतन्योपरागार्पकत्वं कुतः। पटेऽपि तदर्पकत्वं किं न स्यात्। तथा घटाज्ञानाभिभावकत्वमेवेति कुतः। पटाज्ञानाभिभावकत्वमपि किं न स्यादिति शंकायां वृत्तेस्तदाकारत्वेन घट एव चैतन्योपरागार्पकत्वं तदज्ञानाभिभावकत्वं चेत्येवं तयोश्चैतन्योपरागार्पकत्वतद-ज्ञानाभिभावकत्वयोस्तदाकारत्वप्रयोज्यत्वेन तयोस्तत्त्वस्य तदाकारत्वरूपत्वस्यायोगादित्यर्थः ॥ नापीति ॥ वृत्तेस्तदाकारत्वमिति वर्तते। आकारत्वं आकारवत्त्वं ॥ साकारेति ॥ ज्ञाने विषयाकारांतरांगीकार इत्यर्थः। तथा च बौद्धसाम्यापत्तिरिति भावः। अर्थनिष्ठाकारवत्त्वमेव वृत्तेस्तदाकारत्वं चेद्दूषणांतरमाह ॥ संस्थानेति ॥ आकारेत्यर्थः। आदिपदेन सादृश्यम्। संस्थानहीना गुणकर्मजात्यभावादयस्तद्विषयिण्या वृत्तेरित्यर्थः ॥ समूहेति ॥ समूहालंबनरूपाया एकस्या एव वृत्तेरित्यर्थः ॥ विरुद्धेति ॥ घटपटादेः पृथुबुध्नोदराकारादिनानाकारतया तद्विषयिण्यास्समूहालंबनवृत्तेः विरुद्धोभयाकारतापातः। तथा घटस्य स्वाकारत्वात् रूपाभावस्य निराकारत्वात् तद्विषयिण्याः समूहालंबनवृत्तेः साकारत्वनिराकारत्वोभयापात इति द्रष्टव्यम् ॥ योगिनिष्ठेति ॥ योगीश्वरनिष्ठांतःकरणवृत्तेरित्यर्थः। निराकारेति हेतुगर्भम्। तथा च चरमसाक्षात्कारस्य ब्रह्मनिष्ठाकारत्वेन यत्तदाकारत्वं तन्न स्यादित्यर्थः ॥ पक्षत्रयमिति ॥ अविद्योपाधिकं सर्वगतं जीवचैतन्यं अविद्यानावृतं विषयप्रकाशकं वृत्तिस्तु जीवचैतन्यस्य विषयोपरागार्थेत्येकः पक्षः। उक्तरूपं जीवचैतन्यं अविद्यावृतं विषयप्रकाशकं वृत्ति स्त्वविद्याभिभवार्थेति द्वितीयः पक्षः। अंतःकरणोपाधिकमसर्वगतमेव जीवचैतन्यम् ब्रह्मचैतन्यमेव विषयप्रकाशकम् वृत्तिस्तु विषयप्रकाशकब्रह्मचैतन्येन प्रमातृजीवचैतन्यस्याभेदाभिव्यक्त्यर्थेति तृतीयः पक्ष इति पक्षत्रयमयुक्तम्। तत्र हेतुः तस्मादिति। उक्तरीत्या चैतन्यस्य घटप्रकाशकत्वायोगादित्यर्थः।

सामान्यतश्चैतन्यस्य घटप्रकाशकत्वं नास्तीत्युक्तम् तद्विशेषतः खंडयति ॥ किंचेति ॥ विषयदृग्विषयप्रकाशकम् ॥ तत्रेति ॥ विषयदृक् जीवचैतन्यमिति पक्ष इत्यर्थः। विशिष्टे घटाधिष्ठानत्वेन घटविशिष्टे ॥ दृगिति ॥ त्वया दृशि विषयाध्यासो वाच्यः। विशिष्टे ब्रह्मणि चिन्मात्रे वा विषयाध्यासे विशिष्टस्य चिन्मात्रस्य च ब्रह्मणो विषयदृक्त्वेनाभिमतजीवचैतन्याद्भिन्नत्वेन दृगध्यस्तत्वं न प्राप्तमित्यर्थः। ननु विषयाध्यासो विषयदृशि जीवचैतन्य एवेत्याध्यासिकसंबंध इत्याशंक्य निषेधति ॥ नापीति ॥ कल्पितत्वादिति ॥ घटाधिष्ठानत्वेन घटविशिष्टतया कल्पितत्वेनाध्यस्तानधिकसत्ताकत्वान्नाध्यासाधिष्ठानत्वमित्यर्थः। अत एवेत्युक्तं विशदयति–सविशेषस्येति। विषयाध्यासाधिष्ठानतया विषयदृक्त्वेनाऽभिमतस्य सविशेषस्य ब्रह्मण एव कल्पिततयाऽध्यस्तानधिकसत्ताकत्वादिति

(प्रकाशः)

भावः ॥ जगदांध्येति ॥ घटाधिष्ठानं शुद्धचैतन्यमेव विषयप्रकाशकमिति वक्तव्यम्। तस्य च शुद्धस्यासंसारमज्ञानावृतत्वेन कदापि प्रकाशाभावेन घटादिपदार्थज्ञानमात्राभावापत्त्या सर्वप्रवृत्तिविलयापत्त्या जगदांध्यापातादित्यर्थः। जगदांध्यविरहमाशंकते–अनवच्छिन्नस्येति। अनवच्छिन्नस्य शुद्धस्यासंसारमज्ञानावृतत्वेऽपि मूलाविद्यानिवृत्त्यभावे सर्वत आवरणाभिभवाभावेऽपि घटाद्यवच्छेदेनावरणाभिभवसंभवादांध्यविरह उपपद्यत इत्यर्थः ॥ अवच्छिन्नस्येति ॥ वृत्त्याभिभूतावरणस्यैव घटाद्यवच्छिन्नस्य घटादिदृक्त्वमित्यायातम्। तस्य च न तदधिष्ठानत्वम्। तत्र हेतुः कल्पितत्वेनेति। घटाद्यवच्छिन्नस्य कल्पितत्वेनाध्यस्तानधिकसत्ताकत्वादित्यर्थः ॥ आत्माश्रयेति ॥ घटावच्छिन्नस्य घटाधिष्ठानत्वे घटस्य घटाधिष्ठानकोटौ प्रवेशेनात्माश्रयापात इत्यर्थः ॥ आध्यासिकेति ॥ दृश्यस्य न सद्रूपायां दृश्यध्यस्तत्वसिद्धिरित्यर्थः।

शुद्धमेव ब्रह्म घटावच्छिन्नं वृत्त्या प्रकाश्यत इति पक्षे दूषणांतरमाह ॥ विशिष्टेति ॥ घटविशिष्टचैतन्यज्ञाने। ननु घटस्यापि स्फुरणान्न विशेष्यं प्रकाशत इति मंदाशंकापरिहारायोक्तं अधिकेति। दंडीति ज्ञाने देवदत्तस्यापि प्रकाशवदिति भावः ॥ तद्वैयर्थ्यांचेति ॥ चरमवृत्तिवैयर्थ्यांचेत्यर्थः। ननु न चरमवृत्तिवैयर्थ्यं घटावच्छिन्नचैतन्यज्ञाने पकाशितो यो विशेषणभूतो भावरूपोऽभावरूपो वा प्रकारो विशेषणरूप उपलक्षणरूपो वा प्रकारस्तत्प्रकाशार्थत्वेन सार्थक्यादित्यत आह ॥ न हीति ॥ यदि भावाभावादिरूपो धर्मः प्रकारत्वेन प्रतीयते तर्हि वेदांतानां निर्विशेषार्थनिष्ठत्वरूपाखंडार्थत्वहानिः स्यादित्यभिप्रेत्योक्तं अखंडार्थपरेति ॥ त्वन्मत इति ॥ सुषुप्तावंतःकरणलयांगीकारादिति भावः ॥ कृतहान्यादीति ॥ यदंतःकरणावच्छिन्नेन यत्कृतं कर्म तदंतःकरणस्य सुषुप्त्युत्तरकालेऽसत्त्वेन तत्कर्मजन्यभोगस्य हानिः। परदिने च यदंतःकरणावच्छिन्नस्य भोगो भवति तदंतःकरणावच्छिन्नेन तद्भोगहेतुभूतं कर्म न कृतमिति अकृताभ्यागम आदिपदार्थः।

वृत्तिप्रतिबिंबितचैतन्यमिति प्रक्रियां निराकरोति ॥ किंचेति ॥ वृत्तिश्चिदुपरागार्थेति पक्ष इत्यर्थः ॥ वृत्तिमात्रेति ॥ स्वत एव केवलवृत्त्युपरक्तत्वम्। चैतन्यस्येति शेषः ॥ प्रतिबिंबितत्वमिति ॥ अंतःकरण इति शेषः। अंतःकरणस्य तावत्प्रतिबिंबनोपाधित्वं न संभवति। कुत इति चेत्। उद्भूतरूपवत्त्वस्यैव प्रतिबिंबनोपाधित्वप्रयोजकत्वादंतःकरणस्याऽनुद्भूतरूपवत्त्वात्। तदिदमुक्तम् ॥ अनुद्भूतरूपांतःकरण इति ॥ ननूद्भूतरूपवत्त्वं न प्रतिबिंबनोपाधित्वप्रयोजकम्। यदा गुहास्थिताकाशे प्रतिध्वनिर्भवति तत्र शब्दः प्रतिफलतीति यावत्। तत्राऽकाशस्य कथं शब्दप्रतिफलनोपाधित्वम्? उद्भूतरूपवत्त्वाभावादत उक्तम् ॥ शब्दान्येति ॥ तथा चैतन्ये प्रतिबिंबनं च न संभवति, प्रतिबिंबने चाक्षुषत्वस्य प्रयोजकत्वात्। ब्रह्मचैतन्यस्यानाक्षुषत्वादित्याशयेनोक्तम् ॥ अचाक्षुष इति ॥ ननु जलाद्युपाधौ अचाक्षुषस्याप्याकाशस्य प्रतिफलनं दृष्टमिति चेन्न। तत्र सौरप्रभामंडलस्य चाक्षुषस्यैव प्रतिफलनादिति संप्रदायविदः। पुनर्वृत्त्युपरक्तत्वं विविच्य दूषयति ॥ नापीति ॥ मूषायां स्थितं यत्सुवर्णं तच्चोत्तराग्निसंयोगेन द्रुतं सत् मूषा यथाऽस्ति वर्तुलतया तथैवांतस्तदाकारेण परिणमते। तथा मूषास्थानीयांतःकरणवृत्तौ सुवर्णस्थानीयं ब्रह्म तदात्मना विकृतं भवति तदिदमेव चितो वृत्त्युपरक्तत्वमित्यर्थः।

॥ गोत्वादिवदिति ॥ यथा गोत्वादेर्गवाद्युपरक्तत्वं नाम सास्नादिमद्व्यक्त्याश्रितत्वरूपं, केसरादिमद्व्यक्तिं विहाय सास्नादिमद्व्यक्तेरेवाभिव्यक्तत्वरूपं वा दृष्टम्, एवं चितो वृत्त्याश्रितत्वं वा तत्र वृत्तावभिव्यक्तत्वं वा

(प्रकाशः)
तदुपरक्तत्वमित्यर्थः। आद्ये दोषमाह ॥चित आकाशवदिति॥ यथाऽऽकाशस्य सर्वगतत्वादनाश्रितत्वं तद्वदनाश्रितत्वादित्यर्थः। द्वितीये दोषमाह ॥उपरागेति॥ विषयप्रकाशकजीवचितोऽनावृतत्वपक्षे वृत्तेरुपरागार्थत्वांगीकारादित्यर्थः ॥सर्वत्रेति॥ तथा च चितः सर्वत्राभिव्यक्तत्वरूपोपरक्तत्वस्य सत्त्वेन चितः स्वतो वृत्तिमात्राभिव्यक्तत्वमेव वृत्त्युपरक्तत्वमिति प्रतिज्ञाहानिः स्यादित्यर्थः ॥घटेति॥ तद्यथा घटाकाशो घटांतःस्थ एवं चितो वृत्त्यंतस्स्थत्वमेव वृत्त्युपरक्तत्वमित्यर्थः ॥आकाशवदिति॥ आकाशस्य यथा सर्वगतत्वाद्घटांतरेव स्थितिर्न तु गृहांतरिति विभागो न संभवति एवं चितोऽपि सर्वगतत्वेन चित् स्वतो वृत्तिमात्रोपरक्ता स्वतो वृत्तिमात्रांतस्थेति यावत्, न तु घटादिविषयांतस्स्थेत्यस्यायोगादित्यर्थः ॥प्रभाया इति॥ यथा प्रभा रूपमात्रप्रकाशकत्वेन रूपोपरक्तेत्युच्यते तथा चिदपि वृत्तिमात्रप्रकाशकत्वेन स्वतो वृत्त्युपरक्तेत्युच्यत इत्यर्थः। प्रभाया रूपमात्रप्रकाशकत्वं नाम रूपप्रदेशस्थतमोनिवर्तकत्वं वा रूपाऽज्ञाननिवर्तकत्वं वा रूपमात्रग्राहिप्रमाणसहकारित्वं वा? नाद्य इत्याह ॥प्रभाया इति॥ तमोविरोधित्वस्य रूपप्रदेशस्थतमोनिवर्तकत्वस्य। तदेवोपपादयति ॥न हीति॥ प्रभाया रूपप्रदेशस्थतमोनिवर्तकत्वेन रूपप्रकाशकत्वं यद्युच्यते तर्हि गंधादिप्रदेशस्थतमोनिवर्तकत्वस्यापि सत्त्वेन तत्प्रकाशकत्वमपि स्यादिति भावः। न द्वितीय इत्याह ॥प्रभायामिति॥ ॥रूपमिति॥ यतो ज्ञानमेवाज्ञाननाशकं प्रभा च न ज्ञानमिति भावः। तथा च न प्रभादृष्टांतेन चितो वृत्तिप्रकाशकत्वरूपं स्वतो वृत्त्युपरक्तत्वं, चितस्तमोनिवर्तकत्वाभावात्, वृत्तावज्ञानाभावेन तन्निवर्तकत्वस्याप्यभावादिति दार्ष्टान्तिकेऽपि न संभवतीति ध्येयम्। तृतीयो यद्यपि दृष्टांतभूतप्रभायामस्ति तथापि दार्ष्टांतिक्यां चिति नास्तीत्याह ॥प्रभायामिति॥ रूपेति॥ तथा च रूपप्रकाशकत्वमस्तीत्यर्थः ॥गंधादीति॥ तथा च तत्प्रकाशकत्वं नास्तीत्यर्थः ॥ग्राहकांतरेति॥ यथा प्रभाया रूपग्राहकमानसहकारित्वमस्ति एवं न प्रकृते संभवति। चितः स्वस्या एव वृत्तिग्राहकत्वेन ग्राहकांतराभावाद्वृत्तिग्राहकमानसहकारित्वरूपं प्रकाशकत्वं दार्ष्टान्तिके न संभवतीत्यर्थः। ननु रूपादेरिव गुरुत्वादेरपि प्रकाशो न संभवति चित्संबंधाभावादिति चेत्तत्राह ॥आश्रयेति॥ रूपादीनामिव गुरुत्वादीनामपि घटाद्याश्रयद्वारैव चित्संबंधित्वात् तथा चैतन्यस्यानावृतस्य घटतद्रूपसंबंधः यथा साक्षादेवास्ति एवं गुरुत्वादेरपीत्यर्थः ॥चित्संबंधित्वस्यैवेति॥ अनावृतचित्संबंधस्यैवेत्यर्थः। विषयप्रकाशिका चित् अनावृतेति पक्ष एव वृत्तिरुपरागार्थेत्यभ्युपगमादिति भावः ॥सर्वेति॥ अनावृतचित्संबंधस्य सर्वेषामपि पदार्थानां सत्त्वात् सर्वेषामपि पदार्थानां सर्वदा सर्वस्य जनस्य प्रकाशो दुर्वार इति भावः।

नन्वसंगो ह्ययं पुरुष इति श्रुतेर्जीवचितः स्वतो विषयासंबंधित्वात्तदर्थं वृत्तिरपेक्षिता। अन्यथा श्रुतिविरोधादित्यत आह ॥असंगो हीति॥ ॥तत्तत्कृतेति॥ तत्तत्पदार्थसंबंधकृतेत्यर्थः। नन्वियं श्रुतिर्जीवचैतन्यपरैव ईश्वरपरा कुत इत्यत आह ॥स यत्तत्रेति॥ 'शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंसः। स यत्तत्र' इतिपूर्ववाक्ये ईश्वरस्यैव प्रकृतत्वादिति भावः। नन्वियं श्रुतिर्लेपाभावपरा कुतः? ईश्वरस्य सर्वपदार्थसंबंधित्वपरा किं न स्यादित्यत आह ॥यथेति॥ इत्यादीत्यादिपदेन 'तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय'' इति द्वितीयार्धः प्रकृतोपयुक्तो ग्राह्यः। तथा चात्र सर्वसंबंधस्यैवोक्तत्वेन तद्वाक्यविरोधात् श्रुतिर्लेपाभावपरतयैव व्याख्येयेति भावः। वृत्तिश्चितो विषयोपरागार्थेति मते वृत्तेर्वैयर्थ्यमेव स्यात्। तथा हि। चितो विषयोपरागस्तावत् संयोगादिरूपो नास्त्येव। तस्य दृश्यत्वाप्रयोजकत्वात्, किंतु तत्राध्यस्तत्वरूप एवेति वाच्यम्। स च वृत्त्यपेक्षया

(प्रकाशः)

पूर्वमप्यस्तीति किं चितो विषयोपरागार्थया वृत्त्येत्याह ॥अपि चेति॥ जीवचैतन्यमसंगमिति वृत्त्यैव विषयैः संबध्यत इत्युच्यते। तर्हि ब्रह्मचैतन्यस्य सुतरामसंगत्वेन स्वतो विषयैः सह संबंधाभावात्प्रमाणजन्यवृत्त्यैव विषयैः संबध्यते प्रमाणैरेव सर्वं जानाति न स्वत इत्यापत्त्या स्वतः सार्वज्ञ्यं न स्यादित्याह ॥किं चेति॥ ॥मानेति॥ प्रमाणोपाधिकविषयोपरागवत्त्वादित्यर्थः। वृत्तिद्वारा विषयैः संबंध्य तत्प्रकाशकत्वादिति यावत् ॥स्वत इति॥ प्रमाणं विनेत्यर्थः।

नन्वसंगस्यापि ब्रह्मणो विषयैस्साक्षात्संबंधो घटते। सर्वस्यापि विषयस्य ब्रह्मोपादानकत्वेन ब्रह्माभिन्नत्वात् मानोपाधिं विनैव स्वस्वरूपत्वात्स्वाभिन्नं जगद्भासयतीति स्वतः सर्वज्ञत्वमुपपद्यत इत्याशंकते ॥नन्विति॥ अत्रोपादानत्वं नाम परिणामित्वं तच्च विशिष्टनिष्ठं, ततश्च तत्सर्वज्ञमित्युच्यते? अथवोपादानत्वं नामाधिष्ठानत्वं, तच्च शुद्धनिष्ठं ततश्च तत्सर्वज्ञमित्युच्यते? नाद्य इत्याह ॥उपादानत्वं हीति॥ ॥आध्यासिकेति॥ विशिष्टनिष्ठेन परिणामित्वरूपेण सर्वोपादानत्वेन विशिष्टब्रह्मणः सर्वज्ञत्वे तस्य कल्पितत्वेनाधिष्ठानत्वायोगेन तत्र जगदध्यासासंभवात् आध्यासिकसंबंधेन प्रकाशत इति भवदभिमतनियमभंगप्रसंगः। आध्यासिकसंबंधभिन्नेन परिणामित्वरूपोपादानत्वाख्यसंबंधेनैव विशिष्टस्य जगत्प्रकाशांगीकारादित्यर्थः। परिणामिनि ब्रह्मणि जगदध्यासो न संभवतीत्याशयेनैव विशिष्टनिष्ठेत्युक्तम् ॥अनादीति॥ उपादानत्वेन जगत्प्रकाशेऽविद्यां प्रत्युपादानत्वाभावात्तत्प्रकाशो ब्रह्मणो न स्यादित्यर्थः। द्वितीयमाशंक्य निषेधति ॥नापीति॥ शुद्धनिष्ठेन जगदधिष्ठानत्वरूपेण जगदुपादानत्वेन ब्रह्मणो जगत्प्रकाशे शुद्धस्यैव सार्वज्ञ्यापत्तिः। अस्तु शुद्धस्यैव सार्वज्ञ्यमित्यत आह ॥सार्वज्ञ्यादेरिति॥ विशिष्टनिष्ठत्वात्। विशिष्टनिष्ठत्वेन त्वयांगीकारादित्यर्थः। शुद्धे सार्वज्ञ्यांगीकारेऽपसिद्धांत इति भावः।

वृत्तिरावरणाभिभवार्थेति पक्षे दोषमाह ॥आवरणेति॥ आवरणं हि आव्रियमाणेन व्याप्तम्। तच्च किं चिन्मात्रं विशिष्टं वा? नाद्य इत्याह ॥विवर्तेति॥ प्रकाशमाने चावरणं न संभवति। नितरां चावरणविवर्ताधिष्ठानस्येत्यर्थः। न द्वितीय इत्याह ॥अन्यस्य चेति॥ तथा चाज्ञानसिद्धौ तत्कल्पितविशिष्टसिद्धिस्तत्सिद्धौ च तदावरकाज्ञानसिद्धिरित्यन्योन्याश्रयादित्यर्थः। आवरणासंभवमभिधायेदानीम् आवरणाभिभवासंभवमाह ॥किं चेति॥ नयनपटलं नयनगतकाचादि। पुंगतत्वे प्रमातरि पुरुषे विद्यमानत्वे ॥विषयगतत्व इति॥ विषयगतत्वपक्षे त्वित्यर्थः। त्वन्मतेऽज्ञानस्य विषयावरकतया विषयगतत्वांगीकारादिति भावः। ॥दीपेनेति॥ दीपवद्गृहस्थो घटो यथा निवृत्तावरणत्वात्सर्वैरपि ज्ञायते तथा चैत्रगतया वृत्त्या निवृत्ताज्ञानावरणो घटादिः सर्वान् प्रति प्रकाशेतेत्यर्थः। अज्ञानैकत्वानेकत्वविकल्पदूषणाभ्याम् अज्ञानस्वरूपं खंडयति ॥अपि चेति॥ किं विवरणरीत्याऽज्ञानमेकमिति संबंधः। विवरणवाक्यं पठति ॥आत्माश्रयमित्यादिना॥ अज्ञानमंतरेण एकमेवाऽज्ञानमंतरेणेत्यर्थः। किं वा इष्टसिद्धिरीत्या प्रतिविषयमनेकानीत्यन्वयः। अज्ञानानीति शेषः। इष्टसिद्धिर्मायावादग्रंथविशेषः। तद्वाक्यं पठति ॥अनंतान्येवेत्यादिना॥ अज्ञानमेकमिति पक्षेऽपि शुक्तिज्ञानेनाज्ञानं सकार्यं निवृत्तं न वा? नाद्य इत्याह ॥सद्य एवेति॥ अज्ञानस्यैकत्वेन मूलाज्ञानस्यैव रजतभ्रमोपादानत्वाच्छुक्तिज्ञानेन च तन्निवृत्तेरित्यर्थः। द्वितीये आह ॥अनिवृत्ताविति॥ ॥सविलासेति॥

(प्रकाशः)
कार्यसहितेत्यर्थः। यथोक्तं 'अज्ञानस्य वर्तमानेन प्रविलीनेन वा स्वकार्येण सह ज्ञानेन निवृत्तिर्बाधः' इति। तथा चाज्ञाननिवृत्तेरभावाद्रजतादिबाधो न स्यादिति भावः। अज्ञाननिवृत्त्यनिवृत्त्योरुभयोरपि सद्यो मोक्षाभावबाधौ युक्ताविव्याशंकते ॥नन्विति॥ स्वकारण इति॥ तथा च तावन्मात्रेण बाधोपपत्तिरिति भावः। यथा मुद्गरप्रहारेण घटनाशेऽपि जलाहरणाद्यर्थक्रियाकारित्वसामर्थ्यमात्रं गच्छति कारणात्मनाऽनुवर्तते एव। एवमज्ञानस्यावरकत्वशक्तिमात्रमेव गच्छति न स्वरूपेण निवर्तत इति द्रष्टव्यम् ॥न त्विति॥ कारणात्मना सत्त्वात्स्वरूपेण न निवर्तत इत्यर्थः। ब्रह्मज्ञानेन चरमसाक्षात्काररूपेण ॥रूप्येति॥ शुक्तिज्ञानमज्ञानमनिवर्त्य तत्कार्यभूतं रूप्यमात्रं निवर्तयतीत्येतदयुक्तम्। यतो ज्ञानमज्ञानस्य तद्द्वारा तत्कार्यस्य च निवर्तकमिति नियमेन ज्ञानस्याज्ञाननिवृत्तिद्वारा तत्कार्यविरोधिताऽतोऽज्ञानमनिवर्त्य तत्कार्यनिवर्तकत्वायोगेन बाधायोगस्तदवस्थ इत्यर्थः।

किं च शुक्तिज्ञानेनाज्ञाननिवृत्तिमनंगीकृत्य तद्गतावरकत्वशक्तिमात्रप्रतिबंधांगीकारे बाधेऽपि शुक्तिप्रकाशो न स्यात्। अभिव्यक्तचैतन्यसंबंधाभावादित्याह ॥शुक्तीति॥ अज्ञानानाशेऽपि तद्गतावरणशक्तेरपगतत्वाचितोऽभि-व्यक्तिसंभवेनाभिव्यक्तचित्संबंधो युक्त इत्येतत् अनुपदमेव निरसिष्यत इति भावः ॥खद्योतेति॥ यथा खद्योतप्रकाशेन महांधकारस्यैकदेशेऽत्यल्पे नष्टे सति तद्देशस्थं वस्तु दृश्यते तथा वृत्त्याऽज्ञानस्यैकदेशनाशे सति विषयप्रकाश इत्यर्थः ॥भीरुभटवदिति॥ प्रतिभटे प्रबले दृष्टे सति भीरुर्भयशीलो भटो यथा तं देशमपहायापसरति एवं वृत्तौ सत्यां तद्देशमपहायाऽज्ञानमपसरतीत्यर्थः ॥कटवदिति॥ यथा कटे वेष्टिते भूतलादिदेशोऽनावृतो भवति एवमज्ञाने वेष्टिते सति चैतन्यमनावृतं भवतीत्यर्थः ॥अनादीति॥ अनादित्वेन चैतन्याज्ञानयोर्निरवयवत्वादज्ञानैकदेशनाशेन चैतन्यस्यैकदेशेन प्रकाशो न युक्त इत्यर्थः ॥शक्तेरिवेति॥ वह्निस्वरूपानाशेऽपीत्यर्थः ॥अविद्येति॥ अविद्यास्वरूपानाशेऽपीत्यर्थः ॥तत्तदिति॥ भग्नावरणचित्संबंधस्य प्राप्तत्वादिति भावः। ननु शुक्तिज्ञानेनाविद्याशक्त्यभिभवो न युक्तः शुक्तिज्ञानस्याप्यविद्याकार्यत्वेनोपादेयतया उपादेयेनोपादानाऽभिभवस्य क्वाप्यदर्शनादित्यत आह ॥वृत्त्येति॥ ॥वृश्चिकेति॥ यथा गोमयाद्वृश्चिको जायते तथा मृदो वृक्षो जायते। तत्र गोमयाद्युपादानको वृश्चिको वृक्षो वा स्वोपादानगतगोमयत्वमृत्त्वाभिभावको दृष्टस्तद्वत्प्रकृतेऽपीत्यर्थः।

अविद्यागतावरकत्वशक्तिः किं शुद्धात्मविषया, शुद्धात्मज्ञानं प्रतिबध्नातीति यावत्, किं वा जडविषया उत जडविशिष्टात्मविषया वेति विकल्प्याद्ये दोषमाह ॥शुद्धात्मेति॥ अविद्यानिष्ठशुद्धात्मावरकत्वशक्तेः शुद्धात्मविषयकवृत्त्याऽभिभवो वक्तव्यः। शुक्तिवृत्तेश्च शुक्त्यवच्छिन्नचैतन्यविषयकतया विशिष्टविषयकत्वेन शुद्धात्माविषयकत्वात्तादृश्या शुक्तिवृत्त्याऽविद्यागतशुद्धात्मावरकत्वशक्त्यभिभवो न संभवतीत्यर्थः। शुक्तिवृत्तिरपि शुद्धात्मविषयिण्येवास्त्वित्यत उक्तम् ॥चक्षुरादिजन्येति॥ ननु चक्षुरादिजन्याप्यात्मविषयास्त्वित्यत उक्तं–रूपादिहीनेति। ननु रूपादिहीनस्य रूपादेरिवात्मनोऽपि चाक्षुषत्वमस्त्वित्यत उक्तं–शब्देति। ननु शुक्तिवृत्तेः शुक्त्यवच्छिन्नचिद्विषयत्वेऽपि विशेष्यभूत चिद्विषयकत्वमस्त्येवेति तया तदज्ञानशक्त्यभिभवोऽस्तु। नीरूपायाश्रितः शुक्तिसंबंधेन चाक्षुषत्वमुपपद्यते राहोरिव चंद्रसंबंधेनेत्यत आह ॥शुक्तिवृत्तेरिति॥ तदवच्छिन्नेति॥ शुक्त्यवच्छिन्नेत्यर्थः। तत्प्रतिबंधकत्वे शुक्त्यवच्छिन्नचैतन्यावरकाज्ञाननिष्ठावरकत्वशक्तिप्रतिबंधकत्वे। तयैव

(प्रकाशः)
विशेष्यभूतचिद्विषयिण्या शुक्तिवृत्त्यैव ॥आपातादिति॥ तथा च शुक्तिज्ञानेन सद्यो मोक्षः स्यादित्यर्थः। तृतीयपक्षसांकर्यापत्त्याऽयं पाठः क्वचित्क इति संप्रदायः। द्वितीयं निराकरोति। अविद्येति ॥अविद्याया इवेति॥ यथाऽविद्या जडाश्रया न भवति जडस्याविद्याकल्पितत्वेनाविद्यासिद्धौ तत्कल्पितजडसिद्धिः। तत्सिद्धौ च तदाश्रिताज्ञानसिद्धिरित्यन्योन्याश्रयात्। एवमविद्यागतावरकत्वशक्तिरपि न जडविषयिणी जडं प्रत्यविद्याया आवरकत्वं नास्तीति यावत्। कुतः? अप्रसक्तप्रकाशत्वात् प्राप्तप्रकाशप्रतिबंधो ह्यावरणम्। तत्र च प्रकाशप्रसक्तेरेवाभावेनावरणकृत्याभावादित्यर्थः ॥अस्वीकाराच्चेति॥ जडं प्रत्यावरकत्वानंगीकाराच्चेत्यर्थः। तृतीयं निराकरोति ॥जडेति॥ तत्स्वीकारे अविद्याया आवरकत्वस्वीकारे ॥विशेषणेति॥ यथा विशिष्टविषयकयोर्विधिनिषेधयोर्विशेष्ये बाधे विशेषणविषयकत्वं तथा विशेषणे बाधे विशेष्यविषयकत्वावश्यंभावात्। जडविशिष्टात्मानं प्रत्यावरकत्वस्वीकारे विशेषणीभूतजडानावरिका अथ च विशिष्टावरिका या शक्तिस्सा विशेष्यावरिकैव जाता। शुक्तिज्ञानेन च तदभिभवे विशेष्यावरकत्वशक्तिरेवाभिभूतेति शुक्तिवृत्त्या शुद्धात्मप्रकाशापातेन सद्यो मोक्षः स्यादित्यर्थः। उपादेयेन उपादानगतशक्तेरभिभवो वृश्चिकादौ दृष्ट इत्युक्तम् तत्प्रसंगात्खंडयति ॥प्रच्युतेति॥ अवस्थांतरप्राप्ता इत्यर्थः ॥पार्थिवेति॥ स्यादयं दृष्टांतः। यदि गोमयत्वाद्यवस्थापन्नगोमयादीनां तदुपादानत्वं स्यात्। न चैवं किंतु आपरमाण्वंतं प्रच्युतगोमयत्वाद्यवस्थानां पार्थिवावयवानां परमाणूनामेव। तेषां च वृश्चिकोपादानानां पार्थिवावयवानां तदुपादेयेन वृश्चिकादिना न नाश इति दृष्टांतोऽसंप्रतिपन्न इति भावः ॥शिष्टमिति॥ परमतेऽविद्याया एवाऽप्रामाणिकत्वमित्यर्थः।

पूर्वमेकमेवाज्ञानमिति मते शुक्तिज्ञानेनाज्ञाननिवृत्तौ सद्य एव मोक्षः स्यादित्यापादितेऽनंतरमज्ञानैकदेशस्य नाशेऽपसरणे च परेण कल्पिते तद्दूषितं पुनस्तदीयैः प्रकारांतरेण कल्पितमस्ति। तदाशंक्य निराकरोति ॥न चेति॥ यथा ग्रीष्मवर्षादिषु नदीनामवयवोपचयाः कार्यविशेषकरा दृष्टास्तथेत्यर्थः। साध्यासं तत्तद्वृत्त्या सहेत्यर्थः। एवं च मूलाज्ञानस्यानिवृत्तत्वान्न शुक्तिज्ञानेन सद्यो मोक्षः स्यादिति भावः। तेषां अवस्थाविशेषाणाम् ॥न चेदिति॥ अवस्थाविशेषाणामज्ञानविशेषत्वाभावे इत्यर्थः ॥साक्षादिति॥ यतो ज्ञानमज्ञानस्यैव निवर्तकमित्यंगीकारादित्यर्थः ॥भ्रमेति॥ अज्ञानस्यैव भ्रमोपादानत्वांगीकारादित्यर्थः ॥तेषामिवेति॥ यथाऽज्ञानावस्थाविशेषाः स्वोपादानभूतमूलाज्ञानानिवृत्तावपि निवर्तंत इत्युच्यते एवमेवाज्ञानावस्थाविशेषोपादानकं रूप्याद्यपि स्वोपादानभूतावस्थाविशेषानाशेऽपि नश्यतु। तथा च शुक्तिज्ञानेन साध्यासं निवर्तत इत्युक्तमसदिति भावः ॥शुक्त्यज्ञानमिति॥ अज्ञानभिन्नानां अवस्थाविशेषाणां रजतोपादानत्वेन तन्निवर्तकशुक्तिज्ञानेन रजतोपादानभूतावस्थाविशेषा निवृत्ता इत्यनुभवप्रसंगेन शुक्तिज्ञानेन शुक्त्यज्ञानं नष्टमित्यनुभवविरोधादित्यर्थः। तस्मादेकाज्ञानपक्षे मूलाज्ञानस्यैव रजतोपादानत्वे शुक्तिवृत्त्या मूलाज्ञानानाशेऽपि रजतस्य प्रविलयाद्रजतादर्शनं, शुक्त्यावरकाज्ञानानाशेऽपि तस्यैकदेशनाशाद्वाऽपसरणाद्वा, वेष्टनाद्वा, मण्यादिना वह्नेरिव शक्त्यभिभवाद्वा बाधकाले शुक्तेः प्रकाश इत्येतानि समाधानानि न संभवंति। अवस्थाविशेषाणामेवोपादानत्वमित्यपि न संभवतीत्येकाज्ञानपक्षो न संभवतीति भावः।

इष्टसिद्धिरीत्याऽनेकाज्ञानपक्षे दोषमाह ॥द्वितीयेऽपीति॥ एकया वृत्त्या शुक्तिवृत्त्या ॥सर्वेति॥ एतच्छुक्तिविषयकाणामनेकाज्ञानानाम् ॥एकेति॥ एतच्छुक्तिविषयकस्यैकाज्ञानस्य। कुत इत्यत आह ॥एकस्येति॥

(प्रकाशः)
अनेकयवनिकावृतवस्तुन्येकयवनिकापगमेऽपि यवनिकांतरसद्भावाज्ज्ञानाभावो यथा तथेत्यर्थः ॥अयं चेति॥ एकया शुक्तिवृत्त्या शुक्तिप्रकाशेन रजतभ्रमजनकानां अवस्थाविशेषाणां सर्वेषां निवृत्तिरुतैकस्यावस्थाविशेषस्य। नाद्यः। शुक्तेः कदाऽप्यप्रकाशो न स्यात्। अंत्ये कदापि प्रकाशो न स्यात्। एकस्यावस्थाविशेषस्य निवृत्तावप्यन्यस्य सत्त्वादित्येवं रूपेण योज्य इत्यर्थः ॥सादीति॥ शुक्त्यादेः सादित्वेन तदवच्छिन्नचैतन्यस्यापि सादितया शुक्त्याद्युत्पत्तेः पूर्वमज्ञानस्य निर्विषयत्वं स्यादित्यर्थः। अस्तु निर्विषयत्वं तस्येत्यत आह ॥निर्विषयस्य चेति॥ अस्यास्मिन्नज्ञानमित्याश्रयविषयोपेतस्यैवावरणस्य प्रतीतेरित्यर्थः। एकमेवानाद्यज्ञानमनादिचैतन्यविषयकमेवावरणं तदानीं चैतन्येतरशुक्त्यादिपदार्थविशेषानवच्छिन्नं सदेवावरणमभूत्। पदार्थोत्पत्त्यनंतरं त्वागंतुकतत्तत्पदार्थावच्छेदेन शुक्त्याद्यवच्छिन्नचैतन्यावरणमित्युच्यतेऽतो नोक्तदोष इत्याशंक्य निराकरोति ॥नचेति॥ कुतो न चेत्यतोऽनेकाज्ञानमतहान्यापत्तेरिति दूषणे सत्येव दूषणांतरमाह ॥शुक्तीति॥ अनवच्छिन्नशुद्धचैतन्यावरणाज्ञानस्यैव शुक्त्यवच्छिन्नचैतन्यावरणत्वाच्छुक्तिसाक्षात्कारेण शुक्त्यवच्छिन्नचैतन्यावरणाज्ञाननिवृत्तौ शुद्धचैतन्यावरणाज्ञान-निवृत्तेरपि जातत्वापातेन सद्यो मोक्षापात इत्यर्थः ॥जातिरिति॥ निराश्रयैवावतिष्ठत इत्यर्थः। एतेनेत्युक्तं वि(वृणोति)शदयति ॥प्रतिविषयमिति॥ यथानेकविषयेष्वेकैव जातिस्तथाऽज्ञानमप्येकमेव स्यान्न तु प्रतिविषयं भिन्नम्। तत्र च शुक्तिसाक्षात्कारान्मोक्षापत्तिरित्युक्तदोष एवेत्यर्थः।

पूर्वमात्माश्रयमात्मविषयं चाज्ञानमनेकमिति पक्षे एकया वृत्त्या सर्वेषामज्ञानानां निवृत्तिरुतैकतदज्ञानस्येति विकल्प्य दूषणमभिहितम्। तदुपरि वेदांतकौमुद्युक्तं दूषणमाशंक्य निराकरोति ॥यत्तूक्तमिति॥ ज्ञानेनेति॥ चैत्रनिष्ठघटज्ञानेन चैत्रनिष्ठघटज्ञानप्रागभावनिवृत्तिस्तावद्भवति। तत्राप्ययं विकल्पः समः। घटज्ञानप्रागभावानामनंतानां विद्यमानत्वाद्घटज्ञानेन सर्वेषामपि घटज्ञानप्रागभावानां नाश उतैकस्य। नाद्यः। घटज्ञानेनैकेनैव सर्वेषामपि घटज्ञानप्रागभावानां नष्टत्वेनोत्तरत्र घटस्य कदाप्यप्रकाशो न स्यात्। न द्वितीयः। एकेन घटज्ञानेनैकस्य घटज्ञानप्रागभावस्य निवृत्तावपि घटज्ञानजन्यव्यवहारप्रतिबंधकानां अनेकेषामनष्टानां प्रागभावानां सत्त्वेन अनेकयवनिकावृतवस्तुन्येकस्या यवनिकाया अपगमेऽपि यवनिकांतरस्य सत्वेन यथा तदप्रकाशः एवं कालांतर इव ज्ञानकालेऽप्यप्रकाशः स्यादित्यर्थः ॥ततश्च सत्स्वपीति॥ यथा च सत्स्वप्यनंतेषु एतद्घटज्ञानप्रागभावेष्वेकं ज्ञानमेकमेव प्रागभावं नाशयति इतरप्रागभावानपसार्य प्रागभावांतरनिबंधन-मज्ञातत्वादिव्यवहारं प्रतिबध्नातीति वक्तव्यं तथाऽहमपि सत्स्वनंतेष्वज्ञानेषु ज्ञानमेकमेवाज्ञानं नाशयति इतराज्ञानान्यपसारयतीति वदिष्यामीत्यर्थः। तत्र दृष्टांतः ॥बह्विति॥ यथा बहुजनसंकीर्णदेशे, तत्समुदाय इति यावत्, विद्युन्निपाते सत्येकः पुमान्म्रियते। इतरेऽपसर्पंति। यथा वा वातपित्तश्लेष्मरूपत्रिदोषहरे कस्मिंश्चिदौषधे दत्ते सत्येको दोषो निवर्तते इतरावपसर्पत इति वैद्यप्रसिद्धिः तद्वदित्यर्थः। एकेन ज्ञानेनैक एव प्रागभावो नश्यतीति पक्षमाश्रित्य समाधत्ते ॥तन्नेति॥ ॥आवरणानीति॥ घटज्ञानकार्यस्य व्यवहारादेर्विषयभूतो यो घटस्तस्य तज्ज्ञानप्रागभावा नावरणानीत्यर्थः ॥दंडेति॥ यथा दंडप्रागभावो दंडकार्यस्य घटादेर्नावरणं किंतु घटकारणस्य दंडस्याभावरूप एव तथा ज्ञानप्रागभावोऽपि ज्ञानकार्यव्यवहारकारणस्य ज्ञानस्याभावरूप एवेत्यर्थः। न ह्यभावस्य कुड्यादिवदावरणत्वमिति भावः ॥नापीति॥ ज्ञानस्य प्रागभावनिवृत्तिरूपत्वेन तन्निवर्तकत्वेन न हेतुत्वमित्यर्थः। व्यवहारजनकतावच्छेदकं ज्ञाने न स्वप्रागभावनिवर्तकत्वमिति भावः। ज्ञानं स्वकार्यव्यवहारं

(प्रकाशः)
प्रति यदि ज्ञानप्रागभावनिवर्तकत्त्वेन हेतुर्भवेत्तदैव ज्ञानांतरप्रागभावसत्वेन तन्निवृत्तिरूपकारणाभावादेकस्मिन्नज्ञाने सत्यपि घटव्यवहारो न स्यात्। न तु तथाऽस्तीत्याशयः ॥किं त्विति॥ यथा दंडो दंडत्वेनैव घटं प्रति कारणं न तु दंडप्रागभावनिवर्तकत्वेन तथा ज्ञानमपि स्वकार्यव्यवहारं प्रति स्वरूपेणैव हेतुः, ज्ञानत्वेनैव हेतुरिति यावत्, इति मयांगीकारादित्यर्थः ॥एवं चेति॥ प्रागभावस्य ज्ञानकार्यव्यवहारविषयानावरकत्वे चेत्यर्थः ॥एको दंडइति॥ यथा एको दंडः सजातीयदंडांतरप्रागभावे सत्यपि स्वकार्यं घटं जनयत्येवमित्यर्थः ॥सजातीयांतरेति॥ एकज्ञानसजातीयज्ञानांतरेत्यर्थः।

ननु मा भूज्ज्ञानप्रागभावः आवरणम्। मा च भूज्ज्ञानं प्रागभावनिवर्तकत्वेन हेतुः, किंतु ज्ञानत्वेनैवास्तु। तथापि ज्ञानांतरप्रागभावसत्त्वेन तदभावरूपज्ञानांतराख्यकारणाभावादेकस्मिन्ज्ञाने विद्यमानेऽपि तवाप्येतज्ज्ञानकार्यव्यवहारो न स्यादित्यत आह ॥कार्येति॥ कारणतावच्छेदकावच्छिन्नयत्किंचित्कारणसत्त्वे कार्योत्पत्तेरावश्यकत्वस्य दृष्टत्वात्। यथा हि दंडत्वावच्छिन्नस्यैकस्य दंडस्य सत्त्वे कार्यं घटो भवत्येव, न तु दंडत्वावच्छिन्नसर्वदंडसद्भावोऽपेक्षितः। एवं ज्ञानत्वावच्छिन्नस्यैकस्य घटज्ञानस्य सत्त्वे व्यवहारो भवेदेव, न तु सर्वज्ञानसत्त्वमपेक्षितमिति भावः ॥सर्वप्रागभावनिवृत्तिरिति॥ सर्वज्ञानप्रागभावनिवृत्तिस्सर्वज्ञानसत्त्वमित्यर्थः। प्रतियोग्यापत्तेरेव प्रागभावनिवृत्तित्वादिति भावः। कुतो नेत्यत आह ॥असंभवादिति॥ अतीतानागतवर्तमानानामेकदा सत्त्वस्यासंभवादित्यर्थः। एवं च मम मते ज्ञानप्रागभावस्यानावरणत्वाज्ज्ञानं स्वप्रागभावनिवृत्तौ लब्धस्वरूपं सज्ज्ञानांतरप्रागभावस्यानावरकस्य सत्त्वेऽपि स्वविषये स्वकार्यं व्यवहारादिकं करोत्येव। तव मते त्वज्ञानस्यावरकत्वादेकस्मिन्ज्ञाने सत्यपि तद्विषयावरणस्याज्ञानांतरस्य सत्त्वात् ज्ञानकार्यं व्यवहारादिकं ज्ञानकालेऽपि न स्यादित्याह ॥त्वन्मते त्विति॥ ॥आवरणनिवर्तकत्वादिति ॥ अनावृतविषयसंपादकत्वेनेत्यर्थः।

ननु तथापि तमस्तावद्घटादिविषयावरणम्। तच्च आलोकाभावः। स चालोकेन निवर्तते। एवं च तत्र पृच्छामः। एतेनालोकेन समस्ता ये आलोकाः तदभावरूपाणि यानि सर्वाणि तमांसि तानि सर्वाण्यपि निवर्तंते एकमेव वा। नाद्यः। तर्हि कदाप्यप्रकाशो न स्यात्। न द्वितीयः। एकेनाऽलोकेन तदभावरूपस्यैकस्य तमसो निवृत्तत्वेऽपीतरालोकाभावरूपतमसां विषयावरणभूतानां यवनिकांतरवत्सत्त्वेन कदापि प्रकाशो न स्यादित्यापादिते तत्र त्वया वाच्यम्। सत्स्वप्यनेकेषु तमस्स्वेकेनाऽऽलोकेनैकस्य तमसो निवृत्तावपि इतराण्यपसरंति। बहुजनसंकीर्णदेशे वैद्युतनिपातवदिति तन्ममापि तुल्यमित्यत आह ॥न चेति॥ भावरूपत्वे कुड्यादिवदावरणत्वसंभवादालोकाभावस्तम इति मत इत्युक्तम् ॥हेत्विति॥ आलोकरूपस्य ज्ञानहेतोरभावरूपत्वादिति भावः। न ह्यभावस्यावरणत्वमित्याशयः ॥नापीति॥ आलोकस्स्वकार्यं ज्ञानं प्रति आलोकाभावनिवर्तकत्वेन यदि हेतुस्स्यात्तदाऽऽलोकांतराभावरूपतमसस्सत्त्वेनालोकांतराभावनिवृत्तिरूपकारणा-भावादेकस्मिन्नालोके सत्यपि ज्ञानं न भवेत्, न तु तदस्तीत्यर्थः ॥स्वरूपेणैवेति॥ दंडादिवदालोकत्वेनेत्यर्थः। तथा चालोकत्वावच्छिन्नाशेषालोकसत्ताया अनपेक्षितत्वेन तदवच्छिन्नैकालोकसत्त्वे ज्ञानं स्यादेवेति भावः। ननु यत्किंचिज्ज्ञानसत्वेऽपि अज्ञानांतरनिबंधनाप्रकाशवदेकालोकसत्त्वेऽप्यालोकांतराभावरूपतमोंतर-

(प्रकाश:)
निबंधनोऽप्रकाशोऽपि किं न स्यादित्यत आह ॥नापीति॥ येनैकालोकसत्त्वेऽप्यालोकांतराभावरूपतमसस्सत्त्वेन तदा ज्ञानाभावशंका स्यात्। न चैवम्। किं त्वालोकत्वावच्छिन्नालोकाभाव इत्यर्थः ॥सोऽस्तीति॥ आलोकत्वावच्छिन्नतदभावो नास्ति। विशेषसत्त्वस्य सामान्याभावविरोधित्वादित्यर्थः। यद्यप्यालोकांतराभावोऽस्ति। तथापि स न तमः। एकैकालोकाभावस्यातमस्त्वादिति ध्येयम् ॥भावीति॥ तथाच यवनिकांतरवदज्ञानांतरसद्भावात्तदानीमप्यप्रकाशः स्यादेवेति भावः ॥इहापीति॥ यद्यालोकत्वावच्छिन्ना-लोकाभावरूपतमस एवावारकत्वादेकालोकाभावरूपावारकसत्तायामालोकांतरसत्त्वेऽप्युक्ततमोरूपावरणा-भावसत्त्वाद्यथा प्रकाश एवमेवाज्ञानसमुदाय एवावरणम्। तत्रैकेन ज्ञानेनैकाज्ञाननिवृत्तौ सत्याम-ज्ञानांतरसद्भावेऽप्युक्तसमुदायरूपावरणभंगसद्भावाद्युक्तः प्रकाश इति भावः ॥स नास्तीति॥ एकाज्ञाननाशे समुदायनाशादिति भावः ॥वृत्तिनाशेऽपीति॥ वृत्तिकाल इव वृत्तिज्ञाननाशोत्तरकालेऽपि सर्वदा प्रकाश एव स्यात् वृत्तिरूपज्ञानकाले योऽज्ञानसमुदायनाशः स्थितः तस्य वृत्तिनाशकालेऽपि सत्त्वादित्यर्थः। बहुजनसंकीर्णदिश इत्युक्तमुदाहरणं खंडयति ॥अयुक्तं चेति॥ अमूर्तानां निबिडावयवानां। दृष्टांते एकस्य नाशेऽप्यन्येषां पुरुषाणामपसरणं मूर्तत्वाद्युक्तम्। दोषाणामपि मूर्तत्वादेकनाशेऽन्यापसरणं युक्तम्। न त्वेवमज्ञानेषु संभवति। तेषाममूर्तत्वेनापसरणायोगादिति भावः। अनुकूलतर्काभावोपपादनमुपसंहरति ॥तस्मादिति॥ ॥प्रतिकर्म-व्यवस्थाभंगविवरणम्॥

## २. मिथ्यात्वहेतूनां प्रतिकूलतर्काः

**प्रतिकूलतर्कहताश्चैते। तथा हि— यदि विश्वं कल्पितं स्यात्, तदा साधिष्ठानदिकं स्यात्। भ्रान्तेस्सदृशं सत्यं चाधिष्ठानं प्रधानं दोषमज्ञानं बाधकज्ञानं द्रष्टारं देहेंद्रियादिकं च विनाऽयोगात्। निस्सामान्ये निर्विशेषे चात्मनि अधिष्ठानत्वे तन्त्रस्य सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषवत्त्वस्याभावात्। उक्तं हि—**

**अधिष्ठानस्य कार्त्स्न्येन ज्ञानेऽज्ञाने च न भ्रमः।**
**ज्ञाताज्ञातविभागस्तु निर्विशेषे न युज्यते ॥ इति ।**

**ननु न सामान्यज्ञानं सद्विशेषाज्ञानं च तत्र तन्त्रम्, गौरवात्। किंतु स्वरूपज्ञानं विशेषाज्ञानं च, लाघवात्। तच्च स्वप्रकाशे निर्विशेषे चात्मन्यस्तीति चेन्न। त्वन्मतेऽपि भ्रान्तेस्संकारादित्रयजन्यत्वात्। सामान्याकारज्ञाने च संस्कारानुद्बोधात्। असद्विशे-षाज्ञानस्य च बाधकालेऽपि सत्त्वात्। वल्मीके स्थाणुत्वभ्रमनिवर्तकस्यापि पुंस्त्वभ्रमस्य**

वल्मीकत्वप्रमानिवर्त्यत्वेनांततो भ्रमकालाज्ञाताधिष्ठानविशेषप्रमां विना भ्रमानिवृत्तेश्च। ननु अथ भ्रमविरोधिज्ञानाभावस्तत्र तन्त्रं, न तु विशेषाज्ञानम्। विश्वभ्रमोपादानाज्ञानस्य च श्रवणादिजन्यमात्ममात्रविषयं वृत्तिज्ञानं विरोधि न तु चिद्रूपज्ञानमिति चेन्न। तस्याविद्याविषयभंगे निरसिष्यमाणत्वात्।

किं चात्मानात्मनोर्दृग्दृश्यत्वात्मत्वानात्मत्वादिना भेदज्ञानान्न तदधिष्ठानाध्यस्तभावः। उक्तं हि त्वयैव–

तत्तेदन्ते स्वतान्यत्वे त्वत्ताहन्ते परस्परम्।
प्रतिद्वन्द्वितया लोके प्रसिद्धे नास्ति संशयः ।। इति ।

''स्वयमात्मेति पर्ययौ'' – इति च। अपि चाधिष्ठानतिरोधानं विनाऽध्यासासम्भवस्य तवापि सम्मतत्वात् प्रकाशमात्रस्वभावस्य चात्मनः तिरोधाने प्रकाशनिह्नवत्वेन कथं तदधीनप्रकाशस्याविद्यादेरध्यस्तस्य प्रकाशः? किं च घटाद्यनुविद्धत्वेनाप्रतीतस्यात्मनः कथं तदधिष्ठानत्वम्? न च सन् घट इति, स्फुरति घट इति चात्मा तदनुविद्धतया भातीति युक्तम्। चाक्षुषादिज्ञाने रूपादिहीनात्माप्रतीतेरित्युक्तत्वात्। न च स्वप्रकाशसदर्थभूतं घटादिष्ठानं चैतन्यं स्वत एव भातीति युक्तम्। घटस्यापि तत्संबंधेन स्फुरणसम्भवे वृत्तिवैयर्थ्यात्। घटः स्फुरतीत्यस्य च स्फुरणानुभवत्वेन घटानुभवत्वायोगात्।

नन्वथापि न प्रधानं भ्रमहेतुः, किंतु तत्संस्कारः। स च तत्प्रमयेव तद्भ्रमेणापि। अत्र च पूर्वपूर्वप्रपंचभ्रम अनादिः। न च प्रमाजन्य एव संस्कारो भ्रमहेतुः। सत्यपि संस्कारे प्रमाजन्यत्वाभावेन भ्रमाभावादर्शनात्। न च तार्किकस्येवाध्यस्तमेव देशान्तरादौ सदित्यावयोर्मतम्। मैवम्। एवं सत्यधिष्ठानधीरेव भ्रमहेतुः, तद्धीश्च भ्रमरूपाऽनादिरिति शून्यवादिरीत्याऽधिष्ठानस्याप्यसत्त्वापातेनाधिष्ठानत्वेन ब्रह्म सदिति त्वदुक्त्ययोगात्। अधिष्ठानवत्प्रधानस्याप्यबाधात्। तथा च–

प्रधानमिव धीमात्रादधिष्ठानमपि भ्रमे ।
हेतुस्सुगतरीत्या स्यादबाधस्तु द्वयोस्समः ।।

एतत्प्रपञ्चासाध्यार्थक्रियाकरिणश्च तात्त्विकप्रपञ्चान्तरस्याभावे स्वोचितार्थक्रियाकारिणः श्रुत्यादिसिद्धोत्पत्त्यादिकस्यास्यैवात्मन इव स्वोपाधौ निषेधायोगेन तत्र तात्त्विकत्वापाताच्च। त्वन्मते प्रातिभासिकरूप्ये त्रैकालिकनिषेधस्य व्यावहारिकरूप्यविषयत्ववद् व्यावहारिकप्रपंचेऽपि नेह नानेति त्रैकालिकनिषेधस्य पारमार्थिकप्रपञ्चान्तरविषयत्वावश्यंभावाच्च। प्रातिभासिकस्यैव पारमार्थिकत्वाकारेण त्रैकालिकनिषेध इति तु निरस्तम्। कल्पाद्यभ्रमायोगाच्च। कल्पान्तरीयसंस्काराद् भ्रमोत्पत्तौ च नारिकेळद्वीपवासिनो गुंजापुंजादावग्न्यारोपः स्यात्। एतज्जन्मन्यननुभूततिक्तरसस्यापि बालस्य गुडादावास्यगतपित्तद्रव्यनिष्ठतिक्तत्वारोपस्तु अनन्यगतिकत्वाज्जन्मान्तरीयसंस्कारजन्यः। यद्वा माषराशिस्थमष्यां माषाभेदारोप इव गृह्यमाणारोपोऽयं न तु संस्कारजन्यः। किं च चैत्रेण मैत्रे संस्काराध्यासेऽपि मैत्रस्य भ्रमादर्शनाद् जगद्भ्रमहेतुसंस्कारस्य सत्त्वं दुर्वारम्। न च स्वेनाध्यस्तसंस्कारादेव भ्रमः। भ्रमात्पूर्वं स्वस्य कार्यानुमेयसंस्काराध्यासनियमाभावात्।

यत्तूक्तं विवरणे– गुणादिहीने ब्रह्मणि गुणादिकृतसादृश्याभावेऽपि केतकीगन्धसदृशस्सर्पगन्ध इति धीबलात् गन्ध इवेहापि सादृश्यान्तरं वा, रक्तः स्फटिक इत्यादिवत् सादृश्यं विनैवाध्यासोऽस्त्विति। तन्न। इह कल्पितस्यसादृश्यस्याप्यविद्याध्यासाधीनत्वेनान्योन्याश्रयात्। रक्तः स्फटिक इत्यस्य सोपाधिकभ्रमत्वेन निरुपाधिके सादृश्यनियमाच्च। रक्तद्रव्यस्फटिकयोरपि द्रव्यत्वादिना सदृशत्वाच्च।

न च दोषादिकं विना भ्रमश्शंक्यः। अप्रामाण्यस्य स्वतस्त्वाद्यापातात्। एवं द्रष्टृभावेऽपि न भ्रमश्शंक्यः। भ्रमस्य समानाश्रयप्रमानिवर्त्यत्वेन, ज्ञानस्य ज्ञातृसापेक्षत्वेन च द्रष्टुरवश्यंभावात्। एवं देहेन्द्रियाद्यभावेऽपि न भ्रमश्शंक्यः। प्रलये सत्यप्यज्ञानादौ देहादेरभावेन प्रमाया इव करणजन्यभ्रमस्याप्यदर्शनात्। न च रूप्याद्यध्यासे दोषादीनां देहेन्द्रियान्तानां व्यावहारिकं वा करणादिसमं वा सत्त्वं तन्त्रमिति जगदध्यासेऽपि तथेति वाच्यम्। दोषादीनां व्यावहारिकसत्त्वस्याद्याप्यसिद्ध्यान्योन्याश्रयात्। परमार्थसत्त्वस्य त्वौत्सर्गिकप्रामाण्येन सिद्धत्वात्। इह साक्षिरूपाज्ञानादिप्रतीतौ करणाभावाच्च। रूपाद्यध्यासे करणादेरप्यधिष्ठानसमस(त्ताकत्वे)त्त्वेनेहापि तथात्वापाताच्च। दोषादेरध्यस्तत्वे तदभावस्य तात्त्विकत्वापातेनातात्त्विकेन च तात्त्विककार्य-

प्रतिबंधायोगेन दुष्टतया बौद्धकल्पितवेदजन्यज्ञानस्येव जगज्ज्ञानस्य प्रामाण्यापाताच्च। दोषाद्यध्यासस्यापि दोषान्तरापेक्षत्वेनानवस्थाद्यापाताच्च। कस्यचिद्दोषाभावेऽप्यारोपे अप्रामाण्यस्य स्वतस्त्वं स्यात्। न चानादित्वेन वा, भेदवत् स्वनिर्वाहकत्वेन वाऽविद्याख्यदोषस्य तदनपेक्षा। तत एवाधिष्ठानानपेक्षापातात्। विषयस्यानादित्वेऽपि प्रतीतेर्दोषाजन्यत्वे अप्रामाण्यायोगाच्च। अविद्यारोपे तस्या एव दोषत्वे लाघवेन जगदारोपेऽपि तस्या एव दोषत्वापाताच्च। स्वनिर्वाहकत्वे भेदो भिन्न इति वदज्ञानमज्ञातमिति व्यवहारसम्भवेऽपि प्रतीतिमात्रशरीरस्वविषयधीहेतुत्वेन स्वस्य स्वस्मात्पूर्वभावित्वायोगाच्च।

बाधकज्ञानस्यापि बाध्यत्वे बाधपरंपरयानवस्थाक्ष्यमाणत्वाच्च। रूप्याद्यध्यासेऽधिष्ठानस्यापि तदेव सत्त्वं तंत्रमितीहाप्यधिष्ठानस्यापि तथात्वापत्तेश्च। न च तत्राधिष्ठानज्ञानाबाध्यं सत्त्वं तन्त्रं, दोषादीनां तु व्यावहारिकं तंत्रमिति वैरूप्यकल्पनमसति बाधके युक्तम्। न चेह दोषादीनां मिथ्यात्वमेव बाधकम्, अन्योऽन्याश्रयात्। न च कतिपयाध्यासे, प्रातिभासिकाध्यासे, साद्यध्यासे वा दोषादिसत्त्वं तंत्रं, न त्वधिष्ठानेतरसर्वाध्यासे, व्यावहारिकाध्यासे वा, अनाद्यध्यासे वेति युक्तम्। अधिष्ठानेतरसर्वाध्यास एवायुक्त इत्युच्यमानत्वात्। लाघवेन प्रथमोपस्थितत्वेन च प्रवृत्तिमात्रधूममात्रे प्रति संसर्गधीवह्न्योरिवाध्यासमात्रं प्रति तस्य तंत्रत्वाच्च। अन्यथा संसर्गधीवह्नी अपि संवादिप्रवृत्त्यपर्वतीयधूमौ प्रति हेतू स्यातामित्यनुमानमात्रोच्छेदः। एवं साधिष्ठानेऽध्यासे, प्रातिभासिकाध्यासे वा, साद्यध्यासे, वाऽधिष्ठानसत्त्वं तंत्रं, न तु सर्वाध्यासे व्यावहारिकाध्यासे वा, अनाद्यध्यासे वेति च स्यात्। तस्मादध्यासमात्रेऽधिष्ठानस्य दोषादीनां चाधिष्ठानज्ञानाबाध्यं सत्त्वं तंत्रमिति जगदध्यासहेतुदोषादयो ब्रह्मज्ञानाबाध्याः स्युः। एवं च–

लोकेऽधिष्ठानवत्सत्यो दोषादिर्भ्रमकारणम् ।
दृष्टोऽतो ब्रह्मवत्सत्यो दोषादिस्स्याज्जगद्भ्रमे ॥

किं चार्थस्यासत्यत्वेऽपि ज्ञानं सदेवेति वक्ष्यमाणत्वाद्वित्तिरूपं तद्विशिष्टचिद्रूपं वा घटादिज्ञानं सत्यं स्यात्। किं च बन्धस्यात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्ववत्त्वे

तदभावार्थं यत्नो न स्यात्। अत्यन्ताभावस्यासाध्यत्वात्। न च पारमार्थिकत्वाकारेणात्यन्ताभावः, स्वरूपेण तु निवृत्तिरिति युक्तम्। तस्य निराकारे ब्रह्मणीव स्वरूपाबाधेनाप्युपपत्तेः। गौरनाद्यन्तवतीत्यादिश्रुत्यनुसरणाय पारमार्थिकत्वाकारेण निवृत्तिः, स्वरूपेण त्वनुवृत्तिरित्यापाताच्च। न च तत्प्रतीत्युच्छेदार्थं यत्नः। तस्या अपि मिथ्यात्वात्। अन्यथा मोक्षेऽपि बन्धप्रतीत्यापत्त्या प्रातीतिकबन्धापातात्।

किं च बंधस्य ब्रह्मण्यध्यस्तत्वे तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यत्वं, श्रवणादिनियमादृष्टसापेक्षब्रह्मज्ञाननिवर्त्यत्वं च न स्यात्। न हि देवतानिदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यं दुरितं तत्राध्यस्तम्। न वा दूरगमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यं दुरितं तत्राध्यस्तम्। न च नियमादृष्टं न बन्धनिवृत्तौ हेतुः, किं तु ब्रह्मापरोक्ष एवेति युक्तम्। अवघातसाध्यवैतुष्यान्यापूर्वस्येव श्रवणसाध्यापरोक्षान्यमुक्तेरेव तत्साध्यत्वात्। अन्यथा श्रवणनियमादृष्टसाध्ये साक्षात्कारे श्रवणनिरपेक्षस्योपायान्तरस्याप्रसक्त्या तत्प्रसक्त्यधीननियमविध्ययोगात्। न च परोक्षज्ञानमेव श्रवणादपरोक्षज्ञानं तु नियमादृष्टादिति युक्तम्। श्रवणविधौ परोक्षज्ञानप्रवाहरूपनिदिध्यासनसाध्यापरोक्षज्ञानस्यैव दृशिनोद्देशात्। साक्षात्कर्तव्य इति श्रुत्यन्तराच्च। त्वन्मते परोक्षज्ञाने कामनायोगेन तस्योद्देश्यत्वायोगाच्च। आपरोक्ष्यस्यैव नियमादृष्टसाध्यत्वेऽपि तत्साध्यदेवतापरोक्ष्यनिवर्त्यदुरितवदध्यस्तत्वायोगाच्च। किं च कल्पितत्वे स्वधीहेत्विंद्रियासन्निकर्षात् प्रतिकर्मव्यवस्था न युक्ता स्यात्।

किं च यदि जगत्कल्पितं स्यात्तदा त्वन्मतेऽपि "जन्माद्यस्य यतः" इति सूत्रे, "यतो वा" इत्यादिश्रुतौ च जन्माद्युक्तिः, "ईक्षतेर्नाशब्दम्" इति सूत्रे, "तदैक्षत" इत्यादिश्रुतौ च ईश्वरस्येक्षापूर्वककर्तृत्वोक्तिः, "लोकवत्तु लीलाकैवल्यं" इति सूत्रे, "आप्तकामस्य का स्पृहे"ति श्रुतौ च प्रयोजनाभावेऽपि लीलया सृष्ट्याद्युक्तिः, "वैषम्यनैर्घृण्ये न सापेक्षत्वाद्" इति सूत्रे, "पुण्येन पुण्यं लोकं नयति" इत्यादिश्रुतौ च कर्मसापेक्षत्वेनावैषम्योक्तिः, "तेजोऽतस्तथा ह्याह" इति सूत्रे, "वायोरग्निः" इत्यादिश्रुतौ च तेजआदेर्वाय्वादिजन्यत्वोक्तिः, "विपर्ययेण तु क्रमः" इति सूत्रे, "पृथिव्यप्सु प्रलीयत" इति श्रुतौ च पृथिव्यादीनामबादौ लयोक्तिरित्याद्ययुक्तं स्यात्।

**न हि कल्पितस्य रूप्यादेर्जन्मादिकमीक्षापूर्वं सृष्टत्वं वा, तद्भ्रान्तेः प्रयोजनापेक्षा वा, जीवस्य सुखदुःखेश्वरादिविषयभ्रान्त्येश्वरस्य वैषम्यादिप्रसक्तिर्वा, एकस्य कल्पितस्य कल्पितान्तरादुत्पत्तिर्वा, तत्र लयो वा, दृष्टः युक्तो वा। रूप्यादौ च जन्मेक्षापूर्वसृष्टत्वाभावेऽध्यस्तत्वमेव तंत्रम्। न तु तद्विशेषः प्रातिभासिकत्वं तंत्रम्। ज्ञाननिवर्त्यत्वेऽपि तस्यैव तंत्रत्वापातात्। अनुमानमात्रोच्छेदस्योक्तत्वाच्च।**

**न चेश्वरस्य मायाविवद् भ्रामयितृत्वात्प्रयोजनादिप्रसक्तिः। भ्रामयितुरीश्वरस्यापि सपरिकरस्य जीवैरध्यस्तत्वात्। न हीश्वरः स्वेन वा चिन्मात्रेण वाऽध्यस्तः। न च कल्पकं विना कल्पना। न च जीवानां वाय्वादिभ्योऽग्न्याद्युत्पत्तिभ्रमो वाऽस्ति, यः श्रुतेरालम्बनं स्यात्। न च भ्रान्तिं विना कल्पितमस्ति। न चैतद्वाक्यज-भ्रान्तिसिद्धालम्बनेनैव एतद्वाक्यस्य प्रामाण्यम्। बौद्धागमस्यापि तत्प्रसंगात्। त्वन्मते भ्रान्तिहेतूनां देहेन्द्रियादीनां पृथिव्यादिकार्यत्वात्। ईश्वरस्य चाभ्रान्तत्वात्। भ्रान्तत्वे वा तद्भ्रान्तेरपि देहादिकार्यत्वादिति दिक्। तस्मान्नानुमानं विश्वमिथ्यात्वे मानम्।**

**इति मिथ्यात्वहेतूनां प्रतिकूलतर्काः।**

## अद्वैतसिद्धिः

ननु— मिथ्यात्वानुमानं प्रतिकूलतर्कपराहतम्। तथा हि– विश्वं यदि कल्पितं स्यात्, साधिष्ठानं स्यात्। न चैवम्, सामान्यतो ज्ञातत्वे सत्यज्ञातविशेष-वत्त्वस्याधिष्ठानत्वप्रयोजकस्य निर्विशेषे निस्सामान्ये च ब्रह्मण्यसंभवादिति चेन्न। स्वरूपेण ज्ञातत्वे सति विशेषेणाज्ञातत्वस्याधिष्ठानत्वप्रयोजकत्वेनाज्ञातविशेषवत्त्वस्याप्रयोजकत्वात्। तथा च निस्सामान्ये निर्विशेषे च ब्रह्मणि स्वप्रकाशत्वेन ज्ञानात् परिपूर्णत्वानन्दत्वादिना चाज्ञानादधिष्ठानत्वमुपपन्नम्। वस्तुतस्तु– कल्पितसामान्यविशेषवत्त्वं ब्रह्मण्यपि सुलभमेव। अकल्पितसामान्यविशेषवत्त्वं चाप्रसिद्धम्। न च तत्कल्पने अन्योन्याश्रयः। कल्पित-सामान्यविशेषाणां प्रवाहानादित्वात्। सत्त्वानन्दत्वादीनामेव कल्पितव्यक्तिभेदेन सामान्यत्वात्। परिपूर्णानन्दत्वादीनां च विशेषत्वात्। अत एव सामान्याकारज्ञानं विना संस्कारनुद्बोधात् कथमध्यास इति न वाच्यम्। सदात्मना स्वरूपज्ञानस्यैव सामान्यज्ञानत्वात्। न ह्यध्यसनीयं

(अद्वैतसिद्धिः)

सदात्मना न भाति। एतावानेव विशेषः– यदधिष्ठानं स्वत एव तदात्मना भाति। अध्यसनीयं तु तत्संबन्धात्। ननु– अधिष्ठानतिरोधानं विना भ्रमासंभवः। प्रकाशरूपतिरोधाने तु तदध्यस्ताविद्यादेः प्रकाशानुपपत्तिरिति चेत्, न। एकस्यैवानन्दाद्यात्मना तिरोहितस्य सदात्मना प्रकाशसंभवात्। तदुक्तं वार्त्तिककारपादैः–

यत्प्रसादादविद्यादि सिध्यतीव दिवानिशम्।
तमप्यपह्नुतेऽविद्या नाज्ञानस्यास्ति दुष्करम् ॥ इति ।

न च बाधकालेऽपि सद्विशेषाज्ञानमस्तीति– वाच्यम्। परिपूर्णानन्दत्वादेः सत एव विशेषत्वेन तदा तदज्ञानाभावात्। धर्मत्वमात्रस्यैव कल्पितत्वात्। यद्वा, भ्रमविरोधिज्ञानाभाव एव तन्त्रम्। न तु विशेषाज्ञानम्। विश्वोपादानगोचराज्ञानस्य श्रवणादिजन्यमात्ममात्रविषयकं वृत्तिरूपं ज्ञानं विरोधि, न तु चिद्रूपं स्वतःसिद्धं ज्ञानम्। भ्रमविरोधिनश्च वृत्तिरूपस्य ज्ञानस्येदानीमभावोऽस्त्येव। ननु– आत्मानात्मनोर्दृग्दृश्यत्वात्मानात्मत्वादिना भेदज्ञानात् कथमध्यस्ताधिष्ठानभाव इति चेन्न। इदमनिदं न भवतीति पुरोवर्त्यपुरोवर्तिनोर्भेदग्रहेऽपीदं रजतमित्यध्यासवत् सन् घट इत्याद्यध्यासो भविष्यति। न हि रूपान्तरेण भेदग्रहो रूपान्तरेणाध्यासविरोधी। सन् घट इत्यादिप्रत्यये च सद्रूपस्यात्मनो घटाद्यनुविद्धतया भानान्न तस्य घटाद्यध्यासाधिष्ठानतानुपपत्तिः। सद्रूपेण च सर्वज्ञानविषयतोपपत्तेर्न रूपादिहीनस्यापि आत्मनः कालस्येव चाक्षुषत्वाद्यनुपपत्तिः।

ननु– विश्वं यदि कल्पितं स्यात्तदा सप्रधानं स्यात्। न चैवं, तस्मात् न कल्पितमिति चेन्न। अत्रापि प्रधानस्य सजातीयस्य सत्त्वात्। पूर्वप्रपञ्चसजातीयस्यैवोत्तरप्रपञ्चस्याध्यसनात्। अध्यासो हि स्वकारणतया संस्कारमपेक्षते। न तु संस्कारविषयस्य सत्यताम्, अनुपयोगात्। न च– प्रमाजन्य एव संस्कारो भ्रमहेतुः। अतो विषयसत्यत्वमावश्यकमिति वाच्यम्। मानाभावाद्, विपरीते लाघवाच्च। अत एव– अध्यस्तसजातीयं पूर्वमध्यस्तापेक्षयाऽधिकसत्ताकमपेक्षणीयमित्यपि निरस्तम्। सत्यतावदधिकसत्ताया अप्यनुपयोगात्। पूर्वं तज्ज्ञानमात्रमपेक्ष्यते, तच्चास्त्येव। ननु– एवमधिष्ठानस्यापि ज्ञानमात्रमेव हेतुः, न तु तदिति न सदधिष्ठानापेक्षा स्यादिति शून्यवादापत्तिरिति चेन्न। अधिष्ठानस्य ज्ञानद्वारा भ्रमाहेतुत्वेऽप्यज्ञानद्वारा भ्रमहेतुत्वेन सत्त्वनियमात्। भ्रमोपादानाज्ञानविषयो

(अद्वैतसिद्धिः)

ह्यधिष्ठानमित्युच्यते। तच्च सत्यमेव। असत्यस्य सर्वस्याप्यज्ञानकल्पितत्वेनाज्ञानाविषयत्वात्। तदसत्यत्वे तज्ज्ञानस्य भ्रमाबाधकत्वप्रसङ्गात्। जगति भ्रमबाधव्यवस्था च न स्यात्। बाधेन हि किंचिद्विरुद्धं तत्त्वमुपदर्शयता आरोपितमतत्त्वं बाधनीयम्। उभयाध्यासे तु किं केन बाध्येत? अत एव भगवता भाष्यकारेण– ''सत्यानृते मिथुनीकृत्य'' इत्युक्तम्।

ननु एतत्प्रपञ्चासाध्यार्थक्रियाकारिणः प्रपञ्चान्तरस्याभावेन स्वोचितार्थक्रियाकारिणोऽस्य न मिथ्यात्वमिति चेन्न, स्वाप्नमायादौ व्यभिचारात्। स्वोचितार्थक्रियाकारित्वस्य पारमार्थिकसत्त्वाप्रयोजकत्वात्। नापि श्रुत्यादिसिद्धोत्पत्त्यादिमत्त्वं सत्त्वे तन्त्रम्। स्वप्नप्रपञ्चे व्यभिचारात्। तस्यापि ''न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथस्सृजते'' इत्यादिश्रुत्योत्पत्त्यादिप्रतिपादनात्। न च कल्पाद्यभ्रमायोगः। कल्पान्तरीय-संस्कारस्य तत्र हेतुत्वात्। न च जन्मान्तरीयसंस्कारस्य कार्यजनकत्वेऽतिप्रसंगः। अदृष्टादिवशेन क्वचिदुद्बोधेऽप्यन्यत्रानुद्बोधोपपत्तेः। कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात्। अन्यथा जातस्य स्तन्यपानादौ प्रवृत्तिर्न स्यात्। ननु– चैत्रेण मैत्रे संस्काराध्यासेऽपि मैत्रस्य भ्रमादर्शनात् जगद्भ्रमहेतुसंस्कारस्य सत्त्वं दुर्वारम्। न च स्वेनाध्यस्तात्संस्काराद्भ्रमः। भ्रमात् पूर्वं स्वस्य कार्यानुमेयसंस्काराध्यासनियमाभावादिति चेन्न। शुक्तिरूप्यस्य कुण्डलाजनकत्ववच्चैत्राध्यस्त-संस्कारस्य मैत्रभ्रमाजनकत्वेऽपि वणिग्वीथीस्थरूप्यस्य कुण्डलजनकत्ववत् स्वेनाध्यस्तस्य संस्कारस्य वियदाद्यध्यासजनकत्वोपपत्तेः। तत्प्रतीत्यभावेऽपि तदध्यासस्य पूर्वं सत्त्वात् कृत्स्नस्यापि व्यावहारिकपदार्थस्याज्ञातसत्त्वाभ्युपगमात्।

ननु– प्रातिभासिकरूप्ये त्रैकालिकनिषेधस्य त्वन्मते व्यावहारिकरूप्यविषयत्ववद् व्याहारिकप्रपञ्चेऽपि 'नेह नाना' इति त्रैकालिकनिषेधस्य पारमार्थिकप्रपञ्चान्तरविषयताऽवश्यं वाच्येति चेन्न। भ्रमबाधवैयधिकरण्यापातेनास्य पक्षस्यानङ्गीकारपराहतत्वात्। अङ्गीकारेऽपि व्यावहारिकनिषेधे पारमार्थिकविषयत्वं न संभवति। अप्रतीतस्य निषेधायोगात्। प्रतीत्या सहाध्यासातिरिक्तसंबन्धाभावेन पारमार्थिके प्रतीतत्वाभावात्। ननु– प्रधानाधिष्ठानयोः सादृश्याभावात्कथमध्यासः? अथ निर्गुणयोरपि गुणयोः सादृश्यवदत्रापि किंचित्सादृश्यं भविष्यतीति, तन्न। निर्धर्मके ब्रह्मणि तस्याप्यध्यासाधीनत्वेनान्योन्याश्रयात्। यद्यपि सादृश्यं सोपाधिकाध्यासे न कारणं, व्यभिचारात्। तथापि निरुपाधिकाध्यासेऽन्वयव्यतिरेकाभ्यां तस्यावश्यमपेक्षणीयत्वात्। सोपाधिकेऽपि 'रक्तः स्फटिकः' इत्यादौ द्रव्यत्वादिना सादृश्या-

(अद्वैतसिद्धिः)

नपेक्षत्वाद्। अन्तःकरणाध्यासे त्वविद्यासंबन्धित्वस्यैव सादृश्यस्य विद्यमानत्वात्। वस्तुतस्तु– न भ्रमे सादृश्यापेक्षानियमः। निरुपाधिकेऽपि 'पीतः शङ्खः' इत्यादौ व्यभिचारात्। 'रक्तः स्फटिकः' इत्यादावपि द्रव्यत्वादिना सादृश्यमस्तीत्यपि न। प्रधानमात्रवृत्तितया प्रागवगतमध्याससमये चाधिष्ठानवृत्तितया गृहीतं यत् तदेव हि सादृश्यं विपर्ययप्रयोजकमिति त्वयापि वाच्यम्। न तु प्रागेव प्रधानाधिष्ठानोभयवृत्तितया गृहीतम्। तस्य संशायकत्वात्। द्रव्यत्वादि च लोहितालोहितवृत्तितया प्राग्गृहीतमिति न विपर्ययप्रयोजकम्। किं च सादृश्यं न स्वतो भ्रमकारणं, मानाभावात्। किं तु संस्कारोद्बोधेन सामग्रीसंपादकतया। संस्कारोद्बोधश्च न सादृश्यैकनियतः। अदृष्टादिनाऽपि तत्संभवात्। तदुक्तम्– 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति। चिन्तादिकं च प्रणिधानसूत्रे व्याख्यातम्। तथा चान्यतः संस्कारोद्बोधे सति सादृश्यमनुपयोगि। तदुक्तं विवरणे 'निरुपाधिकभ्रमकार्यदर्शनमेव गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशः सर्पगन्ध इतिवत् सादृश्यान्तरं वा, शङ्खपीतिमादाविव कारणान्तरं वा कल्पयति' इति।

ननु– दोषं विना भ्रमस्वीकारे तदप्रामाण्यस्य स्वतस्त्वापत्तिः, दोषजन्यत्वस्वीकारे तु दोषस्याप्यध्यसनीयत्वेनानवस्थापत्तिरिति– चेन्न। अनाद्यविद्याध्यासस्य दोषानपेक्षत्वात्। साद्यध्यासस्य चाविद्यादोषजन्यत्वात् नाप्रामाण्यस्य स्वतस्त्वम्। नाप्यनवस्था। अन्यथा तार्किकाणामप्यनादिप्रमा गुणं विनाऽपीति प्रामाण्यपरतस्त्वं भज्येत। जन्यप्रमामात्रस्य गुणजन्यत्वं तु जन्याध्यासमात्रस्य दोषजन्यत्वेन समम्। ननु – लाघवेन प्रथमोपस्थितत्वेन च प्रवृत्तिमात्रं प्रति संसर्गधिय इव धूममात्रं प्रति वह्नेरिव चाध्यासमात्रं प्रति दोषादीनां जनकत्वादविद्याध्यासोऽपि कथं क्लृप्तकारणेन विना भवतु ? अन्यथा संसर्गधीरपि प्रवृत्तिविशेषे, वह्निरपि धूमविशेषे हेतुरिति स्यात्। तथा चाख्यातिवादश्चानुमानमात्रोच्छेदश्चापद्येयाताम्। किं च अविद्यारूपविषयस्यानादित्वेऽपि तत्प्रतीतेर्दोषाजन्यत्वे प्रामाण्यापातः। अप्रामाण्य-प्रयोजकस्य दोषजन्यस्याभावात्।

अथ भेदवदविद्याख्यदोषस्य स्वपरनिर्वाहकत्वम्, एवमपि भेदो भिन्न इतिवद् 'अज्ञानमज्ञातम्' इति व्यवहारो भवतु। प्रतीतिमात्रशरीरस्य स्वविषयधीहेतुत्वं कुतः ? स्वस्य स्वस्मात् पूर्ववृत्तित्वासंभवादिति– चेन्न। अध्यासत्वस्य लघुत्वेऽपि प्रथमोपस्थितत्वेऽपि न दोषजन्यतायां तन्त्रत्वम्। दोषस्यापि दृश्यत्वेनाध्यसनीयतयाऽनवस्थापत्तेः। यथा

(अद्वैतसिद्धिः)

नित्यज्ञानवादिनां ज्ञानत्वस्य न शरीरजन्यतावच्छेदकत्वं, न वा गुणजन्यत्वस्य प्रामाण्यप्रयोजकत्वं, बाधकबलात्, तद्वत् जन्याध्यासं प्रत्येवं दोषादीनां कारणत्वम्। गुणाजन्यत्वेऽप्यबाधितविषयतया नित्यज्ञानप्रामाण्यवत् दोषाजन्यत्वेऽपि बाधितविषयतयाऽनाद्यध्यासस्याप्यप्रामाण्योपपत्तिः। बाधितविषयत्वेऽपि न दोषजन्यत्वमवच्छेदकम्। दोषजन्यत्वेऽप्यवच्छेदकान्तरान्वेषणेऽनवस्थापातात्। बाधितविषयत्वस्य दोषाजन्यवृत्तित्वेऽपि दोषजन्यत्वस्य तद्व्याप्यत्वोपपत्तेः। अत एव शबरस्वामिना 'यस्य दुष्टं करणं, यत्र च मिथ्येति प्रत्ययः स एवासमीचीनो नान्यः' इति वदता दुष्टकरणजन्यत्वमन्तरेणापि अर्थान्यथात्वमप्रामाण्यप्रयोजकमुक्तम्। अविद्याध्यासरूपस्य साक्षिचैतन्यस्याविद्याजन्यत्वानभ्युपगमात् न प्रतीतिमात्रशरीरत्वव्याघातः। 'अहमज्ञः' इत्याद्यभिलापकारणीभूतवृत्तिरूपाध्यासं प्रति त्वविद्यायाः कारणत्वमस्त्येव, घटादीनामिव स्वप्रत्यक्षं प्रति। वह्निविशिष्टधियोस्तु बाधकाभावात् सामान्येनैव धूमप्रवृत्ती प्रति हेतुतेति न पूर्वोक्तदोषापातः। ननु– अविद्याध्यासस्यानादित्वेन दोषाद्यनपेक्षावदधिष्ठानानपेक्षापि स्यादिति चेन्न। जनकत्वेनाधिष्ठानानपेक्षायामप्याश्रयत्वेन तदपेक्षानियमात्। परममहत्त्वादेराश्रयापेक्षावद् अध्यासस्य साधिष्ठानकत्वनियमेनात्रापि परतन्त्रत्वस्य समत्वात्। भास्यस्याविद्याध्यासस्य भासकतयाऽप्यधिष्ठानापेक्षणाच्च। अविद्यावच्छिन्नस्य चैतन्यस्याविद्यादिसकलद्वैतद्रष्टृत्वात् तस्यैव चान्तःकरणावच्छेदेन प्रमातृत्वाद् भ्रमप्रमयोः सामानाधिकरण्योपपत्तेर्भ्रमस्य समानाधिकरणप्रमानिवर्त्यत्वमुपपद्यते।

ननु देहेन्द्रियादिकं विना कथमन्तःकरणाध्यासः ? काऽत्रानुपपत्तिः ? अधिष्ठानापरोक्षत्वं हि अपरोक्षभ्रमे कारणम्। तद् यत्राधिष्ठानं स्वतो नापरोक्षं, यथा शुक्त्याद्यवच्छिन्नचैतन्यं, तत्र तदपरोक्षतार्थं देहेन्द्रियाद्यपेक्षा। प्रकृते चाविद्यावच्छिन्नं चैतन्यमधिष्ठानम्। तत्र चैतन्यस्य स्वप्रकाशत्वेनाविद्यायाश्च तदध्यस्तत्वेन तेनैव साक्षिणा अपरोक्षत्वात् कुत्र देहेन्द्रियाद्यपेक्षा ? अथैवं प्रलये देहेन्द्रियाद्यभावेऽप्यज्ञानसद्भावेनान्तःकरणाध्यासप्रसङ्गः। न, तदा देहेन्द्रियादिसर्जनविलम्बहेतुनैव तद्विलम्बसंभवात्। अन्यथा तदा देहेन्द्रियादिकमपि कुतो नोत्पद्येत ? न च– दोषादीनामध्यस्तत्वेन तदभावस्य तात्त्विकत्वाद् अतात्त्विकेन तात्त्विककार्यप्रतिबन्धस्यायुक्तत्वात्, बौद्धेन दुष्टतया कल्पितस्य वेदजन्यज्ञानस्येव कल्पितदोषजन्यस्य द्वैतविज्ञानस्य प्रामाण्यापात इति वाच्यम्। बौद्धकल्पितस्य प्रातिभासिकदोषस्य

(अद्वैतसिद्धिः)

व्यावहारिकवेदापेक्षया न्यूनसत्ताकत्वेन तदप्रामाण्याप्रयोजकत्वेऽप्यविद्याख्यदोषद्वैतप्रपञ्चयोः समसत्ताकत्वेन कार्यकारणभावनियमेन च कारणीभूताविद्याख्यदोषाभावे कार्यभूतद्वैतप्रपञ्च-तद्विज्ञानयोरभावनियमेन नाविद्यामिथ्यात्वेन द्वैतज्ञानसत्यतापातः। कारणमिथ्यात्वे कार्यमिथ्यात्वस्यावश्यकत्वात्। ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकत्वस्य बाध्याबाध्य-साधारणस्य मिथ्यात्वसिद्ध्यनपेक्षत्वात् न सत्त्वविभागासिद्धिः। ननु दोषादीनां रूप्यादिभ्रम-हेतूनां पारमार्थिकसत्त्वमौत्सर्गिकप्रामाण्येन सिद्धमिति परमार्थसतामेव तेषां हेतुत्वमिति चेन्न। व्यावहारिकप्रामाण्यस्य साक्षिणा ग्रहणेऽपि त्रिकालाबाध्यत्वरूपतात्त्विकप्रामाण्यं न केनापि गृह्यत इति प्रत्यक्षबाधोद्धारे प्रागेवाभिहितत्वात्। न च– रूप्याद्यध्यासे दोषादीनामधिष्ठान- समसत्ताकत्वं दृष्टमिति इहापि तथेति वाच्यम्। साधर्म्यसमजात्युत्तरत्वात्। वस्तुतस्तु सर्वत्र चैतन्यस्यैवाधिष्ठानत्वेन कुत्रापि दोषादीनामधिष्ठानसमसत्ताकत्वाभावात्। न च – बाधकं ज्ञानं सत्यमेव वक्तव्यम्, अन्यथा बाधपरम्परया अनवस्थापत्तेरिति वाच्यम्। वेदान्तवाक्यजन्यचरमचित्तवृत्तेः कतकरजोन्यायेन स्वपरबाधकतयाऽनवस्थाया अभावात्। दृश्यत्वमात्रेण युगपत्कृत्स्नबाधसंभवात्। न हि गुहायां न शब्द इति शब्दः स्वं न निषेधति। अन्यथा स्वस्य स्वेनानिषेधे तवाप्यनवस्थापत्तिः। शब्दमात्रनिषेधानुभवविरोधश्च। यद्यपि बाधकज्ञानं वृत्त्युपरक्तचैतन्यरूपं स्वतः सत्यमेव। तथापि तदवच्छेदिकाया वृत्तेर्दृश्यत्वेन मिथ्यात्वाद् बाधोपपत्तिः।

ननु बन्धस्यात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वे तदभावार्थं यत्नो न स्यात्। अत्यन्ताभावस्यासाध्यत्वात्, अत एव न तत्प्रतीत्यभावार्थमपि यत्नः। तस्या अपि मिथ्यात्वाद्; अन्यथा मोक्षेऽपि बन्धप्रतीत्या तद्दशायामपि प्रातिभासिकबन्धापातात्। अथ पारमार्थिकत्वाकारेण मिथ्यात्वं, स्वरूपेण तु निवृत्तिरेव, न। तस्याः स्वरूपाबाधेनाप्युपपत्तेरिति चेन्न। सत्यस्य ब्रह्मणो निवृत्त्यदर्शनेन स्वरूपतो मिथ्यात्वाभावे निवृत्त्ययोगात् मिथ्यात्वं निवृत्त्यनुकूलमेव। न च तदर्थं प्रवृत्त्यनुपपत्तिः, अधिष्ठानसाक्षात्कारानन्तरं तथैव। ततः पूर्वं तु कण्ठगतविस्मृतचामीकरप्राप्तय इव भ्रमबाधकज्ञानोत्पत्तये प्रवृत्त्युपपत्तेः। अत्यन्ताभावाधिकरणे च प्रतियोगि-वत्तन्निवृत्तिरप्युपपादितैव। न च– त्रैकालिकनिषेधप्रतियोगिनि तुच्छे निवृत्तिर्न दृष्टेति कथं तादृशि प्रपञ्चे सा स्यादिति वाच्यम्। यथाकथंचित् सजातीयेऽदर्शनस्याप्रयोजकत्वात्।

(अद्वैतसिद्धिः)

अन्यथा अनुत्पन्ने निवृत्तिर्न दृष्टेति प्रागभावोऽपि न निवर्तेत। तस्मात् स्वभावविशेष एव तुच्छनित्यविलक्षणो निवृत्तिप्रयोजक इति वाच्यम्। सा च निवृत्तिरधिकरणस्वरूपेति पक्षे घटनाशार्थं मुद्गरपातादाविव मननादौ प्रवृत्तिरूहनीया। अतिरिक्तेति पक्षे त्वनिर्वचनीया, पञ्चमप्रकारा चरमवृत्तिरूपा वा सा, सर्वथा जन्यैवेति न काऽप्यनुपपत्तिः।

ननु बन्धस्य ब्रह्मण्यध्यस्तत्वे तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यत्वं श्रवणादि-नियमादृष्टसापेक्षब्रह्मज्ञाननिवर्त्यत्वं च न स्यात्। न हि देवतानिदिध्यासनसाध्यतत्साक्षात्कार-निवर्त्यं दुरितं तत्राध्यस्तम्। न वा दूरगमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यं दुरितं तत्राध्यस्तमिति चेन्न। आत्माध्यस्तगौरत्वादेः, शुक्त्याद्यध्यस्तरूप्यादेश्च तत्तत्साक्षात्कार-निवर्त्यत्वदर्शनेन प्रपञ्चस्यापि ब्रह्मण्यध्यस्ततया तत्साक्षात्कारनिवर्त्यत्वस्यावश्यकत्वात्। न हि शुक्त्याद्यध्यस्तं रूप्यादि शुक्त्यादिज्ञानं विना निवर्तते। देवतादर्शनादिना तु प्रायश्चित्तसमकक्ष्येण दुरितस्य कारणात्मनाऽवस्थानमात्रं क्रियते, न तु शुक्तिज्ञानेन रूप्यस्येव निवृत्तिः। अधिष्ठानाज्ञानरूपोपादानकस्यारोपितस्य तन्निवृत्तिं विना निवृत्त्ययोगात्। अज्ञाननिवृत्तिश्चाधिष्ठानज्ञानादेवेत्युक्तं प्राक्। श्रवणादिनियमादृष्टं च न मुक्तिं प्रति कारणं किन्तु ब्रह्मापरोक्ष्यं प्रति।

ननु– अवघातसाध्यवैतुष्यान्यापूर्वस्येव श्रवणादिसाध्यापरोक्ष्यान्यमुक्तेरेव तत्साध्यत्वम्। अन्यथा श्रवणनियमादृष्टसाध्ये साक्षात्कारे श्रवणनिरपेक्षस्योपायान्तरस्याप्रसक्त्या तत्प्रसक्त्यधीननियमविध्ययोगात्। न च– परोक्षज्ञानं श्रवणाद्, अपरोक्षं तु नियमादृष्टादिति युक्तम्। वणादिविधौ परोक्षज्ञानप्रवाहरूपनिदिध्यासनसाध्यापरोक्षस्यैव दृशिनोद्देशात्। त्वन्मते परोक्षज्ञाने कामनाया अयोगेन तस्योद्देश्यत्वायोगाच्चेति चेन्न। तत्र क्रत्वर्थस्य नियमापूर्वस्य परमापूर्वसाधकत्वेऽपि पुरुषार्थहिरण्यधारणादिनियमादृष्टस्य तदभाववत् श्रवणादिसाध्य-साक्षात्कारान्यफलाभावेऽपि तेनैव फलवत्त्वोपपत्तेः। 'सर्वापेक्षा च यज्ञादिश्रुतेरश्वत्' इति न्यायात्, 'सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते' इति स्मृतेश्च। अत्र सर्वाखिलपदाभ्यां कर्मशब्दवाच्यापूर्वमात्रस्य ज्ञाने समाप्तिर्दर्शिता। मोक्षस्याविद्यानिवृत्तिरूपस्य ज्ञानातिरिक्ता-साध्यत्वनियमाच्च। ज्ञाने त्वसंभावनादिनिवृत्त्या प्रतिबन्धकदुरितनिवृत्त्या च दृष्टादृष्टांशोपयोगः। सामान्यपुरस्कारेण च प्रसक्तस्य साधनान्तरस्य निवृत्तिः सर्वत्र नियमविधेः फलम्। विशेषरूपेण त्वपूर्वविधित्वमेव। यथा हि 'व्रीहीनवहन्ति' इत्यादावपूर्वसाधनीभूतव्रीहिवैतुष्ये

(अद्वैतसिद्धिः)
(विशिष्य) अवघातातिरिक्तसाधनान्तराप्रसक्तावपि व्रीहिवैतुष्यमात्रे प्रसक्तस्य नखविदलनादेर्निवृत्तिः, विशिष्य कार्यकारणभावबोधनात्, तथा निर्विशेषब्रह्मात्माभेदसाक्षात्कारप्रतिबन्धनिवृत्तौ श्रवणाद्यतिरिक्तसाधनान्तराप्रसक्तावप्यात्मज्ञानमात्रप्रतिबन्धनिवृत्तौ साङ्ख्यादिशास्त्रस्यापि प्रसक्तेः, तन्निवृत्तिर्विशिष्य वेदान्तवाक्यविचारविधानादिति परमगम्भीरोऽयं ग्रन्थार्थः।

ननु– यदि विश्वं कल्पितं स्यात्, तदा 'जन्माद्यस्य यतः' इति सूत्रे, 'यतो वा इमानि' इत्यादिश्रुतौ च जन्माद्युक्तिः, 'ईक्षतेर्नाशब्दम्' इति सूत्रे, 'तदैक्षत' इत्यादिश्रुतौ च ईश्वरस्येक्षापूर्वककर्तृत्वोक्तिः, 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रे, 'आप्तकामस्य कास्पृहा'त्यादिश्रुतौ च प्रयोजनाभावेऽपि लीलया सृष्ट्याद्युक्तिः, 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति सूत्रे 'पुण्येन पुण्यं लोकं नयति' इत्यादिश्रुतौ च कर्मसापेक्षत्वेनावैषम्योक्तिः, 'तेजोऽतस्तथा ह्याह' इति सूत्रे, 'वायोरग्निः' इत्यादिश्रुतौ च तेज आदेर्वाय्वादिजन्यत्वोक्तिः, 'विपर्ययेण तु क्रमोऽत उपपद्यते च' इति सूत्रे, 'पृथिव्यप्सु प्रलीयते' इत्यादिस्मृतौ च पृथिव्यादीनामबादौ लयोक्तिरित्याद्ययुक्तं स्यात्। न हि कल्पिते तत्तद्विरोधशङ्का तन्निराकरणं च युक्तमिति चेन्न। प्रपञ्चस्य कल्पितस्यापि व्यावहारिकसत्त्वाभ्युपगमेन तद्दशायां विरोधशङ्कातत्परिहारयोरुचितत्वात्। इन्द्रजालादावध्यस्तेऽप्यैन्द्रजालिकादेरीक्षापूर्वक स्रष्टृत्वादेर्दर्शनाच्च। यथा च कल्पितस्यापि जन्माद्युपपत्तिस्तथाऽनिर्वचनीयवादे वक्ष्यते। स्वप्नेऽपि सृष्ट्यादेः श्रुत्या प्रतिपादनाच्च। अध्यस्तस्यापि सर्पस्य भयकम्पादिजनकत्ववत् वाय्वादीनां तेजआदिजनकत्वमप्युपपन्नम्। 'तदभिध्यानादेव तु तल्लिङ्गात्सः' इति सूत्रे च तत्तद्भावापन्नस्य ब्रह्मण एव कारणत्वाभिधानात्। अबादौ पृथिव्यादिलयोक्तिरपि तत्तद्भावापन्नचैतन्ये व्याख्येयेति नाधिष्ठानातिरिक्ते लयोक्तिः। वैषम्यनैर्घृण्यप्रयोजनादिशङ्कापरिहारादिकं तूपासनावस्थायाम्। भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्' इति आपाततः परिणामवादाभ्युपगमेन। 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति तु विवर्तवादे परमसिद्धान्तदशायां न शङ्का न चोत्तरम्। मायाविन इवेश्वरस्य स्वप्रतिबिम्बभूतजीवभ्रमयितृत्वेन सर्वविरोधनिरासोपपत्तेः।

ननु– ईश्वरस्यापि सपरिकरस्य जीवेनाध्यस्तत्वात् कथं भ्रमयितृत्वम्? न अविद्योपहितचित एवानादेरीश्वरत्वेनान्तःकरणोपहितजीवकल्पितत्वायोगात्। जीवकल्पित-

(अद्वैतसिद्धिः)

त्वपक्षेऽपि तादृग्धर्मविशिष्टतयैव कल्पनेन तस्य भ्रमयितृत्वाद्युपपत्तेः। 'परिकल्पितोऽपि मरणाय भवेदुरगो यथा न तु नभो मलिनम्' इति न्यायात्। ननु न जीवानां वाय्वादिभ्योऽग्न्याद्युत्पत्तिरिति भ्रमोऽस्ति, यः स्वाप्नभ्रम इव श्रुतेरालम्बनं स्यात्। न च भ्रान्तिं विना कल्पितमस्ति। न चैतद्वाक्यजभ्रान्तिकल्पितमेव एतद्वाक्यालम्बनम्। वेदस्य भ्रमजनकत्वप्रसङ्गात्। अनुवादे तु न दोषः। न चेश्वर एव तत्कल्पकः। तस्य भ्रान्तत्वप्रसङ्गात्। तदभ्युपगमेऽपि न निस्तारः। भ्रान्तेर्देहेन्द्रियादिकार्यत्वात्। तेषां च पृथिव्यादिकार्यत्वात्। पृथिव्याद्युत्पत्तेः प्राक् भ्रान्त्ययोगादिति चेन्न। भ्रान्तिमात्रे देहेन्द्रियाद्यपेक्षायाः प्रागेव निरासात्। ईश्वराध्यस्तवाय्वादिहेतुकाग्न्याद्युत्पत्त्यालम्बनत्वेन वेदस्य भ्रमाजनकत्वाद्। अध्यस्तस्य चाध्यस्तत्वेन स्फुरणान्न मायाविन इव ईश्वरस्य भ्रान्तत्वप्रसङ्गः। न चाध्यस्तत्वे उत्पत्त्याद्यनुपपत्तिः। अनध्यस्तस्य काप्युत्पत्त्याद्यदर्शनेनाध्यस्तत्वस्यैव तदुपपादकत्वात्। सत्कार्यवादासत्कार्यवादनिषेधेनानिर्वचनीयकार्यवादमात्रे कार्यकारण-भावपर्यवसानात्। तदेवं कृत्स्नस्य प्रपञ्चस्याद्वैते ब्रह्मणि कल्पनोपपत्तेर्न प्रतिकूलतर्कपराहतिः।

इत्यद्वैतसिद्धौ ब्रह्मणि प्रतिकूलतर्कनिराकरणम्॥

## न्यायामृततरङ्गिणी

**॥विश्वमिति॥ मिथ्यात्वानुमाने यः पक्षः स एवेहविश्वशब्देनाभिमतः ॥साधिष्ठानेति॥ सामान्यतो ज्ञातत्वे सति विद्यमानविशेषवत्तयाऽज्ञायमानधर्मिमत्स्यादित्यर्थः। आदिपदेन प्रधानादिकम्। अत्र च प्रत्येकं तर्का अभिमता इति न वैयर्थ्यमिति ध्येयम्। प्रथमे अप्रयोजकत्वं निरस्यति ॥भ्रांतेरिति॥ सदृशमित्यधिष्ठानेन संबध्यते। सत्यमित्यधिष्ठानादिना। सत्यत्वं च कल्पिताधिकसत्ताकत्वम्। अतो न दृष्टांतासिद्धिः। आदिशब्देन देशकालादृष्टादि। यथाश्रुते प्रथमतर्के आपाद्यस्येष्टत्वं परिहरति ॥निःसामान्य इति॥ ॥कात्स्न्र्येनेति॥ ॥विशेषवत्त्वेनापीत्यर्थः ॥अज्ञान इति॥ समान्यतोऽपीत्यर्थः ॥ज्ञातेति॥ सामान्यविशेषाभ्यामिति शेषः ॥तच्चेति॥ स्वरूपज्ञानं स्वप्रकाशत्वाद्विशेषाज्ञानं निर्विशेषत्वादस्तीत्यर्थः ॥संस्कारेति॥ संस्कारसंप्रयोगदोष- रूपकारणत्रयजन्यत्वादित्यर्थः। ननु भ्रमस्य संस्कारजन्यत्वमधिष्ठानस्वरूपाज्ञानजन्यत्वेनापि निर्वक्ष्यतीत्यत आह ॥सामान्येति॥ ॥असदिति॥ तथा च बाधकालव्यावृत्तं विशेषाज्ञानं तथा वक्तव्यम्। तच्च सद्विशेषाणामेवेत्यर्थः।**

(तरङ्गिणी)

ननु न सत्सामान्यविशेषज्ञानाज्ञाने भ्रमहेतू। सत्त्वांशप्रवेशोऽप्रसिद्धेः। गौरवाच्च। कल्पितसामान्यविशेषवत्त्वं च ब्रह्मण्यपि सुलभमेव। न च तत्कल्पनेऽन्योन्याश्रयः। कल्पितसामान्यविशेषाणां प्रवाहानादित्वात्। सत्त्वानंदत्वादीनामेव कल्पितव्यक्तिभेदेन सामान्यत्वात्। परिपूर्णानंदत्वादीनां च विशेषत्वात्। अत एव संस्कारो- द्बोधोऽपीति चेन्मैवम्। न ह्यधिष्ठानचिन्मात्रस्य सत्त्वपरिपूर्णानंदत्वादीनां निर्विशेषब्रह्मबादे विशेषोऽस्ति। येनाधिष्ठानस्फुरणेऽपि तेषामज्ञानं। तस्मादधिष्ठानज्ञाने सति न विशेषाज्ञानं, तस्मिंश्च नाधिष्ठानज्ञानमित्युभयथाऽपि न भ्रम इति भावः ॥वल्मीक इति॥ प्रथमं बल्मीके स्थाणुत्वभ्रमः। अनंतरं तत्रैव पुंस्त्वभ्रमः। अनंतरं तत्रैव वल्मीकत्वप्रम। तया प्रमया प्राचीनं भ्रमद्वयं निवर्तते। प्रमायाः स्वविरोधिभ्रममात्रनिवर्तकत्वादित्यर्थः ॥अंतत इति॥ चरमं गत्वाऽपीत्यर्थः ॥भ्रमेति॥ पुंस्त्वज्ञानस्य वल्मीके स्थाणुत्वभ्रमनिवर्तकत्वेऽपि भ्रममात्रनिवर्तकत्वं तत्र तस्य नास्त्येव। पुंस्त्वज्ञानस्यापि वल्मीके भ्रमत्वात्। तेन च तदनिवर्तनादिति भावः। नन्वधिष्ठानगतविशेषप्रमैव भ्रमविरोधिनीति तदभाव एव हेतुः स्यादित्यत आह ॥विश्वभ्रमेति॥ अस्येति॥ मुख्याज्ञानविरोधिन्या वृत्तेः मुख्यज्ञानत्वस्य चिद्रूपज्ञानाविरोधिनो वा अमुख्याज्ञानत्वस्य वाऽपातादित्यादेर्वक्ष्यमाणत्वादित्यर्थः ॥तत्तेदंते इति॥ एतच्च दृष्टांतार्थमुक्तं। ननु स्वत्वान्यत्वयोर्भेदग्रहेपि नात्मानात्मनोस्तद्ग्रह इत्यत आह ॥स्वयमिति॥ ॥प्रकाशमात्रेति॥

नन्वेकस्यैवानंदाद्यात्मना तिरोहितस्य सदात्मना प्रकाश उपपत्स्यते। तदुक्तं वार्तिके– 'यत्प्रसादादविद्यादि सिध्यतीव दिवानिशम्। तमप्यपह्नुतेहविद्या न ज्ञानस्यास्ति दुष्करम्' ॥ इतीति शंकापरिहारार्थमुक्तम् ॥मात्रेति॥ प्रकाशमात्रस्वभावे निर्विशेष आत्मनि सत्त्वानंदयोः प्रकाशाप्रकाशयोरयोगादिति भावः ॥घटादीति॥ इदमंशानुविद्धतया रजतस्येवात्मा घट, इति तदनुविद्धतया प्रतीत्यभावादिति भावः ॥सन्निति॥ सत्स्फुरणयोरात्मरूपत्वादित्यर्थः ॥चाक्षुषादीति॥ ध्वस्तो घटो रूपी घट इत्यादिवत् घट एव सत्ता प्रतीयते। न तु सदनुवेधो घटस्येति भावः। ननु रूपादिहीनस्याप्यात्मनः सद्रूपेण चाक्षुषादिज्ञानविषयता भविष्यतीति चेन्न। घटज्ञानादेव मोक्षापातादित्युक्तत्वात्। निर्विशेषे प्रकारभेदाभावाच्च। तदिदमुक्तमित्युक्तम् ॥इत्युक्तत्वादिति॥ ननु नात्मा चाक्षुषादिज्ञाने भातीति ब्रूमः। किंतु स्वत एव सन्निति स्फुरति तदनुविद्धतया च घटोऽपीति शंकां परिहरति ॥न चेति॥ ॥घटस्येति॥ प्रकाशमानचैतन्यसंबंधादिति भावः ॥वृत्तीति॥ न चावरणनिवृत्त्यर्थं वृत्तिरिति

(तरङ्गिणी)

वाच्यम्। तथात्वेऽधिष्ठानप्रकाशायोगात्। प्रकारभेदस्तु निरस्त इति भावः ॥घट इति॥ यथा देवदत्तः पचतीत्यत्र देवदत्तकर्तृकपाकः प्रतीयते न तु पाकानुविद्धतया देवदत्तः तथा घटः स्फुरतीत्यत्रापि क्रियाश्रयभूतघटकर्तृकस्फुरणं प्रतीयते, न तु स्फुरणानुविद्धतया घट इत्यर्थः।

विश्वं यदि कल्पितं स्यात् तदा सप्रधानं स्यादिति द्वितीयतर्के व्याप्त्यभावं शंकते ॥नन्विति॥ ॥प्रधानमिति॥ ॥सजातीयमित्यर्थः॥ भ्रमेति॥ देशांतरे विद्यमानस्य तस्य कारणप्रत्यासत्तिरूपसमवधानाभावादिति भावः ॥स चेति॥ संस्कारो नार्थजन्यः। येन प्रधानमावश्यकं भवेत्। किं त्वर्थज्ञानजन्यः। ज्ञानं च प्रमेव भ्रमोऽपीत्यर्थः ॥प्रमाजन्य इति॥ प्रमात्वार्थं विषयसत्त्वमावश्यकमिति भावः। ननु न भ्रमे प्रधानमारोप्यजातीयमपेक्षते। अपि त्वारोप्यमेव। तच्च देशांतरे सदेव वाच्यम्। असतः शशविषाणादेरनारोपादित्याशंक्य परिहरति ॥न चेति॥ अध्यस्तं भ्रमे प्रतीतम् ॥देशांतरेति॥ तव मते असत्त्वात्। मम मते अनिर्वचनीयत्वादित्यर्थः ॥ एवमिति॥ संस्कारसत्त्वे प्रधानतत्प्रमयोरिवाधिष्ठानसत्त्वेऽप्यधिष्ठान-व्यतिरेकेण भ्रमव्यतिरेकस्यादर्शनादित्यपि वक्तुं शक्यमित्यर्थः। नन्वधिष्ठानस्य ज्ञानद्वारा भ्रमाहेतुत्वेऽज्ञानद्वारा भ्रमहेतुत्वेन तत्सत्वनियमः। भ्रमोपादानाज्ञानविषयो ह्यधिष्ठानमित्युच्यते। तच्च सत्यमेव। असत्यस्य सर्वस्याज्ञानकल्पितत्वेनाज्ञानाविषयत्वादिति चेत्, मैवम्। ज्ञानवदज्ञानस्यापि वस्तुसद्विषयं विनैव पूर्वकल्पितविषयादिमत्त्वोपपत्तेः। अस्यास्मिन्नज्ञानमितिवत् ज्ञानेऽपि द्वयप्रतीतेस्तुल्यत्वादिति। नन्वधिष्ठानस्यासत्त्वे तद्बाधापत्तिः। तज्ज्ञानस्य भ्रमाबाधकत्वप्रसंगाज्जगति भ्रमबाधव्यवस्था न स्यात्। बाधेन हि किंचिद्विरुद्धं तत्त्वमुपदर्शयता आरोपितमतत्त्वं बाधनीयम्। उभयसाम्ये तु किं केन बाध्येतेति शंकां परिहरति ॥ अधिष्ठानेति॥ तथा चाधिष्ठानवत्प्रधानस्यापि सत्त्वं स्यादित्यर्थः। भ्रमबाधव्यवस्था तु त्वन्मत एवानुपपन्ना। तथाहि। तत्त्वशब्देन किं स्वरूपमेव वा असाधारणधर्मो वा अबाधितं वा? नाद्यः। तस्य भ्रमेऽपि प्रकाशात्। न द्वितीयः। जगद्बाधे त्वन्मते तदभावात्। न तृतीयः। अन्योन्याश्रयात्। त्रिचतुरकक्ष्यास्वर्थक्रियानिर्वोढत्वेन स्वप्नबाधवदस्यापि बाधकत्वमुपपन्नम्। उभयसाम्यमाधिक्यं वा बाधकत्वेन प्रयोजकम्। विषयतो न्यूनस्यापि बाधकत्वात्परीक्षाया न्यूनत्वस्यासिद्धेः। तस्मात्, प्रधानस्यानपेक्षायामधिष्ठानं सिध्यति। भ्रमे नृप इवेत्येतत्संगृह्णीते तथेति गीः

॥एतत्प्रपंचेति॥ प्रपंचांतरसत्त्वे तु एतत्प्रपंचासाध्यत्वेन संभाविता याऽर्थक्रिया श्रुत्यादिसिद्धोत्पत्त्यादिकं च प्रपंचांतरविषयमेव स्यात्। शुक्तिरूप्येऽसंभाविताया अर्थक्रियाया आपणस्थरूप्यविषयत्ववत्। प्रपंचांतराभावे तु एतस्यैव प्रपंचस्य संभावितार्थक्रिया

(तरङ्गिणी)

श्रुत्यादिसिद्धोत्पत्त्यादिकं च स्यात्। तथा च श्रुतिसिद्धस्यात्मन इव निषेधायोगेन स्वोपाधौ सत्त्वापातादित्यर्थः। साध्या साधनार्हा। आत्मन इति श्रुतिसिद्धत्वमात्रे दृष्टांतः। एवं तर्हि नेहनानेति निषेधो निर्विषयः स्यादित्यत आह ॥त्वन्मत इति॥ प्रतीतिकाले सत्त्वेन शुक्तौ रूप्यस्य तत्र त्रैकालिकनिषेधायोगाद्यथा नेदंरजतमिति निषेधस्य कांताकरकलितकलधौतविषयत्वं तथा श्रुतिसिद्धोत्पत्त्यादिकस्य प्रपंचस्य नेहनानेति श्रुत्या निषेधायोगेन तथा निषेद्धुं प्रपंचांतरं सत्यमावश्यकमित्यर्थः ॥पारमार्थिकेति॥ निषेधस्य प्रसक्ताधिकसत्ताकनिषेध्यविषयत्वस्य रूप्यनिषेधे दर्शनादित्यर्थः। ननु 'न तत्र रथा रथयोगा न पंथानो भवंति अथ रथान् रथयोगान् पथस्सृजते' इति श्रुतिसिद्धोत्पत्तिकस्यापि स्वप्नस्य स्वरूपेण निषेध इव प्रपंचस्यापि तथा भविष्यतीत्यत आह ॥प्रातिभासिकस्यैवेति॥ स्वप्नस्य रूप्यस्य चेत्यर्थः। स्वरूपेणानिषेधे त्वदभिमतस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वस्यासिद्धेः। पारमार्थिकत्वाकारेण निषेधे विशेष्यवति विशिष्टनिषेधस्य विशेषणनिषेधपर्यवसन्नतया ब्रह्मवत्पारमार्थिकत्वरूपधर्मरहितस्यापि प्रपंचस्य स्वरूपेण सत्यत्वोपपत्तिः। न चास्मिन्पक्षे ज्ञाननिवर्त्यत्वेन मिथ्यात्वम्। तथाप्यनित्यत्वमेव स्यान्न मिथ्यात्वमित्यादिना मिथ्यात्वनिरुक्तिभंगे निरस्तमित्यर्थः ॥अनन्येति॥ बालस्याद्यप्रवृत्तिहेत्विष्टसाधनताज्ञानस्य जन्मांतरीयसंस्कारप्रयोज्यत्ववदस्यापि भ्रमस्य जन्मांतरीयसंस्कारप्रयोज्यत्वम्। कार्योन्नेयधर्माणां यथा कार्यमुन्नयनादिति भावः। सति गत्यंतरे जन्मांतरीयसंस्कारादि न कल्प्यमित्यत आह ॥यद्वेति॥ गृह्यमाणेति॥ आस्यगतपित्तद्रव्यनिष्ठतिक्तिमानं गृहीत्वा गुडे आरोपयंतीत्यर्थः ॥न त्विति॥ आरोप्यस्यानुभवत एवोपस्थित्या सोपाधिकारोपविशेषे गृह्यमाणारोपे संस्कारस्यानपेक्षणादिति भावः। प्रधानस्य भ्रमहेतुत्वमनंगीकर्तुं संस्कारस्य तथात्वमंगीकृतं। तत्र प्रधानकार्यकारिणः संस्कारस्य सत्त्वं स्यादित्याह ॥किंचेति॥ नन्वध्यस्तादपि संस्कारात् भ्रमसंभवेन तत्सत्त्वमावश्यकमत आह ॥चैत्रेणेति॥ ननु अन्येनारोपितस्य संस्कारस्य स्वस्मिन् भ्रमाहेतुत्वेऽपि स्वेन स्वस्मिन्नारोपितस्य संस्कारस्य स्वस्मिन् भ्रमहेतुत्वं स्यादेवेत्याशंक्य निराकरोति ॥न चेति॥ तत्र स्वस्मिन् शुक्तिरूप्यस्य कुंडलादीन्प्रतीव चैत्राध्यस्तसंस्कारस्य मैत्रभ्रमं प्रत्यजनकत्वेऽपि वणिग्वीथिस्थरूप्यस्य कुंडलादीन्प्रतीव स्वेनाध्यस्तसंस्कारस्य वियदाद्यध्यासजनकत्वं भविष्यतीत्यर्थः ॥भ्रमादिति॥ भ्रमात्पूर्वं संस्कारस्य नियतप्रतीत्यभावेन तत्सत्त्वे मानाभावादित्यर्थः। ननु व्यावहारिकत्वात्संस्कारस्य प्रतीत्यभावेऽपि सत्त्वमस्त्वित्यत आह ॥कार्येति॥ घटादीनां सत्त्वेऽपि स्मृत्यादिकार्यानुमेयसंस्कारसत्त्वे मानाभाव इत्यर्थः। ननु जगद्भ्रम एव तत्कार्यं तदनुमास्यतीति चेन्न। जगतः सत्त्वेनोपपत्त्या तद्भ्रमस्यासिद्धेरिति भावः।

(तरङ्गिणी)

ननु यदि विश्वं कल्पितं स्यात् प्रधानसदृशाधिष्ठानकं स्यादिति तर्के इष्टापत्तिं व्यभिचारं च आशंक्य परिहरति ॥यत्तूक्तमिति॥ विवरण एवान्यत्राप्युक्तम्– निरुपाधिभ्रमदर्शनमेव गुणावयवसामान्याभावेऽपि केतकीगंधसदृशः सर्पगंध इतिवत् सादृश्यांतरं वा, शंखपीतिमादाविव सादृश्यांतरं वा कल्पयतीति। यद्यप्येतदधिष्ठानप्रसंगे पूर्वं वक्तव्यं तथापि सादृश्यस्य प्रधानाधिष्ठानसंबंधित्वादुभयनिरूपणांते उक्तमिति न दोषः ॥सादृश्यांतरमिति॥ गुणादिरहिते गंधादौ गुणादिकृतसादृश्यात् भिन्नं सादृश्यं यथा तथा ब्रह्मण्यपीत्यर्थः ॥रक्त इति॥ तत्रैव सादृश्यस्य व्यभिचार इत्यर्थः ॥इहेति॥ अध्यासाधिष्ठाने ब्रह्मण्यविद्याध्यासात्पूर्वमविद्यास्वरूपासिद्ध्या तदधीनसादृश्यस्याभावादित्यर्थः ॥अन्योन्येति॥ अध्यासेनाविद्यायां सिद्धायां तदधीनसादृश्यसिद्धिः, तत्सिद्धौ चाविद्याध्यास इत्यर्थः। व्यभिचारं परिहरति ॥निरुपाधिक इति॥ प्रकृतेऽपि कल्पितशब्देन सोपाधिकभिन्नभ्रमस्यैव विवक्षितत्वादिति भावः। न च पीतः शंख इत्यादौ निरुपाधिकेऽपि व्यभिचार इति वाच्यम्। शुक्लवस्तुषु परिसर्पन्नयनगतपित्तपीतस्यैव शंखे ग्रहणेन तस्य गृह्यमाणारोपत्वात्। स्वनयनगतपित्तस्य स्वं प्रत्येवोपाधित्वात् नान्यस्य तथा भ्रम इति बोध्यम्।

सामान्येऽपि न व्यभिचार इत्याह ॥रक्तेति॥ ननु प्रधानमात्रवृत्तितया प्रागवगतमध्याससमये चाधिष्ठानवृत्तितया गृहीतं च यत् तदेव हि सादृश्यविपर्ययप्रयोजकमिति वाच्यम्। न तु प्रागेव प्रधानाधिष्ठानोभयवृत्तितया गृहीतम्। तस्य सांशयिकत्वेन द्रव्यत्वादि च प्राक् लोहितालोहितवृत्तितया गृहीतमिति न विपर्ययप्रयोजकमिति। मैवम्। सादृश्यं न स्वतो भ्रमहेतुः। मानाभावात्। किंतु संस्कारोद्बोधकतया सामग्रीसंपादकत्वेन। तदुद्बोधश्चादृष्टादिनेव द्रव्यत्वादिरूपसादृश्यादपि भवत्येव। तदुक्तं– सदृशादृष्टचिंताद्याः स्मृतिबीजस्य बोधका इति। चिंतादिकं च प्राणिधानसूत्रे व्याख्यातम्।

यदि विश्वं कल्पितं स्यात्तदा सत्यदोषयुक्तं स्यादिति तर्के अप्रयोजकत्वं निरस्यति ॥न चेति॥ आदिशब्देनासंसर्गाग्रहः ॥अप्रामाण्यस्येति॥ ज्ञानसामान्यसामग्र्यामागंतुककारणस्य दोषस्याप्रवेशादित्यर्थः। यदि विश्वं कल्पितं स्यात् द्रष्टृमत्स्यादिति तर्के व्याप्तिमुपपादयति ॥एवमिति॥ पाठक्रमानुरोधेन यद्यपि बाधकज्ञानघटितं तर्कमुपपाद्य द्रष्टृघटिततर्क उपपादनीयः। तथाप्यधिष्ठानादिभ्रमकारणनिरूपणप्रस्तावे अनीदृशबाधकज्ञानमुपेक्ष्य अर्थक्रममनुरुध्येदमुक्तमिति ध्येयम् ॥समानेति॥ निवर्तकप्रमाविरहे भ्रमस्य भ्रमत्वासिद्ध्यापातादित्यर्थः।

(तरङ्गिणी)

॥एवमिति॥ देहघटित इंद्रियघटितश्चेति द्वौ तर्कौ बोध्यौ। ननु देहेंद्रियादिकं विनाऽपि न भ्रमानुपपत्तिः। अधिष्ठानापरोक्षत्वं ह्यपरोक्षभ्रमे कारणम्। तद्यत्राधिष्ठानं स्वतो नापरोक्षं, यथा शुक्त्याद्यवच्छिन्नचैतन्यं, तत्र तदपरोक्षत्वार्थं देहेंद्रियाद्यपेक्षा। प्रकृते चनवच्छिन्न-चैतन्यमधिष्ठानम्। तत्र चैतन्यस्य स्वप्रकाशत्वेनाविद्यायास्तदध्यस्तत्वेन तेनैव साक्षिणा अपरोक्षत्वात्। कुत्र देहेंद्रियाद्यपेक्षेति चेन्न। न ह्यधिष्ठानापरोक्ष्यमधिष्ठानगतामेव भ्रांतिमुत्पादयतीति कुत्रापि दृष्टम्। किंतु तद्भिन्नस्य प्रमातुरधिष्ठानविषयिणीम्। तस्य चाधिष्ठानापरोक्ष्याय देहादिकमपेक्षितमेव। तमःप्रकाशयोः सामानाधिकरण्यवदाश्रयाश्रयिभावस्याप्यदर्शनेन स्वयंप्रकाश-चैतन्यस्याज्ञानाध्यासानधिष्ठानत्वाच्चेति ॥प्रलय इति॥ ननु प्रलये देहेंद्रियादिसर्जनविलंबहेतुनैव भ्रमविलंबः। अन्यथा तदा देहेंद्रियादिकमपि कुतो नोत्पद्येतेति चेन्न। देहादेर्भूतादिकारणविलंबेन विलंबसंभवात्। अज्ञानमात्रनिदानकाध्यासस्तु स्यादेव। इष्टापत्तिं परिहरति ॥न चेति॥ ॥करणेति॥ ज्ञानकरणेत्यर्थः। करणादीनां तु दोषादिसमं सत्त्वमित्यर्थः। व्यावहारिकसत्त्वे दोषमाह ॥दोषेति॥ अन्योन्येति॥ जगदध्यासे सिद्धे तस्य व्यावहारिकत्वेन तन्मध्यवर्तिनो रूप्यभ्रमहेतोर्दोषादेर्व्यावहारिकसत्त्वसिद्धिः, तत्सिद्धौ तद्दृष्टांतेन जगदध्यासहेतोर्दोषस्यापि व्यावहारिकस्य भ्रमहेतुतोपपत्तौ जगदध्याससिद्धिरित्यर्थः। ननु रूप्यादिभ्रमहेतुदोषस्य सत्यत्वग्राहकविरह एव तस्य व्यावहारिकसत्त्वसाधकः। अतो नान्योन्याश्रय इत्यत आह ॥पारमार्थिकेति॥ सत्यत्वसाधके सति रूप्यादिधीहेतुदोषस्य यद्व्यावहारिकत्वकल्पनं तज्जगदध्यासनिबंधनमेवेत्यन्योन्याश्रय इत्यर्थः। करणादिसमं सत्त्वं तंत्रमित्यत्र दोषमाह ॥इहेति॥ रूप्यादिप्रतीतौ करणसंभवेन तत्र दोषादेर्ज्ञानकारणसमसत्त्वसंभवेपि अज्ञादिप्रतीतेर्नित्यतया तदसंभव इत्यर्थः। करणसमसत्वांगीकारेपि जगदध्यासहेतुदोषस्य तात्त्विकत्वमायातीत्याह ॥रूप्यादीति॥ इहेति॥ जगदध्यासाधिष्ठानस्य ब्रह्मणः पारमार्थिकत्वेन तत्समसत्तया दोषादेस्तात्त्विकत्वापत्तिरित्यर्थः। ननु सर्वत्र चैतन्यस्यैवाधिष्ठानत्वेन कुत्रापि दोषादीनां नाधिष्ठानसमसत्ताकत्वमिति चेन्न। तथासति रूप्यस्य शुद्धचैतन्येऽध्यस्ततया घटादिवद्व्याव-हारिकत्वापातादिति। ननु जगदध्यासहेतुर्दोषादिस्तात्त्विको व्यावहारिको वा मा भूत्। अध्यासस्तु भविष्यतीत्यत आह ॥दोषादेरिति॥ अतात्त्विकेन चेति॥ दोषतदभावयोर्मिथ्यासत्ययोर्जगद्ज्ञाने सतोरपि सत्येनैव दोषाभावेन जगद्ज्ञाने प्रामाण्यं प्रयोजनीयम्। नतु मिथ्याभूतेन दोषेण तत्राप्रामाण्यमापाद्यमित्यर्थः ॥दुष्टतयेति॥ वेदे दोषाभावस्य सत्त्वेन बौद्धकल्पितमिथ्यादोषं तिरस्कृत्य वेदजन्यज्ञाने तस्य प्रामाण्यप्रयोजकत्वं यथा तथेत्यर्थः। ननु बौद्धकल्पितदोषस्य प्रातिभासिकस्य व्यावहारिकवेदापेक्षया अल्पसत्ताकत्वेन तदप्रामाण्याप्रयोजकत्वेऽप्यविद्याख्यदोषस्य

(तरङ्गिणी)

प्रपंचस्य च समसत्ताकत्वेन कार्यकारणभावनियमेन च कारणीभूताविद्याख्यदोषाभावे कार्यभूतद्वैतप्रपंचतद्विज्ञानयोरभावनियमेन नाविद्यामिथ्यात्वेन द्वैतज्ञानसत्यतापातः। मैवम्। व्यधिकरणत्वात्। दोषस्य मिथ्यात्वेन तदभावस्य तात्त्विकतया प्रपंचज्ञानप्रामाण्यस्याप्यापाद्यमानत्वे एतस्य व्यधिकरणत्वात्। प्रपंचमिथ्यात्वसिद्धेः प्राक् प्रातिभासिकपारमार्थिकयोरेव सत्त्वेन तृतीयप्रकारस्य व्यावहारिकस्यासिद्धेश्च।

अध्यस्तदोषस्य भ्रमहेतुत्वे बाधकांतरमाह ॥दोषादीति॥ ननु ईश्वरज्ञानस्य गुणाजन्यस्याप्यबाधितविषयत्वेन प्रमात्ववद्दोषाजन्यस्याप्यध्यासस्य बाधितविषयत्वेन भ्रमत्वं भविष्यतीत्यत आह ॥कस्यचिदिति॥ न ह्यावयोर्मते गुणजन्यत्वेन प्रमात्वम्। किंतु स्वत एव। तथा दोषाजन्यस्यापि बाधितविषयत्वेनाप्रमात्वे तस्य स्वतस्त्वापातः। दोषजन्यत्वं विना बाधितविषयत्वस्याप्यभावाच्च। बाधितविषयत्वे दोषजन्यत्वस्यैवावच्छेदकत्वात्। बाधितविषयत्वस्यैवाप्रमात्वात्। तस्य परतस्त्वानुरोधेन दोषजन्यत्वावश्यंभावात्– 'अत एवोक्तं शबरस्वामिना। यस्य च दुष्टं करणं यत्र मिथ्येति प्रत्ययस्स एव समीचीनो नान्यः' इति। दुष्टकरणजन्यत्वप्रयुक्तो यत्र मिथ्येति प्रत्यय इत्यर्थः। न तूभयमसमीचीनत्वनिमित्तमिति तदर्थः।

नन्वविद्याख्यदोषाध्यासोऽनादित्वात् दोषानपेक्ष एवास्तु। बाधितविषयत्वदोषजन्यत्वयोर्व्याप्तिस्तु साद्यध्यासावच्छिन्ना। न चाप्रामाण्यस्य स्वतस्त्वम्। जन्याप्रामाण्यस्यैव दोषजन्यत्वात्। स्वनिर्बाहकत्वेनाविद्यैव वा दोषोऽस्त्वित्याशंक्य आद्ये किमध्यासशब्दे नार्थो वा तज्ज्ञानं वेति विकल्प्य आद्यं निराकरोति ॥ततइति॥ अनादित्वेनान्यानपेक्षत्वात् मिथ्याभूतं स्वयमेव स्वाधिष्ठानं भविष्यतीत्यर्थः। द्वितीयं निराकरोति ॥विषयस्येति॥ अविद्यारूपार्थाध्यासस्यानादित्वेऽपि तत्प्रतीतेर्दोषापेक्षाऽस्त्येवेत्यर्थः। द्वितीयं निराकोति। स्वनिर्वाहकत्वेनेति॥ स्वस्मिन्स्वप्रकारके व्यवहारो स्वातिरिक्तानपेक्षत्वम् स्वनिर्वाहकत्वं। यथा प्रमेये प्रमेयमिति। एवमज्ञानांतरमंतरेणैवाज्ञानमज्ञातमिति व्यवहारो भवतु। स्वज्ञानं प्रति स्वस्य दोषत्वं तु न संभवति। कुत इत्यत आह ॥प्रतीतीति॥ अर्थप्रतीत्योरन्यूनानधिककालत्वम् प्रतितिकालमात्रत्वं। एवं च प्रतीतिं प्रति अर्थस्य पूर्ववर्तित्वे स्वस्मादपि स्वस्य पूर्ववर्तित्वमायातं। तच्चायुक्तमित्यर्थः ॥हेतुत्वेनेति॥ धीहेतुत्वेन त्वदंगीकृतेन प्राप्तमिति शेषः। अविद्याध्यासं प्रति अविद्याया हेतुत्वे तस्य विषयजन्यत्वेन प्रमात्वापात इत्यपि वोध्यम्।

तर्कांतरमुपपादयति ॥बाधकेति॥ अनवस्थाभयात् क्वचिद्बाधकज्ञानं सत्यं वक्तव्यमित्यर्थः। ननु वेदांतवाक्यजन्यचरमवृत्तेः कतकरजोन्यायेन स्वपरबाधकतया नानवस्था। दृश्यत्वमात्रेण

(तरङ्गिणी)

युगपत्कृत्स्नबाधसंभवात्। न हि गुहायां न शब्द इति शब्दः स्वं न निषेधति। अन्यथा स्वस्य स्वेनानिषेधे तवाप्यनवस्था स्यादिति चेन्न। दृश्यत्वस्य निषेध्यतावच्छेदकत्वे मानाभावात्। दोषजन्यत्वादेरतथात्वात्। दोषस्य च सत्यस्यैव जनकतया नाविद्याया दोषस्य तथात्वम्। स्वेन स्वस्य बाधे बाधकत्वाभिमतस्य बाध्यत्वापातेन विरोधाच्च। गुहायां न शब्द इत्यत्र तु शब्दमात्रनिषेधो विरोधाभावात्। शब्दत्वस्य निषेध्यतावच्छेदकस्य स्वस्मिन्नपि सत्त्वाच्च। जगदध्यासहेतुदोषादीनां व्यावहारिकत्वे दोषांतरमाह ॥रूप्यादीति॥ रूप्याद्यध्यासे दोषादीनां व्यावहारिकं सत्त्वं दृष्टमिति जगदध्यासेपि तथैवेति यदि कल्प्यते तदा रूप्याद्यध्यासे अधिष्ठानस्यापि व्यावहारिकमेव सत्त्वं त्वद्रीत्या दृष्टमिति जगदध्यासे अधिष्ठानस्यापि व्यावहारिकमेव सत्त्वं स्यादित्यर्थः ॥तत्रेति॥ रूप्याद्यध्यासे ॥इहेति॥ जगदध्यासे ॥अन्योन्येति॥ जगदध्यासहेतुदोषस्य मिथ्यात्वे तन्न्यायेन रूप्यभ्रमहेतुदोषस्य व्यावहारिकं सत्त्वं, अधिष्ठानस्य तु अधिष्ठानज्ञानाबाध्यसत्त्वमिति वैरूप्यं कल्प्येत। रूप्यभ्रमहेत्वोरधिष्ठानदोषाद्ययोरधिष्ठानज्ञानाबाध्य-व्यावहारिकसत्त्वकल्पनानंतरं तन्न्यायेन जगदध्यासेपि तन्न्यायेन तयोः सत्त्वकल्पनमित्यर्थः ॥लाघवेनेति॥ कतिपयाध्यासत्त्वापेक्षया अध्यासत्वस्य लाघवादित्यर्थः ॥प्रथमेति॥ सर्वाध्यासासिद्धेः प्रथमं रूप्याद्यध्यासे कतिपयत्वादिविशेषणानामव्यावर्तकतया तत्र तत्त्वेन प्रथममध्यासस्यैवोपस्थितत्वादित्यर्थः ॥तस्येति॥ दोषादिसत्त्वस्येत्यर्थः ॥अनुमानेति॥ अख्यातिवादापत्तिश्चेत्यपि बोध्यम् ॥संगृह्णाति॥ एवं चेति।

॥किंचेति॥ रूप्यादेर्बाधेनासत्त्वेपि तज्ज्ञाने बाधाभावात्सत्यत्वं यथा तथा जगतोऽसत्त्वेपि तज्ज्ञानं सत्यमेव स्यादित्यर्थः ॥अत्यंताभावस्येति॥ मिथ्याभूतप्रतियोगिकस्य च प्रध्वंसस्या-भावादित्यर्थः। उत्तरावधिविधुरत्वेन प्रागभाववद्यस्मिन्सत्यग्रिमक्षणे यस्य सत्त्वं तद्व्यतिरेकेण यस्यासत्त्वं तदेव तस्य तत्साध्यत्वमित्यादि- योगक्षेमसाधारणसाध्यत्वस्याप्यत्यंताभावेऽसंभव इति बोध्यम्। तस्यापारमार्थिकत्वाकारेणात्यंताभावस्य स्वरूपेण निवृत्तिरनित्यत्वपर्यवसन्नैव नास्माकमनिष्टा। प्रत्युत त्रैकालिकनिषेधप्रतियोगिनि तुच्छे सा न दृष्टा अत्यंताभावाधिकरणे अनुपपन्ना चेत्यपि बोध्यम् ॥अनादीति॥ गौः प्रकृतिराद्यंतरहितेत्यर्थः ॥तस्या इति॥ प्रपंचतुल्यतया तद्दोषैरेव दुष्टत्वादित्यर्थः ॥अन्यथेति॥ प्रपंचप्रतीतेर्मिथ्यात्वाभावे ॥निदिध्यासनेति॥ निदिध्यासनासाध्यसाक्षात्कारनिवर्त्यं न स्यादित्यर्थः। यथाश्रुते यत्र यत्कल्पितमित्यादिसामान्यव्याप्तौ रूप्ये व्यभिचाराद्व्यतिरेकव्याप्तिमप्युपपादयति ॥न हीति॥ द्वितीयतर्केऽसिद्धिं परिहरति ॥न चेति॥ नियमेति॥ नियमजन्यमदृष्टं नियमादृष्टम्। यद्यप्यदृष्टमपि

(तरङ्गिणी)

दृष्टवत् क्रियाजन्यमेव। तथापि नियमस्य प्रयोजनापेक्षायां कल्प्यमानमदृष्टं नियमजन्यमित्युच्यत इत्यर्थः ॥ किं त्विति॥ असंभावनानिवृत्त्या प्रतिबंधकदुरितनिवृत्त्या च दृष्टादृष्टांशोपयोग इत्यर्थः ॥ अवघातेति॥ अवघातक्रियासाध्यवैतुष्याद्भिन्नपरमापूर्वे यथा नियमादृष्टस्योपयोगो न पुनर्वैतुष्य एव तथा श्रवणादिक्रियासाध्यब्रह्मापरोक्षाद्भिन्ने मोक्षे श्रवणादिनियमादृष्टस्योपयोगो वक्तव्यः। न तु श्रवणादिक्रियासाध्ये ब्रह्मापरोक्ष एव तदुपयोग इत्यर्थः। सर्वत्र नियमविधिस्थले क्रियातन्नियमयोः फलभेदेऽपि श्रवणनियमविधौ तयोरेकफलत्वमस्त्वित्यत आह॥ अन्यथेति॥ नियमादृष्टसाध्ये साक्षात्कारे यदि श्रवणादिक्रियाया हेतुत्वमित्यर्थः।

ननु सामान्यपुरस्कारेण प्रसक्तस्य साधनांतरस्य निवृत्तिः सर्वत्र नियमविधेः फलम्। विशेषरूपेण त्वपूर्वविधित्वमेव। यथा हि व्रीहीनवहंतीत्यादावपूर्वसाधनीभूतव्रीहिवैतुष्ये अवघातातिरिक्तसाधनांतराप्रसक्तावपि व्रीहिवैतुष्यमात्रे प्रसक्तस्य विदलनादेर्निवृत्तिर्विशिष्यकार्यकारणभावबोधनात्। तथा निर्विशेषब्रह्मात्माभेदसाक्षात्काराप्रतिबंधनिवृत्तौ श्रवणाद्यतिरिक्तसाधनांतराप्रसक्तावप्यात्मज्ञानमात्रप्रतिबंधनिवृत्तौ सांख्यादिशास्त्रस्यापि प्रसक्तेस्तन्निवृत्तिर्विशिष्य वेदांतवाक्यविचारविधानादिति चेत्, न। अपूर्वीयव्रीहिनिष्ठवैतुष्येपि येन रूपेणावघातस्य प्राप्तिः तेन रूपेण दलनादेरपि प्राप्तेः सत्त्वात्। उभयत्रापि वैतुष्यभावस्यैव अवच्छेदकत्वात्। न हि प्राप्तिर्नाम निवृत्तिः। अपि तु योग्यतामात्रम्। तच्च दलनादेरस्त्येव। एतावानेव विशेषः। यदवघातसाध्यवैतुष्याश्रये अपूर्वीयत्वमप्यस्ति। दलनादिसाध्यतदाश्रये तु नापूर्वीयत्वमिति। श्रवणादेस्तु निर्विशेषब्रह्मात्माभेदसाक्षात्कारे तत्त्वावच्छिन्न एव हेतुता। न त्वात्मज्ञानत्वावच्छिन्ने। श्रवणादिकमंतरेणाप्यहंप्रत्ययेनात्मज्ञानमात्रस्य सत्त्वान्निर्विशेषब्रह्मात्मभेदसाक्षात्कारत्वावच्छिन्नात्मसाक्षात्कारे श्रवणादिभिन्नोपायांतरस्याप्राप्तत्वात्। तस्मात् श्रवणादिक्रियातन्नियमयोः ब्रह्मापरोक्ष्यं प्रति हेतुत्वे श्रवणनियमविध्यनुपपत्तेर्ज्ञानद्वारा श्रवणादिसाध्यमोक्षं प्रत्येव तन्नियमादृष्टस्यापि हेतुत्वं वाच्यम्। तथा च नासिद्धिरिति भावः।

श्रवणादितन्नियमयोः साध्यभेदं निराकरोति ॥नचेति॥ द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य इत्यत्र यादृशं ज्ञानमुद्दिश्य निदिध्यासनं विहितं तादृशमेव ज्ञानं दृशिननिर्दिश्य तादर्थ्येन श्रवणादिकमपि विधीयते। अन्यथा दृशिधातोर्विजातीयज्ञानोपस्थापकत्वे आवृत्तिलक्षणो वाक्यभेदः स्यात्। ननु निदिध्यासनविधावपि परोक्षज्ञानमेव दृशिनोद्देश्यतामित्यत उक्तम्॥ परोक्षेत्यादि॥ निदिध्यासनस्य परोक्षज्ञानप्रवाहरूपत्वात्तस्य परोक्षज्ञानैदमर्थ्यं न संभवतीत्यर्थः। ननु निदिध्यासनसाध्यब्रह्मापरोक्षे श्रवणादेर्हेतुत्वे एकार्थत्वाद्विकल्पः स्यादिति चेन्न। व्यवदानावरुद्धे

(तरङ्गिणी)

यागे व्रीहिभिर्यजेतेति व्रीहीणां तंडुलपिष्टपुरोडाशद्वारा हेतुत्वबोधनवदिहाप्युत्तरद्वाराऽपूर्वस्य हेतुत्वसंभवान्न विकल्प इति भावः ॥साक्षात्कर्तव्य इति॥ श्रवणविधौ साक्षात्कर्तव्य इति साक्षात्काररूपफलसमर्पकवाक्यांतरसत्त्वात्तस्य साक्षात्कार एव फलमित्यर्थः ॥त्वन्मत इति॥ परोक्षज्ञानज्ञानं विना परोक्षज्ञाने कामनायोगात्तज्ज्ञाने च तेन परोक्षज्ञानविषयस्यापि ज्ञातत्वान्न परोक्षज्ञानकामना संभवतीत्यर्थः। तथा च न श्रवणादिविधेः परोक्षज्ञानं फलम्। अकाम्यमानत्वादित्यर्थः ॥आपरोक्ष्यस्येति॥ अस्तु श्रवणादितन्नियमयोः ब्रह्मापरोक्ष्यमेव फलं तथाप्यदृष्टसाध्यब्रह्मापरोक्ष्यनिवर्त्यस्य बंधस्य ब्रह्मणि नाध्यस्तत्वमित्यर्थः।

॥किंचेति॥ स्वज्ञानात्पूर्वं स्वस्याभावादिंद्रियसन्निकर्षानुपपत्तिरित्यर्थः ॥जन्माद्यस्येति॥ अस्य जगतो जन्मादि यतो ब्रह्मणः सकाशात् भवतीत्यर्थः ॥श्रुतौ चेति॥ विश्वस्येति शेषः। सामान्यव्याप्तौ रूप्यं दृष्टांतः। स्वाप्रस्याप्यकल्पितत्वान्न तत्र व्यभिचारः। एवमग्रेपि तर्काः द्रष्टव्याः ॥ईक्षतेरिति॥ अशब्दं प्रधानं जगत्कारणं न, जगत्कारणे तदैक्षतेति ईक्षणश्रवणादित्यर्थः ॥लोकवदिति॥ यथा बालस्य लीलया प्रवृत्तिस्तथेश्वरस्य केवलं लीलयैव प्रवृत्तिरित्यर्थः ॥वैषम्येति॥ कर्मापेक्ष्य शुभाशुभफलदातृत्वादीश्वरस्य वैषम्यादिकं न भवतीत्यर्थः ॥तेजोऽत इति॥ अत एतस्माद्वायोरेव सकाशात्तेज उत्पद्यत इत्यर्थः ॥तेज आदेरिति॥ ब्रह्मण्यध्यस्तस्य तेजसस्तज्जन्यत्वस्यैवोचितत्वेन वायुजन्यत्वमयुक्तमित्यर्थः ॥विपर्ययेणेति॥ विपर्ययेण तु क्रमोऽ त उपपद्यते चेति सूत्रे उत्पत्त्यपेक्षया विपर्ययेण लयक्रम इत्युक्तमित्यर्थः ॥पृथिव्यादीनामिति॥ ब्रह्मण्यध्यस्तपृथिव्यादेः तत्रैव लयस्योचितत्वेन नाबादौ तस्य लयो युक्त इत्यर्थः। ननु तदभिध्यानादेव तु तल्लिंगात्स इति सूत्रे तद्भावापन्नस्य ब्रह्मण एव कारणत्वविधानाद्युक्तं तेजआदीनां वाय्वादिजन्यत्वम्। लयोक्तिरपि तद्भावापन्ने ब्रह्मण्येवेति चेत्, मैवम्। ब्रह्मणो जडभावानंगीकारात्। जडावच्छिन्नत्वमपि कल्पितस्य जनकत्ववत् अवच्छेदकत्वस्याप्यसंभवात् निरस्तम्। ननु भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदिति सूत्रे आपाततः परिणामवादाभ्युपगमेन उपासनावस्थाया वैषम्यादिप्रयोजनादिशंकापरिहारौ। तदनन्यत्वमारंभण-शब्दादिभ्य इति तु विवर्तमतेन। परमसिद्धांतदशायां तु न चाशंका नचोत्तरमित्याशंकां परिहरति ॥भ्रांत्येति॥ न च भ्रात्या तत्प्रसक्तिः सूत्रेण साधनमर्हतीत्यर्थः।

ननु कल्पितस्यापि प्रपंचस्य व्यावहारिकसत्त्वाभ्युपगमेन तद्दशायां जन्माद्युक्तिर्भविष्यति। रूप्यादेस्तु प्रातिभासिकत्वात्तदभाव इत्यत आह ॥रूप्यादाविति॥ ज्ञानेति॥ व्यावहारिकत्वे-नाध्यस्तस्यापि विश्वस्य यदि जन्माद्यभावाभावस्तदाध्यस्तस्यापि विश्वस्य व्यावहारिकत्वेनैव

(तरङ्गिणी)

ज्ञाननिवर्तकत्वमपि न स्यात्। प्रातिभासिकत्वस्यैव ज्ञाननिवर्त्यत्वे तंत्रत्वापातादित्यर्थः ॥अनुमानेति॥ अपर्वतीयधूमं प्रति वह्वेर्जनकत्वापत्तौ धूममात्रे वह्निव्याप्त्यसिद्ध्यापत्तिरित्यर्थः। अख्यातिवादापत्तिश्चेत्यपि बोध्यम् ॥मायाविवदेवेति॥ लोके मायाविनो भ्रमयितुः प्रयोजनापेक्षादर्शनादीश्वरस्यापि तथात्वेन प्रयोजनापेक्षाप्रसक्तौ सा सूत्रेण समाधीयत इत्यर्थः ॥भ्रामयितृत्वादिति॥ मितां ह्रस्व इत्यत्र वा, चित्तविराग इत्यतो वेत्यनुवृत्तेरत्र ह्रस्वाभावः। तदुक्तं मितां ह्रस्व इति सूत्रे काशिकायाम्। केचिदत्र वेत्यनुवर्तयंति। सा च व्यवस्थितविभाषा। तेनान्यत्र संक्रामयेदित्यादि सिद्धं भवतीति। अत एव भगवद्गीतायां भ्रामयन् सर्वभूतानि यंत्रारूढानि माययेति प्रयोगः ॥जीवैरिति॥ तथा चाकाशादिभ्रमयितुरीश्वरस्य सिद्धौ भौतिकादिदेहादिमतां जीवानां सिद्धिः, जीवसिद्धौ च जीवैरध्यस्तस्येश्वरस्य सिद्धिरित्यन्योन्याश्रय इत्यर्थः।

ननु अविद्योपहितचितोऽनादेरीश्वरस्य नांतःकरणोपहितजीवैः कल्पितत्वमिति चेन्न। तस्य देहाद्यभावेन भ्रमयितृत्वासंभवात्। ननु न जीवैरीश्वरोऽध्यस्तो येनान्योन्याश्रयः स्यादित्यतआह ॥न हीति॥ स्वस्य स्वस्मात्पूर्ववृत्तित्वासंभवाच्चिन्मात्रस्य देहाद्यसंभवान्न ताभ्यामीश्वरः कल्पित इत्यर्थः ॥न चेति॥ परिशेषेण जीवकल्पित एवेश्वरो वाच्य इत्यर्थः ॥जीवानामिति॥ श्रुतेरसद्विलक्षणार्थकत्वाद्वायोरग्निरित्यादौ प्रतिपादनीयो वायोः सकाशात्तेजोजन्मरूपो योऽर्थः सोऽसद्विलक्षणो वाच्यः। तस्यासद्वैलक्षण्यं तु वायोस्तेज उत्पद्यत इति भ्रमे सति स्यात्। न च जीवानां तथाविधो भ्रमोऽस्तीति भावः। ननु तादृशभ्रमं विनाऽपि वायोः सकाशादग्न्युत्पत्तिरित्येवंरूपोऽर्थोऽस्त्वित्यत आह ॥न च भ्रांतिमिति॥ न चैतदिति॥ वायोरग्निरिति श्रुतिजनितभ्रांत्या तदर्थस्य सिद्धौ स एवार्थ एतच्छ्रुतेर्विषयरूपमालंबनं स्यादित्यर्थः ॥बौद्धेति॥ बौद्धागमजन्यभ्रांत्या सिद्धमर्थं विषयीकृत्य तत्प्रवृत्तेर्वक्तुं शक्यत्वादित्यर्थः। वायोरग्नि-रित्येतद्वाक्यजन्यभ्रांतिसिद्धोऽर्थ एतद्वाक्यालंबनमित्यत्र दूषणांतरमाह ॥त्वन्मत इति॥ वायोरग्निरिति वाक्याद्देहादिमतो जीवस्य तथाविधभ्रांतौ सत्यां वाय्वादिस्वरूपसिद्धिः, तत्सिद्धौ च वाय्वाद्यारब्धदेहादिमज्जीवसिद्धिरित्यन्योन्याश्रय इत्यर्थः। नन्वीश्वरभ्रांतिसिद्धवाय्वादिकमेव श्रुत्यालंबनमस्त्वित्यत आह ॥ईश्वरस्येति॥ तद्भ्रांतेरिति॥ तथाचान्योन्याश्रय इत्यर्थः॥

व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगं युजि।
न्यायामृततरंगिण्यां विरुत्तर्कामृषानुमा॥

मिथ्यात्वहेतूनां प्रतिकूलतर्काः॥

## न्यायामृतकण्टकोद्धारः

अधिष्ठानं च सदृशमिति तत्त्वनिर्णयटीकानुसारेण अनुकूलतर्काभावमुपपाद्य प्रतिकूलतर्कमुपपादयितुं प्रतिजानीते– प्रतिकूलतर्केति। यदीति। अत्र विश्वशब्दो विप्रतिपत्त्युक्तधर्मिपरः। तेनांशे विपर्ययपर्यवसाने न बाधसिद्धसाधनते इति द्रष्टव्यम्। भ्रान्तेरिति। अत्र सदृशं सत्यमिति प्रधानाधिष्ठानयोरुभयोर्विशेषणम्। सादृश्यं चाधिष्ठानप्रधानयोरिति ज्ञातव्यम्। अत्र प्रधानत्वं भ्रमप्रकाराश्रयधर्मित्वं वा भ्रमकारण संस्कारविषयतावच्छेदकधर्मवत्त्वं वेति द्रष्टव्यम्। अधिष्ठानस्येति। अत्र कात्स्न्येनेत्यस्यासाधारणधर्मरूपेणेत्यर्थः। अन्यथाऽसम्भवदुक्तिकं स्यात्। न हि भ्रमनिवृत्तिकाले कात्स्न्येन ज्ञानं सम्भवति। अज्ञाने। सर्वथेति शेषः। ननु तर्हि केनचिद्रूपेण ज्ञानं, केनचिद्रूपेण न ज्ञानमित्यस्तु। तथाचाधिष्ठानत्वं भविष्यतीत्यत आह– ज्ञाताज्ञातेति। न च वस्तुतो निर्विशेषत्वेऽपि कल्पितसामान्यविशेषवत्त्वात् अधिष्ठानत्वं भविष्यतीति वाच्यम्। अन्योन्याश्रयत्वात्। अधिष्ठानत्वे सिद्धे कल्पितसामान्यविशेषवत्त्वसिद्धिः। तत्सिद्धौ चाधिष्ठानत्वसिद्धिरिति। लाघवादिति। सद्विशेषाज्ञानत्वापेक्षया विशेषाज्ञानत्वस्य सदसद्विशेष साधारणतया सामान्यतया सत्पदार्थाघटिततया च लघुत्वादिति भावः। सामान्याकाराज्ञाने चेति। अधिष्ठानज्ञानस्य संस्कारोद्बोधकतयैव प्रयोजकत्वादिति भावः। न च सदात्मना स्वरूपज्ञानमेव सामान्यज्ञानमिति वाच्यम्। किमतोऽन्यत् विशेषज्ञानं यद् भ्रमनिवर्तकम्? सत्त्वस्य ब्रह्मस्वरूपलक्षणत्वेन तद्धानस्यैव विशेषज्ञानत्वात्। परिपूर्णानन्दत्वादिना ज्ञानं विशेषज्ञानमिति चेन्न। परिपूर्णानन्दत्वादेः सद्रूपब्रह्माभिन्नत्वेन सत्त्वानतिरेकात्। निर्विशेष आकारद्वयायोगात्। ब्रह्मातिरिक्तत्वे मिथ्यात्वेन तस्य भ्रमनिवर्तकत्वायोगात्। वेदान्तानामखण्डार्थत्वेन तेन रूपेण ज्ञानजनकत्वासंभवाच्च। तस्मान्न सामान्याकारज्ञानम्। असद्विशेषेति। तथाचातिप्रसङ्गितया न भ्रमप्रयोजकत्वमिति भावः। किंचासद्विशेषाज्ञानस्य भ्रमप्रयोजकत्वेऽसद्विशेषज्ञानं तन्निवर्तकमिति वाच्यम्। तच्चायुक्तम्। आत्यन्तिकभ्रमनिवृत्तेरधिष्ठानगतविशेषप्रमानिर्वर्त्यत्वात्। न च वल्मीके स्थाणुत्वभ्रमनिवृत्तौ पुंस्त्वभ्रमनिर्वर्त्यायां व्यभिचारः। तस्या आत्यन्तिकभ्रमनिवृत्तित्वाभावात् इत्याह– वल्मीक इति। चिद्रूपज्ञानापेक्षया वृत्तिज्ञानस्यानधिकविषयत्वे तद्विरोधि, नेदं विरोधीति वक्तुमशक्यम्। भ्रमाविरोधित्वेऽज्ञानाविरोधित्वापत्त्या ज्ञानत्वं च न स्यादित्यादिवक्ष्यमाण दूषणगणादयुक्तमेतदित्यभिप्रायेण परिहरति– अस्येति।

किंचेति। नन्विदमनिदं न भवतीति पुरोवर्त्यपुरोवर्तिनोर्भेदग्रहेऽपि इदं रजतमित्यध्यासवत् सन् घट इत्यध्यासो भविष्यति। न च रूपान्तरेण विरुद्धधर्माध्यासो रूपान्तरेणाध्यासविरोधी नेति वाच्यम्। प्रकृतेऽपि तुल्यत्वादिति चेन्न। येन रूपेणाविरुद्धधर्माध्यासः तेन रूपेण रोपो न भवति। न हीदमनिदं न भवतीत्यादि ज्ञाने इदमनिदमित्यारोपो दृष्टचरः। प्रकृते च प्रत्यक्चैतन्यमस्मत्प्रत्ययविषयत्वेन वा दृक्त्वेन वा सत्त्वेनानृतविरोधित्वरूपेण वा भासते। तस्मिंश्च तथा भासमाने इदंत्वेन दृश्यत्वेनानृतत्वेन निश्चितस्यारोपो न संभवति। रजतस्यानिदंत्वेऽपि तथा निश्चयाभावादारोपो युक्तः। न च चैतन्येऽपि तथा प्रकाशोऽसिद्ध इति वाच्यम्। घटः प्रकाशते, घटः सन्, अज्ञोऽस्मि इत्यादौ चैतन्यस्योक्तरूपेण घटादेरुक्तरूपेण निश्चयस्यानुभवसिद्धत्वात्। तथाच विरुद्धधर्मवत्त्वेन निश्चितयोर्नाध्यस्ताधिष्ठानभाव इति भावः। अपि चेति।

(कण्टकोद्धारः)

अत्राधिष्ठानतिरोधानं नामाधिष्ठानयाथात्म्यादर्शनम्। न तु सर्वथाऽप्रकाशः। तथात्वे क्वापि भ्रमो न स्यात्। सर्वत्र सामान्येनाधिष्ठानप्रकाशात्। एवं तर्हीदं निःसामान्येत्यादिना पुनरुक्तमिति न वाच्यम्। तत्राधिष्ठानत्वखण्डने तात्पर्यम्। प्रकृते तु आरोपान्यथानुपपत्त्याऽधिष्ठानतिरोभावो वक्तव्यः। स च सर्वथाऽप्रकाश एव। केनचिद्रूपेण प्रकाशः केनचिद्रूपेणप्रकाश इत्येवं रूपतिरोभावस्य निर्विशेषेऽसंभवात्। तथाचाविद्यादेः प्रकाशो न स्यात्। सर्वथाधिष्ठानप्रकाशे भ्रमोऽपि न स्यादित्यत्र तात्पर्यम्। तदनुविद्धत्वेन प्रतीतत्वं तदधिष्ठानत्वव्यापकम्। एवं च व्यापकाभावात् व्याप्याभाव इति प्रकारान्तरेणाधिष्ठानत्वं निराकरोति– किञ्चेति। चाक्षुषादिज्ञान इति। इदं च पुरैवोपपादितम्। किन्त्विति। संस्कारसत्त्वे प्रधानव्यतिरेकप्रयुक्तकार्यव्यतिरेकादर्शनादित्यर्थः। नन्वेवं प्रथमप्रपञ्चारोपे प्रपञ्चप्रमाजन्यसंस्कार एव हेतुत्वेन वाच्य इत्यत आह– अत्रेति। सत्यपीति। प्रमाजन्यसंस्कारापेक्षया ज्ञानजन्यत्वस्य लघुत्वाच्चेत्यपि द्रष्टव्यम्। नन्वन्यत्र प्रधानासत्वे कथमारोपः? अन्यत्र सत एवान्यत्रारोपादित्यत आह– नचेति। एवं सतीति।

नन्वधिष्ठानस्य ज्ञानद्वारा भ्रमहेतुत्वेऽपि अज्ञानद्वाराऽपि भ्रमहेतुत्वं कुतः? भ्रमोपादानाज्ञानविषयो ह्यधिष्ठानमुच्यते। तच्च सत्यमेव। असत्यस्य सर्वस्याज्ञानकल्पितत्वेनाज्ञानविषयत्वासम्भवादिति चेन्न। प्रधानस्याप्यर्थक्रिया संस्कारद्वारा भ्रमकार्य प्रवृत्तिप्रयोजकत्वात्। अर्थक्रियायाश्चासत्यस्यासंभवात् प्रधानस्यापि सत्त्वमङ्गीकर्तव्यम्। न चार्थक्रियाऽप्यसत्यस्य युक्तेति वाच्यम्। तर्ह्यज्ञानविषयत्वमप्यसत्यस्यास्तु। न चासत्यस्यानकल्पितत्वात् कथमज्ञानविषयत्वमिति वाच्यम्। अत्यन्तासतस्तदभावात् अज्ञानविषयत्वसंभवात्। न चान्यत्रासत आरोपाधिष्ठानत्वमदृष्टमिति वाच्यम्। असदेवेदमग्र आसीदित्यादौ तद्दर्शनात्। न चाधिष्ठानस्यासत्त्वे तज्ज्ञानस्य भ्रमबाधकत्वं न स्यादिति बाधभ्रमव्यवस्था न स्यादिति वाच्यम्। अत्यन्तासज्ज्ञानं बाधकम्, अनिर्वचनीय ज्ञानं बाध्यमिति भ्रमबाधव्यवस्थासंभवात्। नचाधिष्ठानस्य सत्त्वप्रतीतेः तत्सत्त्वमिति वाच्यम्। प्रधानस्यापि तत्प्रतीतेः। न चाधिष्ठानसत्त्वस्याबाधात् तत् तात्त्विकमिति वाच्यम्। प्रधानसत्त्वस्यापि बाधाभावात्। श्रुतिबाधस्तु श्रुतिव्याख्यानेनैव निरसिष्यते। तस्मात् परिहराधिष्ठानसत्त्वं स्वीकुरु वा प्रधानसत्त्वमिति दुरुत्तरा प्रतिबन्दितरङ्गिणी। अत एवाह– अधिष्ठानवदिति। उक्तमर्थं कारिकया संगृह्णाति– तथाचेति।

एतदिति। अत्र स्वोपाधौ निषेधाप्रतियोगित्वे स्वोचितार्थक्रियाकारिण इति, श्रुत्यादिसिद्धोत्पत्त्यादिकस्येति हेतुगर्भं विशेषणम्। न च स्वोपाधौ निषेधाप्रतियोगित्वरूप सत्यत्वेऽर्थक्रियाकारित्वं श्रुत्यादिसिद्धोत्पत्त्यादिकं वा न तन्त्रम्। स्वाप्नमायादावाद्यस्य व्यभिचारात्। द्वितीयस्य स्वाप्नरथादिषु व्यभिचारात्। तत्रापि न तत्र रथा इत्यादिश्रुत्योत्पत्तिः श्रुतेति वाच्यम्। स्वाप्नमायादेरसत्त्वस्यास्माकमसम्प्रतिपत्तेः। अत एव भगवता सूत्रकारेण 'सन्ध्ये सृष्टिराह हि' 'मायामात्रम्' इत्यादौ स्वाप्नमायादेः सत्यत्वं प्रतिपादितम्। अन्यथा तुच्छप्रातिभासिकयोरप्यर्थक्रियादिकं स्यात्। इदं च पुरैव विस्तरेणोपपादितम्। त्वन्मत इति। न चायं पक्षोऽनङ्गीकारपराहत इति वाच्यम्। अपसिद्धान्तात्। न च पारमार्थिकस्य प्रतीतिर्न संभवति, आध्यासिक संबन्धाभावादिति वाच्यम्। ब्रह्मवत् प्रतीत्युपपत्तेः, आध्यासिकसंबन्धस्य निराकृतत्वाच्च। ननु नेदं रजतमिति न व्यावहारिकविषयत्वम्। किन्तु पारमार्थिकत्वाकारेण प्रातिभासिकमेव निषिध्यत इत्यत आह–

(कण्टकोद्धारः)

प्रातिभासिकस्यैवेति। कल्पाद्येति। तत्र पूर्वभ्रमाहितसंस्काराभावादिति भावः। ननु कल्पान्तरीयसंस्कारात् भ्रमो भविष्यतीत्यत आह– कल्पान्तरीयेति। ननु यथाऽनन्यगतिकतया बालस्य गुडतिक्तताभ्रमादौ जन्मान्तरसंस्कारः प्रयोजक इत्यङ्गीक्रियते तथा जगद्भ्रमादावपि कल्पान्तरसंस्कारः प्रयोजकः किं न स्यादित्यत आह– एतज्जन्मनीति। तद्वदत्रानन्यगतिकत्वाभावादिति भावः। यद्वाऽयमनुभूयमानारोप एव। अनुभूयमानारोपे च न संस्कारापेक्षेत्याह– यद्वेति। एवं प्रधानस्य सत्यत्वमुपपाद्य भ्रमहेतुभूतसंस्कारस्य तदुपपादयति– किञ्चेति। भ्रमादिति। ननु शुक्त्यध्यस्तरूप्यस्य कुण्डलाजनकत्वेऽपि वणिग्वीथीस्थरूप्यस्य तज्जनकत्ववत् चैत्राध्यस्तसंस्कारादेर्भ्रमाजनकत्वेऽपि स्वेनाध्यस्तस्य तद् भविष्यतीति चेन्न। स्वेनेति ईश्वरेण वा जीवेन वा? नाद्यः। पूर्वोक्तातिप्रसङ्गात्। नान्त्यः। स्वेनाध्यासस्य तत्प्रतीतिजन्यतत्संस्कारपूर्वकत्वनियमे तत्प्रतीतेश्च कार्यानुमेयत्वेन कार्योत्पादं विनाऽयोगेन कार्यात् पूर्वमसत्त्वेन स्वेन संस्काराध्यासायोगात्। न चेश्वरपक्षे नातिप्रसङ्गः। ईश्वराध्यस्तस्यैव प्रयोजकत्वादिति वाच्यम्। अस्याः कल्पनायाः मिथ्यात्वसिध्युत्तरकालीनत्वेनान्योन्याश्रयात्।

किं चाधिष्ठानप्रधानयोः सादृश्ये सत्येव भ्रमो दृष्टः। न च प्रकृते सादृश्यं सम्भवति। सादृश्यं हि सदृशधर्मवत्त्वम्। न च निर्धर्मके ब्रह्मणि सादृश्यं सम्भवति। अत्र भ्रमोपपादकविवरणमतमाशङ्क्य निषेधति– यत्तूक्तमिति। अत्र हि न वास्तवं सादृश्यमङ्गीकर्तुं शक्यम्। अपसिद्धान्तात्। अथ कल्पितं सादृश्यं तत्राह– इहेति। न चाविद्याध्यासस्यानादित्वेन कारणानपेक्षत्वात् न सादृश्यापेक्षत्वमिति वाच्यम्। तस्याकर एव खण्ड्यमानत्वात्। किं चानादित्वं प्रवाहतो वा स्वरूपेण वा? नाद्यः। स्वरूपोत्पत्तौ सादृश्यस्यावश्यापेक्ष्यत्वात्। न द्वितीयः। स्वरूपतोऽनादित्वे ब्रह्मवत् सत्यत्वं स्यात्। निवृत्तिश्च न स्यात्। किं चाध्यासस्यानादित्वे दोषाजन्यत्वात् प्रमात्वं स्यात्। विषयबाधादप्रमात्वमिति तु न। प्रत्यक्षादेरबाधकत्वात्। श्रुतिबाधस्तूद्धरिष्यते। ननु सादृश्यं न भ्रममात्रकारणम्। रक्तः स्फटिक इत्यादौ व्यभिचारादित्यत आह– रक्तेति। अस्तु वा भ्रममात्रकारणम्। तथापि न व्यभिचार इत्याह– रक्तद्रव्येति। न च प्रधानमात्रवृत्तितया गृहीतं यत् तदेव सादृश्यं विपर्ययप्रयोजकम्। न तु प्रागेव प्रधानाधिष्ठानोभयवृत्तितया गृहीतं, तस्य सांशयिकत्वात्। द्रव्यत्वादि तथेति न विपर्ययप्रयोजकमिति वाच्यम्। प्रधानमात्रेत्यत्र मात्रेत्यस्य व्यर्थत्वात्। प्रधानवृत्तितया गृहीतस्यैव प्रयोजकत्वात्। न हि चाकचिक्यादिकं प्रधानमात्रवृत्तितया गृहीतम्। सादृश्यस्य प्रधाने पुरोवर्तिन्यपि ग्रहणात्। न चोभयवृत्तितया गृहीतस्य सांशयिकत्वम्। अन्यतरकोट्यनुपस्थितौ विशेषदर्शनेन वा संशयाभावोपपत्तेः। तदभावे च संशयस्येष्टत्वात्। अत एवेदं रजतं रङ्गं वेति संशयः। अतो यथा रजतारजतवृत्तितया गृहीतस्य चाकचिक्यादेर्भ्रमजनकत्वं तथा द्रव्यत्वादेरपीति न किञ्चिदनुपपन्नम्। न च सादृश्यस्य न भ्रमे साक्षादुपयोगः। किन्तु संस्कारोद्बोधद्वारोपयोग इति वाच्यम्। संस्कारोद्बोधश्चादृष्टेनैव भविष्यतीति किं सादृश्येनेति वाच्यम्। अन्यत्रादृष्टस्य संस्कारोद्बोधप्रयोजकत्वेऽपि भ्रमे सादृश्यमात्राधीनत्वात् व्यभिचाराभावात्। अन्यथा विवरणादावपि सर्वत्र सादृश्योपपादनप्रयासो न स्यादिति। अप्रामाण्यस्येति। न च गुणाजन्यत्वेऽपि यथेश्वरज्ञानस्य प्रामाण्यं तथेहापि किं न स्यादिति वाच्यम्। आवयोर्मते प्रमाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वात्। अप्रामाण्यस्य चोत्पत्तौ ज्ञप्तौ च परतस्त्वात्। तथाच दृष्टान्तासम्मतिः। अविद्याध्यासानादित्वस्य प्रागेव निरस्तत्वाच्च।

(कण्टकोद्धारः)

एवमिति। शुक्तिरजतभ्रमे तथा दर्शनादिति भावः। ननु द्रष्टृभावेऽपि भ्रमः किं न स्यात्? इत्यत आह– भ्रमस्येति। न चाविद्यावच्छिन्नस्य द्रष्टृत्वात् तस्यैवान्तःकरणावच्छेदेन प्रमातृत्वात् ज्ञानत्वाच्च भ्रमप्रमयोः सामानाधिकरण्यमुपपद्यत इति वाच्यम्। अविद्याध्यासे द्रष्टृसत्त्वं, द्रष्टृसत्त्वे च तदध्यास इति अन्योन्याश्रयात्। घटाकाश महाकाशयोरिवाविद्यावच्छिन्नान्तःकरणावच्छिन्नयोर्भेदेन भ्रमप्रमयोः सामानाधिकरण्यासम्भवाच्च। द्रष्टृत्वेऽन्तःकरणस्य प्रयोजकत्वेनाविद्यावच्छिन्नस्य तदयोगाच्च। एवं च द्रष्टृभावान्नाध्यास इति। नन्वन्वयव्यतिरेकाभावात् कथं देहेन्द्रियादेः प्रयोजकत्वमित्यत आह– प्रलय इति। अज्ञानादिवत् देहेन्द्रियादेरपि कार्यव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वादिति भावः। ननु देहेन्द्रियादेः कोपयोगः? अधिष्ठानापरोक्ष्यं हि अध्यासे तन्त्रम्। तद्यत्राधिष्ठानं स्वतो नापरोक्षं यथा शुक्त्यवच्छिन्नं चैतन्यं तत्र तदपरोक्षार्थं देहेन्द्रियाद्यपेक्षा। जगदारोपे चाविद्यावच्छिन्नं चैतन्यमधिष्ठानम्। तच्च स्वप्रकाशत्वेनाविद्यायास्तदध्यस्तत्वेन तेनैवापरोक्षमिति न तत्र देहेन्द्रियाद्यपेक्षेति चेन्न। अविद्यावच्छिन्नस्य स्वप्रकाशत्वे शुक्त्यवच्छिन्नस्यापि तदापत्तेः। चैतन्यस्य स्वप्रकाशत्वात् तदध्यस्ताविद्यायाश्चापरोक्ष्ये नान्यापेक्षेति यदि तर्हि शुक्तेरप्यविद्यावच्छिन्नचैतन्येऽध्यस्तत्वात् तदापरोक्ष्येऽपि अन्यापेक्षा न स्यात्। तत्र शुक्तिभानार्थं देहाद्यपेक्षेति यदि तर्हि अविद्याभानार्थं तदपेक्षाऽऽवश्यकी। न हि देहादिकं विनाऽज्ञ इति प्रतीतिः। सुषुप्तावस्तीति चेन्न। तत्र देहाद्यभावस्यासम्मतेः। आवहारिकत्वेन तत्सत्त्वस्यावश्यकत्वाच्च। एवं च यथाऽधिष्ठानावच्छेदक शुक्तिज्ञानार्थं देहाद्यपेक्षा तथेहापि अधिष्ठानावच्छेदकाविद्याज्ञानार्थं देहेन्द्रियाद्यपेक्षाप्यावश्यकी। अन्यथोपादानाद्यपेक्षापि न स्यादिति। परमार्थेति। न च साक्षिणा व्यावहारिकप्रामाण्यग्रहणेऽपि तात्त्विकप्रामाण्यग्राहकं न किमपीति वाच्यम्। तथात्वेऽद्वैतश्रुत्यादेरपि तात्त्विकप्रामाण्यग्राहकाभावेन तदभावः स्यादित्युक्तत्वात्। इहेति। साक्षिरूपाज्ञानादिप्रतीतेरनादित्वेन करणाभाव इत्यर्थः।

रूप्याद्यध्यास इति। न च साधर्म्यजात्युत्तरत्वमिति वाच्यम्। व्याप्तिनिरपेक्ष साधर्म्यमात्रेण प्रतिपक्षचोदनाभावात्। न च सर्वत्र चैतन्यमेवाधिष्ठानमिति दोषादेरधिष्ठानसमसत्त्वमसिद्धमिति वाच्यम्। चैतन्यमात्राधिष्ठानकत्वे व्यावहारिकत्वापातात्। चैतन्यप्रमयैव भ्रमनिवृत्तिप्रसङ्गाच्च। चैतन्यमात्रप्रमायां सद्यो मोक्षश्च। अवच्छिन्नस्याधिष्ठानत्वे तस्य न परमार्थसत्त्वमिति त्वन्मते व्याप्तिसिद्धिरिति। दोषादेरिति। न च वेदे बौद्धकल्पितदोषस्य प्रातिभासिकतया तेन व्यावहारिककार्यप्रतिबन्धेऽपि प्रकृते दोषस्य व्यावहारिकत्वेन तेन व्यावहारिककार्यप्रतिबन्धः स्यादिति वाच्यम्। दोषादेरद्यापि व्यावहारिकत्वासिध्याऽन्योन्याश्रयात्। दोषादेः प्रातिभासिकत्वाभावे तद्व्याप्यकल्पितत्वायोगस्य पूर्वमेवोक्तत्वाच्च। तत एवेति। न च जनकत्वेन तदनपेक्षायामप्याश्रयत्वेन तदपेक्षा। अध्यासस्य परममहत्त्वादेरिवाश्रयसापेक्षत्वादिति वाच्यम्। अध्यासस्य सादित्वनियमो यथा त्यज्यत एवमध्यासस्य साश्रयत्वनियमोऽपि त्याज्यः। तत्रानवस्थादिदोषवत् प्रकृते गौरवदोषस्य सत्त्वात्। प्रामाणिकं गौरवमिति यदि तर्हि सिद्धविषयानवस्थेत्यपि वक्तुं शक्यम्। तथाचाधिष्ठानाभावे शून्यवादापातः। विषयस्येति। दोषाजन्यत्वेऽपि बाधितविषयतयाऽप्रामाण्यमिति तु निरस्तमिति भावः। अविद्यारोप इति। तथाचाविद्याकल्पनं न स्यादिति भावः। न चोपादानतया तत्कल्पनमिति वाच्यम्। अविद्यारोपवत्तदभावेऽप्युपपत्तेः। स्वनिर्वाहकत्वं च किं स्वस्मिन् स्वविशिष्टव्यवहारप्रयोजकत्वं वा, स्वजनकत्वं

(कण्टकोद्धारः)

वा? आद्य इष्टापत्तिरित्याह– स्वनिर्वाहकत्वेनेति। द्वितीय आह– प्रतीतिमात्रेति। न चाविद्याध्यासस्य साक्षिरूपत्वेनानादित्वात् नाविद्याजन्यत्वम्। अहमित्यभिलापकारणीभूतवृत्तिरूपाध्यासं प्रति कारणत्वमस्त्येवेति वाच्यम्। अहमित्यभिलापकारणाध्यासातिरिक्ताविद्याध्यासे मानाभावात्। अविद्याध्यासस्य साक्षिरूपत्वे च तस्यानादिनित्यतया मोक्षेऽप्यनुवृत्त्यापाताच्च। वृत्तिरूपाध्यासेनैव सर्वोपपत्तौ अध्यासद्वयकल्पनायोगाच्च।

एवं दोषादीनां सत्त्वमुपपाद्य बाधकस्य तदुपपादयति– बाधकज्ञानस्येति। न च चरमवृत्तेः कतकरजोन्यायेन स्वपरबाधकतयाऽनवस्थाभावात्। नहि गुहायां न शब्द इति शब्दः स्वं न निषेधति। अन्यथानवस्थानात्। शब्दमात्रनिषेधानुभवविरोधश्चेति वाच्यम्। प्रतिदृष्टान्तसमजात्युत्तरत्वापातात्। न हि दृष्टान्तमात्रेण कश्चिदर्थः सिध्यति। अन्यथा प्रपञ्चस्यैव स्वबाधत्वं तेन न्यायेन स्यादिति कस्यापि श्रवणादौ चरमवृत्त्यर्थं प्रवृत्तिर्न स्यात्। बाधकज्ञाने स्वबाधकत्वस्य क्वाप्यदर्शनाच्च। न च मिथ्यात्वान्यथानुपपत्त्यैतत् कल्प्यमिति वाच्यम्। अन्योन्याश्रयात्। न च बाधकज्ञानं वृत्त्युपरक्तं चैतन्यम्। तच्च सत्यमेवेति वाच्यम्। प्राप्ताप्राप्तविवेकेन वृत्तेरेव बाधकत्वात्। किं च बाधकज्ञानस्य बाध्यत्वेऽविशेषात् जगज्ज्ञानमेतद् बाधकमिति बाध्यबाधकव्यवस्था न स्यादिति। तदेवेति। व्यावहारिकमित्यर्थः। इहापीति। जगदध्यासेपीत्यर्थः। एवं च ब्रह्मणोऽपि परमार्थसत्त्वं न स्यादिति भावः। अधिष्ठानस्य भिन्नत्वं सत्त्वं तन्त्रम्। दोषादीनां तदन्यदेवेत्याशङ्क्य निषेधति– न चेति। नियामकाभावादिति भावः। नियामकमाशङ्क्य निषेधति– न चेति।

लाघवेनेति। एतेनेदं कस्यचिज्जल्पनं निरस्तम्। 'अध्यासत्वस्य लघुत्वेऽपि प्रथमोपस्थितत्वेऽपि न दोषजन्यतायां तत् तन्त्रम्। अध्यासत्वस्याजन्येऽपि सद्भावात्। यथा नित्यज्ञानवादे ज्ञानत्वस्य न शरीरजन्यतावच्छेदकत्वं, न वा गुणजन्यत्वस्य प्रामाण्यप्रयोजकत्वम्। बाधकबलात्। तद्वज्जन्याध्यासं प्रत्येव दोषादीनां कारणत्वं बाधकबलात्। यथा च गुणाजन्यत्वेऽपि बाधकाभावात् प्रमात्वं तथा दोषाजन्यत्वेऽपि बाधकबलात् अप्रमात्वम्। एवं च न कोऽपि दोषः।' इति। भवेदेतत् यदि ज्ञाननित्यत्ववत् नित्यज्ञानप्रामाण्यवच्चाविद्याध्यासस्यानादित्वं प्रामाणिकं स्यात्। तदेव नास्तीत्युक्तम्। अन्यथा जगदध्यासस्यानादित्वेनोपादानाद्यनपेक्षत्वेनाविद्यादिकल्पनमेव न स्यात्। लाघवात् प्रामाण्यस्य स्वतस्त्वे गुणानपेक्षणाच्च। नित्यत्वेनोत्पत्तौ ज्ञानस्य शरीरानपेक्षायामपि स्वाश्रयतावच्छेदकत्वेन तदपेक्षाया आवश्यकत्वाच्च। एवं च प्रवृत्तिमात्रे संसर्गधिय इव वह्निमात्रं प्रति धूमस्येवाध्यासमात्रं प्रति दोषादिकं कारणम्। बाधकाभावात्। तथाचाविद्याध्यासानुपपत्तिरिति। न चाविद्याध्यासाभावे कथं तत्प्रतीतिरिति वाच्यम्। सत्यत्वेऽपि ब्रह्मवत् प्रतीत्युपपत्तेरिति दिक्।

अस्तु वा विषयमिथ्यात्वम्। नैतावता ब्रह्मेतरसर्वमिथ्यात्वसिद्धिः। जगज्ज्ञानस्य सत्यत्वात्। न च विषयमिथ्यात्वे ज्ञानस्य सत्त्वानुपपत्तिरिति वाच्यम्। तस्योपपादयिष्यमाणत्वादित्याह– किंचेति। यत्नो न स्यादिति। श्रवणादौ प्रवृत्तिर्न स्यादित्यर्थः। श्रवणादिना हि ब्रह्मसाक्षात्कारद्वारा प्रपञ्चाभावः संपादनीयः। स चात्यन्ताभावात्मा। तस्य च साध्यत्वं न संभवतीत्याह– अत्यन्ताभावस्येति। ननु बन्धोच्छेदार्थं न यत्नः। तथाचेष्टापादनम्। किन्तु प्रतीत्युच्छेदार्थमित्याशंक्य निषेधति– न चेति। तस्या इति।

(कण्टकोद्धारः)

वृत्तिरूपायास्तत्प्रतिबिम्बितचैतन्यरूपाया वा तस्याः सत्यत्वाभावात्। एतदतिरिक्ताया गौरवपराहतत्वात्। अन्यथा त्प्रतीतेः सत्यत्वे। सत्यस्य त्वया निवृत्त्यनङ्गीकारादिति भावः। ननु न मिथ्यात्वं निवृत्तिप्रतिकूलम्। सत्यस्य ब्रह्मणो निवृत्त्यदर्शनेन सत्यत्वस्यैव प्रतिकूलत्वात्। मिथ्यात्वस्यानुकूलत्वात्। न च तदर्थं प्रवृत्त्यनुपपत्तिरिति वाच्यम्। कदा प्रवृत्त्यभावः? अधिष्ठानसाक्षात्कारानन्तरं वा, तत्पूर्वं वा? नाद्यः। इष्टापत्तेः। न द्वितीयः। विस्मृतकण्ठगतचामीकरास्य इव बाधकज्ञानोत्पत्तये प्रवृत्त्युपपत्तेरिति चेत् न। उक्तमिथ्यात्ववतः तुच्छस्य निवृत्त्यदर्शनेन मिथ्यात्वस्यापि तत्प्रतिकूलत्वात्। न च निवृत्तिमत्त्वे मिथ्यात्वं न प्रयोजकम्। अपि तु स्वभावविशेष इति स्वभावविशेषापन्ने घटादौ निवृत्तिदर्शनेन मिथ्यात्ववत्यपि जगति सा स्यादिति वाच्यम्। एवं हि सत्यत्वं न निवृत्तिप्रयोजकम्। किन्तु स्वभावविशेष इति सत्यत्वेऽपि घटादिनिवृत्तिसंभवात्। किंच स्वरूपेण निषेधप्रतियोगिनः स्वभावविशेषोऽनुपपन्नः। तादृशस्यापि स्वभावविशेषवत्त्वे तुच्छस्यापि तदापत्तेः। अपरोक्षप्रतीत्यन्यथानुपपत्त्या स्वभावविशेष इति यदि परोक्षप्रतीत्यन्यथानुपपत्त्या तुच्छस्यापि स्वभावविशेषः स्यादिति समम्। किं च तदर्थं यत्नोऽपि न स्यादिति दूषणं तदवस्थमेव। विस्मृतकण्ठगतचामीकरस्य चामीकरस्मृत्या सुखविशेषो भवतीति प्रयत्नो युज्यते। ननु प्रकृते कश्चिद् विशेष इति कथं प्रवृत्तिः? न च दुरितनिवृत्तिः पुरुषार्थ इति वाच्यम्। तस्या अपि मिथ्यात्वेनासाध्यत्वात्। स्वरूपत्वे तु सुतरामसाध्यतेति। पञ्चमप्रकारता तु अद्वैतश्रुतिभयादनिष्टाऽयुक्ता च।

मिथ्यात्वे प्रतिकूलतर्कान्तरमाह किंचेति। अत्र हि यत् यत्राध्यस्तं तत् तन्निदिध्यासनसाध्य साक्षात्कारनिवर्त्यं नेत्यन्वयव्याप्तिः, यत् यन्निदिध्यासनसाध्यसाक्षात्कारनिवर्त्यं तन्न तत्राध्यस्तमिति व्यतिरेकव्याप्तिश्चाभिमता। एवमेव द्वितीयापादनेऽपि द्रष्टव्यम्। न च शुक्तिज्ञाननिवर्त्यस्य रजतस्य शुक्तावध्यस्तत्वदर्शनात् ब्रह्मसाक्षात्कारनिवर्त्ये प्रपञ्चे तदध्यस्तत्वमावश्यकमिति वाच्यम्। रजते शुक्तिसाक्षात्कार निवर्त्यत्वाभावात्। न हि शुक्तिज्ञानेन रजतं नष्टमित्यनुभवः। किन्तु भ्रमो नष्टस्तदज्ञानं नष्टमिति। न च तयोः शुक्तावध्यासः। अस्तु वा तत्साक्षात्कारमात्रनिवर्त्यं तत्राध्यस्तम्। प्रकृते तु न साक्षात्कारमात्रनिवर्त्यता। किन्तु तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यत्वम्। तच्च तत्रानध्यस्तत्वव्याप्यमेव– तथा दर्शनादित्याह– न हीति। द्वितीयापादने व्यतिरेकव्याप्तिं दर्शयति– न चेति। न च सेतुदर्शनादिना न पापनाशः। किन्तु कारणस्वरूपेणावस्थानमात्रं क्रियते। शुक्तिज्ञानेन तु रजतनिवृत्तिरेवेति वाच्यम्। सेतुं दृष्ट्वेत्यादिस्मृतिभिः पापविनाशस्यैव श्रवणात्। यत्र विनाशश्रवणं तत्र कारणरूपेणावस्थानं, यत्र तु विनाशप्रतीतिस्तत्र विनाश इत्यस्यातिदुष्टत्वाच्च। द्वितीयापादन इष्टापत्तिमाशङ्क्य निषेधति– न चेति। अवघातसाध्येति। न च क्रत्वर्थनियमापूर्वस्य परमापूर्वसाधनत्वेऽपि पुरुषार्थहिरण्यधारणादिनियमादृष्टस्य तदभाववत् श्रवणादिनियमादृष्टस्य श्रवणादिसाध्यसाक्षात्कारान्यफलाभावेन तत्फलेनैव फलवत्त्वमिति वाच्यम्। अङ्गनियमापूर्वाणाम् अन्यफलजनकत्वनियमात् सुवर्णधारणादिनियमापूर्वस्याङ्गनियमापूर्वत्वाभावान्न तत्रातिप्रसङ्गः। न च श्रवणस्य साक्षात्कारातिरिक्तं फलमेव नेति वाच्यम्। अवघातस्य वैतुष्यद्वारा परमापूर्ववत् श्रवणस्यापि साक्षात्कारद्वारा मुक्तिरूपफलोपपत्तेः। न च सर्वापेक्षेति सूत्रेण, सर्वं कर्माखिलमिति स्मृत्या सर्वादृष्टानां ज्ञान एवोपयोग

(कण्टकोद्धारः)
उक्त इति वाच्यम्। कर्मणः सत्वशुद्धिद्वारा ज्ञान उपयोगेऽपि श्रवणादिनियमसाध्यादृष्टस्य तदभावोपपत्तेः। न च मुक्तेरज्ञाननिवृत्तित्वेन ज्ञानमात्र साध्यतयाऽदृष्टानपेक्षेति वाच्यम्। प्रतिबन्धनिरासे तदुपपत्तेः। अन्यथा साक्षात्कारस्य प्रमाणसाध्यतया तत्राप्यदृष्टापेक्षा न स्यात्। तत्र प्रतिबन्धनिरास उपयोग इति तु समम्। अन्यथेति। यदि निर्विशेष ब्रह्मसाक्षात्कार एवादृष्टोपयोग इत्यर्थः। ननु यद्यपि विशेषपुरस्कारेण साधनान्तरप्राप्तिर्नास्ति। तथाप्यात्मज्ञानत्वरूपसामान्यपुरस्कारेण तत्प्राप्तिरस्ति। यथा व्रीहीनवहन्तीत्यादावपूर्वीयेषु तदप्राप्तावपि व्रीहिवैतुष्ये तत्प्राप्तिरस्तीत्यपूर्वविधित्वं तथा इहापीति चेन्न। तत्राप्यपूर्वीयेष्वेव साधनान्तरप्राप्तेर्वक्ष्यमाणत्वात्। यथा चैतत्तथा तृतीये वक्ष्यामः। अन्यथा सर्वेषां नियमविधित्वं स्यात्। सर्वत्र क्रियात्वरूपेण सामान्याकारेण साधनान्तरप्राप्तेर्वक्तुं शक्यत्वात्। अतो न सामान्याकारेण साधनान्तरप्राप्त्याऽपूर्वविधित्वम्। एवं च साक्षात्कारे नियमादृष्टस्योपयोग इत्यङ्गीकारोऽयुक्तः। श्रवणविधाविति। आत्मा वाऽरे इति श्रुतौ यतो द्रष्टव्यः अतः श्रोतव्य इत्युद्देश्यविधेयभावात्। न तु यतो ज्ञेयः अत इति। अश्रुतकल्पना प्रसङ्गात्। अत एवाह– साक्षात्कर्तव्य इतीति। अस्तु वाऽपरोक्षज्ञाने नियमादृष्टस्योपयोगः। तथापि नास्माकमनिष्टमित्याह– आपरोक्ष्यस्यैवेति।

प्रतिकूलतर्कान्तरमाह– किंचेति। यथा चैतत् तथा प्रतिकर्मव्यवस्थाभङ्गः एवोपपादितम्। किञ्चेति। अत्रोत्स्यन्त एकैकः प्रतिकूलतर्को ज्ञेयः। अत्राऽदिशब्देन सृष्ट्याद्युपयोगिसर्वशक्तित्वाद्युक्तिर्गृह्यते। ननु कल्पितत्वेऽपि जन्मादिकं किं न स्यादित्यत आह– न हीति। न च रूप्यादेः प्रातिभासिकत्वात् तत्र जन्माद्यसंभवेऽपि प्रपञ्चस्य व्यावहारिकत्वात् जन्माद्युक्तिः संभवतीति वाच्यम्। मिथ्यात्वसिद्धेः प्राक् एतदसिध्याऽन्योन्याश्रयात्। प्रपञ्चे कल्पितत्वेन प्रातिभासिकत्वनियमाच्च। न चैन्द्रजालिकस्यैन्द्रजालिके ईक्षापूर्वकस्रष्टृत्वं दृष्टमिति वाच्यम्। तस्य तादृशवस्तुप्रतीत्युत्पादनार्थमेवेक्षादेरुपपत्तेः। तदभिप्रायेणैवेदं स्रक्ष्यामीत्यादिव्यवहारः। प्रतीतेश्च सत्यत्वात्। न चैवं प्रकृते। त्वया प्रतीतेरपि सत्यत्वानभ्युपगमात्। किञ्च कल्पितत्वे स्वरूपेणात्यन्ताभावप्रतियोगित्वे जन्माद्यनुपपत्तिः। न च स्वाप्निकपदार्थसृष्ट्याद्युक्तिवदियमुक्तिः किं न स्यादिति वाच्यम्। स्वाप्निकपदार्थानां सत्यत्वात्। नचाध्यस्तस्यापि सर्पादेर्भयादिजनकत्ववत् अध्यस्तस्यापि वाय्वादेरग्न्यादिजनकत्वं किं न स्यादिति वाच्यम्। सर्पज्ञानस्यैव भयादिजनकत्वं न सर्पादेरित्युपपादितत्वेनाध्यस्तस्य जनकत्वासंमतेः। जनकत्वे पारमार्थिकसत्त्वस्यैव तन्त्रत्वमित्युपपादितत्वाच्च। न च ब्रह्मण एव तत्तद्भावापन्नस्य कारणत्वमिति तदभिध्यानादित्यत्रोक्तत्वेन अबादौ लयोक्तिः तत्तद्भावापन्ने चैतन्ये व्याख्येति नाधिष्ठानातिरिक्ते लयोक्तिरिति वाच्यम्। तस्य सूत्रस्य सर्वसंहर्तृत्वप्रतिपादनपरत्वेन तत्तद्भावापन्नब्रह्मकारणत्वपरत्वाभावात्। ब्रह्मणो निर्विकारत्वेन तत्तद्भावापत्त्ययोगाच्च। तत्तद्भावापन्नस्य मिथ्यात्वेनानधिष्ठानत्वेन तदतिरिक्ते लयोक्तिरित्यापत्तेश्च। प्रपञ्चसत्यत्वेनैव सर्वोपपत्तावुक्तकुसृष्टिकल्पनाऽयोगाच्च। यथा च सत्यस्यापि निवृत्तिस्तथोपपादयिष्यते। न च परिणामवादाभ्युपगमेन वैषम्याद्युक्तिः। तदनन्यत्वमिति परमसिद्धान्ते तु न चाशङ्का न चोत्तरमिति वाच्यम्। परिणामवादातिरिक्तसिद्धान्तस्यैवाभावात्। न च तदनन्यत्वमिति सूत्रप्रतिपाद्यो विवर्तवाद एव परमसिद्धान्त इति वाच्यम्। तस्यान्यस्वतन्त्रसाधननिषेधपरत्वात्। यथा चैतत् तथा तत्रैवोपपादितम्। न च मायाविन ईश्वरस्य स्वप्रतिबिम्बभूतजीवभ्रामयितृत्वेन सर्वविरोधनिरास

(कण्टकोद्धारः)

इति वाच्यम्। तस्य भ्रामयितृत्वस्य प्रपञ्चमिथ्यात्वसिध्युत्तरकालीनत्वेनान्योन्याश्रयात्। जीवस्येश्वरप्रतिबिम्बत्वाभावाच्चेति सर्वमतिप्रसङ्गापादनं निरवद्यम्।

ननु शुक्तिरूप्यादौ जन्माद्यभावे प्रातिभासिकत्वं तन्त्रम्। नाध्यस्तत्वमित्यत आह– रूप्यादौ चेति। तस्यैवेति। प्रातिभासिकत्वस्यैवेत्यर्थः। अनुमानेति। धूमस्याप्यपर्वतीयवह्निं प्रति प्रयोजकत्वं स्यादित्यनुमानमात्रोच्छेद इत्यर्थः। भ्रामयितुरिति। तस्य कल्पितत्वेन न प्रयोजनादिप्रसक्तिरिति भावः। नन्वविद्योपहितचित एवानादेरीश्वरत्वेन नान्तःकरणोपहितजीवकल्पितत्वम्। तस्य ततः पश्चात्तनत्वादित्यत आह– न हीति। अध्यासो हि कल्पना। सा च कल्पकाधीना। तत्रेश्वरो न स्वकल्पकः। आत्माश्रयापातात्। न च चितस्तत्कल्पकत्वम्। चितो निर्धर्मकत्वात्। न च कल्पकाभावे कल्पना संभवतीति परिशेषाज्जीव एव कल्पक इति भावः। न च जीवस्यैव कल्पकत्वमस्तु। तेन कल्पनाकाले प्रयोजनादि प्रसक्तिमानेव कल्प्यते। अतो न दोष इति वाच्यम्। जीवस्यासर्वज्ञत्वेन तत्तत्प्रयोजनविशेषाज्ञानेन तत्प्रसक्तिमदीश्वरकल्पकत्वायोगात्। न हि जीवस्य सार्वज्ञ्यम्। असर्वज्ञश्रुतेर्निर्विषयत्वापातात्। विशेषादर्शनाभावेन भ्रान्त्याद्ययोगाच्च। त्वन्मत इति। पृथिव्यादीनां वाय्वाद्युत्पत्तिकल्पने पृथिव्यादिभ्यो देहादिसिद्धिः। तत्सिद्धौ च पृथिव्याद्युत्पत्तिकल्पनमित्यन्योन्याश्रय इति भावः। नन्वीश्वर एव पृथिव्यादीनां वाय्वाद्युत्पत्तिकल्पकोऽस्तु। तथा च नान्योन्याश्रय इत्यत आह– ईश्वरस्य चेति। तथात्वे ईश्वरस्य भ्रान्तत्वप्रसङ्ग इति भावः। नन्वीश्वरस्यापि भ्रान्तत्वमङ्गीक्रियत एव। शोकं मोहमित्यादि श्रुतेः शुद्धब्रह्मविषयत्वादित्यत आह– तद्भ्रान्तेरिति। देहेन्द्रियादिकं विना नेश्वरस्यापि भ्रान्तिः। तथाचान्योन्याश्रय एवेति भावः। न चारोपमात्रे न देहेन्द्रियाद्यपेक्षेति वाच्यम्। आरोपमात्रे तत्सापेक्षतायाः पूर्वमेवोक्तत्वात्। न चेश्वरकल्पनादिरूपो भ्रमः अनादिरेवेति न देहेन्द्रियाद्यपेक्षेति वाच्यम्। भ्रमस्य स्वरूपानादित्वे प्रमाणाभावात्। जगदारोपस्यैवानादित्वेनाविद्याया उपादानत्वेनाधिष्ठानतया ब्रह्मणश्च सिद्धिर्न स्यात्। न चाध्यासाश्रयतया ब्रह्मसिद्धिरिति वाच्यम्। तस्यानादित्ववत् निराश्रयत्वस्याप्युपपत्तेः। तस्मादियं प्रक्रिया प्रमाणविरुद्धाऽप्रामाणिकीति। अत एवाह– दिगिति। तथाच मिथ्यात्वानुमानं प्रतिकूलतर्कपराहतमिति सर्वाभासोपेतं मिथ्यात्वानुमिति। मिथ्यात्वहेतूनां प्रतिकूलतर्काः॥

## न्यायामृतप्रकाशः

॥यदि विश्वमिति॥ विश्वमिथ्यात्वानुमाने यः पक्षः स एव विश्वशब्देनाभिप्रेतो द्रष्टव्यः। साधिष्ठानादिकमित्यत्रादिपदेन प्रधानादिकं ग्राह्यम्। तथाच यदि विश्वं कल्पितं स्यात्तदा साधिष्ठानं स्यात्, सत्यप्रधानं स्यात्, सत्यसादृश्योपेतं स्यात्, सत्यदोषोपेतं स्यात्, सत्याज्ञानोपेतं स्यात्, सत्यबाधकज्ञानोपेतं स्यात्, सत्यद्रष्टृपेतं स्यात्, सत्यदेहेंद्रियादिसापेक्षं स्यादिति प्रत्येकं तर्का अभिमता इति न वैयर्थ्यमिति द्रष्टव्यम्। तर्केऽप्रयोजकतां परिहरति ॥भ्रांतेरिति॥ सदृशं अधिष्ठानप्रधानयोस्सादृश्यं सत्यमिति सर्वत्र संबध्यते।

(प्रकाशः)
आदिपदेन देशकालादृष्टादिकं ग्राह्यम्। इदं प्रतिज्ञावाक्यम्। उत्तरत्रैकैकस्तर्कस्सम्यगप्रयोजकतादिपरिहारेणोपपाद्यते। तत्रादौ विश्वं यदि कल्पितं स्यात्तदा साधिष्ठानं स्यादिति तर्कस्तावदुपपाद्यते। (नन्वत्रेष्टापत्तिः। ब्रह्मणोऽधिष्ठनस्य सत्यत्वांगीकारादिति चेन्न। त्वन्मते ब्रह्मणोऽधिष्ठानत्वासंभवात्। अधिष्ठानत्वे सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषवत्त्वस्य प्रयोजकत्वात्। ब्रह्मणः सामान्यधर्मोपेतत्वादिना तावत् ज्ञातत्वं न संभवति। निस्सामान्यत्वात्। अज्ञातविशेषवत्त्वं च न संभवति। निर्विशेषत्वांगीकारादित्याह। निस्सामान्य इति। इति पाठांतरं क्वचित् दृश्यते।) ननु यदि विश्वं कल्पितं स्यात्तदा सत्याधिष्ठानोपेतं स्यादित्ययुक्तं। सत्यस्यात्मनोऽधिष्ठानत्वांगीकारादिति चेन्न। सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषत्वस्याधिष्ठानत्वे तंत्रत्वात्। त्वया चात्मनि निस्सामान्यविशेषत्वेनांगीकृते सामान्यतोज्ञातत्वे सत्यज्ञातविशेषत्वानंगीकारादित्याह ॥ निःसामान्ये इति॥ उक्तं हीति। अधिष्ठानत्वे तंत्रभूतं सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषत्वं ब्रह्मणि नास्ति। निस्सामान्यत्वान्निर्विशेषत्वाच्चेत्युक्तं हीत्यर्थः। कात्स्न्र्येन सर्वविशेषवत्त्वेन। अज्ञाने सामान्यतोऽप्यज्ञाने चेत्यर्थः ॥ ज्ञातेति॥ सामान्यविशेषाभ्यामित्यर्थः ॥ निर्विशेष इति॥ सामान्यधर्मशून्ये विशेषधर्मशून्ये चेत्यर्थः।

यदुक्तं ब्रह्मणो नाधिष्ठानत्वमिति तदयुक्तम्। त्वदुक्तस्याधिष्ठानत्वेऽतंत्रत्वादित्याशंकते ॥ नन्विति॥ सद्विशेषेति॥ विशेषाणां सत्त्वं नापेक्षितमिति भावः। तत्र अधिष्ठानत्वे ॥ तच्चेति॥ स्वरूपज्ञानं स्वप्रकाशत्वाद्युक्तम्। विशेषाणामभावादेव विशेषाज्ञानं चास्तीत्यर्थः। सामान्यतो ज्ञातत्वमेवाऽधिष्ठानत्वे प्रयोजकम्। न स्वरूपेण ज्ञानम्। कुत इत्यत आह ॥ त्वन्मतेऽपीति॥ ॥ संस्कारादीति॥ संस्कारसंप्रयोगदोषरूपकारणत्रयजन्यत्वादित्यर्थः। ततः किमित्यत आह ॥ सामान्याकारेति॥ सदृशादृष्टचिंताद्याः स्मृतिबीजस्य बोधका इत्युक्तत्वात्संस्कारोद्बोधार्थं सामान्याकारेण ज्ञातत्वमपेक्षितम्। तथाहि। चाकचक्यादिसादृश्यदर्शनेन प्रधानसंस्कारोद्बोधानंतरं भ्रमो भवति। ब्रह्मणश्च निस्सामान्यत्वेन सामान्यतो ज्ञातत्वासंभवान्नाधिष्ठानत्वमिति भावः। तथा सद्विशेषाज्ञानस्यैव भ्रमकारणत्वं वक्तव्यम्। कुत इत्यत आह ॥ असदिति॥ बाधकालव्यावृत्तभ्रमकालीनाधिष्ठानत्वेऽसद्विशेषाज्ञानं न प्रयोजकम्। बाधकालेऽपि असद्विशेषाज्ञानस्यैव सत्त्वेन तदानीमप्यधिष्ठानत्वव्यवहारस्स्यादतस्सद्विशेषाज्ञानमेव तत्र प्रयोजकं, तच्च बाधकाले नास्तीति भावः। ननु सद्विशेषाज्ञानस्य भ्रमाधिष्ठानत्वप्रयोजकत्वे सद्विशेषज्ञानं, विशेषप्रमेति यावत्, भ्रमनिवृत्तौ प्रयोजकमित्युक्तं स्यात्। तच्च न संभवति। तथाहि। आदौ वल्मीके स्थाणुत्वभ्रमो जातः। अनंतरं तत्रैव पुंस्त्वभ्रमो जातः अनेनैव पूर्वभ्रमो निवर्तते। तत्र पुंस्त्वभ्रमानंतरं पुनरयं वल्मीक एवेति यदा वल्मीकत्वप्रमा भवति तदैव तद्भ्रमद्वयं निवर्तते नान्यथेति विशेषप्रमैव बाधकत्वेन भ्रमनिवृत्तौ हेतुरिति सद्विशेषत्वाज्ञानमेवाधिष्ठानत्वे प्रयोजकमिति भावः। यद्यप्युत्तरभ्रमः पूर्वभ्रमनिवर्तको भवति। तथापि तस्योत्तरज्ञानत्वेनैव निवर्तकत्वं न तु बाधकत्वेन तन्निवर्तकत्वम् प्रकृते च तादृशमेव विवक्षितमितिभावः। जगद्भ्रमे युक्तं ब्रह्मणोधिष्ठानत्वमित्याशेयनाधिष्ठानत्वे प्रयोजकांतरमाशंकते। (नन्विति) ॥ अथेति॥ तत्र अधिष्ठानत्वे ॥ न त्विति॥ येन निर्विशेषत्वेनाज्ञातविशेषत्वं नास्तीत्यधिष्ठानत्वाभावः स्यादित्यर्थः। ननु नात्र भ्रमविरोधिज्ञानाभावोऽस्ति। अधिष्ठानचैतन्यरूपज्ञानस्यैव विश्वभ्रमविरोधित्वादिति चेत्त्राह ॥ विश्वभ्रमेति॥ ॥ अस्येति॥ चिद्रूपज्ञानस्यैव त्वन्मते ज्ञप्तिरूपमुख्यज्ञानत्वात्तदविरोधिनोऽज्ञानस्य मुख्याज्ञानत्वं न स्यात्। वृत्तेश्च ज्ञायतेऽनया चैतन्यमिति करणव्युत्पत्त्याऽमुख्यज्ञानत्वांगीकारेण तस्या एव वृत्तेर्मुख्याज्ञानविरोधित्वांगीकारेण मुख्यज्ञानत्वमेव स्यादित्यादिकं वक्ष्यत इत्यर्थः।

(प्रकाशः)

आत्मानात्मनोर्विरुद्धधर्माधिकरणत्वेन प्रतीयमानत्वान्नानात्मन आत्मन्यध्यास इत्याह ॥किं चेति॥ दृग्दृश्यत्वादिरूपं यदात्मत्वानात्मत्वादिकं तदादि नेत्यर्थः। दृक्त्वरूपं यदात्मत्वं दृश्यत्वरूपं यदनात्मत्वमिति विवेकः। यद्वा, दृक्त्वदृश्यत्वादिना आत्मत्वानात्मत्वादिनेत्यर्थः। आत्मत्वानात्मत्वे विरुद्धे इत्यत्र संमतिमाह ॥उक्तं हीति॥ ॥तत्तेदंते इति॥ तद्देशकालसंबंधैतद्देशकालसंबंधावित्यर्थः। स्वस्य भावः स्वता, अन्यस्य भावोऽन्यत्वं, तव भावस्त्वत्ता, मम भावो मत्ता। प्रतिद्वंद्वितया प्रतिस्पर्धितया। नन्वात्मत्वानात्मत्वयोर्भेदग्रहः कथमनेन लब्ध इत्यत आह ॥स्वयमात्मेति॥ पर्ययौ पर्यायौ। तथाच स्वतान्यत्वयोरात्मानात्मरूपत्वाद्भेदेन ग्रहो युक्त इत्यर्थः। स्वरूपज्ञानमेवाधिष्ठानत्वे प्रयोजकं, तच्च स्वप्रकाशत्वाद्ब्रह्मणो युक्तमित्यत्र दूषणांतरमाह ॥अपि चेति॥ प्रकाशनिह्नवे(न) प्रकाशापलापे(न) प्रकाशमात्रस्वभावत्वापगताविति यावत् ॥तदधीनेति॥ आत्मप्रकाशाधीनेत्यर्थः। अविद्यादेः प्रातिभासिकत्वेन प्रतिभासशरीरत्वादविद्याप्रकाशस्य साक्षिचैतन्यरूपत्वात् तस्याप्रकाशेऽविद्यादेः प्रकाश एव न संभवतीत्यर्थः ॥घटादीति॥ इदं रजतमिति इदमंशानुविद्धतया रजतस्येव आत्मा घट इति तदनुविद्धतया प्रतीत्यभावादित्यर्थः ॥भातीति॥ सत्स्फुरणयोरात्मरूपत्वादिति भावः ॥इत्युक्तत्वादिति॥ रूपी घट इत्यादौ रूपादिकमिव सन्घट इत्यत्रापि सत्ता घटनिष्ठैव प्रतीयते, स्फुरतीत्यत्रापि ज्ञानविषयत्वमेव घटे प्रतीयते न त्वधिष्ठानानुवेध इत्युक्तत्वादिति भावः। ननु चाक्षुषज्ञाने रूपादिहीन आत्मा प्रतीयत एव। घटादेरेव चाक्षुषप्रकाशाधीनत्वात्। आत्मनस्सदर्थतया स्वत एव भानांगीकारेण चाक्षुषप्रकाशाधीनप्रकाशत्वाभावाद्युक्तो घटादेस्तदनुवेध इति मंदाशंकामपाकरोति ॥न चेति॥ ॥तत्संबंधेनेति॥ स्वतः प्रकाशमानात्मसंबंधेनेत्यर्थः ॥घटइति॥ घटः स्फुरतीति घटानुभवे घटानुविद्धत्वेन स्फुरणं प्रतीयत इत्ययुक्तम्। विज्ञायते घट इत्यादाविव स्फुरतीत्यस्यापि घ(टज्ञानानु)टानुव्यवसायरूपत्वेन घटस्फुरणानुभवतया घटानुभवत्वाभावान्न घटानुभवे स्फुरणानुविद्धतया घटः प्रतीयत इत्यर्थः।

विश्वं यदि कल्पितं स्यात्तदा सत्यप्रधानोपेतं स्यादित्यत्राप्रयोजकत्वं शंकते ॥नन्विति॥ ॥स चेति॥ प्रधानसंस्कारस्यैव भ्रमहेतुत्वेन प्रधानस्य भ्रमहेतुत्वाभावात्संस्कारस्य च प्रधानप्रमयेव प्रधानभ्रमेणाप्युपपत्तेः प्रधानसत्यत्वं नापेक्षितमित्यर्थः। ननु यथा जगद्भ्रमे प्रधानभ्रमजन्यसंस्कारः कारणं, एवं प्रधानभ्रमेपि तत्पूर्वप्रधानभ्रमजन्यसंस्कारः कारणं तत्राप्येवमित्यनवस्थेत्यतो भ्रमपरंपराया अनादित्वान्नानवस्थेत्याह ॥अत्र चेति॥ ॥प्रमेति॥ प्रधानप्रमेत्यर्थः। तथा सति हि प्रधानस्य सत्त्वमपेक्षितं स्यादित्यभिप्रायः ॥सत्यपीति॥ सत्यपि संस्कारे यदि तस्मिन् प्रधानप्रमाजन्यत्वाभावात्क्वचिद्भ्रमाभावो दृष्टः स्यात् तदैव परं प्रधानप्रमाजन्यस्यैव संस्कारस्य भ्रमहेतुत्वकल्पनया तत्सत्यत्वमपेक्षितं स्यादित्यर्थः। नन्वन्यत्र विद्यमानमेवान्यत्रारोप्यत इति नियमेन प्रधानस्य सत्त्वमपेक्षितं स्यादित्याशङ्क्य निराकरोति॥ न चेति॥ आवयोरिति। शुक्तिरेवात्यन्तासद्रजतात्मना प्रतिभातीतित्वन्मतं, प्रातिभासिकमनिर्वचनीयं रजतं प्रतीयत इति मन्मतम्। उभयोर्मतेपि न तद्देशांतरादौ सत् येन प्रधानसत्यत्वं स्यादित्यर्थः ॥एवमिति॥ प्रधानज्ञानमेव संस्कारद्वारा भ्रमहेतुः। तच्च ज्ञानं भ्रमरूपमपि संभवतीति न प्रधानस्य सत्यतासिद्धिरित्यंगीकारे इत्यर्थः। धियश्च प्रमात्वेऽधिष्ठानसत्यतासिद्धिरित्यत आह ॥तद्धीश्चेति॥ अधिष्ठानधियो भ्रमरूपत्वे तत्राप्यधिष्ठानांतरपरंपरयानवस्थापरिहारायानादिरित्युक्तम्। इष्टापत्ति-परिहारायाधिष्ठानत्वेनेत्याद्युक्तम्। नन्वधिष्ठानस्य बाधाभावात्सत्यत्वमिति चेत्तत्राह ॥अधिष्ठानवदिति॥ संगृह्णाति

(प्रकाशः)
॥ तथाचेति ॥ भ्रमे प्रधानमिवाधिष्ठानमपि सुगतरीत्या धीमात्रादेव हेतुः स्यात्, अधिष्ठानज्ञानमेव हेतुः स्यादिति यावत्, तथाचाधिष्ठानमप्यसत्स्यादिति भावः ॥ द्वयोरिति ॥ अधिष्ठानप्रधानयोरित्यर्थः।

एतत्प्रपंचस्य मिथ्यात्वे प्रोच्यमानेऽस्माभिरुक्तं एतत्प्रपंचस्य मिथ्यात्वे प्रधानभूतः प्रपंचः सत्यो भविष्यतीति। त्वया तस्यापि भ्रमसिद्धत्वेन मिथ्यात्वांगीकारे त्वस्यैव प्रपंचस्य सत्यत्वं सिद्ध्यतीत्याह ॥ एतदिति ॥ यथा शुक्तिरूप्यस्य मिथ्यात्वात्तदसाध्यार्थक्रियाकारि आपणस्थं रजतं यथा सत्यमंगीक्रियते एवमस्य प्रपंचस्य मिथ्यात्वांगीकारे एतत्प्रपंचासाध्यार्थक्रियाकारि प्रपंचांतरमंगीकार्यम् तस्यापि मिथ्यात्वांगीकारेऽर्थक्रियाकारित्वादिना प्रमितस्यास्यैव प्रपंचस्य तात्विकत्वं स्यात्। कुत इति चेत् 'आत्मन आकाशस्संभूत' इ(त्यादिश्रु)तिश्रुतिसिद्धोत्पत्त्यादिकत्वात्। तथाच श्रुतिसिद्धस्यात्मनः स्वोचितदेशकालाद्युपाधौ निषेधायोग इव स्वोपाधौ निषेधायोगेन स्वोपाधा (वेव सत्यत्वापातात्) वसत्यत्वाभावात्। श्रुत्यादिसिद्धस्यापि मिथ्यात्वे आत्मनोपि मिथ्यात्वं स्यादित्यर्थः ॥ व्यावहारिकेति ॥ आभासस्य प्रसक्त्याऽनाभासस्य निषेधांगीकारादित्यर्थः ॥ पारमार्थिकेति ॥ अनाभासेत्यर्थः। नन्वाभासस्य प्रसक्त्याऽनाभासस्य निषेध इति मते पूर्वोक्तदूषणमस्तु। मया तु प्रातिभासिकस्यैव रजतस्य निषेधोंऽगीक्रियते। न च प्रातिभासिकसत्त्ववतो निषेधायोगः। स्वरूपतोऽनिषेधेपि पारमार्थिकत्वाकारेण निषेधांगीकारात्। तथा च न पारमार्थिकप्रपंचांतरविषयकत्वं 'नेह्नानास्ती'ति निषेधस्य। किंत्वेतस्मिन्नेव प्रपंचे पारमार्थिकत्वविषयत्वमित्यत आह ॥ प्रातिभासिकस्यैवेति ॥ ॥ निरस्तमिति ॥ पारमार्थिकत्वरूपधर्मरहितस्यापि प्रपंचस्य ब्रह्मवत्स्वरूपेणैव सत्त्वोपपत्तेरिति निरस्तमित्यर्थः।

प्रधानस्यासत्यत्वमंगीकृत्य तद्भ्रमजन्यसंस्कारस्यैव भ्रमहेतुत्वांगीकारे दोषांतरमाह ॥ कल्पाद्येति ॥ तत्पूर्वं प्रधानरूपजगदंतराभावेन तद्भ्रमजन्यसंस्काराभावेन कल्पाद्यभ्रमायोगादित्यर्थः ॥ कल्पांतरीयेति ॥ कल्पांतरीय-जगद्भ्रमजन्यसंस्कारादित्यर्थः। भ्रमोत्पत्तौ कल्पाद्यभ्रमोत्पत्तौ ॥ नारिकेलेति ॥ तस्य जन्मांतरीयस्याग्र्यनुभव-जन्यसंस्कारस्यानादौ मनसि सत्त्वादित्यर्थः। ननु जन्मांतरीयसंस्कारस्याप्येतज्जन्मीयभ्रमहेतुत्वमवश्यं वक्तव्यम्। अन्यथा जातमात्रस्य बालस्य गुडे तिक्तत्वारोपो न स्यात्। अस्मिन्जन्मनि तिक्तद्रव्यनिष्ठस्य तिक्तत्वस्याननुभूतत्वेन संस्काराभावात्। अतो जन्मांतरीयतिक्तरसानुभवजन्मसंस्कारोऽवश्यं भ्रमहेतुतया वक्तव्य एव। एवं जगद्भ्रमेऽपीत्यत आह ॥ एतज्जन्मनीति ॥ ॥ अनन्यगतिकत्वादिति ॥ न चैवं प्रकृतेप्यनन्यगतिकत्वं वाच्यम्। सत्यत्वेनैवोपपत्तेरिति भावः। स्यादेतदेवं यद्ययं तिक्तताभ्रमः स्मर्यमाणारोपः स्यात्तदैवैतज्जनकतयाऽनन्यगतिकतया जन्मांतरीयसंस्कारापेक्षा स्यात्। न चैवं किंतु गृह्यमाणारोपोऽयम्। तत्र च न संस्कारापेक्षेत्याह ॥ यद्वेति ॥ ॥ गृह्यमाणेति ॥ आस्यगतपित्तद्रव्यनिष्ठतिक्तिमानं गृहीत्वा गुडे आरोप्यत इत्यर्थः। गृह्यमाणारोपे दृष्टांतः माषेति। मष्यां मषीखंडे। शांतांगारकाष्ठैकदेशो मषीखंड इत्युच्यते। यथा माषं गृहीत्वा माषराश्युपरि पतिते मषीखंडे माषवदेव परिदृश्यमाने माषाभेद आरोप्यते तद्वदित्यर्थः।

सत्यस्य प्रधानस्य भ्रमहेतुत्वमनंगीकुर्वता संस्कारस्य भ्रमहेतुत्वमंगीकृतम्। तथा च तस्यैव सत्यत्वं स्यादित्याह ॥ किंचेति ॥ यदि सत्यः संस्कारो भ्रमहेतुर्न स्यात् तर्हि मैत्रे संस्कारोऽस्तीत्येवं चैत्रेणाध्यासः कृतः। तथा च चैत्राध्यस्तसंस्कारस्य मैत्रे विद्यमानत्वात् मैत्रस्य भ्रमः स्यात्। न ह्येवं दृश्यतेऽतस्सत्यभूतसंस्कारस्यैव

(प्रकाशः)

भ्रमहेतुत्वमित्यर्थः। ननु न सत्यसंस्कारस्य भ्रमहेतुत्वम्। न चोक्तातिप्रसंगः। मयि संस्कारोऽस्तीति स्वाध्यस्तसंस्कारस्यैव भ्रमहेतुत्वांगीकारेणान्याध्यस्तसंस्कारस्य तद्धेतुत्वागंनीकारादित्याशंक्य निराकरोति ॥ नचेति ॥ तत्र स्वस्मिन् भ्रम इति संबंधः। कदाचिन्मयि संस्कारोस्तीति बुद्धिपूर्वकं संस्काराध्यासं कृतवतोऽनंतरं भ्रमोप्याहार्यो भवत्येवातउक्तं– नियमेति। अनाहार्यस्मर्यमाणनिरुपाधिकभ्रमात्पूर्वं संस्कारस्य कारणत्वेन सत्त्वं वाच्यमेव। न तु तस्याध्यस्तत्वम्। संस्कारस्याज्ञातकरणत्वात्। ननु तर्हि तत्सत्त्वं कथं ज्ञातव्यमिति चेन्न। भ्रमरूपकार्ये सति अस्य संस्कारः पूर्वं वृत्त इति तस्य कार्यानुमेयत्वात्। 'कार्यैन्रियधर्माणां यथा कार्यमुन्नयनादि'ति वचनादिति भावः।

यदि विश्वं कल्पितं स्यात्तदा प्रधानाधिष्ठानसादृश्योपेतं स्यान्न च तदंगीकर्तुं शक्यम्। सादृश्यं हि गुणकर्मादिकृतं वाच्यम्। सामान्यान्येव भूयांसि गुणावयवकर्मणामित्यादिवचनात् जगदारोपाधिष्ठानस्य ब्रह्मणः प्रधानसादृश्यं वक्तव्यं तन्न संभवति। गुणादिरहिते ब्रह्मणि गुणादिकृतसादृश्यायोगात्। अतः प्रधानप्रतियोगिकसादृश्यस्यापेक्षिताधिष्ठानेऽभावान्न विश्वं कल्पितमिति आदौ वक्तव्यम्। तदुपरि अस्मिंस्तर्के विवरणोक्तामिष्टापत्तिं व्यभिचारं चाशंक्य निषेधति ॥ यत्तूक्तमिति ॥ विश्वस्य कल्पित(त्वपक्षेपि) त्वेपि प्रधानसादृश्यमधिष्ठानेऽस्त्येव। न च गुणादिकृतसादृश्यं न संभवति ब्रह्मणो निर्गुणत्वादिति वाच्यम्। यथा केतकीगंधसदृशः सर्पगंध इति प्रतीतिबलात्सर्पगंधे केतकीगंधसादृश्यं वर्तत इति वक्तव्यं तन्न संभवति। यथा केतकीसर्पयोर्गंधरूपेण सादृश्यमस्ति तथा केतकीगंधसर्पगंधयोर्न गुणकृतं सादृश्यमस्ति। गुणे गुणानंगीकारात्। नाप्यवयवकृतं गंधयोर्निरवयवत्वात्। नापि कर्मकृतं गंधयोः कर्माभावात्। अतस्तत्र किंचिद्गुणादिकृतसादृश्यभिन्नं सादृश्यांतरं गंधे कल्पितमस्तीत्यंगीकृत्य कल्पितसादृश्येन यथा प्रतीतिर्भ्रमरूपा युक्तेति तार्किकैः कल्प्यते तथा प्रकृतेऽपि गुणादिहीने ब्रह्मणि वास्तवसादृश्याभावेऽपि सादृश्यांतरं किंचित्कल्पनीयमितीष्टापत्तिः। अथवा रक्तः स्फटिक इत्यादौ रक्तद्रव्यस्फटिकयोः सादृश्याभावेपि तद्गतरक्तिमा यथा स्फटिके आरोप्यते एवमिहापि सादृश्यं विनैव विश्वभ्रमोऽस्त्विति व्यभिचार इत्यर्थः ॥ इहेति ॥ जगद्भ्रमहेतुसादृश्यस्य कल्पितत्वांगीकारेऽविद्ययैव कल्पितत्वप्राप्त्याऽविद्याया अपि कल्पितत्वेन सादृश्याधीनतया अध्यासेनाविद्यायां सिद्धायां तदधीन-सादृश्यसिद्धिस्तत्सिद्धौ चाविद्याध्याससिद्धिरित्यन्योन्याश्रय इत्यर्थः। तथाच नेष्टापत्तिरिति भावः। व्यभिचारं परिहरति ॥ रक्त इति ॥ अभ्युपगमवादोऽयम्। सिद्धांते तस्य प्रतिबिंबत्वादिति ध्येयम् ॥ निरुपाधिक इति ॥ निरुपाधिकानाहार्यभ्रम इत्यर्थः। जगद्भ्रमस्तु निरुपाधिक एवेति भावः। तथा च जगद्यदि निरुपाधिककल्पितं स्यादिति तर्कस्याभिप्रेततया तत्रापादकानागमान्न व्यभिचार इति भावः। प्रकारांतरेण व्यभिचारं परिहरति ॥ रक्तेति ॥ निरुपाधिकत्वविशेषणस्यापादकेऽदानेपि न व्यभिचारः। न च सादृश्यं तत्र नास्तीति वाच्यम्। रक्तद्रव्यस्फटिकयोर्द्रव्यत्वादिना सादृश्यसद्भावादिति भावः।

यदि विश्वं कल्पितं स्यात्तदा सत्यदोषयुतं स्यादिति तर्केऽप्रयोजकत्वं निरस्यति ॥ न चेति ॥ ॥ स्वतस्त्वेति ॥ ज्ञानसामग्र्यां दोषस्याप्रवेशेन ज्ञानसामग्रीमात्रजन्यत्वापत्त्या स्वतस्त्वप्राप्त्या वेदांतजन्यब्रह्मज्ञानस्याप्यप्रामाण्यापात इत्यर्थः। यदि विश्वं कल्पितं स्यात्तदा द्रष्टृपेतं स्यादिति तर्के व्याप्तिमुपपादयति ॥ एवमिति ॥ ॥ समानेति ॥

(प्रकाश:)

भ्रमप्रमयोः समान आश्रयः। स च द्रष्टैवेति भावः। यदि विश्वं कल्पितं स्यात्तदा सत्यदेहेंन्द्रियाद्युपेतं स्यादिति तर्केऽप्रयोजकत्वं निरस्यति ॥ एवमिति ॥ देहादीनां भ्रमप्रयोजकत्वमुपपादयति ॥ प्रलय इति ॥ ॥ करणेति ॥ इंद्रियादिकरणजन्यत्वेन प्रसिद्धस्य भ्रमस्य इंद्रियाद्यभावेऽदर्शनादित्यर्थः। न च देहादीनामभावेपि अज्ञानाख्यकारणसद्भावाद्भ्रमोऽस्त्विति वाच्यम्। तथात्वे प्रलयेऽप्यज्ञानस्य सत्त्वेन तदापि भ्रमप्रवाहापत्तेः। अतो यथा प्रमाया इंद्रियादिकरणजन्यत्वेन प्रसिद्धाया इंद्रियदेहाद्यभावेऽभावो दृष्टः एवं प्रलये सत्यप्यज्ञानादौ देहाद्यभावेन भ्रमाभावदर्शनाद्देहेंद्रियादीनामेव भ्रमजनकत्वनियमादिदानीं देहेंद्रियाद्यभावेपि विश्वभ्रमांगीकारेऽकारणकार्योत्पत्तिः स्यादिति भावः। ननु विश्वस्य भ्रांतिकल्पितत्वे पारमार्थिकदोषयुक्तत्वं स्यादित्यापादनमयुक्तम्। रूप्याद्यध्यासे दोषादीनां व्यावहारिकसत्त्वस्य, करणं यदिंद्रियं तत्समं यत् सत्त्वं व्यावहारिकमेव सत्त्वं तस्य वा तंत्रतायाः क्लृप्ततया विश्वभ्रमे दोषादीनां करणभूतेंद्रियसमं यत्सत्त्वं व्यावहारिकमेव सत्वं तदेव तंत्रमस्त्वित्याशंक्य निराकरोति ॥ न चेति ॥ ॥ करणादिसममिति ॥ व्यावहारिकमेव सत्त्वमित्यर्थः। एकस्यैव शब्दभेदेन व्यवहारमात्रमिति द्रष्टव्यम् ॥ अन्योन्येति ॥ जगदध्यासे सिद्धे तदंतर्गतदोषादीनां व्यावहारिकसत्त्वसिद्धिः तत्सिद्धौ च सदृशसत्त्वोपेतैर्दोषादिभिर्जगदध्याससिद्धिरित्यन्योन्याश्रयादित्यर्थः। ननु भवत्पक्षेपि जगदध्यासाभावसिद्धौ तदंतर्गतदोषदेहेंद्रियादीनां पारमार्थिकसत्त्वसिद्धिस्तत्सिद्धौ च भवदुक्तप्रतिकूलतर्कसिद्ध्या विपर्यये पर्यवसानेन जगध्यासाभावसिद्धिरित्यन्योन्याश्रयः समान एवेत्यत आह ॥ पारमार्थिकेति ॥ औत्सर्गिकप्रामाण्येन प्रत्यक्षादिना। तथा च दोषादीनां पारमार्थिकसत्त्वस्य जगदध्यासाभावसिद्ध्यधीनत्वाभावेन नास्मत्पक्षेऽन्योन्याश्रय इति भाव इति सांप्रदायिको वाक्यार्थः। करणादिसमसत्त्वं तंत्रमित्यत्र दोषमाह ॥ इहेति ॥ अध्यासे करणसमसत्त्वस्य तंत्रत्वमयुक्तम्। सादिरूप्यादिप्रतीतौ करणसद्भावेन तत्र दोषादेर्ज्ञानकरणसमसत्त्वसंभवेऽप्यज्ञानादिप्रतीतेस्साक्षिरूपतयाऽजन्यत्वेन तत्प्रतीतौ करणाभावात्करणसमसत्त्वं दोषदेहेंद्रियादीनां न संभवतीत्यर्थः। रूप्याध्यासदृष्टांतेन जगदध्यासे दोषादीनां करणसमसत्त्वे प्रोच्यमाने दोषांतरमाह ॥ रूप्यादीति ॥ ॥ अधिष्ठानेति ॥ रूप्यभ्रमेऽपींद्रियादीनामधिष्ठानभूतशुक्तिसमसत्ताकत्वदर्शनात् जगद्भ्रमहेतुदोषादीनामपि अधिष्ठानभूतब्रह्मसमसत्ताकत्वप्राप्त्या पारमार्थिकसत्त्वसिद्ध्यापातादित्यर्थः।

ननु जगदध्यासहेतुर्दोषादिस्तात्विको माभूत्। माभूच्च व्यावहारिकः। प्रातिभासिकस्तु भविष्यतीत्यत आह ॥ दोषादेरिति ॥ अध्यस्तत्वे कल्पिततया प्रातिभासिकत्वे ॥ तात्विकत्वेति ॥ प्रतियोगितदभावयोर्भिन्नसत्ताकत्वस्यावश्यकत्वादिति भावः। अतात्विकेन प्रातिभासिकदोषेण ॥ तात्विकेति ॥ तात्विकस्य दोषाभावस्य कार्यं प्रामाण्यम् ॥ दुष्टतयेति ॥ अनृतत्वव्याघातादिदोषयुक्तत्वेन बौद्धकल्पितं यद्वेदजन्यं ज्ञानं तस्यैवेत्यर्थः। इदमत्राकूतम्। यथा वेदजन्यज्ञाने बौद्धकल्पितानृतत्वव्याघातादिदोषेणाप्रामाण्ये शंकिते सति तत्र त्वयोच्यते तत्र दोषाणां कल्पितत्वेन प्रातिभासिकतया तदभावस्य तात्विकत्वेन तात्विकदोषाभावेन स्वकार्यं प्रामाण्यमेव प्रयोजनीयम्। तत्र चातात्विकदोषाणां न प्रतिबंधकत्वम्। अतात्विकं तात्विकस्य कार्ये न प्रतिबंधकम्। न हि वंध्यासुतः शक्तश्चैत्रवाचां निवारण इति न्यायादिति। एवमिहापि दोषाणां प्रातिभासिकत्वे तदभावस्य तात्विकत्वप्राप्त्या तात्विकेन दोषाभावेन जगज्ज्ञाने प्रामाण्ये योजनीयेऽतात्विकदोषाणामप्रतिबंधकत्वमेव।

(प्रकाशः)

त्वदुक्तन्यायात्। अतो जगज्ज्ञानस्य प्रामाण्यसिद्धिरिति। दोषाणां कल्पितत्वेन प्रातिभासिकत्वपक्षे दोषांतरमाह ॥ दोषादीति॥ ननु नानवस्था। किंचिद्दूरं गत्वा तत्र कस्यचित्पुरुषस्य दोषाभावेपि भ्रमांगीकारादित्यत आह ॥ कस्यचिदिति॥ आवयोर्मतेऽप्रामाण्यस्य परतस्त्वेन दोषाभावेऽप्यप्रामाण्यांगीकारे तस्य स्वतस्त्वापत्त्या वेदजन्यज्ञानेऽप्यप्रामाण्यापात इति भावः।

ननु तथापि नानवस्था। अविद्याख्यदोषाध्यासस्यानादित्वेन तत्र दोषापेक्षाया अभावात्। अथवाऽप्रामाण्यस्य स्वतस्त्वापत्तिभियाऽविद्यारोपेऽविद्याया एव दोषत्वांगीकारात्। न चात्माश्रयः। अविद्याख्यदोषस्य जगदध्यासनिर्वाहकत्वस्य स्वाध्यासनिर्वाहकत्वस्य चांगीकारेण दोषाभावादित्याशंक्य निराकरोति ॥ न चेति॥ अप्रामाण्यस्वतस्त्वापत्तिभिया पक्षांतरमाह ॥ स्वनिर्वाहकत्वेन वेति॥ तत्र दृष्टांतः भेदवदिति। भेदस्य भेदिनोस्सकाशाद्भेदेऽनवस्थायां प्राप्तायां एक एव भेदो भेदिनोर्दंडदेवदत्तयोर्विशिष्टव्यवहारं, भेदो भिन्न इति स्वविशिष्टव्यवहारं च यथा निर्वहति तद्वदित्यर्थः ॥ तत इति॥ अविद्यारूपदोषस्यानादित्वेनाधिष्ठानानपेक्षत्वात्स्व-निर्वाहकत्वाद्वा मिथ्याभूतं स्वयमेव स्वस्याधिष्ठानं भवत्विति ब्रह्मरूपाधिष्ठानापेक्षाऽपि न स्यादित्यर्थः ॥ विषयस्येति॥ विषयस्यानादित्वेपि तत्प्रतीतेर्जन्यतया दृष्टत्वादिहापि अविद्यारूपविषयस्यानादित्वेपि तत्प्रतीतेर्दोषजन्यत्वमेव वाच्यम्। अन्यथा तस्याः प्रतीतेरप्रामाण्यस्यैवायोगादिति भावः। ननु व्यावहारिकस्थल एवेत्थं व्यवस्था। प्रातिभासिकस्थले तु प्रतीत्यतिरिक्तविषयसत्ताया एवाभावात्तस्या एवानादित्वमंगीक्रियते। अप्रामाण्यस्वतस्त्वं तु स्वनिर्वाहकत्वमंगीकृत्य परिह्रियतेऽतो नोक्तदोष इत्यस्वरसादाह ॥ स्वनिर्वाहकत्व इति॥ अत्र स्वनिर्वाहकत्व इत्यतः पूर्वं अविद्यारोपे तस्या एव दोषत्वे लाघवेन जगदारोपेपि तस्या एव दोषत्वापाताच्चेति क्वचित्कः पाठो दृश्यते। तत्राविद्यारोपेऽविद्याया एव दोषत्वे जगदारोपेऽपि शुक्तिरजताद्यारोपेऽपि तस्या एव दोषत्वापत्त्या काचादेर्दोषत्वं न स्यादित्यर्थो द्रष्टव्यः। अत्र स्वनिर्वाहकत्वं नाम स्वव्यवहारे स्वातिरिक्तानपेक्षत्वं, यथा प्रमेयत्वं प्रमेयमिति। एवमज्ञानांतरमंतरेण अज्ञानमज्ञातमिति व्यवहारोऽभूत्। स्वज्ञानं प्रति स्वस्य दोषत्वं तु न भवति। कुत इत्य आह ॥ प्रतीतीति॥ प्रतीतिमात्रशरीरं यत्स्वं अविद्या तद्विषयिणी या धीस्तत्र दोषतया हेतुत्वेन त्वदंगीकृ तेन प्राप्तं यत्स्वस्य स्वात्मापेक्षया पूर्वभावित्वं तदयोगादित्यर्थः। प्रतीतिमात्रकालत्वं। नामार्थप्रतीत्योरन्यूनानधिककालत्वम् एवं चाविद्याप्रतीतिं प्रति अविद्यारूपार्थस्य दोषतया हेतुत्वे प्रोच्यमाने स्वस्मादपि स्वस्य पूर्ववृत्तित्वमायातम्। तच्चायुक्तमित्यर्थ इत्याहुः। संप्रदायस्तु स्वनिर्वाहकत्वेनाविद्याप्रतीतौ अविद्याया एव दोषत्वेऽविद्यायाः प्रतीतिमात्रशरीरत्वेन प्रतीतिं विना केवलायाः स्वस्याः कदाप्यभावादविद्याप्रतीतौ दोषतयाऽविद्या पूर्वमस्तीत्युक्तेऽविद्याप्रतीतिरेव पूर्वमस्तीत्युक्तं स्यात्। तथाचाविद्याप्रतीत्यपेक्षयाऽविद्याप्रतीतेरेव पूर्वभावित्वप्राप्त्याऽऽत्माश्रय इत्यर्थः।

यदि विश्वं कल्पितं स्यात्तदासत्यभूतबाधकज्ञानोपेतं स्यादिति तर्केऽप्रयोजकता। विश्वस्य कल्पितत्वेपि बाधकज्ञानस्य न सत्यत्वम्। तस्यापि बाध्यत्वादित्याशंकायामाह ॥ बाधकेति॥ तथाचानवस्थाभिया किंचिद्बाधकज्ञानं सत्यमंगीकर्तव्यमित्यर्थः। अत्र यत्परेण जल्पितं– वेदांतजन्यचरमवृत्तेः कतकरजो-वद्वेणुसंघर्षजाग्निवच्च स्वपरबाधकत्वाभ्युपगमान्नानवस्थेति। तदयुक्तम्। स्वेन स्वस्य बाधे बाधकत्वाभिमतस्य

(प्रकाश:)

बाध्यत्वापातेन विरोधात्। अस्मिन्नर्थे मानाभावाच्च। दृष्टांतमात्रस्याप्रत्यायकत्वादित्येवमुत्तरत्र निराकरिष्याम इत्यर्थः। जगदध्यासहेतुदोषादीनां व्यावहारिकत्वे, दोषांतरमाह ॥रूप्यादीति॥ तदेव सत्त्वं दोषसमसत्त्वं व्यावहारिकसत्त्वमित्यर्थः। इहापि जगद्भ्रमेपि तथात्वापत्तेः दोषसमसत्ताकव्यावहारिकसत्तापत्तेः। तथाच रूप्याद्यध्यासे दोषादीनां व्यावहारिकं सत्त्वं दृष्टमिति जगदध्यासेपि तथैवेति यदि कल्प्यते तदा रूप्याद्यध्यासेऽधिष्ठानस्यापि शुक्तिशकलस्य दोषसमं व्यावहारिकं सत्त्वं त्वद्रीत्यैव दृष्टमिति जगदध्यासेऽधिष्ठानस्यापि ब्रह्मणो दोषसमं व्यावहारिकं सत्त्वमेव स्यात्, न पारमार्थिकं सत्त्वमिति भावः। ननु रूप्याध्यासे शुक्तेरधिष्ठानत्वेनाधिष्ठानज्ञानाबाध्यं व्यावहारिकसत्त्वं दृष्टम्। न हि शुक्तिगतं व्यावहारिकं सत्त्वं शुक्तिज्ञानेन बाध्यते तथा तत्र दोषादीनामधिष्ठानज्ञानाबाध्यं व्यावहारिकं सत्त्वमस्ति। न हि शुक्तिज्ञानेन रूप्यभ्रमहेतुदोषादिसत्त्वं बाध्यते। तथा जगदध्यासाधिष्ठाने ब्रह्मणि अधिष्ठानज्ञानाबाध्यं सत्त्वमस्ति। न हि ब्रह्मज्ञानेन ब्रह्मगतं पारमार्थिकं सत्त्वं बाध्यते। दोषादीनां तु अधिष्ठानज्ञानबाध्यं सत्त्वम्। तथाच ब्रह्मणो जगदध्यासाधिष्ठानत्वेऽधिष्ठानभूतस्वज्ञानाबाध्यसत्त्वं तंत्रम्। एवं रजताध्यासे शुक्तेरधिष्ठानत्वेपि। जगदध्यासे रूप्याद्यध्यासे च हेतुभूतदोषाणां व्यावहारिकसत्त्वं तंत्रमिति वैरूप्यं कल्प्यत इति पारमार्थिकसत्त्वं सिद्ध्यति ब्रह्मणि। तत्राबाध्यत्वरूपसत्त्वांगीकारादतो युक्तं तस्याधिष्ठानब्रह्मगतत्वमित्याशंक्य निराकरोति ॥न चेति॥ तत्र रूप्याद्यध्यासे ॥वैरूप्येति॥ अधिष्ठानज्ञानाबाध्यसत्त्वमधिष्ठानत्वे तंत्रं, दोषादीनां व्यावहारिकसत्त्वं जगदध्यासे तंत्रमित्येतत्कल्पनमसति बाधके न युक्तमित्यर्थः। नन्वसति बाधक इत्युक्तम्। दोषादीनां मिथ्यात्वस्यैव बाधकत्वेन तदन्यथानुपपत्त्या दोषादीनां व्यावहारिकं सत्त्वं तंत्रतयांऽगीकर्तव्यमित्याशंक्य निराकरोति ॥न चेति॥ इह जगदध्यासे ॥अन्योन्याश्रयादिति॥ जगदध्याससिद्धौ तदंतर्गतदोषादीनां मिथ्यात्वसिद्धिः। तत्सिद्धौ च मिथ्याभूतदोषैर्जगदध्याससिद्ध्या व्यावहारिकसत्त्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः।

ननु विश्वं यदि कल्पितं स्यात्तदा सत्यदोषादियुतं स्यादिति तर्केऽप्रयोजकता। दोषाणामभावेपि भ्रमसंभवात्। नन्वध्यासमात्रे दोषसत्त्वमपेक्षितमिति चेत्तत्राह ॥न चेति॥ ॥कतिपयाध्यासइति॥ रूप्याद्यध्यास इत्यर्थः ॥न त्वित्यादि॥ प्रकृतो जगदध्यासस्त्वेतादृश इति भावः। कुतो न च युक्तमित्यत आह अधिष्ठानेति॥ ॥लाघवेनेति॥ कतिपयाध्यासत्वापेक्षयाध्यासत्वस्य लघुत्वात् सर्वाध्याससिद्धितः प्रथमं रूप्यादिकतिपयाध्यासेऽध्यासत्वस्योपस्थितत्वात्। अन्यथा रूप्याद्यध्यासेऽध्यासत्वस्यासिद्धौ तस्य दृष्टांतत्वासंभवात्। अतोऽध्यासत्वावच्छेदेन दोषत्वेन च कार्यकारणभावो वाच्यः, न कतिपयाध्यासत्वेनेति नोक्तविभागो युक्त इति भावः। तत्र दृष्टांतः प्रवृत्तीति। यथा संवादिविसंवादिप्रवृत्तिमात्रे संसर्गधियः कारणत्वं लाघवात्। तथा च भ्रमात्प्रवृत्तिसिद्धिः। यथा वा धूममात्रे वह्नेः कारणत्वं लाघवात्, तथाच पर्वते धूमार्थिनो वह्निसिद्धिः तद्वदिति भावः ॥अन्यथेति॥ लाघवानादर इत्यर्थः ॥संवादीति॥ तथाच भ्रमात्प्रवृत्तिर्न स्यात् हेत्वभावादिति भावः ॥अपर्वतीयेति॥ तथाच पर्वतीयधूमार्थिनस्तदलाभः स्यात् हेत्वभावादिति भावः ॥अनुमानेति॥ अपर्वतीयधूमस्यैव वह्निकार्यत्वे पर्वतोऽग्निमान् धूमवत्त्वादित्यत्रापर्वतीयधूमविवक्षायां स्वरूपासिद्धिः। पर्वतीयधूमविवक्षायां वह्न्यकार्यत्वाद्विरुद्धतेत्येवं रीत्याऽनुमानमात्रोच्छेदप्रसंग इत्यर्थः। कतिपयाध्यास इत्यादेः प्रतिबंदीमाह ॥एवं साधिष्ठानेति॥ रूप्याध्यास इत्यर्थः ॥न त्विति॥ जगदध्यासस्त्वे तादृश इति भावः।

(प्रकाशः)

तथाच दोषवदधिष्ठानसत्त्वमपि न स्यादिति ब्रह्मोच्छेद इति भावः। अधिष्ठानस्य दोषादीनां च सत्यत्वोपपादकं अनुगतमेकं तंत्रं वदन् दोषादिसत्यत्वोपपादनमुपसंहरति ॥तस्मादिति॥ ॥अधिष्ठानस्येति॥ रूप्यादिभ्रमाधिष्ठानभूतशुक्तेः काचादेश्च शुक्तिज्ञानाबाध्यत्वादिति भावः ॥ब्रह्मज्ञानेति॥ अधिष्ठान-भूतब्रह्मज्ञानाबाध्यसत्त्ववंतः स्युरेवेति सत्यदोषाद्युपेतं स्यादिति प्रतिकूलतर्कपराहतिः सुस्थैवेति भावः। संगृह्णाति ॥एवंचेति॥

सर्वजगन्मिथ्यात्वसाधकानुमानस्य प्रतिकूलतर्कपराहतिमाह ॥किंचेति॥ रूप्यादेर्बाधेन यथाऽसत्त्वेपि तज्ज्ञाने बाधाभावात्, रजतज्ञानमासीदित्यनुभवेन च सत्यत्वं तथा जगतोऽसत्त्वेपि तज्ज्ञानं सत्यमेव स्यादित्यर्थः। पुनः प्रतिकूलतर्कांतरमाह ॥किंचेति॥ तदभावार्थं बंधप्रतियोगिकात्यंताभावरूपनिवृत्त्यर्थम्। निवृत्तिरूपध्वंसस्य मिथ्याभूतबंधप्रतियोगिकत्वस्यायोगेन अत्यंताभाव एव वाच्यः। तदर्थं च यत्नो न संभवति। कुत इत्यत आह ॥अत्यंताभावस्येति॥ नित्यत्वादिति भावः। ननु प्रपंचस्य स्वरूपेणात्यंताभावो बंधनिवृत्तिरिति नोच्यते। किंतु पारमार्थिकत्वाकारेणात्यंताभावः कथ्यते। जगत्पारमार्थिकत्वाकारेण कालत्रयेपि नास्तीति यावत्। स्वरूपेण तु निवृत्तिरूपध्वंसोऽस्त्येव। न च मिथ्याभूतस्य तदयोगः। मिथ्याभूतस्य प्रातिभासिकस्य ध्वंसायोगेपि व्यावहारिकस्य तत्संभवादतो युक्त एव यत्न इत्याशंक्य निषेधति ॥न चेति॥ ब्रह्मणो निराकारतया पारमार्थिकत्वाकारेणात्यंताभावोस्ति। विशिष्टनिषेधस्य विशेष्ये बाधे विशेषणविषयकत्वेन ब्रह्मणि पारमार्थिकं सत्त्वं नास्तीति लभ्यते। एवं च ब्रह्मणि पारमार्थिकत्वस्य निर्धर्मकतयाऽभावेपि स्वरूपतो न निवृत्तिः, किंतु सत्त्वमेव। एवं बंधस्यापि स्यादिति भावः ॥गौरिति॥ प्रकृतिराद्यंतशून्येत्यर्थः। स्वरूपेण निवृत्त्यंगीकारे एतत् श्रुतिविरोधापत्त्या तदनुसरणायेत्यर्थः। अनुवृत्तिः बंधस्य। बंधात्यंताभावस्यासाध्यत्वेपि यत्नो घटत इत्याशंक्य निषेधति ॥नचेति॥ तदिति॥ बंधप्रतीतीत्यर्थः ॥तस्या इति॥ अर्थज्ञानात्मकोभयविधभ्रमांगीकारेण बंधप्रतीतेरपि मिथ्यात्वेन तन्निवृत्त्यर्थमपि यत्नो न संभवत्येव। न हि रूप्यनिवृत्त्यर्थं यत्नोस्तीति भावः ॥अन्यथेति॥ बंधप्रतीतेर्मिथ्यात्वाभावे बंधप्रतीतेस्सत्यत्वप्राप्त्या निवृत्त्ययोगेन तदुच्छेदार्थं यत्नायोगेन मोक्षेऽपि बंधप्रतीतिः स्यादित्यर्थः ॥प्रातीतिकेति॥ प्रतीतिविषयबंधेत्यर्थः। प्रतिकूलतर्कांतरमाह ॥किंचेति॥

तन्निदिध्यासनेति॥ ब्रह्मविषयकनिदिध्यासनेत्यर्थः। आद्ये तर्के यद्यन्निदिध्यासनसाध्यसाक्षात्कारनिवर्त्यं तत्तत्र नाध्यस्तमिति व्यतिरेकव्याप्तिमुपपादयति ॥नहीति॥ तत्र देवतायाम्। द्वितीयतर्के यन्नियमादृष्टसापेक्षज्ञाननिवर्त्यं यत्तत्तत्र नाध्यस्तमिति सामान्यतो व्यतिरेकव्याप्तिमुपपादयति ॥न वेति॥ नियमजन्यमदृष्टं नियमादृष्टम्। तत्र सेतौ। ननु द्वितीयतर्के इष्टापत्तिः। ब्रह्मसाक्षात्कारेण बंधनिवृत्तिरूपे मोक्षे जननीये सहकारितया श्रवणादिनियमादृष्टापेक्षाया अभावात्। श्रवणादिनियमजन्यादृष्टमपि ज्ञानवन्न मोक्षहेतुरिति यावत्। तर्हि वैयर्थ्यमेव स्यादिति चेन्न। साक्षात्कारं प्रत्येव कारणत्वाभ्युपगमादित्याशंक्य निषेधति ॥नचेति॥ अवघातेति॥ सर्वत्रापि क्रियातन्नियमादृष्टयोः फलभेद एव दृष्टोस्ति यथा व्रीहीनवहंती– त्यत्रावहननरूपक्रियासाध्यं फलं वैतुष्यम्। अवहननेनैव वैतुष्यं संपाद्यं न तु नखविदलनादिनेत्येवं अवहननरूपक्रियानियमेन किंचिदवांतरादृष्टं जायते। तत्साध्यं वैतुष्यभिन्नं परमापूर्वरूपं फलमस्तीत्येवं क्रियातन्नियमादृष्टयोः फलभेदो दृष्टः। एवं श्रवणादिक्रियासाध्यं

(प्रकाश:)

फलं ब्रह्मापरोक्षम्। श्रवणादिनैव ब्रह्मापरोक्षं संपाद्यं नान्यथेत्येवं श्रवणादिरूपक्रियानियमेन किंचिददृष्टं जायते, तत्साध्यं फलं ब्रह्मापरोक्षाद्भिन्नं मोक्षरूपमेवांगीकार्यमिति नेष्टापत्तिरित्यर्थः। तत्साध्यत्वात् नियमादृष्टसाध्यत्वात्। ननु सर्वत्र नियमविधिस्थले क्रियातन्नियमादृष्टयोः फलभेदेऽपि श्रवणादितन्नियमादृष्टयोरेकफलत्वमेवास्तु। तथाच द्वितीयतर्के पुनरिष्टापत्तिरेवेत्यत आह ॥अन्यथेति॥ अन्यथेत्यस्यैव विवरणं श्रवणनियमादृष्टसाध्ये साक्षात्कार इति। अंगीकृत इति शेषः। श्रवणादिरूपक्रियातन्नियमादृष्टयोस्साक्षात्काररूपमेकफलं प्रत्येव हेतुत्वांगीकारे नियमविधित्वमेव न स्यात्। 'विधिरत्यंतमप्राप्ते नियमः पाक्षिके सति' इति वचनात्। 'व्रीहीनवहंती'त्यत्र वितुषीभावरूपे फलेऽवहननिरपेक्षनखविदलनादिरूपोपायांतरप्रसक्तौ सत्यां अवहननेनैव वितुषीभावं संपादयेत्तेनाऽदृष्टं जायत इत्येवं नियमादृष्टं कल्प्यते। एवं साक्षात्काररूपे फले श्रवणादिनिरपेक्षोपायांतरप्रसक्तौ सत्यां श्रवणादिनैव साक्षात्कारं संपादयेदिति नियमेन किंचिददृष्टं जायत इति कल्पनीयम्। न चैवमस्ति। श्रवणादिनिरपेक्षोपायांतरप्रसक्तेरेवाभावेनोपायांतरप्रसक्त्यधीननियमविध्ययोगादित्यर्थः। श्रवणादिक्रियातन्नियमादृष्टयोः फलभेदात् द्वितीयतर्के पुनरिष्टापत्तिरित्याशंक्य निराकरोति ॥न चेति॥ ॥श्रवणादिति॥ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य इत्यत्र यादृशज्ञानमुद्दिश्य निदिध्यासनं विहितं तादृशमेव ज्ञानं दृशिना निर्दिशतादर्थ्येन श्रवणादिकमपि विधीयते। अन्यथा निदिध्यासनापेक्षया दृशेरपरोक्षज्ञानोपस्थापकत्वं, श्रवणाद्यपेक्षया परोक्षज्ञानोपस्थापकत्वं चेति द्वैरूप्यापत्तेः। अतः श्रवणाविधेरप्यपरोक्षज्ञानार्थत्वमिति न फलभेद इति नेष्टापत्तिरिति भावः। ननु निदिध्यासनविधावपि श्रवणविधाविव परोक्षज्ञानमेव दृशिनोद्दिश्यतामित्यत उक्तं– परोक्षेत्यादि। निदिध्यासनस्य परोक्षज्ञानप्रवाहरूपत्वात्परोक्षज्ञानफलकत्वं न संभवतीत्यर्थः।

॥साक्षात्कर्तव्य इति॥ श्रोतव्य आत्मा साक्षात्कर्तव्य इति श्रवणादिविधेः साक्षात्काररूपफलसमर्पकवाक्यांतरसद्भावात्तस्य साक्षात्कार एव फलं न परोक्षज्ञानमित्यर्थः ॥त्वन्मत इति॥ इदमत्राकूतम्। न श्रवणविधौ परोक्षज्ञानस्योद्देश्यत्वम् काम्यत्वमेवह्युद्देश्यत्वम्। परोक्षज्ञाने च कामना न संभवति। तथाहि। ब्रह्मज्ञानं मे भूयादिति हि कामना कर्तव्या। तत्र प्रष्टव्यं– ब्रह्मज्ञानं ज्ञातं न वा? न चेत्, ब्रह्मज्ञानं मे भूयादिति कामनाया अयोगः। ब्रह्मज्ञानमिति व्यवहारस्यैवायोगात्। आद्ये ज्ञानावच्छेदकतया ब्रह्मणोऽपि ज्ञातत्वेन सुतरां काम्यत्वायोगः। सिद्धे इच्छाविरहादिति भावः। न च भवन्मतेऽपरोक्षज्ञानस्यापि काम्यत्वायोगः। तत्रापि प्रष्टव्यं– अपरोक्षज्ञानमपि ज्ञातं न वा? नेति पक्षे कामनाऽयोगः। आद्ये ब्रह्मणोपि ज्ञातत्वात्कामनाऽयोग इति वक्तुं न युज्यते। परोक्षतो ज्ञाते ब्रह्मणि अपरोक्षज्ञानकामनायाः संभवात्। न चैवं त्वया वक्तुं शक्यते। अपरोक्षतो ज्ञाते ब्रह्मणि परोक्षज्ञानकामनाऽसंभवादिति द्रष्टव्यम्। श्रवणनियमादृष्टयोः साक्षात्काररूपैकफलकत्वमंगीकृत्याप्याह ॥आपरोक्ष्यस्यैवेति॥ ॥तत्साध्येति॥ नियमादृष्टसाध्येत्यर्थः ॥दुरितवदिति॥ दुरितं यथा देवतायां नाऽध्यस्तं तथेत्यर्थः।

मिथ्यात्वानुमानस्य प्रतिकूलतर्कांतरमाह ॥किंचेति॥ विश्वस्य कल्पितत्वे प्रतीतिमात्रशरीरत्वरूपप्रातिभासिकत्वापत्त्या ज्ञानात्पूर्वमसत्त्वादित्यर्थः। स्वशब्देन प्रपंचो ग्राह्यः ॥प्रतिकर्मेति॥ सर्वं सर्वेण दृश्येतेत्यतिप्रसंगभंजकेंद्रियसंनिकर्षायोगादित्यर्थः। प्रतिकूलतर्कांतरमाह ॥किंचेति॥ यतो वा इत्यादिकं

(प्रकाशः)

तत्तत्सूत्रविषयवाक्यं द्रष्टव्यम्। कुतोऽयुक्तमित्यतस्तदुपपादयति ॥न हीति॥ न हि दृष्टो युक्तो वेत्यन्वयः। ल्यपशब्दानुसारेण पुल्लिंगप्रयोग इति ज्ञातव्यम्। ननु कल्पितस्यापि प्रपंचस्य व्यावहारिकसत्त्वाभ्युपगमेन जन्माद्युक्तिः संभवति। रूप्यादेस्तु प्रातिभासिकत्वात्तदभाव इत्यत आह ॥रूप्यादाविति॥ तद्विशेषः कल्पितत्वविशेषः। तथाच जगतोऽध्यस्तत्वाज्जन्मादिकं न स्यादिति भावः। कुतो न तंत्रमित्यत आह ॥ज्ञानेति॥ वयमपि वदामः। ज्ञाननिवर्त्यत्वेपि प्रातिभासिकत्वमेव तंत्रं, नाध्यस्तत्वम्। तथाच जगतोऽप्रातिभासिकत्वाज्ज्ञान-निवर्त्यत्वमपि न स्यादिति भावः ॥अनुमानेति॥ अपर्वतीयधूमं प्रति वह्नेर्जनकत्वापत्तौ धूममात्रे वह्नि व्याप्त्यसिध्याऽनुमानमात्रोच्छेदः स्यादित्यर्थः। यदुक्तं तद्भ्रांतैः प्रयोजनापेक्षा न दृष्टा, युक्ता वेति तदयुक्तम्। लोके मायाविनो भ्रामयितुः प्रयोजनापेक्षादर्शनात्। ईश्वरस्यापि मायाशबलस्य तथात्वेन प्रयोजनापेक्षाप्रसक्तौ सत्यां लोकवदिति सूत्रेण समाधीयत इत्याशंक्य निषेधति ॥न चेति॥ सपरिकरस्य देहादिविशिष्टस्य ॥जीवैरिति॥ तथाचाकाशादिभ्रामयितुरीश्वरस्य सिद्धौ भौतिकदेहादिमतां जीवानां सिद्धिः, जीवसिद्धौ च जीवैरध्यस्तस्य सपरिकरस्येश्वरस्य सिद्धिरित्यन्योन्याश्रय इत्यर्थः। ननु न जीवैरीश्वरोऽध्यस्तः। येनाऽन्योन्याश्रयः स्यादित्यत आह ॥न हीति॥ ईश्वरस्य कल्पितत्वं तव सिद्धम्। जीवैरकल्पितत्वे स्वेन चिन्मात्रेण वा कल्पितत्वम्? नाद्यः। स्वस्य स्वस्मात्पूर्ववृत्तित्वाभावात्। न द्वितीयः। चिन्मात्रस्य कल्पकत्वोपयुक्तदेहाद्यभावात्। तथाच न ताभ्यामीश्वरः कल्पित इत्यर्थः। नन्वीश्वरस्य कल्पकाभावेपि कल्पितत्वमस्त्वित्यत आह ॥न चेति॥ तथाच परिशेषेण जीवकल्पित एवेश्वरो वाच्यः। तत्र चान्योन्याश्रय उक्त एवेति भावः।

एकस्य कल्पितस्य कल्पितांतरादुत्पत्तेरदर्शनाद्वायोरग्निरित्यादिश्रुतौ तेजआदेर्वाय्वादिजन्यत्वोक्तिरयुक्ता स्यात्। ततश्च श्रुतेर्निर्विषयत्वं स्यादित्युक्तमयुक्तम्। कल्पितेन वास्तवोत्पत्तेरभावेपि वाय्वादिभ्योऽग्न्यादिकमुत्पद्यत इति जीवानां भ्रमस्य विद्यमानत्वात् जीवभ्रमसिद्धार्थावलंबनेन सविषयत्वोपपत्तिरित्याशंक्य निषेधति ॥न चेति॥ आदिकालीनवाय्वादेः प्रत्यक्षागोचरत्वेन तत्र प्रत्यक्षेण जन्यजनकभावभ्रमायोगादित्यर्थः। ननु जीवानामेतादृशभ्रमाभावेऽपि वायोस्सकाशादग्न्युत्पत्तिः कल्पिताऽस्ति। तादृशकल्पितार्थविषयकतया आलंबनवत्तोपपद्यत इत्यत आह ॥नचेति॥ ननु प्रत्यक्षेणैतादृशभ्रमासंभवेपि वायोरग्निरित्यादिवाक्येनैव अग्न्यादीनां जन्यजनकभावभ्रमो भवति तादृशभ्रमसिद्धार्थावलंबनेनैतद्वाक्यस्य प्रामाण्यमुपपद्यत इत्याशंक्य निराकरोति ॥नचेति॥ ॥बौद्धेति॥ केशोल्लुंठनसप्तघटिकाभोजनप्रतिपादकबौद्धागमजन्यभ्रांतिसिद्धैतदर्थावलंबनेनैव बौद्धागम-स्यापि प्रामाण्यं स्यादित्यर्थः। एतद्वाक्यजन्यभ्रांतिसिद्धार्थावलंबनेनैतद्वाक्यस्य प्रामाण्यमित्युक्तम्। तत्र पृच्छामः—एतद्वाक्यजन्यभ्रांतिर्जीवानामुतेश्वरस्य? नाद्य इत्याह ॥त्वन्मत इति॥ ॥पृथिव्यादीति॥ देहस्य पृथिवीकार्यत्वात् इंद्रियाणां तेजःकार्यत्वादिति द्रष्टव्यम्। वायोरग्निरित्यादिवाक्याद्देहादिमतो जीवस्य तथाविधभ्रांतिसिद्धौ तत्प्रमाणकवाय्वादिस्वरूपसिद्धिः। तत्सिद्धौ च वाय्वाद्यारब्धजीवसिद्धिरित्यन्योन्याश्रयादित्यर्थः। एतद्वाक्यजन्येश्वरभ्रांतिसिद्धवाय्वादिकमेवैतद्वाक्यालंबनमिति द्वितीयोऽपि पक्षो नेत्याह ॥ईश्वरस्य चेति॥ ॥देहादीति॥ देहादीनां च पृथिव्यादिकार्यत्वादित्यपि द्रष्टव्यम्। तथाच वायोरग्निरित्यादिवाक्याद्देहेंद्रियादिमत ईश्वरस्य तथाविधभ्रांतिसिद्धौ तत्प्रमाणकवाय्वादिस्वरूपसिद्धिः। तत्सिद्धौ च वाय्वाद्यारब्धदेहेंद्रियादि-मदीश्वरसिद्धिरित्यन्योन्याश्रय इति भावः। विश्वमिथ्यात्वसाधकानुमाननिराकरणमुपसंहरति ॥तस्मादिति॥

॥मिथ्यात्वहेतूनां प्रतिकूलतर्कविवरणम्॥

## ३. सामान्येन मिथ्यात्वे श्रुतिनिरासः

नापि श्रुतिः। श्रुत्या स्वस्वरूपस्वप्रामाण्यतद्धेतुयोग्यतादेर्मिथ्यात्वाबोधने प्रत्यक्षादिसिद्धतत्सत्यत्वोपजीवने ब्रह्मेतरसर्वमिथ्यात्वासिद्धेः। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति महाभाष्योक्तन्यायेन प्रत्यक्षादिसिद्धघटादिमिथ्यात्वासिद्धेश्च। बोधने श्रुतिबोध्यार्थस्य तात्त्विकत्वासिद्धेः। शब्दबोध्यस्य शब्दतत्प्रामाण्ययोग्यतादिना समसत्ताकत्वनियमादित्युक्तत्वात्। सदर्थे स्वाप्नदेवतादिवाक्येऽपि योग्यताप्रामाण्ये अपि सती एव। शब्दस्वरूपमपि मम सत्यम्, तव तु न तच्छब्दत्वेन मानम्, आप्त्यपौरुषेयत्वयोरभावात्। किं तु यादृच्छिकसंवादि वा उपश्रुतिवत्तादृशशब्दज्ञानं लिंगत्वेन प्रमाणं वा। न च तात्त्विकसर्वमिथ्यात्वपरश्रुतिबलादिह समसत्ताकत्वनियमभंगः। ''स्वर्गकामो यजेते'' त्यादि विधेरुपजीव्याग्निविद्यावद्विषयकत्वेनेव द्वैतनिषेधस्यापि स्वोपजीव्ययोग्यतादीतरविषयकत्वेन संकोचस्य वा सृष्ट्यादिश्रुतेरिव कल्पितविषयत्वस्य वोपपत्तौ श्रुतेस्तात्त्विकसर्वमिथ्यात्वपरत्वकल्पनेऽन्योन्याश्रयात्। तस्मात्–

शब्दार्थतद्योग्यतयोस्तुल्यत्वाद्योग्यता सती ।
न चेद्वेदोऽप्रमाणं स्याद् वृषलोद्वाहमंत्रवत् ॥

एवं श्रुतिः स्वबोध्यं द्वितीयाभावमपि निषेधति चेत् स्वव्याघातः। न चेत्सर्वमिथ्यात्वासिद्धिरिति।

किं चोक्तरीत्या श्रुत्याप्यविद्याकार्यस्य विश्वस्य न स्वरूपेण त्रैकालिकनिषेधः। पारमार्थिकत्वेन निषेधस्तु निर्धर्मकस्यात्मनोऽपि। अपि च ''तत्त्वमसी''त्यनेन प्रत्यक्षाविरोधाय तत्त्वंपदलक्षितयोरैक्यमिव मिथ्यात्वश्रुत्यापि तदविरोधाय प्रत्यक्षादिसिद्धादन्यस्यैव मिथ्यात्वं बोध्यमिति न तत्सिद्धविश्वमिथ्यात्वसिद्धिः। अन्यथा ''नेह नाने'' तिनिषेधाद्विश्वस्यात्यन्तासत्त्वं तात्त्विकं ख्यात्यन्यथानुपपत्तिसिद्धमसद्वैलक्षण्यं त्वतात्त्विकं स्यात्। किं च श्रुतेस्तात्पर्यं चैतन्यमात्रे वा? द्वितीयाभावविशिष्टे वा? तदुपलक्षिते वा? नाद्यः, विश्वमिथ्यात्वासिद्ध्या इष्टापत्तेः। तस्य स्वप्रकाशस्य नित्यसिद्धत्वेन श्रुतेर्वैयर्थ्याच्च। न द्वितीयः श्रुतेरखंडार्थत्वहानेः। अत एव न तृतीयः काकवदितिवद् द्वितीयाभाववदिति सप्रकारज्ञानहेतुत्वे अखण्डार्थत्वायोगात्। चिन्मात्रस्य

नित्यसिद्धत्वेनान्यस्य च मुमुक्ष्वज्ञेयत्वेन काकेन संस्थानविशेषस्येव द्वितीया-भावेनोपलक्ष्यस्यान्यस्याभावेन तस्योपलक्षणत्वायोगाच्च। किं च श्रुतिबोध्यस्य विशेषणस्य वा उपलक्षणस्य वा द्वितीयाभावस्य सत्त्वे अद्वैतहानिः। मिथ्यात्वे च दण्डहीने दण्डीति वाक्यवत् काकहीने काकवदित्यादिवाक्यवच्चाद्वैतवाक्यस्यातत्त्वावेदकता स्यात्। न च तत्रातात्पर्यान्नातत्त्वावेदकता, आद्यपक्षान्तर्भावापाताच्च।

किं चातात्पर्यं हि मानान्तरप्राप्त्या वा, यथा वायुक्षेपिष्ठत्वादौ तद्विरोधाद्वा, यथा आत्मवपोत्खननादौ, उद्देश्यविशेषणत्वादिना वा यथा ग्रहैकत्वादौ नाद्यः, त्वयैवद्वितीयाभावस्य मानान्तराप्राप्त्युपगमात्। द्वितीयेऽपि विरोधिमानं न तावद् द्वैतग्राहिप्रत्यक्षादि तस्यैव त्वन्मते श्रुतिबाध्यत्वात्। नाप्यद्वैतवाक्यान्तरम् तस्याप्याप्यात्ममात्रपरत्वे द्वितीयाभत्वाविरोधित्वात्। न हि विशेष्यविषयं "अग्निहोत्रं जुहोती"ति वाक्यं विशिष्टविषयेण "दध्ना जुहोती"ति वाक्येन विरुद्धम्। द्वितीयाभावपरत्वे त्वेकविषयत्वेन सुतरामविरोधित्वात्।

ननु स्वयमेव स्वविहितमपि द्वितीयाभावं द्वितीयत्वान्निषेधतीति स्वविरोधा-देवातात्पर्यमिति चेन्न, निषेधस्य स्वविहितनिषेधेतरद्वितीयविषयत्वावश्यंभावात्। अन्यथा "क्ङिति चे'ति किन्निमित्तकवृद्धिप्रतिषेधोऽपि किन्निमित्तकत्वात्" क्किति चेति सूत्रविहितकिद्विशेषनिमित्तकवृद्धिं "न हिंस्यादि"त्येतदपि हिंसात्वादग्नीषोमीयहिंसां "इदं वा अग्रे नैव किंचनासीदि"त्येतदपि "सदेवे"त्यादिवाक्योक्तं ब्रह्मापि प्रतिषेधेत्। स्वविरोधो हि वाक्यान्तरविरोधादपि यत्नेन परिहार्यः। अद्वैतवाक्यस्य द्वितीयाभावे अतात्पर्यादविरोध इति चेन्न द्वितीयाभावस्य स्वेन निषेधे सति स्वविरोधादेव तत्रातात्पर्यमतात्पर्ये च सति स्ववचनविरोधाभावान्निषेध इत्यन्योऽन्याश्रयात्। अपि चैवं मम माता वन्ध्या मूकोऽहमित्यादावपि विरोधो न स्यात्। सुवचं हि तत्रापि मात्रादिशब्दप्रापितमातृत्वादिकं वन्ध्यादिपदेनैव निषिध्यत इति। षोडशिग्रहणादा-वष्टदोषदुष्टोऽपि विकल्पश्च न स्याद् अग्रहणवाक्येन ग्रहणनिषेधापातात्। प्रतियोगिनो द्वितीयस्य मिथ्यात्वात्तदभावोऽपि मिथ्येति तु निरस्तम्।

किं च स्वेनैव निषिद्धस्य द्वितीयाभावस्य द्वितीयस्येव विशेषणत्वेन उपलक्षणत्वेन वा पुनरुपादानमयुक्तम्। न तृतीयः, ग्रहं संमार्ष्टीत्यत्र संमार्गस्येवेहाखंडार्थपरे

**विधेयान्तरस्याभावेन विशेष्यस्य शास्त्रगम्यस्य चिन्मात्रस्याप्राप्ततयोद्देश्यत्वायोगेन च द्वितीयाभावस्योद्देश्यविशेषणत्वाभावादविवक्षाहेतोर्निर्ज्ञातविशेषणत्वस्याभावाच्च। कर्म-काण्डादापातप्रतीतधर्मेण पुंसा तत्प्रकारविशेषस्यैव वेदान्तादापातप्रतीतब्रह्मणा मुमुक्षणा-प्यद्वितीयत्वादितत्प्रकारस्यैव जिज्ञासितत्वाच्च। शब्दाद्धीस्थस्यापि द्वितीयाभावस्य तात्पर्याविषयत्वेन द्वैतमानविरोधेन चात्मवपोत्खननादेरिव व्यावहारिकसत्त्वासिद्धेश्च। अवान्तरतात्पर्यविषयत्वात्तत्सिद्धिरितिचेन्न, द्वितीयाभावस्योपक्रमे उपसंहारे च प्रतीतस्य प्रकारणिकत्वेन सुषुप्तौ फलवत्त्वदर्शनेन चान्यशेषत्वायोगेनावान्तरतात्पर्याविषयत्वात्। स्वप्रकाशचैतन्यस्य चोक्तरीत्या प्राप्ततया महातात्पर्याविषयत्वाच्च। प्रमाणावान्तर-तात्पर्यविषयस्यान्यशेषत्वेऽपि महातात्पर्यविषयसमसत्ताकत्वनियमाच्च। अवान्तर-तात्पर्यविषयस्य द्वितीयाभावस्य द्वितीयवद् व्यावहारिकत्वे श्रुत्या प्रत्यक्षादिबाधायोगाच्च। न हि कदापि तदभावे तत्राप्रमिते तत्तत्रारोपितं तस्माद् द्वितीयाभावस्य मिथ्यात्वे श्रुतेरतत्त्वावेदकत्वप्रसंगो दुर्वारः। तस्मान्न मिथ्यात्वे श्रुतिर्मानम्।**

**सामान्येन मिथ्यात्वश्रुतिनिरासः।**

## अद्वैतसिद्धिः

एतदनुमानम् 'एकमेवाद्वितीयम्' इत्यादिश्रुतिरप्यनुगृह्णाति। ननु श्रुत्यास्वस्वरूप-स्वप्रामाण्यस्वयोग्यतादेर्मिथ्यात्वाबोधनेन प्रत्यक्षादिसिद्धतत्सत्त्वोपजीवनेन च ब्रह्मेतरसकल-मिथ्यात्वासिद्धिः, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न्यायेन प्रत्यक्षादि-सिद्धघटादिमिथ्यात्वासिद्धिश्च, योग्यतादिमिथ्यात्वबोधने च श्रुत्यर्थस्यातात्त्विकत्वापत्तिः, शब्दबोध्यस्य शब्दतत्प्रामाण्ययोग्यतादिना समसत्ताकत्वनियमात्। न च सदर्थे स्वाप्नदेवतावाक्ये व्यभिचारः आप्तत्वापौरुषेयत्वायोगेन तस्य शब्दत्वेन प्रामाण्यायोगात्, किं तूपश्रुतिवत्ताद्दशशब्दज्ञानं लिङ्गत्वेन प्रमाणमिति चेन्न निर्दोषशब्दत्वेन तस्य शब्दविधयैव प्रामाण्यसंभाद्, आप्तत्वापौरुषेयत्वयोर्दोषाभाव एवोपक्षयाद् व्याप्त्याद्युपस्थितिकल्पने गौरवाद्, वक्तुः क्लप्तितत्वेऽपि तद्गतदोषस्यार्थसंवादेन कल्पयितुमशक्यत्वाच्च। तथा च शब्दसमसत्ताकत्वस्य व्यभिचाराद् योग्यतादिसमसत्ताकत्वनियमसिद्धेरप्रयोजकत्वाच्च,

(अद्वैतसिद्धिः)

परोक्षत्वानित्यत्वाद्युपाधिसंभवाच्च श्रुत्या योग्यतादिसकलमिथ्यात्वबोधनेऽपि तदर्थस्य न मिथ्यात्वम्, मिथ्यात्वप्रयोजकरूपाभावात्। महाभाष्योक्तन्यायोदाहरणमपि न युक्तम्, विषयवैषम्यात्। तथा हि– 'शतानि सहस्राणी'त्यत्र सर्वनामस्थानसंज्ञकशिसन्निपातेन विहितो नुम् 'ष्णान्ताषडि'ति षट्संज्ञाद्वारा 'षड्भ्यो लुगि'ति शिस्वरूपसर्वनामस्थानस्य पञ्चेत्यादाविव लुङ्निमित्तं न भवति, तत्सन्निपातेनैव विहितत्वात्, तत्सद्भावनियमेनैव विहितत्वादित्यर्थः। अलुप्तस्यैव सर्वनामस्थानस्य नुम्निमित्तत्वात्, 'न लुमताङ्गस्ये'ति लुमता लुप्तेऽङ्गकार्यनिषेधात्। तथा चालुप्तप्रत्ययत्वेन यत्र निमित्तता तत्र सन्निपातलक्षणन्यायावतारः। यत्र तु 'प्रत्ययलोपे प्रत्ययलक्षणमि'ति न्यायेन लुप्तेऽपि प्रत्यये कार्यं भवति तत्रालुप्तत्वविशेषणनैरपेक्ष्येण प्रत्ययत्वमात्रेणैव निमित्तत्वात् न सन्निपातलक्षणन्यायावतारः प्रत्ययसद्भावस्य तत्रानुपजीव्यत्वात्। एवं स्थिते यद्यमिथ्याभूतत्वेन प्रत्यक्षादेर्निमित्तता स्यात् तदा प्रत्ययस्यालुप्तत्वेन निमित्ततायामिव भवेदेतन्न्यायावतारः। प्रत्यक्षादेस्तु स्वरूपेणैव निमित्तता स्वप्नाद्यर्थस्याप्यर्थक्रियाकारित्वदर्शनेन प्रागेवोपपादिता। अतो यद् बाध्यते तात्त्विकत्वं तन्नोपजीव्यम्, यच्चोपजीव्यमर्थक्रियासामर्थ्यलक्षणव्यावहारिकप्रामाण्यं तच्च न बाध्यत इति किं केन सङ्गतम्? तदुक्तं टीकाकृद्भिः— 'उत्पादकाप्रतिद्वन्द्वित्वा'दिति। अत एव ज्योतिष्टोमादिविधेरुपजीव्याग्निविद्यावद्विषयत्वेनेव द्वैतनिषेधस्यापि स्वोपजीव्ययोग्यतादीतरविषयत्वेन सङ्कोचस्य वा सृष्ट्यादिश्रुतेरिव कल्पितविषयत्वस्य वोपपत्तौ न तात्त्विकसर्वमिथ्यात्वकल्पनं युक्तमिति अपास्तम्, दृष्टान्ते अग्निविद्यादेरिव दार्ष्टान्तिके योग्यतादेस्तात्त्विकस्यानुपजीव्यत्वात्। न हि योग्यता तात्त्विकयोग्यतात्वेन निमित्तम् किं तु योग्यतात्वेनैव। सकलद्वैताभावस्याधिकरणस्वरूपत्वेन तदधिकरणस्य च ब्रह्मणः 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तत्सत्यं स आत्मे'त्यादिश्रुत्या सत्यत्वप्रतिपादनात्, न सृष्ट्यादिश्रुतेरिव कल्पितविषयत्वोपपत्तिः। तस्माद्योग्यतादेः मिथ्यात्वेपि वेदान्त बोध्यं सत्यमेवेति स्थितम्। यथाचाविद्यातत्कार्यस्य स्वरूपतो निषेधेऽपि तुच्छवैलक्षण्यं, पारमार्थिकत्वाकारेण निषेधे वा पारमार्थिकत्वधर्मशून्यस्यापि ब्रह्मणः स्वरूपेण सत्त्वं, तथोपपादितमधस्तात्। ननु– तत्त्वमस्यादिवाक्येन प्रत्यक्षाद्यविरोधाय तत्त्वंपदलक्षितयोरैक्यमिव मिथ्यात्वश्रुत्यापि तदविरोधाय प्रत्यक्षादिसिद्धादन्यस्यैव मिथ्यात्वं बोध्यम्, अन्यथा प्रत्यक्षाद्यनुग्रहाय व्यावहारिकमपि सत्त्वं न कल्प्येत 'नेह नाने'त्यादिनिषेधेनात्यन्तासत्त्वबोधनाद् इति चेन्न, विशिष्टयोरैक्य

(अद्वैतसिद्धिः)

विशेषणयोरप्यैक्यापातेन सर्वत्र विशिष्टाभेदपरवाक्यस्य लक्षितविशेष्यैक्यपरत्वनियमेन 'तत्त्वमसी'त्यत्रापि तथाभ्युपगमात्। तदुक्तम्–

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदा नतरां तद्विपरीतरूपयोः ।। इति ।

मिथ्यात्वबोधकश्रुतौ तु नास्ति प्रत्यक्षादिविरोधः, तात्त्विकत्वांशस्यानुपजीव्यत्वाद्, व्यावहारिकसत्त्वस्य चोपजीव्यत्वान्नात्यन्तासत्त्वकल्पनमित्यस्याप्युक्तप्रायत्वात्। ननु– श्रुतेस्तात्पर्यं चैतन्यमात्रे वा? द्वितीयाभावविशिष्टे वा? तदुपलक्षिते वा? नाद्यः, विश्वमिथ्यात्वासिद्धेरिष्टापत्तेः, तस्य स्वप्रकाशतया नित्यसिद्धत्वेन श्रुतिवैयर्थ्याच्च। न द्वितीयः, अखण्डार्थत्वहानात्। अत एव न तृतीयः, काकवदितिवद् द्वितीयाभाववदित्यनेनापि सप्रकारकज्ञानजननेनाखण्डार्थत्वायोगात्, चिन्मात्रस्य नित्यसिद्धत्वेन तदन्यस्य च मुमुक्ष्वज्ञेयत्वेन काकेन संस्थानविशेषस्येव द्वितीयाभावेनोपलक्ष्यस्यान्यस्याभावात् तस्योपलक्षणत्वायोगाच्चेति चेन्न, काकस्य संस्थानविशेष इव द्वितीयाभावस्य स्वरूपमेवोपलक्ष्यमित्युपलक्ष्याभावनिबन्धनोपलक्षणत्वानुपपत्तेरभावात्। उपलक्षणत्वे हि उपलक्ष्यसत्त्वमात्रं तन्त्रम्, न तु तस्य स्वरूपातिरिक्तत्वमपि, गौरवाद्, उपलक्ष्यतावच्छेदकरूपाभावेऽपि स्वतोव्यावृत्तजातिवदुपलक्ष्यत्वसंभवात्। अत एव न सप्रकारकत्वापत्तिः, काकवदित्यत्राप्युपलक्षणस्याप्रकारत्वात्, किं तु स्वरूपातिरिक्तधर्मस्य तत्रोपलक्षणत्वेन सप्रकारत्वम्, इह तु तन्नेति वैषम्यम्। न चोपलक्षणवैयर्थ्यम्, अनर्थनिवृत्तिहेतुत्वेन द्वितीयाभावद्वारकस्वरूपज्ञानस्योद्देश्यत्वात्, तस्य प्रागसिद्धत्वात्। न च मिथ्यात्वासिद्ध्येष्टापत्तिः, अवान्तरतात्पर्यस्य तत्रापि सत्त्वात्, तद्द्वारैव स्वरूपचैतन्ये महातात्पर्यात्।

अत एव– श्रुतिबोध्यस्य विशेषणस्योपलक्षणस्य वा द्वितीयाभावस्य सत्त्वे अद्वैतहानिः, असत्त्वे चादण्डे दण्डीति वाक्यवत् काकहीने काकवदिति वाक्यवच्चाद्वैतवाक्यस्यातत्त्वावेदकत्वापत्तिरिति निरस्तम्। आद्ये द्वितीयाभावसत्त्वेन द्वितीयाभावासिद्ध्यापादनस्यानुचितत्वाद्, अभावस्याधिकरणातिरेकानभ्युपगमाच्च। द्वितीये तु सृष्ट्यादिवाक्यवदुपलक्ष्यस्वरूपसत्यत्वमादाय तत्त्वावेदकत्वात्, मुख्यतात्पर्यविषयस्यासत्यतायामेवातत्त्वावेदकत्वाभ्युपगमात्। अत एव महातात्पर्याभिप्रायेण चैतन्यमात्रे तात्पर्यमित्याद्यपक्षेऽपि न दोषः, अवान्तरतात्पर्येण मिथ्यात्वसिद्धेरपि स्वीकारेणेष्टापत्तेरप्यसंभवात्।

(अद्वैतसिद्धिः)

ननु द्वितीयाभावे महातात्पर्याभावः किं प्रमाणान्तरप्राप्त्या, यथा वायुक्षेपिष्ठत्वादौ? उत तद्विरोधित्वेन यथात्मवपोत्खननादौ? उतोद्देश्यविशेषणत्वादिना यथा ग्रहैकत्वादौ? नाद्यः, त्वयैव द्वितीयाभावस्य प्रमाणान्तरप्राप्त्यनभ्युपगमात्। द्वितीयेऽपि विरोधिमानं न तावत्प्रत्यक्षादि द्वैतग्राहि त्वन्मते तस्यैव श्रुतिबाध्यत्वात् नाद्वैतवाक्यान्तरम् तस्यात्ममात्रपरत्वे द्वितीयाभावाविरोधित्वात्, न हि विशेष्यविषयं 'अग्निहोत्रं जुहोती'ति वाक्यं विशिष्टविषयेण 'दध्ना जुहोती'ति वाक्येन विरुध्यते द्वैताभावपरत्वे त्वेकविषयत्वेन सुतरामविरोधात्। नापि तृतीयः, 'ग्रहं संमार्ष्टी'त्यत्र संमार्जनस्येवाखण्डार्थपरे वाक्ये विधेयान्तरस्याभावेन विशेष्यस्य शास्त्रगम्यस्य चिन्मात्रस्याप्राप्तत्वेनोद्देश्यत्वायोगाच्च द्वितीयाभावस्योद्देश्यविशेषणत्वानुपपत्तेः, अविवक्षाहेतोरनुवाद्यत्वस्याप्यभावाच्चेति चेन्न, स्वयमेव स्वबोधितमपि द्वितीयाभावं द्वितीयत्वादेव निषेधतीति स्वविरोधादेव श्रुतेस्तत्रातात्पर्यात्। मानविरोधित्वमात्रस्य तात्पर्याभावे प्रयोजकत्वात् स्वविरोधेऽपि न क्षतिः।

ननु– एकेनैव प्रमाणेनैकस्य प्राप्तिनिषेधावनुपपन्नौ न, रूपभेदेनाविरोधात्। द्वितीयाभावस्वरूपं हि शास्त्रेण प्राप्यते। तस्य च प्राप्यतावच्छेदकरूपं द्वितीयाभावत्वम् तच्च न निषेध्यतावच्छेदकम् किं तु द्वितीयत्वमेव निषेध्यमात्रानुगतम्। तत्र तदनभ्युपगमे तु न तस्य निषेध्यत्वम् न वा तेनात्मनः सद्वितीयत्वापत्तिरिति न कोऽपि दोषः। यत्र तु प्राप्यतावच्छेदकमेव निषेध्यतावच्छेदकं तत्र प्राप्तिनिषेधशास्त्रयोस्तुल्यविषयत्वेऽपि विशेषशास्त्रविषयपरित्यागेन सामान्यशास्त्रप्रवृत्तिः तुल्यविषयत्वेत्वगत्या विकल्प इति न निषेधस्यासङ्कोचेन प्रवृत्तिः। यथा 'न हिंस्यात्सर्वा भूतानी'ति निषेधशास्त्रस्य 'अग्नीषोमीयं पशुमालभेते'त्यादिप्राप्तिशास्त्रविषयेतरविषयत्वं, 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाती' त्यादिप्राप्तिनिषेधशास्त्रयोस्तु विकल्पेनैकविषयत्वम्, एकस्यैव हिंसात्वस्य षोडशिग्रहत्वस्य च प्राप्तिनिषेधयोरवच्छेदकत्वात् तत्र निषेधशास्त्रस्यासंकुचद्वृत्तित्वे प्राप्तिशास्त्रस्य सर्वात्मना वैयर्थ्यापत्तिः प्रकृते च द्वितीयत्वेन रूपेण निषेधस्यैव शास्त्रार्थत्वान्न कस्यापि वैयर्थ्यशङ्का। अत एव द्वितीयाभावनिषेधे पुनर्द्वितीयोन्मज्जनापत्तिरिति निरस्तम्। उपपादितमेतत् मिथ्यात्वमिथ्यात्वसाधने। यथा प्रतियोग्यभावयोर्निषेध्यतावच्छेदकैक्ये नैकनिषेधेऽपरसत्त्वापत्तिरिति। न च स्वेनैव निषिद्धस्य द्वितीयाभावस्य द्वितीयस्यैव विशेषणत्वेनोपलक्षणत्वेन वा पुनरुपादानं न युक्तमिति वाच्यम्, अभावबुद्धौ निषिद्धस्यापि

(अद्वैतसिद्धिः)

प्रतियोगिनः 'सा शुक्ति' रित्यत्र प्रतिषिद्धस्यापि पूर्वप्रतीतरजतस्योपलक्षणतयोपादानदर्शनाद्, असङ्कीर्णज्ञानप्रयोजकत्वस्य प्रकृतेऽपि तुल्यत्वात्। तस्मात् 'एकमेवाद्वितीय' मित्यादि-श्रुतिर्विश्वमिथ्यात्वे प्रमाणमिति सिद्धम्।

इत्यद्वैतसिद्धौ सामान्येन मिथ्यात्वश्रुत्युपपत्तिः।

## न्यायामृततरङ्गिणी

**श्रुतिश्चात्र प्रमाणमिति सामान्येनोक्तां श्रुतिं मिथ्यात्वे निराकरोति ॥ नापीति॥ तात्त्विके विश्वमिथ्यात्वे श्रुतिरपि मानं नेत्यर्थः। श्रुतिःस्वस्वरूपादिसत्यत्वमुपजीवति नवा। आद्ये श्रुत्या विश्वमिथ्यात्वस्यैवासिद्धिः। दूरे तत्तात्त्विकत्वस्येत्याह ॥ श्रुत्येति॥ अत्र हेतुरुक्तः स्वस्वरूपेत्यादि मिथ्यात्वाबोधनेत्यंतेन। मिथ्यात्वाबोधने हेतुःप्रत्यक्षादीति। स्वरूपादेर्मिथ्यात्वबोधने तत्सत्य-त्वोपजीवनानुपपत्तेरित्यर्थः। स्वरूपादीतरमिथ्यात्वमेव ममाभिमतमिति मन्यमानं प्रत्याह ॥ संनिपातेति॥ तच्छब्दश्रवणाद्यच्छब्दोऽध्याह्रियते। यत्सन्निपातेन यदुपजीवनेन लक्षणं स्वरूपं यस्य विधेः स विधिः तस्य स्वोपजीव्यस्य विघातं प्रति अनिमित्तं निमित्तं न भवति। तथा च श्रुत्युपजीव्यस्वरूपादिसत्यत्वग्राहकप्रत्यक्षजातीयतया घटादिप्रत्यक्षस्यापि श्रुत्युपजीव्यत्व-मेवेति न तया प्रत्यक्षसिद्धघटादिमिथ्यात्वसिद्धिः। यद्वा धर्मिग्राहकत्वेन प्रत्यक्षप्रामाण्यमुपजीवंती श्रुतिः घटादिमिथ्यात्वबोधने न तद्विघातं न करोतीत्यर्थः। यथा शतानि सहस्राणीत्यादौ 'नपुंसकस्य झलच' इत्यनेन सर्वनामस्थानसंज्ञकशिप्रत्ययनिमित्ते नुमागमे कृते 'ष्णांता षडिति' सूत्रे उपदेशग्रहणं कर्तव्यं शताष्टनार्थमिति वार्तिकाभावपक्षे नकारांतत्वेन षट्संज्ञाया षड्भ्यो लुगिति शिप्रत्ययस्य लुकि प्राप्ते संनिपातपरिभाषया शिप्रत्यययोगेन जायमानो नुम् षट्संज्ञाद्वारा शिप्रत्ययलोपनिमित्तं न भवति तथा मथितं पण्यमस्येत्यर्थः तदस्य पण्यमिति ठकि ठस्येकादेशे अजादित्वाद्भसंज्ञायां यस्येति चेत्यकारलोपे तत्परस्येकप्रत्ययस्य स्थानिवद्भावेन इसुसुकृतांतात् क इति कादेशप्राप्तौ सन्निपातपरिभाषया कादेशो न भवति। माथितिकः। भवत्या आश्रयमित्यर्थे भवतेःठक्छसाविति ठक्छसोश्चेति ठावस्थायामेव पुंवद्भावात्सन्निपातपरिभाषाया अप्रवृत्तौ भावत्क इति भवति। द्वितीयेत्वाह ॥ योधन इति॥ श्रुत्या मिथ्यात्वस्य बोधनेपीत्यर्थः ॥ तात्त्विकत्वेति॥ तात्त्विकत्वप्रयोजकस्य स्वरूपसत्यत्वादेरभावादित्यर्थः। न च स्वरूपसत्यत्वादेःश्रुत्यर्थतात्त्विकत्वं प्रति प्रयोजकत्वे मानाभावः। मिथ्यात्वबोधकत्वेनाभिमता श्रुतिः स्वस्वरूपेण वा स्वप्रामाण्येव**

(तरङ्गिणी)

वा स्वयोग्यतया वा समानसत्ताकार्था प्रमाणशब्दत्वात् सन्मतवदित्यनुमानैस्तत्सिद्धेः। अत्र व्याप्तिग्राहकमाह ॥शब्दबोध्यस्येति॥ न चैतस्मिन्नियमे परोक्षत्वमनित्यत्वंवोपाधिः। घटादावाकाशादौ च साध्याव्याप्तेः। प्रामाण्यादिघटितसाध्यकोक्तानुमानयोः स्वाप्नवाक्ये व्यभिचारं परिहरति ॥सदर्थइति॥ योग्यतेति॥ योग्यतायाःप्रामाण्यस्य चार्थसत्त्वघटितत्वेन सदर्थकवाक्ये तयोरवश्यंभावादित्यर्थः। शब्दस्वरूपघटितानुमानेपि न तत्र व्यभिचारइत्याह ॥शब्दस्वरूपमिति॥ मम मते तत्र साध्यस्यापि सत्त्वादिति भावः। तव मतेपि न तत्र तस्य व्यभिचार इत्याह ॥तवत्विति॥ स्वाप्नवाक्ये स्वरूपेण मिथ्याभूते साध्याभावस्य सत्त्वेपि निरुक्तहेतोस्तत्राभावादिति भावः। तुशब्दो व्यभिचारपरिहारं विशिनष्टि। ननु स्वाप्नवाक्ये वक्तुःकल्पितत्वेपि तद्गतदोषस्यार्थसंवादेन कल्पयितुमशक्यत्वान्निर्दोषतया तत्प्रमाणं भवतीति निरुक्तहेतुरपि तत्रास्तीति व्यभिचार एवेत्यतआह ॥नतच्छब्दत्वेनेति॥ अयं भावः। शब्दासाधारणप्रामाण्यप्रयोजकवत्त्वमुक्तहेत्वर्थः। निर्दोषत्वं तु न शब्दासाधारणप्रामाण्यप्रयोजकं। मानांतरसाधारण्यात्। तथा चायमर्थः। तत् संवादिस्वाप्नवाक्यं। शब्दत्वेन न प्रमाणं। शब्द इति यत्प्रमाणं तथा न शब्दत्वावच्छेदेन यत्प्रामाण्यप्रयोजकं तदुपेतं न भवतीति। ननु शब्दासाधारणप्रामाण्यप्रयोजिकाया योग्यतायास्तत्र सत्त्वाद्व्यभिचार एवेत्यतआह ॥आप्तीति॥ योग्यतायाः-विशेषणविशेष्यसंबंधरूपाया विशिष्टप्रमामात्रसाधारणत्वादास्यादेरेव तथात्वं। यद्यपि भ्रमाद्यभावरूपा आप्तिःस्वाप्नवाक्यवक्तर्यप्यस्ति। तथापि शुकादिसाधारण्यान्न सा आप्तिः। किंतु लाघवाद्वाक्यार्थप्रमा। अवधानं तत्वबुबोधयिषा। पटुकरणत्वादिकमेवाप्तिः। सा च न स्वाप्नवाक्यवक्तरि। अत एव न स्वाप्नवाक्येनिर्दोषत्वमपि। तत्प्रयोजकस्यास्यादेरभावात्। तथा च नोक्तव्यभिचार इति भावः। प्रामाण्यप्रयोजकशब्देन प्रामाण्यापवादकाप्रामाण्य शंकानिरासकमभिधीयत इति प्रामाण्यस्य स्वतस्त्वहानिरिति। एवं सति स्वाप्नवाक्ये प्रमाणशब्दस्य व्यवहारं समर्थयते ॥किंत्विति॥ शब्दत्वे सति संवादित्वात्तद्व्यवहार इत्यर्थः। तथा च तस्यशब्दत्वेयप्रमाणत्वान्नोक्तव्यभिचार इत्यर्थः ॥उपश्रुतिवदिति॥ यथा कश्चिदन्यार्थं शब्दं श्रुत्वापि ततःस्वाभिमतमर्थमनुमिमीते। तथा स्वाप्नवाक्यमपि लिंगतयैव बोधकमित्यर्थः ॥प्रमाणंवेति॥ लिंगीभूतस्य शब्दत्वाद्वा तद्व्यवहार इत्यर्थः। तथा तस्य प्रमाणत्वेप्यशब्दत्वान्नव्यभिचार इति भावः। उक्तानुमानेषु व्याप्त्यभावशंकां परिहरति ॥नचेति॥ उक्तनियमांगीकारे श्रुत्यर्थस्य तात्विकत्वे श्रुतिस्वरूपादेरपि तथात्वापत्त्या सर्वमिथ्यात्वासिद्ध्या तत्परश्रुतिविरोधः। अतात्विकत्वे श्रुतेःतात्विकसर्वमिथ्यात्वपरत्वव्याघात इति श्रुतेःसर्वमिथ्यात्वे तात्पर्यसंरक्षणार्थं उक्तनियम एव त्याज्यत इत्यर्थः। स्वर्गकाम इति। साग्निनिरग्निवैद्यावैद्यस्वर्गकाममात्रविषयस्यापि यजेतेति

(तरङ्गिणी)

विधेराहवनीये जुहोति यजमानोऽनुमंत्रयते यजमानस्य याज्येत्यादिनाग्निविद्यावतोऽधिकारावगमात्तत्परत्वं यथा तथा द्वितीयनिषेधस्यापि स्वोपजीव्येतरविषयत्वं। उपजीव्यस्य विधिनेव निषेधेनाप्यनुरोद्धव्यत्वादित्यर्थः ॥ उपजीव्येति ॥ यागस्याग्निविद्ये विना फलाजनकत्वात्तयोस्तत्रोपजीव्यत्वम्।

षष्ठस्य प्रथमपादे स्थितं चातुर्वर्ण्यमविशेषात्। अग्निहोत्रादिषु किं चतुर्णां वर्णानामधिकार उतापशूद्राणामिति संशये विधिवाक्येषु विशेषाश्रवणाच्चतुर्णामिति प्राप्ते अग्निहोत्रादीनामग्निविद्यापेक्षत्वात्तयोश्चाधानोपनयनाधीनत्वादाधानोपनयनयोश्च वसंते ब्राह्मणोग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः। वसंते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति त्रिष्वेव दर्शनात्। अन्यतोलब्धविद्यानां त्रैवर्णिकानामधिकारिणां सत्त्वेन कर्मविधिभिर्निषादादिष्विव शूद्रेष्वपि तयोराक्षेपकल्पनायां प्रमाणाभावात् शूद्रव्यतिरिक्तानामेवाधिकारइति राद्धांतः।

ननु स्वर्गकामवाक्यस्याग्निविद्यादिकमिव द्वैतनिषेधवाक्यस्य तात्त्विकयोग्यतादिकं नोपजीव्यं। नहि योग्यता तात्त्विकयोग्यतात्वे न निमित्तं। किंतु योग्यतात्वेनेति। मैवं। स्वर्गकामवाक्यस्यास्वार्थसमसत्ताकाग्निविद्यापेक्षावद्वैतनिषेधवाक्यस्यापि तादृशयोग्यतापेक्षानियमात्। तात्त्विकार्थप्रतिपादने तात्त्विकयोग्यतादेरेव निमित्तत्वाच्च ॥ योग्यतादीति ॥ योग्यतादीतरद्वितीयं नास्तीत्यर्थपरत्वमित्यर्थः ॥ सृष्ट्यादीति ॥ सृष्टिवाक्यस्य तव मते यथा कल्पितसृष्टिविषयत्वं तथा द्वैतनिषेधवाक्यस्यापि कल्पितद्वैतनिषेधविषयत्वमस्त्वित्यर्थः। ननु सकलद्वैताभावस्याधिकरणस्वरूपत्वेन तदधिकरणस्य ब्रह्मणः 'सत्यं ज्ञानमनंतं ब्रह्म' 'तत्सत्यं सआत्मे'त्यादिश्रुत्या सत्यत्वप्रतिपादनात् न सृष्ट्यादिश्रुतेरिवास्याः कल्पितविषयत्वोपपत्तिरितिचेत्। मैवं। विचित्रप्रपंचासाधारणकारणविचित्रशक्तिरूपस्य द्वैतस्य। 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी'त्यादिश्रुतिसिद्धात्मरूपस्य तात्त्विकत्वेन द्वैतनिषेधश्रुतेस्तात्त्विकविषयत्वस्याप्यनुपपत्तेः। द्वैतनिषेधस्यात्मरूपत्वासिद्धेश्च। नच तस्य तत्वावेदकश्रुतिबोध्यत्वेनात्मरूपत्वं। अन्योन्याश्रयात्। द्वैतनिषेधस्य तात्त्विकात्मरूपत्वेन तात्त्विकत्वे सिद्धेत् श्रुत्वते स्तत्वावेदकत्वसिद्धिः। तत्सिद्धौ च तद्बोध्यद्वैतनिषेधस्य तात्त्विकात्मरूपत्वसिद्धिरिति। द्वैतनिषेधश्रुतेःतात्त्विकार्थपरत्वस्य विचार्यमाणत्वात्। शक्तेस्तु ब्रह्मस्वरूपत्वं स्वाभाविकीत्यादिश्रुत्यैव सिद्धमिति ॥ अन्योन्येति ॥ शब्दस्वरूपादेस्तदर्थस्यच समसत्ताकत्वनियमत्यागे सति बाधकाभावे सिद्धे श्रुत्यर्थस्य तात्त्विकत्वसिद्धिः। तत्सिद्धौ च तद्बलादुक्तनियमत्यागइत्यर्थः। संगृह्णाति। तस्मादिति। ॥ तद्योग्यतयोरिति ॥ सच योग्यता च तद्योग्यते। शब्दार्थस्य शब्दयोग्यतायाश्चेत्यर्थः। तुल्यत्वात्।

(तरङ्गिणी)

सत्तयेतिशेषः। योग्यतेत्युपलक्षणं। शब्दस्वरूपमपि ग्राह्यं। नचेच्छब्दयोग्यते सत्याविषत्यनुषंगः ॥ वृषलेति॥ वृषलोद्वाहमंत्रस्वरूपं तद्योग्यतादिकं चासदेवातःस न मानमित्यर्थः ॥ एवमिति॥ यथास्वस्वरूपादेर्मिथ्यात्वबोधनाबोधनपक्षयोर्मिथ्यात्वश्रुत्यनुपपत्तिस्तथेत्यर्थः ॥ स्वेति॥ अहमिदानीं मौनीतिवत्स्वबोध्यस्य स्वेनैव निषेधादित्यर्थः ॥ सर्वेति॥ द्वितीयाभावस्यानात्मनोऽनिषेधादित्यर्थः ॥ उक्तरीत्येति॥ स्वरूपेण निषेधेऽत्यंतासत्त्वापातादित्यादिमिथ्यात्वभंगोक्तयेत्यर्थः ॥ आत्मनोपीति॥ आत्मनि पारमार्थिकत्वरूपधर्मनिषेधेपि यथात्मनो न मिथ्यात्वं तथा प्रपंचस्यापीत्यर्थः ॥ प्रत्यक्षेति॥ उक्तं च– संक्षेपशारीरके।

> अविरुद्धविशेषणद्वयप्रभवत्वेपि विशिष्टयोर्द्वयोः।
> घटते न यदैकता तदा नितरां तद्विपरीतरूपयोरिति।

ननु विशिष्टयोरैक्ये विशेषणयोरैक्यापात इति चेन्न। प्रत्यक्षोपरोधे तयोरप्यैक्यस्य तत्वमसीत्यनेन बोधयितुं शक्यत्वात्। प्रत्यक्षानुरोधेन तदबोधनं तु प्रकृतेपि समं। ननु सर्वत्र विशिष्टैक्यपरे सोयमित्यादिवाक्ये विशेष्यैक्यपरतैव दृष्टेतिचेत् सत्यं। प्रत्यक्षानुग्रहेणैव सा। तन्निग्रहे तु विशिष्टपरत्वमेव स्यादिति ॥ तदविरोधायेति॥ ननु नोपजीव्यप्रत्यक्षादिविरोधः। तात्विकांशानुपजीवनात्। व्यावहारिकांशस्योपजीवनादितिचेत् मैवं। नह्यत्रोपजीव्यविरोध इत्युच्यते। किंतु प्रत्यक्षाद्यविरोधेनैव मिथ्यात्वश्रुत्युपपत्तौ न त द्विरुद्धार्थकत्वं तस्याः कल्पनीयमिति। तत्रच नैतच्चोद्यावकाशः। मिथ्यात्वसिद्धेः प्राक् व्यावहारिकघटादिसिद्धेरभावात्। तात्विकत्वेनैव सिद्धेश्चेति ॥ अन्यस्येति॥ विज्ञानवादादिप्राप्तक्षणिकत्वादिनेत्यर्थः। अतएव नाप्रसक्तप्रतिषेधोपीतिभावः ॥ अन्यथेति॥ श्रुतेर्मानांतराननुरोधे ॥ स्यातीति॥ अर्थापत्तिसिद्धमसद्वैलक्षण्यं अनुरुंधती श्रुतिः प्रत्यक्षसिद्धं सत्त्वं कथं नानुरुंध्यादित्यर्थः ॥ विश्वेति॥ यत्परः शब्दः स शब्दार्थ इति न्यायेन चैतन्यमात्रस्यैव ततःसिद्धिः नतु विश्वमिथ्यात्वस्येत्यर्थः। ननु चैतन्यमात्रे महातात्पर्येप्यवांतरतात्पर्येण द्वितीयाभावस्यापि द्वारतया बोधनात् मिथ्यात्वमपि सिध्यतीति चेन्न। अवांतरतात्पर्यविषयस्य खंडवाक्यार्थस्य महातात्पर्यजन्यज्ञाने महावाक्यजन्यज्ञाने इव भाननियमेन द्वैतनिषेधश्रुतेरखंडार्थत्वहानेः। अवांतरतात्पर्यमहातात्पर्ययोः सप्रकारकनिष्प्रकारकज्ञानजनकतयाविरोधेन श्रुतेस्तथाविधतात्पर्यवत्त्वासंभवाच्च ॥ श्रुतेरिति॥ संसर्गगोचरज्ञानजनकत्वादित्यर्थः ॥ अतएवेति॥ अखंडार्थत्वहानेरित्यर्थः। ननु तद्विशिष्टज्ञानजनकत्वाभावात्कथमखंडार्थत्वहानिरित्यतआह ॥ द्वितीयेति॥ अद्वैतवाक्यस्य द्वितीयाभाववद्ब्रह्मेत्येवं सप्रकारकज्ञानजनकत्वेनोपलक्षणसंसर्गस्योपलक्ष्ये ब्रह्मणि बोधनादित्यर्थः। उपलक्षणेन

(तरङ्गिणी)

शुद्धस्वरूपमात्रमुपलक्ष्यं विशिष्टं वा शुद्धगतधर्मांतरं वेति विकल्प्याद्यं निराकरोति ।। चिन्मात्रस्येति ।। उपलक्षणां विनैव तस्य सिद्धत्वादित्यर्थः। द्वितीयं निराकरोति ।। अन्यस्येति ।। शुद्धात्मनएव मुमुक्षुज्ञेयत्वात् शास्त्रेणोपलक्षणद्वारापि तस्यैव बोधनीयत्वादितिभावः। तृतीयंनिराकरोति ।। काकेति ।। काकाद्युपलक्षितसंस्थानविशेषस्य गृहज्ञानविषयत्ववद्द्वितीयाभावो पलक्ष्यधर्मस्य मुमुक्ष्वपेक्षितशुद्धात्मज्ञानविषयत्वाभावादितिभावः। ननु चिन्मात्रस्य सिद्धत्वेपि नोपलक्षणवैयर्थ्यं। अनर्थनिवृत्तिहेतुत्वेन द्वितीयाभावद्वारकस्वरूपज्ञानस्योद्देश्यत्वात्तस्य प्रागसिद्धत्वात्। न। अपरोक्षज्ञानस्य विरोधिनिवर्तमाने द्वारविशेषपूर्वकत्वस्यानपेक्षणीयत्वात्। नहि द्वारविशेषाजन्यः शुक्तिसाक्षात्कारो न रूप्यभ्रमनिवर्तकः ।।अद्वैतेति।। ननु द्वितीयाभावस्य सत्यत्वेपि तस्य ब्रह्मस्वरूपतया नाद्वैतहानिरितिचेन्न। ब्रह्मणः स्वतःसिद्धत्वेन द्वितीयाभावबोधकवाक्यवैयर्थ्यात्। अभावत्वेन तद्बोधनेऽखंडार्थत्वहानिः ।। मिथ्यात्वेचेति ।। द्वितीयाभावस्य मिथ्यात्वे तस्य ब्रह्मणि विशेष्ये कदापि संबंधाभावात्तत्र तस्य विशेषणत्वोपलक्षणत्वयोरभावेन तत्र द्वितीयाभाव-बोधकवाक्यस्याप्रामाण्यं स्यादित्यर्थः ।।नचेति।। द्वितीयाभावरहिते ब्रह्मणि श्रुत्या तद्बोधनेपि तत्र तात्पर्याभावान्नातत्वावेदकत्वमित्यर्थः ।।आद्येति ।। द्वितीयाभावबोधकश्रुतेश्चैतन्यमात्रे तात्पर्यमित्येवंरूपाद्यपक्षेंऽतर्भावः। तत्रच मिथ्यात्वसिद्धिः। यत्परः शब्दस्तस्यैव शब्दार्थत्वादिति दूषणमुक्तमेवेत्यभिप्रायः ।।मानांतरेति ।। यथा वायुर्वै क्षेपिष्ठा देवतेत्यादौ शीघ्रगामि-त्वाख्यक्षेपिष्ठत्वगुणो वायौ मानांतरेण प्राप्त इति तद्वाक्यस्य न तत्र तात्पर्यं तथात्रापीत्यर्थः ।।तद्विरोधाद्वेति ।। यथा प्रजापतिरात्मनो वपामुदखिददित्यादावांतरस्य धातुविशेषस्य वपायाः प्रजापतिना स्वशरीरान्निष्कासनं कृतमिति वाक्यार्थे मानांतरविरोधादतात्पर्यं तथेत्यर्थः ।। उद्देश्येति ।।

तृतीयस्य प्रथमपादे चिंतितं। एकत्वयुक्तमेकस्य श्रुतिसंयोगात्। ज्योतिष्टोमे श्रूयते। दशापवित्रेण ग्रहं संमार्ष्टीति। तत्रग्रहैकत्वं विवक्षितमुतनेतिसंशयः। ननु वेदस्य नित्यत्वान्नतत्र पुरुषविवक्षाविवक्षे संभवतः। प्रतीतिमात्रंतु पक्षद्वयेप्यस्ति। अतः कथमयं विवादः। तदुक्तं वार्तिके।

प्रतीतिव्यतिरेकेण विवक्षान्या नविद्यते।
नित्यत्वाद्वेदवाक्यानां श्रुतोतो नाविवक्षित

इतिचेदुच्यते। नित्येपिवेदेऽध्येतुश्चेतनस्य सत्त्वात्। तदीये ते विचार्येते। तदुक्तं वार्तिके।

(तरङ्गिणी)

ऋग्वेदादिसमूहेषु क्षेत्रज्ञा ये प्रतिष्ठिताः।
तेषां वायमभिप्रायःस्याद्विवक्षाविवक्षयोरिति।।

तत्रपूर्वःपक्षः। सर्वत्र विधिप्रतिषेधात्मकत्वात् वेदस्य यावत्किंचित् श्रूयते तत्संर्व तत्संबंधित्वेन गम्यते। अत एकत्वमपि विधेयत्वेन विवक्षितमेवेति संमार्गादिकर्म एकत्वयुक्तं। एकत्वेन संबध्यते। एकस्यैव कर्तव्यं। कुतः श्रुतिसंयोगादितिसूत्रार्थः। तदुक्तं वार्तिके।

स्यात्कर्मैकत्वयुक्तं यद्विधानं वापि वैदिकं।
द्रव्यस्यैकस्य तज्ज्ञेयमनुष्ठेयं च कर्तृभिरिति॥

सिद्धांतस्तु। द्वितीयाश्रुतिनिर्देशात्प्रयोजनवत्त्वाच्च ग्रहस्य प्राधान्यं संमार्गस्य गुणभावो विज्ञायते। तत्रापि ग्रहत्वस्यासंमार्गार्हत्वात्। ग्रहशब्दस्य पात्रवाचित्वे जात्या ग्रहणं। संस्कृतसोमवाचित्वे संस्कारेणोपलक्षितानां ग्रहव्यक्तीनां संमार्गविधाने यद्ग्रहकार्यं तत्संमार्गेण सगुणं भवतीति शास्त्रार्थविगमात्। यएव न संमृज्यते तस्यैव कार्यं विगुणं भवेत्। अतः सर्वे संमार्जनीयाः। यदितु संमार्गगुणत्वेन यागांगपशुवत् ग्रहश्चोद्येत तत एकेनैव सिद्धे कार्ये नापरःसंमृज्येत। तदुक्तं वार्तिके।

व्यक्तीरुद्दिश्य यत्कर्म स्वजात्याद्युपलक्षिताः।
विहितं गुणाभावेन तत्सर्वार्थं प्रतीयत ॥

इति। आदिशब्देन संस्कारस्य ग्रहणं। ननु एकवचनेन ग्रहैकत्वस्य श्रुतत्वात्। एकएव संमार्गे कर्तव्य इति। मैवं। एकत्वस्य विधानविनियोगाभावात्। तदुक्तं।

श्रुतमात्रस्य सर्वस्य नानुष्ठेयत्वमिष्यते।
विधानविनियोगौ हि तत्रापेक्ष्यौ श्रुतौ श्रुताविति॥

ननु प्रकृतिप्रत्ययपदश्रुतिप्रतिपादितानां बहूनामर्थानां मध्ये को विधिविनियोगाभ्यां परिगृहीतः कोवा नेतिचेत् वचनव्यक्त्यदोषदोषाभ्यां तदवगमात्। तथा हि। ग्रहमुद्दिश्य संमार्गैकत्वयोर्विधाने वाक्यभेदः। ग्रहमेकत्वं चोद्दिश्य संमार्गविधानेन प्रत्युद्देश्यं वाक्यपरिसमाप्त्या वाक्यभेदः। एकत्वविशिष्टं ग्रहमुद्दिश्य तद्विधानमपि न संभवति। विभक्त्या हि युगपत्संख्या कारकं चोच्यते। न तु प्रथमं संख्यां प्रातिपदिकार्थस्योक्त्वा पश्चात्तद्विशिष्टस्य कारकत्वमुच्यते। येनैकत्वविशिष्टग्रहस्य कर्मत्वं स्यात्। तस्मान्नैकत्वस्य विधिसंबंधः। तदुक्तं वार्तिके।

(तरङ्गिणी)

मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति।
लोकदृष्टीः प्रतिघ्नंति वचनव्यक्तिपांसुभिरिति।
सर्वप्रकारमन्विष्टं वचनव्यक्तिभिः पृथक्।
न शक्यते विधानं तदेकत्वं न ग्रहीष्यत ॥

इति च। तस्माद्ग्रहैकत्वमविवक्षितमिति सर्वेषां ग्रहाणां संमार्ग इति। एवं च ग्रहैकत्वस्येव ब्रह्मणि द्वितीयाभावस्य श्रुतत्वेपि न विशेषणत्वादिना वाक्यार्थप्रवेश इत्यर्थः। अत्र एकत्वस्य वाक्यार्थाप्रवेशेपि ग्रहमित्यादिवाक्यादबाधितप्रतीतिवत्। द्वितीयाभावास्यापि तत्वावेदकादद्वैतवाक्यादेः अबाधितप्रतीतिरस्तीति द्वितीयाभावस्याबाधितत्वं दुर्वारमिति वयं पश्यामः ॥ त्वय्यैवेति॥ अद्वैतश्रुतेरननुवादकत्वं वदतेत्यर्थः ॥ तस्यैवेति॥ प्रत्यक्षादेः संभावितदोषस्य निर्दोषश्रुत्या बाध्यत्वादित्यर्थः ॥ तस्यापीति॥ अद्वैतवाक्यांतरस्याप्यविरोधित्वा दित्यन्वयः ॥ न हीति॥ बाधकत्वाभिमताद्वैतवाक्यांतरस्य लक्षणयाऽखंडचिन्मात्रपरत्वाद्द्वितीयाभावरूपद्वितीयस्य तेनाप्यनिषेधादविधानाच्च। तस्याग्निहोत्रवाक्यसाम्यं। बाध्यत्वाभिमताद्वैतवाक्यस्यात्मनि द्वितीयाभावविधायकत्वाद्दधिवाक्यसाम्यमित्यर्थः ॥ द्वितीयेति॥ बाधकत्वाभिमतस्याद्वैतवाक्यांतरस्यापि द्वितीयनिषेधतात्पर्यकत्वेन बाध्यत्वाभिमताद्वैतवाक्यस्यापि द्वितीयाभावे तात्पर्यकल्प्यमानेपि द्वयोरेकार्थत्वेनाविरोधात्तत्र तस्य तात्पर्यमित्यर्थः ॥ स्वयमिति॥ द्वैतनिषेधवाक्यमित्यर्थः। ननु स्वविहितस्य कथं स्वेन निषेधः। एकेनैव प्रमाणेन प्राप्तप्रतिषेधयोरनुपपत्तेरित्यत आह ॥ द्वितीयत्वादिति॥ द्वितीयाभावस्वरूपं हि शास्त्रेण प्राप्यते। तस्य च प्राप्यतावच्छेदकरूपं द्वितीयाभावत्वं। तच्च न निषेध्यतावच्छेदकं। किंतु द्वितीयत्वमेव निषेधमात्रानुगतं। तत्र तदनभ्युपगमे तु न तस्य निषेध्यत्वं। न वा तेनात्मनः सद्वितीयतापत्तिरतो रूपभेदान्न प्राप्तिप्रतिषेधावनुपपन्नाविति भावः ॥ स्वविरोधाधिति॥ तात्पर्याभावे मानविरोधस्यैव प्रयोजकत्वं। न तु स्वभिन्नेति तत्र विशेषणमित्यर्थः ॥ निषेधस्येति। द्वैतनिषेधवाक्यस्येत्यर्थः ॥ स्वविहितेति॥ स्वेन विहितो यो निषेधस्तदितरत् यत् द्वितीयं तद्विषयत्वादित्यर्थः। अत्र स्वनिषधद्वितीयपदानि प्रकृताभिप्रायाणि। निषेधस्य विहितेतरविषयत्वात् इत्येवं व्याप्तिशरीरं। विधानं स्वेन वान्येन वा। विहितश्च निषेधो वा अन्यो वा न कश्चिद्विशेषः। निषेधशास्त्रस्य विहितेतरविषयत्वं हि निषेध्यतावच्छेदकस्य विहितावृत्तित्वे सति भवति। द्वितीयाभावत्वस्य निषेध्यतावच्छेदकत्वे त्वद्वैतशास्त्रविहितस्य निषेधस्य निषेध्यतावच्छेदकबलेन तस्य विहितत्वनिषिद्धत्वे विरुद्धे आपद्येयातां। ननु रूपभेदेनाविरोध इति चेन्न। व्यक्तिभेदाभावेनाद्वैतवाक्यस्य निर्विषयत्वापत्तेः।

(तरङ्गिणी)

तस्य हि द्वितीयाभावो विषयः। सोपि तेन द्वितीयत्वाद्यदि निषिध्यते तदेदं स्ववधाय कृतोत्थापनं। द्वितीयत्वेन निषेधे तत्स्वरूपानुपमर्देन निर्धर्मकब्रह्मण इव तत्स्वरूपसत्यतापत्तिः। किं च निषेधवाक्यासाधारणार्थस्य निषेध्यतावच्छेदकावच्छिन्नत्वे तस्य निषेधवाक्यत्वमेव न स्यात्। निषेध्यवाक्यत्वमेव च स्यात्। अद्वैतवाक्ये तत्वावेदकत्वातत्वावेदकत्वे च स्याताम्। तस्मात्स्वविहितोपि द्वितीयाभावो द्वितीयत्वात्स्वेनैव निषिध्यत इत्युक्तिः सुभगाभिक्षुकन्यायेन बाह्योक्तव्याघातरूपवेदाप्रामाण्ययुक्त्युक्तिरेवेति ।।अन्यथेति।। निषेधस्य विहितविषयत्व इत्यर्थः ।। क्ङितिचेतीति ।। अनेन सूत्रेण सुप्तिङ्कृत्तद्धितसाधारणक्ङिन्निमित्तकः क्रियमाणो गुणवृद्ध्योः प्रतिषेधः किद्विशेषसुप्तद्धितनिमित्तकगुणवृद्धीतरतद्विषयो भवति यथा चिनुतः मृष्टः चीयात् मृज्यात् भिदा चितः मृष्ट इत्यादौ निषिध्यते। न तु कृद्विशेषसुप्तद्धितनिमित्तकतद्विषयोपि। यथा घेर्ङिति हरये भानवे किति च भवतष्ठक्छसौ। भावेक्तः। इत्येवमादौ निषेधस्यविहितविषयत्वे किद्विशेषनिमित्ते अपि गुणवृद्धी क्ङिति चेति निषेधेन निषेध्ये यातामित्यर्थः ।। किद्विशेषेति।। कितो विशेषः तद्धितस्तन्निमित्तमित्यर्थः ।। हिंसात्वादिति।। मरणानुकूलव्यापारत्वादित्यर्थः ।।इदमिति।। अस्य विश्वस्याग्रे पूर्वमित्यर्थः। ननु स्वविहितस्यापि द्वितीयाभावस्य स्वेनैव निषेधोस्तु वाक्यांतरविरोधाभावादित्यत आह ।।स्वविरोध इति।। ।।यत्नेनेति।। वाक्यांतरोपस्थितिविलंबेन विलंबोपस्थितिकाद्वाक्यांतरविरोधादपि शीघ्रोपस्थिति कतया स्वविरोधस्य यत्नेन परिहरणीयत्वं।

ननु अद्वैतवाक्यं द्वितीयवत् स्वप्रतिपाद्यं द्वितीयाभावमपि निषेधति। द्वितीयाभावेतात्पर्याभावे न तस्य निषेधेपि विरोधाभावात्। अभावज्ञानेन विषयीकृतस्यापि प्रतियोगिनः तेन निषेधवदित्याशंकते ।। अद्वैतेति।। ।।स्वविरोधादिति।। द्वितीयाभावे अद्वैतवाक्यतात्पर्याभावबीजस्य मानांतरप्राप्त्यादेरभावात्तद्विरोध एव तद्बीजं। सोपि न मानांतरेण। किं तु स्वेनैवेति वाच्यमित्यर्थः ।।अतात्पर्य इति।। अद्वैतवाक्यस्य द्वितीयाभावे तात्पर्याभावे तेन तत्सत्त्वासिद्धौ तन्निषेधेपि विरोधाभाव इत्यर्थः। शब्देन प्रतिपादितस्य पुनः शब्देन निषेधे विरोधकथोच्छिद्येतेत्याह ।।अपिचेति।। स्वविरोधस्यादोषत्वमेवं शब्दार्थः ।।सुवचं हीति।। मातृपदप्रापितं मातृत्वादिकं तस्य तत्रातात्पर्यात् न तत्तः सिध्यति। अतस्तेनैव तन्निषेधे न परस्परविरोधः। अन्योन्याश्रयस्तूभयत्रसम इत्यर्थः।

।।षोडशीति।। दशमस्याष्टमपादे चिंतितं। शिष्टं नु प्रतिषेधः। अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति। अत्र नातिरात्र इति पर्युदासः प्रतिषेधोवेति संशये

(तरङ्गिणी)

विधिप्रतिषेधयोर्व्याघातात्पर्युदास एवेति पूर्वपक्षे यदि तावदनतिरात्रे गृह्णाति षोडशिनमिति पर्युदासः स्यात् अतिरात्रे न ग्रहीतव्यः। तत्र विधानानर्थक्यं षोडशिनः। अथाषोडशिनमतिरात्रे गृह्णातीति। तथाप्यतिरात्रे षोडशिनो विधानानर्थक्यं। तस्मात्प्रतिषेधः। विरोधाच्च नैकांततः प्रतिषेधः। तस्मादगत्या विकल्प इति।

॥ अष्टदोषदुष्टेति ॥ आग्नेयोष्टाकपाल इत्यादिवाक्यनिर्दिष्टपुरोडाशाक्षेपादेव व्रीहि यवश्यामाकादिषु प्राप्तेषु द्रव्यांतरप्रसक्तिनिमित्तानियमनिरासाय व्रीह्यादिशब्दैर्नियम आश्रीयते व्रीहिभिरेव यवैरेवेति। तथा च व्रीहिपुरोडाशप्रयोगे यवशास्त्रे प्रतीतप्रामाण्यत्यागः निर्दोषवेदे दोषजन्यसंशयविपर्ययरूपाप्रामाण्यायोगात्। प्रामाण्योपलंभे सत्यपि प्रामाण्यानुप-लंभरूपानुपलब्धिगम्यप्रामाण्याभावरूपाप्रामाण्यस्वीकारः। यवपुरोडाशप्रयोगे पूर्वकल्पिता-प्रामाण्यस्य पूर्वं त्यक्तप्रामाण्यस्य च यवशास्त्रस्याप्रामाण्यत्यागप्रामाण्यस्वीकारौ विना तदर्थानुष्ठानायोगात् यवशास्त्रे त्यक्तप्रामाण्यस्वीकारः अंगीकृताप्रामाण्यपरित्याग इति च दोषद्वयं। एवं यवशास्त्रे दोष चतुष्टयं। एवं यवपुरोडाशप्रयोगे व्रीहिशास्त्रे दोषद्वयं। पुनर्व्रीह्युपादाने दोषद्वयं व्रीहिशास्त्रेपि दोषचतुष्टयं इत्यष्टदोषदुष्टो विकल्पः। एवं ग्रहणाग्रहणवाक्येपि योजनीयं। तदुक्तं वार्तिके।

प्रमाणस्याप्रमाणत्वकल्पना च द्विदोषभाक्।
प्रमाणत्वं प्रतीतं यदुज्ज्वलं तदपह्नुतं।
एकस्तावदयं दोषः स्यात्प्रतीतिविपर्ययात्।
तथा तदप्रमाणत्वं यदभावप्रमाणकं।
भावेपि सत्यभावेन विनैव परिकल्प्यते।
सोपि स्यादपरो दोषः प्रमाणार्थविपर्ययात्।
अंगीकृत्यापि तौ दोषौ पूर्वकेनापि हेतुना।
प्रयोगांतरकाले च पुनर्दोषद्वयं भवेत्।
यदभावप्रमाणत्वं पूर्वमेतस्य कल्पितं।
संप्रत्यपह्नुवानस्या दोष एको हि जायते।
प्रत्यक्षं दृढरूपं च यत्पुरस्तान्निराकृतं।
उपजायेत दोषोन्यस्तदुज्जीवयतः पुनः।
एवमेकत्र चत्वारो दोषा वाक्ये प्रदर्शिताः।

(तरङ्गिणी)

तत एव प्रसज्येरन् द्वितीयेपि प्रकल्पिते।
एवमेवाष्टदोषोपि यद्व्रीहियववाक्ययोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यत ।

इति। अस्यार्थः। द्विदोषभागित्युक्तदोषद्वयमुपपादयति। प्रमाणत्वमिति। प्रमाणत्वापह्नवस्य दोषत्वमुपपादयति। प्रतीतीति। प्रतीतप्रमाणत्वापह्नवः प्रतीतिविरोधादेव दोष इत्यर्थः। अप्रतीताप्रामाण्यकल्पनं द्वितीयदोष इत्याह। तथेति। तस्य प्रमाणस्य सतो प्रमाणत्वकल्पनमित्यर्थः। अभावेति। प्रामाण्यानुपलंभरूपाभावप्रमाणकमित्यर्थः। संदेहविपर्ययपयोर्दोषजन्यत्वान्निर्दोषवेदे च दोषाभावात्प्रामाण्याभावरूपाप्रामाण्यं वाच्यं। तस्मिंश्च प्रमाणोपलंभाभावः प्रमाणं वाच्यं। स च न संभवति। प्रामाण्योपलंभस्य सत्त्वादित्याह। भाव इति। प्रामाण्योपलंभस्य भावे सत्यपीत्यर्थः। प्रमाणेति। प्रमाणस्योपलंभाभावस्य अर्थस्य प्रमेयस्य अप्रामाण्यविपर्ययाद्दोषादित्यर्थः। अभावेति। प्रामाण्योपलंभाभावप्रमाणकत्वं। एतस्य अप्रमाणत्वस्येत्यर्थः। यदप्रामाण्यं पूर्वं स्वीकृतं तस्य त्यागस्तृतीयो दोषः। प्रत्यक्षमिति। यत्प्रमाणं पूर्वं निराकृतं तस्योपजीवनं स्वीकारश्चतुर्थो दोषः। संग्रहश्च।

व्रीहौ कृते यवस्योक्तेः प्रमात्वत्यागकल्पने।
यवेनैवं चेति दोषा व्रीहेश्चैवंद्वयेष्टते।

व्रीहिमये पुरोडाशेकृते यवस्योक्तेर्यववाक्यस्य द्वौ दोषौ। यवमये पुरोडाशे कृतेपि यववाक्यस्य द्वौ दोषौ। एवं यववाक्ये चत्वारो दोषाः। व्रीहेरुक्तेश्चैवं चत्वारो दोषाः। एवं मिलित्वा उक्तेर्द्वये ते दोषा अष्ट।

ननु प्रतियोगिनो द्वितीयस्य मिथ्यात्वात्तत्प्रतिद्वंद्वी तदभावोपि मिथ्या। नहि वंध्यासुते गौरं रूपं मिथ्येति श्यामं रूपं सत्यं भवतीत्यत आह ॥प्रतियोगिन इति॥ ॥निरस्तमिति॥ सामान्यतो मिथ्यात्वभंग इति शेषः। अत्यंताभावस्य सत्यतायां प्रतियोगिमिथ्यात्वमनुकूलमित्यर्थः ॥स्वेनैवेति॥ अद्वितीयं ब्रह्मेत्यादौ द्वितीयाभावस्य ब्रह्मविशेषणत्वादिनोपादानमयुक्तमित्यर्थः। नन्वभावबुद्धौ निषिद्धस्यापि प्रतियोगिनो विशेषणत्वादिनोपादानमस्तीति चेन्न। नह्यभावबुद्धौ प्रतियोगी विशेषणादितया अभावे उपादीयते। किं तु तत्प्रतियोगिकत्वं तत्र विशेषणं। तच्च नाभावबुद्ध्या निषिध्यते। प्रत्युत विधीयत एवेति भावः। उद्देश्यविशेषणत्वादिति पक्षं निराकरोति ॥न तृतीय इति॥ ग्रहमिति। उक्तहेतोः स्वरूपासिद्धिकथनायोक्तम्। द्वितीयाभावस्योद्देश्येत्यादि-

(तरङ्गिणी)

स्वरूपासिद्धिमेवोपपादयितुं द्वितीयाभावो न ब्रह्मोद्देश्यविशेषणं। तत्त्वेनाप्रमितत्वात् उद्देश्यशून्यत्वाच्च व्यतिरेकेण संमार्गवत् इत्यनुमानं संमार्गग्रहणेन सूचयति। नन्वद्वितीयं ब्रह्मेत्यादिवाक्येन तस्य तत्त्वेनोपादानादाद्योसिद्धो हेतुरत आह ॥इहेति॥ अद्वितीयवाक्ये। अद्वैतवाक्यं न तं विशेषणतयोद्दिशति। विधेयाप्रतिपादकत्वात्संमतवत्। अत्रासिद्धिपरिहारायोक्तं ॥अखंडेति॥ विधेयपरत्वे ह्युद्देश्यविधेयसंसर्गपरतया अखंडार्थपरत्वं भज्येतेत्यर्थः ॥विधेयेति॥ उद्देश्य-भिन्नस्येत्यर्थः। ननु कर्तृत्वभोक्तृत्वादिनाहंप्रत्ययसिद्धस्यात्मनः प्राप्ततया द्वितीयाभावं प्रत्युद्देश्यत्वं भविष्यतीति द्वितीयहेत्वसिद्धिरित्यत आह ॥शास्त्रेति॥ न हि कर्तृत्वादिमत्यात्मनि द्वितीयाभावो विशेषणादिः। विरोधात्। किंत्वशनायाद्यतीते चिन्मात्रे। तस्य च न द्वितीयाभाववाक्या-त्प्राक्सिद्धिरस्तीत्यर्थः। उक्तानुमाने ग्रहैकत्वे गृहीतसाध्यव्यापकताकं आर्तिविशेषणे हविषि गृहीतसाधनाव्यापकताकं निर्ज्ञातविशेषणत्वमुपाधिमाह ॥निर्ज्ञातेति॥ निर्णीतस्वरूपस्योद्देश्यस्य यद्विशेषणं यद्विशेषणं विनाप्युद्दिदिक्षितविशेष्यस्वरूपसिद्धिरिति यावत्। तद्विशेषणं न विवक्षितं। तथा ग्रहैकत्वं। येन विशेषणेन विनोद्देश्यस्वरूपनिर्णयो न भवति तद्विशेषणं तु विवक्षितमेव। यथा यस्योभयं हविरार्तिमार्च्छेदैंद्रं पंचशरावमोदनं निर्वपेत् इत्यत्र हविषा विशेषणेन विना आर्तिस्वरूपनिर्णयो न भवति। यस्य कस्य चिदार्तेः सदासंभवात्। सदा विद्यमानं च न निमित्तं भवितुमर्हति। कादाचित्कस्यैव तथात्वात्। हविषि विशेषणे सति आर्तिस्वरूपं निर्णीयते हविरार्तिरिति। हविर्नाश इत्यर्थः। उक्तं च वार्तिककृता। मृष्यामहे हविर्विशेषणमिति। आर्तौ हविषा विशेषणं व्यावर्तनं मृष्यामहे अंगीकुर्म इत्यर्थः। तदिहाशनायाद्यतीतं ब्रह्मस्वरूपं न निर्ज्ञातं। अतस्तद्विशेषणमार्तेर्हविरिव विवक्षितमेवेत्यर्थः। द्वितीयाभावस्य मुमुक्षुजिज्ञासि-तत्वान्मोक्षपरेण शास्त्रेणावश्यं प्रतिपादनीयत्वात्तन्नात्र विवक्षितमित्याह ॥कर्मकांडादिति॥ ॥शब्दादिति॥ यथा प्रजापतिरात्मनो वपामुदखिददित्यादिशब्दप्रतीतमपि स्ववपोत्खननादिकं तत्र तात्पर्याभावान्न तद्व्यावहारिकमपि तद्वाक्यात्सिध्यति तथा द्वितीयाभावोपि तत्र तात्पर्या-भावात्तद्वाक्याद्व्यावहारिकोपि न सेत्स्यतीत्यर्थः।

ननु महातात्पर्याभावेपि अवांतरतात्पर्यस्य सत्त्वात् देवताविग्रहवत्तत्सिद्धिरित्याशंकते ॥अवांतरेति॥ ॥द्वितीयेति॥ एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायोपक्रमात् ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्वमसि श्वेतकेतो इत्युपसंहारात् द्वितीयाभावस्योपक्रमोपसंहारयोः श्रुतत्वादित्यर्थः ॥प्राकरिणिकत्वेनेति॥ आकांक्षाविशेषरूपप्रकरणवत्त्वेन प्रधानतयाऽनन्य-शेषत्वादित्यर्थः ॥सुषुप्ताविति॥ सुषुप्तौ द्वितीयाभावस्य सुखादिफलं दृश्यत इत्यर्थः।

(तरङ्गिणी)

वेदांतवाक्यमहातात्पर्यस्य विषयांतराभावेन द्वितीयाभाव एव विषयो भविष्यतीत्याह ॥ स्वप्रकाशेति ॥ ॥ उक्तेति ॥ अज्ञानसाक्षितया सर्वदास्फुरणादित्यर्थः। द्वितीयाभाव-विशिष्टस्यास्फुरणेन तत्र तात्पर्ये विशेष्याविषयकविशिष्टतात्पर्यस्य विशेषणमात्रविषयत्वमिति भावः ॥ प्रमाणेति ॥ अवांतरतात्पर्यविषयस्यापि द्वितीयाभावस्यात्मवत्तात्विकत्वमवर्जनीयमित्यर्थः। ननु अवांतरतात्पर्यविषयत्वेनावांतरसत्त्वं व्यावहारिकत्वमेव द्वितीयवत्तदभावे आयाति न तु तात्विकत्वमित्यत आह ॥ अवांतरेति ॥ श्रुतिप्रत्यक्षयोः समसत्तार्थकत्वेन समबलत्वादित्यर्थः ॥ न हीति ॥ अभावस्य तात्विकत्वग्रहं विना तदभावस्यारोपितत्वग्रहो न संभवतीत्यर्थः। विशेषणतयोपलक्षणतया वा श्रुतिबोध्यस्य द्वितीयाभावस्य सत्त्वेऽद्वैतहानिः। मिथ्यात्वे तत्प्रतिपादकश्रुतेरतत्वावेदकत्वमित्युक्तमुपसंहरति ॥ तस्मादिति ॥ द्वितीयाभावे तात्पर्याभावादिना अतत्वावेदकत्वप्रसंगपरिहारनिराकरणमुद्बोधयति ॥ दुर्वार इति ॥ श्रुतिश्चात्र प्रमाणमिति सामान्येन मिथ्यात्वे प्रमाणत्वेनोक्तायाः श्रुतेर्निराकरणमुपसंहरति ॥ तस्मादिति ॥

व्यासाद्रिसृततर्काबुपूरैः पक्षयुगंयुजि।
न्यायामृततरंगिण्यां मिथ्यात्वश्रुतिखंडनं।

॥ सामान्येन मिथ्यात्वे श्रुतिनिरासः ॥

## न्यायामृतकण्टकोद्धारः

नन्वनुमानं मास्तु मिथ्यात्वे प्रमाणम्। श्रुतिस्तु भविष्यति। तस्या अपौरुषेयत्वेनानुमानवदन्यनिरपेक्षत्वात् इत्यत आह नापीति। प्रत्यक्षादीति। न च न प्रत्यक्षसिद्धयोग्यतादिसत्वोपजीवनं श्रुतेः। तदभावेऽपि योग्यतादिज्ञानमात्रेण तदुपपत्तेरिति वाच्यम्। योग्यतादिसत्वस्य शब्दबोधार्थमनपेक्षणेऽपि शब्दबोध्य तात्विकत्वार्थं तदपेक्षणात्। किंच शब्देन घटादिपदार्थान् धर्मीकृत्य तेषां मिथ्यात्वं बोधनीयम्। धर्मिसिद्धिश्च प्रत्यक्षादिनैव वाच्या। प्रत्यक्षादिभिश्च ते पदार्थाः सत्वेनैव सिद्धा इति तदुपजीवनेन प्रवृत्तया श्रुत्या न घटादिसत्वबाधः। न च धर्मिसत्वं नोपजीव्यम्। तथात्वे धर्मधर्मिसंसर्गस्य बाधितत्वेन वाक्यस्याप्रामाण्यापत्तेः। धर्मितावच्छेदकत्वेन तदुपजीवनस्यावश्यकत्वाच्च। न च घटत्वादिकमेव धर्मितावच्छेदकमिति वाच्यम्। घटत्वादेरपि सद्विशेषत्वात्। अन्यथा तस्यालीकत्वेनावच्छेदकत्वानुपपत्तेः। प्रातिस्विकरूपस्य दुर्ज्ञानत्वेन सत्वस्यैव धर्मितावच्छेदकत्वाच्च। किञ्चोपजीव्यविघातने महाभाष्योक्तन्यायविरोध इत्याह सन्निपातेति। अत्र योग्यतादिमात्रसत्वसाधनार्थमयं न्यायो न भवति। तथात्वे घटादीति न ब्रूयादिति द्रष्टव्यम्। न्यायस्य चायमर्थः। सन्निपातः सन्नियोगः स लक्षणनिमित्तं यस्य विधेः स तद्विघातस्यानिमित्तम्। सन्निपाति विघाते न कारणमित्यर्थः। यथा

(कण्टकोद्धारः)

शतानीत्यत्र सर्वनामस्थान योगेन जातो नुम् षड्भ्यो लुगिति लुकं प्रति न निमित्तम्। अत एव महाभाष्ये ष्णान्ताः षडित्यत्र उपदेशग्रहणं प्रत्याख्यातवान्। तथा योग्यतादि सत्वोपजीवनेन जातस्य शाब्दबोधस्य न योग्यतादिसत्वबाधकत्वमिति। ननु दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम्। दृष्टान्ते हि यत्रालुप्तप्रत्ययत्वेन निमित्तता तत्रैव न्यायावतारः। अन्यथा पञ्चेत्यत्र नान्तसंख्यायाः षट्त्वेन लुकं प्रति निमित्तत्वेन लुको नकारविघातित्वं न स्यात्। प्रकृते च नामिथ्याभूत योग्यतात्वेन प्रयोजकत्वम्। किन्तु योग्यतात्वेन। अन्यथा स्वाप्नादेरर्थक्रिया कारित्वं न स्यात् इति चेन्न। अत्राप्यमिथ्याभूतयोग्यतात्वेनैव प्रयोजकता वक्तव्या। अन्यथा मिथ्याभूतयोग्यतावत्त्वेन बौद्धागमस्यापि तात्विकार्थबोधकत्वं स्यात्। न च स्वाप्निकार्थस्य साधकत्वात् अमिथ्यात्वमप्रयोजकमिति वाच्यम्। तस्यापि सत्वात्। यथाचैतत् तथाऽसतः साधकत्वभङ्गे साधितम्। शब्दबोध्यस्येति। न च शब्दस्य बोध्यसमानसत्ताकत्वमसिद्धं स्वाप्निके संवादिनि शब्दे व्यभिचारात्। योग्यतादेश्च न बोध्यार्थसमानसत्ताकत्वनियमोऽप्रयोजकत्वात्। परोक्षत्वानित्यार्थत्वस्योपाधित्वाच्चेति वाच्यम्। स्वाप्निकशब्दे न तावन्मन्मते व्यभिचारः। तस्य सत्यत्वात्। त्वन्मते तु न तत्र शब्दत्वेन प्रमाणता। अपि तु लिङ्गत्वेन। विवक्षितं च यत् शब्दत्वेन प्रमाणं तद् बोध्यार्थसमानसत्ताकमिति। अतो न व्यभिचारः। नाप्यप्रयोजकत्वम्। यथाकथंचित् योग्यतादेः प्रयोजकत्वे अतिप्रसंगस्योक्तत्वात्। परोक्षत्वं च नोपाधिः। ब्रह्मण औपनिषदत्वेन परोक्षत्वात्। तत्प्रतिपादक श्रुतेरपि परोक्षत्वेन साधनव्यापकत्वात्। यथा च शब्दस्य नापरोक्षज्ञानजनकत्वं तथा वक्ष्यामः। अनित्यत्वं चाप्रयोजकत्वेन न साध्यव्यापकम्। उक्तानुकूलतर्केण प्रकृतनियमेऽवधारिते साध्यव्याप्य हेत्वव्यापकत्वेन निश्चितसाध्याव्यापकं चेति उक्तं निरवद्यम्। न च योग्यतादेर्मिथ्यात्वेऽपि न शब्दार्थमिथ्यात्वं, मिथ्यात्व प्रयोजकाभावादिति वाच्यम्। योग्यतादि मिथ्यात्वव्यतिरेकेण शाब्दार्थमिथ्यात्वप्रयोजकाभावात्। न च दृश्यत्वमेव तत्प्रयोजकम्। तस्य सत्यत्वेऽप्युपपत्त्या तदप्रयोजकत्वात्।

स्वर्गकामो यजेतेत्यादि विधेरिति। षष्ठे प्रथमपादे सप्तमाधिकरणे चिन्तितम्। 'चातुर्वर्ण्यमविशेषात्'। अत्र सर्वाणि वैदिकान्यग्निहोत्रादिकर्माण्युदाहरणम्। तेषु चतुर्णामपि वर्णानामधिकारः उतापशूद्राणां त्रयाणामिति चिन्ता। तदर्थमिदं विचार्यते किं कामश्रुतिप्रयुक्तं विद्यार्जनमुत स्वाध्यायविधिसिद्धविद्योपजीविन्यः कामश्रुतय इति। द्वेधा चात्र पूर्वपक्षः। एकस्तावत्। स्वाध्यायाध्ययनं क्रत्वङ्गं क्रतुविधिभिरेव प्रयाजादिवत् प्रयुज्यते। तर्हि किं प्रयाजादिवददृष्टद्वारोप युज्यत इति चेन्न। दृष्टद्वारे संभवत्यदृष्टकल्पनाया अयुक्तत्वात्। दृष्टं च द्वारं क्रत्वनुष्ठानोपयोगिनी विद्यैवेति। क्रतवश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वाणाः चतुर्णामध्ययनं प्रयुञ्जते। तत्र त्रयाणां 'वसन्ते ब्राह्मणमुपनयीत' 'ग्रीष्मे राजन्यम्' 'शरदि वैश्यम्' इति वाक्यैरुपनयनसंस्कारोऽध्ययनाङ्गत्वेन विहितः। चतुर्थस्तु विध्यभावादनुपनीत एव विद्यां लब्ध्वाधिक्रियत इति। अयं तु क्रत्वङ्गमध्ययनमिति पक्षे। द्वितीयस्तु। न क्रत्वङ्गमध्ययनम्। श्रुत्याद्यभावात्। अक्षरग्रहणादिदृष्टकार्यपरम्परया वाक्यार्थज्ञानं यावद् गतं तत्रैव विधिनाऽध्ययनं विनियुज्यते। न च तस्याफलत्वात् न तत्र विनियोग इति वाच्यम्। ज्ञानस्यानुष्ठानद्वारा स्वयमेव फलत्वोपपत्तेः। यथाधानं न क्रत्वर्थं, किन्तु अग्न्यर्थं, तथा प्रकृतेऽपि। न हि साक्षात् फल एव विनियोज्य इत्यस्ति नियमः। तथात्वे क्रत्वङ्गतापि न स्यात्। एवं चाध्ययनं न क्रत्वङ्गम्। किन्त्वाधानमिवाग्न्यर्थं ज्ञानाङ्गम्। अतस्तेनापि क्रतूनामवैगुण्याद् अनधीत एव शूद्रः उपदृष्टृवचनादनुतिष्ठन् अधिक्रियते। क्रतवो

(कण्टकोद्धारः)

द्वयविशेषेण चतुरोऽप्यधिकुर्वाणाः त्रयाणामध्ययनसिद्धविद्यत्वात् विद्यार्जनं न प्रयुञ्जते। शूद्रस्य त्वन्यतः सिद्धविद्यत्वाभावात् तदार्जनमपि प्रयुञ्जते। अतो यद्यपि स्वाध्यायविधिरनिर्दिष्टकर्तृकत्वात् कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृताः किमर्थं वयमाचार्यसमीपमानीता इत्येवं प्रयोजनमपेक्षमाणान् ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वंस्तेषामेवाध्ययनं विधत्ते, न शूद्रस्य। तथाप्यविहितेनैवाध्ययनेनोपायान्तरेण वा विद्यां लब्ध्वाधिक्रियेतेति॥ अत्रोच्यते॥ क्रतुविधिवैयर्थ्यपरिहाराय हि शूद्रस्याधिकारः कल्प्यः। क्रतुविधयो हि विद्यां विनानुपपद्यमाना विद्यार्जनमाक्षिपन्ति। तत्र यदि सिद्धविद्यावन्तो न स्युः तदान्यस्य यथाकथंचिद् विद्या कल्प्या। यदा तु स्वाध्यायविधिविहिताध्ययनोपात्तविद्यान् द्विजन्मनो लभन्ते तदा तैरेवाधिकारिभिर्लब्धात्मानोऽनुपपत्तिक्षयान्न चतुर्थस्य विद्यामाक्षिपन्ति। यदपि चैवं विहितोपायसिद्धज्ञानवत एव विधयोऽधिकुर्वन्ति तदेव विहितोपायाप्तमग्निवत् क्रत्वङ्गं भवति। एवं च विहिताध्ययन रहितस्य स्वच्छन्देन विद्यामर्जयतः शूद्रस्य न कर्मण्यधिकार इति। एवमेव कर्मणामग्निसापेक्षत्वात् अग्नीनां चाधानसाध्यत्वात् आधानस्य च वसन्ते ब्राह्मणोऽग्नीनादधीत। ग्रीष्मे राजन्यः। शरदि वैश्यः। इति वर्णत्रयसाध्यत्वात् आधानरहितस्य शूद्रस्याग्नेरभावात् न कर्मण्यधिकारः। एवं च यथा कर्मविधायकवाक्येषु अग्निविद्यावद्विषयकत्वेन संकोचः तथा प्रकृतेऽपि उपजीव्यविरोधेन योग्यताद्यतिरिक्तविषयत्वेन संकोचो युक्त इत्यर्थः।

न च प्रकृते योग्यतायास्तात्विकत्वमग्निविद्यावन्नोपजीव्यम्। तदभावेऽपि योग्यतात्वेनैवोपयोगादिति वाच्यम्। योग्यतादेर्यथाकथंचिदुपयोगेऽतिप्रसंगस्योक्तत्वेन तत्तात्विकत्वस्यावश्यकत्वात्। न च सत्यं ज्ञानमनन्तमित्यादि श्रुत्या ब्रह्मणः सत्यप्रतिपादनात् द्वैताभावस्य च तदात्मकत्वात् न मिथ्यात्वश्रुतेः कल्पितविषयत्वमिति वाच्यम्। द्वैताभावस्य सोपाधिकत्वेन निरूपाधिकब्रह्मस्वरूपत्वानुपपत्तेः द्वैताभावस्य सत्वे योग्यतादेस्तदावश्यकम्। न ह्यबाधितार्थकत्वं बाधितं, शब्दबोध्योऽर्थश्चाबाधित इति संभवति। व्याघातात्। तस्मात् योग्यतादिमिथ्यात्वे शब्दबोध्योऽर्थोऽपि मिथ्यैवेति सूक्तम्। उक्तमर्थं कारिकारूढं करोति तस्मादिति। उक्तन्यायमन्यत्रातिदिशति एवमिति। द्वितीयाभावो ब्रह्मेति तु निरस्तम्। किंचेति। स्वरूपेण निषेधेऽसत्वापत्तिः। स्वरूपेण निषेधेऽपि तुच्छाद् वैलक्षण्यमिति तु निराकृतं बाध्यत्वरूप मिथ्यात्वभङ्गे।

अपिचेति। नन्वत्र न प्रत्यक्षाविरोधाय लक्षणाऽङ्गीक्रियते। किन्तु विशिष्टैक्ये विशेषणैक्यापातेन विशिष्टाभेदपरवाक्यस्य लक्षितविशेष्यैक्यमात्रपरत्वनियमेनात्रापि तथाभ्युपगम इति चेन्न। एवं हि वदता प्रत्यक्षाविरोधायैव लक्षणाऽङ्गीकृता। तथा हि विशिष्टैक्ये विशेषणैक्यम्। तच्च प्रत्यक्षविरुद्धम्। तेन विशेषणयोर्भेदस्यैवावगाहनात्। तथा च प्रत्यक्षविरोधादेव प्रकृतेऽपि लक्षणा स्वीकर्तव्येवेति प्रपञ्चमिथ्यात्वं न सिध्येदेव। किञ्च विशिष्टैक्ये विशेषणैक्यं कुतः ? नह्यावयोर्मते विशिष्टं विशेषणविशेष्यतत्सम्बन्धात्मकम्। एवं च विशिष्टैक्येऽपि न विशेषणैक्यम्। किंच धूमवान् वह्निमानित्यत्र व्यभिचारश्च। तत्र विशिष्टैक्येऽपि विशेषणैक्याभावात्। न च तत्र विशिष्टैक्यमेव नेति वाच्यम्। अनुभवविरोधात्। विस्तरिष्यते चैतदखण्डार्थवादे। न च प्रकृते प्रत्यक्षविरोध एव न। तात्विकांशस्यानुपजीव्यत्वात्। व्यावहारिकांशमात्रोपजीवनादिति वाच्यम्। योग्यतादेस्तात्विकत्वस्यैव तन्त्रताया उक्तत्वात्। व्यावहारिकांशस्योपजीवने तस्यैवाबाधापत्तेश्च।

(कण्टकोद्धार:)

व्यावहारिकतात्विकविभागस्य मिथ्यात्वसिध्युत्तरकालीनतयाऽन्योन्याश्रयाच्च। एवं च प्रत्यक्षसिद्धान्यस्यैव मिथ्यात्वं बोध्यमिति न प्रत्यक्षसिद्धमिथ्यात्वसिद्धिः। अन्यथा प्रत्यक्षविरोधाभावे।

विश्वमिथ्यात्वेति। तात्पर्यविषयस्यैव शब्दात् सिध्यङ्गीकारादिति भावः। किंचाप्राप्ते श्रुतेस्तात्पर्यं वक्तव्यम्। अन्यथा सिद्धार्थबोधकत्वेनाप्रामाण्यं स्यात्। न च चैतन्यं तथेत्याह तस्येति। श्रुतेरिति। यत्र विशिष्टे तात्पर्यं तदेव श्रुत्या बोधनीयम्। एवं च निर्विशेषणार्थनिष्ठत्वाभावादखण्डार्थत्वहानिः। निर्विशेषार्थनिष्ठत्वस्यैव तत्वादिति भावः। अत एवेति। अखण्डार्थत्वहानेरेवेत्यर्थः। तदुपपादयति। काकवदिति उपलक्षणस्य स्वप्रकारकज्ञानजनकत्व नियमादिति भावः। ननु नोपलक्षणस्य स्वप्रकारकज्ञानजनकत्वम्। किन्तु स्वोपस्थाप्यविशेषप्रकारक ज्ञानजनकत्वम्। इदं च यत्र स्वरूपातिरिक्तमुपलक्ष्यं तत्र ज्ञातव्यम्। प्रकृते च स्वरूपमेवोपलक्ष्यम्। अतो न कश्चिद्दोष इति चेन्न। उपलक्षणस्य स्वस्वोपस्थाप्यान्यतर-प्रकारकबोधजनकत्वस्वभावत्वात् द्वितीयाभावस्योपलक्षणत्वेऽखण्डार्थत्वहानेर्दुर्वारत्वात्। न च स्वरूपमात्रोपलक्षणे नायं नियम इति वाच्यम्। तथोपलक्षणस्य क्वाप्यदर्शनेन संकोचे प्रमाणाभावात्। किंचोपलक्ष्याभावाच्च नोपलक्षणत्वम्। उपलक्ष्यं किं चैतन्यमात्रं तदतिरिक्तं वा? नोभयथापीत्याह चिन्मात्रस्येति। न च स्वरूपमात्रस्य नित्यसिद्धत्वेऽपि अनर्थनिवृत्तिहेतुत्वेन द्वितीयाभावद्वारकस्वरूपमात्रं न सिद्धमिति वाच्यम्। द्वितीयाभावे तात्पर्या भावेन तद्द्वारकसिद्धेरसंभवात्। अत एव मिथ्यात्वासिध्या इष्टापत्तेश्च। द्वितीयाभावस्य स्वरूपमात्रत्वे तदसिद्धेरसंभवात् उपलक्ष्योपलक्षकभावायोगाच्च। न चावान्तरतात्पर्यात् तदुपपत्तिरिति वाच्यम्। श्रुति तात्पर्यविषयत्वे तात्पर्यतो द्वितीयाभावविशिष्टबोधनेऽखण्डार्थत्वहानेः। श्रुतितात्पर्यविषयत्वे सत्यत्वेन सद्वितीयत्वापत्तेश्च। न च महातात्पर्यविषयत्वाभावान्नोक्तदोष इति वाच्यम्। लाघवेन श्रुतितात्पर्यविषयत्वस्यैव सत्यत्वादि प्रयोजकत्वात्। चैतन्यस्य नित्यसिद्धत्वेन तत्र महातात्पर्यायोगाच्च। किंच न स्वरूपस्योपलक्ष्यत्वम्। उपलक्ष्यतावच्छेदकाभावे उपलक्ष्यत्वादृष्टेः। न च जातेः स्वतो यावृत्तत्ववत् स्वत एवोपलक्ष्यत्वमिति वाच्यम्। कल्पकाभावात्। दृष्टान्तेऽनवस्थाया एव कल्पकत्वात्। न च प्रकृतेऽप्यखण्डार्थत्वमेव कल्पकमिति वाच्यम्। तस्यासिद्धेः। जातेरपि व्यक्तिरेव विशेषणं, धर्मान्तरं वा। अनवस्था च प्रामाणिकीति तद्दृष्टान्तासंमतेश्च। तस्मान्न श्रुत्या मिथ्यात्व सिद्धिः। किंचेति। न च द्वितीयाभावस्य सत्वेऽपि स्वरूपत्वान्नाद्वैतहानिरिति वाच्यम्। द्वितीयाभावस्य स्वरूपत्वानुपपत्तेरुक्तत्वात्। न च तत्रेति। किं तर्हि चैतन्य एव लक्षणया महातात्पर्यमङ्गीक्रियत इति भावः।

यथा वायुक्षेपिष्ठत्वादाविति। अर्थवादाधिकरणे वायुक्षेपिष्ठादिवाक्यानां क्रियाकारकफलाप्रतिपादकतया मानान्तरसिद्धार्थतया चाप्रामाण्ये शङ्किते प्रमाणान्तरसिद्धे स्वार्थे तात्पर्याभावेन प्रामाण्याभावेऽपि लक्षितप्राशस्त्यद्वारेण वायव्यं श्वेतमालभेतेत्यस्य विधेः शाब्दभावनांशभूतेतिकर्तव्यतासमर्पकतया विध्यर्थे तात्पर्यात् प्रामाण्यमुक्तम्। एवं च यथा तस्य स्वार्थे मानान्तरप्राप्ततया न तात्पर्यं तद्वदत्रापीत्यर्थः।

यथात्मवपोत्खननादाविति। अर्थवादाधिकरण एव प्रजापतिरात्मनो वपामुदखिददित्यादेः क्रियाकारकफलसंबन्धाप्रतिपादकतया प्रमाणान्तरविरुद्धार्थतया च न स्वार्थे तात्पर्यम्। अतस्तत्राप्रामाण्यमिति

(कण्टकोद्धारः)

पूर्वपक्षिते प्रमाणान्तरविरुद्धे स्वार्थे प्रामाण्याभावेऽपि प्रजापशुपालकप्राजापत्यतूपरपश्वालम्भविधिशेषतया प्रामाण्यं भविष्यतीति सिद्धान्तिते किंद्वारेण तच्छेषत्वमित्याक्षिप्ते स्तुत्युन्मीलनेनेत्युक्तम्। कथमस्य स्तुत्युन्मीलकत्वमिति चेदित्थम्। यदा प्रजापतिना फलविशेषार्थिना स्वावयवोत्कर्तनेन कर्माणि क्रियन्ते तदा किमु वक्तव्यं बाह्य परित्यागेनेति। तथा च सर्वथा कर्म कर्तव्यमिति। तथाच प्रजापतिरात्मनो वपामुदखिददित्यादेः प्रमाणान्तरविरुद्धे स्वार्थे यथा न तात्पर्यं तथेत्यर्थः। उद्देश्यविशेषणत्वादिना यथा ग्रहैकत्वादाविति।

तृतीये प्रथमे सप्तमाधिकरणे चिन्तितम्। एकत्वमुक्तमेकस्य श्रुतिसंयोगात्। सो मे श्रूयते दशापवित्रेण ग्रहं सम्मार्ष्टीति। दशापवित्रं वासःखण्डः। तत्र संशयः किमेकस्य ग्रहस्य संमार्ग उत सर्वेषामिति। तदर्थमुद्देश्यगत संख्या विवक्षिता उत नेति। पूर्वपक्षस्तु ग्रहशब्दस्य जातिवाचित्वेन जातेः संस्कार्यतया प्रतीतेः तस्याः प्रत्येकव्यक्ति पर्यवसिततया तदाश्रयीभूते यस्मिन् कस्मिंश्चित् द्रव्येऽनुष्ठितेन संस्कारेण जातिः संस्कृता भवतीति न सर्वग्रहसंमार्गः। किं च पशोर्यागं प्रति गुणत्वात् येन केनचित्पशुना यागानिष्पत्तिवद् येनकेनचित् संमार्गसिद्धेर्न सर्वत्र संमार्गान्वयः। अपि च पशुना यजेतेत्यत्रोपादेयगता संख्या यथा विवक्षिता तथोद्देश्यगतापि विवक्षणीया अविवक्षाकारणाभावादिति। सिद्धान्तस्तु ग्रहशब्दस्य जातिवाचित्वेऽपि न तस्याः संस्कारः। अमूर्तत्वेन संस्कर्तुमशक्यत्वात्। किन्तु तल्लक्षितानां ज्योतिष्टोमापूर्वसाधनानानामयं संमार्गः। ननु तथापि येनकेनचित्पशुना यागनिष्पत्तिवद् येनकेनचिद् ग्रहेण संमार्गनिष्पत्तिरिति चेद् भवेदेतद् यागप्राधान्यमिव संमार्गप्राधान्यं स्यात्। नचैवम्। संमार्गस्य गुणत्वात्। ग्रहस्य प्रधानत्वात्। द्वितीया श्रवणात्। न च द्वितीयाश्रवणेऽपि सक्तुवत् न प्राधान्यमिति वाच्यम्। सक्तूनामप्रयोजनत्वात्। ग्रहाणां च प्रयोजनवत्त्वात्। प्रतिप्रधानं च गुणावृत्तेर्न्याय्यत्वात् सर्वग्रहसंस्कारः। नचाविवक्षाकारणाभावादुद्देश्यविशेषणमेकत्वं विवक्षितम्। अतो न सर्वग्रहसंमार्ग इति वाच्यम्। एकत्वं विवक्षितं चेत् संमार्गवद् विधेयं स्यात् ? ग्रहवदुद्देश्यं वा स्यात् ? ग्रहत्ववदुद्देश्यविशेषणं वा स्यात् ? नाद्यः। ग्रहमुद्दिश्योभयविधाने वाक्यभेदः। ग्रहं कुर्यात् तच्चैकं कुर्यादिति। न द्वितीयः। द्वयोः परस्परनिरपेक्षोद्देश्यत्वे प्रत्युद्देश्यं वाक्यपरिसमाप्तेर्वाक्यभेदः। ग्रहं संमृज्यात् एकं च संमृज्यादिति। न तृतीयः। एवं हि एकत्व विशिष्टं ग्रहमुद्दिश्य संमार्गो विधेयः। न चैतुपपद्यते। विभक्त्या हि युगपत् संख्यां कारकं चोच्यते, न तु प्रथमं संख्या प्रातिपदिकार्थस्योक्त्वा तद्विशिष्टस्य कारकत्वमुच्यते। येनैकत्वविशिष्टस्य ग्रहस्य कर्मत्वं स्यात्। तस्मादेकत्वविवक्षा न युक्ता। किंच परिच्छेदाकांक्षाभावात् न संख्या विवक्षिता। न हि परिच्छिन्ने परिच्छेदाकांक्षा भवति। तस्मादेकत्वस्याविवक्षितत्वात् प्रतिप्रधानं गुणावृत्तिन्यायेन सर्वेषां ग्रहाणां संस्कारः। तथा च यथा ग्रहमित्यादावेकत्वस्योद्देश्यविशेषणत्वादविवक्षा तथा प्रकृतेऽपीत्यर्थः। त्वन्मत इति। व्यावहारिकविषयत्वेन दुर्बलतया बाधकत्वायोगादिति भावः।

न हि विशेष्येति। द्वितीयाध्याये द्वितीयपादे पञ्चमाधिकरणे चिन्तितम्। आधाराग्निहोत्रमरूपत्वात्। इदमाम्नायते अग्निहोत्रं जुहोतीति। तत्सन्निधौ श्रुतं दध्ना जुहोतीत्यादि। तत्र संशयः। किं दध्ना जुहोत्यादिभिः विशिष्टा होमा विधीयन्ते, तेषां च रूपवतामग्निहोत्रं जुहोतीत्यनुवादः ? उतायमेव कर्मविधिरितरे तत्रैव

(कण्टकोद्धारः)

गुणविधयः ? इति। तदर्थमपीदं विचार्यते। अविज्ञातरूपं कर्म विधातुमेवाशक्यमुत शक्यमिति। तदर्थं प्राप्ते कर्मणि गुणमात्रविधानं संभवत्युतनेति। पूर्वपक्षस्तु अग्निहोत्रं जुहोतीति सामान्यमवगम्यते। न च तद् विधातुं योग्यम्। विशेषस्तु योग्यः। स चानुरञ्जकनिरूपणाधीनः। न जुहोतीत्येतावतावगम्यते। न चेह द्रव्यदेवतादिकमनुरञ्जकमुपात्तं यद्वशेन विशेषावधारणं स्यात्। अनिरूपितश्च विशेषो न विधिनान्वेतुं योग्यः। तेनावगतस्यायोग्यत्वात् योग्यस्य च विशेषस्यानवगतत्वात् न विधिःसंभवति। यदा चाग्निहोत्रं जुहोतीति न कर्मविधिः तदा तदनुवादेन दध्यादिवाक्यैर्न गुणविधानं शक्यम्। कर्मणोऽविहितत्वेनानुवादासंभवात्। किंचानेन कर्मविधावपि न दध्यादिवाक्यैर्गुणविधानम्। व्यापारस्यैव विधेयत्वात् दध्यादेरव्यापारत्वात्। तस्माद् दध्यादिवाक्यानां विशिष्टहोमविधायकत्वेनाग्निहोत्रं जुहोतीत्यादेर्न होमविधायकत्वम्। किन्तु समुदायानुवादकत्वमिति न विशेष्यमात्रपरत्वम्। तथा च विषमो दृष्टान्त इति। सिद्धान्तस्तु तथा जुहोतीति विधिः। विशिष्टविधिगौरव परिजिहीर्षया विशेष्यप्राप्तिमर्थयमानो यदि कथंचिदपि विशेष्य प्राप्तिं न लभते ततो विशिष्टं विदध्यात्। सत्यां चाग्निहोत्रादिवाक्येन कर्मणः प्राप्तौ तदनुवादेन गुणमात्रं विदधाति, लाघवात्। न विशिष्टविधानं, गौरवात्। न च तत्र रूपानवगमात् विधियोग्यविशेषानुपस्थितौ कथं विधानमिति वाच्यम्। विधिवशादेव सामान्यमतिक्रम्य विशेषस्यैव लक्षणीयत्वात्। एवं च लक्षणया होमविशेषस्यान्यत्राविहितस्य जुहोतिनोपस्थानान्न विधानासंभवः। अत एव लक्षितविशेषविषयत्वेन संज्ञोपपद्यते। न च तस्यारूपत्वम्। दध्यादिवाक्यैस्तल्लाभात्। न च स्वरूपेण दध्यादेरविधेयत्वमुक्तमिति वाच्यम्। दध्ना जुहुयादिति व्यापारविशिष्टस्यैव विधानाङ्गीकारात्। न चैवं गुणमात्रविधित्वं भग्नमिति वाच्यम्। यद्यपि न क्रियां विहाय द्रव्यविधिः प्रतीयते। तथापि तस्यामेव विशिष्टायां प्रतीयमानो विधिः स्वरूपेण तस्याः प्राप्तत्वात् अप्राप्तगुणमात्रपरतामवलम्बमानः फलतो गुणविधिरित्युच्यते। तेनात्र गुणमात्रविधानम्। अग्निहोत्रं जुहोतीति प्रकृतकर्माभावात् रूपलाभाच्च विधिरेव। न समुदायानुवादः इति। एवं चाग्निहोत्रं जुहोतीत्यस्य विशेष्यहोममात्रपरत्वात् दध्ना जुहोतीत्यस्य प्रतीतितो विशिष्टपरत्वात् दृष्टान्तदार्ष्टान्तिक भावः संगच्छत इति न कश्चित् क्षुद्रोपद्रव इति निषेधस्येति। प्राप्यत्वनिषेधत्व योर्विरोधादिति भावः। नन्वेकेन रूपेण प्राप्यत्वनिषेध्यत्वे विरुद्धे। न तु रूपभेदेन ते तथा। प्रकृते तु द्वितीयाभावत्वेन प्राप्यता। तत्र प्राप्यतावच्छेदकं द्वितीयाभावत्वम्। निषेध्यतावच्छेदकं च द्वितीयत्वम्। एवं च द्वितीयत्वेन निषेधेऽपि तस्य ब्रह्ममात्रत्वेन न तेन ब्रह्मणः सद्वितीयत्वम्। न हिंस्यादित्यादौ तु प्राप्यतावच्छेदक निषेध्यतावच्छेदकयोरेकत्वात् तुल्यबलतया विरोधे संकोचविकल्पादिकं युज्यते। यथातिरात्रे षोडशिनं गृह्णातीत्यत्रातिरात्रत्वस्यैवोभयावच्छेदकत्वात् विकल्पः। न हिंस्यादित्यत्र संकोच इति चेन्नैवम्। एवं हि प्रपञ्चस्य सार्वज्ञ्यादेश्च द्वितीयत्वेन निषेधेऽपि प्राप्यतावच्छेदकेन सार्वज्ञ्यादिना सत्यत्वं स्यात्। सार्वज्ञ्यादेरपि ब्रह्ममात्रत्वस्य वक्तुं शक्यत्वेनाद्वितीयत्वाविरोधित्वात्। न चेष्टापत्तिः। अपसिद्धान्तात्। न च सार्वज्ञ्यादेः सोपाधिकत्वात् न ब्रह्ममात्रत्वमिति वाच्यम्। द्वितीयाभावस्य सोपाधिकत्वेन ब्रह्ममात्रत्वाभावस्य तुल्यत्वात्। न च तत्रोपाधिः तटस्थ इति वाच्यम्। प्रकृतेऽपि उपाधेस्ताटस्थ्यस्य वक्तुं शक्यत्वात्। किं च द्वितीयाभावस्याभावरूपतया न ब्रह्ममात्रत्वम्। सार्वज्ञ्यादेश्च भावरूपतया ब्रह्ममात्रत्वं युक्तम्। अपि च द्वितीयाभावस्य ब्रह्ममात्रत्वे एकमेवाद्वितीयमित्यादावेकेनैव पदेन द्वितीयाभावस्य बोधनात्

(कण्टकोद्धारः)
अद्वितीयादिपदानां वैयर्थ्यम्। पर्यायत्वेनासहप्रयुक्तत्वं च। यथाचैतत् तथाऽखण्डार्थवाद उपपादयिष्यामः। अपि चैवं प्रपञ्चस्यापि धर्मान्तरेणैव द्वितीयाभाववन्निषेधे तद्वदेव स्वरूपेण सत्यत्वं स्यात्। एवं च स्वरूपेणप्रपञ्चस्य मिथ्यात्वमिति त्वन्मतहानिः। आकारान्तरेण तु मिथ्यात्वं ब्रह्मणोऽपि तुल्यमिति। अपि चाग्नीषोमीयपशुहिंसात्वस्य प्राप्यतावच्छेदकत्वात् भूतहिंसात्वस्य निषेध्यतावच्छेदकत्वात् तत्रापि विधयेत्वनिषेध्यत्वे स्यातामित्युत्सर्गापवादन्याये भज्येतेति।

षोडशिग्रहणाग्रहणादाविति। दशामेऽष्टमपादे तृतीयेचिन्तितम्। शिष्टासु प्रतिषेधः ज्योतिष्टोमस्य संस्था विशेषे श्रूयते। अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णतीति। अत्र संशयः। पर्युदासः प्रतिषेधोवेति। पूर्वपक्षस्तु प्रतिषेधे विधिप्रतिषेधः। विधिप्रतिषेधयोर्भिन्नवाक्यस्थत्वात् अष्टदोषदुष्टविकल्पापत्तेः नानुयाजेष्वित्यत्रेव पर्युदासो युक्त इति। सिद्धान्तस्तु प्रतिषेध एवाश्रयणीयः। पर्युदासानुपपत्तेः। तथाहि नानूयाजेष्वित्यत्रानुयाजव्यतिरिक्तेषु यागेषु ये यजामह इति विशेषव्यतिरिक्तस्य सामान्यस्य सत्वात् तत्र पर्युदासः संभवति। प्रकृतेत्वतिरात्रव्यतिरिक्तस्य सामान्यस्याभावात् अतिरात्रव्यतिरिक्तेऽतिरात्रे षोडशिनं गृह्णातीति पर्युदासः कर्तव्यः। स च न युक्तः। अतिरात्रस्यातिरात्रव्यतिरिक्तत्वाभावात् विशेषण विशेष्यभावानुपपत्तेः। तर्हि 'न तौ पशौ करोती'त्यत्र न सोम इति वदर्थवादोऽस्त्विति चेन्न। स्तुत्यस्तावकयो र्विधिनिषेधयो रेकविषयत्वेन व्याहति तादवस्थ्यात्। अपशवो वा अन्ये गो अश्वेभ्य इत्यत्र पश्वन्तरनिषेधेन गो अश्वविधेः स्तुतिर्हष्टा। इहतु षोडशिनिषेधेन षोडशिन एव स्तुतौ स्पष्टो व्याघातः। न च प्रतिषेधेऽष्टदोष दुष्टो विकल्पः स्यादिति वाच्यम्। गत्यन्तराभावे व्रीहियववत् तस्येष्टत्वात्। तस्मात् प्रतिषेध इति।

ननु प्रतियोगिनो मिथ्यात्वात् कथमभावस्य सत्यत्वमत आह प्रतियोगिन इति। प्रतियोगितदभावयोः समसत्ताकत्वाभावात्। अन्यथाऽनृतव्यावृत्त्यादेरसत्वापात इति भावः। किंचेति। न च निषिद्धस्यापि पूर्वप्रतीतरजतस्य सा शुक्तिरित्यत्रोपलक्षणतयोपादानं दृष्टमिति वाच्यम्। तत्र प्रतीतेरेव विशेषणतयोपलक्षणतया वोपादानात्। अत एव सा शुक्तिरिति प्रयोगः। न तु रजतं शुक्तिरिति। सेत्यत्ररजतत्वेन प्रतीतेत्यर्थात्। न च प्रकृते तथा। अद्वितीयमिति द्वितीयाभावस्यैव तयोपादानादित्यलं विस्तरेण।

उद्देश्यविशेषणत्वान्न द्वितीयाभावे तात्पर्यमिति तृतीयो नेत्याह न तृतीय इति। अत्र द्वितीयाभावस्य तदोद्देश्यचिन्मात्रविशेषणत्वं स्यात् यदि चिन्मात्रमुद्दिश्य किंचिद् विधीयेत। न च वेदान्ते कस्यचिद् विधानं संभवति। अखण्डार्थत्वात्। किंच यत् सिद्धं तदुद्देश्यम्। न च चिन्मात्रस्य सिद्धता। तस्यौपनिषदत्वेन शास्त्रं विनाऽसिद्धेः। एवं च चिन्मात्रस्योद्देश्यत्वाभावेन न द्वितीयाभावस्योद्देश्यविशेषणत्वमित्याह ग्रहमिति। अविवक्षाहेतोरिति। अन्यथा ग्रहत्वस्याप्यविवक्षास्यादिति भावः। कर्मकाण्डादाविति। तथाचाजिज्ञासिते तात्पर्यायोगात् द्वितीयाभावादेरेवजिज्ञासितत्वात् तत्रैव तात्पर्यं वक्तव्यमिति भावः। द्वितीयाभावे तात्पर्याभावे बाधकमाह शब्दादिति। न च द्वितीयाभावः प्रातिभासिक एवास्त्विति वाच्यम्। तथात्वे मिथ्यात्वमपि प्रातिभासिकं स्यात्। तथात्वे विवादाभावप्रसङ्गः। उक्तरीत्येति। नित्यसिद्धत्वेनेत्युक्तरीत्येत्यर्थः। न च पूर्वं चैतन्यस्यौपनिषदत्वेनानुद्देश्यत्वमुक्तम्। तत् कथं न विरोध इति वाच्यम्। अवेद्यत्वं स्वप्रकाशत्व मित्यभिप्रायेण

(कण्टकोद्धारः)

**पूर्वमप्राप्तत्वमुक्तम्। इदानीं तु प्रकाशान्तरानपेक्षप्रकाशमानत्वाभिप्रायेण तदुच्यत इति न विरोधः यद्वा पररीत्या परस्यापदानान्न दोषः। प्रमाणावान्तरेति। न च महातात्पर्य विषयावान्तरतात्पर्यविषययोः समसत्वनियमोऽसिद्ध इति वाच्यम्। कर्मकाण्डादौ तथा दर्शनेन व्यभिचारादर्शनानौपाधिकत्वयोः सद्भावेन च नियमसिद्धेः। अन्यथा क्वापि नियमो न सिध्येत्। अवान्तरतात्पर्य विषयस्येति। उभयोरपि व्यावहारिकविषयत्वेन तुल्यत्वात्। तुल्यविषययोर्बाध्यबाधकभावादर्शनात्। प्रत्यक्षविषयस्य तात्विकत्वं च स्यात्। तदभावस्य तत्राप्रमितत्वात्। अधिष्ठाननिष्ठतात्विकाभावप्रतियोगिन एवारोपितत्वात्। अत एवाह नहीति। एवं च द्वितोयाभावे श्रुतेस्तात्पर्यात् तस्य च मिथ्यात्वे श्रुतेरप्रामाण्यप्रसंग इत्युपसंहरति तस्मादिति। परमप्रकृतमुपसंहरति तस्मादिति।**

**सामान्येन मिथ्यात्वश्रुतिनिरासः।**

### न्यायामृतप्रकाशः

श्रुतिश्चात्र प्रमाणमिति सामान्येनोक्तां मिथ्यात्वश्रुतिं निराकरोति॥ नापिश्रुतिरिति॥ तात्विके विश्वमिथ्यात्वे श्रुतिरपि मानं नेत्यर्थः। ''नेहनाने''तिश्रुतिः श्रोत्रप्रत्यक्षादिसिद्धस्वरूपस्वप्रामाण्यतद्धेतुयोग्यतादेर्मिथ्यात्वम-बोधयित्वा प्रत्युतस्वस्वरूपादिसत्यत्वमुपजीव्य सर्वमिथ्यात्वं बोधयति। उत स्वस्वरूपस्वप्रामाण्य-तद्धेतुयोग्यतादेर्मिथ्यात्वं बोधयित्वा सर्वमिथ्यात्वं बोधयति। नाद्य इत्याह॥ श्रुत्येति॥॥ तत्सत्यत्वेति॥ स्वस्वरूपादिसत्यत्वेत्यर्थः॥ सर्वेति॥ स्वस्वरूपादेर्मिथ्यात्वाबोधनादित्यर्थः। किंच सर्वमिथ्यात्वं बोधयंत्या **श्रुत्या** सन्घट इत्यादिप्रत्यक्षसिद्धं घटादिकं धर्मीकृत्य तत्र मिथ्यात्वं बोधनीयम्। तन्न संभवति। तदुपजीवनेन प्रवृत्तायाः श्रुतेस्तद्बाधनासामर्थ्यात् अतः प्रत्यक्षादिसिद्धघटादिमिथ्यात्वासिद्धिः तदुपजीवनेन प्रवृत्तस्यापि तद्बाधकत्वं किं न स्यादित्यत आह॥ संनिपातेति॥ यत्सन्निपातेन यदुपजीवनेन लक्षणं स्वरूपं यस्य विधेः स विधिस्तस्य स्वोपजीव्यस्य विघातस्यानिमित्तमित्यर्थः। यदुपजीवनेन यत्प्रवर्तते स तस्य बाधको नेति यावत्। तथाहि शतानि सहस्राणीत्यत्र शतशब्दात् जसि ''जश्शसोःशिः'' इति सूत्रेण जसश्शीत्यादेशे ''शिसर्वनामस्थान''मिति शेः सर्वनामस्थानसंज्ञायां ''लशक्वतद्धिते'' इति शकारलोपे शत इति जाते ''नपुंसकस्य झलच'' इति सूत्रेण सर्वनामस्थानसंज्ञिकशिप्रत्यये परे नुमागमे शतन् इ इति जाते ''सर्वनामस्थानेचाऽसंबुद्धौ'' इत्युपधादीर्घे शतान् इ शतानीति भवति। तदिदमुक्तं ''ष्णांता षट्'' षांता नांता चसंख्या षट्संज्ञास्यादिति नांतसंख्यावाचिशतन्शब्दस्य षट्संज्ञायां ''षड्भ्यो लुक्'' षट्संज्ञकेभ्यः परयोर्जश्शसोर्लुक् स्यादिति शिप्रत्ययलोपे तन्निमित्तकदीर्घस्याप्यभावे शतन् सहस्रन् इत्येव स्यान्नतु शतानीत्यादीति शंकायां अयं न्यायः प्रवृत्तः। नात्रशिप्रत्ययलोपः सर्वनामस्थानभूतशिप्रत्यये परे नुमागमस्य विहितत्वाच्छिप्रत्ययसन्नियोगेन प्राप्तो नुम् ''ष्णांता षडि''ति षट्संज्ञा द्वारा प्राप्तस्य इति शिप्रत्ययलोपस्य न निमित्तम्। एवं च शिप्रत्ययलोपाभावेन तत्प्रयुक्तोपधादीर्घे सति शतानीत्यादि भवतीत्युदाहरणं द्रष्टव्यम्। न द्वितीय इत्याह॥ बोधन इति॥ श्रुतिबोध्यार्थस्य सर्वमिथ्यात्वस्य। कुत इत्यत आह॥ शब्दबोध्यस्येति॥ अर्थस्येत्यर्थः॥ शब्देति॥ शब्दस्वरूपेत्यर्थः॥ नियमादिति॥ अनेन

(प्रकाशः)

विश्वमिथ्यात्वबोधकत्वेनाभिमता श्रुतिः स्वस्वरूपप्रामाण्ययोग्यतादिसमसत्ताकस्वबोध्यार्थयुक्ता प्रमाणशब्दत्वात्संमतवदित्यनुमानमुक्तं भवति। नन्वेवं चेत् तवैवं भविष्यतीति स्वाप्नदेवतावाक्यं किंचिदस्ति। तद्वाक्यस्वरूपं मिथ्यात्वान्नास्त्येव। तन्निष्ठे योग्यताप्रामाण्ये अप्यसती एव बोध्यार्थश्च सन् अर्थक्रियाकारित्वानुभवात् एवं च तत्र प्रमाणशब्दत्वमस्ति स्वस्वरूपयोग्यतादिसमसत्ताकबोध्यार्थयुक्तत्वाभावाद्व्यभिचार इत्यत आह॥ सदर्थ इति॥ स्वस्वरूपसत्त्वस्य परासंमतत्वाद्योग्यताप्रामाण्ये अपीत्युक्तम्। वाक्यस्य सदर्थ(क)त्वांगीकारे योग्यताप्रामाण्ययोरपि सत्त्वं प्राप्तमेव परस्परान्वयाबाधरूपयोग्यतायाः प्रामाण्यस्य चार्थसत्ताघटितत्वात्। अतो न व्यभिचार इति भावः। ननु योग्यताप्रामाण्ययोस्सत्यत्वेन तत्समसत्ताकबोध्यार्थयुक्तत्वेपि स्वाप्नवाक्यस्वरूपस्यैवाभावेन तत्समसत्ताकबोध्यार्थयुक्तत्वं नास्तीति पुनर्व्यभिचार इत्यत आह॥ शब्दस्वरूपमिति॥ तथाच मम मते साध्यस्यापि सत्त्वान्नव्यभिचार इतिभावः। ननु मद्रीत्या तावद्व्यभिचारः स्यादेवेत्यतः पूर्वं त्वया तत्र त्वद्रीत्या व्यभिचारे चोदिते तत्र साध्योपपादनं कृतं वस्तुतस्तु तत्र त्वन्मते हेतोरेवाभावान्नव्यभिचार इत्याह॥ त्व त्विति॥ प्रमाणशब्दत्वादित्यस्य शब्दत्वेन प्रमाणत्वादित्यर्थः। त्वन्मते तु स्वाप्नं देवतावाक्यं शब्दत्वेन न प्रमाणं सत्यपि शब्दत्वे प्रामाण्याभावात्। तथाहि। लौकिके पौरुषेयवाक्ये प्रामाण्यप्रयोजकत्वेन क्लृप्ताया आप्तेः स्वाप्नदेवतावाक्येऽभावात् तथा वेदवाक्ये प्रामाण्यप्रयोजकत्वेन क्लृप्तस्यापौरुषेयत्वस्याप्यभावात्। अतो हेतोरेवाभावान्नव्यभिचार इति भावः। तर्हि सदर्थकत्वं कथमिति पृच्छति ॥ किंत्विति॥ उत्तरमाह ॥ यादृच्छिकेति॥ भ्रांतप्रतारकवाक्यवद्यादृच्छिकसंवादि ततश्च "यज्जातीयानंतरं नियमेन कार्योत्पत्तिस्तदत्र साधनं विवक्षित"मिति वचनादेतादृशकरणत्वगर्भप्रमाकरणत्वरूपं प्रामाण्यं तत्र नास्तीति न व्यभिचार इत्यर्थः। अस्तु वा प्रामाण्यं तथापि तत् शब्दत्वेन न प्रमाणं किंतु लिंगत्वेनैवेत्यतोपि न व्यभिचार इत्याह॥ तादृशेति॥ अभिमतार्थसाधकस्वाप्नदेवतावाक्यजन्यज्ञानमित्यर्थः। तत्र दृष्टांत उपश्रुतिवदिति। अपभ्रष्टवाक्यवदित्यर्थः। यथा शकुनार्थं कस्मिंश्चिद्गृहे तंडुलान्स्थापयित्वा निलीनस्सन्नवस्थितस्तद्गृहस्थैः स्वगृहकृत्याद्यर्थं शब्दे प्रयुक्ते सति तं श्रुत्वा ततः स्वाभिमतार्थमनुमिमीते तत्र यथा तद्वाक्यं न शब्दत्वेन स्वाभिमतार्थे प्रमाणं किंतु लिंगतयैव तथा स्वाप्नदेवतावाक्यमपि लिंगत्वेनैव प्रमाणमित्यर्थः। तथाच तस्य प्रमाणत्वेप्यशब्दत्वान्न व्यभिचार इति भावः। ननु श्रुत्या योग्यतादीनां मिथ्यात्वबोधने शब्दबोध्यस्य शब्दस्वरूपयोग्यतादिस मसत्ताकत्वनियमात् श्रुतिबोध्यस्य सर्वमिथ्यात्वरूपार्थस्य तात्विकत्वासिद्धिरित्ययुक्तम्। उक्तनियमस्यान्यत्र गामानयेत्यादिवाक्ये सत्त्वेपि प्रकृतेऽभावात् योग्यतादेः श्रुतिबोध्यतात्विकमिथ्यात्वसमसत्ताकत्वे सत्यत्वप्राप्त्या तात्विकसर्वमिथ्यात्वश्रुतिविरोधादित्याशंक्य निषेधति ॥ नचेति॥ ॥ स्वर्गेति॥ यथा "स्वर्गकामो यजेते" त्यत्र सर्वेषां त्रिवर्णेतरेषामपि न यजनेऽधिकारोऽस्ति। किंत्वग्निश्च विद्याचाऽग्निविद्ये येषां स्त स्तेषामेव यागेऽधिकारः अग्नि विद्ययोश्चोपजीव्यत्वादग्निविद्ययोश्च त्रिवर्णेतरेषामभावान्न यागेऽधिकरइत्येवं स्वर्गकाम इति सामान्यतः श्रुतस्यापि अग्निविद्यावद्विषयकत्वेन संकोचः क्रियते तद्वदित्यर्थः।

षष्ठे प्रथमपादे विचारितम्। "चातुर्वर्ण्यमविशेषादि"त्यत्र अग्निहोत्रादिषु किं चतुर्वर्णानामधिकार उतापशूद्राणामिति संशये विधिवाक्येषु विशेषाश्रवणाच्चतुर्वर्णानामिति पूर्वःपक्ष; अग्निहोत्रादिकर्मणामग्निविद्यासापेक्षत्वादग्निविद्ययोश्चाधानोपनयनपूर्वकाध्ययनसाध्यत्वात्तयोश्च" "वसंते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं

(प्रकाशः)

शरदि वैश्य''मिति त्रिष्वेवदर्शनाच्छूद्रेष्वपितत्कल्पने मानाभावादपशूद्राणामेवाधिकार इति सिद्धांतः ॥ योग्यतादीति ॥ योग्यताद्यपेक्षया इतरत् द्वितीयं नास्तीत्यर्थपरत्वमित्यर्थः ॥ सृष्टयादीति ॥ सृष्टिवाक्यस्य यथा तव मते कल्पितसृष्टिविषयत्वं तथा द्वैतनिषेधवाक्यस्यापि कल्पितो यो द्वैतनिषेधस्तद्विषयत्वमस्तु। तथाच सति श्रुतिबोध्यार्थस्य योग्यतादिसमानमसत्ताकत्वसिद्धिरित्यर्थः ॥ अन्योन्याश्रयादिति ॥ शब्दस्वरूपादेस्तदर्थस्य च समसत्ताकत्वनियमत्यागे सति बाधकाभावे सिद्धे श्रुत्यर्थस्य सर्वमिथ्यात्वस्य तात्विकत्वसिद्धिस्तत्सिद्धौ च तद्बलादुक्तनियमत्याग इत्यन्योन्याश्रयादित्यर्थः। संगृह्णाति ॥ तस्मादिति ॥ तुल्यत्वात् तुल्यसत्ताकत्वात् शब्दस्वरूपं च ग्राह्यम्। न चेत् शब्दार्थतद्योग्यतयोः शब्दस्वरूपस्य च सत्यत्वाभावे ॥ वृषलोद्वाहेति ॥ वृषलोद्वाहे विहितमंत्रस्वरूपं तद्योग्यतादिकं चाऽसदेव अतः तत् न मानमित्यर्थः ॥ एवमिति ॥ यथा स्वरूपयोग्यतादेर्मिथ्यात्वबोधनाबोधनपक्षयोर्मिथ्यात्वश्रुत्यनुपपत्तिस्तथेत्यर्थः ॥ स्वव्याघात इति ॥ द्वितीयमात्रनिषेधकत्वांगीकारात् द्वितीयाभावमपि निषेधति चेत्तर्हि स्वेतरद्वितीयाभावनिषेधरूपस्य द्वितीयस्यैव प्राप्तत्वात्स्वव्याघात इत्यर्थः ॥ सर्वेति ॥ ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं न सिद्ध्यति। ब्रह्मव्यतिरिक्तस्य द्वितीयस्याभावरूपद्वितीयस्य निषेधाऽबोधनादित्यर्थः। त्रैकालिकनिषेधः कर्तुं शक्यत इति शेषः। तथात्वेऽसद्विलक्षणस्वरूपांगीकारविरोधः स्यादित्याशयः। निर्धर्मकस्येति हेतुगर्भम्। आत्मनः पारमार्थिकत्वरूपधर्माभावेपि न मिथ्यात्वम्। तद्वत्प्रपंचस्यापीत्यर्थः। किंच ''नेहनाने''ति श्रुत्या प्रत्यक्षसिद्धप्रपंचस्य न मिथ्यात्वं बोधयितुं शक्यं प्रत्यक्षविरोधादेव। अतः प्रत्यक्षसिद्धप्रपंचभिन्नस्यैव कस्यचित्प्रपंचस्य निषेधोस्तु न तु प्रत्यक्षसिद्धस्य। अत एतत्प्रपंचस्य सत्यत्वसिद्धिः। प्रत्यक्षविरोधो मया नाद्रियत इति चेन्न। तथात्वे ''तत्त्वमसी''त्यादौ प्रत्यक्षविरोधभीत्या तत्त्वंपदार्थविशिष्टैक्यपरत्वं विहाय चिन्मात्रैक्यपरत्वमंगीकृतं तन्नस्यादित्याह ॥ अपिचेति ॥ ॥ प्रत्यक्षेति ॥

''अविरुद्धविशेषणद्वयप्रभवत्वेपि विशिष्टयोर्द्वयोः ॥
घटते न यदैकता तदा सुतरां तद्विपरीतरूपयो''

रिति वचनादिति भावः ॥ अन्यथेति ॥ नेहनानेति श्रुत्याऽस्यैव प्रपंचस्य निषेधः क्रियते न च प्रत्यक्षविरोधः श्रुतिसिद्धसत्त्वनिषेधरूपमिथ्यात्वस्य तात्विकत्वात् प्रत्यक्षगृहीतस्य तत्सत्त्वस्यातात्विकत्वेन विरोधाभावादित्यंगीकार इत्यर्थः। निषेधात् सत्त्वनिषेधात्। नन्वसच्चेन्न प्रतीयेतेति ख्यात्यन्यथानुपपत्त्याऽसद्वैलक्षण्यस्य सिद्धत्वात्तद्विरोध इत्यत आह ॥ ख्यातीति ॥ तथाच श्रुत्यन्यथानुपपत्तिसिद्ध्योरप्यर्थयोस्तात्विकत्वातात्विकत्वविषियतया त्वन्मतेप्यविरोधः स्यादिति भावः ॥ इष्टापत्तेरिति ॥ नेहनानेति श्रुतेश्चैतन्यमात्रपरत्वेन मिथ्यात्वे तात्पर्याभावेन मिथ्यात्वासाधकत्वादिष्टापत्तिरिति भावः। तस्य चिन्मात्रस्य ॥ वैयर्थ्यादिति ॥ चिन्मात्रप्रतिपादकत्वांगीकारे श्रुतिवैयर्थ्यमेव स्यात् तस्य स्वप्रकाशत्वेन नित्यसिद्धत्वादिति भावः ॥ काकेति ॥ यथोपलक्षणस्य काकवद्गृहमिति काकवत्त्वप्रकारकज्ञानहेतुत्वं तथेत्यर्थः। किंच द्वितीयाभावरूपोपलक्षणेनोपलक्ष्यं किं शुद्धस्वरूपमात्रं विशिष्टं वा शुद्धगतं धर्मांतरं वेति विकल्प्याद्यं निराह ॥ चिन्मात्रस्येति ॥ उपलक्षणं विनैव स्वप्रकाशत्वेन तस्य नित्यसिद्धत्वादिति भावः। द्वितीयं निराचष्टे ॥ अन्यस्येति ॥ शुद्धात्मन एव मुमुक्षुज्ञेयत्वेन विशिष्टस्य

(प्रकाशः)

मुमुक्षुज्ञेयत्वाच्छास्त्रेणोपलक्षणद्वारापि शुद्धस्यैव बोधनीयत्वान्नविशिष्टस्योपलक्ष्यत्वमित्यर्थः। तृतीयं निराकरोति ॥ काकेनेति॥ अन्यस्य ब्रह्मगतविशेषांतरस्य तस्य द्वितीयाभावस्य ॥ अद्वैतवाक्यस्येति॥ द्वितीयाभावबोधकस्येत्यर्थः ॥ तत्रेति॥ मिथ्याभूतद्वितीयाभावबोधकत्वेपि द्वितीयाभावे तात्पर्याभावान्नातत्वावेदकत्वमित्यर्थः। तत्वावेदकत्वं नाम तात्पर्येण तद्बोधकत्वं तन्नांगीकृतमिति भावः ॥ आद्येति॥ मिथ्याभूतद्वितीयाभावबोधकत्वेपि तत्र तात्पर्याभावे चिन्मात्रबोधकत्वापत्त्या तत्रैव तात्पर्यप्राप्तेः किंचेत्यादिना विकल्पितपक्षेषु आद्यपक्षांतर्भावप्राप्त्या तत्र च नाद्य इत्यादिना दूषणद्वयमुक्तमेवेति भावः ॥ अतात्पर्यमिति॥ नेहनानेति श्रुतेर्द्वितीयाभावेऽतात्पर्यमित्यर्थः ॥ तदिति॥ मानांतरेत्यर्थः ॥ आत्मवपोत्खननादाविति॥ ''प्रजापतिरात्मनो वपामुदखिददि'' त्यादौ आंतरधातुविशेषभूताया वपायाः प्रजापतिना स्वशरीरान्निष्कासनं कृतमित्येवं रूपे वाक्यार्थे तात्पर्यं नास्ति। कुतः प्रजापतेरधुनापि जीवनग्राहकमानविरोधात् वपोत्खनने च मरणस्यैव प्राप्त्या जीवनस्यैवाऽनुपपत्तेरिति भावः।

॥ यथाग्रहैकत्वादाविति॥ तृतीयाध्याये प्रथमपादे चिंतितं ''एकत्वयुक्तमेकस्य श्रुतिसंयोगादि''त्यत्र ज्योतिष्टोमे श्रूयते ''दशापवित्रेण ग्रहं संमार्ष्टीति''। दशापवित्रं वासःखंडः। ग्रहं यज्ञपात्रम्। तत्र संशयः ग्रहैकत्वं विवक्षितं न वेति श्रुतस्याविवक्षायां कारणाभावाद्विवक्षितमेवैकत्वमित्येकमेव ग्रहं संमार्ज्यादित्यर्थ इति पूर्वपक्षः। सिद्धांतस्तु। ग्रहैकत्वं विवक्षितं चेत्तर्हि संमार्गवद्विधेयं वा स्याद्ग्रहवदुद्देश्यं वा ग्रहत्वव द्विशेषणं वा। नाद्यः। ग्रहमुद्दिश्य तत्रैकत्वसंमार्गयोर्द्वयोर्विधाने वाक्यभेदापत्तेः। न द्वितीयः। तथात्वे ग्रहमेकत्वं चोद्दिश्य संमार्गो विधीयत इति वाक्यभेद एव ग्रहैकत्वस्य संमार्गायोगेन वाक्यस्य बाधितार्थत्वप्रसंगाच्च। न तृतीयः। एकत्वविशिष्टं ग्रहमुद्दिश्य संमार्गो विधीयत इति स्यात्। तन्न संभवति। विशिष्टस्य यद्भवति तद्विशेषणस्यापीति न्यायेनैकत्वेपि संमार्गान्वयापत्त्या बाधापत्तेः ''शोधनीयाग्रहास्सर्वे वासः खंडेन चर्त्विजे'' तिवाक्यांतरविरोधाच्च। अत एकत्वमविवक्षितमिति द्वादशापि ग्रहाः संमार्जनीया इति। एवं च ग्रहैकत्वस्येव ब्रह्मणि द्वितीयाभावस्य श्रुतत्वेपि विशेषणत्वेन तत्र श्रुतेस्तात्पर्यं नास्तीत्यर्थः॥

त्वयैवेति॥ अद्वैतश्रुतेरननुवादकत्वं वदतेत्यर्थः ॥ विरोधीति॥ द्वितीयाभावबोधिकाया नेहनानेति श्रुतेरित्यर्थः ॥ तस्यैवेति॥ द्वैतग्राहिप्रत्यक्षादेरेव द्वितीयाभावबोधकनेहनानेति श्रुतिबाध्यत्वांगीकारेण दुर्बलतया तद्विरोधकत्वं न संभवतीत्यर्थः ॥ नापीति॥ ''नेहनाने''ति श्रुतेर्द्वितीयाभावे तात्पर्यांगीकारे द्वितीयाभावरूपद्वितीयस्यैव प्राप्तेस्तत्र चाद्वैतप्रतिपादकं यन्नेहनानेति वाक्यभिन्नं वाक्यं ''एको द्रष्टाऽद्वैतो भवती'' त्यादिरूपं तदेव विरोधिभूतं मानं भविष्यतीति तद्विरोधाद्द्वितीयाभावे न तात्पर्यमित्यर्थः ॥ तस्येति॥ नेहनानेति श्रुतेर्द्वितीयाभाव-रूपद्वितीयप्रतिपादकत्वेप्यद्वैतवाक्यांतरविरोधो नास्ति। तस्यापि चैतन्यमात्रपरत्वेन द्वितीयनिषेधेऽतात्पर्यादित्यर्थः। तदेवोपपादयति ॥ नहीति॥ अत्र विशेष्यविषयेण ''अग्निहोत्रं जुहोती'' तिवाक्येन विशिष्टविषयं ''दध्ना जुहोती''तिवाक्यं न विरुद्धमिति योज्यम्। अग्निहोत्रवाक्येन धर्मिभूताग्निहोत्राख्यविशेष्यमात्रप्रतिपादकेन दध्याख्यगुणविशिष्टाग्निहोत्रप्रतिपादकस्य वाक्यस्य विरोधो नास्ति। देवदत्तो दंडी देवदत्त इत्यनयोर्विरोधादर्शनात् तथा नेहनानेति वाक्यस्य द्वितीयाभावविशिष्टचैतन्यप्रतिपादकत्वे विशेष्यभूतचिन्मात्रप्रतिपादकाद्वैतवाक्यांतरेण विरोधो नास्तीत्यर्थः। यथास्थितयोजनायां विशेष्यविषयकविशिष्टविषयकयोर्वाक्ययोर्न विरोध इत्यत्रैवायं दृष्टांत

(प्रकाशः)

इति द्रष्टव्यम्। तेन दृष्टांतदार्ष्टांतिकयोर्व्यत्यासशंकानवकाश इति संप्रदायविदः ॥ द्वितीयेति॥ अद्वैतवाक्यांतरस्य चैतन्ये द्वितीयाभावेपि तात्पर्यांगीकारे द्वितीयाभावविशिष्टचैतन्य प्रतिपादकत्वप्राप्त्या तेन द्वितीया-भावविशिष्टचैतन्यप्रतिपादकनेहनानेति वाक्यस्य न विरोधः एकविषयकत्वादिति भावः। ननु नेहनानेति श्रुतेर्द्वितीयाभावेऽतात्पर्यं मानांतराप्राप्त्या मानांतरविरोधाद्वा नोच्यते किं नाम स्वविरोधादेवत्याशंकते ॥ नन्विति॥ यथा घटो नास्तीत्यस्य घटनिषेधकरूपत्वेन घटाभावविधिरूपत्वं एवं नेहनानेतिवाक्येन द्वितीयमात्रनिषेधकेन द्वितीयाभावो विहितः। पुनः स्तमपि निषेधति। कुतः द्वितीयाभावस्यैव द्वितीयतया प्राप्तेः अस्य च वाक्यस्य द्वितीयमात्रनिषेधकत्वादतस्स्वविहितद्वितीयाभावनिषेधकत्वेन स्वविरोधाद्वितीयाभावे न तात्पर्यमित्यर्थः। अतात्पर्यहेतुभूतः स्वविरोधो यथा नास्ति तथा वाक्यार्थो वर्ण्यतामित्याह ॥ निषेधस्येति॥ नेहनानेति वाक्यस्य स्वविहितो यो निषेधो द्वितीयाभावरूपस्तदितरद्वितीयमात्रनिषेधकत्वमस्तु तथा चैवं स्वविहितेतरनिषेधकत्वेन श्रुतेः संकोचोपपत्तेः क्वास्ति विरोधः येनातात्पर्यं स्यादित्यर्थः ॥ अन्यथेति॥ निषेधस्य विहितेतरविषयकत्वमनंगीकृत्य द्वितीयत्वाद्विहितमपि निषेधतीति विहितविषयकत्वस्याप्यंगीकार इत्यर्थः ॥ क्ङितिचेति॥ गिति‌किति‌ङितिच प्रत्यये परे तन्निमित्तकगुणवृद्धी न स्त इति सुतिङ्कृत्तद्धितसाधारणो यः कित्प्रत्ययस्तन्निमित्तकगुणवृद्ध्योः सामान्येन निषेधः कृतः। अनंतरं ''कितिच'' किति तद्धिते परे वृद्धिः स्यादिति विशेषविधिः कृतः। तथाच ''क्ङितिचे''ति साधारणकिन्निमित्तकवृद्धिप्रतिषेधोपि तद्धितरूपकिद्विशेषनिमित्तकां किति चेति सूत्रविहितां वृद्धिमपि प्रतिषेधेत्। किति चेति विहिततद्धितकिन्निमित्तकवृद्धेरपि किन्निमित्तकत्वात्। अतो विशेषसूत्रविहिततद्धितकिन्नि-मित्तकवृद्धिव्यतिरिक्तवृद्धिप्रतिषेधकत्वमेव क्ङितिचेति सूत्रस्यांगीकृतं वैयाकरणैस्तद्वदिहापीत्यर्थः। किद्विशेषः तद्धितकिद्रूपः ॥ हिंसामिति॥ ''अग्नीषोमीयं पशुमालभेते'' ति वाक्यविहितामित्यर्थः ॥ सदेवेति॥ ''सदेव सोम्येदमग्र आसीदि''ति वाक्येऽस्तित्वेन विहितमित्यर्थः। ननू दाहृतस्थलेषु विधायकवाक्यांतर-सद्भावाद्विहितेतरपरत्वम्। न ह्यत्र प्रकृते द्वितीयाभावविधायकं वाक्यांतरमस्ति। येन विहितेतरपरत्वं स्यात् अतः स्वेनैव विहित इति वाच्यम्। तथाच स्वविहितस्यापि द्वितीयाभावस्य द्वितीयत्वात्स्वेनैव निषेधः प्राप्त एवेत्यत आह ॥ स्वविरोधोहीति॥ वाक्यांतरोपस्थितिविलंबेन विलंबोपस्थितिकाद्वाक्यांतरविरोधादपि शीघ्रोपस्थितिकतया स्वाविरोधस्य यत्नेन परिहरणीयत्वं द्रष्टव्यम्। तत्परिहारस्तु स्वविहितद्वितीयनिषेधेतर-द्वितीयनिषेधकत्वेनैव कार्य इति अतात्पर्यहेतुः स्वविरोधो नास्तीति भावः। ननु यथा वाक्यांतरतात्पर्यगोचरविरुद्धार्थपरत्व एव वाक्यांतरविरोधो दृष्टः तथा एवं स्वस्यापि स्वतात्पर्यविषयीभूतनिषेध एव स्वविरोधः। नचैवं किंतु द्वितीयाभावे वाक्यस्य न तात्पर्यम्। तथाच तस्य द्वितीयत्वान्निषेधेपि न विरोधः। एवंच विहितेतरपरत्वेन भवदुक्तरीत्या विरोधः कस्मात्परिहरणीय इति तटस्थः शंकते ॥ अद्वैतेति॥ स्वविरोधादेवाऽतात्पर्यमिति परो ब्रूते। तत्र स्वविरोधमुपपाद्याऽतात्पर्येणैव स्वविरोधाभावोक्तावन्योन्याश्रयः स्यादित्याह ॥ द्वितीयाभावस्येति॥ स्वेन ''नेहनाने''ति वाक्येन। निषेधे सति द्वितीयत्वान्निषेधे सति तत्र द्वितीयाभावे निषेधः द्वितीयाभावनिषेधः शब्देन प्रतिपादितस्य शब्देन पुनः निषेधे विरोधकथैवोच्छिद्येतेत्याह ॥ अपिचेति॥ मातृपदप्रापितं मातृत्वं मूकोहमिति वचनक्रियाप्रापितवचनक्रियाकर्तृत्वमपि वंध्यामूकपदाभ्यामेव प्रतिषिध्यते इति वक्तुं शक्यत्वेन स्ववचनस्वक्रियाविरोधो न स्यादित्यर्थः।

(प्रकाशः)

शब्दतः प्राप्तस्य पुनः शब्देन प्रतिषेधेऽतिप्रसंगांतरमाह ॥षोडशीति॥ ''अतिरात्रे षोडशिनं गृह्णाति'' ''नातिरात्रे षोडशिनं गृह्णाती''त्यत्र विकल्प आश्रितः। अतिरात्रे षोडशिग्रहणं कर्तव्यं नवेति स च विकल्पोष्टदोषयुक्तः अत एव एतादृशविकल्पाश्रयणं न कर्तव्यं किंनाम शब्दतः प्राप्तमतिरात्रे षोडशिग्रहणं नातिरात्रे षोडशिनमित्यनेननिषिध्यत इति स्यादित्यर्थः। अष्टौ दोषाश्चैते यथा ''यवैर्यजेत'' ''व्रीहिभिर्यजेते'' त्यत्र यदा व्रीहिवाक्योपादानं यववाक्यत्यागस्तदायववाक्ये प्रतीतप्रामाण्यत्यागः अप्रामाण्यस्वीकार इति दोष द्वयं पुनर्यववाक्यस्वीकारे परित्यक्तप्रामाण्यस्वीकारः। स्वीकृताप्रामाण्यत्याग इति दोष द्वयम्। एवं मिलित्वा यववाक्यसंबंधिदोषचतुष्टयम्। यदा यववाक्यस्वीकारो व्रीहिवाक्यत्यागस्तदा व्रीहिवाक्ये प्रतीतप्रामाण्य-त्यागोऽप्रामाण्यस्वीकार इति दोषद्वयं पुनर्व्रीहिवाक्यस्वीकारे परित्यक्तप्रामाण्यस्वीकारः स्वीकृताऽप्रामाण्यत्याग इति दोषद्वयम्। एवं मिलित्वा व्रीहिवाक्यसंबधिदोष चतुष्टयमित्येवमष्टदोषदुष्टो विकल्पो ग्रहणाग्रहणवाक्येपि योज्यः।

एतावता प्रबंधेन मानांतरप्राप्त्या तद्विरोधाद्वा स्वविरोधाद्वाऽतात्पर्यमित्येतदयुक्तमित्युक्तम् इदानीं प्रकारांतरेणातात्पर्यं भविष्यतीत्याशंक्य निराकरोति ॥प्रतियोगिन इति॥ प्रतियोगिभूतस्य द्वितीयस्य मिथ्यात्वाद्द्वितीयाभावोपि मिथ्या। प्रागभावादिवत्। अतो द्वितीयाभावे श्रुतेर्न तात्पर्यमित्येतन्निरस्तम्। प्रतियोगितदभावयोर्भिन्नसत्ताकत्वस्यावश्यकत्वेन प्रतियोगिनो मिथ्यात्वे तदभावस्यापि मिथ्यात्वायोगात्। अन्यथाऽविद्यानिवृत्तेः पंचमप्रकारताभ्युपगमवैयर्थ्यादिति भावः। स्वेनैव निषिद्धस्य द्वितीयाभावस्य पुनर्विशेषणत्वादिनोपादानं न युक्तमित्याह ॥किंचेति॥ तत्र दृष्टांतो द्वितीयस्येवेति। यथा श्रुत्या निषिद्धं द्वितीयं पुनर्ब्रह्मविशेषणत्वादिना श्रुतिर्नोपादत्त एवमित्यर्थः ॥अखंडार्थेति॥ विधेयधर्मांतर-सद्भावेऽखंडार्थत्वभंगादित्यर्थः। ''सिद्धं धर्मिणमुद्दिश्यसाध्यधर्मो विधीयते'' इत्युक्तत्वेन उद्देश्यत्वे सिद्धत्वेन भाव्यम्। तन्न संभवति। शास्त्रैकसमधिगम्यस्य मानांतराप्राप्तेरित्याह ॥विशेष्यस्येति ॥॥अविवक्षेति॥ अतात्पर्येत्यर्थः ॥निर्ज्ञतेति॥ नितरां ज्ञातस्य सम्यङ्निर्णीतस्वरूपस्य यद्विशेषणं यद्विशेषणं विनाप्युद्देश्यसिद्धिरिति यावत्। तद्विशेषणं न विवक्षितं यथा ग्रहैकत्वं तद्वदिहाप्यशनायाद्यतीतं सत्यज्ञानादि रूपं यद्ब्रह्मस्वरूपं तत्र निर्ज्ञातं अन्यथा श्रवणादिवैयर्थ्यात् अतस्तद्विशेषणमद्वितीयत्वादिकं विवक्षितमेव श्रुतितात्पर्य-विषयीभूतमेवेत्यर्थः। तथाच अद्वितीयत्वादिकं न श्रुत्या विवक्षितं तात्पर्यविषयीभूत न भवतीति यावत्। उद्देश्यविशेषणत्वात्। ग्रहैकत्ववदित्यनुमाने निर्ज्ञातविशेषणत्वमुपाधिरित्युक्तं भवति। द्वितीयाभावस्य मुमुक्षुजिज्ञासितत्वान्मोक्षपरेण शास्त्रेणावश्यं प्रतिपादनीयत्वान्नाविवक्षितत्वमित्याह ॥कर्मकांडादिति ॥॥तत्प्रकारेति॥ धर्मप्रकारेत्यर्थः। तत्प्रकारस्य ब्रह्मप्रकारस्य ॥शब्दादिति॥ यथा ''प्रजापतिरात्मनो वपामुदखिददि''ति शब्दात् प्रतीतमपि स्वं वपोत्खननादिकं प्रजापतिजीवनग्राहकप्रमाणविरोधेन श्रुतेस्तत्र तात्पर्याभावाद्व्यावहारिकमपि न सिध्यति किंतु प्रातिभासिकमेव। एवं नेहनानेति वाक्यात्प्रतीतोपि द्वितीयाभावो द्वैतमानविरोधेन श्रुतेस्तत्र तात्पर्याभावाद्व्यावहारिको न सिध्येत् आत्मवपोत्खननवत्प्रातिभासिक एव स्यादिति भावः। ननु द्वितीयाभावे महातात्पर्याभावेप्यवांतरतात्पर्यसद्भावात्तत्सिद्धिरित्याशंकते ॥अवांतरेति ॥॥उपक्रम इति॥ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया उपक्रमात् ''ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा

(प्रकाशः)

तत्त्वमसी''त्युपसंहारात्। तथाच द्वितीयाभावस्योपक्रमोपसंहारयोः श्रुतत्वेन तत्प्रकरणप्रतिपाद्यत्वादित्यर्थः ॥फलवत्त्वेति॥ त्वन्मते सुषुप्तौ निष्प्रपंचतायाः पुरुषार्थत्वादित्यर्थः ॥अन्यशेषत्वेति॥ ब्रह्मविशेषणत्वादिना प्रतिपादनेऽप्राधान्यप्राप्त्या प्राकरणिकत्वफलवत्त्वाभ्यां प्रतीतं द्वितीयाभावस्य महातात्पर्यविषयत्वेन प्राधान्यं न स्यादित्यर्थः। अन्यशेषत्वमंगीकृत्याप्याह ॥प्रमाणेति॥ तथाच द्वितीयाभावस्यात्मवत्तात्विकसत्त्वमवर्जनीय-मेवेत्यर्थः। नन्ववांतरतात्पर्यविषयत्वेनावांतरसत्त्वं यद्व्यावहारिकत्वरूपं तदेव द्वितीय इव द्वितीयाभावेप्यायाति न तु तात्विकं सत्त्वमित्यत आह ॥अवांतरेति ॥॥श्रुत्येति॥ प्रत्यक्षगृहीतप्रपंचस्य श्रुतिबोध्यस्य तदभावस्य च व्यावहारिकसत्त्वोपेततया समसत्ताकार्थावगाहिनोः श्रुतिप्रत्यक्षयोर्न बाध्यबाधकभाव इत्यर्थः। तदेवोपपादयति ॥नहीति॥ तत्राधिष्ठाने। अप्रमिते अतात्विके आरोपितं अतात्विकम्। लोके रजताभावस्य शुक्तौ तात्विकत्वाद्रजतं शुक्तावारोपितमित्युच्यते एवं द्वितीयाभावो ब्रह्मणि यदि तात्विकः स्यात् तदैव द्वितीयस्याऽतात्विकत्वं स्यात्। नचैवं त्वयोच्यते द्वितीयतदभावयोः समसत्ताकत्वांगीकारात्। अतो न तत्प्रतिपादकप्रत्यक्षश्रुत्योर्बाध्यबाधकभाव इत्यर्थः। विशेषणतयोपलक्षणतया वा श्रुतिबोध्यस्य द्वितीयाभावस्य सत्त्वेऽद्वैतहानिः। मिथ्यात्वे तत्प्रतिपादक-श्रुतेरतत्वावेदकत्वमित्युक्तमुपसंहरति ॥तस्मादिति॥

॥सामान्यतोमिथ्यात्वश्रुतिनिरासविवरणम्॥

## ४. द्वैतप्रत्यक्षस्य अद्वैतश्रुतिबाधकत्वखण्डनभङ्गः

**किं च न तावदेकमेवाद्वितीयमित्यादिश्रुतिस्तत्र मानम्, शब्दस्य हि नापातप्रतीत एवार्थः, 'आज्यैः स्तुवते'', ''आकाशादेव समुत्पद्यन्त'' इत्यादेरपि चित्राज्याधि-करणाकाशाधिकरणपूर्वपक्षरीत्या घृतगगनाद्यर्थत्वस्य ''अन्धो मणिमविंदत्'' ''मृदब्रवीदि''त्यादेरपि प्रतीतार्थपरत्वस्य च प्रसंगेन मीमांसावैयर्थ्यात्। ''बिभेत्यल्प-श्रुताद्वेद'' इति स्मृतेश्च ''कश्छन्दसां योगमावेद धीर'' इति श्रुत्या च स्वार्थस्य गहनत्वोक्तेश्च। किं तु मानान्तरेण पूर्वोत्तरेण चाऽविरुद्धः। उक्तं हि ''शास्त्रं हि शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्'' – इत्यत्र वार्तिके–**

**असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ।**
**ताद्रूप्येण परिच्छेदस्तद्विपर्ययतोऽपि च ॥ इति ।**
**विषयाविषयौ ज्ञात्वा तेनोत्सर्गापवादयोः ।**
**बाधाबाधौ विवेक्तव्यौ न तु सामान्यदर्शनात् ॥**

अन्य एवैकदेशेन शास्त्रस्याऽर्थः प्रतीयते ।
अन्यश्च परिपूर्णेन समस्तांगोपसंहृतौ ॥ इति च

उक्तं च–

विरुद्धवत्प्रतीयन्ते आगमा यत्र ये मिथः ।
तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यते ॥ इति ।
अत्र च प्रत्यक्षादिविरोधः स्पष्टः।

अत्रोक्तं खण्डने– प्रत्यक्षं नियतविषयं तथा च घटपटौ भिन्नाविति प्रत्यक्षज्ञानेन बाधकत्वेनाभिमतात् स्वस्माद् बाध्यत्वेनाभिमतं श्रौतमैक्यज्ञानं भिन्नमित्यग्रहणात्तत्र लब्धपदा ''सर्वं खल्विदं ब्रह्म'' त्यात्मैक्यश्रुतिस्तयोस्तावदैक्यं गृह्णाति। तथा च प्रत्यक्षधीः स्वाभिन्नमैक्यज्ञानं न बाधते। एवं च निर्बाधा श्रुतिः सर्वाद्वैते पर्यवश्यति। न च बाध्यबाधकधियोर्ज्ञानान्तरेण भेदग्रहः, अनवस्थाभयाद्यत्र बुद्धिपरम्पराविच्छेदस्तत्रैव चरमज्ञाने श्रुतेरवकाशात्। तदुक्तम्–

सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा ।
निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥ इति ।

तन्न, प्रत्यक्षादिप्रसक्तो हि भेदः 'नेह नानेत्यादिश्रुत्या' निषेध्यः, अप्रसक्तप्रतिषेधायोगात्। तथा च यत्र यत्राद्वैतश्रुतिः स्थिष्ठासति तत्र-तत्र प्रागेव प्रत्यक्षादिना भेदो ग्राह्य इति कथं यामिकगृहे चोर इव श्रुतिस्तत्र तिष्ठेत्? एवं च–

प्रत्यक्षाप्रसक्तं चेदप्रसक्तनिषेधता ।
श्रुतेः स्यात्तत्प्रवृत्तं चेत्तद्बाधः सुस्थिरः श्रुतेः ॥

किं च चरमधीः प्रत्यक्षाद्यसिद्धा चेत् तदभेदः श्रुतेरपि दुर्ग्रहः। न हि श्रुतेर्घटादौ तदभेदे च तात्पर्यं घटादेः प्राप्तत्वात्, श्रौतस्य किंचनादिशब्दस्य घटादावनुवादकता, चरमबुद्ध्यादौ तु विधायकतेत्युक्तौ च वैरूप्यापातात्। अथ चरमधीः प्रत्यक्षादिसिद्धा तर्हि तद्भेदोऽपि तेनैव सिद्ध इति नाद्वैतश्रुतेरवकाशः। श्रुत्यापि हि बाध्यबाधकत्वेनाभिमतयोरितरभिन्नत्वेन बुद्धिस्थयोरेवाभेदो बोध्यः। यस्य कस्यचिद्येन केनचिदभेदबोधने बाधकस्य बाध्याभेदासिद्धेः। एवं चोभयतःपाशा रज्जुः।

किं चाऽद्वैतश्रुतेः किं सर्वमिथ्यात्वे तात्पर्यम्? अभेदे वा? भेदनिषेधे वा? नाद्यः, चरमज्ञानस्य वास्तवे मिथ्यात्वे प्रमितेऽप्यद्वैतज्ञानवद्व्यावहारिकसतः प्रमात्वसम्भवेन श्रुत्या तद्विषयापहारायोगात्। अन्यथा इदं वा अग्रे नैव किं चनासीदिति श्रुतिर्वा विमतमसत् प्रतीतत्वादित्याद्यनुमानं वा आदौ स्वबोधकस्य सत्यज्ञानादि-वाक्यस्यासत्त्वं गृहीत्वा निर्बाधं सत् सर्वासत्त्वं बोधयेत्। नान्त्यौ, अन्ततो द्वैतप्रत्यक्षबाधकस्याद्वैतज्ञानस्य बाध्येन द्वैतज्ञानेन ऐक्यवाक्यस्य भेदवाक्येन ऐक्यस्य च भेदेन परमार्थतः अभेदेऽपि भेदाभावेऽपि वा व्यावहारिकभेदमात्रेण द्वैतज्ञान-बाधकत्ववद् बाधकस्य प्रत्यक्षज्ञानस्यापि बाध्येन श्रौतज्ञानेन परमार्थतः अभेदेऽपि भेदाभावेऽपि वा व्यावहारिकभेदमात्रेणाद्वैतधीबाधकत्वोपपत्तेः। अन्यथा "आपो वा इदं सर्व"मिति श्रुतिर्वा विमतं जलाभिन्नं प्रतीतत्वाज्जलवदित्यनुमानं वा आदौ स्वबाधकस्य जलाभेदं गृहीत्वा निर्बाधं सत् प्रसिद्धजलाभेदं बोधयेत्। एवं च यत्र भेदः प्रत्यक्षसिद्धः, न तत्राऽभेदः कदापि श्रुतितस्सुग्रहः, अन्यत्र कामं गृह्यतां न नो हानिः। अपि चाद्ये सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यमयुक्तम्। अन्त्ययोरिदं रूप्यं गौरोऽहमितिभ्रमाणां प्रमात्वं स्यात्। घटज्ञानेनैव तदभिन्नस्य ब्रह्मतदभेदादेस्सर्वस्यापि वस्तुतो ज्ञातत्वेन सार्वज्ञ्यं वेदान्तानां वैयर्थ्यं सद्यो मोक्षश्च स्यात्। सुखदुःखबंधमोक्षभेदाभेददूषणभूषणजयपराजयभ्रान्तिप्रमादेरपि वस्तुतोऽ-भिन्नत्वेन सर्वसंकरापत्या स्वक्रियास्वन्यायस्ववचनविरोधाश्च स्युः। आविद्यकभेदेन सर्वस्यापि व्यवस्थेति चेन्न, तस्याप्यनाविद्यकब्रह्माभिन्नत्वेनाविद्यकत्वायोगात्। काल्पनिकभेदेन वास्तवाभेदेन वास्तवाभेदकार्यप्रतिबंधायोगाच्च। मोक्षे आविद्यकभेदा-भावेनानन्दस्य दुःखात्मकत्वेनापुमर्थत्वापाताच्च। सुखादौ निरुपाधिकप्रतिकूलादि-रूपदुःखाद्यसाधारणस्वभावाभावेऽपि तदभेदे पारिभाषिकोऽयमभेदो भेदे पर्यवस्येत्। आसाधारणरूपभेदमुपेत्य सद्रूपमात्रभेदनिषेधेत्विष्टापत्तिरप्रसक्तप्रतिषेधश्च। किं च घटपटौ भिन्नावितिज्ञानं स्वस्याद्वैतज्ञानादिना भेदं विनानुपपत्तेस्तमाक्षिपतीति नाद्वयश्रुतेरवकाशः।

यच्चोक्तं इयमर्थापत्तिर्न स्वविषयेति सैव द्वारमद्वयश्रुतेः। तदुक्तम्—

आद्यधीवेद्यभेदीयाप्यन्यथानुपपन्नता ।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम् ।। इति ।

तन्न, अर्थापत्तेरितरस्माद् भेदाभावे त्वदुक्तरीत्या घटपटभेदासिद्ध्या तद्भेदस्यापि घटपटभेदोपपादकत्वेनाऽर्थापत्तिविषयत्वात्। उपपादकत्वं ह्यर्थापत्तिविषयत्वे तंत्रम्, न त्वर्थापत्यसंबंधित्वम्। अन्यथा दृग्दृश्यसंबंधान्यथानुपपत्तिर्ज्ञाननिवर्त्यत्वान्यथानुपपत्तिश्च स्वमिथ्यात्वविषया न स्यात्। नेह नानेति ब्रह्मणि भेदमात्रनिषेधान्यथानुपपत्तिश्च स्वाभेदविषया न स्यात्। न हि सर्वं सर्वस्मादभिन्नमिति काचिच्छ्रुतिरस्ति। अस्ति चेत् सापि स्वाभेदविषया न स्यात्। तथा च तत्रार्थापत्त्यंतरं श्रुत्यन्तरं च वाच्यमिति तवाप्यनवस्था स्यात्। एवं च–

अर्थापत्तिस्स्वकीयं च भेदं गृह्णाति तं विना ।
अयुक्तेस्तव दृग्दृश्यसंबंधानुपपत्तिवत् ॥

कथं च मत्पक्षेऽनवस्था? घटतद्धीभेदग्राहिणा स्वप्रकाशेन साक्षिणा स्वस्मिन्नितर-भेदस्यापि प्रकाशात्। अन्यथा स्वस्य घटादिभ्यो भेदसंशयादिः स्यात्। तस्मात्सामान्यविषयश्रुतेर्विशेषविषयेण प्रत्यक्षेणाहवनीयशास्त्रस्य पदशास्त्रेणेव संकोच एव न्याय्यः, न तु प्रत्यक्षबाधकता। अन्यथा नेति नेतीत्यनियतविषयभेदश्रुतिः सर्वं सर्वस्माद्भिन्नमिति मद्वाक्यं वा अद्वैतवाक्यवत् तज्ज्ञानतद्विषयाणां तेभ्यो भेदमादौ गृहीत्वा निर्बाधं सत् सर्वभेदे पर्यवस्यतीति स्यात्।

किं च शब्दबुद्ध्योर्विरम्य व्यापारायोगान्न क्रमेणाभेदग्रहो युक्तः। ननु युगपदेव श्रुत्या सर्वाद्वैतविषयतया जातायां बुद्धावस्माकं तत्तद्विषयेषु प्रामाण्यबुद्धय एव क्रमिका इति चेन्मैवम्, ब्रह्मणि सर्वाभेदस्यैव श्रुतत्वात्तदन्यथानुपपत्त्या च घटपटाद्यभेदस्य कल्प्यत्वात्। प्रथमोपस्थिते भेदप्रसक्तिमति च कल्पकाभेद एव प्रथमं प्रामाण्यधीर्न्याय्या। स एव च प्रत्यक्षबाधित इति कथं चरमबुद्धितद्विषयाद्यभेदकल्पना। येन तद्द्वारा सर्वाभेदः सिद्ध्येदिति दुर्वारः प्रत्यक्षबाधः। विस्तरस्तु खंडनखंडने द्रष्टव्यः। तस्मात्प्रत्यक्षबाधात् श्रुतयोऽन्यपरा इति। द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखंडनभंगः।

## अद्वैतसिद्धिः

ननु— आपातप्रतिपन्न एव न तावत् श्रुत्यर्थः, 'कश्छन्दसां योगमावेद धीर' इति श्रुत्या 'बिभेत्यल्पश्रुताद्वेद' इति स्मृत्या च वेदार्थस्यातिगहनतोक्तेः,

(अद्वैतसिद्धिः)

मीमांसावैयर्थ्यप्रसङ्गाच्च, किन्तु मानान्तरेण पूर्वोत्तरेण चाविरुद्ध एवार्थः, अविरोधग्रहणार्थं च मीमांसासाफल्यम्, अत एव 'आज्यैः स्तुवते' 'आकाशादेव समुत्पद्यन्त' इत्यादावापातप्रतीतघृतगगनादिपरित्यागेनाज्याकाशादिपदानां सामपरमात्माद्यर्थत्वं स्थापितं पूर्वोत्तरमीमांसयोश्चित्राकाशाद्यधिकरणेषु, अन्यथा तत्तत्पूर्वपक्षाभ्युपगमापत्तेः, तथा चोक्तं वार्तिककारैः शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमित्यत्र–

असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ।<br>
ताद्रूप्येण परिच्छेदस्तद्विपर्ययतोऽपि च ॥

विषयाविषयौ ज्ञात्वा तेनोत्सर्गापवादयोः ।<br>
बाधाबाधौ विवेक्तव्यौ न तु सामान्यदर्शनात् ॥<br>
अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते ।<br>
अन्यस्तु परिपूर्णेन समस्ताङ्गोपसंहृतौ ॥ इति ।

अन्यत्राप्युक्तम्–

विरुद्धवत्प्रतीयन्त आगमा यत्र ये मिथः ।<br>
तत्र दृष्टानुसारेण तेषामर्था विवक्षिताः ॥ इति ।

तथा च प्रत्यक्षादिविरोधात् पूर्वोत्तरविरोधाच्च नाद्वैतपरत्वमेकमेवेत्यादिवाक्यानामिति चेन्न। द्वैतप्रत्यक्षस्य चन्द्रप्रादेशिकत्वप्रत्यक्षवत् संभाविताप्रामाण्यतया अद्वैतश्रुति-विरोधित्वाभावात्। यथा च श्रुत्या प्रत्यक्षं बाध्यते, तथा प्रपञ्चितमधस्तात्। किं च प्रत्यक्षं नियतविषयम्, श्रुतिः सर्वविषया, तथा च यत्र प्रत्यक्षेण भेदो न गृहीतः, तत्रैवाभेदश्रुतेरवकाशः। ननु ययोरैक्यं श्रुत्या बोध्यते तयोर्भेदः प्रसक्तो न वा? नान्त्यः, अप्रसक्तप्रतिषेधापातात्, नाद्यः, प्रसञ्जकप्रमाणविरोधेनैक्यस्य बोधयितुमशक्यत्वादिति चेन्न, अन्त्यपक्षाभ्युपगमे दोषाभावात्। अप्रसक्तप्रतिषेध इति च किमप्रसिद्धप्रतियोगित्वम्? किं वा निष्प्रयोजनत्वमिति विवेचनीयम्। नाद्यः, अन्यत्र प्रसिद्धस्यैव भेदस्य भेदत्वेनोपस्थितस्य परस्परप्रतियोग्यनुयोगिभावेनान्यत्र निषेधसंभवात्। न च तत्रैव प्रसिद्धिस्तन्त्रम्, निषेधप्रमा-मात्रोच्छेदप्रसङ्गात्। न द्वितीयः, अनर्थनिवृत्तेरेव प्रयोजनत्वात्, 'नान्तरिक्षेऽग्निश्चेतव्य' इत्यादौ स्तुतिमात्रप्रयोजनेनाप्यप्रसक्तनिषेधदर्शनाच्च।

(अद्वैतसिद्धिः)

अथ श्रुत्या ययोरभेदो बोध्यते तयोरुपस्थितिरस्ति? न वा? नान्त्यः, अनुपस्थितयोरभेदबोधनायोगात्। आद्ये सा किं श्रुतिजन्या, प्रत्यक्षादिजन्या वा। नाद्यः, श्रुतेर्मानान्तरागोचराभेदमात्रपरत्वेन घटाद्युपस्थितेस्तज्जन्यत्वाभावेन सर्वाद्वैतासिद्धेः, श्रुतिस्थ-किंचनेत्यादिपदानामनुवादकत्वाभ्युपगमात्। द्वितीये तु तयोर्भेदोऽपि प्रत्यक्षादिसिद्ध इति काद्वैतश्रुत्यवकाशः? मैवम्, यत् प्रत्यक्षादिना गृह्यते, तद्भेदोऽपि तेन गृह्यत एवेति नियमाभावात्। तथा हि– न तावत्पदार्थस्वरूपज्ञानमेव भेदज्ञानम्, अभेदभ्रमोच्छेदप्रसङ्गात्। स्वरूपभेदवादिनामपि स्वरूपज्ञानाद् घटत्वादिप्रकारकात् भेदत्वप्रकारकं भेदज्ञानं विलक्षणमेव, अन्यथा भेदाग्रहनिबन्धनव्यवहारानुदयप्रसङ्गात्। अत एव स्वरूपज्ञानोत्तरकालमवश्यं भेदज्ञानमित्यपि न, अनवस्थाप्रसङ्गाच्च। तथा हि– 'घटपटौ भिन्नौ जानामी'ति घटपटभेदधीः स्वप्रकाशा वा, अनुव्यवसायसिद्धा वा, साक्षिसिद्धा वा, न स्वप्रतियोगिकभेदविषया, भेदधियः प्रतियोगिधीजन्यत्वनियमेन प्रतियोगिधीव्यक्तिभिन्नव्यक्तित्वावश्यकत्वात्, स्वस्या एव स्वजन्यत्वानुपपत्तेः। ज्ञानान्तरेण च तद्भेदग्रहे क्वचिद् भेदधीधाराविश्रान्तिरवश्यं वाच्या, अन्यथा सुषुप्तिविषयान्तरसञ्चारादिकं न स्यात्। अतः तत्रापि चरमभेदधीरेवोदाहरणम्। तथा च बाधकत्वाभिमता या घटपटभेदधीः स्वभेदाविषया भासते तया सह बाध्यत्वाभिमताया ऐक्यधिय ऐक्यं बोधयित्वा निर्बाधा सती श्रुतिः सर्वभेदे पर्यवस्यति। न ह्यभेदेऽपि बाध्यबाधकभाव स्वस्यापि स्वबाधकतापत्तेः। तदुक्तं खण्डनकृद्भिः।

सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा ।
निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥ इति ।

न च– सिद्धान्ते घटतद्धीभेदग्राहिणा स्वप्रकाशेन साक्षिणा स्वस्मिन्नितरभेदस्यापि ग्रहणान्नानवस्था, अन्यथा स्वस्य घटादिभ्योऽभेदसंशयः स्यादिति वाच्यम्, साक्षिणः स्वप्रकाशत्वेऽपि स्वनिष्ठेतरप्रतियोगिकभेदग्रहे इतरप्रतियोग्युपस्थितिसापेक्षत्वात्। अन्यथा स्वस्यान्तःकरणाद्यभेदभ्रमो न स्यात्। स्वप्रकाशेन भेदाग्रहेऽपि मानान्तरेण भेदग्रहात् न घटाद्यभेदसंशयः इति न किंचिदेतत्। स्यादेतत्– 'घटपटौ भिन्ना'विति प्रत्यक्षं स्वस्याद्वैतज्ञानादिना भेदं विनानुपपत्तेस्तमप्याक्षिपतीति सर्वत्र भेदस्याप्रत्यक्षत्वेऽपि नाद्वैतश्रुतेरवकाशः। अत्रोच्यते– आक्षेपो हि अनुमानमर्थापत्तिर्वा? तत्र विवादाध्यासिता बुद्धिः सर्वतो भिन्नेति नानुमानं संभवति, स्वतोऽपि भेदसाधने बाधाद्, दृष्टान्तस्य च

(अद्वैतसिद्धिः)
साध्यविकलत्वात्। यतःकुतश्चिद् भेदसाधने त्वनुमानाविषये लब्धावकाशा श्रुतिरभेदं बोधयिष्यति। न च स्वव्यतिरिक्तात् सर्वतो भिन्नेति साध्यम्, अद्वैतवादिनं प्रत्यप्रसिद्धविशेषणत्वात्। एतेन– सर्वं सर्वस्माद्भिन्नमिति वाक्यमपि निरस्तम्, तदुक्तम्–

हेत्वाद्यभावसार्वज्ञ्ये सर्वं पक्षयताऽऽस्थिते ।
किञ्चित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः ॥ इति ।

नाप्यर्थापत्तिः सर्वभेदविषया, स्वावियत्वात्। ययोर्हि भेदं विना यत्रानुपपत्तिर्गृहीता, तयोस्तत्र भेदग्रहेऽप्यनुपपत्तावनुपपत्त्यन्तराग्रहणात्। सर्वत्र तद्ग्रहणे तु धाराविश्रान्तौ चरमधीरुदाहरणम्। तदुक्तम्–

आद्यधीवेद्यभेदीयाप्यन्याऽनुपपन्नता।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम्॥ इति ।

ननु यावदुपपादकं तत्सर्वमर्थापत्तेविषयः, न तु यत्किञ्चिदुपपादकम्, तथा चार्थापत्तेरितरस्माद् भेदाभावे तत्रैवाभेदश्रुतेर्लब्धावकाशत्वाद् घटपटभेदा-सिद्ध्यापत्तेरर्थापत्तिभेदस्यापि घटपटभेदोपपादकत्वेनार्थापत्तिविषयत्वं वाच्यम्, अन्यथा दृग्दृश्यसंबन्धानुपपत्तिर्ज्ञाननिवर्त्यत्वानुपपत्तिश्च स्वमिथ्यात्वविषया न स्यात्, 'सर्वं खल्विदं ब्रह्मे'ति श्रुतिः 'नेह नाने'ति ब्रह्मणि भेदमात्रनिषेधानुपपत्तिश्च स्वाभेदविषया न स्यात्, तथा च तत्रापि श्रुत्यन्तरमर्थापत्त्यन्तरं वा वाच्यमिति तवाप्यनवस्थापत्तिः इति। मैवं वोचः, वस्तुत उपपादकत्वं नार्थापत्तिविषयत्वे तन्त्रम्, कितूपपादकत्वेन ज्ञातत्वम्, अन्यथा अर्थापत्तिभ्रमानुपपत्तेः। तथा च येन रूपेणोपपादकत्वं गृहीतं, तद्रूपावच्छिन्न-मुपपादकमर्थापत्तेर्विषयः। तत्र यद्यर्थापत्तिगतभेदसाधारणमुपपादकतावच्छेदकमेकं भवेत् तदा सोऽपि भायादेव। न चैवमस्ति तदनिरूपणात्। तथा हि– घटपटभिन्नत्वमुपपाद्यम्, तदुपपादकं च न सर्वभिन्नत्वम्, स्वतोऽपि भेदापत्त्या तदसंभवात्। नापि स्वातिरिक्तसर्वभिन्नत्वम्; अद्वैतवादिनं प्रति स्वातिरेकविशेषणासिद्धेः, स्वत्वाननुगमाच्च। तथा च तेन तेन रूपेण तत्तद्भिन्नत्वमेव उपपादकमुपेयम्। अत उपपादकतावच्छेदकनानात्वान्न सर्वमुपपादकमर्थापत्तेर्विषय इति पृथक्पृथगनुपपत्तिज्ञानापेक्षायां सर्वत्रानुपपत्तिज्ञाने अनवस्थानात् क्वचिद्धाराविश्रान्तौ तत्रैव लब्धावकाशा श्रुतिः सर्वाद्वैते पर्यवस्यतीति

(अद्वैतसिद्धिः)

किमनुपपन्नम्? दृष्टान्ते च सर्वत्र स्वसाधारणमुपपादकतावच्छेदकमेकमेवेति तदवच्छिन्नतया स्वस्यापि भानमिति वैषम्यम्। तथा हि– दृश्यत्वावच्छिन्नमिथ्यात्वं विना दृक्संबन्धानुपपत्तिग्रहात्तदवच्छिन्नमिथ्यात्वमर्थापत्तेर्विषय इति स्वमिथ्यात्वमपि स्वविषयः, एवमेव ज्ञाननिवर्त्यत्वानुपपत्तेरपि स्वविषयत्वम्, तत्रापि दृश्यत्वादेरेकस्यैवावच्छेदकत्वात्। एवं च ब्रह्मणि सर्वाभेदबोधिकायाः श्रुतेर्भेदमात्रनिषेधान्यथानुपपत्तेश्च स्वाभेदविषयत्वमविरुद्धम्। न हि सर्वभेदे स्वभेदापत्तिरिव सर्वाभेदे स्वाभेदो दोषाय। तस्मादद्वैतश्रुतिर्बाध्यबाधकयोरैक्यबोधनेन निराबाधा सर्वाद्वैतं प्रतिपादयति।

ननु– शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् कथमादावल्पविषया बुद्धिःपश्चाद् बहुविषया भवतीत्युच्यत इति चेन्न, श्रुतितो द्रागेव जातायाः सर्वविषयाया अद्वैतबुद्धेः प्रामाण्यं व्यस्थापयन्तीनामस्मद्बुद्धीनामेव क्रमेण जायमानत्वात्। अयोग्यताज्ञानं च न शाब्दबोधे प्रतिबन्धकम्, न वा योग्यताज्ञानं हेतुः, येन प्रथमं सर्वाद्वैतबुद्धिर्न स्यात्। तदुक्तम्–

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम् ॥ इति ।

वेदान्तकल्पलतिकायामस्यार्थस्य प्रपञ्चो द्रष्टव्यः। एतेन– चरमज्ञानमिथ्यात्वेऽपि न तद्विषयस्य मिथ्यात्वम्, ज्ञानमिथ्यात्वस्य विषयमिथ्यात्वासाधकत्वात्, अद्वैतज्ञाने व्यभिचारादिति निरस्तम्, श्रुत्यैव द्वैतमात्रनिषेध्यत्वबोधनात्। अद्वैतज्ञानविषये च मिथ्यात्वबोधकाभावादेव सत्यम्, न तु ज्ञानमिथ्यात्वादिति न किंचिदेतत्। ननु– द्वैतज्ञानाद्वैतज्ञानयोरभेदे कथं बाध्यबाधकभावः? न च व्यावहारिकभेदमात्रेण सः, द्वैतज्ञानस्यापि बाधकत्वापत्तेः इति चेन्न, व्यावहारिकभेदमात्रस्य बाधकत्वाप्रयोजकत्वात्। यद्धि परीक्षितप्रमाणभावत्वेन बलवत्, तद् बाधकम्, यत्तु सन्दिग्धप्रमाणभावत्वेन दुर्बलं तद् बाध्यमिति व्यवस्थायां द्वैतज्ञानस्य दुर्बलत्वेनाबाधकत्वस्याद्वैतज्ञानस्य च बलवत्त्वेन बाधकत्वस्य शब्दप्रत्यक्षबलाबलविचारे दर्शितत्वात्। यत्तु– 'आपो वा इदं सर्वं भूत' मित्यादिश्रुतिः: 'विमतं जलाभिन्नं प्रतीतत्वात् जलवदि'त्यनुमानं वा स्वबाधकस्य जलाभेदं गृहीत्वा निर्बाधं सत् त्वदुक्तन्यायेन सर्वस्य जलाभेदं बोधयेद्– इति, तन्न, जलाभेदबोधनेऽपि बाध्यबाधकयोरैक्याबोधनाद् बाधकस्य बाधकत्वोपपत्तेः, ऐक्यज्ञानभेदज्ञानयोर्बाध्यबाधकभावस्य

(अद्वैतसिद्धिः)

जलाभेदज्ञानेनानपायात्। बाधकाभेदो हि बाधकत्वाभावे प्रयोजकः, बाधकस्य स्वबाधकत्वादर्शनात्। अतो न बाध्यबाधकैक्यज्ञानस्य जलाभेदज्ञानसाम्यम्। एतेन– पूर्वं सर्वस्माद्भिन्नमिति मद्वाक्यमद्वैतवाक्यतज्ज्ञानतद्विषयाणां तेभ्यो भेदमादौ गृहीत्वा निर्बाधं सत्सर्वभेदे पर्यवस्यतीति निरस्तम्, बाध्यबाधकयोरभेदे बाधकत्वाभाववत् भेदेऽपि बाधकत्वं न स्यादित्यत्र हेत्वभावात् पूर्वोक्तदोषाच्चेति दिक्।

सर्वासत्त्वं सर्वमिथ्यात्वान्नातिरिच्यते, अतः 'सर्वमसदि'ति प्रत्यवस्थानमनवकाशम्। ननु श्रुत्या सर्वस्य मिथ्यात्वं वा बोध्यते, ब्रह्माभिन्नत्वं वा। आद्ये 'सर्वं खल्विदं ब्रह्मे'ति सामानाधिकरण्यं न स्यात्, सत्यानृतयोरैक्यायोगात्। द्वितीये 'इदं रजतं' 'गौरोऽह' मित्यादिभ्रमाणां प्रमात्वं स्यात्, आत्मनि देहादिभेदस्यानृतादिव्यावृत्तेश्च बोधकानां वेदान्तानां 'नेदं रजत'मित्यादिबाधकस्य चाप्रामाण्यं स्यात्, घटज्ञानेनैव तदभिन्नब्रह्मतदभेदादेः सर्वस्यापि वस्तुतो ज्ञातत्वेन सार्वज्ञ्यम्, वेदान्तानां वैयर्थ्यम्, सद्यो मोक्षश्च स्यात्, सुखदुःख-बन्धमोक्षभेदाऽभेददूषणभूषणजयपराजयभ्रान्तिप्रमादेरपि वस्तुतो भेदाभावेन सर्वसङ्करापत्त्या स्वक्रियास्वन्यायस्ववचनविरोधाश्च स्युरिति चेन्न, आद्ये 'मृद् घटः' 'इदं रजत'मित्यादाविव उपादानोपादेयभावेनापि सामानाधिकरण्योपपत्तेः। द्वितीये वस्तुतो भेदाभावेऽपि आविद्यकभेदमादाय सर्वव्यवस्थोपपत्तेः। न च भेदस्याप्यनाविद्यकब्रह्माभिन्नत्वेनाविद्यकत्वायोग इति– वाच्यम्, आविद्यकत्वस्याप्याविद्यकस्यैवाङ्गीकात्, अथाविद्यकत्वस्यापि ब्रह्माभिन्नत्वात् कथमाविद्यकत्वमिति चेत्, तस्मिन्नपि तस्य कल्पितत्वादिति गृहाण।

ननु– मुक्तावाविद्यकस्यापि भेदस्याभावेनानन्दस्य दुःखाभिन्नत्वेनापुरुषार्थत्वापातः, तत्तदसाधारणस्वभावस्य तत्र तत्राभावेऽपि तत्तदभेदे पारिभाषिकोऽयमभेदो भेदे पर्यवस्येद्, असाधारणरूपेण भेदमभ्युपेत्य सद्रूपेण भेदनिषेधेऽपि इष्टापत्तिरप्रसक्तनिषेधश्चेति चेन्न, एकस्यामेव ब्रह्मव्यक्तौ तत्तदसाधारणस्वभावानां कल्पितत्वेनासत्त्वात् सर्वकल्पनानिषेधकाले कल्पितधर्मावच्छिन्नभेदाभेदादिप्रसक्तेरयोगात्। अत एव नाप्रसक्तप्रतिषेध इष्टापत्तिर्वा, 'सद् द्रव्यं' 'सन् गुण' इत्यादिप्रतीत्या प्रसक्तानां तत्तद्धर्माणां ब्रह्मणि प्रतिषेधात्। अतः सर्वधर्मशून्याया एकस्या एव सद्व्यक्तेश्चिदानन्दरूपायाः प्रतिपादनान्न पारिभाषिकोऽयमभेद इति सिद्धम्। तदेवं 'सर्वं ब्रह्माभिन्नमि'ति मते मिथ्याभूतस्य ब्रह्मभेदेऽपि सन्मात्रमेव ब्रह्माभिन्नमिति मते वा न प्रत्यक्षादिविरोधः नापि पूर्वोत्तरविरोधः॥

इत्यद्वैतश्रुतेर्बाधोद्धारः।

## न्यायामृततरङ्गिणी

एकमेवाद्वितीयमित्यादौ अद्वितीयादिशब्दैर्द्वितीयमात्रनिषेधात् श्रुतिर्मिथ्यात्वे मानमिति यदुक्तं तन्निषेधति ।। किं चेत्यादिना।। ।।एकमेवेति।। इति शब्दः प्रकारवाची। तथा च एको द्रष्टा द्वैतो भवतीत्यादि श्रुतिरप्युदाहर्तव्या। तेन नाग्निमेण सलिल इत्यादिनाऽसंगतिः। ननूक्तविधया मिथ्यात्वस्य ततोऽवगमात्कथं सा तत्र न मानमित्यत आह ।।शब्दस्येति।। ।।आज्यैः स्तुवत इति।। आपातप्रतीत एव यदि शब्दार्थः तर्हि आज्यैः स्तुवत इत्युत्पत्तिवाक्यगताज्यशब्दस्य घृतादिरेवार्थः स्यात् तथा च पंचदशाज्यानीति गुणवाक्यमीमांसारूपविचारवैयर्थ्यं स्यात्। तेन ह्युत्पत्तिवाक्यगताज्यशब्दस्य स्तुतिनामधेयता सिध्यति। तथा हि। पंचदशान्याज्यानि भवंतीत्यत्र न संख्याविशिष्टाज्यविधानं संभवति। वक्ष्यमाणदोषात्। किंत्वाज्यानुवादेन संख्यामात्रविधानं। तथा च स्तोत्रे घृतस्याप्राप्तत्वात्तदनुवादासंभवात्स्तोत्रानुवादेनैव संख्या विधातव्या। तच्चाज्यशब्दस्य स्तोत्रवाचित्वेऽवकल्प्यते नान्यथेति गुणवाक्यालोचनेनैवाज्यादिपदं उत्पत्तिगतं नामत्वेनाध्यवसीयते। आपातप्रतीतस्य शब्दार्थत्वे तु नैतत्संभवतीत्यर्थः। आज्यसंज्ञकाभिः स्तुतिभिरिष्टं कुर्युरिति तदर्थः ।।चित्रेति।। प्रथमस्य चतुर्थपादे विचारितं। यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबंधः स्तेत्रप्रकरणे श्रूयते पंचदशान्याज्यानीति। तथा आज्यैः स्तुवत इति। अत्राज्यशब्दो गुणविधिः कर्मनामधेयं वेति संशये रूढिप्राबल्यात्पंच-दशसंख्याविशिष्टघृतलक्षणगुणविधिः। नन्वाज्यस्य द्रव्यत्वादक्रियात्मनो विधिर्नसंभवतीति चेन्न। अस्तिर्भवंतीपरः प्रथमपुरुषेऽप्रयुज्यमानोप्यस्तीति स्मृत्या स्तिधातुर्भवंतीशब्दवाच्यवर्तमानार्थ-लड्विभक्तिपरः प्रथमपुरुषसमानाधिकरणयुष्मदस्मदतिरिक्तोपपदे सत्यप्रयुज्यमानोप्यस्तीत्यनु-शासनादस्ति भवत्योश्चैकार्थत्वात् भवत्यध्याहारेण सत्तारूपक्रियालाभात्। नन्वेवमपि विधायकाश्रवणात् न गुणविधित्वमिति चेन्न। प्रयोगवचनाद्विधिरवगम्यते। स्तोमेडविधिः पंचदशाद्यर्थ इति स्मृत्या डप्रत्ययांतस्य पंचदशशब्दस्य स्तुतेर्मानं स्तोम इति स्तोत्रियस्य ऋक्संख्यावाचित्वात्तत्समानाधिकरणाज्यपदस्य न घृतवाचिता युक्तेति चेन्न। स्तुतेः साधनद्वारेण संख्यात्मकमानपरिच्छेद्यत्वात्। श्रुतिसाधनपरिच्छेदिकायाः संख्यायाः स्तुतिमानत्वेन स्तोमत्वात्। ऋचामिव घृतस्यापि रथघोषवदुपस्थापकतया स्तुतिसाधनत्वोपपत्तेर्डप्रत्ययाविरोधः। न हि स्तोत्रसाधनानामेव ऋचां परिच्छेदिका संख्या स्तोमशब्दवाच्या न साधनांतरपरिच्छेदिकेति राज्ञामाज्ञा। नन्वेवं स्तोत्रस्य स्तोमशब्दवाच्यतया साधनसंख्यया परिच्छेद्यत्वार्थं घृतादीनां स्तोत्रसाधनत्वं वक्तुं आज्यवंतीति वक्तव्यम्। तथा च मत्वर्थलक्षणाप्रसंग इति चेत्। न। विधौ मत्वर्थलक्षणापत्तेः। श्रुतवाक्यगतेन विधिना सहाज्यस्य संयोगाभावात्। स्तोत्रप्रकरणे

(तरङ्गिणी)
यत्पंचदशानीत्यादिगुणवाक्याम्नानं तदनुमितेन पंचदशसंख्याविशिष्टाज्यैः स्तोत्रस्योपकर्तव्य-मित्यादिवाक्येन कृतो यः स्तोत्राज्यसंबंधः तत्पूर्वकः प्रयोगवचनेन विधिराश्रयितव्यः। तेन च मत्वर्थ एव प्रतिपाद्यत इति न लक्षणा। तदुक्तं वार्तिके।

श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने।
लक्षणावाक्यभेदादिदोषो नानुमिते ह्यसाविति।

घृतस्य द्रव्यात्मकत्वेपि भवत्युपपन्ना सत्ता प्रकरणग्राह्या भविष्यति। ननु धातुवाक्यत्वमात्रेण सत्तायाः क्रियात्वेपि चेतनक्रियात्वाभावेनाननुष्ठेयत्वान्न प्रकरणग्राह्यता संभवतीति चेन्न। सत्तायाः स्वरूपेणाननुष्ठेयत्वेप्यंगत्वेन स्तोत्रसामीप्यावगमात्तस्य च सन्निधिस्थापनापाद्यरूपत्वात्तेन रूपेणानुष्ठेयत्वं भविष्यति संसर्गिद्रव्यत्वादाज्यानां स्वरूपेण संख्यायोगाभावेपि पंचदशाज्यपात्राणि समीपे निधाय स्तोत्रं कर्तव्यं। यथाग्निमुपसमाधाय स्तुवत इत्यत्राग्निः सत्तामात्रेणोपकरोति तद्वत्। साधकतमत्वविवक्षयोत्पत्तिवाक्येनुवादार्थं तृतीयानिर्देशोपपत्तिः। नचोत्पत्तिवाक्ये आज्यानुवादोऽनर्थकः। प्रशस्तमिदं स्तोत्रं यत्क्रियमाणं आज्यसन्निधियुक्तं भवतीत्येवं स्तोत्रप्रशंसार्थत्वेनानुवादसाफल्यात्। तस्माद्गुणविधिरिति पूर्वः पक्षः। सिद्धांतस्तु। स्तोत्रेषु द्रव्यसंख्ययोरुभयोरप्राप्तत्वान्नान्यतरानुवादेनेतरविधिसंभवः। न च कर्मांतरेषु प्राप्तस्याज्यस्यानुवादेन संख्याविधानं न संभवति। कर्मांतरस्य स्तोत्रप्रकरणे बुद्धिस्थत्वाभावात् स्तोत्रप्रकरणबाधश्च स्यात्। आज्यस्वरूपानुवादेन संख्याविधौ च द्रव्यांगत्वापत्तेरकर्मांगत्वप्रसंगेन आनर्थक्यापत्तेश्च। संख्याविशिष्टद्रव्यविधानेपि संख्याया द्रव्यविशेषणत्वेन अकर्मांगत्वं स्यात्। संख्याया द्रव्यविशेषणत्वे क्रियाविशेषणत्वाभावेन अविधेयत्वापत्तिश्च। पश्वेकत्वादेस्तु विधेयक्रियोपादानात् संख्यायाश्चैकप्रत्ययोपादानलक्षणया श्रुत्या एकपदोपादानलक्षणश्रुतिगम्य प्रातिपदिकार्थांगत्वबोधेन कारकांगत्वावगतेस्तद्द्वारेण क्रियांगत्वावश्यंभावात् क्रियांगत्वेन च विधेयत्वं। न चेह क्रियास्ति। क्रियाभावादेवाक्रियात्मकत्वेन स्तोत्रप्रकरणग्राह्यत्वानुपपत्तेरानर्थ्यक्यापातः। तदुक्तं वार्तिके।

नावांतरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्यैः कथं भावैर्गृह्णंति प्रकृताः क्रिया ॥

इति। भवति क्रियाया अनुशासनसिद्धत्वेपि न तां प्रति द्रव्यसंख्ययोरंगत्वं संभवति। क्रियासिद्धौ व्याप्तिप्रमाणं कारकं क्रियांगं भवति सत्तासिद्धिवेलायां चालब्धात्मकत्वात् न व्यापारः संभवति। तथा च द्रव्यसंख्ययोर्भवनक्रियांगत्वेन न तद्वारा प्रकरणेन ग्रहणं संभवति। ननु आज्यसत्तायाः

(तरङ्गिणी)

स्वतः सिद्धत्वेन तस्य तां प्रत्यनंगत्वेपि स्तोत्रसामीप्यासिद्धेस्तेन रूपेण विधेयत्वादंगत्वं भविष्यतीति। मैवं। सामीप्यस्याश्रुतत्वात्स्तोत्रांगत्वेन तत्सामीप्यकल्पनं। सामीप्यसंपादनरूपेण चाविधेयतयांगत्वमितीतरेतराश्रयत्वं। अग्निमुपसमाधायेति च स्पष्टं विधानमात्मलाभव्यतिरिक्ता चेयं क्रिया शक्यते कथं भावेन ग्रहीतुं। ननु आग्नेयोऽष्टाकपालो भवतीत्यादाविवावश्यकल्पनीया भवति वाच्यप्रयोज्यव्यापाररूपभावनाक्षिप्तप्रयोजकव्यापाररूपभावनाविध्यन्यथानुपपत्त्या पंचदश-संख्याकैराज्यैः स्तोत्रोपकारं भावयेदिति विनियोजकवाक्यकल्पनया आज्यानां स्तोत्रसंबंधसिद्धेः श्रुतस्य वाक्यस्य संख्यासंबंधमात्रविधानात् न वाक्यभेद इति चेत्। न। सिद्धांतेन वाक्यस्यान्यथोपपन्नत्वेनान्यथानुपपत्त्यभावेन विधेरकल्पनात्। आग्नेयादौ तु प्रकारांतरेण विधिसिद्धिः। यदि च वाक्यभेदपरिहारायोत्पत्तिवाक्यविहिताज्यानुवादेन पंचदशत्वं गुणो विधीयेत ततः सामानाधिकरण्यसिध्यर्थं आज्यशब्देन मत्वर्थलक्षणया विहितेष्वाज्येषु गुणविध्यापत्तेर्लक्षणैव दोषः। तस्मान्नामधेयमाज्यशब्दः। अन्वाख्यानरूपार्थवादाच्च नामत्वं। तथा हि। प्रजापतिर्देवेभ्यः आत्मानं यज्ञं कृत्वा प्रायच्छत्तेन्योन्यस्मा अग्रायनातिष्ठंत। तानब्रवीदाजिमस्मिन्नितेति त आजिमायन् यदाजिमायुस्तदाज्यानामाज्यत्वमिति स इंद्रो निर्वेदग्निर्वा इदमग्रे उज्जोष्यतीति अस्मिन्यज्ञे काष्ठां गच्छतेति प्रजापतिवचनात्। एतानि स्तोत्राणि काष्ठां कृत्वा यस्मादाजिं गता देवाः तस्मादाज्याहेत्वादेतेषामाज्यत्वमित्यर्थः। तदुक्तं वार्तिके।

गुणवाक्योपपत्त्यर्थं समभिव्याहृतेन च।
अनाख्यानार्थवादाच्चनामधेयत्वमाश्रितमिति।

समभिव्याहारः सामानाधिकरण्यं। उदाहृतसूत्रार्थस्तु। यस्मिन् गुणविधिः कर्मनामधेयमिति संदिग्धे गुणोपदेशः गुणपर उपदिश्यते तस्य प्रधानेन संबंधः कर्मनामधेयमित्यर्थ इति भाष्यकारोक्तो न युक्तः। नामधेयत्वप्रतिज्ञायाः पूर्वसूत्रोक्ताया एव अनुषंगसंभवात्। प्रधानपदस्य च कर्मपरत्वे लक्षणाप्रसंगात्। कर्मसंबंधस्य च गुणविधावप्यनुपपत्तेः नामधेयत्वावगमकत्वात् सहार्थे च तसिप्रयोगादर्शनेनासाधुत्वापत्तेः। तस्मात्प्रधानतोभिसंबंध इत्यस्य प्रधानद्वारानैकेषां गुणानामनेकविशेषणविधिप्रसवसमर्थे नैकेन विधिना संबंधो भवति। न चात्र प्रधानभूतं कर्म त्वत्पक्षे विधीयत इत्येवं वार्तिककारोक्तार्थः साधुः।

॥आकाशेति॥ ब्रह्ममीमांसायां प्रथमाध्यायस्य प्रथमपादे विचारितं। आकाशस्तल्लिंगात्। छांदोग्ये श्रूयते त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैबिलिरिति। ते होचुरुद्गीथे वै कुशलाः स्मो हंतोद्गीथे कथां वदाम इति। तथेति ह

(तरङ्गिणी)

समुपविविशुः। स ह प्रवाहणो जैबिलिरुवाच। भगवंतावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति। सह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच। हंतत्वा पृच्छामीति। पृच्छेति होवाच। का साम्नो गतिरिति। स्वर इति होवाच। स्वरस्य कागतिरिति प्राण इति होवाच। प्राणस्य का गतिरिति। अन्नमिति होवाच। अन्नस्य का गतिरिति। आप इति होवाच। अपांका गतिरित्यसौ लोक इति होवाच। अमुष्य लोकस्य का गतिरिति शिलकेन दाल्भ्यं प्रति पृष्टे स्वर्गलोकस्य गतिर्नास्तीति दाल्भ्येनोत्तरितेऽप्रतिष्ठितं वै किल ते दाल्भ्य सामेति शिलकेन दूषिते सति दाल्भ्येन पुनः शिलके पृष्टेऽमुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति दाल्भ्येन शिलके पृष्टे पृथिवीलोकस्य गतिर्नास्तीति शिलकेनोक्ते तव द्वैकिल ते सामेति जैबिलिना शिलके दूषिते सति शिलकेन जैबिलिः पृष्टः सन्नुवाचास्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यंते आकाशं प्रत्यस्तं यंत्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनंत इति ॥ अत्राकाशशब्दो भूतविशेषो वा परमात्मा वेति विशये प्रसिद्धेर्भूतमेवेति प्राप्ते सर्वाश्रयत्वपरोवरीयस्त्वादिलिंगात्परमात्मैवेति सिद्धांतितं ॥ गगनेति॥ आकाश इति होवाचेत्यत्र विचार्यमाणाकाशशब्दसमानन्यायतया आकाशादेव समुत्पद्यंत इति हेतुनिष्ठा-काशशब्दोपि गगनपर एवेति पूर्वपक्षी मन्यत इत्यर्थः ॥ अंध इति॥ अंधमृदोर्मणिज्ञान-वचनाभावप्रत्यक्षं तु अनेन वचनेन बाध्येत। अतात्त्विकार्थं वा कल्प्येतेति स्यादित्यर्थः। सावित्रादिषु क्षुद्रचयनेषु मध्ये आरुणकेतुकाख्यचयनस्य प्रतिपादके तैत्तिरीयारण्यकस्य प्रथमप्रपाठके पठ्यते। अंधो मणिमविंदत्तमनंगुलिरावयत्। अग्रीवः प्रत्यमुंचत् तमजिह्वो असश्च्यतेति। अत्रांध इत्यादिवाक्यचतुष्टयस्यापातप्रतीतोऽर्थो बाधितः। लोके हि पुरुषश्चक्षुषा मणिं दृष्ट्वा तमंगुलिभिस्तंतुना आवीय ग्रीवायां प्रतिमुच्य जिह्वया प्रशंसति। नचांधादेश्चक्षुरादिना दर्शनादिकं संभवति। उत्तरसंदर्भानुसारेण तु तात्पर्यावधारणे सत्यबाधितोऽर्थो भवति। तथा हि। अंधादिवाक्यानंतरमूर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रतीत्यादिना संसारस्य भगवदधीनत्वं व्रश्चनयोग्यत्वेन वृक्षत्वं तद्विदो मृत्युभयाभावं चोक्त्वा हसितं रुदितं गीतं वीणापण-वलासितमित्यादिना शरीरस्यापि भगवदधीनत्वमुक्त्वा तस्मिन् शरीरे प्रविष्टस्य जीवस्य स्वतोज्ञानाद्यशक्तस्य परमात्मदत्तेंद्रियस्य ज्ञातृत्वादिकमुच्यते। अचेता इत्यादिवाक्येष्वचेता यस्तु चेतनः स तं मणिमविंदत् सोनंगुलिरावयत् सोग्रीवः प्रत्यमुंचत् सोजिह्वोऽसश्च्यतेति असश्च्यत प्राशंसत्। यथांधादिवाक्यस्याप्यापातप्रतीतो नार्थस्तथाद्वैतवाक्यानामपीत्यर्थः। श्रुतेरापात-प्रतीतार्थपरत्वे स्मृतिविरोधमप्याह ॥ बिभेतीति॥

(तरङ्गिणी)

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदोमामयं चालयिष्यतीति स्मृतिः।

श्रुतिविरोधं चाह ॥कश्चंदसामिति॥ कश्छंदसां योगमावेद धीरः को धिष्ण्यां प्रतिवाचं पपाद। को धीरो धीमान्छंदसां वेदानां योगं पदार्थेषुवाच्यवाचकभावसंबंधं आवेद न कोपीत्यर्थः। को वा धिष्ण्यां बुद्धिपूर्विकां। यद्वा धिष्ण्यं स्थानं तद्वत् स्थिरां। नित्यामिति यावत्। एवंभूतां वाचं प्रतिपपाद प्रतिपादितवान्। कृतवानितियावत्। न कोपि। वाचो नित्यत्वादित्यर्थः। माधवीये तु छंदसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना विनियोगमावेद न कोपीत्यर्थः। को वा धिष्ण्यां होत्रादीनां सप्तस्थानानि प्रतिपपादेति व्याख्यातं। ततोपि वेदार्थस्य गहनत्वमेव। कस्वित् अस्याः पारं न जगाम। उतत्वः पश्यन्न ददर्श वाचमित्यादिना वेदार्थस्य गहनत्वं प्रतीयत इति ॥ उक्तंहीति॥ चोदनालक्षणोऽर्थो धर्म इति प्रस्तुतां चोदनां लिलक्षयिषता भाष्यकारेण-

प्रत्यक्षाद्युपयोगं तु वर्णमात्रादितः पुरः ।
शास्त्रार्थज्ञानवेलायां मत्वा तल्लक्षणं कृतम् इति ॥

वार्तिककारोक्तसंगत्या प्रत्यक्षादिकं लक्षयित्वा चोदना चोपदेशश्च शास्त्रमेवेत्युदाहृतमिति वार्तिकोक्तरीत्या चोदनाशब्दोदितं शास्त्रं लक्षितं शास्त्रं हि 'शब्दविज्ञानादि'त्यादिना। अत्र शब्दार्थशब्दौ विशेषणरहितावपि विशिष्टशब्दार्थपरौ। विधायकशब्दे शब्दशब्दो विधेयेऽर्थे अर्थशब्द इति। तदुक्तं वार्तिके।

यथा च चोदनाशब्दो वैदिक्यामेव वर्तते।
शब्दज्ञानार्थविज्ञानशब्दौ शास्त्रे तथा स्थिताविति।

तथा च विधायकशब्दविज्ञानादसन्निकृष्टे विधेयेऽर्थे विज्ञानं शास्त्रमित्युक्तं भवति। प्रत्यक्षवच्चात्रापि शब्दतज्ज्ञानादिषु विवक्षातः प्रामाण्यं ज्ञातव्यं। न तु ज्ञानमेव शास्त्रमिति काशिकाकारः। एवं स्थिते शास्त्रलक्षणे को वा असन्निकृष्टशब्दार्थ इत्यत उक्तं वार्तिककृता असन्निकृष्टवाचेत्यादि। प्रमितोर्थो विपरीततया प्रमितश्चार्थः सन्निकृष्ट इत्यभिधीयते। तद्भिन्ने शब्दः प्रमाणमित्यर्थः। अत एवैतदुत्तरं वार्तिकं।

प्रमितस्य प्रमाणे हि नापेक्षा जायते पुनः।
ताद्रूप्येण परिच्छिन्ने प्रमाणं निष्फलं परं।
विपरीतपरिच्छिन्ने नावकाशः परस्य तु।
मूले तस्य ह्यनुत्पन्ने पूर्वेणविषयो हृत इति ।

(तरङ्गिणी)

यद्यपि शास्त्रं हि शब्दविज्ञानादित्याद्युक्तभाष्यव्याख्याने असन्निकृष्टवाचेत्यादिवार्तिकं न पठ्यते। किंतु 'अनुमानं ज्ञातसंबंधस्यैकदेशदर्शनाद्देशांतरेऽसन्निकृष्टेर्थे बुद्धि'रित्यनुमानलक्षण-भाष्यव्याख्याने एतद्वाक्यं पठ्यते। तथापि शास्त्रलक्षणभाष्येप्यसन्निकृष्टस्य शब्दस्य सत्त्वेनानुमानलक्षणभाष्यस्थासन्निकृष्टशब्दस्यार्थोऽत्रापि शास्त्रलक्षणभाष्यस्थासन्निकृष्टशब्दार्थतया ग्राह्य इत्यभिप्रायेण शब्दप्रस्तावाच्च तथोक्तमित्यदोष इति सहृदयैराकलनीयं। 'सत्यमंत्रा ऋजूयवः तं रोदसी पिपृतं सत्यवाचं ते सत्येन मनसा दीध्यानाः ते सत्येन मनसा गोपतिंगाः अभिष्टिकृज्जायते सत्यशुष्मः सत्या सोमा अभवन्नस्य विश्वे सत्या भवंत्वाशिषो नो अद्य सत्याः संतु यजमानस्य कामाः' इत्यादिविशिष्यसत्यत्वबोधकानेक श्रुतिविरोधात्सामान्यतो द्वितीयनिषेधकश्रुतेर्भूतसामान्यहिंसानिषेधदैक्षपश्वालंभश्रुतिवदुत्सर्गापवादन्यायेन व्यवस्थितविषयत्व-माश्रयणीयमित्यभिसंधायोक्तार्थेस्मृतिपादीयवार्तिकमुदाहरति ॥ विषयेति॥ एतद्वार्तिकात्प्रागप्युक्तं

उत्सर्गश्चापवादश्च सर्वत्रैवोपलभ्यते।
तत्र नोत्सर्गमात्रेण सर्वमेवावरुध्यत

इति। उत्तरत्राप्युक्तं

यो हि सामान्यदृष्टेन व्यवहारं निनीषति।
तृष्णाच्छेदोभवेत्तस्य मृगतृष्णाजलैरपीति।

ननु विरोधबीजात् द्वैतवाक्योपस्थितेः प्रागेवाद्वैतवाक्यं सर्वाद्वैतं बोधयिष्यतीत्याशंकमानस्य न भक्षयेदित्यादौ न पदोपस्थितेः प्रागेव भक्षणमपि शास्त्रार्थः स्यादित्युत्तरं हृदि निधाय तत्र कर्त्रधिकरणवार्तिके संमतित्वेनोदाहृतं वृद्धानां वार्तिकं संवादयति ॥अन्य एवेति॥ अंगं शब्दैकदेशरूपावयवा इति राणकव्याख्या। एतद्वार्तिकात्प्रागपि तत्रैवोक्तम्

सर्वाण्येव हि शास्त्राणि स्वप्रदेशांतरैः सह।
एकवाक्यतया युक्तमुपदेशं प्रतन्वते।

यदि शास्त्रैकदेशालोचनेन तद्विरुद्धत्वमभ्युपगम्य शब्दविरोध उद्भाव्यते तदासुरा न पातव्येत्यस्याप्येकदेशेन पानं विहितमंगीकुर्वंच्छास्त्रविरुद्धं कुर्यात् तथा भिन्नवाक्येषु यावज्जीवमग्निहोत्रं जुहोतीत्यादि मंत्रापेक्षयाऽदीक्षितोप्यजुह्वत् प्रत्यवेयादिति।

प्रत्यक्षाविरोधं शंसते ॥अत्रोक्तमिति॥ ॥नियतेति॥ घटपटभेदग्राहिप्रत्यक्षं स्वस्य श्रौतैक्यज्ञानस्य च भेदं न गृह्णाति। स्वस्य स्वाविषयकत्वात्। ऐक्यज्ञानाविषयकत्वाच्चेत्यर्थः

(तरङ्गिणी)

॥ स्वाभिन्नमिति॥ स्वस्मादगृहीतभेदमित्यर्थः ॥ न बाधत इति॥ अन्यथा स्वस्यापि स्वेन बाधापत्तेरित्यर्थः ॥ सर्वाद्वैतइति॥ ज्ञानैक्यद्वारा तद्विषययोरैक्यं गृह्णातीत्यर्थः। ननु प्रत्यक्षज्ञानं श्रौतैक्यज्ञानात् स्वस्य भेदं मैव ग्रहीत्। ज्ञानांतरं तद्गोचरं स्वविषययोस्तयोर्भेदं ग्रहीष्यत इत्यत आह ॥ न च बाध्येति॥ ॥ अनवस्थाभयादिति॥ अनवस्थायां विषयांतरसंचारादिकं न स्यादित्यर्थः ॥ चरमेति॥ ज्ञानांतरगृहीतभेदं ज्ञानं तद्विषयं चापाततः परित्यज्य यथैव परबुध्या घटपटभेदबुद्धेः घटात्पटाच्च भेदो विषयीक्रियते तस्या एव स्वविषयेण सहाद्वैतश्रुतिः प्रामाण्यमवलंब्य लब्धपदा घटपटतद्भेदतद्बुद्धिभिः सह द्वितीयाया बुद्धेरभेदे पर्यवस्यंती सर्वेषामेव तेषामभेदे विश्राम्यतीत्यर्थः ॥ निवृत्ताविति॥ अनवस्थाया बाधपरंपरया निवृत्तौ सत्यामित्यर्थः। पार्ष्णिग्रहैः पृष्टतो गच्छद्भिः ॥ चोर इति॥ भेदापहारित्वेनाद्वैतश्रुतेश्चोरत्वात्। संगृह्णाति ॥ एवंचेति॥

॥ अप्रसक्तेति॥ नन्वप्रसक्तप्रतिषेध इति किमप्रसिद्धप्रतियोगित्वं वा अप्रयोजनत्वं वा। नाद्यः। अन्यत्र प्रसिद्धस्यैव भेदस्य भेदत्वेनोपस्थितस्य परस्परप्रतियोग्यनुयोगिभावेनान्यत्र निषेधसंभवात्। न च तत्रैव प्रसिद्धिस्तंत्रं। निषेधमात्रोच्छेदप्रसंगात्। न द्वितीयः। अनर्थनिवृत्तेरेव प्रयोजनत्वात्। मैवं। श्रौतनिषेधस्य तदधिकरणकप्रसक्तिपूर्वकत्वनियमात्। प्रसक्तिं विना निषेधस्याप्रामाण्यहेतुत्वात्। अत एवाभागिप्रतिषेधादितिसूत्रे न पृथिव्यामग्निश्चेतव्यो नांतरिक्षे न दिवीति अप्रतिषेधभागिनमर्थं प्रतिषेदं प्रतीति शाबरभाष्येंतरिक्षादावग्निचयनप्राप्तेरभावान्नां तरिक्ष इत्यादिवाक्ये प्रामाण्यमाक्षिप्तं। अन्यथा पृथिव्यां प्राप्तस्य चयनस्यांतरिक्षादौ निषेधसंभवात्तदनुपपत्तेः ॥ श्रुतेरपीति॥ पंचम्यंतं। अस्मदादिभिरिति शेषः। तेन न लोकेति खलूयोगे षष्ठी नेति न शंकनीयं। संबंधसामान्ये वा षष्ठी न कर्तरीति ध्येयं।

ननु प्रत्यक्षाद्यनुपस्थितचरमज्ञानस्य नेह नानेत्यादिश्रुतिस्थकिंचनादिपदादुपस्थितिरस्तु तदभेदश्च तया बोध्यतामित्यत आह ॥ न हीति॥ प्रत्यक्षप्राप्तं घटादिकं विहाय तदप्राप्ते चरमज्ञाने किंचनादिशब्दस्य तात्पर्यमस्त्वित्यत आह ॥ श्रौतस्येति॥ घटादेः प्राप्ततया तदंशे तदनुवादकं वाच्यं चरमज्ञानस्य मानांतराप्राप्ततया तदंशे तदपूर्वमिति वैरूप्यलक्षणवाक्यभेदः स्यादित्यर्थः ॥ तर्हीति॥ भेदग्राहिप्रत्यक्षविरोधादित्यर्थः। चरमधियः प्रत्यक्षसिद्धत्वे तस्याश्चर-मत्वहानिरित्यपि बोध्यं। ननु यत्प्रत्यक्षेण गृह्यते तद्भेदोपि तेनैव गृह्यत इति नास्ति नियमः। तथा हि। न तावत्पदार्थस्वरूपज्ञानमेव भेदज्ञानं। अभेदभ्रमोच्छेदप्रसंगात्। स्वरूपभेदवादिनामपि स्वरूपज्ञानात् घटत्वादिप्रकारकात् भेदत्वप्रकारकभेदज्ञानं विलक्षणमेव। अन्यथा भेदाग्रहनिबंधन-

(तरङ्गिणी)

व्यवहारानुदयप्रसंगात्। अत एव स्वरूपज्ञानोत्तरमवश्यं भेदज्ञानमित्यपि न। मैवं। स्वरूपज्ञानस्यैव भेदज्ञानत्वात्। अभेदभ्रमहेतुदोषसत्त्वे तत एवप्रतिबंधेन भेदाग्रहोपपत्तेः। न च यत्र दोषवशाद्भेदग्रहः तत्रैव श्रुत्या तदभेदो ग्रहीष्यत इति वाच्यं। दोषप्रयुक्तभेदाग्रहनिबंधनाभेदग्रहस्य भ्रमत्वनियमेन श्रौताभेदज्ञानस्य भ्रमत्वापत्तेः। अन्यथा दोषकाले शुक्तौ स्वभेदभ्रमो भवतीति दोषाभावेपि स्वेनैक्यं शुक्तित्वादिकं च न गृह्येतेति ॥एवं चेति॥ बोधनीयाभेदयोर्भेदप्रसक्तौ तत्प्रमाणबाधः अप्रसक्तौ यस्य कस्यचिदभेदस्तया बोधनीयः न तु बाध्यबाधकत्वाभिमतयोरित्यर्थः। तयैव चरमज्ञानोपस्थापने चरमत्वे व्याघातः। अनुपस्थितौ तत्र श्रुतिप्रवृत्तिव्युत्पादनायोगः। तथा च।

सुदूरधावनाश्रांता बाधबुद्धिपरंपरा।
निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्न जीयत

इत्यपि सुपठमित्यपि बोध्यं। चरमज्ञाने श्रुतेरवकाशात्तस्य स्वविषयेण सहाद्वैतबोधने सर्वाद्वैते श्रुतिः पर्यवस्यतीत्यत्र दूषणांतरमाह ॥किं चेति॥ ॥सर्वेति॥ अद्वैतश्रुतेश्चरमज्ञाने मिथ्यात्वरूपमद्वैतं बोधयितुं तद्विषयमपहरंत्यास्तत्तज्ज्ञानतत्तद्विषयापहाररूपसर्वमिथ्यात्वे तात्पर्यमित्यर्थः ॥अभेद इति॥ एतदपि चरमज्ञानेन स्वाभेदबोधनद्वारैव ॥चरमेति॥ श्रुतिश्चरमज्ञानस्य त्रैकालिकनिषेधप्रतियोगित्वादिरूपमपि मिथ्यात्वं चरमज्ञाने बोधयंती श्रुतिश्चरमज्ञानमसत्कल्पं करोत्येव। ततश्च साधकाभावादेव तद्विषयमपि मिथ्याकरोतीत्याशंकापरिहारायोक्तं अद्वैतेत्यादिसंभवेनेत्यंतं। तथा सत्यद्वैतज्ञानविषयस्य अद्वैतस्याप्युक्तरीत्या मिथ्यात्वं स्यात्। तत्स्वरूपमिथ्यात्वस्यापि श्रुत्या बोधनादिति भावः। ननु न ज्ञानमिथ्यात्वादर्थस्य मिथ्यात्वमनुमीयत इत्युच्यते। येनाद्वैतज्ञाने व्यभिचारः स्यात्। किं तु श्रुत्यैव द्वैतमात्रमिथ्यात्वं बोध्यत इत्युच्यत इति चेन्मैवं। अनवबोधात्। प्रत्यक्षादिना सर्वत्र द्वैतग्रहान्नक्कापि श्रुति रुक्तमद्वैतं बुबोधयिषति। यत्रापि चरमज्ञाने प्रत्यक्षादिना न द्वैतग्रहः तत्रापि श्रुत्युक्ताद्वैतबोधनेपि न त्वदिष्टसिद्धिरित्युच्यते। प्रत्यक्षादिना गृहीतभेदे घटादावद्वैतागमस्य प्रथममप्रवृत्तावपि चरमज्ञाने प्रवृत्तिरिति यथा त्वयोच्यते तथा यत्राघटादौ ब्रह्मणि वा मानांतरेण सत्यज्ञानादिवाक्येन वा सत्त्वं गृह्यते। तत्र इदं वा अग्रे नैव किंचन आसीदिति श्रुत्याऽसत्त्वस्याबोधनेपि मानांतरागृहीतसत्त्वके घटादिसत्त्वग्राहके सत्यज्ञानादिवाक्ये च प्रथममसत्त्वं गृह्यतां। बाधकाभावात्। पश्चाद्घटादौ ब्रह्मणि चासत्त्वं बोध्यताम्। बाधकाभिमतस्यासत्कल्पीकृतत्वादित्याह ॥अन्यथेति॥ ॥अंतत इति॥ चरमज्ञानेनैक्यज्ञानस्य तत्वतो भेदादिकमद्वैतागमो न बोधयतु तथापि चरमज्ञानैक्यज्ञानयोर्व्यावहारिकभेदसद्भावमात्रेण चरमज्ञानं स्वगृहीतभेदे स्वविषये ऐक्यज्ञानं बाधिष्यत एव।

(तरङ्गिणी)

बाध्यबाधकयोर्ज्ञानयोस्तत्वतो भेदादिकेपि ऐक्यवाक्यजरद्गवादिवाक्योरिव बाधकत्वौपयिकस्य व्यावहारिकभेदस्य सत्त्वादित्यर्थः। ननु न व्यावहारिकभेदमात्रं बाधकत्वे प्रयोजकं। किं तु परीक्षितत्वं। अद्वैतज्ञानं च तथा। अतो बलवत्त्वादनेवंविधं द्वैतज्ञानं वधिष्यत इति चेत्। मैवं। परीक्षाया एव क्रियमाणत्वात्। प्रत्युत संवादादिरूपपरीक्षा प्रत्यक्षएवास्तीति तस्यैव बलवत्त्वमितिभावः ॥अन्यथेति॥ बाध्यबाधकाभिमतयोर्व्यावहारिकभेदमात्रेण बाध्यबाधकभावानंगीकार इत्यर्थः ॥श्रुतिरिति॥ श्रुतिजन्यं ज्ञानमित्यर्थः ॥स्वबाधकस्येति॥ पृथिव्यादिषु जलभेदग्राहकप्रत्यक्षस्येत्यर्थः ॥जलाभेदमिति॥ बाधकाभिमतस्योक्तज्ञानस्य जलाभेदं बाध्याभिमतस्य जलाभेदज्ञानस्य जलाभेदमितिशेषः ॥निर्बाधमिति॥ बाधकज्ञानेनाभिन्नजलेनाभिन्नं बाध्यज्ञानं बाधकज्ञानेनाप्यभिन्नीभूतं। अतः स्वाभिन्नभूतस्य बाध्याभिमतज्ञानस्य बाधकाभिमतं ज्ञानं न बाधकमित्यर्थः ॥प्रसिद्धजलाभेदमिति॥ प्रसिद्धेषु जलाभेदं जलाभिन्नत्वेन प्रत्यक्षादिसिद्धेषु पृथिव्यादिषु भेदज्ञानेनैकतामापन्नमभेदज्ञानं भेदज्ञानाबाध्यं सत् तेषु जलाभेदं गृह्णीयादित्यर्थः। बोधयेत् विषयीकुर्यात्। एतेन जलाभेदबोधनेपि बाध्यबाधकयोरैक्याबोधनाद्बाधकस्य बाधकत्वोपपत्तिः। बाधकाभेदो हि बाधकत्वाभावे प्रयोजकः। बाधकस्य स्वबाधकत्वादर्शनात्। अतो न बाध्यबाधकैक्यज्ञानस्य जलाभेदज्ञानसाम्यमिति निरस्तं। जलाभेदबोधनद्वारा बाध्यबाधकज्ञानयोरैक्यस्यैवोक्तत्वादिति भावः। यद्वा बाधकस्य जलभेदज्ञानस्य आपो वा इदं सर्व मित्यादिना जलाभेदबोधनेन जलीकृतस्य जलवत् जलाभेदज्ञानं प्रति न बाधकत्वं। सर्वसाम्यस्य दृष्टांते अनपेक्षणादिति भावः। तद्बाधः सुस्थिरश्रुतेरित्युक्तमुपसंहरति ॥एवं चेति॥ श्रुतितः सुग्रह इति। व्याख्यातमेतत् ॥अन्यत्रेति॥ प्रत्यक्षाद्यगृहीतभेदे स्वस्वरूप इत्यर्थः ॥आद्य इति॥ ननु मृद्घट इतिवदुपादानोपादेयभावेन तदुपपन्नमिति चेन्न ॥घटं प्रति मृद इव परिणामित्वस्योपादानत्वस्य ब्रह्मण्यावयोरभावात्। विवर्तत्वस्य भ्रमाधिष्ठानत्वरूपस्य विचार्यमाणत्वादिति भावः ॥प्रमात्वमिति॥ भ्रमेण विषयीकृतस्य शुक्तिरूप्याभेदादेः सत्त्वादित्यर्थः ॥अप्रामाण्यम् इति॥ वेदांतगृहीतस्य देहात्मनोर्भेदादेः सर्वद्वैतग्राहिणा बाधितत्वादित्यर्थः ॥आविद्यकेति॥ इदं रूप्यायोराविद्यकभेदस्य सत्त्वात्तत्र रूप्याभेदज्ञानं भ्रम इत्यादिका व्यवस्था युक्तेत्यर्थः ॥तस्येति॥ भेदस्येत्यर्थः। ननु भेदे आविद्यकत्वमप्याविद्यकमेव। न चाविद्यकत्वस्याप्यनाविद्यकब्रह्माभिन्नत्वेन कथमाविद्यकत्वमिति वाच्यं। तस्मिन्नपि तस्य कल्पितत्वादिति चेन्न। वसनासनाशनशयनादिकात्मीयायासूयंत्या द्वितीय एवानवस्थया संयच्छमानोपस्थितिरनास्थाहेतुरास्तिकानां सैव स्यात्। भेदगताविद्यकत्वस्या विद्यकत्वे भेदस्यानाविद्यकत्वापत्तेश्चेति। ननु मोक्षानंदस्य दुःखाभेदोपि तस्य प्रतिकूलवेदनीयत्वाभावेन न मोक्षस्यापुरुषार्थत्वमित्यत

(तरङ्गिणी)

आह ॥ सुखादाविति ॥ ॥ असाधारणेति ॥ अनुकूलवेदनीयत्वादिनेत्यर्थः ॥ इष्टेति ॥ मम मतेपि सत्त्वस्य भिन्नतावच्छेदकत्वादित्यर्थः ॥ अप्रसक्तेति ॥ सन्न भवतीति सत्त्वावच्छिन्नभेदस्य प्रत्यक्षादिना प्राप्त्यभावात्प्रत्युतासाधारणधर्मेण घटत्वादिना तत्प्राप्तेरित्यर्थः। क्वचिद्भेदस्य प्रत्यक्षावेद्यत्वेपि तस्य मानांतरवेद्यत्वात्सर्वत्र भेदग्रहोस्तीत्याह ॥ किं चेति ॥ ॥ अद्वैतेति ॥ तृतीया सहार्थे ॥ अनुपपत्तेरिति ॥ तदभेदे तदुत्थानमेव न स्यात्। स्वरूपतो विषयतश्च विरोधादित्यर्थः ॥ आक्षिपतीति ॥ अनुमानमर्थापत्तिश्चाक्षेपशब्दार्थः ॥ काद्वयेति ॥ चरमज्ञानेपि ऐक्यज्ञानापेक्षया भेदस्यार्थापत्त्या विषयीकरणात्तत्रापि नाद्वयश्रुतेरवकाश इत्यर्थः। अत्रोक्तं खंडने। आक्षेपो अनुमानमित्यनुपपन्नं। यतः विवादाध्यासिता बुद्धिः सर्वतो भिन्नेति नानुमानं संभवति। स्वतोपि भेदसाधने बाधात्। यतः कुतश्चिद्भेदसाधने तु अनुमानाविषये लब्धावकाशा श्रुतिरभेदं बोधयिष्यति। न च स्वव्यतिरिक्तात्सर्वतो भिन्नेति साध्ये निस्तारः। अद्वैतवादिनः सर्वाभेदमिच्छतः क्वचिदपि तदसिद्ध्या विशेषणाप्रसिद्धेः। एतेन सर्वं सर्वस्माद्भिन्नमिति वाक्येन विना बाधं स्वतः प्रमाणेन सप्रतिशब्देयमद्वैत श्रुतिरित्यनवकाशं। यस्मात्कस्मादपि भेदोपगमे मिथ्यातः सत्यभेदोपगमेन सिद्धसाधनात्। सर्वस्मादिति स्वस्मादप्यापत्तेः। स्वव्यतिरिक्तादिति चाद्वैतवाद्यव्यवच्छेदकं। तदेत्वं

हेत्वाद्यभावसार्वज्ञं सर्वं पक्षयता स्थितं।
किंचित्तु त्यजता दत्ताद्वारा सैवाद्वयश्रुतिः॥

सर्वस्य पक्षत्वं वदतो हेतुदृष्टांतयोरभावः। स्वस्य सार्वज्ञं वास्थितं स्वीकृतं। सर्वपक्षीकरणस्य सार्वज्ञं विना संभवात्तत्परिहाराय कस्यचित्पक्षाद्बहिर्भावे तत्रैवाद्वैत श्रुतेरवकाश इति खंडनश्लोकार्थः। अत्रोच्यते। सर्वाविवादाध्यासिता बुद्धयः स्वविषयेभ्यो भिन्नाः बुद्धित्वात् घटबुद्धिवदिति सामान्याकारेणात्मानमपि विषयीकृत्यात्मनोपि स्वविषयाद्भेदं साधयिष्यत्यनुमा। न चैवमपि विषयिबुद्धितो विषयस्याभेदं बोधयंती श्रुतिरनुमानमप्यनवकाशयिष्यतीति वाच्यं। विषयिभेदस्यापि विषये अनुमयैव विषयीकरणात् श्रुतिमेव सानवकाशयिष्यति। बुद्धिविषययोर्मिथोभेदो वा साध्यः। न च हेत्वननुयोगः। उभयानुगतप्रतीतिविशेषविषयत्वस्य हेतुत्वेनोपादानान्नासिद्धिः। अन्यथा तवापि ब्रह्मणो यतः कुतश्चिदद्वैतसाधने स्वस्मादेव तत्सिद्धौ सिद्धसाधनम्। सर्वस्मादद्वैत-साधनेत्वनृतादिभ्यो द्वैतसिद्धिप्रसंगे सत्यज्ञानादिवाक्येनानृतादिव्यावृत्तयो बोध्यंत इति सिद्धांतविरोधः स्यादिति पर्यनुयोगः समानः। अर्थापत्तिदूषणमाशंकते ॥ यच्चोक्तमिति ॥ ॥ इयमिति ॥ घटपटभेदज्ञानं अद्वैतज्ञानाद्भेदं विनाऽनुपपन्नमिति ज्ञानमित्यर्थः ॥ स्वेति ॥

(तरङ्गिणी)

उक्तानुपपन्नमिति ज्ञानविषयकं न भवति। ययोर्भेदं विना यत्रानुपपत्तिर्गृहीता तयोस्तत्र भेदो भासते। नानुपपत्तौ। अनुपपत्तावनुपपत्त्यंतराग्रहादितिभावः ॥ सैवेति॥ विषयिभूतस्यार्थापत्तिरूपज्ञानस्य विषयभूतघटपटभेदज्ञानप्रतियोगिकभेदस्य वाऽद्वैतज्ञानाद्भेदस्य वा ज्ञानाभावात् इत्यर्थः ॥ द्वारमिति॥ क्वचिद्वारित्येवपाठः। स युक्त ॥ आद्येति॥ आद्यधीः घटपटौ भिन्नाविति धीः। तद्वेद्यो भेदो घटपटभेदः। तत्संबंधिनीया अन्यथानुपपन्नता तदन्यथानुपपत्तिः। सापि अंते शेषं गत्वा नाद्वयश्रुतिं बाधते। कुतः स्वज्ञानापेक्षणात्। अनुपपत्तेरनुपपन्नत्वज्ञाने तत्र भेदग्रह इति भेदग्रहार्थमनुपपत्तिज्ञानमपेक्षितं। तच्च यदा नास्ति तदा न तत्र भेदग्रहः। तथा चानुपपत्तिज्ञाने सावकाशा श्रुतिः सर्वाद्वैते पर्यवसन्ना स्यादित्यर्थः। क्वचित् स्वज्ञानोपेक्षणादिति पाठः। स न युक्तः। खंडने तट्टीकायां चादर्शनात्। अत्र यदि सर्वमभिन्नं स्यात्तदा घटपटौ भिन्नाविति प्रत्यक्षेण गृहीतो घटपटयोरपि भेदो न स्यादित्यनुपपत्तिज्ञानेन सकृद्बाधिता श्रुतिः कुत्रापि न सावकाशा। यदि चाद्यधीवेद्यभेदीयान्यथानुपपत्तिज्ञानमस्ति तर्हि तद्भेदोपि प्रत्यक्षेण गृहीत एवेति न तत्रापि श्रुतेरवकाशः। यदि च तज्ज्ञानं नास्ति तदा कुत्राभेदः श्रुत्या ग्राह्य इति पूर्वदूषणे सत्येव दूषणांतरमाह ॥ तत्रेति॥ अर्थापत्तेरिति॥ यावदुपपाद्यस्योपपादकं तत्सर्वमर्थापत्तेर्विषय इति विषयभूतज्ञानादिनाप्यर्थापत्तेर्भेदोर्थापत्तिविषय इत्यर्थः ॥ त्वदुक्तेति॥ अद्वैतश्रुतिरैक्यज्ञानस्यार्थापत्त्या तावदभेदं गृहीत्वा घटपटभेदग्राहकात् अबिभ्यती घटपटयोरप्यभेदमेव गृह्णीयादित्यर्थः ॥ तद्भेदस्येति॥ अर्थापत्तेरितरस्माद्भेदस्येत्यर्थः। ननु प्रमाणेन प्रमेयसंबंध्यर्थः सिध्यति। न तु प्रमाणसंबधीत्यत आह ॥ उपपादकत्वमिति॥ प्रमाणांतरे स्वसंबंध्यबोधकत्वेप्यर्थापत्तिविशेषे तदावश्यकमित्यर्थः ॥ न त्विति॥ अर्थापत्त्यसंबंधित्वविशिष्टत्वमुपपादकत्वं तद्विषयत्वे न तंत्रमित्यर्थः। ननु प्रमाणांतरे अदृष्टं कथमर्थापत्तिविशेषेंऽगीक्रियते इत्यत आह ॥ अन्यथेति॥ दृश्यमात्रस्य दृक्संबंधान्यथानुपपत्त्या मिथ्यात्वमुच्यमानं दृक्संबंधानुपपत्तेरपि दृक्संबंधानुपपत्त्या तत्सिध्यतीत्यर्थः ॥ ज्ञानेति॥ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिरपि ज्ञाननिवर्त्यत्वात् मिथ्येत्यर्थः ॥ नेह नेति॥ भेदमात्रनिषेधानुपपत्त्या ब्रह्मणि घटपटाद्यभेदस्य घटाद्यभिन्नब्रह्माभिन्नतया पटादेर्घटाद्यभेदस्य च बोधनमिव उक्तानुपपत्त्या तत्र स्वाभेदोपि बोध्यत इत्यर्थः। चकारेण सर्वं खल्विदं ब्रह्मेति श्रुतिः स्वाभेदविषया न स्यादिति सूचितं। ननु भेदमात्रनिषेधान्यथानुपपत्त्या घटाद्यभेदबोधनमित्यसिद्धं। येन तुल्यन्यायतया स्वाभेदं बोधयंती सा स्वविषया स्यात्। किंतु श्रुत्यंतरं तदभेदं बोधयिष्यतीत्यत आह ॥ न हीति॥ घटः पटाभिन्न इति विशेषरूपेणाभेदश्रुतिस्तु दूरापास्तेति हि शब्दार्थः ॥ स्वकीयं चेति॥ अन्यदीयं भेदं स्वकीयं चेत्यर्थः ॥ अयुक्तेरिति॥ घटपटभेदस्येति शेषः। तथा

(तरङ्गिणी)

चार्थापत्तिभेदस्यापि विषयभूतघटादिभेदोपपादकत्वादर्थापत्तिविषयत्वमित्यर्थः। ननु वस्तुत उपपादकत्वं नार्थापत्तिविषयत्वे तंत्रम्। किंतूपपादकत्वेन ज्ञातत्वम्। अन्यथार्थापत्तिभ्रमानुपपत्तेः। तथा च येन रूपेणोपपादकत्वं गृहीतं तद्रूपावच्छिन्नमुपपादकमर्थापत्तेर्विषयः। तत्र यद्यर्थापत्तिगतभेदसाधारणमेकमुपपादकतावच्छेदकं भवेत् तदा सोपि भायादेव। न चैवमस्ति। तदनिरूपणात्। तथा हि। घटे पटभिन्नत्वमुपपाद्यं। तदुपपादकं च न सर्वभिन्नत्वं। स्वतोपि भेदापत्त्यातेन तदसंभवात्। नापि स्वातिरिक्तसर्वभिन्नत्वं। अद्वैतवादिनं प्रति स्वातिरेक-विशेषणासिद्धेः। तथा च तेन तेन रूपेण तत्तद्भिन्नत्वमेवोपपादकमुपेयम्। अत उपपादकता-वच्छेदकनानात्वान्नसर्वमुपपादकमर्थापत्तिविषय इति पृथक् पृथगनुपपत्तिज्ञानापेक्षायां सर्वत्रानुप-पत्तिज्ञाने अनवस्थानात्। क्वचिद्धाविश्रांतौ तत्रैव लब्धावकाशा श्रुतिरद्वैते पर्यवस्यति। दृष्टांते तु सर्वत्र स्वसाधारणमुपपादकतावच्छेदकं दृश्यत्वादिकमेकमेवेति तदवच्छिन्नतया स्वस्यापि भानमिति वैषम्यमिति। मैवं। अत्राप्यर्थापत्तिसाधारणस्योपपादकतावच्छेदकस्य सत्त्वात्। घटपटभेदोपपादकं हि तद्भेदसिद्धिविरोधिभेदाभावविरहरूपत्वम्। यथा हि घटपटभेदज्ञानस्याद्वैत-ज्ञानेन भेदाभावे घटादिभेदसिद्धिर्न भवति तथार्थापत्तेरद्वैतज्ञानाद्भेदाभावेप्युक्तरीत्या घटपटभेद-सिद्धिर्न भवतीति तद्भेदोपि तथा। अतोऽर्थापत्तिभेदोपि घटपटभेदोपपादकता-वच्छेदकावच्छिन्नत्वादर्थापत्तेर्विषय इति पिहितद्वारा द्वय श्रुतिर्न स्वैरं संचरिष्यति। तस्मादुक्तं युक्तम्। सर्वेषु ज्ञानेषु भेदग्रहेपि नानवस्थेत्याह ॥कथं चेति॥ तथा च चरमज्ञानेपि नाद्वयश्रुतेरवकाश इति भावः ॥इतरेति॥ ननु इतरसकलप्रतियोगिज्ञानाभावेन तत्प्रतियोगिकभेदः कथं साक्षिणा स्वस्मिन् गृह्यत इति चेत् न। इतरत्वेन यत्किञ्चिदितरप्रतियोगिज्ञानेपि तद्भेदस्य सुग्रहत्वात्। घटध्वंस एव तत्प्रागभावध्वंस इति मते ध्वंसस्य यत्किञ्चित्प्रतियोगिजन्यत्ववत् यत्किञ्चित्प्रतियोगिनिरूप्यत्वस्यापि संभवात्। इतरत्वं च स्वत्वप्रतिद्वंद्विभावरूपम्। नान्योन्या-भाववत्त्वम्। न च स्वस्मिन्नसर्वस्माद्भेदग्रहेंऽतःकरणाद्यभेदभ्रमो न स्यादिति वाच्यं। इष्टापत्तेः। प्रत्युत मम मन इति भेदस्यैव प्रतीतेरिति भावः ॥सामान्येति॥ द्वितीयसामान्यं निषेद्धुं प्रवृत्ताया इत्यर्थः ॥विशेषेति॥ घटादेर्द्वितीयविशेषस्य सत्त्वग्राहकेणेत्यर्थः ॥आहवनीयेति॥ आहवनीये जुहोतीति होममात्राधारत्वेन प्राप्तस्याहवनीयस्य पदे जुहोतीति सोमक्रयार्थं नीयमानायाः गोः पदे होमविधायकविशेषशास्त्रवशात्तदितरहोमपरत्वं यथा तथा प्रत्यक्षगृहीतद्वितीये-तरपरत्वमित्यर्थः ॥अन्यथेति॥ सामान्येन प्रवृत्तस्य प्रमाणस्य तद्विरोधिविशेषप्रमाण-विषयेतरविषयत्वानंगीकार इत्यर्थः ॥अनियतेति॥ बृहदारण्यकचतुर्थप्रपाठकस्थतृतीयब्राह्मणे अथात आदेशो नेति नेतीत्यत्र तथा पंचमस्य नवमे षष्ठस्य चतुर्थेच पंचमे ब्राह्मणे स

(तरङ्गिणी)

एष नेति नेत्यात्मा गृह्यो न हि गृह्यत इति श्रुतौ प्रतियोगिविशेषानुपादानादनियतविषयत्वमित्यर्थः ॥ भेदेति ॥ समानाधिकरणनिषेधपदत्वात् भेदश्रुतित्वमित्यर्थः ॥ तज्ज्ञानेति ॥ अद्वैतवाक्यविषयकं अद्वैतवाक्यजन्यज्ञानमित्यर्थः ॥ तेभ्य इति ॥ अद्वैतवाक्यादद्वैतवाक्यस्य अद्वैतवाक्यज्ञानाचाद्वैत-वाक्यज्ञानस्याद्वैतवाक्यजन्यादद्वैतज्ञानादद्वैतज्ञानस्याद्वैतवाक्यजन्यज्ञान विषयादद्वैतादद्वैतस्येत्यर्थः ॥ आदाविति ॥ स्वस्वापेक्षया स्वस्वाभेदग्राहकप्रमाणात् प्रथमत इत्यर्थः ॥ निर्बाधमिति ॥ स्वभेदग्राहकं प्रति बाधकाभिमतस्य स्वाभेदग्राहकस्य स्वाभेदग्राहकेणैव प्रथमप्रवृत्तेन बाधितत्वात् भेदग्राहकं निर्बाधमित्यर्थः। अत्र बाध्यबाधकयोरभेदे बाधकत्वाभाववत् भेदेपि बाधकत्वंनस्यादित्यत्रहेत्वभावइति केनचिदुक्तम्। तदयुक्तमुक्ताबोधात्। नह्यत्र बाध्यबाधक-योर्भेदोभिधित्सितः। किंतु बाधकाभिमतस्याद्वैतवाक्यादेः स्वस्माद्भेदः। यथा हि बाध्यस्य बाधकाभेदे बाधकत्वाभावः तथा बाधकाभिमतस्य बाधकाद्भेदेपि तदभावः। न हि बाधकभिन्नं बाधकं भवतीति। तस्मात्सामान्यपरप्रमाणस्य विशेषपरेण विरोधे सति संकोचे न कोपि दोष इति भावः ॥ क्रमेणेति ॥ चरमज्ञाने स्वाभेदं गृहीत्वा पश्चात्तद्विषयाद्यभेदं गृह्णातीति सर्वाभेदे पर्यवस्यती त्ययुक्तमित्यर्थः ॥ नन्विति ॥ श्रुतित एकदैव जातायाः सर्वाभेदबुद्धेः सर्वविषये प्रामाण्यं प्रत्यक्षबाधेन प्रतिबंधात् दुर्ग्रहमिति तत्तद्विषयप्रत्यक्षबाधनिरासक्रमनिबंधनः प्रामाण्यग्रहक्रमो न तु बुद्धिशब्दयोर्विरम्यव्यापार इत्यर्थः ॥ क्रमिका इति ॥ चरमज्ञाने स्वाभेदविषये प्रमाणमद्वैतश्रुतिरित्यादिरूपेणेत्यर्थः। अयोग्यतानिश्चयेन प्रतिबंधान्न प्रथमतः सर्वाभेदः श्रुत्या प्रतिपादयितुं शक्यत इत्याशयेन परिहरति ॥ मैवमिति ॥ नन्वयोग्यतानिश्चयो न शाब्दधीप्रतिबंधकः यदवोचः

'अत्यंतासत्यपि ज्ञानमर्थे शब्दः करोति हि । इति।
असंसर्गाग्रहस्यापि मंता शंसत्यबाधिते।
अत्यंतासदसंसर्गाग्रहं संसर्गलग्नकमि'ति।

असंसर्गाग्रहस्यांगीकर्ता प्राभाकरोपि अबाधितस्थले संसर्गग्रहमेवांगीकरोति तथा च तन्मतेप्यद्वैतश्रुत्या संसर्गप्रमैव जननीया विषयाबाधादिति खंडनश्लोकार्थः इत्याशंकां निराकरोति ॥ ब्रह्मणीति ॥ अस्तु तावदत्यंतासत्यपि शाब्दज्ञानं। तथापि तदप्रामाण्यग्रहग्रस्तमिति श्रौते ब्रह्मणि सर्वाद्वैतज्ञानेन सर्वथा प्रामाण्यग्रह इत्यर्थः ॥ विस्तरस्त्विति ॥ तथा हि। चैत्रस्य घटपटभेदे ज्ञानं मैत्रस्य कटपुटभेदे ज्ञानं देवदत्तस्य नटविटभेदे ज्ञानं यज्ञदत्तस्य तटतटीभेदे ज्ञानमिति तत्तदन्यसर्वाद्वैतार्थत्वे श्रुतेर्वाक्यभेदः। किंचाभेदज्ञानस्य तानेव शालीन् तानेव

(तरङ्गिणी)
शाटीरितिवदेकधर्मोपग्रहेणाप्युपपत्तेर्भेदग्रहस्तु नान्यथोपपादयितुं शक्यत इति प्रत्यक्षमेव बलीयः। किंच सर्वमभिन्नं घटपटौ भिन्नाविति बुध्योः प्रामाण्ये संभवति क्व बाध्यबाधकभावकल्पनापि। न हि प्रमेयत्वादिनापि सर्वमभिन्नमिति न मन्यामह इति ॥अन्यपरा इति॥ सर्वमभिन्नमिति श्रुत्यर्थः स्वस्मात्सर्वमभिन्नमित्येतावताप्युपपद्यत एव। नेह नानास्तीत्यपि प्रत्येकापेक्षया युज्यते। न हि किमपि वस्तु नाना। सर्वस्य वस्तुनः प्रत्येकमेकत्वात्। क्षणिकवादादिना स्वस्मिन्नपि भेदप्रसक्तेर्नाप्रसक्तनिषेधोपीत्याशयः। एतेन अन्यदपि यदुक्तं खंडने। सेयमद्वैतबुद्धिर्नतर्कमवतार्य प्राज्ञैरपनेया।

बाधनाबाधना यास्यास्तदा प्रज्ञां प्रयच्छथ।
क्षेप्तुं चिंतामणिं पाणिन्यस्तमब्धौ यदीच्छयेति।

तदपि निरस्तं। तर्कविरोधे श्रुतेरन्यार्थपरत्वात्। अन्यथा मीमांसोच्छेदः स्यात्। यथाहुः

मीमांसालक्षणस्तर्कः सर्ववेदसमुद्भवः।
सोऽतो वेदोरुमाप्राप्तकाष्ठादिलवणात्मवदिति।

'यस्तर्केणानुसंधत्त' इति च। यतो मीमांसालक्षणस्तर्कः सर्ववेदसमुद्भवोऽतः सत्तर्कोपि वेद एव। वेदवदेव प्रमाणम्। रुमाशब्देन समुद्रतीरप्रदेशविशेषः। रुमां प्राप्तः काष्ठलोष्टादिः सर्वोपि पदार्थः लवणात्मक एव यथा भवति तथा वेदोद्भवस्तर्को वेद एव भवतीति श्लोकार्थः। 'नैषा तर्केण मतिरापनेये'त्यादिश्रुतिस्तु शुष्कतर्कं निषेधति। तस्मात्

अक्षयं चाक्षरीत्रस्ताऽद्वैतगीः पूतनापकं।
त्यक्तभावांतरा कृष्णं ब्रह्माप्यप्रापयच्च नः।

कं आप न कमपि। कं सुखं च। भावः पदार्थो जीवश्च। अप्रापयत् प्रियमकरोत्। प्रियशब्दाण्णाविष्टवद्भावेप्रियस्थिरेति प्रादेशः।

व्यासाद्रिसृततर्काबुपूरैः पक्षयुगं युजि।
न्यायामृततरंगिण्यां नाक्षाबाधोऽद्वय श्रुतेः॥

॥ द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखंडनभंगः॥

## न्यायामृतकण्टकोद्धारः

एवं सामान्याकारेण मिथ्यात्वेऽद्वैतश्रुतिमानतां निरस्य विशेषतोऽपि निराकरिष्यन् एकमेवाद्वितीयमिति श्रुतेर्मिथ्यात्वपरत्वं निराकरोति किञ्चेति। अत्र प्रष्टव्यम्। एकमेवाद्वितीयमित्यादि श्रुतीनामविचारपूर्वकमापातत एव प्रमितिमात्रेण मिथ्यात्वपरत्वमुत पूर्वोत्तराविरोधेन प्रमाणान्तराविरोधेन चेति। आद्य आह शब्दस्य हीति। आपातप्रतीतः पूर्वोत्तराविरोधप्रमाणान्तराविरोधाद्यविचारेण प्रतीत इत्यर्थः। आज्यैः स्तुवत इति। प्रमाणलक्षणे चतुर्थपादे तृतीयाधिकरणे चिन्तितम्। यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः। अत्र चित्रया यजेत पशुकामः, पञ्चदशान्याज्यानि। सप्तदशपृष्ठानि उदाहरणम्। नचोत्पत्तिवाक्यमाज्यैः स्तुवत इत्यादि। तत् परित्यज्य तत्प्रकरणे श्रुतं गुणवाक्यं किमर्थमुदाह्रियत इति वाच्यम्। उत्पत्तिवाक्ये पक्षद्वयेऽपिनिर्णयकारणाभावात् गुणवाक्याधीन निर्णयत्वात् तदेवोदाहरणमङ्गीक्रियते। तथाहि। आज्यैः स्तुवत इत्युत्पत्तिवाक्ये न तावत् गुणविधानं संभवति। घृतस्य स्तोत्राङ्गत्वाभावात्। न च तेन मन्त्रा लक्षणीयाः। मन्त्राणां घृतसंबन्धानवगमात्। अनेनैव तत्संबन्धबोधने गौरवम्। न वा नामधेयत्वम्। रूढत्वात्। तस्माद् गुणवाक्य एव विचारः। अत्र चित्राज्यादिशब्दः किं गुणविधयः कर्मनामधेयं वेति। तदर्थमिदं विचार्यते किं तत्र गुणविधाने वाक्यभेदोऽस्तिनवेति। किं तावत् प्राप्तम् ? चित्राज्यादिशब्दा गुणविधय इति। न चोद्भिन्न्यायेन कर्मनामत्वमिति वाच्यम्। रूढत्वेन कर्मनामत्वासंभवात्। उद्भिदादौ यौगिकत्वेन कर्मनामत्वसंभवात् वैषम्यम्॥ न च सोमेन यजेतेत्यत्र सोमवतेतिवत् मत्वर्थलक्षणादोष इति वाच्यम्। तत्रैकवाक्यत्वेन वैयधिकरण्येनान्वये विरुद्धत्रिकद्वयापातेन मत्वर्थलक्षणाश्रयणेऽपि प्रकृत उत्पत्तिवाक्ये करणत्वेनार्थाक्षिप्तं यत् साध्यत्वं तदनुवादेन वैयधिकरण्येन गुणविधानेन तद्दोषाभावात्। एवं च चित्रया यजेतेत्यत्राग्नीषोमीययागानुवादेन चित्रत्वस्त्रीत्वे विधीयेते। पञ्चदशान्याज्यानीत्यत्रापि आज्यैः स्तुवत इत्युत्पत्तिवाक्यावगतस्तोत्राङ्गतयाऽज्यसंख्ये विधीयेते। न चैवं सति वाक्यभेदः। चित्रया यजेतेत्यत्र चित्रत्वस्त्रीत्वविशिष्टैककारकविधानेन पशुनेतिवत् एककारकोपात्तत्वेन वाक्यभेदा भावात्। न चैवं सति पशुकामपदायोग इति वाच्यम्। पशु साधनकत्वादग्नीषोमीययागस्य यागाङ्गतया प्राप्तकामनानुवादरूपत्वेन दोषाभावात्। पञ्चदशाज्यानीत्यत्रापि सङ्ख्याविशिष्टघृत विधानात् वाक्यभेदायोगः। एवं चाज्यैः स्तुवत इत्यत्राज्यपदमुत्पत्तिवाक्यप्राप्तगुणानुवादकम्। न नामधेयम्। नचाज्यस्य कथं पञ्चदशत्वम्। कथं च स्तोत्राङ्गत्वमिति वाच्यम्। यथाग्निमुपनिधाय स्तुवत इत्यत्राग्नीनां पुरोनिधानेनेवाज्यानामपि तत्कालसंनिधापनेन स्तोत्राङ्गत्वसंभवात्। पात्रभेदमादाय संख्याविशिष्टत्वसंभवाच्च। तस्माद् आज्यादिपदं न नामधेयम्। किन्तु गुणविधिरिति। अत्रोच्यते। चित्रया यजेतेत्यत्र न तावदग्नीषोमीय यागानुवादेन चित्रत्वस्त्रीत्वे विधीयेते। प्राप्तकर्मानुवादेनानेक गुणविधाने वाक्यभेदप्रसङ्गात्। अन्यथा ग्रेयोऽष्टाकपाल इत्यत्रापि तदभावप्रसङ्गः। न च विशिष्टकारकविधानाददोष इति वाच्यम्। विशिष्टविधानेऽपि गौरवापरिहारात्। अन्यत्रागतिकत्वात् विशिष्टविधानम्। किं च कामपदं फले मुख्यम्। साधने च गौणमभ्युपगतं स्यात्। न च मुख्ये संभवति अमुख्यं युज्यते। अपि च दधिमधुघृतं पयोधाना उदकं तण्डुला स्तत्संसृष्टं प्राजापत्यमिति प्रकृतो यागः फलाकांक्षी। अयं च करणाकांक्षी। एवं चान्योन्याकांक्षालक्षणेन प्रकरणेन प्रकृतयागस्य फलान्वये संभवति अप्रकृतयागान्वयानुपपत्तेः। तस्मात् चित्रया यजेतेत्यनेन

(कण्टकोद्धारः)

प्रकृतयाग एव फलविधानम्। चित्रापदं च सामानाधिकरण्येन यागनामधेयम्। चित्रापदं च चित्रद्रव्यकत्वात् यागे युज्यते। सोमेनेत्यत्र रूढिबाधकवाक्यभेदादेरभावात् तत्र मत्वर्थलक्षणया द्रव्यविधिपर्यवसानम्। प्रकृते रूढिबाधकवाक्य भेदादेः सत्वात् नामधेयत्वमेव। एवं पञ्चदशाज्यानीत्यत्र द्रव्यसंख्ययोर्विधाने वाक्यभेद एव। न च संख्याविशिष्ट द्रव्यविधानात् तदभाव इति वाच्यम्। समासकारकाभावेन विशिष्टप्रतीत्यभावात्। तस्मात् आज्यानुवादेन संख्यामात्रं विधेयम्। इदं च तदा स्यात् यदि उत्पत्तावाज्यपदं नामधेयं स्यात् नान्यथेति गुणवाक्यवशादेवोत्पत्तौ नामत्वं विज्ञायते। किंचाज्यैः स्तुवत इति सामानाधिकरण्यान्नामत्वम्। यदाजिमीयुरिति वाक्यशेषाच्च नामत्वं युक्तम्। द्रव्यपरत्वे तद्विरोधात्। तस्मादाज्यपदमुत्पत्तौ नामधेयमिति चित्राज्याधिकरणम्।

आकाशाधिकरणं चाकाशस्तल्लिङ्गादिति प्रकृतब्रह्ममीमांसायामेव। एवं चापातप्रतीत एव यदि वाक्यार्थः स्यात् तर्ह्यतिप्रसङ्ग इति भावः। अन्ध इति। अत्र विन्दतिर्दर्शनार्थे। धातूनामनेकार्थत्वात्। तथाच प्रतीतोऽर्थो विरुद्ध इति भावः। मृदब्रवीदित्यस्य च निर्णयार्थमभिमान्यधिकरणं स्पष्टमेव। बिभेतीति। अत्राल्पश्रुतात् स्वार्थप्रच्यावनेन वेदस्य भीत्युक्त्यन्यथानुपपत्त्या प्रतीतार्थातिरिक्तोऽपि गहनार्थोऽस्तीति ज्ञायते। अन्यथा स्मृतौ तदुक्तिर्न स्यात्। कश्छन्दसामिति। को धीरो धीमान् छन्दसां योगं वाच्यवाचकभावसंबन्धम्, अस्य वाक्यस्यायमेव वाक्यार्थ इति वाक्यार्थे योगं संबन्धं विचारमन्तरोपदेशमनपेक्ष्य वा वेद जानातीत्यर्थः। यद्यापात प्रतीतो न वाक्यार्थः तर्हि कोऽर्थ इत्यतो द्वितीय एवाङ्गीकर्तव्य इत्याह किंत्विति। अत्रार्थे जैमिनिसूत्र संमतिमाह उक्तंहीति। सूत्रस्य चायमर्थः। शब्दविज्ञानात् विज्ञाताच्छब्दात् पदार्थाभिधानद्वारेण यदसन्निकृष्टेऽर्थे ताद्रूप्येण तद्विपर्ययेण वापरिच्छिन्नेऽनिर्णीतेऽर्थे विज्ञानं तच्छास्त्रं शाब्दनामकं प्रमाणम्। कथमस्य प्रकृतोपयोग इति चेदित्थम्। आपातप्रतीतो हि निर्णीतो बाधितो वा स्यात्। विचारलभ्यार्थस्यापाततोऽप्रतीतेः। तथा च सन्निकृष्टशब्दापातप्रतीतशब्दयोरेकार्थत्वेन सन्निकृष्टादन्यस्मिन् शब्दस्य प्रामाण्योक्त्य आपातप्रतीतेऽर्थे शब्दस्याप्रामाण्य मुक्तं भवति। अत्रैव भट्टवार्तिक संमतिमाहेतिचेत्यन्तेन। जिहासितं व्यावर्तितमित्यर्थः। तद्रूप्येण परिच्छेद स्तद्रूपेण निर्णीतत्वम्। तद्विपर्ययतोऽपि चेत्यत्र परिच्छेद इति संबध्यते। तद्रूपविपरीतरूपेण परिच्छेद इत्यर्थः। उत्सर्गापवादयोः विषयाविषयौ ज्ञात्वा अयमस्य विषयोऽयं नेति पूर्वोत्तराविरोधेन प्रमाणान्तराविरोधेन च ज्ञात्वा तेनापवादेनोत्सर्गस्य बाधः कल्प्यः। उत्सर्गस्य विषयम्, अपवादस्याविषयं ज्ञात्वा बाधाभावः, अपवादस्य विषयमुत्सर्गस्याविषयं ज्ञात्वा बाध इति विवेक्तव्यमित्यर्थः। न तु सामान्यदर्शनात्। आपातप्रतीतिमात्रेणेत्यर्थः। आपातप्रतीतो न वाक्यार्थ इत्यत्राचार्यसंमतिमाह उक्तं चेति। दृष्टानुसारेण परीक्षितप्रत्यक्षानुसारेण। अस्तु नापातप्रतीतो वाक्यार्थः। किन्तु पूर्वोत्तराविरुद्धः प्रमाणान्तराबाधितश्च। ततोऽपि श्रुतेर्मिथ्यात्वपरत्वे को दोष इत्यत आह अत्रचेति।

न च प्रत्यक्षं चन्द्रप्रादेशिकत्वादि प्रत्यक्षवदप्रामाण्यशङ्कास्कन्दितम्। श्रुतिस्त्वपौरुषेयतया निर्दुष्टा। तथा च कथं प्रत्यक्षबाधः श्रुतेरिति वाच्यम्। प्रत्यक्षस्य श्रुतितोऽपि प्राबल्यस्याप्रामाण्यशङ्कानास्कन्दितत्वस्य

(कण्टकोद्धारः)

चोक्तत्वात्। ननु प्रत्यक्षेण सर्वत्र भेदो गृहीत एवेति न नियमः। तस्य नियतविषयत्वात्। न च सामान्यलक्षणादि जन्यं न नियतविषयमिति वाच्यम्। सामान्यलक्षणाया अनभ्युपगमात्। अभ्युपगमे वा तस्य सामान्यविषयताऽविरोधित्वात्। न च श्रुतिरपि सामान्यविषयेति वाच्यम्। तस्यास्तत्वमसीत्यादि विशेषविषयत्वस्यापि संभवादिति खण्डनकार मतेनाशङ्कते अत्रेति। यथा खलु लोके कश्चिद् विजिगीषु र्दूरप्रस्थितः परवाहिनीं विजित्य निवृत्तौ पार्ष्णिग्राहैर्विजीयते तथा बाधबुद्धिपरम्पराऽद्वैतपराजयाय दूरं प्रस्थिता अनवस्थाभिया क्वचिन्निवृत्तौ पार्ष्णिग्राहैरद्वयाम्नायाख्यैर्विजीयते। निवृत्तौ हेतुः सुदूरधावन श्रान्तेति। भूरिकक्षानुसरणालसेति यावत्। अप्रसक्तेति। नन्वत्राप्रसक्तप्रतिषेध इति कोर्थः? किमप्रसिद्ध प्रतियोगिकत्वं, किं वा विप्रयोजनत्वमिति? नाद्यः। अन्यत्र प्रसिद्धस्यैव भेदस्य भेदत्वेनोपस्थितस्य परस्पर-प्रतियोग्यनुयोगिभावेनान्यत्र निषेधसंभवात्। न चात्रैव प्रसिद्धिस्तन्त्रम्। निषेधमात्रोच्छेदप्रसङ्गात्। न द्वितीयः। अनर्थनिवृत्तेरेव प्रयोजनत्वात्। 'नान्तरिक्षेऽग्निश्चेतव्य' इत्यादौ स्तुतिमात्रप्रयोजनेनापि अप्रसक्तनिषेधदर्शनाच्चेति चेन्न। प्रसक्तत्वं नामनिषेधाधिकरणे प्रसक्तिर्विवक्षिता। न चैवं निषेधमात्रोच्छेदः, आहार्यानाहार्य प्रतियोगिप्रसिद्धेः प्रयोजकत्वाभ्युपगमेन आहार्यप्रसिद्धिमादाय निषेधसंभवात्। आहार्यप्रसिद्धे-र्निषेधबुध्यविरोधित्वात्। अत एव प्रतियोग्यधिकरणसंसर्गारोपो निषेधबोधे कारणमिति नैयायिकाः। न चैवं प्रकृतेऽपि भेदप्रतीतिराहार्यैवास्तु। तस्या निषेध बुध्यविरोधित्वान्निषेधोप्यस्तु इति वाच्यम्। निषेधमात्रे प्रतियोगिप्रसिद्धेरनाहार्यत्वनियमाभावेपि श्रुतेः परार्थत्वेन परस्यानाहार्य प्रसक्तेरेवापेक्षिततया तस्या निषेधबुद्धिविरोधसंभवात्। अन्यथा श्रुत्या प्रत्यक्षवत् सिद्धमपि बोधनीयं स्यादिति सिद्धार्थता दोषो न स्यात्। त्वयाचानुवादकत्वेन दुर्बलत्वं नोच्येत। अत एव श्रुत्या निषेधाय तद्वैक आहुरिति सामयिकप्रसिद्धिरुक्ता। नन्वेवं तर्हि श्रुत्या क्वापि निषेधो न स्यात्। सर्वत्र प्रतिप्रसक्त्या विरोधादिति चेन्न। प्रसक्तिसंपादकान्निषेधकस्य प्राबल्योपपादनेन तदुपपत्तेः। नचैवं प्रकृतेऽस्ति। भेदज्ञानस्यैव प्राबल्यस्योपपादितत्वात्। उपपादयिष्यमाणत्वाच्च। अस्तु वा निष्प्रयोजनत्वमप्रसक्तत्वम्। तथा च भेदनिषेधस्या प्रयोजनत्वादप्रसक्तता। नचानर्थनिवृत्तिरेव प्रयोजनम्। तस्या अभेदज्ञानासाध्यत्वस्योक्तत्वात् वक्ष्यमाणत्वाच्च। पृथगात्मानमिति श्रुत्या भेदज्ञानस्यैवानर्थनिवृत्तिसाधनत्वबोधनाच्च। प्रत्युतैकात्म्यं नाम यदिदमिति श्रुत्याऽभेदज्ञानस्यानर्थहेतुत्वावगमाच्च। एतेनैव दृष्टान्तोऽपि निरस्तः। अस्त्वप्रसक्तस्यैव निषेधः। तथापि भेदोपस्थितिरावश्यकी। पदार्थोपस्थितिं विनाऽभेदबोधनायोगात्। पदार्थोपस्थितौ च भेदोऽप्युपतिष्ठत इत्याह किंचेति। ननु श्रुत्यैव चरमधीरित्यत आह न हीति। उभयत्र तात्पर्ये वाक्यभेदापत्तेः। विशिष्टतात्पर्येऽखण्डार्थत्वहानेः, अनुपयोगाच्चेति भावः। अत्र चरमधियः प्रस्तुतत्वेऽपि घटग्रहणं तस्य प्राप्तत्वेन तत्र तात्पर्यासंभवप्रतिपादनार्थम्। ननु श्रुतिस्थपदस्य घटादावनुवादकता चरमबुध्यादौ विधायकतेति नोक्तदोष इत्यत आह श्रौतस्येति। एकस्यैव पदस्यैकदानुवादकत्वं विधायकत्वं च विरुद्धमिति भावः। ननु प्रत्यक्षेण स्वरूपमात्रोपस्थितिः, न भिन्नत्वेनेत्यत आह श्रुत्यापिहीति। ननु यदा प्रत्यक्षादिना स्वरूपं ज्ञायते तदाऽवश्यं भेदो ज्ञायत एवेति न नियमः। अभेदभ्रमोच्छेदप्रसंगात्। स्वरूप भेदज्ञानयोर्भिन्नप्रकारकत्वानुभवाच्च। स्वरूपज्ञानेन भेदव्यवहारप्रसंगाच्च। नापि स्वरूपज्ञानानन्तरं भेदोऽवश्यं

(कण्टकोद्धारः)
ज्ञायत एवेति नियमः। अनवस्थाप्रसंगात्। अतो भेदज्ञानस्यानावश्यकत्वात् न कोऽपि दोष इति चेन्न। भावानवबोधात्। त्वयाऽद्वैतश्रुत्या ह्यभेदो बोध्यत इत्युच्यते। तथा यथाकथंचिदुपस्थितयोरभेद बोधने किंचित् केनचिदभिन्नमिति ज्ञानं स्यात्। तच्चानुपयोगि। पूर्वसिद्धत्वेनाद्वैतवाक्यासाध्यं च। अतः प्रत्यक्षेण बाधकतावच्छेदकबाध्यतावच्छेदकप्रकारेणोपस्थितयोरद्वैतश्रुत्याऽभेदो बोध्यत इति स्वीकर्तव्यम्। तथा च कथं न भेदोपस्थितिः? व्यावृत्तरूपेणोपस्थितेरेव भेदोपस्थितित्वात्। तेन रूपेणोपस्थितयोरभेदप्रमाभावात् भेदव्यवहारहेतुत्वाच्च। वस्तुतस्तु स्वरूपोपस्थितिरेव भेदज्ञानम्। 'प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपमनुभूयते' इत्यादिनास्मिन्नर्थेऽनुभवस्य प्रमाणत्वेनोक्तत्वात्। भ्रमश्च न सर्वाभिन्नमिदमिति। किन्तु क्वचिदंशे। एवं च यदंशे भ्रमः तदंशे दोषवशात् भेदो न गृहीत इति भ्रमो युज्यते। भेदव्यवहाराहेतुत्वं चासिद्धम्। विस्तरस्तु भेदखण्डनोद्धारे भविष्यति। एवं च स्वरूपज्ञानमेव भेदज्ञानमिति पक्षे दोषाभावात् भेदोपस्थितेर्विरोधिन्या विद्यमानत्वात् न कुत्राप्यभेदो बोधयितुं शक्यत इति सूक्तं कथं यामिकगृहे चोर इव श्रुतिस्तत्र तिष्ठेदिति। चरमज्ञानस्येति। न चाद्वैतज्ञानविषयस्य तात्त्विकत्वान्न तद्विषयापहारकत्वम्। चरमज्ञानविषयस्य तदभावात् तदपहारकत्वमिति वाच्यम्। अद्वैतज्ञानविषयः सत्यः, चरमज्ञानविषयस्त्वसत्य इत्यस्याद्याप्यसिध्याऽन्योन्याश्रयात्। अन्यथेति। सत्यप्युभयोः साम्ये यदि विषयापहारस्तदेत्यर्थः। न च सर्वमिथ्यात्वं सर्वासत्वान्नातिरिच्यत इतीष्टापत्तिरिति वाच्यम्। तथात्वे बौद्धमतप्रवेशापत्त्याऽवैदिकत्वापत्तेः सर्वासत्वस्यानिष्टत्वात्। व्यावहारिकभेदमात्रेणेति। ननु व्यावहारिक भेदमात्रं न बाधकत्वे प्रयोजकम्। किन्तु यत् प्रबलं तद् बाधकम्। यच्च दुर्बलं तद् बाध्यम्। अद्वैतज्ञानं च परीक्षितप्रमाणभावत्वात् प्रबलम्। इतरत्तु तदभावाद् दुर्बलमिति व्यवस्थायाः प्रदर्शितत्वात् न द्वैतज्ञानस्य बाधकत्वम्। किंतु विपरीतमेवेति चेन्न। द्वैतप्रत्यक्षस्य साक्षिरूपत्वेनाद्वैत श्रुतिप्रत्युपजीव्यत्वेन च तत्प्राबल्यस्य पुरैव दर्शितत्वात् द्वैतप्रत्यक्षस्यैव बाधकत्वं, न व्यावहारिक भेदमात्रेणेत्युच्यत इति न कश्चिद् दोषः। अन्यथा आपो वा इति। न चात्र जलाभेदबोधनेऽपि न बाध्यबाधकयोरैक्यबोधनम्। अतस्तत्र बाध्यबाधकभावो भविष्यतीति वाच्यम्। जलस्य सर्वाभेदबोधने बाध्यबाधकयोरप्यभेदबोधनात्। अन्यथा सर्वस्य जलाभेदस्यैवापर्यवसानात्। न हि सर्वं जलाभिन्नम्, बाध्यबाधकयोश्च भेद इति संभवति। अन्यथाऽद्वैतवाक्यमपि सर्वस्य ब्रह्मभेदं बोधयति, न तु बाध्यबाधकयोरिति स्यात्। अपिचेति। सामानाधिकरण्येन पदार्थयोरैक्यं प्रतीयते। न च प्रकृते सर्वस्य ब्रह्मणाऽभेदः संभवति। सर्वस्य जगतो मिथ्यात्वात्। ब्रह्मणश्च सत्यत्वात्। सत्यानृतयोरैक्यायोगादित्यर्थः। ननु मृद् घटः 'इदं रजतम्' इत्यादिवदुपादानोपादेयभावेनापि सामानाधिकरण्योपपत्तेर्नेदं सर्वमिथ्यात्व तात्पर्यबाधकमिति चेन्न। श्रौतं सामानाधिकरण्यमभेदनियतमिति त्वया अवश्यं वाच्यम्। अन्यथा तत्वमसीत्यत्र सामानाधिकरण्यस्य प्रकारान्तरेणैवोपपत्त्या तेन जीवब्रह्माभेदो न सिध्येत्। न च तत्रोपक्रमादिनाऽभेदे तात्पर्यनिश्चयात् न सामानाधिकरण्यस्यान्यथोपपत्तिरिति वाच्यम्। प्रत्यक्षविरोधे उपक्रमादेरभेदे तात्पर्यायोगात्। प्रकृतेऽप्यभेदे तात्पर्यस्य वक्तुं शक्यत्वात्। न च सर्वस्य मिथ्यात्वात् नाभेदे तात्पर्यमिति वाच्यम्। अन्योन्याश्रयात्। किंच ब्रह्मजगतोर्न मृद्घटादिवदुपादानोपादेयभावः। ब्रह्मणो निर्विकारत्वात्। नापीदं रजतमितिवद् अधिष्ठानाधिष्ठेय भावेन। श्रौतसामानाधि-

(कण्टकोद्धारः)

करण्यस्याधिष्ठानाध्यस्तभावेऽदर्शनात्। तस्मात् श्रौतं सामानाधिकरण्यं सर्वमिथ्यात्व तात्पर्यं बाधकमेव। अन्त्ययोरिति। अभेदे भेदनिषेधेचेति पक्षयोरित्यर्थः। प्रमात्वं स्यादिति। तात्पर्यतः श्रुत्याऽभेदस्य बोधितत्वेनाबाधितार्थकत्वादिति भावः। अप्रामाण्यं स्यादिति। सर्वाद्वितीयत्वबोधकश्रुत्या बाधितत्वादिति भावः। तस्यापीति। परमार्थतोऽभेदेऽप्याविद्यकत्वे जीवस्य ब्रह्मभेदेऽप्याविद्यकत्वं स्यात्। तथाच जीवस्वरूपं सत्यमिति त्वन्मतहानिः। काल्पनिकभेदेनेति। तथात्वे वह्नौ वह्निभेदभ्रमेण तस्यादाहकत्वं, गुञ्जापुञ्जे च वह्निरिति भ्रमेण तस्य दाहकत्वं च स्यादिति भावः। मोक्ष इति न चैकस्यामेव ब्रह्मव्यक्तौ तत्तदसाधारणस्वभावानां कल्पितत्वेनासत्वात् सर्वकल्पनानिषेधकाले कल्पितधर्मावच्छिन्नभेदाभेदादि प्रसक्तेरयोग इति वाच्यम्। अद्वैतश्रुतेरभेदे भेदनिषेधे च तात्पर्ये तत्तदसाधारण स्वभावानां कल्पितत्वे प्रमाणाभावेन सर्वकल्पनानिषेधकालासंभवेन मोक्षेऽपि तत्तदसाधारणधर्मावच्छिन्नाभेद प्रसक्त्योक्त दूषणगणस्य युक्तत्वात्। सुखादाविति। एवं हि घटपटयोर्घटत्वपटत्वरूपेण भेदेऽपि प्रमेयत्वेनाभेदवत् सर्वपदार्थानामभेदः स्यात्। एवं सति नास्माकमनिष्टम्। तथा प्रतिपादनस्य प्रयोजनाभावश्चेति भावः। ननु तत्तदसाधारण धर्मावच्छिन्नभेदमभ्युपेत्य सत्वावच्छिन्नभेदनिषेधः क्रियत इत्यत आह असाधारणरूपेति। घटादिकं सन्नेति सत्वावच्छिन्नभेदाप्रसक्त्या तथा निषेधे अप्रसक्तप्रतिषेध इति भावः। ननु सद्रूपमात्र भेदनिषेधो नाम न सत्वावच्छिन्नभेदनिषेधः। किन्तु सद्रूपे सद्द्रव्यं, सन् गुण इत्यादिप्रतीत्या प्रसक्तानां द्रव्यत्वादिधर्माणां निषेध इति चेन्न। तर्हि अभेदे भेदनिषेधमात्रे तात्पर्यमिति पक्षो भग्नः स्यात्। न च धर्मनिषेध एव तात्पर्यं मयाऽङ्गीक्रियत इति वाच्यम्। तावता ब्रह्मनिर्धर्मकमिति सिद्धावपि अद्वितीयत्वासिद्धेः। धर्माणां श्रुत्या विहितत्वेन तन्निषेधायोगाच्च। निषेधश्रुतेर्बल वत्त्वमिति तु निरस्तं, निरसिष्यते च। मास्तु प्रत्यक्षेणैव सर्वत्र भेदप्रसक्तिः। अर्थापत्त्या तु भविष्यतीत्याह किं चेति। अनुपपत्तेः भेदज्ञानत्वानुपपत्तेरित्यर्थः। अर्थापत्त्या घटपटौ भिन्नाविति बुद्धेरद्वैतज्ञानेन भेदे गृहीतेऽपि स्वस्य न तेन भेदो गृहीत इति सैवाद्वितीयश्रुतेर्द्वारमिति खण्डनकारमतमाशङ्कते यच्चोक्तमिति। आद्येति। आद्या या धीर्घटपटौ भिन्नाविति तद्वेद्यो यो भेदः तदीया तज्ज्ञानत्वविषया अन्यथानुपपन्नता तस्य ज्ञानस्याद्वैतज्ञानभेदं विनानुपपन्नता स्वज्ञानोपेक्षणात् स्वस्याद्वैतज्ञानभेदानवगाहनात् तदभेदप्रवृत्तामद्वयश्रुतिं न बाधेतेत्यर्थः। अयमाशयः। प्रतीयमानैवानुपपन्नता भेदं साधयतीति वाच्यम्। अनुपपद्यमानदर्शनादुपपादके बुद्धिरर्थापत्तिरिति स्वीकारात्। तथा च स्वगोचरज्ञानात् स्वात्मनो भेदं विना घटपटभेदानुपपत्त्यभावात् स्वज्ञानात् स्वात्मनो भेदं न साधयेत्। ततश्च तज्ज्ञानात् तस्या अभेदबोधनद्वारा सर्वाद्वैते पर्यवस्यतीति। अर्थापत्तेरिति। यावद्भेदं विना घटपटभेदबुद्धेर्भेदज्ञानत्वमनुपपन्नं तावान् सर्वोऽपि भेदोऽर्थापत्तेर्विषय इति अर्थापत्तेरद्वैतज्ञानाद्भेदाभावे आद्यबुद्धेर्भेदज्ञानत्वमनुपपन्नमेवेति सोऽपि भेदोऽर्थापत्तेर्विषय एवेति कथं सैवाद्वितीयश्रुतेर्द्वारं स्यादिति भावः। न चार्थापत्तिरनुमानमाक्षेपो वा? नाद्यः। विवादाध्यासिता बुद्धिः सर्वतो भिन्नेति वा साध्यं, यतः कुतश्चिद् भिन्नेति वा? स्वेतरसर्वभिन्नेति वा? नाद्यः। स्वस्मात् भेदसाधने बाधात्। न द्वितीयः यतः कुतश्चिद् भेदसिद्धावपि यतो न भेदः सिद्धः तत्रैवाद्वयश्रुतेरवकाशात्। न तृतीयः। अप्रसिद्धविशेषणत्वात्। न द्वितीयः। अर्थापत्तेः स्वाविषयत्वात्। ययोर्हि भेदं विना

(कण्टकोद्धारः)
यत्रानुपपत्तिर्गृहीतातयोस्तत्र भेदग्रहेऽपि अनुपपत्तावनुपत्त्यन्तराग्रहणात्। सर्वत्र तद्ग्रहणे च धाराविश्रान्तौ चरमधीरुदाहरणमिति चेन्नैवम्। उभयथाप्यदोषात्। न तावदनुमानपक्षे दोषः। विवादाध्यासिता बुद्धिः स्वेतरसर्वस्माद्भिन्नेति साध्यकरणात्। न चाप्रसिद्धविशेषणत्वमिति वाच्यम्। त्वयापि सर्वपदार्थेषु व्यावहारिकभेदस्वीकारात्। अन्यथा तवापि स्वप्रकाशत्वाद्यनुमानोक्तिर्नस्यात्। किञ्च स्वेतरसर्वस्माद् भेदाभावे तत्तदसाधारणव्यवहारो न स्यात्। अपिचाप्रसिद्धत्वं नाज्ञातत्वम्। असतोऽपि ज्ञानस्वीकारात्। अत एवोक्तमत्यन्तासत्यपीति। नाप्यप्रमितत्वम्। तथात्वे तव मिथ्यात्वानुमानं न स्यात्। साध्यादिप्रमितेरनङ्गीकारात्। अत एव सर्वं सर्वस्माद् भिन्नमित्यप्युपपादितं भवति। अर्थापत्तिपक्षेऽप्यदोषः। न च तस्याः स्वभेदाविषयत्वमिति वाच्यम्। यावता विना तस्यार्थापत्तित्वमनुपपन्नं तावद्भेदानां तद्विषयत्वात्। न हि तस्या अद्वैत ज्ञानाभेदेऽर्थापत्तित्वमुपपद्यते। एवं चार्थापत्तेः स्वेतरसर्वस्माद् भेदं विनार्थापत्तित्वस्यानुपपन्नत्वात् सर्वो भेदोऽर्थापत्तिविषय इति न कुत्राप्यद्वैतश्रुतेरवकाशः। न च तथाऽनुपपन्नत्वेन ज्ञानं नास्तीति वाच्यम्। तत् किम् असाधारणस्वरूपं ज्ञातं न वा ? आद्ये तथाऽनुपपन्नत्वज्ञानध्रौव्यात्। द्वितीयेऽर्थापत्तेरेवाप्रवृत्तिः। न हि पीनत्वस्य प्रमेयत्वेन ज्ञानेऽर्थापत्तिः प्रवर्तते। एतेन चरमधीरेवोदाहरणमिति निरस्तम्। ननु स्वभेदस्यार्थापत्त्यसंबन्धित्वात् कथमर्थापत्तिविषयत्वमित्यत आह उपपादकत्वं हीति। अन्यथेति। उपपादकत्वमर्थापत्तिविषयत्वे न तन्त्रम्, किन्त्वर्थापत्ति संबन्धित्वं, तदेत्यर्थः। दृग्दृश्यसंबन्धाद्यन्यथानुपपत्तेरपि स्वासंबन्धित्वात् स्वमिथ्यात्वविषयत्वं न स्यादित्यर्थः। ननु दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम्। तथाहि वस्तुत उपपादकत्वं नार्थापत्तिविषयत्वे तन्त्रम्। उपपादकत्वभ्रमादर्थापत्त्याभासानुपपत्तेः। किन्तूपपादकत्वेन ज्ञातम्। तथाच येन रूपेणोपपादकं ज्ञातं तद्रूपावच्छिन्नमुपपादकमर्थापत्तेर्विषयः। प्रकृते च घटपटभिन्नत्वमुपपाद्यम्। तदुपपादकतावच्छेदकं न तावत् सर्वभिन्नत्वम्। स्वस्मादपि भेदप्रसंगात्। नापि स्वेतरभिन्नत्वम्। अद्वैतवादिनं प्रति स्वेतरविशेषणासिद्धेः। स्वशब्दाननुगमश्च। तस्मादत्राननुगतमेवोपपादकतावच्छेदकं वाच्यम्। तथाचानुपपत्तेरुपपादकतावच्छेदकानाक्रान्तत्वात् न स्वविषयत्वम् दृग्दृश्यसंबन्धानुपपत्तेश्चोपपादकदृश्यत्वावच्छिन्नम्। एवं चानुपपत्तेरुपपादकतावच्छेदक दृश्यत्वाक्रान्तत्वात् स्वमिथ्यात्वविषयत्वमिति। मैवम्। प्रकृतेऽपि स्वेतर सर्वभिन्नत्वस्योपपादकतावच्छेदकस्यानुगतस्य सत्वेन स्वविषयत्वसंभवात्। न चाद्वैतवादिनं प्रति स्वेतरेत्यसिद्धमिति वाच्यम्। दत्तोत्तरत्वात्। न च स्वशब्दाननुगमः। तस्यादोषत्वात्। अन्यथा विवरणीयाविद्यानुमाने स्वप्रागभावेति विशेषणमयुक्तं स्यात्। दृश्यत्वं च नोपपादकतावच्छेदकम्। तस्य दृश्यत्वभङ्गोक्तरीत्या ब्रह्मसाधारणत्वेन तस्यापि मिथ्यात्वप्रसंगात्। असतोऽपि असद्वैलक्षण्यज्ञानानुपपत्त्या दृश्यत्वात् तस्यापि मिथ्यात्वप्रसङ्गश्च। एवं चोपपादकतावच्छेदकमननुगतमेव वक्तव्यम्। उक्तं चांशित्वाद्यनुमानादिषु। अन्यथा तत्रा प्रयोजकत्वापत्तेः। तथाच दृग्दृश्यसंबन्धानुपपत्त्यादेरुपपादकतावच्छेदकानाक्रान्तत्वात् स्वविषयत्वं न स्यादिति तवैवानवस्था स्यादिति साधूक्तमिति दिक्।

उक्तमर्थं कारिकारूढं करोति एवं चेति। कथं चेति। न च साक्षिणा कथं स्वस्येतरस्माद् भेदो ग्राह्यः ? प्रतियोगिज्ञानाभावादिति वाच्यम्। स्वेतरसर्वत्वेनेतरज्ञानस्य सर्वदा सत्वात्। उपपादयिष्यते चैतत् भेदखण्डनोद्धारे। अन्यथेति। यदि साक्षिणा स्वेतरसर्वभेदः स्वस्मिन् न गृहीतः तदेत्यर्थः।

(कण्टकोद्धारः)
न च साक्षिणि स्वेतरभेदव्याप्यस्य ग्रहणान्न संशय इति वाच्यम्। भेदव्याप्यस्य स्वरूपेण ग्रहणे संशयानिस्तरात् तत्वेन ग्रहणापेक्षया भेदग्रहणस्यैवोचितत्वात्। उपसंहरति तस्मादिति अन्यथेति। यदि न संकोचस्तदेत्यर्थः। अत्र कण्टकोद्धारः प्रागेव विहित इत्यलम्।

किञ्चेति। तयोराशुतरविनाशित्वेनोत्पत्तिक्षणावधिकतृतीय क्षणे विनष्टत्वात् विरम्य स्थित्वा स्थित्वा कार्यजनकत्वं न संभवतीत्यर्थः। न च पुनरनुसंहितः शब्दो बोधान्तरं जनयतीति नोक्तदोष इति वाच्यम्। अनुसन्धानकल्पने मानाभावादिति भावः। ब्रह्मणीति। न च यदंशे न बाधकोपस्थितिः तदंशे प्रामाण्यबुद्धिरिति वाच्यम्। न हि प्रातिस्विकसर्वभेदः श्रुत्याबोध्यते। किन्तु ब्रह्मणः सर्वभेदः तदन्यथानुपपत्त्या चेतराभेदः कल्प्यते। एवं च स एव यदा प्रत्यक्षादिबाधितः तदेतराभेद कल्पकाभावात् तत्प्रामाण्यबुद्धिर्दूरत एवापास्तेति भावः। नन्वत्र प्रत्यक्षविरोध एवोक्तो नागमादिविरोध इत्यत आह विस्तरस्त्विति। परमप्रकृतमुपसंहरति तस्मादिति॥

द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखण्डनभङ्गः।

## न्यायामृतप्रकाशः

''एकमेवाद्वितीय'' मित्यादावद्वितीयमित्यादिशब्दैर्द्वितीयमात्रनिषेधात् श्रुतिर्मिथ्यात्वे मानमिति यदुक्तं तन्निषेधति॥ किंचेत्यादिना॥ एकमेवेतीति शब्दः प्रकारवाची। तथाच ''एकोद्रष्टाऽद्वितीयो भवती''ति श्रुतिरप्युदाहर्तव्या। तेनाग्रिमेण ''सलिल'' इत्यादिना नासंगतिः। ननूक्तविधया मिथ्यात्वस्य ततोऽवगमात्कथं सा तत्र न मानमित्यत आह॥ शब्दस्येति॥ कुतो नेत्यत आह॥ आज्यैस्तुवत इति॥

॥ चित्राज्याधिकरणेति॥ चित्राधिकरणाज्याधिकरणेत्यर्थः। प्रथमाध्याये चतुर्थपादे तृतीयाधिकरणे चिंतितं ''चित्रया यजेत पशुकाम'' इति श्रूयते। तत्र चित्राशब्दो गुणविधिर्यागनामधेय वेति संदेहे संशये ''अग्नीषोमीयं पशुमालभेते''ति विहितं पशुयागमत्र यजेतेत्यनूद्य यागसाधनीभूतपशौ चित्रवर्णत्वस्त्रीत्वरूपो गुणो विधीयते। तथाच पशुकामश्चित्रया चित्रवर्णयुतस्त्रीपशुना यागं कुर्यादित्यर्थ इति पूर्वः पक्षः। सिद्धांतस्तु चित्रत्वं स्त्रीत्वं चेति द्वावेतौ गुणौ। तयोर्द्वयोर्विधाने वाक्यभेदापत्तेः ''प्राप्ते कर्मणि नानेको विधातुं शक्यते गुण'' इति वचनात्। अथ गुणद्वयविशिष्टं पशुद्रव्यरूपं कारकं विधीयते तदा गौरवं स्यात् चित्रात्वं विलक्षणद्रव्येणोपपद्यते ''दधिमधुघृतमापोधानास्तंडुलास्तत्संसृष्टं प्राजापत्य'' मिति दध्यादीनि विचित्रद्रव्याणि षडाम्नातानि तस्माच्चित्रपदं यागनामधेयं नतु चित्रस्त्रीपशुपरमिति। उत्तरत्र पूर्वपक्षरीत्येत्यनंतरं चित्रस्त्रीपश्विति च ग्राह्यम्। अन्यथा चित्राज्याधिकरणेत्युक्त्वा पूर्वपक्ष रीत्या घृतेत्येवोक्तावत्यकौशलापत्तेरित्यवधेयम्।

प्रमाणलक्षणे नामधेयपादे चिंतितम्। ''आज्यैः स्तुवत'' इति स्तुतिप्रकरणे श्रूयते। ''पंचदशान्याज्यानी'' त्यत्राज्यशब्दो गुणविधिः कर्मनामधेयं वेति संशये रूढिप्राबल्यात्पंचदशत्वसंख्याविशिष्टघृतलक्षणो गुणो विधीयते।

(प्रकाश:)

आज्यानां च पंचदशपात्रसंबंधेन पंचदशत्वमुपपद्यते। तथाचाज्यैः स्तुवत इत्यत्रापि प्रसिद्धमेव विवक्षितमिति पूर्वः पक्षः। सिद्धांतस्तु। प्रकृते स्तोत्रपर एवायमाज्यशब्दः। न रूढ्या प्रसिद्धघृतपरः। तत्र पंचदशत्वस्याश्रयपात्रद्वारा योज्यत्वेन लक्षणापत्तेः। तथाचाज्यप्रकाशिकाभिः पंचदशस्तुतिभिरिष्टं कुर्युरिति तदर्थः। तथाचाऽऽज्यैःस्तुवत इत्यत्राऽऽज्यशब्दः स्तोत्रपर एवेति।

॥आकाशाधिकरणेति॥ ब्रह्ममीमांसायां प्रथमलक्षणे प्रथमपादे चिंतितम्। ''आकाशस्तल्लिंगादि''त्यत्र ''सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यंत'' इत्यादावाकाशशब्दो भूतपरः परमात्मपरो वेति संदेहे प्रसिद्धभूतपर एवेति पूर्वपक्षे परो वरीयस्त्वादिलिंगैः परमात्मपर एवेति सिद्धांतितम्॥अंध इति॥ तैत्तिरीयारण्यकें प्रथमाष्टके पठ्यते ''अंधोमणिमविंदत् तमनंगुलिरावयत् अग्रीवः प्रत्यमुंचत-तमजिह्वो असश्चते''ति। आवयत् वयबंधने तंतुना सूत्रितवान् प्रत्यमुंचत अमुंचत्। असश्चत प्राशंसत। अत्र वाक्यचतुष्टयस्यापातप्रतीतार्थो बाधितः। लोके हि पुरुषश्चक्षुषा मणिं दृष्ट्वा तमंगुलिभिस्तंतुना स्वीयग्रीवायां प्रतिमुच्य जिह्वया प्रशंसति। नचांधादेश्चक्षुरादिना दर्शनादिकं संभवतीत्यर्थः। विचारिते सत्यबाधितार्थोऽवगम्यते। अनंगुलिः अंगुल्युपलक्षितप्राकृतहस्तरहितो भगवान् तं जीवं आवयत् संसारेण सम्यग्बबंध। तमजिह्वो भगवदधीनजिह्वोऽयं बद्धोऽसश्चत स्तोत्रमकरोत् श्रवणादिकं कृतवान् अनंतरं पूर्वं भगवद्ज्ञानेनांधो मणिं प्रधानं ''मणिर्मुखं प्रधानंचेत्युत्तमस्य वचो भवेदि''ति वचनात् परमात्मानमविंदत विद ज्ञाने। पश्चात्तं ज्ञानिनं अग्रीवः प्राकृतग्रीवोपलक्षितदेहरहितो भगवान् प्रत्यमुंचत। प्रत्यमोचयत् संसारादिति॥ गहनत्वोक्तेश्चेति॥ अतो नापातप्रतीत एवार्थ इत्यन्वयः॥उक्तंहीति॥ शास्त्रं लिलक्षयिषता भाष्यकारेण शबरस्वामिनेत्यर्थः। एवं शास्त्रलक्षणे कोऽसंनिकृष्टशब्दार्थ इत्यत उक्तं वार्तिककृता असन्निकृष्टेत्यादि। प्रमितोऽर्थो विपरीततया प्रमितश्चार्थः सन्निकृष्ट इत्युच्यते। तद्भिन्ने शब्दः प्रमाणम्। तथाचाऽसन्निकृष्टेऽनधिगते विपरीततयाज्ञातेचार्थे विषये शब्दविज्ञानाच्छब्दश्रवणाज्जायमानं विज्ञानं यत् तच्छास्त्रम्। फलप्रामाण्यवादी चायम्। जिहासितं व्यावर्तितम्। ताद्रूप्येण स्वं यथास्थितस्तद्रूपतया परिच्छेदो ज्ञातज्ञापनं विपर्ययतोपि वा परिच्छेदो विपरीतज्ञानं च व्यावर्तितमित्यर्थः। उक्तं च वार्तिक एवोत्तरत्र

''प्रमितस्य प्रमाणे हि नापेक्षा जायते पुनः।
ताद्रूप्येण परिच्छिन्ने प्रमाणं निष्फलं परम्।
विपरीतपरिच्छिन्ने नावकाशः परस्य त्वि'' ति।

तथाच विपरीतार्थवर्णने विपरीतप्रमाजनकत्वप्राप्त्या शास्त्रत्वं न स्यादिति भावः। पूर्वोत्तराविरुद्ध एवार्थो वर्णनीय इत्यत्र वाक्यांतरं पठति॥विषयेत्यादिना॥ ननु मयापि एकमेवेत्यादेर्मानांतराविरुद्ध एवार्थो वर्ण्यत इति चेत्तत्राह॥अत्रचेति॥ एकमेवेत्यादेः श्रुतेर्द्वितीयमात्रनिषेधेन मिथ्यात्वार्थकत्व इत्यर्थः॥प्रत्यक्षेति॥ सन्घटः घटपटौ भिन्नावित्यादिप्रत्यक्षविरोध इत्यर्थः। प्रत्यक्षाविरोधं शंकते॥अत्रोक्तं खंडन इति॥ घटपटौ भिन्नाविति प्रात्यक्षिकं ज्ञानं ''सर्वं खल्विदं ब्रह्मे''त्यादिवाक्यजन्यघटपटादिसमस्तैक्यज्ञानस्य तदा बाधकं स्यात् यद्यैक्यज्ञानात्स्वयं भिन्नं स्यात् न चैतदस्ति कुत इति चेत् ऐक्यज्ञानप्रतियोगिकभेदावगाहि अन्यज्ज्ञानं

(प्रकाशः)

तावन्नास्त्येव अतः स्वयमेव तदवगाहीति वक्तव्यम्। न चैतत्संभवति। प्रत्यक्षस्य नियतविषयकत्वेन घटपटभेदमात्रावगाहितया ऐक्यज्ञानप्रतियोगिस्वधर्मिकभेदावगाहनाक्षमत्वात्। अत ऐक्यश्रुतिःस्वबाधनाय यत्प्रवृत्तं घटपटौ भिन्नाविति प्रत्यक्षं तेन सहादौ एकीभवति। अनंतरं निर्बाधा सतीस्वविषययोर्भेदैक्ययोरप्यैक्यं गृह्णातीत्येवं सर्वाद्वैते पर्यवस्यतीति क्व प्रत्यक्षविरोधः। ननु न स्वयं निर्बाधा प्रत्यक्षस्यैव बाधकत्वात्। न च नियतविषयकेण प्रत्यक्षेण श्रौतैक्यज्ञानप्रतियोगिकस्वधर्मिकभेदाग्रहणात् अन्यस्य च तद्ग्राहकस्याभावात्तेनैकीभूय स्वयं निर्बाधा सती सर्वाद्वैते पर्यवस्यतीत्युक्तमिति वाच्यम्। बाधकभूतघटपटभेदग्राहिप्रत्यक्षं बाध्यादैक्यज्ञानाद्भिन्नमिति प्रत्यक्षरूपज्ञानांतरेण प्रत्यक्षैक्यज्ञानभेदग्रहांगीकारादिति चेन्न। बाध्यबाधकयोरैक्यज्ञानप्रत्यक्षयोर्भेदावगाहिनो ज्ञानांतरस्य ताभ्यां भेदाभावे तदुभयभेदग्राहकत्वाभावात्। ताभ्यां स्वस्मिन्भेदग्रहस्य नियतविषयकेण स्वेनैवायोगात्। पुनरन्येन ज्ञानेन तद्ग्रहे वाच्येऽनवस्था स्यादतोऽनवस्थाभयाद्यत्र बुद्धिपरंपराविच्छेदस्तत्रैवांत्यज्ञाने नियतविषये स्वविषयभूतबाध्यबाधकज्ञानाभ्यां भेदस्याऽग्रहणात्तत्रैवैक्य ज्ञानं तेन चरमेण ज्ञानांतरेणैकीभूय निर्बाधं सत् सर्वाद्वैते पर्यवस्यतीति न प्रत्यक्षविरोध इत्याह॥ प्रत्यक्षमित्यादिना॥॥ नियतविषयमिति॥ घटपटभेदग्राहिप्रत्यक्षस्य श्रौतैक्यज्ञानस्यच भेदं न गृह्णाति स्वस्य स्वविषयकत्वात् ऐक्यज्ञानाविषयकत्वाच्चेत्यर्थः॥ स्वाभिन्नमिति॥ स्वस्मादगृहीतभेदमित्यर्थः॥ न बाधतइति॥ अन्यथा स्वस्यापि स्वेन बाधापत्तिरिति भावः॥ सर्वाद्वैत इति॥ ज्ञानैक्यद्वारा तद्विषययोरप्यैक्यं गृह्णातीत्यर्थः। ननु प्रत्यक्षज्ञानं श्रौतैक्यज्ञानात्स्वस्य भेदं नैव गृह्णाति। ज्ञानांतरं तु तद्गोचरं स्वविषययोस्तयोर्भेदं ग्रहीष्यतीत्यत आह॥ नचेति॥ कुतो न चेत्यत आह॥ अनवस्थेति॥॥ चरमज्ञान इति॥ भेदग्राहिणि अंतिमे ज्ञानांतर इत्यर्थः। स्वविषयात्स्वस्य भेदग्राहकस्य ज्ञानांतरस्यानवस्थाभयेनानंगीकारादिति भावः॥ बाधबुद्धिपरंपरेति॥ भेदावगाहिज्ञानांतरपरंपरेत्यर्थः॥ निवृत्ताविति॥ अनवस्थया बाधपरंपराया निवृत्तौ सत्यामित्यर्थः। पार्ष्णिग्राहैः पार्ष्णिगृह्णंतीतिपार्ष्णिग्राहास्तैः पृष्ठतो गच्छद्भिरित्यर्थः। यथा कश्चिद्दूरधावनेन श्रांतः सन् निवृत्तः पार्ष्णिग्राहेण जीयत इति प्रसिद्धम्। तद्वदिति भावः। निवृत्ता चेत्यपि पाठः।

''एकमेवाद्वितीयं नेहनानास्ति किंचने''त्यादिश्रुत्या घटपटादिभेदो निषिद्ध्यत इत्युच्यते तत्र पृच्छामः। अद्वैतबोधनात्पूर्वं घटपटादेर्भेदः प्रसक्तो नवेति। तत्राद्य एवांगीकार्यो न द्वितीयः कुत इत्यत आह॥ अप्रसक्तेति॥ आद्यपक्षांगीकारेपि किं लब्धमित्यत आह॥ तथाचेति॥॥ यत्रयत्रेति॥ घटपटविषये वा तत्प्रत्यक्षैक्यज्ञानविषये वा ताभ्यां ज्ञानांतरविषये वा तेभ्यः पुनर्ज्ञानांतरविषये वेत्यर्थः॥ यामिकगृहे चोरइवेति॥ ''यामिकोरात्रिजागर'' इत्यभिधानात् जागरूकस्सन् रात्रौ ग्रामसंरक्षको यामिकस्तद्गृहे यथा चोरस्य नावकाशः। एवं नेह नानेति श्रुतिनिषेध्यभेदप्रसंजकत्वेन यामिके प्रत्यक्षे जागरूपे सति भेदापहारित्वेन चोरभूतां नेहनानेति श्रुतिः कथमवकाशमासादयेदित्यर्थः। इममर्थं संगृह्णाति॥ एवंचेति॥ अतत्वावेदकत्वाद्भेदग्राहिप्रत्यक्षं अप्रमाणमिति पूर्वमेव निरस्तमिति हृदयम्। किंच धर्मिभूतचरमधीसिद्धिकाल एव तत्स्वरूपभेदस्यापि सिद्धत्वेन तत्राभेदश्रुतेर्नावकाशः ततश्चाऽनवस्थाभयाद्यत्र परंपराविच्छेदस्तत्रैव चरमज्ञाने ऐक्य श्रुतेरवकाश इति यदुक्तं तदसदित्याशयेनाह॥ किंचेति॥ चरमधीः प्रत्यक्षाद्यसिद्धा तत्सिद्धा वा नाद्य इत्याह॥ चरमधीरिति॥ भेदग्राहिणी चरमधीरित्यर्थः। तदभेदः चरमधियि नेहनानेति श्रुतिजन्यज्ञानादभेदोऽस्मदादिभिः श्रुत्यापि दुर्ग्रहः धर्मिण एवानुपस्थितेरित्यर्थः। ननु चरमधियः प्रत्यक्षासिद्धत्वेऽपि सर्वाभेदादिविधायकनेहनानेति श्रुतिस्थस्य किंचनशब्दस्य घटादिसर्वप्रपंचप्रतिपादकत्वेन

(प्रकाश:)

चरमधियोपि तदंतर्गतत्वाच्छ्रौतकिंचनशब्देनैव तत्सिद्धिर्भविष्यति तदभेदश्च तथा बोध्यत इति चेत्तत्राह ॥ नहीति ॥ ॥ प्राप्तत्वादिति ॥ तथा चानुवादकत्वान्न तत्र तात्पर्यमिति भाव:। ननु घटादे: प्रत्यक्षप्राप्तत्वेन तदंशे श्रौतकिंचनशब्दस्यानुवादकत्वेन तात्पर्याभावेपि चरमधियोऽप्राप्तत्वेन तदंशे श्रौतकिंचनशब्दस्याननु-वादकत्वमेवास्त्वित्यत आह ॥ श्रौतस्येति ॥ ॥ वैरूप्येति ॥ सकृत्प्रयुक्तशब्दस्यासतिबाधके एवं वैरूप्यकल्पनाऽयोगात् इत्यर्थ:। तथा चानुवादकत्वविधायकत्वाभ्यां वाक्यभेद: स्यादिति भाव:। द्वितीयेत्याह। अथेति। तेनैवेति चरमधीप्रत्यक्षग्राहकस्वरूपेणेत्यर्थ:। भेदस्य तत्स्वरूपत्वादिति भाव:। कथं नावकाश: इत्यत: तदुपपादयति। श्रुत्यापि हीति। नेह नानेति श्रुत्यापीत्यर्थ: अभिमतयोर्ज्ञानयो:। वस्तुगत्या बाध्यबाधकभावा-भावादभिमतयोरित्युक्तम्। इतरेतरभिन्नत्वेनोपस्थितयोरेवाभेति श्रुत्यापीत्यर्थ:। अभिमतयोर्ज्ञानयो:। वस्तुगत्या बाध्यबाधकभावाभावादभिमतयोरित्युक्तम्। इतरेतरभिन्नत्वेनोपस्थितयोरेवाभेद: कस्माद्बोध्य इत्यत आह ॥ यस्यकस्यचिदिति ॥ इदं बाधकं ऐक्यज्ञानं बाध्याद्भेदज्ञानाद्भिन्नमित्युपस्थितौ सत्यामेव तयोरभेदबोधने बाधकस्यबाध्याभेद: सिद्ध्यति अन्यथा बाध्यं बाधकमित्यऽसंकीर्णव्यवहारायोगेन यस्य कस्यचिद्येन केनचिदभेद इत्येव प्राप्त्या बाधकस्य बाध्याभेदासिद्धेरित्यर्थ: ॥ एवंचेति ॥ बोधनीयाभेदयोर्बाध्यबाधकत्वेना-भिमतयोर्ज्ञानयोर्भेदप्रसक्तौ तत्प्रमाणेनैव बाध:। अप्रसक्तौतु यस्य कस्यचिद्येन केनचिदभेदबोधनापत्त्या बाधकस्य बाध्याभेदाचोदनादुभयत: पाशारज्जुर्गलबंधिका रज्जुरित्यर्थ:। यदुक्तमुक्तरीत्या निर्बाधा श्रुति: सवाद्वैते पर्यवस्यतीति तदयुक्तमित्याशयेन विकल्पयति ॥ किंचेति ॥ ॥ चरमज्ञानस्येत्यादि ॥ निर्बाधा श्रुति: सवाद्वैते पर्यवस्यतीत्यस्य सर्वमिथ्यात्वं प्रतिपादयतीत्यर्थकथनमयुक्तं यथाऽद्वैतज्ञानस्य सर्वजगदंतर्गतत्वेन वस्तुगत्या स्वरूपतो मिथ्यात्वेपि व्यावहारिकसत्त्वेन प्रमात्वमंगीकृत्य तद्विषयस्याद्वैतस्यापहारो न त्वयांगीकृत:। एवं भेदज्ञानरूपचरमधियोपि जगदंतर्गतत्वेन वस्तुगत्या स्वरूपतो मिथ्यात्वेपि प्रमात्वोपपत्तेर्नेहनानेति श्रुत्या तद्विषयभूतभेदापहारोऽयुक्त इत्यर्थ:। उक्तरीत्या निर्बाधा श्रुति: सवाद्वैते पर्यवस्यतीत्यस्य सर्वमिथ्यात्वं बोधयतीत्यर्थस्वीकारेऽतिप्रसंगमाह ॥ अन्यथेति ॥ श्रुतिरनुमानं वेत्यस्य तज्जन्यं ज्ञानमित्यर्थ:। विमतं ब्रह्म सत्यज्ञानादिवाक्यस्य ब्रह्म सत्त्वं प्रतिपादयंश्चासत्त्वं गृहीत्वेत्यस्य तद्वाक्यजन्यब्रह्मसत्त्वावगाहिज्ञानस्येत्यर्थ:। बाधकस्य प्रत्यक्षज्ञानस्याप्येतदादौ योज्यम्। व्यावहारिकभेदमात्रेण बाध्यबाधकभावो मम न संमत इत्याशंकापरिहारायोक्तमंतत इत्यादि। द्वैतप्रत्यक्षबाधकत्वेन त्वयोच्यमानस्य। एवं बाध्येनेत्येतदपि बाध्यत्वेन त्वयोच्यमानेनेति व्याख्येयम्। द्वैतज्ञानेन परमार्थतोऽभेदेपीत्यन्वय:। एवमैक्यवाक्यस्य भेदवाक्येनेत्यस्यापि तेनैवान्वय:। ऐक्यवाक्यस्य जरद्गवादिवाक्येनेति पाठस्तु न युक्त:। तत्र तयो: परमार्थतोऽभेदसद्भावेपि व्यावहारिकभेदेनैक्यवाक्यस्य जरद्गवादि-वाक्यबाधकत्वानंगीकारेण दृष्टांतीकरणायोगादिति ध्येयम् ॥ ऐक्यस्यच भेदेनेति ॥ अद्वैतज्ञानविषयस्य अद्वैतवाक्यप्रतिपाद्यस्य चैक्यस्य द्वैतज्ञानविषयेण द्वैतवाक्यप्रतिपाद्येन च भेदेन परमार्थतोऽभेदेपीत्यर्थ: ॥ द्वैतज्ञानबाधकत्ववदिति ॥ अद्वैतज्ञानस्येति वर्तते। इदमुपलक्षणम्। ऐक्यवाक्यस्य द्वैतवाक्यबाधकत्ववदैक्यस्य भेदबाधकत्ववदित्यपि द्रष्टव्यम्। अन्यथा न्यूनतापत्तेरिति ध्येयम्। व्यावहारिकत्वेनोक्तव्यवस्थामनंगीकृत्योक्तरीत्या निर्बाधा श्रुति: सवाद्वैते पर्यवस्यतीत्यस्य सर्वाभेदे भेदनिषेधे वा तात्पर्यमित्यर्थ इत्यंगीकारेऽति- प्रसंगमाह ॥ अन्यथेति ॥ श्रुतिरनुमानं वेत्यनयोस्तज्जन्यज्ञानमित्यर्थ:। विमतं पृथिव्यादि। स्वबाधकस्य

(प्रकाशः)

जलभेदग्राहिप्रत्यक्षज्ञानस्य बोधयेत् विषयीकुर्यात्। जलाभेदं बोधयेदित्येवोक्ते जगज्जनकत्वात्तल्लयाधिकरणत्वाच्च जलं ब्रह्मतदभेदं बोधयेदिति प्राप्त्येष्टापत्तिः स्यादित्यत उक्तं प्रसिद्धेति। अन्यत्वेन प्रसिद्धेषु पृथिव्यादिषु जलाभेदमित्यर्थ इत्यप्याहुः। यत्र घटपटादौ अभेदः सर्वाभेदः॥ अन्यत्रेति॥ प्रत्यक्षाद्यगृहीतभेदस्य घटस्वरूपस्य घटस्वरूपेण पटस्वरूपस्य पटस्वरूपेण वा प्रत्यक्षाद्यगृहीतभेदस्य द्वैतवाक्यजन्यज्ञानस्वरूपस्य स्वरूपेणाऽभेदः कामं गृह्यतां न नोहानिरित्यर्थः। स्वस्वरूपस्य स्वस्वरूपेणभेदग्राहिप्रत्यक्षादिप्रमाणाभावेन बाधकाभावात् तत्राऽभेदग्रहोऽस्माकमपि संमत इति भावः ॥आद्य इति॥ अद्वैतश्रुतेः सर्वमिथ्यात्वे तात्पर्यमिति प्रथमपक्ष इत्यर्थः ॥ अयुक्तमिति॥ सर्वं मिथ्येत्येव बोधनापत्त्या सर्वं ब्रह्मेति सामानाधिकरण्येन ब्रह्माभेदबोधनमयुक्तमित्यर्थः ॥ अंत्ययोरिति॥ अद्वैतश्रुतेः सर्वाभेदे वा भेदनिषेधे वा तात्पर्यमिति द्वितीयतृतीयपक्षयोरित्यर्थः ॥ प्रमात्वमिति॥ श्रुतेः सर्वपदार्थानां सर्वाभेदादिबोधकत्वांगीकारेण इदं पदार्थे रूप्याभेदरूपार्थस्य आत्मनि च गौरदेहाभेदरूपार्थस्य च सत्त्वादित्यर्थः। अतिप्रसंगांतराण्याह ॥आत्मनीत्यादिना॥ आत्मनि जीवे। देहाभेदस्य आत्मनि ब्रह्मणि अनृताभेदस्यैव सत्त्वेन तद्भेदस्य च मिथ्यात्वात्तद्बोधकानां ''स्वाच्छरीरात्प्रवृहेत् स एष आत्मा नेतिनेती''त्यादिवेदांतानामतत्वावेदकत्वेनाऽप्रामाण्यं स्यादित्यर्थः। तदभिन्नस्य ब्रह्मतदभेदादेः सर्वस्यापि घटाभिन्नस्य ब्रह्मणस्तदभेदस्य एवमादेः सर्वस्येति सामानाधिकरण्यं ॥सद्योमोक्ष इति॥ सकृज्ज्ञानेनैव मोक्ष इत्यर्थः ॥ अभिन्नत्वेनेति॥ परस्परमभिन्नत्वेनेत्यर्थः ॥ स्वक्रियेत्यादि॥ स्वक्रियास्वन्यायस्ववचनविरोधानां सर्वेषामपि भेदघटितत्वेन सर्वाभेदांगीकारे सर्वसंकरापत्त्या तद्विरोधाः स्युरित्यर्थः। ननु वस्तुतोऽभेदेप्याविद्यकभेदसद्भावेन सुखदुःखादिव्यवस्थोपपत्त्या सर्वसंकराभावेन न स्वक्रियादिविरोध इत्याशंकते ॥आविद्यकभेदेनेति॥ काल्पनिकभेदेनेत्यर्थः ॥तस्यापीति॥ व्यवस्थोपपादकस्य भेदस्यापीत्यर्थः। ब्रह्मणोप्याविद्यकत्वे तदभिन्नस्याविद्यकत्वं युक्तमेवेत्याशंकापरिहारायोक्तं अनाविद्यकेति ॥प्रतिबंधायोगादिति॥ तथा च वास्तवाभेदकार्यभूतसर्वसंकरापत्तिर्दुवरिति भावः ॥मोक्ष इति॥ आविद्यकभेदेन सुखदुःखव्यवस्थांगीकारे मोक्षेऽविद्याया अभावेन आविद्यकभेदाभावादानंदस्यापि दुःखात्मकत्वापत्त्याऽपुमर्थत्वं स्यादित्यर्थः। ननु मोक्षगतानंदस्य वस्तुगत्या दुःखाभेदेपि वस्तुगत्या तस्य प्रतिकूलवेदनीयत्वाभावेन मोक्षस्य पुमर्थत्वमुपपद्यत इति चेत्तत्राह ॥सुखादाविति॥ तदभेदे दुःखाभेदे। अभेदः दुःखाभेदः ॥पर्यवस्येदिति॥ भेदस्यैव नामांतरं स्यादित्यर्थः। तदसाधारणस्वभाववत एव तदभिन्नत्वात्तदभावेपि तदभेदांगीकारे तादृशाभेदोऽस्मदभिमतभेदस्यैव नामांतरं स्यादिति भावः। ननु मौक्तानंददुःखयोरनुकूलवेदनीयत्वप्रतिकूलवेदनीयत्वरूपासाधारणधर्माभ्यां भेदमंगीकृत्य सत्त्वेन भेदो नास्तीति सद्रूपमात्रेणैव भेदो निरस्यतेऽतोमौक्तानंदस्य सत्त्वेनाऽभेदेप्यसाधारणरूपभेदसद्भावान्नापुरुषार्थत्वप्रसंग इत्यत आह ॥असाधारणेति॥ रूपभेदं धर्मभेदं ॥इष्टापत्तिरिति॥ सर्वं सदिति सत्त्वेनाभेदस्यास्माभिरंगीकारादित्यर्थः। अस्मन्मते सत्त्वेन सादृश्याभेद एव स्यान्न मुख्याभेद इत्यस्वरसादाह ॥अप्रसक्तेति॥ घटादिकमानंदादिकं वा सन्न भवतीति सत्त्वावच्छिन्नभेदस्य प्रसक्त्यभावेन सद्रूपमात्रभेदस्य निषेधेऽप्रसक्तनिषेधापत्तिरित्यर्थः।

अर्थापत्त्याऽद्वैतश्रुतेरनवकाश इत्याह। भेदं विनेति॥ भेदज्ञानाद्वैतज्ञानयोः स्वरूपैक्ये तद्विषययोर्भेदाद्वैतयोश्चैक्ये स्वस्य भेदज्ञानत्वमेवानुपपन्नमित्यर्थः। तं स्वस्याऽद्वैतज्ञानाद्भेदम्। भेदावगाहिनि

(प्रकाश:)

चरमज्ञानेपि ऐक्यज्ञानापेक्षया भेदस्यैवार्थापत्त्या विषयीकरणान्न तत्राप्यद्वैतश्रुतेरवकाश इति भाव: ॥ यच्चोक्तमिति ॥ घटपटभेदज्ञानत्वान्यथानुपपत्त्यैव भेदज्ञानस्याद्वैतज्ञानाद्भेदसिध्या नाद्वैतश्रुतेरवकाश इत्यर्थापत्तिपक्षेपि यद्दूषणमुक्तं खंडनकारेणेत्यर्थ: ॥ इयमर्थापत्तिरिति ॥ घटपटभेदज्ञानमद्वैतज्ञानाद्भेदं विनानुपपन्नमिति ज्ञानमित्यर्थ:। तथाच घटपटभेदज्ञानत्वान्यथानुपपत्तिज्ञानमद्वैतज्ञानाद्घटपटभेदज्ञानस्य भेदावगाह्यपि न स्वस्मिन्नद्वैत-ज्ञानप्रतियोगिकभेदमवगाहते स्वस्य स्वविषयकत्वाभावात्। ययोर्भेदं विनाऽनुपपत्तिर्गृहीता तयोरेव भेदोऽर्थापत्त्याभासते नानुपपत्तौ अनुपपत्तावनुपपत्त्यंतराग्रहात् अतो नेहनानेत्यद्वैत श्रुति: स्वजन्यैक्य-ज्ञानस्यार्थापत्त्या तावदभेदं गृहीत्वा निर्बाधित्वाद्घटपटभेदग्राहकादबिभ्यती घटपटयोरप्यभेदमेव गृह्णातीत्येवं सर्वाद्वैते पर्यवस्यतीति भाव:। खंडनकार: स्वोक्तार्थे स्वाचार्यसंमतिमाह ॥ तदुक्तमिति ॥ ॥ आद्यधीति ॥ घटपटौ भिन्नाविति ज्ञानं आद्यभेदधी: तद्वेद्यो यो भेद: तदीया तत्संबंधिनी याऽन्यथानुपपन्नता घटपटभेदज्ञानत्वान्यथानुपपत्तिरिति यावत्। ज्ञानसंबंधिन्या अपि तस्या ज्ञानद्वारा परंपरया भेदीयत्वात् साऽन्यथानुपपन्नता स्वज्ञानोपेक्षणात् स्वजन्यज्ञाने स्वविषयकत्वाभावेनोपेक्षणात् अद्वैतज्ञानप्रतियोगिकस्वनिष्ठभेदग्रहणे सामर्थ्यविधुरत्वादर्थापत्तिजन्य-ज्ञानमद्वैतज्ञानेनादावेकीभूतत्वादंतेऽर्थापत्त्यवतारानंतरमर्थापत्तिजन्यज्ञानस्या द्वैतज्ञानस्य चाभेदबोधनाय प्रवृत्तां नेह नानेति श्रुतिं न बाधते तथा चाद्वैतश्रुति: सर्वाभेदे पर्यवस्यतीति संमतिश्लोकार्थ: ॥ अर्थापत्तेरिति ॥ घटपटभेदज्ञानत्वान्यथानुपपत्तिजन्यज्ञानस्येत्यर्थ: ॥ इतरस्मादिति ॥ अद्वैतज्ञानादित्यर्थ:। भेदाभावे स्वरूपतो विषयतश्च भेदाभावे ॥ त्वदुक्तरीत्येति ॥ अद्वैतश्रुतिस्वजन्यैक्यज्ञानस्यार्थापत्तिजन्यज्ञानेन तावदभेदं गृहीत्वा घटपटभेदग्राहकादबिभ्यती घटपटयोरप्य भेदमेव गृह्णीयादिति त्वदुक्तरीत्येत्यर्थ: ॥ तद्भेदस्यापीति ॥ अर्थापत्तेरद्वैतज्ञानात्स्वरूपतो विषयतश्च भेदस्यापीत्यर्थ: ॥ अर्थापत्तिविषयत्वादिषयेति स्वज्ञानोपेक्षणादिति च यदुक्तं तदयुक्तमित्यर्थ:। ननु प्रमाणेन प्रमेय संबंध्येवार्थ: सिद्ध्यति न तु प्रमाणसंबंधी चक्षुरादिना घटसंबंधिरूपपरिमाणादिसिद्धिवत्स्वसंबंधिरूपादेरसिद्धे:। अतोऽर्थापत्तिरूपप्रमाणाऽसंबंधित्वे सत्युपपाद-कत्वमेवार्थापत्तिविषयत्वे तंत्रमतोर्थापत्तिनिष्ठोऽद्वैतज्ञानप्रतियोगिको भेद: कथमर्थापत्तिविषय इत्यत आह ॥ उपपादकत्वं हीति ॥ एवं चावांतरेण संबंधित्वादर्शनेप्यर्थापत्तिविशेषे तस्यावश्यकत्वात्प्रकृते चार्थापत्तावितरस्माद्भेदो घटपटभेदोपपादकत्वेनार्थापत्तिविषय इत्येवं कल्प्यत इति भाव:। अर्थापत्त्यसंबंधित्वम्। अर्थापत्त्यसंबंधित्वविशिष्टमुपपादकत्वमर्थापत्तिविषयत्वे न तंत्रमित्यर्थ:। कुतो न तंत्रमित्यतोऽर्थापत्तिसंबंधि-प्रमेयस्याप्यर्थापत्तिविषयतायास्त्वयांगीकृतत्वात् अन्यथा तदपि न स्यादित्याह ॥ अन्यथेति ॥ ॥ दृगिति ॥ दृश्यमात्रस्य प्रपंचस्य दृक्संबंधान्यथानुपपत्त्या कल्प्यमानमध्यस्तत्वरूपं मिथ्यात्वं दृक्संबंधान्यथानुपपत्त्या तस्यामपि सिद्ध्यतीत्यंगीकृतं तन्न स्यादित्यर्थ: ॥ ज्ञानेति ॥ ज्ञाननिवर्त्यत्वान्यथानुपपत्त्यां प्रपंचे कल्प्यमानं मिथ्यात्वं ज्ञाननिवर्त्यत्वान्यथानुपपत्तेरपि प्रपंचांतर्गतत्वेन ज्ञाननिवर्त्यत्वात् तस्यामपि सिद्ध्यतीत्यंगीकृतं तदपि न स्यादित्यर्थ:। अर्थापत्त्यसंबंधित्वविशिष्टोपपादकत्वस्याऽर्थापत्तिविषयत्वे तंत्रतायामतिप्रसंगांतरमाह ॥ नेह नानेति ॥ ननु ब्रह्मणि नेहनानेति भेदनिषेधस्य श्रौतत्वात्कथमियमन्यथानुपपत्ति:। तथा ब्रह्मण्येवानेन सर्वाभेदस्य बोधनात् कथमयं भेदमात्रनिषेध:। घटपटाद्यभेदाबोधनादिति चेत्। सत्यम्। ब्रह्मणि भेदनिषेधस्य श्रौतत्वेपि भेदमात्रनिषेधो य: सोन्यथानुपपत्तिलभ्य:। तथा हि। अनया श्रुत्या ब्रह्मणि स्वेतरसर्वघटपटादिप्रतियोगिकभेदनिषेधस्तावत्सिद्ध:।

(प्रकाश:)

तथा च यदभिन्नाभिन्नं यत्तत्तेनाभिन्नमिति व्याप्तिबलाद्धटाभिन्नब्रह्माभिन्नत्वात्पटस्यापि घटाभेदः सिद्ध्यतीत्येवं व्याप्तिबलेन घटपटाद्यभेदस्य सिद्ध्यमानत्वादन्यथानुपपत्तिश्चेत्युक्तमिति संप्रदायविदः ॥स्वाभेदेति॥ अर्थापत्तेः स्वविषयकत्वाभावे यद्यदभिन्नाभिन्नमिति भेदमात्रनिषेधरूपव्याप्त्यनुपपत्त्या एतदर्थापत्तीतरघटपटाभेद एव सिद्ध्येन्नार्थापत्तिसंबंध्यभेदः। ततश्च तेन भेदमात्रनिषेधासिद्धिः स्यादिति भावः। नन्वस्माभिर्भेद-निषेधान्यथानुपपत्त्या घटपटाभेदो बोध्यत इति नोच्यते। येन तुल्यन्यायतया स्वाभेदं बोधयंती श्रुतिः स्वविषया स्यात्। किं तु ''सर्वं सर्वस्मादभिन्न''मिति काचित् श्रुतिरस्ति। तस्यैव ब्रह्मण्यन्यथानुपपत्त्याभेदो बोध्यत इति चेत्तत्राह ॥न हीति॥ घटः पटादभिन्न इति विशेषश्रुतिस्तु दूरापास्तेति हि शब्दार्थः ॥सापीति॥ सर्वं सर्वस्मादभिन्नमिति कल्प्यमाना श्रुतिरित्यर्थः। तत्र कल्प्यमानायां कस्यांचित् श्रुतौ। अर्थापत्त्यंतरमित्यादिब्रह्मणाभेदनिषेधकमित्यर्थः ॥तवापीति॥ सुदूरधावनश्रांतेत्युक्तरीत्याऽस्माकमनवस्था-दातुस्तवापीत्यर्थः। संगृह्णाति ॥एवं चेति ॥॥अर्थापत्तिरिति॥ अस्मदुक्तघटपटभेदज्ञानत्वा-न्यथानुपपत्तिजन्यज्ञानमित्यर्थः॥ स्वकीयं चेति॥ घटपटाद्यन्यदीयंभेदं अद्वैतज्ञानप्रतियोगिकं स्वकीयं च स्वरूपतो विषयेण च। कुत इत्यत आह ॥तं विनाऽयुक्तेरिति॥ अर्थापत्तेरितरस्माद्भेदं विनात्वदुक्तरीत्या घटपटभेदासिद्ध्या तद्भेदस्य घटपटभेदोपपादकत्वायोगादर्थापत्तिभेदस्यापि विषयीभूतघटपटादिभेदो पपादकत्वादर्थापत्ति-विषयकत्वमित्यर्थः। ननु प्रमाणेन प्रमेयसंबंध्यर्थस्तु सिद्ध्यति न प्रमाणसंबंधी। चक्षुषा स्वीयरूपवदिति चेत्तत्राह ॥तवेति॥ तथा च तदपि न स्यादिति भावः। पूर्वपक्षावसरे घटपटौ भिन्नाविति प्रत्यक्षस्य नियतविषयकत्वेन बाधके स्वस्मिन् बाध्यादैक्य ज्ञानाद्भेदाग्रहणेपि ज्ञानांतरेण बाध्यबाधकयोर्भेदग्रहो भविष्यतीत्यस्माभिराशंकितेऽनवस्थोक्ता तामिदानीं परिहरति ॥कथं चेति॥ साक्षिणा साक्षिरूपज्ञानांतरेण ॥ग्रहणादिति॥ स्वेनैवेति शेषः ॥अन्यथेति॥ जीवस्वरूपभूते साक्षिणीतरभेदस्य स्वेन ग्रहणानंगीकार इत्यर्थः ॥संशयादिरिति॥ अहं घटो वा नवेति संशयो घट एवेति विपर्ययो वा स्यादित्यर्थः। उपसंहरति ॥तस्मादिति ॥॥सामान्येति॥ सामान्येन द्वितीयमात्रं निषेद्धुं प्रवृत्ताया ''एकमेवाद्वितीयं नेहनाने''ति श्रुतेरित्यर्थः ॥विशेषविषयेणेति॥ द्वितीयविशेषस्य घटादेः सत्त्वग्राहिणा प्रत्यक्षेणेत्यर्थः ॥आहवनीयशास्त्रस्येति॥ अधिकरणं तु पूर्वमुपन्यस्तं द्रष्टव्यम्। तथाच ''आहवनीये जुहोती''ति होममात्रं प्रत्याधारत्वेन प्राप्तस्याहवनीयस्य ''पदे जुहोती''ति सोमक्रयणार्थं नीयमाना या गोःपदे होमविशेषविधायकशास्त्रविहितहोमेतरपरत्वं यथा। एवं प्रत्यक्षादिप्रमाणगृहीतेतरसमाधिकरूपद्वितीयनिषेधपरत्वेन संकोच एव न्याय्यो न तु सामान्य श्रुत्या विशेषविषयकप्रत्यक्षस्य बाधः। तथात्वे आहवनीयशास्त्रेणैव पदशास्त्रस्य बाधापत्तेरित्यर्थः। सामान्येन प्रवृत्तस्य प्रमाणस्य तद्विरोधिविशेषप्रमाणविषयेतरविषयकत्वानंगीकारेऽतिप्रसंगमाह ॥अन्यथेति ॥॥अनियतविषयेति॥ प्रतियोगिविशेषानुपादाने नानियतविषयत्वाद्धटोपि घटो न पटोपि पटो न ततोऽभिन्न इत्यर्थसंभवेन सामान्यश्रुतिरित्यर्थः ॥सर्वमिति॥ घटोपि घटाद्भिन्न इति सर्वं सर्वस्मादित्यर्थः ॥अद्वैतवाक्यवदिति॥ घटपटौ भिन्नाविति बाधकत्वेनाभिमतात्प्रक्षज्ञानाद्बाध्यत्वेनाभिमतमैक्यज्ञानं भिन्नमित्यग्रहणात्। तत्र लब्धपदा

(प्रकाश:)

श्रुतिस्तयोस्तावदैक्यं गृह्णाति। ततश्च निर्बाधा श्रुतिः सर्वाद्वैते पर्यवस्यतीति न्यायेनेत्यर्थः ॥तज्ज्ञानतद्विषयाणां तेभ्यो भेदमिति॥ अद्वैतवाक्यविषयकज्ञानादद्वैतवाक्यविषकज्ञानस्य अद्वैतवाक्यजन्यज्ञानादद्वैतवाक्यजन्यज्ञानस्य अद्वैतवाक्यादद्वैतवाक्यस्य अद्वैतज्ञानविषयादद्वैतादद्वैतस्य चेत्येवं तज्ज्ञानतद्विषयाणां तेभ्यो भेदमित्यर्थः ॥आदाविति॥ स्वस्मिन्स्वाभेदग्राहकप्रमाणप्रवृत्तेः पूर्वमित्यर्थः ॥निर्बाधमिति॥ स्वस्मिन् स्वभेदग्राहकं प्रतिबाधकत्वेनाभिमतस्य स्वस्मिन्स्वाभेदग्राहकस्य प्रमाणस्य प्रथमप्रवृत्तेन स्वस्मिन्स्वभेदग्राहकेणैव बाधितत्वाद्भेदग्राहकं नेति नेतीत्यादिकं निर्बाधमित्यर्थः ॥सर्वभेद इति॥ घटात्पटस्य पटाद्घटस्येत्येवं सर्वभेद इत्यर्थः ॥स्यादिति॥ तथा च सामान्यविषयाया नेति नेतीति श्रुतेर्विशेषविषयेण स्वस्मिन्स्वाभेदग्राहकेण प्रत्यक्षेणाहवनीयशास्त्रस्य पदशास्त्रेणेव संकोच एव न्याय्य इत्येव समाधानं वक्तव्यम्। तदस्माकमपि तुल्यमिति भावः। यदुक्तं सर्वं खल्विदं ब्रह्मेत्याद्यद्वैतश्रुतिस्तज्ज्ञानं वा नियतविषयकभेदग्राहिप्रत्यक्षेणादावैक्यं गृह्णाति। पश्चान्निर्बाधा श्रुतिः सर्वाद्वैतं बोधयतीति तदयुक्तम्। शब्दतद्बुद्ध्योर्विरम्यव्यापारप्रसंगात्। तस्य चेतनधर्मत्वेन जडयोः शब्दतद्बुद्ध्योरयोगात्। अतो न क्रमेणाभेदबोधनं युक्तमित्याह ॥किं चेति॥ स्थित्वा स्थित्वार्थबोधनविषयीकरणादिरूपो व्यापारो विरम्यव्यापारः। उक्तदोषपरिहारमाशंकते ॥नन्विति॥ सर्वं खल्विदं ब्रह्मेत्यादि श्रुतितस्तावत् घटपटादिसर्वाद्वैतविषयिणी बुद्धिरेकदैव भवति अतो न शब्दबुद्ध्योर्विरम्यव्यापारः एवं सर्वभेदबोधनानंतरं तज्ज्ञाने घटपटौ भिन्नाविति प्रत्यक्षबाधेन पुरुषाणामप्रामाण्यशंकायां श्रुतिस्तावत्प्रत्यक्षेणादावेकीभवति पश्चान्निर्बाधा श्रुतिः सर्वाद्वैतं बोधयति अतः प्रामाण्यं युक्तमित्येवं तत्तद्विषयप्रत्यक्षबाधनिरासक्रमनिबंधनः प्रामाण्यग्रहक्रमः पुरुषाणामेव भवत्यतस्तेषामेव विरम्यव्यापारो न शब्दबुद्ध्योरिति भावः। यदुक्तं श्रुत्या घटपटादिसर्वाभेदविषयिणी बुद्धिरेकदैव जायत इति तदयुक्तम्। सर्वं खल्विदं ब्रह्मेति श्रुत्या आदौ ब्रह्मण्येव सर्वाभेदविषयिण्या बुद्धेर्जायमानत्वादनंतरं यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्त्यन्यथानुपपत्त्यैव घटपटाद्यभेदस्य कल्प्यमानत्वादतो घटपटादिसर्वाभेदविषयिणी बुद्धिः श्रुत्यैवादौ भवतीत्युक्तमसदित्याह ॥मैवमित्यादिना॥ ननु तर्हि मास्तु घटपटाद्यभेदस्य श्रुत्या बोधः। ब्रह्मणि सर्वाभेदस्तावत् श्रुत्या बोध्यते पश्चादन्यथानुपपत्त्या घटपटाद्यभेदो बोध्यत इत्येवांगीक्रियत इति चेत्तत्राह ॥प्रथमेति ॥॥भेदेति॥ घटादौ ब्रह्म भेदस्य प्रत्यक्षेणैव दृश्यमानत्वादित्यर्थः ॥कल्पकाभेद इति॥ उक्तव्याप्तिद्वारा घटाद्यभेदकल्पके आदौ श्रुत्या बोधिते ब्रह्मणि सर्वाभेद इत्यर्थः। ब्रह्मणि सर्वाभेदाभावे उक्तव्याप्त्यन्यथानुपपत्तेः परेण वक्तुमशक्यत्वाद्घटपटाद्यभेदकल्पकत्वं तस्येति भावः। न्याय्या न्यायप्राप्ता वक्तव्या॥स एवेति॥ घटपटाद्यभेदकल्पको ब्रह्मणि सर्वाभेद एवेत्यर्थः ॥प्रत्यक्षेति॥ घटादेः सर्वभेदग्राहकप्रत्यक्षेत्यर्थः ॥कल्पनेति॥ ब्रह्मणि सर्वाभेदमूलकोक्तव्याप्त्यन्यथानुपपत्तेरित्यर्थः। येन चरमबुद्ध्याद्यभेदकल्पनेन। तद्द्वारा चरमबुद्ध्याद्यभेदद्वारा। सर्वाभेदो घटपटाद्यभेदः। खंडनखंडनं विष्णुदासाचार्यकृतो ग्रंथविशेषः। उपसंहरति ॥तस्मादिति॥ ''एकमेवाद्वितीय''मित्यादिश्रुतयः समाधिकराहित्यपरा इत्यर्थः।

॥द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखंडनभंगविवरणम्॥

## ५. एकमेवाद्वितीयमिति श्रुत्यर्थविवरणम्

किं च ''सलिल एको द्रष्टाऽद्वैतो भवती''त्यत्र सलिलादिपदेन ''सदेव सोम्येदमग्र आसीदि''त्यत्र कालप्रापकेण पूर्वेणाग्रपदेन ''तदैक्षत नामरूपे व्याकरोदि'' तीक्षणनामरूपात्मकप्रपंचप्रापकेणोत्तरेण च द्वैतवाक्येन विरोधः, प्रामाण्यस्य स्वतस्त्वेनाद्वैतवाक्येनाद्वैतस्येव द्वैतवाक्येनैव द्वैतस्य (सत्य) त्वसिद्धेः। यदि चाविरोधाय द्वैतवाक्यस्य लक्षणादिनाऽद्वैतपरत्वं वाऽतात्त्विकविषयत्वेन व्यवस्था वा तद्विरोधेना-प्रामाण्ये वा, तदा विपरीतं किं न स्यात्? अपच्छेदन्यायादेर्निरासात्। तेन पूर्वस्य द्वैतवाक्यस्य बाधेऽपि परस्याबाधाच्च। पूर्वस्याप्यनुपसंजातविरोधित्वादिना प्राबल्य-स्योक्तत्वाच्च। न च सलिलसृष्टिकालेक्षणनामरूपव्याकर्तृत्वादिकं मानान्तरप्राप्तं येन तद्वाक्यमनुवादकं स्यात्। तस्माद् द्वैतवाक्यमध्यस्थमद्वैतवाक्यमुपांशुयाजवाक्य-मध्यस्थविष्ण्वादिवाक्यवत् पूर्वोत्तरद्वैतवाक्यानुसारेण नेयम्।

किं च त्वया–

यावत् किंचित् भवेदेतदिदंशब्दोदितं जगत्।
इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम्॥

सदेवासीदिति व्याख्यातत्वात् सदभेदेन सत्त्वमुक्त्वा पुनरद्वितीयपदेन तन्निषेधे व्याघातः। न हि सदेवासीदित्यस्यासदासीदित्यर्थः। सद्व्यतिरेकेण नासीदित्यर्थोक्तौ तु सविशेषणे हीतिन्यायेन सदात्मकत्वं स्यात्। किं च न तावदेकशब्देन मिथ्यात्वसिद्धिः, तस्य मानान्तराविरुद्धानेकार्थत्वात् ''एके मुख्यान्यकेवला'' इत्यमरोक्तेः। ''एको गोत्रे'' इत्यत्रैकशब्दोऽयमन्यप्रधानासहायसंख्याप्राथम्यसमानवाचीति कैयटोक्तेश्च। ''ष्णांता षडि''ति सूत्रे महाभाष्ये– ''एकशब्दोऽयं बह्वर्थः, संख्यायाम्– एको द्वौ बहव इति अस्त्यसहायवाची– एकाग्न्य एकहलानीति, अस्त्यन्यार्थे। प्रजामेकारक्ष-त्यूर्जमेका''– इत्याद्युक्तेश्च। ''एको बहूनां यो विदधाति कामनि'' त्यादौ संख्यादौ प्रयोगाच्च। भवन्ति च ब्रह्मणि जीवादितोऽन्यत्वप्राधान्यप्राथम्यानि। सृष्ट्यादौ सहायानपेक्षत्वं कुसमयप्राप्तनिर्गुणत्वनिषेधायैकत्वसंख्याविधिः। नानारूपेषु निर्दोषत्वेन समानत्वं च। मन्मते एकं रूपमेको भाव इत्यादावपि खंख्यार्थ एव। अत एवोत्तरत्र

जीवादिष्वसंभावितजगत्स्रष्टृत्वादिनान्यत्वादिसमर्थनम्। किं च त्वयापि–

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयश्शिलादितः ॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥

इति वदतैकशब्दस्य स्वगतभेदनिषेधकत्वेन व्याख्यातत्वान्न तेन मिथ्यात्वसिद्धिः।

अद्वितीयशब्दोऽपि कर्मधारयो बहुव्रीहिर्वा? आद्ये ब्रह्म द्वितीयं न चेत्, तृतीयं प्रथमं वा स्यात्। नांत्यः, प्राथम्येन कर्मधारये सम्भवति जघन्यस्य बहुव्रीहेरयोगात्। द्वितीयादन्यदद्वितीयमिति ''अनपुंसकस्ये'' त्यादाविव ''नार्षेयं वृणीत'' इत्यादाविव च पर्युदासार्थत्वेनैकवाक्यत्वसम्भवे प्रसज्यप्रतिषेधार्थत्वेनैक-वाक्यभेदायोगाच्च। अघटं भूतलमितिवद् द्वितीयाभावेनैव सद्वितीयत्वापाताच्च। तस्यापि निषेधे व्याघातात्। ''आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषदि''ति श्रुत्यन्तरेऽन्यस्य सविशेषणे हीति न्यायेन निमिषत्वेनैव निषिद्धत्वे ''छागो वा मंत्रवर्णादि''ति न्यायेनेहापि मिषत्वेनैव निषेध्यव्यतया स्वरूपेणैव निषेधासिद्धेश्च। किं च नञा द्वितीयात्यंताभावोक्तौ अग्र इति व्यर्थं। नापि प्रागभावोक्तिः, [मि]थ्यात्वासिद्धेः। त्वन्मतेऽप्याविद्याकर्मादिस्तदा सत्त्वाच्च। किं च द्वितीय-[श]ब्दस्सहायवाची, ''असिद्वितीयोऽनुससार पांडव'' मितिप्रयोगात्, ''असिद्वितीयः असिसहाय इति गम्यत'' इति महाभाष्योक्तेश्च। तथा चाद्वितीयमसहायमित्यर्थोऽस्तु। यद्वा द्वितीयशब्दः प्रकृतसमान एव द्वितीये व्युत्पन्नः, न तु तत्र तस्य संकोचः। लोके ''अस्मिन्ग्रामेऽयमेक एवाद्वितीय'' इति। स्मृतौ च–

एक एवाद्वितीयोऽसावश्वमेधः क्रतुष्वपि ।
एक एवाद्वितीयोऽसौ प्रणवो मंत्र उच्यते ॥ इति प्रयोगात् ।

महाभाष्ये च ''अस्य गोर्द्वितीयोन्वेष्टव्य इत्युक्ते सदृशो गौरेवोपादीयते नाश्वो न गर्दभ इत्युक्तेश्च। शाङ्करभाष्ये च अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते

गौरेवद्वितीयोऽन्विष्यतेऽनाश्वः पुरुषो वे''त्युक्तेश्च। ''समे द्वितीयशब्दः स्यादि''ति स्मृतेश्च। द्वितीयशब्देन द्वितीयमात्रोक्तौ अद्वितीयशब्देनैव स्वेतरसर्वनिषेधसंभवेन सजातीयनिषेधकैवशब्दादिवैयर्थ्याच्च। तदवैयर्थ्याय द्वितीयशब्दस्य विजातीयपरत्वेन संकोचे च अग्र इत्यनेनाविरोधाय समद्वितीयपरत्वेन संकोचः स्यात्। तथा च समाभ्यधिकराहित्यमेवाद्वितीयशब्दार्थः। ''न तत्समश्चाभ्यधिकश्च दृश्यत'' इति श्रुतेः ''न त्वत्समोऽस्त्यभ्यधिक'' इति स्मृतेश्च। एक एवाद्वितीयो भगवांस्तत्सदृशः परो नास्ती''ति श्रुतौ–

ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः ।
अद्वितीयो महाविष्णुः पूर्णत्वात्पुरुषः स्मृतः ॥
भेदाभेदनिवृत्यर्थमेवशब्दोऽवधारकः ।

इति स्मृतौ च व्याख्यातत्वाच्च। द्वितीयाभावस्य भावाभावाभ्यां व्याघातेनाद्वितीयशब्दस्य तत्परत्वासम्भवाच्च। उक्तं च–

यथा चोलनृपस्सम्राडद्वितीयोऽस्ति भूपतिः ।
इति तत्तुल्यनृपतिनिवारणपरं वचः ।
न तु तद्भ्रातृतत्पुत्रकलत्रादिनिवारकम् ॥ इति ।

तस्मात्–

एक एवाद्वितीयोऽसावाकाशे सवितेति वत् ।
एकमेवाद्वितीयं सदग्र इत्यपि योज्यताम् ॥

किं च–

अधिकं हि विजातीयं सजातीयं समं भवेत् ।
गुणादिकं तु स्वगतं तदभेदोऽत्र निषिध्यते॥ एकमेवेति श्रुत्यर्थः।

## अद्वैतसिद्धिः

ननु– यद्यपि सलिल एको द्रष्टा अद्वैत इत्यत्र सलिलशब्दस्य तत्सादृश्यस्वच्छत्वमात्रपरत्वात् तस्य च सर्वमलासंसर्गित्वस्वरूपस्याद्वैतेऽप्युपपत्तेः, 'सदेव

(अद्वैतसिद्धिः)

सोम्येदमग्र आसी'दित्यत्र चाग्रपदस्य 'तदैक्षत नामरूपे व्याकरो'दित्यादेश्च कालेक्षणनामरूपात्मकप्रपञ्चप्रापकस्याविद्यकद्वैतविषयकत्वेन वास्तवाद्वैतविरोधित्वाभावः तथापि 'सदेव सोम्येदमग्र आसी'दित्यनेन इदं शब्दोदितस्य विश्वस्य सदभेदेन सत्त्वमुक्त्वा पुनरद्वितीयपदेन तन्निषेधे व्याघातः। न हि 'सदासी'दित्यस्यासदासीदित्यर्थ इति चेन्न, सद्व्यतिरेकेण नासीदित्यर्थस्यैव निषेधार्थत्वात्। विवृतं चैतद् भाष्यकारादिभिरारम्भणाधिकरणे। न च– सद्व्यतिरेकेणासत्त्वोक्तौ सदात्मना सत्यत्वमागच्छतीति वाच्यम्। आगच्छतु नाम। को हि ब्रह्माभिन्नस्यासत्त्वसाधनाय प्रवृत्तौ यो बिभीयात्। अद्वैतवाक्यस्य च षड्विधतात्पर्यलिङ्गवत्तया बलवत्त्वेनाविद्यकद्वैतप्रतिपादकत्वं सृष्टयादिवाक्यानामिति श्रवण-स्वरूपनिरूपणे वेदान्तकल्पलतिकायामभिहितमस्माभिः, इहाप्यभिधास्यते षड्विध-तात्पर्यलिङ्गानि प्रदर्शयद्भिः। अत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञयोपक्रमात् 'एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'त्युपसंहाराच्च अद्वैतस्यैव महाप्राकरणिकतया तदनुसारेण तद्वाक्यस्थपदानां व्याख्येयत्वावधारणात्, नानार्थपदानामर्थान्तरोपस्थापकत्वसंभवेऽपि प्रकृतवाक्यार्थानन्वयितया तत्परित्यागेन प्रकृतवाक्यार्थानुकूलपदार्थोपस्थितिपरत्वमेवास्थेयम्। तत्र न द्वितीयमद्वितीयमिति तत्पुरुषाभ्युपगमे न द्वितीयम् किंतु प्रथमं तृतीयं वेत्यर्थः स्यात्, स च न संभवति तयोरपि किंचिदपेक्ष्य द्वितीयत्वाद्। अतो न विद्यते द्वितीयं यत्रेति बहुव्रीहिरेवादरणीयः। न च एकेनैवाद्वितीयपदेन भेदत्रयनिषेधसंभवे एकावधारण-पदयोर्वैयर्थ्यमिति वाच्यम्। विजातीयं किंचिदपेक्ष्य द्वितीयत्वावच्छिन्ननिषेधस्याद्वितीय-शब्दार्थत्वात्। अयं चात्र सङ्कोचो बलीवर्दपदसन्निधानाद् गोपद इव सजातीय-स्वगतभेदनिषेधकैकावधारणपदसन्निधिप्रयुक्त एव। तदुक्तम्–

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः ॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
एकावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ इति ।

स्वगतभेदः नानात्वरूपजीवेश्वरभेदः। सजातीयभेदोऽत्र द्रव्यत्वादिना सजातीयपृथिव्यादिभेदः। विजातीयभेदो गुणादिभेदः। अथवा जडभेदो विजातीयभेदः। चैतन्यभेदः सजातीयभेदः। ज्ञानानन्दादिधर्मभेदः स्वगतभेदः। यदि च ''अस्य

(अद्वैतसिद्धिः)

गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते, नाश्वो न गर्दभ'' इति महाभाष्यानुसारात् समानजातीयद्वितीयपरत्वं द्वितीयशब्दस्य तदा अद्वितीयशब्दस्य सजातीयभेदनिषेधपरत्वम्, विजातीयस्वगतभेदनिषेधपरत्वं तु एकावधारणपदयोर्यथेष्टं व्याख्येयम्। अथवा अद्वितीयपदेनैव भेदत्रयनिषेधः, एकावधारणपदे तु सङ्कोचशङ्कापरिहाराय।

यत्तु केनचित् प्रलपितं– द्वितीयशब्दः सहायवाची, 'असिद्वितीयोऽनुससारपाण्डव'मिति प्रयोगात्, 'असिद्वितीयः असिसहायः' इति महामाष्योक्तेश्च, तथा चाद्वितीय-मसहायमित्यर्थोऽस्तु, एवमेकशब्दस्यापि नानार्थत्वेनाविरुद्धार्थमादायोपपत्तौ न मिथ्यात्वपर्यवसायिताऽऽस्थेया। तथा च 'एके मुख्यान्यकेवला' इत्यमरः, 'एकशब्दोऽयमन्य-प्रधानासहायसङ्ख्याप्रथमसमानवाची'ति 'एको गोत्र' इति सूत्रे कैयटः। 'ष्णान्ताषडि'ति सूत्रे महाभाष्यकारोऽपि एकशब्दोऽयं बह्वर्थः, अस्ति सङ्ख्यार्थः, अस्त्यसहायवाची, अस्त्यन्यार्थः इत्यादि व्याख्यातवान्। तथा च जीवादिभ्योऽन्यत्वं प्राधान्यं वा एकशब्दार्थोऽस्तु। एवमन्यान्यपि श्रुतिपदानि व्याख्येयानि इति। तत् पूर्वोक्तयुक्तिभिरपास्तम्। विस्तरेण च वक्ष्यते तात्पर्यनिरूपणे। तदेवं सद्रूपे ब्रह्मणि पदत्रयेण भेदत्रयनिषेधात् तद्भिन्नमिथ्यात्वे पर्यवसितं 'एकमेवाद्वितीय'ति वाक्यम्। एवमन्या अपि श्रुतयः स्मृतयश्च ग्रन्थविस्तरभयान्नोदाहृताः। स्वयमेव सूरिभिराकारे द्रष्टव्याः ॥

इत्यद्वैतसिद्धौ सर्वाद्वैतश्रुतेः अद्वैततात्पर्यकत्वनिर्णयः ।

## न्यायामृततरङ्गिणी

**एको द्रष्टा एकमेवेति श्रुतेः संकोचप्रयोजकं प्रत्यक्षविरोधमभिधाय पूर्वोत्तरविरोधं चाह ॥ किं चेति॥ ॥ सलिलादीति॥ बृहदारण्यके षष्ठे प्रपाठके सलिल एको द्रष्टाऽद्वैतो भवति एष ब्रह्म लोकः संम्राडिति हैनमनुशशास याज्ञवल्क्यः एषास्य परमा गतिरेषास्य परमा संपदेषोस्य परमो लोक एषोस्य परमानंद एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीत्यत्र सलिलादिपदेन विरोध इति संबंधः ॥ कालेति॥ छांदोग्ये सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्युपक्रम्य तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोसृजतेति तेजोबन्नानां सृष्टिमुक्त्वा सेयं देवतैक्षत हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे**

(तरङ्गिणी)

व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्यादौ कालादि-प्रापकैर्विरोध इत्यर्थः। ननु बृहदारण्यके सलिलादिपदैर्नविरोधः। तत्र हि सलिलपदं न सप्तम्यंतं जलवाचकं। किं तु प्रथमांतं स्वच्छगुणपरं। तदुक्तं बृहदारण्यकभाष्ये सलिलवत्स्वच्छीभूतः। सलिल इव सलिल इति। मैवं। षलगतौ अस्माद्धातोरौणादिके इलच्प्रत्यये नपुंसकलिंगस्य सलिलशब्दस्य जल एव युक्तत्वेन लक्षणादिनोक्तार्थत्वानुपपत्तेः। कं स्विद्गर्भं प्रथमं दध्र आपः तमिद्गर्भं प्रथमं दध्र आप इति स्पष्टार्थश्रुतौ बृहदारण्यके च आप एवेदमग्र आसुस्ता आपः सत्यमसृजंतेत्यादिनापां सृष्टेः पूर्वं सत्त्वस्य सत्यजगत्सर्जकत्वस्य चोक्तेः। श्रुत्यंतरे च नासदासीन्नो सदासीदिति सृष्टितः पूर्वं सर्वं निषिध्यापि अप्रकेतं सलिलं सर्वमा इदमिति सलिलस्य सत्त्वोक्तेश्च। आः आसीत्। तिप्यनस्तेरिति पर्युदासादिकाराभावः। एतच्च यद्यपि माधवीयभाष्ये सलिलमिति लुप्तोपमा। सलिलमिव। यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसाऽविभागापन्नं जगन्न शक्यविज्ञानमिति व्याख्यातं। तथापि तथा व्याख्याने सलिलशब्दे लक्षणापत्तिः उक्तवक्ष्यमाणसलिलप्रापकानेकश्रुतिविरोधश्च। अतो यथा श्रुतमेवारंभणाद्यधिकरणटीकोक्तप्रकारेण व्याख्यातव्यं। आपो वा इदमग्र आसन् सलिलमेव स प्रजापतिरेकः पुष्करपर्णे समभवत् तस्यांतर्मनसि कामः समवर्तत इदं सृजेयमिति तस्मात्पुरुषो मनसाभिगच्छति तद्वाचा वदति तत्कर्मणा करोति तदेषाभ्युक्ता। कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्। सतो बंधुमसति निरविंदन् हृदिप्रतीष्या कवयो मनीषेति। अयं मंत्रो माधवीयभाष्ये व्याख्यातः। अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत परमेश्वरस्य सिसृक्षाऽजायत इत्यर्थः। मनसः रेतः सारभूतं प्राणिभिर्मनसा क्रियमाणं। प्रथमं पूर्वकल्पोवर्जितं कर्म यत्तदप्यासीत्। एवं स्वेच्छयानादिकर्मादिवशात्सतः। सत्यभूतस्य प्रपंचस्य। बंधु बंधकं निर्मातारं सर्वेश्वरं। कवयोऽतिक्रांतदर्शिनः अतीतानागतवर्तमानाभिज्ञाः योगिनः। मनीषा मनीषया बुध्या। सुपांसुलुगिति तृतीयायाः लुक्। प्रतीष्य विचार्य। अन्येषामपि दृश्यत इति संहितायां दीर्घः। असति दीनरूपे। हृदि हृदये। निरविंदन् अजानन् इत्यर्थ इति। अनेन प्रपंचस्य मिथ्यात्वमपि निरस्तं भवति। टीकाकारैस्तु सतो मुख्यवायोः बंधुं मित्रमिति व्याख्यातं। आपोह यद्बृहतीर्विश्वमायन् गर्भं दधाना जनयंतीरग्निं। ततो देवानां समवर्ततासुरे कः कस्मै देवाय हविषा विधेमेति। अस्यार्थो माधवीये बृहतीः बृहत्यः। जसि वा च्छंदसीति पूर्वसवर्णदीर्घः। बृहन्महतोरुपसंख्यानमिति ङीप उदात्तत्वं। अग्न्युपलक्षितं सर्वं वियदादिप्रपंचजातं जनयंतीः जनयंत्यः। तदर्थं गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं। दधानाः आपोह आप एव।

(तरङ्गिणी)

विश्वमायन् जगदापूरयन्। यत् यस्मात्तस्माद्धेतोर्देवानां देवादीनां सर्वेषां प्राणिनां। असुः प्राणभूतः। एकः मुख्यः प्रजापतिः समवर्तत समजायत। एवं भूताय कस्मै प्रजापतिजनयित्रे। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वं। हविषा प्राजापत्यस्य पशोर्वपारूपेण एककपालपुरोडाशरूपेण हविषा। विधेम परिचरेम। अत्रेंद्रो वै वृत्रं हत्वा सर्वाविजितीत्यादि तृतीयपंचिकाद्ब्राह्मणं कशब्दव्याख्यानरूपं ज्ञेयं। अग्रिममंत्रोप्येतत्समानार्थोऽवगंतव्यः ॥ सृष्टिकालेति॥ छांदोग्ये अग्र इति सृष्टिकालः ईक्षणं नाम रूपव्याकरणं चेत्यर्थः ॥ द्वैतवाक्येति॥ सलिलादिलक्षणदोषमभिधाय पुरोडाशयोरंतराले अजामित्वकरं किंचित्कर्मविधित्सितमिति जामित्वाजामित्वयोरेक-वाक्यत्वावसायात्तन्मध्य पतितानि विष्ण्वादिवाक्यानि उपांशुयाजवाक्यविहितकर्मस्तुति-पराणीत्यवसीयते। इत्थमयं महाभाग उपांशुयाजः यत्र विष्ण्वादयो देवताविकल्पेनेज्यंते तस्माज्जामित्वाजामित्वोपक्रमोपसंहारयोरंतरालयुक्तोपां शुयाजवाक्यविषयत्वात्तत्रैव पंचमलकार-कल्पनया यागविधिः। नच रूपालाभः। ध्रौवाज्यस्य साधारणस्य सत्त्वात्। याज्यानुवाक्या-कांडगताग्नेयाग्नीषोमीययाज्यानु वाक्यायुगलमध्याम्नानरूपक्रमप्रमाणावगततदंगभाववैष्णवप्राजा-पत्याग्नीषो मीययाज्यानुवाक्यायुगलत्रयरूपमंत्रवर्णप्रापितविकल्पितविष्ण्वादिदेवतासत्त्वाच्च। प्रत्युत विष्ण्वादिवाक्य एव देवताऽलाभः। तत्प्रतिपादकस्य तद्धितादेरभावात्। तदुक्तं वार्तिके।

तद्धितेन चतुर्थ्या वा मंत्रवर्णेन वा पुनः।
देवतासन्निधिस्तत्रदुर्बलं तु परंपरमिति।

तस्माद्विष्ण्वादिवाक्यानामविधायकत्वादुपांशुयाजवाक्यं नानुवादः। तदुक्तं वार्तिके।

प्रकृतानामसद्भावाद्गम्यते नानुवादिता।
यागो विष्ण्वादिसंयुक्तैर्नहि वाक्यैर्विधीयत।

इति ॥ मध्यस्थेति॥ यद्यपि राणकोदाहृते वाक्ये मध्ये विष्ण्वादयो न पठ्यंते तथापि भाष्यकारीयोदाहृतवाक्यमध्ये विष्ण्वादयः पठ्यंत इति न कोपि दोषः ॥ कैय्यटोक्तेरिति॥ एको गोत्र इत्यत्र पदमंजर्यामप्युक्तं एकशब्दोयमन्यप्रधानासहायसंख्याप्रथमसमानसाधारणवाची। अन्यार्थे तावत् एकान्याभ्यां समर्थाभ्यां। प्रजामेका रक्षत्यूर्जमेका। एकां नबंधुरपरांमनुजां निरासुः। एकः पुरुषो धनुष्मानिति प्राधान्यार्थे। आद्यंतवदेकस्मिन्। एकहलादौ पूरयितव्ये। अत एकहल्मध्येनादेशादेरित्यादावसहायार्थे। एको द्वौ बहव इति संख्यार्थे। एके अल्पप्राणा इति प्रथमार्थे। तेनैकदिगिति समानार्थे। देवदत्तयज्ञदत्तावेकधनाविति साधारणार्थ इति ॥ महाभाष्य

(तरङ्गिणी)

इति।। ष्णांता षडिति सूत्रे अष्टानामित्यत्र अष्टन आविभक्ताविति आत्वे कृते नकारांतत्वाभावात् षट्संज्ञा न प्राप्नोति। ततश्च षट्चतुर्भ्यश्चेति नुडपि न प्राप्नोतीति चोदयित्वा षट्संज्ञायामुपदेशवचनंशताद्यष्टनर्थमिति समाधाय समाधानांतरमुक्तं। अथवा आकारोप्यत्र निर्दिश्यते षकारांता नकारांता आकारांता च संख्या षट् संज्ञा भवतीति। ननु यद्याकारांता संख्याषट् संज्ञा तर्हीहापि प्राप्नोति एकास्ता इत्यावंतस्यैकशब्दस्य बहुवचने जसि आकारांतत्वेन षट्संज्ञायां षड्भ्यो लुगिति लुक् प्राप्नोतीत्यादिपुनश्चोदयित्वा नैषदोषः एकशब्दोयं बह्वर्थः अस्त्येव संख्यापदं तद्यथा एको द्वौ बहव इत्यादिना बह्वर्थत्वमभिधाय तयान्यार्थे वर्ततेऽस्यैषप्रयोग इति समाधानावसरे एकशब्दः संख्याद्यर्थ उपपादितो महाभाष्ये इत्यर्थः ।।अस्तिसंख्यार्थ इति।। अयं चास्त्येव संख्यापदमिति भाष्यवाक्यस्यार्थानुवाद इति बोध्यं ।।अस्त्यसहायेति।। नचात्रोपचारादिनाऽसहायाद्यर्थत्वमिति वाच्यं। असहायैरित्यर्थ इत्यादिना महाभाष्ये एकशब्दस्यार्थकथनादिति भावः ।।अस्त्यन्यार्थ इति।। अन्यार्थेअस्ति ।।वर्तत इत्यर्थः।। ।।एकोबहूनामिति।। अत्र संख्यार्थकबहुशब्दप्रतिद्वंद्वी एकशब्द एकत्वसंख्यार्थ इत्यर्थः। आदिपदेन एको बहूनामसि मन्यवीळितः तव देवाहवमायंति सर्वे त्वमेको सि बहूननुप्रविष्टः भर्ता सन् भ्रियमाणो बिभर्ति एको देवो बहुधानिविष्टः इत्यादेर्ग्रहणं ।।संख्यादाविति।। आदिपदेन एकश्चरन्नुपशाकेभिरिंद्र एको वृत्राणि तोशसे एकश्चित्सन्नभिभूतिरित्यादौ माधवीयभाष्यानुसारेण। वधीर्हिदस्युमिति हिशब्दलब्धाबाधितप्रसिध्या सत्रात्वं पुरुष्टुतेतिसत्राशब्देन एकश्चित्सन्निति सच्छब्देन सत्यभूतासहायार्थत्वं। तथा आपो भूयिष्ठा इत्येकोऽब्रवीदग्निर्भूयिष्ठ इत्यन्योऽब्रवीत् वर्धयंती बहुभ्य एकोऽब्रवीत् ऋता वदंतश्चमसाँ अपिंशत। बभ्रुरेको विष्णुणः सूनरोयुवांज्यंक्ते हिरण्ययं। योनिमेक आससादद्योतन इत्यादावन्यार्थत्वं च दर्शितं। कैयटोक्तानेकशब्दार्थान् ब्रह्मणि योजयति ।।संभवंति चेति।। ननु संख्यारहितगुणादावेकशब्दप्रयोगान्न तस्य तदर्थत्वमत आह ।।मन्मत इति।। ।।अत एवेति।। एकशब्दस्यान्याद्यर्थत्वादित्यर्थः। द्वितीयाभावाद्यर्थत्वे हि तद्विरोधिद्वितीयं जगन्नोच्येतेति भावः ।।जगदिति।। तेजः प्रभृतीत्यर्थः ।।स्वगत इति।। पत्रादिसहितस्य वृक्षत्वेपि वृक्षस्य मूलमित्यादिभेदव्यपदेशाद्भेदः संभवतीत्यर्थः ।।सजातीय इति।। भेद इत्यनुषंगः ।।प्रतिषेधैरिति।। बोधितैरिति शेषः ।।त्रिभिरिति।। एकशब्देन मिथ्यात्वासिद्धिमुक्त्वाऽद्वितीयशब्देन तदसिद्धिं वक्तुं द्वितीयशब्दं तीयप्रत्ययांतं यौगिकमंगीकृत्याद्वितीयपदं व्याख्याति ।।अद्वितीयेति।। ।।आद्य इति।। न च प्रथमतृतीययोरपि किंचिदपेक्षया द्वितीयत्वमस्तीति वाच्यं। प्रथमबुद्धिस्थोत्तरनिपतितस्यान्यस्य द्वितीयशब्दार्थत्वेन प्रसिद्धत्वात् ।।जघन्यस्येति।। मुख्यार्थत्वेन प्रथमोपस्थितकर्मधारयापेक्षया लाक्षणिकार्थस्य बहुव्रीहेश्चरमोपस्थितत्वादित्यर्थः। नन्वद्वितीयशब्दे

(तरङ्गिणी)

न बहुव्रीहिः किं तु अस्ति भवंतीपरः प्रथमपुरुषे प्रयुज्यमानोप्यस्तीति स्मृतिसिद्धास्तिक्रियाध्याहारेण द्वितीयं नास्तीत्यर्थ इत्यत आह ।। द्वितीयादिति ।। ।। अनपुंसकस्येति ।। सुडनपुंसकस्येत्यत्र सुट्सर्वनामस्थानसंज्ञो भवति। नपुंसकस्य तु न भवतीति नञः प्रतिषेधार्थत्वे कुंडानि तिष्ठंतीत्यत्रजसादेशस्य शेः सर्वनामस्थानसंज्ञानिषेधः प्राप्नोति। शिसर्वनामस्थानमित्येतत्तु शसादेशे सावकाशं भविष्यति। तथाच वाक्यभेदोपि भविष्यतीत्यादिदोषेण प्रतिषेधार्थत्वमनंगीकृत्य पर्युदासार्थत्वमाश्रितं। उक्तं च महाभाष्ये। पर्युदासोयं यदन्यन्नपुंसकादिति ।। नार्षेयमिति ।।

दशमस्याष्टमे पादे विचारितं। प्रतिषेधः प्रदेशे अनारभ्य विधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात्। चातुर्मास्येषु महापितृयज्ञ इष्टित्वादविशेषाद्दर्शपूर्णमासविध्यंतप्राप्ताविदमाम्नायते। नार्षेयं वृणीते न होतारमिति। तत्र नञर्थः प्रतिषेधः पर्युदासो वेति संशयः। तत्र प्रतिषेधत्वे तस्य प्राप्तिपूर्वकत्वान्महापितृयज्ञे चार्षेयवरणादेर्लोकतो प्राप्तेः। शास्त्रप्राप्तस्य च सर्वथाननुष्ठाने तत्प्रापकशास्त्राप्रामाण्यप्रसंगादगत्या विकल्पः। यथा न तौ पशौकरोतीत्यत्र। पर्युदासार्थत्वे तु प्रकृतिवत्कुर्यादार्षेयवरणवर्जमिति तस्यातिदेशशास्त्रशेषतया तदेकवाक्यत्वेनातिदेशशास्त्रस्य वरणातिरिक्तांगविषयत्वादविहितमेव वरणं पितृयज्ञ इति नियमतस्तद्वर्जनं भवतीति फलभेदः। तत्र पर्युदासपक्षे नञ्धातुभ्यां वरणव्यतिरिक्तप्राकृतांगलक्षणाप्रसंगान्मुख्यार्थानुग्रहाय प्रतिषेध इति प्राप्ते अष्टदोषदुष्टविकल्पाद्वरं लक्षणया पर्युदासाश्रयणं। तच्चैकवाक्यत्वस्यापि संपादकमिति सिद्धांत इति।

।। एकवाक्यत्वेति ।। ब्रह्मादिपदैरित्यर्थः ।। प्रतिषेधेति ।। तथा च न द्वितीयाभावसिद्धिरिति भावः ।। वाक्यभेदेति ।। प्रथमपुरुषोप्रयुज्यमानोप्यस्तीति स्मृतिसिद्धास्तिक्रियाध्याहारेण एकमेव ब्रह्मास्ति द्वितीयं नास्तीत्यर्थद्वयेन वाक्यभेदः स्यादित्यर्थः। नन्वद्वितीयशब्देनान्यपदार्थस्य ब्रह्मणो निर्देशान्न वाक्यभेदः स्यादित्यत आह ।। अघटमिति ।। द्वितीयाभावविशिष्टस्य सत्त्वबोधने विशेषणस्य द्वितीयाभावस्य सत्त्वमावश्यकमित्यर्थः। ननु विशेषणस्य द्वितीयाभावस्यापि द्वितीयत्वादेव निषेध इत्यत आह ।। तस्यापीति ।। प्रामाण्यस्यौत्सर्गिकत्वेन द्वितीयस्य वियदादेर्निषेधस्य सत्तां बोधयित्वा पुनर्द्वितीयत्वेनाभावस्य निषेधे व्याघात इत्यर्थः ।। इतीति ।। इति शब्दः प्रकारार्थः। आद्यर्थोपि। तेन विशेषणविशिष्टतया द्वितीयनिषेधिका अनेका श्रुतयः संगृहीताः। तथा हि। त्वमंग प्रशंसिषो देवः शविष्ठमर्त्यं। न त्वदन्यो मघवन्नस्ति मडितेंद्र ब्रवीमि ते वचः। नत्वा वां अन्योदिव्यो न पार्थिवो न जातो न जनिष्यते। अश्वायंतो मघवन्निंद्र वाजिनो गव्यंतस्त्वा हवामहे। शिक्षेयमिन्महयते दिवे दिवे राय आकुहचिद्विदे।

(तरङ्गिणी)

न हि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता च न। सत्रात्वं पुरुष्टुतं एको वृत्राणि तोशसे। नान्य इंद्रात्करणं भूय इन्वति। वयं घातेत्वे इद्धिंद्र विप्रा अपिष्मसि। न हि त्वदन्यः पुरुहूत कश्चन मघवन्नस्ति मर्डिता। न किं वृधीकः। नह्या अन्यं बलाकरं मर्डितारं शतक्रतो। त्वं न इंद्र मृलय। कं तं न श्वघ्नी इत्याद्याः।

॥च्छागोवेति॥ षष्ठे अष्टमपादे चिंतितं पशुचोदनायामनियमोऽविशेषात्। यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेत्यत्र सर्वे पशव उपस्थाप्यंते उतच्छाग एवेति संशये पशुशब्दस्य पाचकादिशब्दवत्सभागत्वाभावादाकृत्यधिकरणन्यायेन व्यक्तिवाचित्वाभावाच्च सामान्यमेव पशुत्वं पशुशब्दार्थः। तथा च तन्मात्रस्यांगत्वात्पश्वंतरेपि तस्याविकलत्वात्सर्वपशूनामनियमेनालंभ इति प्राप्ते सिद्धांतः। छागो वा मंत्रवर्णात्। यथैव विधिस्तुत्योः समानविषयत्वान्निः संदिग्धघृतादिविषयार्थवादवशेन सामान्यवृत्तिरप्यंजनादिविधिर्विशेषे स्थाप्यते तथैव विधिमंत्रयोरेक-विषयत्वान्मंत्रवशेनचोदनार्थनिर्णयो युक्त इति। तस्मात् छाग एवालंभनीय इति।

॥अग्र इतीति॥ अत्यंताभावस्य सदासत्त्वेनाव्यावर्तकत्वादित्यर्थः ॥मिथ्यात्वेति॥ प्रागभाव-प्रतियोगित्वेनानित्यत्वस्यैव सिद्धेरित्यर्थः ॥अविद्येति॥ अविद्यादेः प्रागभावस्य सदाऽसत्त्वादित्यर्थः। द्वित्वसंख्यापूरणार्थात् यौगिकद्वितीयशब्दादन्य एव द्वितीयशब्दः सहाये रूढ इत्यभिप्रायेण द्वितीयशब्दार्थमाह ॥किं चेति॥ ॥सहायवाचीति॥ न तु यौगिकस्यैव तत्र लक्षणादिकमित्यर्थः। शब्दद्वये प्रमाणाभावं परिहरति ॥असीति॥ महाभाष्ये उदाहृतादिति शेषः। उपलक्षणं चैतत्। श्रौतप्रयोगोप्यवगंतव्यः। तथा हि। स वैनरमेतस्मादेकाकी न रमते स द्वितीयमैच्छत्सहैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ इत्यादौ द्वितीयस्याविद्यादेः सत्त्वेपि सहायस्य द्वितीयस्येष्यमाणत्वेन द्वितीयशब्दस्य तद्वाचकत्वात्। व्याख्यातं चैतच्छांकरीये बृहदारण्यकभाष्ये। स प्रजापतिः वै न रेमे रतिं नान्वभवत्। अरत्या विशिष्टोऽभूदित्यर्थः। तस्मादेकाकित्वादिधर्मवत्त्वादेकाकी न रमते रतिं नानुभवति। स तस्या अरतेरपनोदाय द्वितीयमैच्छत्। अरत्यपघातसमर्थं स्त्रीवस्त्वैच्छत्। गृद्धिमकरोत्। तस्य वैगृध्यतः स्त्रिया परिष्वक्तस्येवात्मनो भावो बभूवेति। ननु असिद्धितीयोनुससारेत्यादौ कथं द्वितीयशब्दस्य सहायार्थतेत्याशंकां परिहरति ॥असिद्धितीय इति॥ अनेकमन्यपदार्थ इति सूत्रे महाभाष्ये असिद्धितीयोनुससार पांडवं। संकर्षणद्वितीयस्य बलं कृष्णस्य वर्धतां। इत्यादौ अर्धतृतीया इतिवत् द्विवचनं प्राप्नोतीति चोदयित्वा नैष दोषः। अयं तीयांतः शब्दः पूरणे वर्तते।

(तरङ्गिणी)

अस्ति च सहायवाची। तद्यः सहायवाची तस्येदं ग्रहणं असिर्द्धितीयः असिसहाय इति गम्यत इत्यादिना ग्रंथेन द्धितीयशब्दस्य सहायार्थतावगम्यत इत्यर्थः। एवं चासिद्धितीय इत्यादौ द्धिवचनं न भवति। असेः सहायतया द्धित्वसंख्यापूरणत्वाभावेनान्यपदार्थे द्धितीयत्वाभावात्। तथा चासिर्द्धितीयोयं स्येति विग्रह इति बोध्यं। द्धितीयशब्दद्धयानंगीकारेपि एकस्यैव द्धितीयशब्दस्यार्थद्धयपरत्वं मुख्यमेवास्तु। अभियुक्ततरेण भाष्यकारेण सहायवाचीत्युक्तत्वादिति भावः। च शब्देन प्रयतपरिग्रहाद्धितीय इत्यादिमहाकविप्रयोगो दर्शितः। कुशासनादेर्द्धितीयस्य सत्त्वेपि परिग्रहस्य द्धितीयत्वोक्त्या तस्य सहायार्थता गम्यते। गुरुमते यौगिकस्यैकार्थस्य द्धितीयशब्दस्य नियतविषयत्वमभिप्रेत्य व्याख्यानांतरमाह ॥यद्धेति॥ ॥प्रकृतेति॥ यथा पंकजनिर्मथ्यादिशब्दः पंकजनिकर्तृविशेषे सद्यो निर्मथिताग्न्यादौ च वर्तते। सद्यो नवनीतभवे घृते नावनीतशब्दवत् ॥लोक इति॥ लोके स्मृतौ च प्रयोगादित्यन्वयः ॥महाभाष्य इति॥ विपराभ्यां जेरिति सूत्रे पराजयति सेनेत्यादावन्यार्थस्य पराशब्दस्य योगे आत्मनेपदं माभूदित्येवमर्थमुपसंग्रहणं कर्तव्यमिति चोदयित्वा अयं खलु विशब्द उपसर्ग एव। तस्यास्य कोन्यो द्धितीयः सहायो भवितुमर्हति। अन्य उपसर्गात्। तद्यथा। अस्य गोर्द्धितीयेनार्थ इत्यभिहिते गौरेवोपादीयते नाश्वो न गर्दभ इत्यादिमहाभाष्यग्रंथेन सदृशे द्धित्वसंख्यापूरणे द्धितीयशब्दो वर्तते इति सूचितमित्यर्थः ॥एकएवेति॥ एकएवेत्यादिश्रुतौ अद्धितीयो महाविष्णुरित्यादिस्मृतौ चाद्धितीयशब्दस्य व्याख्याततत्वात्तस्य समाभ्यधिकराहित्यमेवार्थ इत्यनुषंगः ॥भावेति॥ सत्त्वासत्त्वाभ्यामित्यर्थः ॥व्याघातेति॥ द्धितीयाभावस्य सत्त्वे तस्यैव द्धितीयत्वेन द्धितीयमात्राभावासिद्धिः। असत्त्वे द्धितीयस्यैव सत्त्वेन तदभावासिद्धिरित्यर्थः। अद्धितीयशब्दस्य समाभ्यधिकराहित्यार्थकत्वं संमतयति ॥ उक्तंचेति ॥ इति वच इत्यन्वयः। संगृह्णाति ॥ तस्मादिति ॥ ॥ एकमेवेति ॥ अनेन सदेव सोम्येदमग्र आसीदेकमेवाद्धितीयमिति वाक्यमर्थतः पठितं। क्वचित्पुस्तके अधिकं हि विजातीयमिति श्लोकः पठ्यते। तत्र तद्भेद इत्येतत्पदद्धयं तत्पदस्यावृत्तिश्च। तत् अधिकं समं च स्वरूपेण निवार्यते। गुणादिकं यत्तद्भेदोत्र निवार्यते इत्यर्थः। अतो न प्रकृतासंगतिरिति ध्येयम्।

व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगंयुजि।
न्यायामृततरंगिण्यामेकेत्यस्यार्थवर्णनम्।

॥ एकमेवेतिश्रुत्यर्थः ॥

## न्यायामृतकण्टकोद्धारः

एवं प्रमाणान्तरविरोधादद्वैते तात्पर्यं नेत्युक्तम्। इदानीं पूर्वोत्तरविरोधादपि नाद्वैते तात्पर्यमित्याह किंचेति। ननु द्वैतवाक्यस्य प्रामाण्याभावात् कथं तेन विरोध इत्यत आह प्रामाण्यस्येति प्रामाण्यस्य च स्वतस्त्वानङ्गीकारेऽद्वैतवाक्यस्यापि तन्न सिध्येत्। ग्राहकाभावात्। नन्वद्वैतवाक्यविरोधात् द्वैतवाक्यस्य विषयान्तरमप्रामाण्यं वा कल्प्यमित्यत आह यदिचेति। ननु कथं वैपरीत्यम्? अद्वैतवाक्यस्यैकविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञयोपक्रमात् ऐतदात्म्यमिदं सर्वमित्युपसंहारादद्वैतस्य महाप्रकरणितया प्राबल्यात् तदनुसारेणेतरस्य महाप्रकरणितया प्राबल्यात् तदनुसारेणेतरस्य व्याख्येयत्वात्। तथा च न वैपरीत्यमिति चेद् भवेदेतद् यद्युपक्रमोऽद्वैतपरः स्यात्। उपसंहारो वा। तदेव न युज्यते। प्रमाणान्तरविरोधेन स्वपदविरोधेन चोपक्रमोपसंहारयोरद्वैतपरत्वस्यैवायोगात्। उपक्रमादेः प्राधान्याद्यर्थतया व्याख्यास्यमानत्वाच्च। अन्यथाऽसद्वा इदमग्र आसीदित्याद्युपक्रमादेरसत्परत्वेनासतः प्राकरणिकत्वात् तदनुसारेण सदेवेत्यादि वाक्ययोजना स्यादिति बौद्धराद्धान्त प्रवेशः। नन्वपच्छेदन्यायेनोत्तरेण पूर्वबाधः स्यादित्यत आह अपच्छदन्यायादेरिति। ननु सलिलादिकस्य प्रमाणान्तरप्राप्तत्वादनुवादकत्वेन तद् वाक्यमप्रमाणमित्यत आह नचेति। तर्हि कोऽर्थोऽद्वैतश्रुतेरित्यत आह तस्मादिति। पूर्वोत्तरप्रमाणान्तराविरोधेनार्थः कर्तव्य इत्यर्थः। उपांशुयाजवाक्यमध्यस्थ विष्ण्वादि वाक्यवदिति।

द्वितीयाध्याये द्वितीयपादे चतुर्थाधिकरणे चिन्तितम्। पौर्णमासीवदुपांशुयाजः स्यात्। दर्शपूर्णमासयोः श्रूयते। जामिवा एतद् यज्ञस्य क्रियते यदन्वञ्चौ परोडाशौ। उपांशुयाजमन्तरा यजति। विष्णुरुपांशु यष्टव्योऽजामित्वाय। प्रजापतिरुपांशु यष्टव्योऽजामित्वाय। अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति। तथाऽऽग्नेयाग्नीषोमीयपुरोडाशयाज्यानुवाक्यायुगलमध्ये वैष्णवप्राजापत्याग्नीषोमीय याज्यानुवाक्या-युगलान्यम्नातानि शाखाभेदेन। तत्र संदेहः। विष्ण्वादिवाक्येषु त्रिषु यागविधयः। उपांशुयाजवाक्यं तु तत्समुदायानुवादः ? उतोपांशुयाजवाक्ये यागविधिः, विष्ण्वादिवाक्यत्रयं तदर्थवादः ? इति। पूर्वपक्षस्तु विष्ण्वादि वाक्य एव विधिः स्वीकर्तव्यः। विध्यर्थकतव्यप्रत्ययस्य श्रवणात्। न च रूपालाभान्न विध्यर्थतेति वाच्यम्। साधारणध्रौवाज्यस्य सत्वेन द्रव्यसत्वात्। विष्ण्वादिश्रवणेन देवतासत्वाच्च। द्रव्यदेवतात्मकरूपलाभसंभवात्। ननु वैश्वानरवाक्ये यदष्टाकपालो भवतीत्यादिवाक्यानां द्वादशकपालवाक्यैकवाक्यतावत् जामितादोषोपक्रमतन्निर्हरणान्तैकवाक्यतैव विष्ण्वादिवाक्यस्य स्वीकर्तव्येति चेन्न। दृष्टान्तदार्ष्टान्तिकयोः वैषम्यात्। तथाहि यदष्टाकपालो भवतीत्यत्र विधिपुरुषव्यापारयोरश्रवणात् यच्छब्दोपबन्धात् वर्तमानापदेशो-नार्थवादस्वरूपत्वात् द्वादशकपालं निर्वपेदिति द्वादशकपालवाक्ये विधियुक्तभावनाश्रवणात् तदुपक्रमोपसंहार वर्तिनामष्टत्वादीनां तदेकवाक्यत्वं न बाधितव्यम्। इह तु सत्यपि जामित्वाजामित्वोपक्रमोपसंहारमध्यवर्तित्वे यच्छब्दाभावात् विधियुक्तपुरुषव्यापारश्रवणात् अजामित्वायेति प्रत्येकमुक्त्वा जामितादोष परिहार प्रशंसावगमात् वाक्यभेदमङ्गीकृत्य विधित्वमेव स्वीकर्तव्यम्। नचोपांशुयाजवाक्यमेव विधायकमस्त्विति वाच्यम्। तत्र यजतीति वर्तमानापदेशेन विधित्वासंभवात् ध्रौवद्रव्यलाभेऽपि देवतायाः सर्वथाऽलाभात्। तस्माद् विष्ण्वादिवाक्यमेव विधायकम्। उपांशुयाजवाक्यं च समुदायानुवाद इति कथमुक्तं विष्ण्वादिवाक्यवत् अद्वैतवाक्यं पूर्वोत्तरानुसारेण

(कण्टकोद्धारः)

नेयमिति। सिद्धान्तस्तु जामिवा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशाविति पुरोडाशनैरन्तर्ये जामितादोषाभिधानात् उपक्रम एवैतदवगतं नूनमन्तराले किञ्चिद् विधित्सितम्। तथा मध्ये करणादेवाजामित्वगुणेन प्रशंसिषितमिति। किं तद्विधेयम्। अन्तरालसंयुक्तं विधेयमिति। एवं च विष्ण्वादिवाक्ये न विधिः। तत्रान्तरालसंयोगाभावात्। अन्तरालेऽविहितानां च नाजामित्वेन प्रशंसावकल्पते। पुरोडाशनैरन्तर्याज्जामिता स्यात्। अतोऽन्यत्र क्वचिद् विष्ण्वादयो यष्टव्या इत्यसंगतम्। किञ्च विष्ण्वादिवाक्ये विधित्वाङ्गीकारे जामितादोषोपक्रमाजाभित्वोपं संहारैकरूप्यप्रतीतैकवाक्यत्वभङ्गः स्यात्। तस्मादुपांशु याजवाक्य एव विधिः। अन्तरालसंयोग श्रवणात्। न च यजतीति वर्तमानापदेशान्न विधित्वमिति वाच्यम्। पञ्चमलकारता कल्पनात्। न च रूपालाभः। ध्रौवाज्यसद्भावात्। याज्यानुवाक्यकाण्डे आग्नेयाग्नीषोमीय याज्यानुवाक्य युगलद्वयमध्याम्नानलक्षण क्रम प्रमाणप्रमापिताङ्गभाव वैष्णव प्राजापत्याग्नीषोमीय याज्यानुवाक्यायुगलत्रयरूप मन्त्रवर्णप्रापित वैकल्पिक विष्ण्वादि देवतासद्भावाच्च रूपलाभसंभवात्। तस्मादुपांशुयाजवाक्यमेव विधिः। विष्ण्वादिवाक्यं तूपक्रमो पसंहारानुसारेण तदर्थवाद इति एवमेवाद्वैतवाक्यमप्युपक्रमोपसंहारानुसारेण नेयमिति भावः।

न केवल मद्वितीयपदस्य द्वितीयमात्रनिषेधपरत्वे प्रत्यक्षविरोधः पूर्वोत्तर विरोधश्च। किन्तु स्वकृत सदेवेत्येतद्व्याख्यानविरोधश्चेत्याह किञ्चेति। नहीति। अपदार्थत्वात् अवाक्यार्थत्वात् न ह्यात्मैवासीदित्यस्या नात्मासीदित्यर्थः इति भावः। सविशेषणे हीति न्यायेनेति। सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे। यथा स्वर्गी ध्वस्त इत्यत्र विशिष्टध्वंसासंभवे विशेषणीभूत स्वर्गमात्रपरत्वं, तथेहापि विशिष्टासत्वासंभवे विशेषणीभूतसद्व्यतिरेकासत्वे सदात्मकत्वमेव पर्यवस्यतीत्यर्थः। नन्वेकशब्दस्यानेकार्थत्वमेव कुत इत्यत आह एक इति। ष्णान्ता षडितिसूत्र इति। अत्र सूत्रे महाभाष्ये एकशब्दानेकार्थोक्तौ का प्रसक्तिरिति चेदित्थम्– ष्णान्ता षडिति सूत्रे उपदेशग्रहणं कर्तव्यम्। अन्यथाऽष्टानामित्यत्राष्टन आ विभक्तावित्यनेनात्वे कृते नान्तत्वाभावेन षट्संज्ञाभावे षट्चतुर्भ्यश्चेति नुट् न प्राप्नोति। उपदेग्रहणे भविष्यतीत्येवं वार्तिककारेणोक्ते प्रत्याख्यातं भाष्यकारेण। ष्णान्ता षडित्यत्राकारः प्रश्लिष्यते। एवं च षान्ता नान्ता आन्ता संख्या षट्संज्ञा स्यादित्यर्थः स्यात्। तथाचात्वे कृतेप्यान्तत्वात् षट्संज्ञा भविष्यतीति। नन्वेवमेकास्त इत्यत्रापि स्यादित्याक्षिप्ते एकशब्दस्यानेकार्थत्वात् दशान्यार्थत्वोपपत्तेरिति वक्तुमेकशब्दस्यानेकार्थत्वोक्ति-प्रसक्तिरिति भावः। ननु वेदे संख्यादावेकशब्दस्य प्रयोगादर्शनात् कथमेतदित्यत आह एक इति। ननु भवत्वेकशब्दोऽनेकार्थः। तथापि तस्य प्रकृतेऽसंभवात् मिथ्यात्वपरत्वमेव स्वीकर्तव्यमित्यत आह संभवन्ति चेति। जीवादितोऽन्यत्वेऽनुमानागमविरोधः परिहृतः, परिह्रियतेचेति भावः। एकशब्दस्यान्याद्यर्थत्वे युक्तिमप्याह अवेति। एकशब्दस्य मिथ्यात्वपरत्वेन व्याख्याने स्वकृत व्याख्यानविरोध इत्याह किञ्चेति। ननु मास्त्वेक शब्देन मिथ्यात्वसिद्धिः। द्वितीय मात्रनिषेधकाद्वितीयशब्देन तु भविष्यतीत्यत आह अद्वितीयशब्दोपीति। आद्य इति। तथाच नानेन मिथ्यात्वसिद्धिरिति भावः। न च प्रथमतृतीययोरपि किंचिदपेक्ष्य द्वितीयत्वात् कथं द्वितीयत्वसामान्यनिषेध इति वाच्यम्। अद्वितीयशब्दस्य सामान्यनिषेधपरत्वसंभवात् तथा भूत पदार्थाभावेन व्युत्पत्यसंभवात्। तथा च किचिदपेक्षया द्वितीयत्वेऽपि किंचिदपेक्षयाऽद्वितीयत्वसंभवादद्वितीयपदस्य सापेक्षद्वितीयनिषेध परत्वमेवाङ्गीकरणीयमिति भावः। जघन्यस्येति। वृत्तिगतपदार्थ परित्यागेनान्य-

(कण्टकोद्धारः)

पदार्थपरत्वकल्पनादिति भावः। अनपुंसकस्येत्यादाविवेति। सुडनपुंसकस्येत्यत्र यद्यनपुंसकस्येति प्रसज्य प्रतिषेधस्तदा शिसर्वनामस्थानमित्यनेन सर्वनामस्थानसंज्ञाया विहितत्वात् विधिप्रतिषेधयोर्विकल्पः स्यात्। सुडनपुंसकस्येत्यैकवाक्यता भङ्गश्चेति पर्युदासार्थकत्वमाश्रितम्। पर्युदासार्थकत्वे तु नपुंसकातिरिक्ते सुट् सर्वनामस्थानसंज्ञः। नपुंसके न वा विधिर्नवा प्रतिषेधः। एवं च न विकल्पः। न च वाक्यभेदः। एवमेवात्रापीति भावः। प्रसज्यप्रतिषेध पर्युदासयोर्लक्षणं तु–

अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्॥
प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥

नार्षेयं वृणीत इति। दशमाध्यायेऽष्टमपादे प्रथमाधिकरणे चिन्तितम्। प्रतिषेधः प्रदेशेनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद् विकल्पः स्यात्। चातुर्मास्येषु महापितृयज्ञे इष्टित्वादविशेषेण दार्शपौर्णमासिक विध्यन्तप्राप्तविदमाम्नायते– नार्षेयं वृणीते न होतारमिति। तथानारभ्यवादे श्रूयते– ओश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, येयजामह इति पञ्चाक्षरम् द्व्यक्षरो वषट्कारः एष वै सप्तदश प्रजापतिर्यज्ञमन्वायत्त इति। तत्रोक्तं यजतिषु येयजामहं करोति, नानूयाजेषु येयजामहं करोतीति। तत्र वरणस्य विधिप्रतिषेधौ चोदकप्रत्यक्षवचनाभ्यां प्रतीयते। येयजामह इति मन्त्रस्य तु द्वाभ्यां प्रत्यक्षवचनाभ्यां विधिनिषेधौ प्रतीयेते। तत्र संदेहः। महापितृयज्ञे वरणतन्निषेधयोः तथाऽनूयाजेषु येयजामह तत्प्रतिषेधयोर्विकल्प उत नियोगतो वर्जनमेवेति। तदर्थमिदं विचार्यते नार्षेयं नानूयाजेष्विति किमयं प्रतिषेध उत पर्युदास इति। ननु प्रतिषेधपर्युदासयोः कोऽनुष्ठाने विशेष इति चेत् प्रतिषेधे यत् प्रतिषिध्यते तस्य प्राप्तिपूर्वकत्वात् महापितृयज्ञे आर्षेयवरणादिकर्तव्यत्वस्य लोकतः प्राप्त्यभावात् शास्त्रप्राप्तस्य च सर्वथाननुष्ठाने शास्त्राप्रामाण्यप्रसंगात् अगत्या विकल्पो भवति। पर्युदासे तु प्रकृतिवत् कुर्यात् आर्षेयवरणादिवर्जमिति तस्यातिदेशशास्त्रशेषतया तदेकवाक्यत्वेनातिदेशशास्त्रस्य वरणातिरिक्ताङ्गविषयत्वात् विहितमेव वरणं महापितृयज्ञे नेति नियमतस्तद्वर्जनमेव भवतीत्यस्त्येवानुष्ठाने विशेष इति।

पूर्वपक्षस्तु। प्रतिषेध पक्षे मुख्यवृत्तिर्लभ्यते। पर्युदासे तु लक्षणा। तथाहि आर्षेयं वृणीते, न वृणीत इति श्रुत्यैव विधिनिषेधयोः प्रतीतिः। तथा नानूयाजेष्वित्यत्र। पर्युदासे तु नानूयाजशब्दाभ्यां यागान्तराणि नञ् वृणातिभ्यां च वरणव्यतिरिक्त चोदकप्राप्ताङ्गान्तराणि लक्षणया प्रतिपाद्येरन्। न च मुख्यवृत्तिसंभवे लक्षणा युक्ता। किं चाब्राह्मणमित्यादाविव समासलभ्यः पर्युदासः कथमत्र नानूयाजेष्वित्यसमस्ते लभ्येत ? न च समासवाक्ययोरेकार्थत्वाद् वाक्येऽपि पर्युदासलाभः स्यादिति वाच्यम्। तयोर्भिन्नार्थत्वात्। अन्यथा वार्तिककारीयं वा वचनानर्थक्यं न स्यात्। स हि नित्यो ह्यस्य सुबन्तेन समास इति ब्रुवन् वाक्यसमासयोर्भिन्नार्थतां मन्यते। एकार्थत्वे हि समासेन वाक्यनिवृत्तौ प्रायोविभाषावचनं सार्थकमेव स्यात्। तथाच तद्वाक्य समासयोर्भिन्नार्थत्वात् समासलभ्यः पर्युदासो वाक्येन न प्राप्यते। तस्मान्नञः प्रतिषेधार्थत्वात् विकल्पः।

(कण्टकोद्धारः)

ननु तथापि न विकल्पः। तुल्यबलत्वाभावात्। एकार्थास्तु विकल्पेरन्निति तुल्यबलानामेव विकल्पाभिधानात्। प्रकृते च ये यजामहविधेः सामान्यविषयत्वात् निषेधशास्त्रस्यानूयाजविषयत्वात् विशेषविषयत्वेन बाधो न युक्तः। तथानुमानिकचोदक प्राप्तस्य वरणस्य प्रत्यक्षश्रुतेन निषेधेन सुतरां बाधो न युक्त इति चेन्नैवम्। तत्र हि विशेषविषयेण सामान्यविषयस्य, प्रत्यक्षेण च चोदकप्राप्तस्य बाधो यत्र विशेषशास्त्रं सामान्यशास्त्रानपेक्षं, प्रत्यक्षं वा चोदकानपेक्षं भवति यथा पदशास्त्रेणाहवनीयशास्त्रस्य प्रत्यक्षप्राप्तशरैश्च कुशानां बाधः। तत्र पदशास्त्रस्य शरशास्त्रस्यवा अहवनीयशास्त्र चोदकानपेक्षत्वात्। प्रकृते तु प्रतिषेधस्य प्राप्तिसापेक्षत्वात् प्रापकस्य च चोदकसामान्यशास्त्रान्यस्याभावादुपजीव्यत्वेन तयोः प्राबल्यात् अनयोश्च विशेषविषयत्वप्रत्यक्षत्वाभ्यां प्रबलत्वात् तुल्यबलत्वेन विकल्पो युक्त इति। सिद्धान्तस्तु प्रतिषेधपक्षे विकल्पो भवति। स चाष्टदोषदुष्टः। तेन पक्षेऽप्रामाण्यकल्पनाद् वरं लक्षणया पर्युदासाश्रयणम्। किं च पर्युदासपक्षे एकवाक्यता भवति। प्रतिषेधपक्षेतु वाक्यभेदः। संभवत्येक वाक्यत्वे वाक्यभेदोऽयुक्तः। न च समासलभ्यः पर्युदासः कथं वाक्येन लभ्येतेति वाच्यम्। वाक्यसमासयोरेकत्वात्। न च वार्तिककारीयवचनविरोधः। तस्य न्यायविरोधेनानादरणीयत्वात्। अस्ति हि वृत्तिवाक्ययोरेकार्थत्वसंभवः। य एव हि राजपुरुष इति वृत्तेरर्थो राजविशिष्टः पुरुषः स एव राज्ञः पुरुष इति वाक्यस्यापि। विशेषस्त्वेतावान् वृत्तावभिधानद्वयमप्यनन्याक्षिप्तस्वार्थं सदेकं विशिष्टं प्रतिपादयति। वाक्ये त्वर्थान्तराक्षेपं सहते। यथा ऋद्धस्य राज्ञः पुरुष इति। अत्र राजपदम् ऋद्धाक्षेपमनुभवत् पुरुषं विशिनष्टि। न चैतावता प्रतिपाद्यभेदः। यदि चैतावता भेदेन समासो वाक्यस्य निवर्तक इत्यङ्गीक्रियते ततो विभाषावचनात् प्राक् विहितेनोपकुम्भादि समासेनापि वाक्यं निवर्तेत। तथोपपदसमासेन कुम्भकारादि। नचैवमिदम्। तस्मादवश्याध्येयं विभाषावचनमित्यन्याय्यं तदानर्थक्यम्। तस्मादसमासेऽपि विकल्पपरिजिहीर्षया पर्युदासाश्रयणं युक्तम्। एवमेवाद्वितीयमित्यत्र प्रतिषेधे पूर्वोत्तरप्रमाणान्तरविरोधाल्लक्षणया द्वितीयादन्यदद्वितीयमिति पर्युदासाश्रयणमेव युक्तम्। एवं चैकवाक्यत्वमपि भवतीत्यन्यपरमप्यनुकूलं भवतीति भावः। प्रतिषेधपक्षेऽपि न द्वितीयमात्र निषेधो द्वितीयाभावस्यानिषेधादित्याह। अघटं भूतलमितिवदिति। ननु द्वितीयाभावस्यापि द्वितीयत्वेन निषेधान्नोक्तदोष इत्यत आह तस्यापीति। द्वितीयाभावस्य निषेधे द्वितीयस्य सत्वापातेन व्याघात इत्यर्थः। किञ्चात्र द्वितीयमिति सामान्योक्तावपि वाक्यान्तरे विशेषणयुक्तत्वेनैव निषेधात् तदनुरोधेनात्रापि तथैव निषेधः स्वीकर्तव्य इत्याह आत्मावा इति। न चैतदनुरोधेन तस्यैव सामान्यविषयत्वमस्त्विति वाच्यम्। तस्य विशेष विषयत्वेन प्रबलत्वात्। अन्यथा आहवनीय शास्त्रानुसारित्वं पदशास्त्रस्य, कितिचेत्यस्य च क्ङितीत्येवनुसारित्वं स्यादिति भावः।

छागो वा मन्त्रवर्णादितीति। षष्ठेऽष्टमपादे चिन्तितम्। पशुचोदनायामविशेषात्। ज्योतिष्टोमे श्रूयते यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति। तत्र संदेहः किं यत्किंचित्पशुरालब्धव्य उत छाग एवेति। चोदनायां सामान्यश्रवणात् मन्त्रवर्णे छागस्य वपाया मेदस इति श्रवणाच्च संदेहः। पूर्वपक्षस्तु यत्किंचित् पशुरेवालब्धव्यः। विधिवाक्ये पशुशब्दश्रवणात्। न च अक्ताः शर्करा इत्यत्राक्तत्वमर्थवादानुसारेण यथा नीयते तथा मन्त्रवर्णानुसारेण पशुसामान्य शब्दो नेय इति वाच्यम्। विधिस्तुत्योः पदैकवाक्यत्वात् आक्तस्तुतेरपर्यवसिताञ्जनविधिरर्थवादगत घृतविषय एव पर्यवस्यति। मन्त्रचोदन योस्तु वाक्यभेदादप्रतिद्वन्द्वं

(कण्टकोद्धार:)

विधिवाक्यं पशुसामान्ये पर्यवसितं, न मन्त्रानुरोधेन शक्यं विशेषे नेतुम्। अप्रधानानुसारेण प्रधानस्य नेतुमशक्यत्वात्। न चैवं कथं मन्त्रस्य कर्मसमवेतार्थप्रकाशकत्वमिति वाच्यम्। अप्रधानस्य प्रधानानुसरित्वस्यावश्यकतया परतन्त्रे मन्त्रे छागशब्दस्य छां गमयतीति छन्नगमनत्वादियोगेन पशुसामान्यप्रकाशकत्वस्य छागालंभनपक्षे मन्त्र प्रयोगस्य वा कल्पनात् कर्मसमवेतार्थप्रकाशकत्वमुपपन्नमिति। सिद्धान्तस्तु। न मन्त्रवर्णस्य योगेन पशुपरत्वम्। न वा पाक्षिकत्वम्। रूढेर्बलवत्त्वान्नित्यवत् श्रुतत्वाच्च। न च विधिवाक्यविरोधाद् यौगिकार्थ परत्वमिति वाच्यम्। विधिबोध्यस्य पशुत्वस्य छागेऽप्यविकलत्वेन विरोधाभावात्। सामान्यस्यानुष्ठातुमशक्यत्वेन विशेषस्यावश्यमपेक्षितत्वेन मन्त्रवर्णप्रापितविशेषस्यैव ग्राह्यत्वाच्च। तथा च न पशुशब्दस्य छागपरत्वम्। एवं च यदा प्रधानवाक्यस्य सामान्यशब्दस्याप्रधानमन्त्रवाक्यस्य विशेषानुसारित्वं तदाऽद्वितीयशब्दस्य प्रधानवाक्यस्थस्यापि प्रधानवाक्यान्तरस्थविशेषपरत्वं सुतरां युक्तमिति भावः। मिथ्यात्वेति। पारिभाषिकमिथ्यात्वं च सिद्धसाधनमिति भावः। किंचाद्वितीयशब्दस्य पूर्वोत्तराविरुद्ध प्रमाणान्तराविरुद्धानेकार्थसंभवात् न द्वितीयमात्रनिषेधपरत्वमित्याह किंचेति। असिद्वितीय इति। असिः द्वितीयो यस्येत्यर्थः। तथाचेति। सृष्टिकालेऽसहायत्वस्य संभवान्न पूर्वोत्तरविरोधः। विधसानस्याप्यसहायत्वस्य संभवादिति भावः। ननु प्रकृत समानद्वितीये द्वितीय शब्दस्य व्युत्पन्नत्वं कुत इति तत्राह लोक इति। किंच त्वन्मतेऽपि द्वितीयशब्देन द्वितीयमात्रं गृहीत्वाऽद्वितीयशब्देन तन्निषेधोऽशक्य इत्याह द्वितीय शब्देनेति। ननु समाधिकराहित्यं नाद्वितीयशब्दार्थः। तस्य ब्रह्मणि बाधितत्वादित्यतस्तत्र श्रुतिस्मृती आह न तदिति। नन्वस्तु ब्रह्मणः समाभ्यधिकराहित्यम्। तदद्वितीयशब्दार्थ इत्यत्र किं प्रमाणमित्यत आह एक एवेति। श्रुतौ स्मृतौ च समाभ्यधिकराहित्यस्याद्वितीय शब्दार्थत्वेन व्याख्याततत्वादित्यन्वयः। तथाच व्याख्यानमेव प्रमाणमिति भावः। नन्वर्थान्तरवत् द्वितीयाभावोऽप्यद्वितीयशब्दार्थः किं न स्यात्? तस्याप्यद्वितीयपदार्थत्वसंभवादित्यतो विकल्पमुखेन पूर्वोक्तां युक्तिं स्मारयति द्वितीयाभावस्येति। ननु तर्हि कथमेकमेवाद्वितीयं सदेव सोम्येदमग्र इति वाक्यं योज्यमित्यत आह तस्मादिति। तथाचैकमेवाद्वितीयमिति श्रुतिर्न मिथ्यात्वे प्रमाणम्॥

एकमेवेति श्रुत्यर्थः॥

## न्यायामृतप्रकाशः

पूर्वं मानांतराविरुद्धः पूर्वोत्तराविरुद्धश्चार्थो वर्णनीय इत्युक्तम्। तत्रैकमेवेति श्रुतेर्मानांतरेण प्रत्यक्षेण विरोधमुक्त्वा पूर्वोत्तरविरोधं चाह ॥ किं चेति॥ बृहदारण्यकवाक्यमिदम्। अद्वैतो भवतीत्यत्र द्वितीयमात्रनिषेधे सलिलादिपदेन विरोध इति संबंधः। सदेवेति छांदोग्यवाक्यं पूर्वेण एकमेवेत्यतः पूर्ववाक्येन। ननु द्वैतस्य सत्यत्वं न सिद्ध्यतीति चेत्तत्राह ॥ प्रामाण्यस्येति ॥ ॥ लक्षणादिनेति॥ विरुद्धधर्मप्रतिपादकवाक्यस्य भागत्यागलक्षणयाऽद्वैतपरत्वम् ॥ अतात्विकेति॥ अतात्विकभेदेत्यर्थः। तद्विरोधेन अद्वैतवाक्यविरोधेन ॥ विपरीतमिति॥ अद्वैतवाक्यस्य द्वैतवाक्यविरोधेनाप्रामाण्यादिकमित्यर्थः। ननु निषेध्यभेदप्रापकतया पूर्वस्य

(प्रकाशः)

भेदप्रत्यक्षादेः परेण तन्निषेधकेनाद्वैतवाक्येनापच्छेदन्यायेन बाधोस्त्विति चेत्तत्राह ॥ अपच्छेदेति ॥ अत्र चाद्वैतागमस्य पूर्वं भेदप्रापकं वाक्यमुपजीव्यम्। न ह्यपच्छेदे पूर्वमुपजीव्यमिति निरस्तमित्यर्थः। अपच्छेदन्यायमंगीकृत्याप्याह ॥ तेनेति ॥ परेणाभेदागमेनेत्यर्थः। अस्माभिरद्वैतवाक्यस्य पूर्वोत्तरद्वैतवाक्यविरोध उक्तोस्ति तत्रापच्छेदन्यायेन परेणाद्वैतवाक्येन पूर्वस्य सदेवेत्यादेर्द्वैतवाक्यस्य बाधेपि परस्योत्तरत्र तदैक्षतेत्यादेर्न बाध इत्यर्थः। पूर्वस्यापि द्वैतागमस्य न परेण बाध इत्याह ॥ पूर्वस्यापीति ॥ नन्वनुवादकत्वान्न द्वैतागमानां सलिलेत्यादिपूर्वोत्तरवाक्यानां स्वार्थे तात्पर्यमित्यत आह ॥ न चेति ॥ मध्यस्थं संदष्टम्।

॥ उपांशुयाजेति ॥ द्वितीयाध्याये द्वितीयपादे चिंतितं ''पौर्णमासीवदुपांशुयागः स्यादि''त्यत्र दर्शपौर्णमासयोराम्नायते ''जामि वा एतद्यज्ञस्य क्रियते यदन्वंचौ पुरोडाशौ उपांशुयाजमंतरा यजति। विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाये''ति। तत्र संशयः। विष्ण्वादिवाक्येषु त्रिषु यागविधयः उपांशुयागवाक्यं तु तत्समुदायानुवादः उतोपांशुयागवाक्ये यागाविधिः विष्ण्वादिवाक्यत्रयं तदर्थवाद इति। तत्र विष्ण्वादिवाक्येषु तव्यप्रत्ययश्रवणात् ''यद्ध्रुवायामाज्य''मिति ध्रुवाज्यरूपद्रव्यसत्त्वात् विष्ण्वादिरूपदेवताश्रवणेन द्रव्यदेवतात्मकरूपलाभाच्च तेष्वेव विधयो न तूपांशुयागवाक्ये वर्तमानापदेशात्। ''ध्रौवं साधारणद्रव्य''मिति साधारणध्रौवाज्यरूपद्रव्यलाभेपि देवताया अलाभाच्चेति तद्यागत्रयसमुदायानुवाद इति पूर्वपक्षः।

सिद्धांतस्तु जामिता वा एतदित्याद्युपक्रमे पुरोडाशद्वयनैरंतर्यप्रयुक्तजामितादोषसंकीर्तनेन तन्निर्हरणाय तदंतराले पुरोडाशद्रव्यककर्मभिन्नं किंचित्कर्मविधित्सितमिति प्रथममेवावगमात् जामितादोषोपसंहाराच्च तदुभयसंदष्टं विष्णवादिवाक्यं उपांशुयाजवाक्यविहितयागस्तावकतयार्थवादः। न चोपांशुयाजवाक्ये विधिप्रत्ययो न श्रूयत इति वाच्यं लकारव्यत्ययांगीकारात्। विष्ण्वादिवाक्यस्थतव्यप्रत्ययैतद्वाक्यस्थलटोर्वा विनिमयांगीकारात्। द्रव्यं तु ध्रौवाज्यं मांत्रवर्णिको विष्ण्वादिरेव देवतेति न रूपालाभः। यथोक्तम्। ''ध्रौवं साधारणं द्रव्यं देवता मांत्रवर्णिकी''ति।

॥ इदंशब्देति ॥ इदमस्येति व्याख्यानांतरमस्य न संमतमित्याशयः। इदं एकमेव सदेव सच्छब्दोदितब्रह्मात्मकमेवासीदित्यर्थः। सदभेदेन सच्छब्दोदिब्रह्मात्मकत्वेन। तन्निषेधे द्वितीयस्य सत्त्वनिषेधे। ननु न व्याघातः अद्वितीयपदेन द्वितीयस्य सत्त्वनिषेधेपि तदनुसारेण सदेवासीदित्यस्यापीदं सर्वमसदासीदित्यर्थो वर्ण्यत इति मंदाशंकां परिहरति ॥ न हीति ॥ ॥ सविशेषणे हीति ॥ जगति नासीदित्युक्तासत्त्वस्य बाधितत्वात्सद्व्यतिरिक्तत्वमुपसंक्रामतीत्यर्थः ॥ सदात्मकत्वमिति ॥ सदात्मकतया आसीदित्यर्थः। किं चैकमेवाद्वितीयमित्यत्र मिथ्यात्वबोधकशब्दः क इति विचारयति ॥ किं चेति ॥ ॥ प्रजामिति ॥ एका देवता प्रजां रक्षति एका अन्या ऊर्जमन्नं रक्षतीत्यर्थः। एकः एकत्वसंख्याविशिष्टो भगवान्। अत्र संख्यार्थकबहुशब्दप्रतिद्वंद्वी एकशब्दः संख्यार्थक एवेति इति भावः। एवमुपपादितान् एकशब्दार्थान् अन्यत्वादीन् प्रकृते भगवति योजयति ॥ संभवंति चेति ॥ ॥ एकत्वसंख्येति ॥ एकत्वसंख्यारूपगुणविधिरित्यर्थः। ननु संख्यादिरहिते गुणादावप्येकशब्दप्रयोगान्न तदर्थकत्वमित्यत आह ॥ मन्मत इति ॥ गुणादिषट्कस्य निर्गुणत्वप्रक्रियामनंगीकर्तुरित्यर्थः

(प्रकाशः)

॥ अत एवेति ॥ एकशब्दस्यान्यत्वाद्यर्थत्वादेवेत्यर्थः। द्वितीयाभावाद्यर्थत्वे तु विरोधिद्वितीयं नोच्येतेत्यर्थः ॥ जगदिति ॥ तेजः प्रभृतीत्यर्थः ॥ ऐक्येति ॥ ऐक्यादिबोधकैस्त्रिभिरेकादिपदैः ॥ कर्मधारय इति ॥ द्वितीयं न भवतीत्यऽद्वितीयमिति तत्पुरुषरूपकर्मधारय इत्यर्थः ॥ बहुव्रीहिर्वेति ॥ न विद्यते द्वितीयं यस्येति बहुव्रीहिर्वेत्यर्थः ॥ प्राथम्येनेति ॥ नञ्द्वितीयपदयोः श्रूयमाणत्वेन तयोरेव समासस्य प्रथमोपस्थितत्वेन मुख्यार्थकत्वात्तदपेक्षयाऽन्यपदार्थप्रधानत्वेनामुख्यतया तदनाश्रयणादित्यर्थः। अद्वितीयमित्यत्र द्वितीयं नास्तीति प्रसज्यप्रतिषेधार्थत्वे भगवद्विशेषणत्वाभावेन एकमेवेत्येतद्भगवत्परं अद्वितीयमित्येतज्जगदभावप्रतिपादकमित्यर्थभेदेन वाक्यभेदः स्यात् अतः पर्युदासार्थत्वमाश्रयणीयं तथा च भगवद्विशेषणत्वोपपत्तिरित्याह ॥ द्वितीयादिति ॥ ॥ अनपुंसकस्येति ॥ यथा ''सुडनपुंसकस्ये''त्यत्र सुट् सर्वनामस्थानसंज्ञो भवति नपुंसकस्य तु न भवतीति प्रसज्यप्रतिषेधार्थत्वे वाक्यभेदापत्त्या नपुंसकादन्यस्य शब्दस्य पुरतः प्राप्तः सुट् सर्वनामस्थानसंज्ञ इति पर्युदासाश्रयणेनैकवाक्यत्वमाश्रितं वैयाकरणैः तद्वदित्यर्थः।

॥ नार्षेयमिति ॥ दशमाध्यायेऽष्टमपादेप्रथमाधिकरणे चिंतितम्। चातुर्मास्येषु महापितृयज्ञे श्रूयते ''आश्रावयेति चतुरक्षरं अस्तु श्रौषडिति चतुरक्षरम्। यजेतिद्व्यक्षरं येयजामह इति पंचाक्षरं द्व्यक्षरो वषट्कार'' इत्यनंतरं ''नार्षेयं वृणीते न होतार''मिति। तत्र संदेहः। किमयं प्रतिषेधः पर्युदासो वेति। तत्रेष्टित्वाविशेषेण महापितृयज्ञे दर्शपौर्णमासविध्यंतप्राप्तौ आर्षेयहोतृवरणयोः सत्त्वेन तयोरप्यत्र प्राप्तौ आर्षेयवरणं न कर्तव्यमित्ययं प्रतिषेध एवेति पूर्वपक्षः। सिद्धांतस्तु पर्युदास एवेति। एकवाक्यत्वात् प्रतिषेधत्वे हि पितृयज्ञे लोकतः शास्त्रतो वा आर्षेयादिवरणप्रसक्त्यभावेन निषेधोऽप्रसक्तस्यैव स्यात्। अस्तु श्रौषडित्यादिमंत्राः कार्याः आर्षेयवरणं न कार्यमिति वाक्यभेदापत्तेश्च। अत आर्षेयादिवरणभिन्नं आश्रावयेत्यादिमंत्राद्यंगजातं कार्यमित्येवं पर्युदास एवेति।

॥ एकवाक्यत्वेति ॥ एकादिपदैरित्यर्थः ॥ वाक्यभेदेति ॥ एकमेव ब्रह्मास्ति द्वितीयं नास्तीत्यर्थद्वयप्राप्त्या वाक्यभेदः स्यादित्यर्थः। अतो द्वितीयादन्यत् अद्वितीयमिति पर्युदासेंगीकार्ये न द्वितीयाभावसिद्धिरिति भावः ॥ अघटमिति ॥ यथा घटाभावविशिष्टं भूतलमित्यत्र घटाभावस्य सत्त्वं प्रतीयत एवं द्वितीयाभावविशिष्टस्य सत्त्वबोधने विशेषणस्य द्वितीयाभावस्य सत्त्वमावश्यकमित्यर्थः। ननु विशेषणीभूतद्वितीयाभावस्यापि द्वितीयत्वादेव निषेधः किं न क्रियत इति चेत्तत्राह ॥ तस्यापीति ॥ प्रामाण्यस्यौत्सर्गिकत्वेन द्वितीयस्य वियदादिनिषेधस्य सत्तां बोधयित्वा पुनर्द्वितीयत्वेन तस्यापि निषेधे व्याघात इत्यर्थः।

॥ छागोवेति ॥ षष्ठाध्यायेऽष्टमपादे अंतिमाधिकरणे चिंतितं ''छागो वा मंत्रवर्णादि''त्यत्र। ज्योतिष्टोमे श्रूयते ''अग्नीषोमीयं पशुमालभेते''ति। तत्रायमापाततया श्रुतः पशुः यःकोपि वा छागोवेति संशये विशेषाश्रवणाद्यः कोपीति प्राप्ते ''छागस्य वपाया मेदसोनुब्रूहीत्याहे''ति मंत्रवर्णे विशिष्य छागोक्तेः छाग एवोपलब्धव्य इति सिद्धांतः। यथोक्तम्।

(प्रकाशः)

''अग्निष्टोमपशुः कोपि छागो वेति च संशये।
विशेषाश्रवणात्कोपि छागो मंत्रे विशषेणादि''ति।

॥इहापीति॥ अद्वितीयमित्यत्रापि द्वितीयस्य मिषत्त्वेनैव निषेधः। कुतः छागो वेति न्यायेन ''आत्मावा'' इत्यादि वाक्यांतरे तथैव निषेधदर्शनादित्यर्थः ॥अग्र इति॥ अत्यंताभावस्य नित्यत्वेन सदा सत्त्वादग्र इति विशिष्योक्तिर्व्यर्थेत्यर्थः ॥प्रागभावोक्तिरिति॥ अद्वितीयमित्यत्र नञा द्वितीयप्रतियोगिकप्रागभावोक्तिरित्यर्थः। अत्र चाग्र इति पदं सार्थकम्। प्रागभावस्याग्र एव सत्त्वादिति भावः ॥मिथ्यात्वेति॥ प्रागभावप्रतियोगित्वेन मिथ्यात्वस्याद्वितीयपदेनालाभादित्यर्थः ॥अविद्येति॥ तत्र प्रागभावप्रतियोगित्वाभावेन मिथ्यात्वाभावापत्तेरिति भावः। ननु प्रकृतसमानद्वितीयार्थकत्वव्याख्यानं संकोच रूपमेव तस्य सामान्यतो द्वितीयमात्रनिषेधकत्वादित्यत आह ॥न त्विति॥ प्रकृतसमानद्वितीये व्युत्पन्नतया वाचक एव न तु संकोच इत्यर्थः। वाचकत्वज्ञापकबहुलप्रयोगसद्भावादित्याह ॥लोक इति॥ प्रकृतसमानद्वितीयार्थत्वमनंगीकृत्य द्वितीयमात्रार्थकत्वे बाधकमाह ॥द्वितीयशब्देनेति ॥ ॥सर्वेति॥ सजातीयविजातीयसर्वेत्यर्थः ॥विजातीयेति॥ विजातीयद्वितीयेत्यर्थः ॥अभ्यधिकराहित्येति॥ समनिषेधेन कैमुत्यलब्धार्थोक्तिः द्वितीयाभावस्येति। द्वितीयाभावस्य सत्त्वे तस्यैव द्वितीयत्वात् द्वितीयमात्राभावासिद्धिः। असत्त्वे द्वितीयस्य सत्त्वेन तदभावासिद्धिरित्यर्थः। अद्वितीयशब्दस्य समराहित्यार्थकत्वमेव न तु द्वितीयमात्रनिषेधार्थकतेत्येतद्विष्णुदासाचार्यवचनसंमत्या द्रढयति ॥उक्तं चेति॥ संगृह्णाति ॥तस्मादिति॥ सविता एक एवाद्वितीयः प्रकाशादिनाऽसम इत्यर्थः ॥एकमेवेति॥ ''सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय''मित्यपि वाक्यमित्यर्थः। एकमेवाद्वितीयमित्यादेस्त्वद्रीत्या सजातीयनिषेधाद्यर्थकत्वमपि व्याख्येयमिति श्रद्धा चेद्वयमित्थं सजातीयादिनिषेधपरत्वेन व्याकुर्म इत्याह ॥किं चेति॥ तत्सजातीयं च निषिध्यते। तेभ्यो गुणादिभ्यो भेदश्च निषिध्यत इति योज्यम्।

॥एकमेवाद्वितीयमिति श्रुत्यर्थविवरणम्॥

## ६. नेह नानेति श्रुत्यर्थविवरणम्

**नापि ''नेह नानास्ति किंचन'' इति श्रुतिस्तत्र मानम्, अत्र स्वगतभेदनिषेधात्, नानाशब्दो हि नानात्वार्थः द्व्येकयोरित्यादिवद्भावप्रधानत्वात्, लोके च नानाशब्दस्य पृथग्भाववाचित्वादिति कैयटोक्तेश्च। ''यदेवेह तदमुत्र यदमुत्र तदनु इह'' इति पूर्ववाक्ये इदमाद्यर्थांगीकारेण तन्निष्ठब्रह्माभेदस्यैव उक्तेश्च। अन्यथा इदं चादश्च नेति श्रूयते। न च स्वगतभेदस्याप्रसक्तिः। जगज्जन्मादिकारणे ब्रह्मणि गुरुतरविचित्रकार्यभेदेन अन्तर्यामिणि च नियम्यानन्त्येन स्थानभेदेन च ''यदेकमव्यक्तमनन्तरूप'' मिति अनेकत्वश्रुत्या च अवतारेषु प्रतिविग्रहं प्रत्यक्षादिना गुणगुण्यादौ च तार्किकभाट्टरीत्या**

गुणगुणित्वेन ज्ञानानन्दादौ चापर्यायशब्दवाच्यत्वैकतरपरिशेषाभावादिना सर्वत्र च "अन्योऽन्तर आत्मा प्राणमय" इत्यादिश्रुतितात्पर्याज्ञानेन च तत्प्रसक्तेः। किं च नेहेति वाक्यात् पूर्वं बृहदारण्यके "तस्मिंच्छुक्लमुत नीलमाहुः पिंगलं हरितं लोहितं चे" त्यादिना भगवतोऽनेकरूपाणि "यस्यानुवित्तः प्रतिबुद्ध आत्मे" त्यादिना ज्ञानादिधर्माः काठके च "गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यजायत" इत्यनेकावताराः "महान्तं विभुमात्मान" मित्यादिना चानेकधर्माश्चोक्ता इति कथं तदप्रसक्तिः ? दृष्टश्चैकस्मिन्नेव वृक्षे पत्रशाखादिवत्प्रसक्तस्य स्वगतभेदस्य एको देवस्सर्वभूतेष्वि"त्यादि श्रुतौ–

ब्रह्मदयो हि भूतानि तेषामन्तर्गतो हरिः ।
समस्स सर्वभूतेषु य एवं वेद तत्त्ववित् ॥

इति महाभारते च निषेधः। अन्यथा परपक्षेऽप्यखण्डवादानारम्भः स्यात्। अनुभूतिः न नाना, अनुभूतित्वादुपाधिभेदमन्तरेणाविभाव्यमानभेदत्वादित्याद्यनुमानैः स्वगत-भेदनिषेधश्च न स्यात्। "एकमेवाद्वितीय" मित्यादावेकपदेन स्वगतभेदनिषेधोक्तिश्च न स्यात्, प्रत्युत परमत एव धर्माधर्मस्वर्गनरकाद्यंशे अप्रसक्तप्रतिषेधः। इहेति च विशेषणान्न नानात्वमात्रनिषेधः। इमौ स्निग्धावस्मिन् ग्रामे न विरोध इत्यादाविवेदं शब्दोपात्तस्य ब्रह्मण एव धर्मित्वेन प्रतियोगित्वेन च सम्बन्धसम्भवे तदनुपात्तस्य धर्मित्वेन वा प्रतियोगित्वेन वा सम्बन्धायोगात्। विधेयोद्देश्ययोर्नानात्वनिषेध-तदाधारब्रह्मणो निषेध्यनिषेधयोर्नानात्वतदभावयोश्च भेदावश्यम्भावाच्च। काठके "तं देवाः सर्वे अर्पितास्तुदु नात्येति कश्चने"ति पूर्वत्र "मध्य आत्मनि तिष्ठती"ति "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति।" इति उत्तरत्र च भेदप्रमितेश्च। किंचन शब्दस्तु गुणगुण्यवयवावय-वित्वादिप्रयुक्तानेकनानात्वाभिप्रायः, अन्यथा उक्तदोषात्। भवितृप्राधान्येऽपि नानाशब्दस्य किंचनशब्दप्रकृतधर्मादिपर एव सर्वनामत्वात्। सर्वेभ्य इत्यत्र सर्वशब्दवदुद्देश्यसमर्पकत्वाच्च। व्रीहीनवहन्तीत्यत्र व्रीहिशब्दवद् व्यक्तिवाचित्वाच्च। आग्नेय्याऽऽग्नीध्रमुपतिष्ठत" इत्यत्राग्नेयीशब्दवत्। एवं धर्मान्पृथगिति विशेषशब्द-

सन्निहितसामान्यशब्दत्वाच्च। घृतशब्दसन्निहिताक्तशब्दवत्। एवं च–

वाक्यशेषस्थधर्माख्यविशेषे पर्यवस्यति ।
किंचनेति हि शब्दोऽयमक्ताशब्दो घृते यथा ॥

यथा चेह ब्रह्मणि किंचन धर्मादिकं नाना नास्तीत्युक्ते धर्माणां नानात्वमेव निषिद्धं स्यात्, सविशेषणे हीति न्यायात्, ''लोहितोष्णीषा ऋत्विजः प्रचरन्ति न जीर्णमलवद्वासाः स्नातकः स्यादि''त्यादौ दर्शनाच्च। अत एवोक्तं ''विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषण'' इति।

एकदेशापवादेन कल्प्यमाने च बाधके ।
न सर्वबाधनं युक्तमितिन्यायविदः स्थिताः ॥ इति च ।

धर्माणां स्वरूपेण निषेधे हि नानेति पृथगिति च व्यर्थं स्यात्। तथा चात्र ब्रह्मणो निर्धर्मकत्वपक्षः धर्मधर्मिणोरत्यन्तभेदपक्षः भेदाभेदपक्षश्च निरस्तः। किं च त्वद्रीत्या किंचन विश्वं नाना नास्तीत्युक्तेऽप्यविनाभूतमस्तीत्येवार्थः। नानाशब्दो हि विनेत्यर्थे वर्तते ''विनञ्भ्यां नानाञौ न सहे''तिसूत्रे ''असहार्थे पृथग्भावे वर्तमानाभ्यां विनञ्भ्यां स्वार्थे नानाञौ प्रत्ययौ भवत'' इति वृत्तौ ''न सहेति प्रकृत्यर्थविशेषणमेतत्। विनञ् इत्येताभ्यां न सहार्थवाचिभ्यां नानाञौ भवतः कस्मिन्नर्थे? स्वार्थे'' इति महाभाष्ये च विनानानाशब्दयोरेकार्थत्वोक्तेः। पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने'' इत्यमरोक्तेश्च। नाना विष्णुं मोक्षदो नास्ति देवः'' इत्यमरव्याख्यायां नानाशब्दस्य विनार्थत्वेनोदाहृतत्वाच्च। ''न तदस्ति विना यत्स्यान्मया भूतं चराचर''मिति स्मृतेश्च। विनार्थस्य च नानाशब्दस्य सम्बन्धिशब्दतया ब्रह्मण एव प्रति सम्बन्धित्वेनान्वयोपपत्तेश्च। न च धूमोऽग्निं विना नेत्युक्ते मिथ्येति सिद्ध्यति। एवं च–

नानेत्यस्य विनार्थत्वाद्विनाभूतं निषिध्यते ।
अविनाभूतमस्तीति सत्तैवार्थात्तु लभ्यते ॥

किं च विश्वं ब्रह्मणि नास्तीत्युक्तेऽपि न मिथ्यात्वसिद्धिः, ब्रह्मणोऽन्यत्र स्वोपादने प्रकृत्यादौ सत्त्वसम्भवात्। ब्रह्म च नोपादानमिति

व्यर्थम्। अथ ''यस्मिन्द्यौः पृथिवी चे''त्यादिश्रुतेर्ब्रह्मण्यप्यस्ति विश्वम्, तर्हि तद्विरोधादेव न तत्र तन्निषेधः। एतद्वाक्यस्य मिथ्यात्वाभिप्रायत्वे च बृहदारण्यके ''यस्मिन् पंच पंचजना आकाशश्च प्रतिष्ठित'' इति पूर्वेण ''य एषोंऽतर्हृदय आकाशस्तस्मिन् शेते सर्वस्येशानः सर्वस्याधिपतिः एष सर्वेश्वरः एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानां सम्भेदाये''त्युत्तरेण काठके च ''ईशानं भूतभव्यस्ये''तिपूर्वेण ''ईशानो भूतभव्यस्ये''त्युत्तरेण च वाक्येन विरोधः स्यात्। एवं च–

अनन्या राघवेणाहं भास्करेण प्रभा यथा ।
व्याख्यात्रयादृशी तादृक् नेह नानेति च श्रुतेः ॥

एतेन ''मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यती''तिपूर्ववाक्यमपि व्याख्यातम्, तत्र चेवशब्दो भेदाभेदपरः–

भवेदेकत्र संयोग इव शब्दो विरुद्धयोः ।
धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षिते ॥

इति वचनात्। अन्यथा यो नानेव पश्यति न तु वस्तुतो नानेतिपरानिष्टार्थः स्यात्।

केचित्तु सर्वस्यापि जडाजडस्य ब्रह्मशरीरत्वेन तद्विशेषणत्वाद्विशिष्टं ब्रह्मद्वितीयरहितमिति ''एकमेवाद्वितीयं नेह नाने''त्यादिश्रुतेरर्थ इत्याहुः। अन्ये तु परमते ''सर्वगन्धस्सर्वरस'' इत्यादिश्रुतिरिवाद्वितीयमित्यादिकमपि नाम्नि ब्रह्मत्वस्येवाविद्यमानस्योपासनार्थं, न त्वर्थतत्त्वनिष्ठमित्याहुः। इतरे तु प्रपञ्चेऽभिनिवेशनिषेधपरतन्मिथ्यात्वश्रुतिरित्याहुः।

॥ नेह नानेतिश्रुत्यर्थः ॥

## न्यायामृततरङ्गिणी

॥ नापीति ॥ 'मनसैवानुद्रष्टव्यं' 'नेह नानास्ति किंचन'। 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति बृहदारण्यकगतं। 'यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योः स

(तरङ्गिणी)

मृत्युमाप्नोति य इह नानेव पश्यति'। 'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन। मृत्योः स मृत्युं गच्छति य इह नानेव पश्यती'ति काठकगतमपि वाक्यं मिथ्यात्वे न मानमित्यर्थः ॥स्वगतेति॥ ब्रह्मगतेत्यर्थः। वक्ष्यमाणगुणादिभेदसंग्रहाय गतशब्दः। नेह नानेति श्रुतौ भेदाभिधानाभावात्कथमत्र स्वगतभेदनिषेध इत्यत आह ॥नानाशब्द इति॥ ननु नानाशब्दस्य भिन्नाभिधायकत्वान्न तस्य निषेधान्वयबोधप्रयोजकभेदोपस्थितिहेतुत्वमत आह ॥ व्येकयोरिति॥ 'आदशतः संख्यासंख्येये वर्तते' इति न्यायात् व्येकशब्दयोर्द्वित्वैकत्वविशिष्टपदार्थवाचकत्वेन वृत्त्यर्थस्य बहुत्वादेकत्वाद्वा इतिवत् बहुवचनप्रयोगप्रसंगे अदूरविप्रकर्षन्यायेन वृत्तिवाक्ययोरेकार्थत्वाभिप्रायेण द्वौ चैकश्चेत्येव वाक्यमंगीकृत्य व्येकयोरिति वृत्तिगतव्येकशब्दयोः द्वित्वैकतार्थकतया बह्वर्थत्वाभावाद्बहुवचनप्रसंगो न भवतीत्यभिसंधिना व्येकयोरिति सूत्रे यथा व्येकशब्दौ द्वित्वैकत्वार्थौ तथा नेह नानेति श्रुतौ नानाशब्दो नानात्वार्थः नानात्वं च भेद एवेत्यर्थः ॥भावप्रधानेति॥ अन्योपसर्जनभेदमुपस्थापयन्नपि नानाशब्दो निष्कृष्य स्वातंत्र्येणापि तमुपस्थापयतीत्यर्थः ॥लोकेचेति॥ एतच्चानुपदं वक्ष्यते। पृथग्भावः पृथक्त्वं। भेद इत्यर्थः ॥पूर्वेति॥ पूर्ववाक्यानुसारेणोत्तरवाक्यस्य नेयत्वान्नेहनानेत्यस्मिन्नपि वाक्ये स्वगतनानात्वमेव निषिध्यत इत्यर्थः। ननु यदेवेहेति पूर्ववाक्येपि न स्वगतभेदो निषिध्यते किंतु सर्वमेवेत्यत आह ॥अन्यथेति॥ ॥इदमिति॥ तथाचोक्तिसौष्ठवमित्यर्थः ॥गुरुतरेति॥ पटप्रासादादिकर्तॄणां गजतुरगादिनियंतॄणां स्थलजलादिभिन्नस्थानगतानां भेदस्य लोके दर्शनात् प्रकृते चोत्पत्त्यादिकार्याणां 'यःपृथिव्यामंतरोयमयति योपोंतरोयमयती'त्यादि नियम्यानां च यः 'पृथिव्यां तिष्ठन् योप्सुतिष्ठन् इत्यादिस्थानानां च भेदस्य सत्त्वादनुमाने न भेदप्रसक्तिरित्यर्थः। श्रुत्या प्रत्यक्षेण च तत्प्रसक्तिरस्तीत्याह ॥यदेकमिति॥ ॥ज्ञानेति॥ ज्ञानानंदयोरभेदे ज्ञानमेव वा आनंद एव वा परिशिष्येत। नोभयमित्यर्थः ॥सर्वत्रेति॥ भेदप्रतिपादकत्वेनापाततः प्रतीतासु श्रुतिष्वित्यर्थः। वाक्यद्वये विशिष्य स्वगतभेदप्रसक्तिमाह ॥ किंचेति॥ ॥तस्मिन्निति॥ अणुःपंथा इति पूर्वोदाहृतमंत्रे यो ब्रह्मविदो मोक्षमार्ग उक्तः तस्मिन् शुक्लादीनि भगवद्रूपाणि संति। अत एव तस्मिन् शुक्लमितिमंत्रस्य उत्तरार्धे एष पंथा ब्रह्मणाह्यनुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्ते जसश्चेति मार्गे ब्रह्मणः सत्त्वमुच्यते। अतः शुक्लाद्यनेकरूपाणां भेदप्रसक्तिरित्यर्थः। ननु नात्र शुक्लादिशब्दैर्ब्रह्मरूपाण्युच्यंते। तथाहि शांकरीये बृहदारण्यकभाष्ये बृहदारण्यके तस्मिंच्छुक्लमिति मंत्रात्पूर्वमुदाहृते अणुःपंथा विततः पुराणो मत्स्पृष्टोऽनुवित्तोमयैव। तेन धीरा अपि यंति ब्रह्मविदः स्वर्गलोकमित ऊर्ध्वं विमुक्ता इति मंत्रः। तस्यार्थः अणुः सूक्ष्मः। दुर्ज्ञेयत्वात्। विततो विस्तीर्णः वितर इति पाठांतरे विस्पष्टतरणहेतुः। पुराणः पुरातनः। पंथाः

(तरङ्गिणी)

मोक्षसाधनज्ञानमार्गः। न तार्किकादिवदर्वाक्कल्पितः। मत्स्पृष्टो मया स्पृष्टः। मया लब्ध इत्यर्थः। मयैवानुवित्तः। मयैवानुवित्तः अनुवेदनं नाम विद्यायाः परिपाकः स्तुतिरियं। तद्यो यो देवानामिति श्रुतेः। तदेवाह तेन ब्रह्मविद्यामार्गेण। धीराः प्रज्ञावंतः। ब्रह्मविदः अन्येपि विमुक्ताः। इत ऊर्ध्वं स्वर्गं लोकं मोक्षं गच्छंतीति। अस्मिन्मंत्रे य उक्तो मोक्षमार्गः स तस्मिन्निति तच्छब्देन परामृश्यते। तस्मिन्मोक्षमार्गे विप्रतिपत्तिर्मुमुक्षूणां। केचिच्छुक्लमाहुः अन्ये नीलादिकमाहुरिति। तस्मिन् शुक्लमाहुरिति वाक्यस्य केचन मोक्षमार्गं शुक्लमाहुरित्यादिना मार्गमभिधाय नैते मार्गाः किंतु य आत्मकामादिवाक्येन पूर्वमुक्तो ज्ञानमार्गः एषएव पंथा इत्यादिग्रंथेन मार्गविषयमेव शुक्लादिवाक्यं व्याख्यातं नतु परमात्मरूपविषयमिति चेन्न। अणुः पंथा इति वाक्योक्तपंथानं तस्मिन्निति तच्छब्देन निर्दिश्य तत्रत्यानां शुक्लादिरूपाणां ब्रह्मशब्देन परामृश्य तैर्मार्गो वित्तः पूर्ण इत्यस्यार्थस्य संभवे विप्रतिपत्तिवाचकस्य वा निषेधवाचकस्य वा पदस्याभावेनोक्तविधयार्थवर्णनानुपपत्तेः। तस्मादुक्तविधया शुक्लादिशब्दैर्भगवतोऽनेकरूपाण्युच्यंते ॥ यस्यानुवित्त इति॥ यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन्संदोहे गहने प्रविष्टः। स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एवेति मंत्रे यस्य ब्रह्मविदः प्रतिबुद्धः ज्ञानादिधर्मः। आत्मा परमात्मा। अस्मिन्प्रसिद्धे। संदोहे अनेकानर्थसंकटशरीरे। गहने विवेकज्ञानप्रतिपक्षे। प्रविष्टः। सर्वकर्ता यतः अत एव विश्वकृत्। वायुकर्ता यः परमात्मा स यस्य येन ब्रह्मविदा। अनुवित्तः विदितो वर्तते। तस्य ब्रह्माविदः तस्य ब्रह्मणो यो लोकः स एव लोको निश्चित इति ब्रह्मणो ज्ञानादिधर्मा उक्ताः। अतो धर्मिधर्मभावेन भेदः प्रसक्तः। एतच्चोपलक्षणं। तथाहि। बृहदारण्यके नेहनानेति वाक्यादव्यवहितपूर्वेषु

यद्वैतमनुपश्यत्यात्मानं देवमंजसा।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते।
यस्मादर्वाक्संवत्सरो अहोभिः परिवर्तते।
तद्देवाज्योतिषांज्योतिरायुर्होपासतेऽमृतं।
यस्मिन्पंचपंचजना आकाशश्च प्रतिष्ठितः।
तमेवमन्यमात्मानं विद्वान्ब्रह्मामृतोऽमृतं।
प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं-
मनसो ये मनो विदुः। ते निचिक्युर्ब्रह्मपुराणमग्र्यम्

इति श्लोकेषु द्वितीयांतैतच्छब्देन सप्तम्यंतयच्छब्देन च निर्दिष्टस्यात्मादिशब्दैरमृतशब्देन च तमेव

(तरङ्गिणी)

मन्य इत्यादिना च निश्चितब्रह्मत्वस्य षष्ठ्यंतज्योतिःप्राणादिशब्दनिर्दिष्टज्योतिः प्राणादि-पंचजनाधारस्य ये विदुस्ते निचिक्युरित्यादिवाक्यशेषाभिहितनिश्चितब्रह्मत्वं परेषामपि संमतम्। तथोक्तं शांकरीये बृहदारण्यकभाष्ये ज्योतिषां ज्योतिः आदित्यादिज्योतिषामवभासकत्वात्। अमृतं ब्रह्मेति। किं च तेन हि चैतन्यात्मना ज्योतिषाऽवभास्यमानः प्राणः प्राणिति। तेन प्राणस्यापि प्राणः। तथा चक्षुरादीनां चक्षुरादि। ब्रह्मशक्त्यधिष्ठितानां हि चक्षुरादीनां दर्शनादिसामर्थ्यं। स्वतःकाष्ठलोष्टसमानि हि तानि चैतन्यात्मज्योतिःशून्यानीति ॥ काठकेचेति॥ काठकस्थ नेह नानेत्यतः प्राक्तनेन

या प्राणेन संविशत्यदितिर्देवतामयी।
गुहां प्रविश्य तिष्ठंती याभूतेभिर्विपश्यति । एतद्वैतत्।
या प्राणे न संविशत्यदितिर्देवतामयी गुहां प्रविश्य तिष्ठन्ती
या भूतेभिर्व्यजायत। एतद्वै तत्।
इतिवाक्येन एतद्वाक्यप्राक्तनेन च
स्वप्नांतं जागरितं च उभौ येनानुपश्यति।
महांतं विभुमात्मानं मत्वा धीरो न शोचति।
य इदं मध्वदं वेदात्मानं जीवमंतिकात्।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वैतत्।

इत्यादिवाक्येनेत्यर्थः। क्वचित् श्रुतौ स्वगतभेदनिराकरणं तवापि संमतमित्याह ॥दृष्टइति॥ ॥एकोदेव इति॥ अत्र ब्रह्मादयो हि भूतानीति समनंतरोदाहृते भारतवाक्ये भूतशब्दनिर्दिष्ठानां ब्रह्मादीनां सर्वभूतानां भिन्नत्वात्तदंतर्गतपरमात्मनि प्रसक्तो भेद एकशब्देन निवार्यत इत्यर्थः ॥अन्यथेति॥ स्वगतभेदस्य सर्वथा प्रसक्त्यभावे ब्रह्मणो निर्भिन्नत्वरूपाखंडत्ववादस्यानारंभः स्यादित्यर्थः ॥ अनुभूतिरिति॥ अनुभूतेरात्मरूपत्वादित्यर्थः ॥ उपाधिरिति॥ घटानुभवः पटानुभव इत्यादिघटाद्युपाधिनिबंधनएवानुभूतेर्भेदो न तु केवलाया अनुभूतेरित्यर्थः ॥ प्रत्युतेति॥ धर्मादेर्भेदस्य लोके अप्राप्तेर्धर्मिग्राहकशास्त्रप्राप्तभेदनिषेधे च तद्विरोध इत्यर्थः। नन्वस्तु नानाशब्दो भेदार्थस्तथापि प्रतियोगिविशेषानुपादानात् भेदमात्रं ततः प्रतीयत इति भेदमात्रनिषेधः पर्यवस्यतीत्यत आह ॥इहेतीति॥ इदंशब्दः प्रतियोगिविशेषोपस्थापक इत्यर्थः। ननु सप्तम्यं तस्येदंशब्दस्याधि-करणपरत्वान्न तस्य प्रतियोग्युपस्थापकत्वमित्यत आह ॥ इमौ स्निग्धाविति॥ इदमधिकरणकेदं प्रतियोगिकस्नेहस्य ग्रामाधिकरणग्रामप्रतियोगिकस्य विरोधस्य च ततः प्रतीतेरित्यर्थः

(तरङ्गिणी)

॥ इदंशब्देति ॥ कथमपि श्रूयमाणेनेत्यर्थः। शाब्दीह्याकांक्षेतिन्यायात्प्रकृतिप्रत्ययांतप्रति-योग्युपस्थापकपदकल्पनापेक्षया सप्तम्यवरुद्धस्यापि श्रूयमाणस्येदम् शब्दस्य षष्ठ्यंतविपरिणामेनापि तदुपस्थापकत्वकल्पने लाघवमिति भावः ॥ तदिति ॥ अश्रूयमाणेनेत्यर्थः। नन्वत्र प्रतियोगिकल्पन एव न मानं तत्कथं श्रुताश्रुतकल्पनयोर्लाघवादि चिंत्यत इत्याशंक्य भेदसामान्यनिषेध-संभवात्तत्कल्पनमावश्यकमित्याह ॥ विधेयेति ॥ विधेयोद्देश्ययोर्भेदनिषेधे ब्रह्माधिष्ठानकभेद-निषेधासिद्धिः ब्रह्मस्वरूपमात्रबोधनपर्यवसानं च स्यादित्यर्थः ॥ निषेधेति ॥ नानात्वतन्निषेधयोरपि भेदनिषेधे नानात्वनिषेधस्य नानात्वनिषेधनिषेधपर्यवसायितया नानात्वसमर्थनमेव कृतं स्यादित्यर्थः ॥ काठकेचेति ॥ तं देवा इत्यादिपूर्ववाक्ये भेदः प्रतीयत, इत्यर्थः ॥ मध्यइति ॥

अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते। एतद्वैतत्।
अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः।
ईशानो भूतभव्यस्य स एवाद्यस उ श्वः। एतद्वैतत्।
यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति।
एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति।

'यथोदकं शुद्धे शुद्धमि'त्यादिवाक्ये च भेदप्रतीतेस्तदनुसारेण तन्मध्यपठितं नेहनानेति वाक्यमपि न सर्वभेदनिषेधकं किंतु ब्रह्मणि धर्मादिभेदं निषेधतीति वाच्यमित्यर्थः। इह ब्रह्मणि अस्माद्ब्रह्मणः सकाशान्नानात्वं नास्तीत्येतावता पूर्णत्वेन शेषमसंगतमित्यत आह ॥ किंचनेति ॥ ब्रह्मगुणादीनां ब्रह्मस्वरूपत्वेन ब्रह्मणि तद्भेदस्य वस्तुतो ब्रह्म भेदतया तदुपस्थितये किंचन शब्दः। परमते सर्वभेदोपस्थितये किञ्चनशब्दः। मम तु ब्रह्मप्रतियोगिकसर्वभेदोपस्थितये इति न कश्चिद्विशेषः। अन्यथा परमतेपि तदसंगतिरिति भावः ॥ अन्यथेति ॥ किंचन शब्दस्य सर्वभेदपरत्व इत्यर्थः ॥ उक्तेति ॥ विधेयादिभेदस्यावश्यकतया सर्वभेदनिषेधे व्याघात इत्यर्थः ॥ भवित्रिति ॥ नानाशब्दस्य भिन्नवाचित्व इत्यर्थः ॥ धर्मादीति ॥ इह ब्रह्मणि धर्मावयवादिकं नानाभिन्नं नास्तीत्येवं पर इत्यर्थः ॥ सर्वेभ्य इति ॥ एतच्चोपपादितं ॥ उद्देश्येति ॥ व्रीहिभिर्यजेतेत्यत्र व्रीहिशब्दस्य जातिपरत्वेपि मानांतरप्राप्तस्यैवोद्देष्टव्यतया चतुर्मुष्टिनिरुप्ताः प्रकृता पूर्वसाधनीभूताः व्रीहयो व्रीहीनवहंतीत्यत्र व्रीहिशब्देन गृह्यंत इत्यर्थः ॥ व्यक्तिवाचीति ॥ गवादिशब्देभ्य इव जातिविशेषस्य किंचनेति शब्दादप्रतीतेरित्यर्थः।

(तरङ्गिणी)

॥ आग्नेयेति ॥ तृतीयस्य द्वितीयपादेऽभिहितं। अधिकारे च मंत्रविधिरतदाख्येषु शिष्टत्वात्। ज्योतिष्टोमे प्रथममाग्नेय्यैंद्र्यादयः स्तोत्रशस्त्रादिसाधनत्वेनाग्नआयाहिवीतय इत्येवमादयो विशेषरूपेण विहिताः। पुनश्च सामान्येनाग्नेय्याग्नीध्रमुपतिष्ठत इत्येवमादिषूपदिश्यंते। तत्र संदेहः। किं तद्व्यतिरिक्ता ग्रहीतव्या उत ता वा अन्या वा अथवा ता एवेति त्रयः पक्षाः। अत्र प्रकृतानां कार्यांतरोपयोगेन या तयामत्वादग्रहणं। अथवा सामान्यविधानमिदं। तानि चाग्नेयीविशेषविधानानि। परिहृत्य च विशेषविधिविषयं सामान्यशास्त्राणि प्रवर्तंते। तस्मात्तद्व्यतिरिक्ता एवेत्याद्यः पक्षः। अथवा आग्नेयादिशब्दैरविशेषप्रत्ययो जायते। न चान्यत्प्रकृतग्रहणस्य क्षमं विशेषणं पश्यामः। प्रकरणस्य ग्राहकत्वेनाविशेषकत्वात्। सन्निधिलक्षणलौकिकप्रकरणस्य च यौगिकश्रुतिजनितविशेषप्रत्ययेन बाध्यमानत्वात्। तस्मात्सर्वा एवेति द्वितीयः। सिद्धांतस्तु। व्यक्तिशब्दोऽयं यौगिकत्वात्। सर्वत्र यौगिकैः शब्दैः व्यक्तिरेवाभिधीयत इति वार्तिकोक्तेः। नह्यत्र जातिः काचित्प्रतीयते। नानारूपासु नानाच्छंदस्वपि च देवतैकत्वमात्रेणाग्नेयादिशब्दप्रयोगात्। नह्यग्नआयाहि वीतये अग्निं होतारमित्यनयोर्देवता-व्यतिरिक्तं किंचित्सामान्यं दृश्यते। देवतासंबंधमेव चैष न व्यभिचरति। व्यभिचरति च ऋग्जातिं। द्रव्यकर्मगुणादिष्वपि प्रयोगात्। तस्माद्व्यक्तिशब्दोयं। व्यक्तिवचनाश्च सन्निहित-व्यक्तिपराः। तथाहि। आग्नेय्याग्नीध्रमुपतिष्ठत इत्यत्र नाग्नीध्रस्वरूपप्रयुक्तमुपस्थानम्। प्रयोजनाभावात्। अतो अवश्यं ज्योतिष्टोमकार्यविशेषसाधनमेतदित्याश्रयितव्यम्। स च कार्यविशेषः सामान्यप्राप्तौ सत्यां शक्यो विधातुम्। तत्र यदि सामान्यविशेषसंबंधाविदमेव वाक्यं कुर्यात्ततो भिद्येत्। ननु चानेनविशेषमात्रमाग्नेयीसंबंधः क्रियताम्। प्रकरणात्सामान्यसंबंधः सिध्यति। सत्यम्। प्रकरणात्सिध्यति। न तु श्रुतिमकल्पयित्वा। सा च श्रुतिः क्लृप्तायां सत्यां कल्पयितुं न शक्यते। ननु विशेषे विधीयमानेऽर्थात्सामान्यमंतर्भविष्यति। सत्यम्। अर्थापत्तिरियम्। सा चान्यथानुपपत्त्या भवति। यदीदं विशेषसंबंधवाक्यं सामान्यसंबंध- श्रुतिमकल्पयन्नोपपद्येत। ततःकल्पयेत्। उपपद्यते त्वस्य क्लृप्तसामान्यसंबंधास्वृक्षु स्वस्वार्थमात्रविधानं। प्रकृतानामप्रकृतानां च ग्रहणेप्येकत्र प्राप्तसामान्यानुवादे न विशेष- मात्रकरणादन्यत्र च सामान्यविशेषकरणाद्वैरूप्यनिमित्तोपि वाक्यभेदः स्यात्। एकतरग्रहणे तु न कश्चिद्दोषः। तदुक्तं वार्तिके।

ऋतुकार्यविशेषोयं मंत्रस्यास्योपदिश्यते।
सामान्यप्राप्त्यपेक्षश्च विशेषो नित्यमिष्यत इति ।

(तरङ्गिणी)
आग्नेयीशब्दस्य यौगिकत्वेन विग्रहसमानार्थतया अग्निर्देवतास्येति विग्रहे सर्वनाम्नः सन्निहितपरत्वात् आग्नेयीशब्दोपि सन्निहितपर एवेति।

॥ अक्ताशब्दवदिति ॥ नामधेयपादे स्थितं। संदिग्धेषु वाक्यशेषात्। अक्ताःशर्करा उपदधाति तेजो वै घृतमिति श्रूयते। तत्र शर्कराणां घृततैलवसाद्यन्यतमेनांजनं उत घृतेनैवेति विशये विशेषानुक्तेरर्थवादस्य विध्यनुसारित्वादनियम इति प्राप्ते विधावंजनक्रियाक्षिप्तद्रवद्रव्यसामान्यस्य घृतेपि सत्त्वान्निर्विशेषसामान्यानुष्ठानासंभवेन किंचिद्विशेषपर्यवसानस्य विधिनैवापेक्षितत्वाद्वाक्यशेषोपात्ते विशेषे सति विशेषांतरकल्पनानौचित्याच्च विधेयस्तावकवाक्यशेषानुसारात् घृतेनैवांजनमिति सिद्धांतः। तथाप्रकृतेपि एवं धर्मानिति वाक्यशेषे धर्मभेदश्रवणान्नेह नानेत्यत्र नानाशब्दोपि धर्मभेदपर एवेत्यर्थः। नन्वेवमपि ब्रह्मणि धर्मनिषेधस्तवानिष्ट इत्यत आह ॥ तथाचेति ॥ विशेष्यविधाने बाधकस्थलमुदाहरति ॥ लोहितेति ॥ उष्णीषादेर्विध्यंतरप्राप्तस्य नात्र विधानं संभवतीत्यर्थः। विशेष्यनिषेधे बाधकमुदाहरति ॥ नजीर्णेति ॥ अत्र जीर्णमलवत्त्वविशिष्ट वासोनिषेधे नग्नस्याप्यन्वयापत्तिर्बाधकमित्यर्थः। ननु यत्र विशेष्ये बाधकं तत्र तथास्त्वित्याशंक्य प्रकृतेपि तदस्तीत्याह ॥ धर्माणामिति ॥ ॥ न सहेतीति ॥ प्रकृत्यर्थविशेषणमेतदिति भाष्यस्थेनैतच्छब्देन विनञ्भ्यामिति सूत्रस्थस्य नसहेत्यस्य परामर्श इति सूचयितुं न सहेति स्ववाक्यं ॥ प्रकृत्यर्थेति ॥ ननु प्रकृतिभूतनञर्थेनसहेतिप्रत्ययार्थो विशेषणीयः। तथाच द्वौ प्रतिषेधौ प्रकृतमर्थं सातिशयं गमयतः। न न सह सहैवेति। तथा च नानाशब्दः सहेत्यर्थः स्यादिति चोदयित्वा लोकप्रसिद्धार्थानामिहसाधुत्वान्वाख्यानात् लोकेच नानाशब्दस्य पृथग्भावाभिधायकत्वान्नसहेतिनप्रत्ययार्थनिर्देशः किंतर्हि प्रकृत्यर्थविशेषणमित्यादिनाभाष्यग्रंथे विनञ्शब्दयोर्नसहेत्येकार्थत्वात् नाप्रत्ययस्य नाञ्प्रत्ययस्य चानिर्दिष्टार्थकत्वेन स्वार्थिकत्वाद्विनानानाशब्दयोरेकार्थत्वमुक्तमित्यर्थः ॥ महाभाष्येचेति ॥ ननु तर्हिनिषेधार्थाभ्यां विनञ्शब्दाभ्यां सहेत्यर्थएव नानाञ्प्रत्ययौ विधातव्याविितिचोद्यं नसहेत्यस्य प्रकृत्यर्थविशेषणस्याभावे क्रियावाचिनोपि विशब्दात्सहार्थे प्रत्ययोविज्ञायेत। विगतौ सहेतीति परिहृतं कैयटे। तत्सूचयति चकारेण ॥ अमरोक्तेश्चेति ॥ नानाशब्दो विनेत्यर्थे वर्तत इत्यनुषंगः ॥ नानाविष्णुमिति ॥ विष्णुंविनेत्यर्थः ॥ नतदस्तीति ॥ नेहनानेतिश्रुतिसमानार्थस्मृतौ नानाशब्दस्थाने विनाशब्दप्रयोगादुभयोरेकार्थतावसीयत इत्यर्थः। एवं च वाक्यार्थं संग्रहरूपेणाह ॥ एवंचेति ॥ विना नसह नास्तीत्युक्ते सहास्तीति लभ्यत इत्यर्थः। नानाशब्दस्यभिन्नार्थस्य किंचनशब्दार्थविश्वविशेषणत्वेपि नदोष इत्याह ॥ किंचेति ॥ ॥ ब्रह्मणीति ॥ विशेषनिषेधस्य शेषानुज्ञानांतरीयकत्वादिति भावः। ननु ब्रह्मणो

(तरङ्गिणी)

जगदुपादानत्वादुपादान एव जगन्निषेधः पर्यवस्यतीत्यत आह ॥ब्रह्म चेति॥ ननु ब्रह्मणि प्रकृत्यादौ च प्रपंचो निषिध्यत इत्यत आह ॥अन्यथेति॥ ॥एतद्वाक्यस्येति॥ प्राणादीनां ज्योतिषा सह पंचजनानां नैरुक्तानुसारेण गंधर्वपितृदेवतासुररक्षसां वा आकाशस्यच ब्रह्मणि प्रतीयमानत्वादित्यर्थः ॥य एषइति॥ सवा एष महानज आत्मा योयं विज्ञानमयः प्राणेषु यएषों तर्हृदय आकाश इत्यादिना आकाशादेः शयनस्य सर्वलोकानामीशितव्यानां पालनादिधर्माणांच प्रतीतेरित्यर्थः ॥ईशानमिति॥ यइदं मध्वदं देवमिति पूर्ववाक्ये ईशानमिति श्रुतिपाठः। अंगुष्ठ इत्युत्तरवाक्ये ईशान इति पाठः। वाक्यानि तूदाहृतानि। संगृह्णाति ॥एवंचेति॥ ॥अत्रेति॥ अनन्येति वाक्ये ॥एतेनेति॥

मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन।
मृत्योः स मृत्युमाप्नोति यइह नानेव पश्यति
इति वाक्यं एतदनंतरोत्तरवाक्येन
एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवं।
विरजः परआकाशादज आत्मा महान्ध्रुवः।
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।
नानुध्यायाद्बहून् शब्दान्वाचोविग्लापनं हि

तदितीत्यादिना मरणादिरहितत्वादिधर्मकं आकाशादिदेवताभ्य उत्कृष्टतमं ब्रह्म प्रतिपादयता वाक्येन विरोधान्नतत् विश्वमिथ्यात्वपरं। अपितु ब्रह्मगतभेददर्शिनिंदाद्वारा तदभेददर्शिस्तावकं। नह्याकाशादेरभावे तदवधिक उत्कर्षो ब्रह्मणि संभवतीत्यर्थः ॥पूर्ववाक्यमिति॥ काठकस्थमितिशेषः। वाक्यंतु पूर्वमेवोदाहृतं। बृहदारण्यकेतु मृत्योः स मृत्युमाप्नोतीतिवाक्यं एकधैवानुद्रष्टव्यमित्यस्मात्पूर्ववाक्यमिति बोध्यं। वाक्यं तूदाहृतं ॥तत्रेति॥ मृत्योः मृत्युमिति वाक्ये। नानाशब्देन ब्रह्मगतो भेदः इवशब्देन च तद्गतौ भेदाभेदौ च निवार्येते इत्यर्थः ॥भवेदिति॥ एकत्र विरुद्धयोः संयोग इव शब्दो भवेदित्यन्वयः। प्रकृते च विरुद्धद्वयं भेदार्थकनानाशब्दसमभिव्याहारात् भेदभेदावेवेति भावः ॥अन्यथेति॥ उपमायामिव शब्दस्य प्रसिध्या प्रकृतेपि तस्योपमार्थत्व इत्यर्थः ॥सर्वस्यापीति॥ यस्य पृथिवी शरीरं यस्यात्मा शरीरमित्यादिश्रुतेरित्यर्थः ॥अन्येत्विति॥ यथा सर्वगंध इत्यादौ तत्तद्गुणं ब्रह्मोपास्यत्वेन प्रतिपिपत्सितं। नतु तद्गुणं ब्रह्म सिध्यति। उपासनायाः कर्तव्यत्वे ब्रह्मणश्चतत्तद्गुणत्वे वाक्यतात्पर्यकल्पने गौरवात्। यथा प्रकृतेप्यद्वितीयत्वादिना ब्रह्मोपास्यमेवाभिधीयते। नत्वद्वितीयं ब्रह्म प्रतिपाद्यते। उपासनक्रियाध्याहारश्च सर्वगंधादिवाक्येपि तुल्य इति भावः ॥मिथ्यात्वेति॥

(तरङ्गिणी)

मिथ्यात्वप्रतिपादकत्वेन पराभिमता श्रुतिरित्यर्थः। माधवीयभाष्यानुसारेण नानात्व-प्रतिपादकबहुश्रुतिविरोधोपि द्रष्टव्यः। तथाहि।

कविर्नृचक्षा अभिषीमचष्ट ऋतस्य योना विधृतेमदंती।
नाना चक्राते सदनं यथावेः समानेन क्रतुना संविदाने।

अनुक्रमणिकाद्युक्तरीत्या सर्ववेददेवतायाः द्यावापृथिव्याद्यधिष्ठानस्य परमात्मनो नानाविधस्थानत्वमुच्यते। कविः क्रांतदर्शी। नृचक्षाः नृणां द्रष्टा सूर्यः। सीं एतेद्यावापृथिव्यौ। अभ्यचष्ट सर्वतः पश्यति। ऋतस्य योना जलस्य योना योनिभूते। मदंती हृष्यंत्यौ। विधृतेसमानेन परस्परप्राणनाख्येन। क्रतुना कर्मणा। संविदाने परस्परमैकमत्यं प्राप्नुतः। ते द्यावापृथिव्यौ। नाना पृथग्भूतं। सदनं स्थानं। चक्राते। तत्र दृष्टांतः यथावेः कुलायं नाना भवति तद्वत्। नाना चक्राते यम्या वपूंषि तयोरन्यद्रोचते कृष्णमन्यत्। श्यावीव यदरुषीच स्वसारौ महद्देवानामसुरत्वमेकं। यम्या यमरूपे मिथुनभूते अहश्चरात्रिश्चेत्येते नानाविधानि वपूंषि शुक्लकृष्णादीनि चक्राते कुरुतः। किंविधे श्यावी कृष्णवर्णा अरुषी शुक्लवर्णा इत्येवं रूपतया स्वसारौ भवतः। तयोर्मध्येऽन्यत् अर्जुनं अहः रोचते किरणसंबंधाद्दीप्यते। अन्यत् रात्रिरूपं कृष्णं तमः संबंधात् यम्या सुपो यादेशः रोचते। एकान्याभ्यां समर्थाभ्यामिति न निघातः। अत्राह्नो रात्रेश्च देवतायाः परमात्मनो जीवादिभिन्नतारूपत्वमुच्यते। यच्चिद्धित्वा जना इमे नाना हवंत ऊतये। अस्माकं ब्रह्मेदमिंद्र भूत् तेहा विश्वा च वर्धनं। हे इंद्र इमे दृश्यमानाः जनाः। नाना अनेकविधाः। ऊतये सुखस्य रक्षणाय। यच्चित् यद्यपि हि त्वा हवंते स्तुवंति तथापि अस्माकं इदं ब्रह्मस्तोत्रं। ते तव। विश्वा अहा सर्वेष्वहस्सु। वर्द्धनं वृद्धिकरं प्रीतिकरं। भूत् भवतु। यदिंद्र मन्मशस्त्वा नाना हवंत ऊतये। अस्माकेभिर्नृभिरत्रास्वर्जय। हे इंद्र यस्मात् संग्रामे त्वां मन्मशः मन्मना स्तोत्रेण। नाना बहुप्रकाराः जनाः। त्वां आह्वतु किमर्थं ऊयते रक्षणाय। अतोस्मिन्संग्रामे अस्माकेभिरस्मदीयैः नृभिः स्तोतृभिः आहूतः सन् स्वः शत्रुबलं जय अभिभव। अभिष्टये सदावृधं स्वर्मीळ्हेषु यन्नरः। नाना हवंत ऊतये। हे इंद्र नरो यजमानाः स्वस्याभिष्टये सहायार्थं सदावृधं सदा सेवकान्वर्धयंतं त्वां स्वर्मीह्ळेषु संग्रामेषु नानाविधाः ऊतये हवंते आह्वयंति। नानानं वा उनो धियः। नो अस्माकं धियः। नानानं नानाविधा भवंति। तथा जनानां व्रतानि विविधानि भवंति। तक्षा त्वष्टा। रिष्टं दारुतक्षणं इच्छति। भिषक् चिकित्सकः ऋतं रोगं इच्छति। ब्रह्मा ब्राह्मणः सुन्वंतं यजमानमिच्छति। अतः कारणात् हे इंद्रो सोम त्वं संद्रार्थं परिस्रव परितः क्षर। नानाधियो वसूयवः।

(तरङ्गिणी)

ऋषिः प्रवृत्तसोमयागः सनथ दशापवित्रात् सोमे क्षरति प्रतिबंधकपापापनुत्तये पुरश्चरितानुकीर्तनपुरःसरं अध्यैषणं करोति। अहं कारुः स्तोमानां कर्तास्मि। तन्यतेस्मादिति ततः पिता। तन्यतेऽसाविति ततः पुत्रो वा। भिषक् भेषजकृत् ब्रह्मेत्यर्थः। स च त्रय्या विद्ययाभिषज्यतीति श्रुतेः। तथा नाना माता दुहिता वा उपलप्रक्षिणी उपलेषु दृषदादिषु भृष्टान् यवान् हिनस्ति चूर्णयति सक्तून् करोतीत्यर्थः। एवं सर्वे वयं नानाधियः भिन्नस्वभावकर्माणः वसूयवो वसुकामाः। अनुतस्थिम परिचराम। तत्र दृष्टांतः। गा इव गाव इव। छांदसोजस्याकारादेशः। गावो यथा गोष्ठमनुतिष्ठंति। स्वपयःप्रदानेन परिचरंति। एवं वयमपि परिचरामः। तज्ज्ञात्वा हे इंद्र परिस्रव। अत्र निरुक्तं। उपलप्रक्षिणीत्युपलेषु प्रक्षेपणा वा कारुरुहमस्मि कर्ता स्तोमानां ततो भिषक् तत इति संताननाम पितुर्वा पुत्रस्य वा भिषगुपलप्रक्षिणी सक्तुकारिका नानानमतेर्माता वा दुहिता वा नानाविधा नानाकर्माणो वसूयवो वसुकामाः अन्वास्थितास्मे गाव इव गोष्ठमिति। बृहस्पतिं वृषणं वर्धयंतो नानासंतो बिभ्रतोज्योतिरासा। नाना पृथग्भूताः संतो ज्योतिर्मंत्रान् आसा आस्येन बिभ्रतः वर्षितारं बृहस्पतिं वर्धयंत इत्यादि। भेदमिथ्यात्ववादिनां निंदा च श्रूयते।

शश्वंतो हि शत्रवो रारधुष्टे भेदस्य चिच्छर्धतो विंद रंधिं।
मर्तां एनः स्तुवतो यः कृणोति तिग्मं तस्मिन्निजहि वज्रमिंद्र।

हे इंद्रते तव शत्रवः शश्वंतः बहवः ररधुः वशमीयुः चिदपि च भेदस्य शर्धतः हिंसकस्य भेददूषकस्य रंधिं नाशं विंद विचारय भेददूषको यथा नश्यति तथा कुरु यश्च वस्तुतः स्तोतॄन्मर्त्यान् प्रति एनः पापं कृणोति तस्मिन् तिग्मं वज्रमायुधं जहि प्रेरयेति।

आवदिंद्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायन्।
अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरदश्व्यानि।

भिद्यत इति भेदः सर्वस्मात् भिन्नं इंद्रं ईश्वरं यमुना आवत्तत्तीरवासी सर्वोपि जनो व्यतोषयदित्यर्थः। तृत्सवः तृत्सुसंज्ञकाःवशिष्ठशिष्याश्चावत्। य इंद्रः अत्रास्मिन्सर्वतातौ युद्धे परकीयाश्वसंबंधीनि शीर्षाणि मुषायत् अमुष्णात्। तमिंद्रमजासः जनपदाः शिग्रवो जनपदाः यक्षवश्च जनपदाः बलिमुपहारं जभ्रुः उपजह्रुरिति। भेदमेभिर्जघान। भेदं वन्वंता प्रसुदासमावं। त इत्याद्यपि योजनीयं। एवमन्यान्यावत् समित्यन्यत्वप्रतिपादकाः संख्याप्रतिपादकाश्च बहुश्रुतयो द्रष्टव्याः।

व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगं युजि।
न्यायामृतरंगिण्यां नेहेत्यस्यार्थवर्णनं॥ नेह नानेति श्रुत्यर्थः॥

## न्यायामृतकण्टकोद्धारः

ननु मास्त्वियं श्रुतिर्मिथ्यात्वे मानम्। नेहनानेति श्रुतिर्भविष्यति। तस्यामिह ब्रह्मणि किञ्चन कार्यकारणात्मकं वस्तु नास्तीति जगदभावप्रतीतेरित्यत आह नापीति। नन्वत्र कथं भेदनिषेधः? तत्प्रत्यायकपदाभावादित्यत आह नानाशब्दो हीति। ननु भावप्रधानत्वमभ्युपेत्य भेदनिषेधपरतया किमर्थं व्याख्यायते? जगन्निषेधपरत्वमेव किं न स्यादित्यत आह यदेवेति। पूर्ववाक्यानुसारात् ब्रह्माभेद एव प्रकृतवाक्यार्थः। अन्यथा पूर्ववाक्यविरोधः स्यादिति भावः। अन्यथेति। पूर्ववाक्ये ब्रह्माभेदोक्त्यनङ्गीकार इत्यर्थः। उपलक्षणमेतत्। यत्तच्छब्दवैयर्थ्यं च द्रष्टव्यम्। स्वगतभेदप्रसक्तिः किमेतत्प्रकरणभिन्नसाधनान्तरेण वा एतत्प्रकरणस्थ वाक्येनैव वा? नाद्य इत्याह जगज्जन्मादीति। ननु जगज्जन्मादिकारणत्वादि विशिष्टे भेदप्रसक्तिः, शुद्धे निषेध इति किं केन संगतमिति चेन्न। जगज्जन्मादिकारणातिरिक्तशुद्धसद्भावे प्रमाणाभावात्। न च निर्गुणश्रुतिरेव प्रमाणमिति वाच्यम्। तस्याः सत्वादिराहित्यपरत्वेन जगत्कारणत्वाद्यविरोधित्वात्। अन्यथा व्याघातात्। अस्तु साधनान्तरेण प्रसक्तिः। न तु तत्प्रकरणगतवाक्यैरिति द्वितीयपक्षं प्रतिक्षेप्तुमाह किंचेति। तथा च विरुद्धरूपवत्त्वेन धर्माणामनेकत्वेन धर्मिणोऽपि तत्प्रसक्तिरित्यर्थः। ननु प्रसक्तस्यापि स्वगतभेदस्य निषेधो न दृष्ट इत्यत आह दृष्टश्चेति। अत्र श्रुतावेकपदेन, स्मृतौ च समपदेन स्वगतभेदनिषेध इति द्रष्टव्यम्। अन्यथेति। स्वगतभेदनिषेधानङ्गीकार इत्यर्थः। एवं स्वगतभेदनिषेधपक्षेऽप्रसक्तप्रतिषेधतां निराकृत्य जगन्निषेधपक्षे तामाह प्रत्युतेति। ननु प्रमाणान्तरेण वा श्रुतितात्पर्यज्ञानेन वा धर्मादेः प्रसक्तिरिति चेन्न। धर्मादेः प्रमाणान्तरावेद्यत्वात् श्रुतेस्तत्र तात्पर्याभावे धर्मादिसिद्धिरेव न स्यात्। ततश्चाविगानेन सर्वेषामनुष्ठानं भज्येतेति भावः। न हि सर्वेषां तात्पर्यापरिज्ञानम्। न ह्युपक्रमादिभिर्विचारणेऽपि तात्पर्यज्ञानं न संभवति। उपक्रमादिभिर्विचारयतामपि
ॅनिष्ठानाच्च। ननु स्वगत भेदस्यैव निषेधः कुतः? भेदमात्रस्यैव निषेधः किं न स्यादित्यत आह
तथा विशेषणेऽपि कुतो न भेदमात्रनिषेध इत्यत आह इमाविति। विधेयोद्देश्ययोरिति। तथा
ेयादिभेदमङ्गीकृत्य तन्निषेधे व्याघात इति भावः। भेदमात्रनिषेधे पूर्वोत्तरवाक्यविरोधः, तत्र भेदस्य
ित्याह काठक इति। ननु स्वगतभेदनिषेध पक्षे नेहनानेत्येतावतैवालम्। किंचनशब्दो व्यर्थः। तस्य
ोजनादर्शनादित्यत आह किंचनेति। अत्र किंचनशब्दः प्रकृतसकलनानात्व ग्रहणार्थ इति न तस्य व्यर्थत्वम्। ननु च कथं सकलनानात्वनि प्रकृतानीत्यत उक्तं गुणेति। ननु भवितुः प्रधानत्वात् तत्पर एव किंचन शब्दो न नानात्वपरः तस्या प्रधानत्वादित्यत आह भवितृप्राधान्येऽपीति। अत्र किंचन शब्दस्य प्रकृतधर्मपरत्वे सर्वनामत्वम्, उद्देश्यसमर्पकत्वं, व्यक्तिवाचित्वं, विशेषशब्दसन्निहित सामान्य शब्दत्वं चेति हेतुचतुष्टयम्। तत्र सर्वनाम्नः प्रकृतपरत्वे दृष्टान्तमाह सर्वेभ्य इति।

दर्शपूर्णमासयोः श्रुतं सर्वेभ्य कामेभ्यो दर्शपूर्णमासाविति। तत्र संशयः। सर्वशब्दः किं सर्वकामपरो वा, प्रकृतसर्वकामपरो वा? सर्वपरत्वमेव ग्राह्यम्। संकोचे कारणाभावादिति प्राप्ते सिद्धान्तितम्। प्रकृतपरत्वमेव। अन्यथा दर्शपूर्णमासाभ्यामेव सर्वकामप्राप्तिसंभवे यागान्तरविधानवैयर्थ्यात्। दर्शपूर्णमासकर्तुः सर्वकामावस्यसंभवाच्चेति। तथा प्रकृतेऽपीति भावः। न च तत्र बाधकात् संकोचः। न चात्र किंचिद् बाधकमिति वाच्यम्। प्रकृतेऽपि सर्वनिषेधे व्याघातादेरुक्तत्वात्। उद्देश्यसमर्पकस्य प्रकृतपरत्वे दृष्टान्तमाह

(कण्टकोद्धारः)

व्रीहीनिति। तत्रैव श्रूयते व्रीहीनवहन्तीति। अत्र व्रीहिशब्दः किं प्रकृत नियोगसाधनद्रव्यपरो वा, व्रीहित्वावच्छिन्न व्रीहिपरोवेति विशये व्रीहिमात्रपर एव। व्रीहीनित्यविशेषश्रुतेः। प्रकृतनियोगसाधनद्रव्यपरत्वे च लक्षणापत्तेरिति पूर्वपक्षे सिद्धान्तितम्। नियोगसाधनद्रव्यपर एव। व्रीहिमात्रपरत्वे लौकिकव्रीहिष्वपि नखदलने प्रत्यवायापत्तेः। यवेष्वौपदेशिकावघातानापत्तेश्चेत्यगत्या लक्षणया प्रकृतनियोगसाधनसतुषद्रव्यपरत्वमिति। तथा प्रकृतेऽपीति भावः। व्यक्तिवाचिनः प्रकृतपरत्वे दृष्टान्तमाह आग्नेय्येति।

तृतीयाध्याये द्वितीयपादेऽष्टमाधिकरणे चिन्तितम्। अधिकारे च मन्त्रविधिरतदाख्येष्वविशिष्टत्वात्। ज्योतिष्टोमे काश्चिदाग्नेय्यः ऋचः 'अग्न आयाहि वीतय' इत्यादि विशेषरूपेणैवा संयुक्ताः पठिताः। स्तोत्रादौ च वाक्यान्तरेण विनियुक्ताः। प्रदेशान्तरे आग्नेय्याग्नीध्रमुपतिष्ठत इति श्रुतम्। तत्र संदेहः किं प्रकृताभिरप्रकृताभिर्वाऽग्नेयर्ग्भिरुपस्थानं कर्तव्यमुत प्रकृताभिरेवेति। किं तावत् प्राप्तम्? यथा कयाचिदाग्नेय्योपस्थानम्। आग्नेय्येत्यविशेषश्रवणात् प्रकृतग्रहणे कारणाभावात्। ननु प्रकरणमेव विशेषकम्। यथा व्रीहीनित्यत्र प्रकरणात् प्रकृता एव व्रीहयो व्रीहिशब्देन गृह्यन्त इति चेन्न। वैषम्यात्। व्रीहीनित्यत्र व्रीहीनुद्दिश्यावघाताख्यः संस्कारो विधीयते। तत्रापूर्वासंबन्धिनः संस्कारायोगात् प्रकृतापूर्वसाधनीभूता गृह्यन्ते। इह तु नाग्नेयी संस्कारः। किन्तूपादीयते सा, तृतीयानिर्देशात्। तथाच पशुना यजेतेत्यत्रेव यया कयाचिदाग्नेय्योपस्थानम्। न च सन्निधानात् प्रकृतग्रहणमिति वाच्यम्। प्रदेशान्तरे स्तोत्रादौ विहितत्वेन तदभावात्। न ह्युपस्थानविधौ कस्याश्चिदाग्नेय्याः सन्निधिरस्ति। अस्तु वा सन्निधानम्। न चैतावन्मात्रं ग्रहणे प्रयोजकम्। तथात्वे अश्वेन गच्छति श्वेतेन पटेन प्रावृत इत्यत्र श्वेतस्य पटान्वितस्याश्वेन सन्निधानादन्वयः स्यात्। किन्तु अन्यानन्वितमपेक्षितसन्निधानं ग्रहणे प्रयोजकम्। न चैतदस्ति आग्नेयीनाम्। वाक्यान्तरेण स्तोत्रादौ विनियुक्तत्वात्। न ह्यन्यान्वितस्यान्येन संबन्धो युक्तः। ननु तथाप्याग्नेयीशब्दस्य यौगिकत्वात् योगस्य चाग्निरस्या इति सर्वनामघटितत्वात् तस्य च प्रकृत परत्वात् प्रकृतव्यक्तिपरत्वमिति चेन्न यौगिकत्वेनावयवार्थवत्परत्वमेव युक्तम्। तत्र यौगिकशब्दः पदान्तरेण समभिव्याहृतश्चेत् तत्पर एव भवति। यथा वैश्वदेव्यामिक्षेत्यत्र वैश्वदेवशब्दस्यामिक्षापरत्वम्। न चैवं प्रकृते विशेषणमस्ति। किं च सन्निधानमपि नास्ति। प्रदेशान्तरगतत्वादित्युक्तमिति। तस्माद्यया कया चिदाग्नेय्योपस्थानमिति। अत्रोच्यते। प्रकृताभिरेवाग्नेयेभिरुपस्थानम्। नाप्रकृताभिः। प्रकृतग्रहणे लाघवात्। अप्रकृतग्रहणे गौरवात् तथाहि अत्र हि द्वयमपेक्षितं क्रतूपयुक्तपुरुषव्यापारसाधनत्वं सामान्यम्, आग्नीध्रोपस्थानसाधनत्वं विशेषश्च। तत्राप्रकृत ग्रहणे द्वयमनेनैव विधिना कर्तव्यमिति गौरवम्। प्रकृतग्रहणे तत्प्रकरणे न क्रतूपयुक्त व्यापारसाधनत्वं सिद्धम्। कोऽसौ व्यापार इति विशेषजिज्ञासायामनेन विधिनाग्नीध्रोपस्थानमित्येव बोधनात् विधेर्लाघवम्। तस्मात् प्रकृतग्रहणम्। नन्वेवमग्निमुपनिधाय स्तुवीतेत्यत्रापि प्रसिद्धक्रतुसंबन्धानामाहवनीयादीनामेव ग्रहणं स्यात्। न लौकिकस्याग्नेरिति चेन्न। आहवनीयादीनां विशेषवचनमन्तरेणान्यत्र नेतुमशक्यत्वात्। तेषां देशविशेषवद्धत्वात् अन्यत्र नयने प्रायश्चित्तश्रवणाच्च लौकिकस्यैव ग्रहणम्। नचैवं प्रकृते बाधकमस्ति। ननु प्रकृतानां स्तोत्रादिसाधनत्वं ज्ञातम्। तथाचान्यान्वितस्यान्यान्वयायोगात् कथं प्रकृताभिरुपस्थानमिति चेत् सत्यम्। सामान्यरूपता प्रकरणभावात् ज्ञाता। तावन्मात्रेण प्रयोजनाभावात् विशेषरूपमपेक्षितम्। तच्च तच्च विशेषवाक्यद्वयेन ज्ञातमिति

(कण्टकोद्धारः)
वाक्यद्वयानुरोधात् संयोगपृथक्त्वन्यायेनोभयसाधनत्वं भवेत्। को दोषः? यद्वास्य विशेषवाक्यत्वात् तस्य सामान्यत्वादेतदेवादरणीयं, तदनादरणीयमिति प्रकृतानामाग्नेयीनां ग्रहणम्। तथा किंचनशब्दः प्रकृतधर्मपर एवेति भावः। विशेषशब्दसन्निहितसामान्यशब्दस्य विशेषपरत्वे दृष्टान्तमाह घृतशब्देति।

प्रथमाध्याये नामधेयपादे एकोनविंशाधिकरणे चिन्तितम्। संदिग्धेतु वाक्यशेषात्। तेजो वै घृतम्। अक्ताः शर्करा उपधावतीति श्रूयते। मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्कराः। तत्र संशयः। घृततैल वसानामन्यतमेनाञ्जनमुत घृतेनैवेति। तदर्थमिदं विचार्यते विध्युद्देशार्थवादयो र्विरोधोऽस्ति नवेति। पूर्वपक्षस्तु येन केनचिदञ्जनं कर्तव्यम्। विधिवाक्येनाञ्जनसाधनसामान्यस्य बोधनात्। न चार्थवादाद् विशेषोपस्थितिरिति वाच्यम्। अर्थवादाद् विधेः प्रबलत्वात्। तत्प्राबल्यमेव कुत इति चेन्न। प्रधानत्वात्। प्रधानत्वं च विधित्वात्। अर्थवादस्तु स्तावकत्वादङ्गम्। नचाङ्गेन प्रधानं बाधितुं शक्यम्। असंजातविरोधित्वाच्च प्राबल्यम्। तच्चोपक्रमे श्रुतत्वात्। अर्थवादस्तु चरमश्रुत इति प्रथमश्रुतानुसारेण लक्षणया नेयः। अप्राप्तार्थत्वाच्च प्राबल्यं विधेः। अर्थवादस्त्वनुवादतया प्राप्तार्थ इति दुर्बलः। तस्माद् येन केन चिदञ्जनमिति।

सिद्धान्तस्तु। भवेदेवं यदि विध्यर्थवादयोर्विरोधः स्यात्। न चैवम्। तथाहि विधिः किं सामान्यबोधको विशेषबोधको वा? नाद्यः। सामान्यस्याननुष्ठेयत्वात्। न द्वितीयः। तत्प्रत्यायकपदाभावात्। तस्मादुक्तरीत्या प्रबलोऽपि विधिः सामान्यबोधकत्वात् तस्यानुष्ठानायोग्यत्वात् अनुष्ठानयोग्यविशेषसंदेहजनकतया निर्णयहेतुमर्थवादमपेक्षते। न तु तेन सह विरुध्यते। स्वबोध्यस्य सामान्यस्य विशेषेऽप्यविकलत्वात्। नन्वर्थवादेपि एतस्य विधिर्नास्तीति चेन्न। विधेरुन्नेयत्वात्। तेजो वै घृतमिति घृतं तेजस्त्वेन स्तूयते। यत् स्तूयते तत् विधीयत इति न्यायात् विधेयत्वं गम्यते। तेन च विधायकः शब्दः कल्प्यते। तथा च विध्यर्थवादयोर्विरोधाभावात् सामान्यविधेरार्थवादिकघृतविशेषपरत्वम्। तथा एवं धर्मानिति विशेष श्रुत्या किञ्चनशब्दो विशेषपर इति भावः। उक्तमर्थं कारिकया संगृह्णाति एवंचेति। अस्तु किंचनशब्दस्य धर्मविशेषपर्यवसायित्वम्। ततः किं लब्धमित्यत आह तथाचेति। विशेष्यबाधकसद्भावादिति भावः। विशिष्टविषयकविधिनिषेधयोर्विशेषणपरत्वं दृष्टमप्यस्तीत्याह लोहितेति। विशिष्टबाधने को दोष इत्यत आह एकदेशेति। कल्प्यमाने उपपन्ने इत्यर्थः। तथा च गौरवमेव दोष इति भावः। अनेन सविशेषणे हीति न्यायस्य मूलभूता युक्तिरपि सूचिता भवतीति। न केवलं गौरवमपि तर्हीत्यत आह धर्माणामिति। फलितं दर्शयति तथाचेति। अस्तु वा किंचन शब्दो विश्वपरः। तथापि नास्माकमनिष्टम्। एवं च मिथ्यात्वासिद्धिरित्याह किंचेति। अत्रापि सविशेषणे हीति न्यायो द्रष्टव्यः। ननु भवेदिदं व्याख्यानं यदि विना नाना शब्दयोरेकार्थत्वं स्यात्। तदेव कुत इत्यतस्तयोरेकार्थत्वं सूत्रभाष्यामरतद्व्याख्यास्मृति संमत्या समर्थयते नाना शब्दो हीति। ननु नानाशब्दस्य विनार्थत्वेऽपि ब्रह्मण एव तत्संबधित्वेनान्वयः कुत इत्यत आह विनार्थस्य चेति। ब्रह्मण इदं शब्देनोपस्थितत्वात् उपस्थितपरित्यागे कारणाभावादिति भावः। अस्तुवा विश्वस्य स्वरूपेण ब्रह्मणि निषेधः तथापि न मिथ्यात्वसिद्धिः। न हि मृत्पिण्डे पटनिषेधे तस्य मिथ्यात्वं सिध्यतीत्याह किंचेति। ननु ब्रह्मणः प्रपञ्चोपादानत्वात् तत्र निषेधे मिथ्यात्वं सेत्स्यत्येव।

(कण्टकोद्धारः)

**प्रतिपन्नोपादाननिष्ठाभावप्रतियोगित्वात्। मृत्पिण्डश्च न पटोपादानमिति वैषम्यमित्यत आह ब्रह्मचेति। तथा च न दृष्टान्तवैषम्यमिति भावः। नन्वत्र ब्रह्मण्येव न निषेधः। किन्तु सर्वत्र। तथाच कथं न मिथ्यात्वसिद्धिरित्यत आह अन्यथेति। ब्रह्मणि निषेधानङ्गीकारे इत्यर्थः। न हि सर्वत्राविद्यमानस्याधिकरणविशेषावच्छेदेन निषेधे प्रयोजनमस्ति। न हि परार्था श्रुतिरनुपपन्नमेव प्रतिपादयतीति भावः। नेह नानेति वाक्यस्य मिथ्यात्वपरत्वे दूषणान्तरमाह एतद्वाक्यस्येति। ननु यस्मिन् पञ्च पञ्चजना इत्यत्र कथं प्रपञ्चप्रतिपादकता ? न संख्योपसंग्रहादिति सूत्रेण तस्य ब्रह्मपरतायाः समर्थनादिति चेन्न। चतुर्थपादे मुख्यवृत्त्या ब्रह्मपरत्वेऽप्यमुख्यवृत्त्या अन्यपरत्वस्याप्यङ्गीकारात्। न च तत्प्रतिपादकत्वेऽपि न तस्य सत्यत्वम्। तथाऽप्रतिभासादिति वाच्यम्। प्रतिष्ठित इत्यनेन तत्प्रतिभासोपपत्तेः। य एषोऽन्तर्हृदय इत्यत्र काठकीये च स्पष्टं प्रपञ्चप्रतिपादकत्वम्। ननु तर्हि कथं नेहनानेति। ननु तर्हि कथं नेह नानेति श्रुतिर्व्याख्येयेत्यत आह एवंचेति। अनन्याऽविनाभूतेत्यर्थः। नेहनानेति श्रुतिरपि इह ब्रह्मणि किंचन विश्वं नाना विनाभूतं न। अविनाभूतम् इति व्याख्येयेत्यर्थः। उक्तं श्रुतिव्याख्यानमन्यत्रातिदिशति एतेनेति। नेहनानेति श्रुति व्याख्यानेनेत्यर्थः। नन्विवशब्दस्य भेदाभेदपरत्वे किं नियामकमिति तत्राह भवेदिति। विरुद्धार्थकशब्दयोरेकत्र शब्दे इव शब्दसंयोगे सति स इवशब्दो विरुद्धयोर्धर्मयोः प्रतिपादको भवेदित्यर्थः। तथा च नानाशब्दात् पर इव शब्दो भेदाभेदप्रतिपादक इति भावः। नानाशब्दस्य च भेदार्थत्वं प्रागेव समर्थितम्। अन्यथेति भेदाभेदपरत्वानङ्गीकार इत्यर्थः। केचित्त्वित्यादि व्याख्यानत्रयं लाक्षणिकत्वात् पूर्वोत्तरासंगतत्वाच्च नादर्तव्यम्। मध्यमव्याख्यानं प्रमाणविरुद्धम्। अभेदोपासनस्य प्रमाणविरुद्धत्वादिति द्रष्टव्यम्।**

**नेहनानेति श्रुत्यर्थः।**

## न्यायामृतप्रकाशः

द्व्येकयोरिति॥ ''द्व्येकयोर्द्विवचनैकवचने''द्वित्वैकत्वयोरेते स्त इत्यर्थः। अत्र भावप्रधाननिर्देशाभावे द्व्येकेषामिति स्यादिति भावः। मास्तु भावप्रधानो निर्देशः नानाशब्द एव पृथक्त्ववाचीति कैयटसंमति माह॥ लोक इति॥ ननु समस्तजगन्निषेधे किं बाधकमित्यतः पूर्वोक्तज्ञापकमाह॥ यदेवेहेति॥ यदेव ब्रह्मरूपमिह लोके वर्तते तदेवामुत्र स्वर्गादौ वर्तते तदेवेहाप्यस्तीति इदमदःशब्दोदितलोकस्वरूपमंगीकृत्य तदुभयरूपलोकस्थितब्रह्मणोऽभेदोक्तेः। अन्यथा सर्वजगन्निषेधांगीकारे इदं चादश्च लोकादिकं नेति श्रूयेत उक्तिसौष्ठवादित्यर्थः॥ गुरुतरविचित्रेति॥ कार्यभेदेनेत्यादेस्तत्प्रसक्तेरित्यन्वयः। यथा लोके घटपटादि-प्रासादादिनानाविजातीयकार्यभेदेन तत्कारणभेदः एवं विचित्रानेककार्यभेदेन तत्कारणे ब्रह्मण्यपि भेदः प्रसक्तः। तथा गजतुरगादिनियंतॄणां स्थलजलादिभिन्नस्थानगतानां च लोके भेदस्य दर्शनात् प्रकृते ''यः पृथिवीमंतरो यमयती''त्यादिनियम्यानां ''यः पृथिव्यां तिष्ठन्नि'' त्यादिस्थानानां च भेदस्य सत्त्वादनुमानेन भेदप्रसक्तिरस्त्वित्यर्थः। श्रुत्या प्रत्यक्षेण तत्प्रसक्तिरस्तीत्याह ॥ यदेकमिति॥ ॥ अपर्यायेति॥ घटपटयोरपर्याय-शब्दवाच्यत्वेन भेदोस्ति अभेदे एकतरपरिशेषापत्त्या घटपटयोस्तदभावेन भेददर्शनाज्ज्ञानानंदादिगुणेष्वपि

(प्रकाशः)

भेदप्रसक्तिरित्यर्थः। जगज्जन्मादिकारणे गुरुतरविचित्रकार्यभेदेनेत्यादिविशिष्य तत्प्रसक्तिर्न कथ्यते किं नामेत्यत आह ॥सर्वत्रेति॥ जगज्जन्मादिकारणे ब्रह्मणि अंतर्यामिणि अवतारेषु गुणगुण्यादौ ज्ञानानंदादौ सर्वत्रापि श्रुतितात्पर्यापरिज्ञानेन स्वगतभेदप्रसक्तेः। केयं श्रुतिर्यत्तात्पर्यापरिज्ञानेन तत्प्रसक्तिरित्यत उक्तं॥अन्योंतर इति॥ अंतर्यामिणि प्रयुक्तान्यादिशब्दतात्पर्यापरिज्ञानेन तत्र भेदप्रसक्तिरित्यर्थः। आदिपदेन ''इंद्रो मायाभिः पुरुरूप ईयते' 'आनंदं ब्रह्मणः' 'यस्य ज्ञानमयं तपः' 'परास्य शक्तिः' 'बृहंतो ह्यस्मिन्गुणा'' इत्यादिश्रुतिग्रहणम्। एतत्तात्पर्यापरिज्ञानेन सर्वत्रावतारादिषु भेदप्रसक्तिर्द्रष्टव्येति सांप्रदायिकोर्थः। अन्ये तु सर्वत्रेत्यस्य स्वगतभेद प्रतिपादकत्वेनापाततः प्रतीतासु श्रुतिष्वित्यर्थ इत्याहुः। नेहनानेति वाक्यस्य बृहदारण्यककाठकयोः सत्त्वादुभयत्रापि विशिष्य स्वगतभेदप्रसक्तिमाह॥ किं चेति॥॥ ज्ञानादीति॥ घटपटयोरिव भिन्नधर्माश्रियत्वाद्धर्मिणोपि तत्प्रसक्तिरिति ध्येयम्। न च भिन्नरूपादिधर्माश्रयेपि घटे एकत्वदर्शनाद्धर्मभेदो न धर्मिभेदप्रयोजक इति वाच्यम्। तथापि संदेहानिस्तारादिति द्रष्टव्यम्। श्रुतिविशेषे स्वगतभेदनिराकरणं तवापि संमतमित्याह॥ दृष्टश्चेति॥॥ एको देव इति॥ एक इत्यनेन स्वगतभेदस्य निषेधस्त्वया कृतो दृष्टश्चेत्यर्थः। भारते सम इत्यनेन स्वगतभेदनिषेधः॥अन्यथेति॥ स्वगतभेदस्य सर्वथाप्रसक्त्यभावे ब्रह्मणोपि निर्भिन्नत्वरूपाखंडत्वप्रतिपादकस्याखंडवादस्यानारंभः स्यादित्यर्थः। अनुभूतिः ब्रह्म हेत्वंतरमाह ॥उपाधीति॥ उपाधिभेदं विनाऽज्ञायमानभेदत्वादित्यर्थः। अनुभूतौ भेदो ज्ञायमानः पटानुभूतिर्घटानुभूतिरित्युपाधिभेदेनैव ज्ञायते न तमंतरेण अतः स्वत एव भेदेनैवाज्ञायमानत्वादित्यर्थः। प्रत्युताऽस्मदुक्तमर्थमनंगीकृत्य सर्वजगन्निषेधांगीकारे तवैवाप्रसक्तप्रतिषेध इत्याह॥प्रत्युतेति॥ नन्वस्तु नानाशब्दो भेदार्थः तथापि प्रतियोगिविशेषानुपादानाद्भेदमात्रं ततः प्रतीयत इति भेदमात्रनिषेधः पर्यवस्यतीत्यत आह॥इहेति॥ इदं शब्द एव प्रतियोगिविशेषोपस्थापक इत्यर्थः। ननु सप्तम्यंतेदंशब्दस्याधिकरणपरत्वान्न तस्य प्रतियोग्युपस्थापकत्वमतो निषेधप्रतियोगित्वेन जगदेवादन्वेतीत्यत आह॥इमाविति॥ स्निग्धौ स्नेहवंतौ। तत्रैकाधिकरण कैकप्रतियोगिक एव स्नेहः प्रतीयते न त्विदंशब्दनिर्दिष्टपुरुषद्वयभिन्नपुरुषप्रतियोगिकः अथास्मिन्ग्रामे न विरोध इत्यत्र एतद्ग्रामाधिकरणकैतद्ग्रामस्थपुरुषप्रतियोगिक एवाविरोधः प्रतीयते न तु ग्रामांतरस्थपुरुषप्रतियोगिक इत्यर्थः। तथा च इह ब्रह्मणीति सप्तम्यास्तृतीयात्वेन विपरिणामः। इह ब्रह्मणा स्वप्रतियोगिके भेद इति यावत् नास्तीत्यर्थो द्रष्टव्यः। सर्वभेदनिषेधे स्वव्याहतिश्चेत्याह॥ विधेयेति॥ विधेयेन नानात्वनिषेधेन उद्देश्यस्य तदाधारब्रह्मणो भेदावश्यंभावात् अन्यथा विधेयत्वोद्देश्यत्वयोरयोगात्। तथा नानात्वस्य निषेध्यत्वं तदभावस्य निषेधत्वं च भेदं विना न युक्तमिति भावः। ननु तर्हीह ब्रह्मणि अस्माद्ब्रह्मणः सकाशान्नानात्वं नास्तीत्येतावतैव पूर्णत्वात्किंचन शब्दो व्यर्थः तेन भेदमात्रनिषेधप्रतीतेरित्यत आह॥ किंचनेति॥ आदिशब्देन पृथिव्याद्यंतर्यामित्वादिसंग्रहः। ब्रह्मणि प्रसक्तानेकभेदपर एव किंचनशब्दो न भेदमात्रपर इत्यर्थः॥अन्यथेति॥ किंचनशब्दस्य सर्वभेदपरत्वे इत्यर्थः॥उक्तेति॥ विधेयोद्देश्यादिभेदस्यावश्यकतया सर्वभेदनिषेधे व्याघात इत्युक्तेत्यर्थः। एवं नानाशब्दस्य भेदपरत्वमंगीकृत्योपपादितम्। इदानीं भवितृप्राधान्येन भिन्नवस्तुवाचित्वमभ्युपेत्याह॥ भवित्रिति॥॥ प्रकृतेति॥ पूर्वं प्रकृतेत्यर्थः। इह ब्रह्मणि धर्मावयवादिकं नाना भिन्नं नास्तीत्येवंपर एव न तु भिन्नजगन्मात्रप्रतिषेधपर इत्यर्थः। सर्वनाम्नः प्रकृतपरत्वे उदाहरणमाह॥सर्वेभ्य इति॥ तत्र सर्वशब्दस्य प्रकृतस्वर्गपरत्वमेव न

(प्रकाशः)

पश्चादिसर्वपरत्वमित्यर्थः। एतच्चोपपादितं प्राक्। उद्देश्यसमर्पकस्य प्रकृतपरत्वमुपपादयति॥ व्रीहीनिति॥ ''व्रीहीनवहंती''त्यत्र व्रीहीनुद्दिश्यावहननं विधीयते अत्रोद्देश्यसमर्पकं व्रीहिपदं ''चतुरो मुष्टीन्निर्वपती''ति चतुर्मुष्टिनिर्वपनीयतया पूर्वं प्रकृता अपूर्वसाधनीभूता एव ग्राह्या नान्ये गृहस्था इति निर्णीतमित्यर्थः। व्यक्तिविशेषवाचिनः शब्दस्य प्रकृतपरत्वं दृष्टमित्याह॥ आग्नेय्येति॥ अग्निप्रकाशिकया ऋचा आग्नीध्रं अग्निविशेषम्।

तृतीयाध्याये द्वितीयपादे चिंतितं ज्योतिष्टोमे ''अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सिबर्हिषी''त्याद्याः आग्नेय्यः ऋचः समाम्नाताः। तत्रैव श्रूयते ''आग्नेय्या आग्नीध्रमुपतिष्ठत'' इति। तत्र संदेहः किं यया कयाचिदग्निप्रतिपादिकया ऋचा आग्नीध्रोपस्थानं कर्तव्यम् उत प्रकृतानां मध्य एव यया कयाचिदिति। तृतीयया आग्नीध्रोपस्थाने करणतया आग्नेयीमंत्रस्योक्तत्वेन विशेषानुपादानान्न प्रकृतपरत्वनियम इति पूर्वः पक्षः। अग्नि र्देवता अस्येत्येवं सर्वनामघटितो यौगिकोऽयमाग्नेयी शब्दः अग्न आयाहीति पूर्वप्रकृतामेव व्यक्तिमालंबते। सर्वनामशब्दानां तद्घटितशब्दानां च संनिहितप्रकृतव्यक्तिपरत्वनिर्णयात् अतः प्रकृतयैव आग्नेय्या ऋचा आग्नीध्रोपस्थानं कर्तव्यमिति सिद्धांतः। विशेषशब्दसमभिव्याहृतसामान्यशब्दस्य प्रकृतविशेषपरत्वं दृष्टमित्याह॥ घृतेति॥

प्रमाणलक्षणे नामधेयपादे चिंतितं ''संदिग्धे तु वाक्यशेषादि''त्यत्र ''अक्ताः शर्करा उपदधाति तेजोवैघृत''मिति श्रूयते तत्राक्ता इत्युक्तमंजनं द्रवद्रव्येणेति तावत्सिद्धं तद्द्रव्यं किं तैलजलाद्यन्यतमत् उत घृतमिति संदेहे अक्ता इति सामान्यतः श्रवणाद्यत्किंचिज्जलाद्येवेति प्राप्ते अंजनसाधनं द्रव्यं घृतमेव वाक्यशेषे तेजो वै घृतमिति विशेषतो घृतशब्दश्रवणात्। विशेषशब्दसन्निहितसामान्यशब्दस्य प्रकृतविशेषपरत्वात्। अतो घृतेनैवांजनमिति सिद्धांतः।

एवं धर्मानित्युक्तां युक्तिं संगृह्णाति॥ एवं चेति॥ एवं धर्मानिति वाक्यशेषस्य भगवद्धर्मरूपविशेषपरत्वे सतीत्यर्थः। एवमुपपादनेन सिद्धं वाक्यार्थमाह॥ तथा चेति॥॥ सविशेषणेहीति॥ ''सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतो विशेष्यबाध'' इति न्यायादिति भावः। विशिष्टविधेर्विशेषणोपसंक्रमणोदाहरणं दर्शयति॥ लोहितेति॥ ऋत्विजां प्रचरणस्य सिद्धतया वैयर्थ्येनाविधेयत्वात्तदुष्णीषस्यापि सिद्धतया वैयर्थ्येनाविधेयत्वात्प्रचरतां ऋत्विजामुष्णीषेषु लोहितत्वं विधीयत इत्यर्थः। नन्वत्र विशेष्यबाधः कथमिति चेदुच्यते। ''प्रत्याम्नानाच्च वैयर्थ्यात्प्राप्तेरप्राप्तितस्तथा। बाधश्चतुर्विधः प्रोक्तः'' इति वचनात् अत्र सिद्धत्वेन वैयर्थ्याद्बाधो द्रष्टव्यः। विशिष्टनिषेधस्य विशेषणोपसंक्रमणोदाहरणं दर्शयति॥ नजीर्णेति॥ जीर्णत्वमलवत्त्वविशिष्टवासोनिषेधे नग्नस्यैवान्वयापत्त्या तस्य बाधेन स्नातकवाससि जीर्णत्वरूपं मलवत्त्वरूपं विशेषणं निषिध्यत इति द्रष्टव्यम्। अस्य विशेषणनिषेधोदाहरणत्वसमर्थनं मत्कृतकर्मनिर्णयटिप्पण्यां द्रष्टव्यम्। एकदेशो विशेषणं॥ सर्वेति॥ विशिष्टेत्यर्थः। ननु यत्र विशेष्ये बाधस्तत्र तथाऽस्तु प्रकृते च तदभावात्कथमयं न्याय इत्यतोऽत्रापि विशेष्ये बाधं दर्शयति॥ धर्माणामिति॥ एवं धर्मानित्यत्र पृथगितीत्यर्थः॥ तथाचेति॥ धर्माननंगीकृत्य तत्र भेदमात्रनिषेधे सतीत्यर्थः। पूर्वं किंचनशब्दः प्रकृतधर्मपरतया व्याख्यातः इदानीं त्वद्रीत्या समस्तविश्वपर एवास्तु तथापि न मिथ्यात्वसिद्धिः। नानाशब्दस्य विनेत्यर्थकत्वात्। तथा च किंचन विश्वं

(प्रकाशः)

इह अव्ययत्वात् ब्रह्मणा नाना विना नास्ति किं तु वह्निं विना धूमो नास्तीत्यादाविव तदविनाभूतं तेन व्याप्तं सत् तिष्ठति इत्यर्थो लभ्यत इत्यभिप्रेत्य नानाशब्दस्य विनार्थत्वे व्युत्पन्नत्वं काशिकाभाष्यादिसंमत्योपपादयति॥ किं चेति॥ ॥ विनञ्भ्यामिति॥ न सहेत्यर्थे नानाञौ प्रत्ययौ भवत इति न सूत्रार्थः। किंतु विनञोरेवेदं विशेषणं न सहेत्यर्थे असहार्थे पृथग्भावरूपार्थ इति यावत् वर्तमानाभ्यां तद्वाचिभ्यां विनञ् इत्येताभ्यां शब्दाभ्यां स्वार्थे असहार्थ इति यावत् ना नाञौ प्रत्ययौ भवतः तथा च वीत्यस्मात्पृथक्त्वरूपनसहार्थात्स्वार्थे नाप्रत्यये विनेत्येतत्पृथग्भाववाचि। तथा पृथक्त्वरूपनसहार्थात् नञः स्वार्थे नाञ्प्रत्यये ञकारलोपे ञित्त्वात्तद्धितेष्वचामित्यादि वृद्धौ प्रकृतिस्थञकारलोपे नानेति सिद्ध्यति। तथा च नाना विनेत्यन योरेकार्थत्वं सिद्ध्यतीत्यर्थः। वृत्तौ काशिकायां। नसहेत्यस्य नानाञ्प्रत्ययार्थत्वनिवारणायाह महाभाष्यकारः॥ नसहेतीति॥ तदेव दर्शयति न सहवाचिभ्यां विनञ् इत्येताभ्यामिति। शंकते॥ कस्मिन्निति॥ तथात्वे प्रत्ययस्य निरर्थकत्वं स्यादित्यर्थः। उत्तरमाह॥ स्वार्थ इति॥ प्रकृत्यर्थ एवेत्यर्थः॥ नानेति॥ विष्णुं नाना विनान्यो मोक्षदो नास्तीत्यर्थः॥ अमर व्याख्यायामिति॥ पृथग्विनेत्युदाहृतामर व्याख्यानावसरे तट्टीकायां पृथगित्यादेर्विनार्थत्वे उदाहरणानि प्रदर्श्य नानाशब्दस्य विनार्थत्वे ''नाना विष्णु''मिति वाक्यमुदाहरणतया प्रदर्शितमित्यर्थः। ननु किंचन जगत् विना नास्तीत्येव प्राप्तम्। ब्रह्मणा विनेति प्रतियोगितया ब्रह्मणोऽन्वयः कुत इत्यतः स्मृतौ मया विना नास्तीत्युक्तत्वात्तत्समाख्यया प्रतियोगित्वेन ब्रह्मण एवान्वय इत्याशयेनाह॥ न तदिति॥ यद्वा समग्रवाक्यार्थे इयं समाख्येति द्रष्टव्यम्। ननु विनाशब्दस्य प्रतियोग्यपेक्षैव कुतः येन ब्रह्मणः प्रतियोगित्वेनान्वय इत्यतः संबंधिशब्दत्वादित्याह॥ विनार्थस्येति॥ ननु ब्रह्मणा विना नास्तीत्युक्तौ तद्व्यतिरेकेणासत्त्वरूपं मिथ्यात्वमेव लभ्यत इति चेत्तत्राह॥ न चेति॥ संगृह्णाति॥ एवं चेति॥ परोक्तार्थांगीकारेपि न मिथ्यात्वसिद्धिरित्याह॥ किं चेति॥ विशिष्यनिषेधः शेषविधिं गमयतीति न्यायेनाह॥ ब्रह्मण इति॥ ननु स्वोपादानं ब्रह्मैव तत्रैव च सत्त्वं निषिध्यत इत्यत आह॥ ब्रह्मेति॥ ॥ अन्यथेति॥ अन्यत्र सत्त्वाभिप्रायाभावे॥ व्यर्थमिति॥ किंचन नास्तीत्येतावता पूर्णत्वादिति भावः। ननु इह ब्रह्मणि किंचन नास्तीति निषेद्धुं न शक्यते ''यस्मिन्द्यौ''रिति ब्रह्मण्येव सत्त्वश्रवणादिति चेत् तर्हि स्वविरोधादेव तत्र ब्रह्मणि निषेधोपि कर्तुं न शक्यत इत्याह॥ अथेति॥ एतद्वाक्यस्य नेह नानेति वाक्यस्य। उक्तमेवार्थं कारिकांतरेण संगृह्णाति॥ एवं चेति॥ रामायणे सीतावाक्यं॥ व्याख्यात्रेति॥ अत्र यथाप्रभा भास्करेणानन्या तं विना नास्ति तथाऽहं राघवेणानन्या तं विना नास्मीति यादृशी व्याख्या तादृगेव नेह नानेति श्रुतेश्च व्याख्येत्यर्थः। विरुद्धयोर्द्वयोरेकत्र संयोगे इव शब्द इत्यन्वयः। अत्र नानाशब्दोत्तरं प्रयुक्त इव शब्दो नानात्वविरुद्धमनानात्वं संगृह्णातीति भावः॥ न त्विति॥ त्वन्मते भेददर्शिन एवानर्थकथनपरेयं श्रुतिः। तथा च इवशब्देन भेदाभेदाग्रहणे यो नानेव पश्यतीत्येवं भेदवद्दर्शिन एवानर्थ उक्तः स्यान्न तु वस्तुतो भेददर्शिन इति परानिष्टार्थः स्यादित्यर्थः॥ द्वितीयेति॥ सर्वस्यापि जडाजडस्य शरीरतया ब्रह्मकोटौ निविष्टत्वात् द्वितीयं नास्तीत्यर्थः। अविद्यमानस्य जगदभावस्य॥ अभिनिवेशेति॥ यथा मिथ्याभूतेऽनास्था एवं जगत्यप्यनास्था कार्येत्यर्थः। स्वोत्प्रेक्षिता एव पक्षा आहुरित्यन्यापदेशेनोक्ता इति संप्रदायविदः। तत्र द्वितीयपक्षे "नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिका" इति वचनात् उपासनार्थत्वमयुक्तम्। तथात्वे सृष्ट्यादिवाक्यानामपि तथात्वोपपत्त्या

(प्रकाश:)
स्वोक्तार्थे तात्पर्याभावापत्तेरित्यस्वरसो द्रष्टव्यः। तृतीयपक्षेऽपि मिथ्यात्वप्रतिपादनं विनापि असारत्वादिज्ञापनेनापि अभिनिवेशाभावस्सिध्येदित्यस्वरसो द्रष्टव्य इत्याहुः।

॥ नेहनानेति श्रुत्यर्थ विवरणम्॥

## ७. यत्र त्वस्येति श्रुत्यर्थविवरणम्

नापि ''यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'' इति श्रुतिस्तत्र मानम्। अत्र हि पूर्वत्र ''स यथा सैन्धवखिल्य'' इत्यादिना सैंधवखिल्यस्य समुद्र इव विज्ञानघनजीवस्य ब्रह्मणि स्थितिर्मोक्षे इति स्वमतमुक्तम्। न ह्यत्रोदकराशिस्समुद्रः, किं तु तटाकादिवत्तदाश्रयः खातो वरुणो वा, पूर्वत्र ''स यथा सर्वासामपां समुद्र एकायनम्'' इत्युक्तेः। न चाऽऽप एवाऽपामयनम्। न चेश्वरस्थानीयाभ्यां खातवरुणाभ्यां सैंधवखिल्यस्याभेदः। नापि पूर्वमुक्तस्थानीयाभिरद्भिः। एतच्च जीवेशभेदवादे वक्ष्यते। उक्तं च– ''समुद्रजलस्थानीया मुक्ता बहवः एकस्वभावा वरुणवदपां खातवद्वा अन्ततो पारो भगवानि''ति। एवं श्रुतिः स्वमतमुक्त्वा ''अविनाशी वा अरे अयमात्मानुच्छित्तिधर्मे''ति वाक्ये अविनाशीत्यनेनात्मनाशो मोक्ष इति बौद्धमतमनुच्छित्तिधर्मेत्यनेनाशेषविशेषगुणोच्छेदो मोक्ष इति वैशेषिकमतं च निरस्याद्वितीयचिन्मात्रावशेषो मोक्ष इति मतेऽनिष्टं प्रसंजयितुं ''यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती''– त्यादिना प्रसंगांगव्यतिरेकव्याप्तिमुक्त्वा ''यत्र त्वस्ये''त्यादिना यत्र येषां मते त्वात्ममात्रावशेषः, तत् तर्हि केन कं पश्येत् न केनापि किंचित्। तथा चेष्टस्य रूपादेरीश्वरस्य स्वस्य चाज्ञानादन्धादेरिवातिदुःखं मोक्षे स्यादित्यनिष्टप्रसंगोऽत्राभिप्रेतः।

उक्तं हि महाभारते– ''मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेदि''ति। अन्यथा न विद्यते उच्छित्तिर्येषां ते अनुच्छित्तयः, अनुच्छित्तयो धर्मा यस्यासावनुच्छित्तिधर्मेति धर्मानुच्छित्त्युक्तिविरोधः स्यात्, अनुच्छित्तिधर्मो यस्येति विग्रहे च अविनाशीत्यनेन पुनरुक्तिः। अनुच्छित्तिरित्येतावतैव पूर्णत्वेन धर्मशब्दवैयर्थ्यं च। यत्र हि द्वैतमिवेत्यत्र इवशब्दस्तु द्वैतस्य परमते मिथ्यात्वात् परीत्या

चापादनीयत्वादल्पत्वाद्वा पुराणे ''दशरात्रैर्भुक्तमिव न सम्यक्स्वल्पभोजना'' दिति। लोके च अल्पज्ञे अयं विद्वानिवेति प्रयोगाच्च। ''इवोपमायां स्वल्पार्थे'' इत्यमरोक्तेः, ''उपमार्थे तथाल्पत्वे इव शब्दः प्रयुज्यत इति वचनाच्च। अन्यथा वाक्यशेषे सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेदेति सर्वाधारत्वोक्ति स यथा दुंदुभेर्हन्यमानस्य न बाह्यान् शब्दानिति स यथार्द्रेन्धनाग्नेरभ्याहितस्य पृथग्धूमा इति च भिन्नानां समसत्ताकानां च दुन्दुभितच्छब्दाग्निधूमादीनां दृष्टान्तानामुक्तिश्चायुक्ता स्यात्। न हि दुंदुभ्यादौ तच्छब्दादिरध्यस्तः, किं तु तदधीनः। अन्ये तु मोक्षे देहेन्द्रियादिहीनस्य केवलस्यात्मन एव भावात् सर्वविषयज्ञाननिषेधकमिदं वाक्यं न तु प्रपंचमिथ्यात्वपरमित्याहुः।

यत्र त्वस्येति श्रुत्यर्थः।

## न्यायामृततरङ्गिणी

।। यत्र त्वस्येति ।। ननु बृहदारण्यके चतुर्थे प्रपाठके काण्वानां यत्र वा अस्येति श्रुतिपाठस्य सत्त्वेपि यत्र त्वस्येति पाठो नास्ति। अविनाशी वा इत्यादिवाक्यं च नास्ति। सैंधवखिल्यवाक्ये समुद्रपदं च नास्ति। माध्यंदिनानां तु यत्र त्वस्येति वाक्यसत्त्वेपि तत्राविनाशीत्यादिवाक्यं समुद्रपदं च नास्ति। षष्ठे प्रपाठके काण्वानां माध्यंदिनानां च यत्र त्वस्येति वाक्यपाठसत्त्वेपि तन्निकटेऽविनाशीत्यादिवाक्यसत्त्वेपि तत्पूर्वखंडिकायां स यथा सैंधवघनोनंतरेति पाठो नास्ति समुद्रपदं च नास्ति। माध्यंदिनानां तु यत्र वा अन्यदिव स्यादित्यादिपाठसत्त्वेन यत्र यत्र हि द्वैतमिवेत्यादिपाठश्च नास्ति तत्किमत्र वाक्यमुदाह्रियत इति। उच्यते। समानार्थक-सर्वमंत्रोदाहरणम्। यत्र यावानंशो नास्ति तत्र तावानुपसंहरणीयः। वस्तुतः षाष्ठं वाक्यमुदाहरणम्। काण्वपाठे तत्राल्पस्यैवोपसंहरणीयत्वात्।

ननु प्रव्रजिष्यता मैत्रेय्यै बहुधनं दित्सता याज्ञवल्क्येन धनेनामृतत्वमस्ति किमिति पृष्टवतीं मैत्रेयीं प्रति पृथिवीपूर्णेनापि धनेनामृतत्वं नास्तीति प्रतिब्रुवता यदेव त्वं वेत्थ तदेव मे ब्रूहीति मैत्रेय्या पार्थ्यमानेन प्रश्नानुमोदनपूर्वकं व्याख्यास्यामीति प्रतिज्ञाय 'आत्मनि विज्ञात इदं सर्वं विदितमि'त्युक्तम्। तत्र ननु कथमन्यस्मिन्ब्रह्मणि विदितेऽन्यद्विदितं भवतीत्याशंकायां 'ब्रह्म तं परादादित्यादि इदं सर्वं यदयमात्मे'त्यंतेन सर्वस्य ब्रह्मात्मकत्वमुक्तम्। तच्च कथं

(तरङ्गिणी)

जानीयामिति जिज्ञासायां स्थित्युत्पत्तिप्रलयेषु यद्व्यतिरेकेण यन्नोपलभ्यते तत्तदात्मकमिति न्यायमभिसंधाय चेतनाचेतनात्मकानेकविशेषात्मकप्रपंचस्य स्थितौ ब्रह्मव्यतिरेकेणानुपलंभं निदर्शयितुं दुंदुभिशंखवीणाख्यदृष्टांतत्रयमुक्तम्। उत्पत्तौ निदर्शयितुं आर्द्रैधनाग्निधूमदृष्टांतः। प्रलये तन्निदर्शयितुं समुद्रदृष्टांत उक्तः। ब्रह्मविदां ब्रह्मविद्यानिमित्तकाविद्यानिरोधरूपोयमात्यंतिकप्रलय इति सदृष्टांतमुपपादयितुं सैंधवखिल्यखंडिकोक्ता। यथा उदकस्यैव भौमतेजः संबंधात् खिल्यभावः तदपगमे पुनरुदकभाव एव एवमात्मनो भूतसंबंधात्खिल्यभावस्थानीयः संसारः भूतविनाशे सति नश्यति। तदनंतरं ममेदं धनमिदं क्षेत्रमित्यादिभ्रांतिर्नास्तीति न प्रेत्यसंज्ञास्तीत्यनेनाभिहिते विज्ञानघनस्य कथं संज्ञा नास्तीत्युच्यत इति शंकमानां मैत्रेयीं प्रति न मयाज्ञानसामान्या भाव उच्यते अपि तु रूपादिदर्शनाभाव उच्यते इत्युत्तरयितुं यत्र हि द्वैतमिव भवतीत्यादिना संसारदशायां रूपादिद्वितीयवस्तुसद्भावेन तद्विषयकज्ञानमस्ति ब्रह्मभूयं प्राप्तस्य तु द्वितीयवस्त्वभावान्न तद्गोचरज्ञानमस्तीति प्रतिपादयितुं 'यत्र वा अस्य सर्वमात्मैवाभूदित्यादि' वाक्यमुक्त्वा तत्समानस्थानतया षष्ठस्याप्येवमेव तात्पर्यं वर्णनीयम्। माध्यंदिनानामप्येवमेव। तस्माच्चतुर्थे काण्वपाठे यत्र वा अस्येति वा षष्ठे यत्र त्वस्येति वा माध्यंदिनपाठे षष्ठचतुर्थयोर्यत्र त्वस्येति वाक्यं द्वितीयमात्रनिषेधे मानमित्याशंक्य श्रुत्यर्थमाह।

॥अत्र हीति॥ षष्ठे प्रपाठक इत्यर्थः ॥पूर्वत्रेति॥ 'यत्र त्वस्येति वाक्यगर्भित यत्र हिद्वैतमिवेति खंडिकातः पूर्वायां स यथा सैंधवघन इत्येतस्यामित्यर्थः। इत्यादिना समानार्थायां कंडिकायामिति शेषः। 'स यथा सैंधवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायैव स्यात्। यतो यतस्त्वाददीत लवणमेव एवं वा अरे इदं महद्भूतमनंतमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति' सहोवाच याज्ञवल्क्य इत्येतत्खंडिकास्थाने पठितायां स यथा सैंधवघनोनंतरोऽबाह्यः कृत्स्नो वसथ त एवं वा अरे अयं बाह्यः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति स्थितिरुक्तेत्यर्थः ॥विज्ञानघनस्येति॥ प्रज्ञानघनस्येत्यर्थः। ननु सैंधवघनखंडिकायां समुद्रपदं नास्ति तत्कथं समुद्र इत्यादि व्याख्यानमिति मैवं एवं मन्यते सैंधवखिल्य-खंडिकाव्यवहितपूर्वखंडिकायां स यथा सर्वासामपां समुद्र एकायनमित्युक्तत्वेन अब्विकारस्य सैंधवखिल्यस्य समुद्रायनत्वाभिज्ञानात् अब्रूपसैधवघनाधारतयाभिधीयमानमुदकमपि समुद्र इति प्रत्यभिज्ञायते। तत्समानार्थतया सैंधवघनखंडिकायामपि तदुपसंहर्तव्यम्। तथा च श्रुत्यंतरं— 'यथा नद्यः स्यंदमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छंति नामरूपे विहाय। तथा

(तरङ्गिणी)

विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं इति। नन्वत्र श्रुतौ सर्वासामपां समुद्र एकायनमित्यत्रापि समुद्रशब्देन जलराशिरेवोच्यते। जलराशिं प्राप्तानां नद्यादीनां च तेन सहाभेद एव च प्रत्यक्षसिद्धस्तत्कथमुच्यते ब्रह्मणि स्थितिरित्यत आह ॥ न हीति॥ अत्र सैंधवखिल्यवाक्ये। समुद्रपदसमानार्थोदकपदेन जलराशिर्नोच्यत इत्यर्थः। ननु चंद्रोदयेन समुद्रो वर्धते समुद्रे स्नायादित्यादिषु समुद्रशब्दस्य जलराशौ प्रयोगदर्शनादत्रापि समुद्रपदेन जलराशिरेव ग्रहीतुं युक्त इत्यत आह ॥ पूर्वत्रेति॥ नन्वपामयनत्वेन निर्दिष्टस्यापि समुद्रस्य कुतः खातादिरूपत्वमत आह ॥ न चेति॥ समुद्रो वर्धत इत्यादौ वृध्यादेः खातादावसंभवात्समुद्रशब्दस्य जलराश्यर्थत्वमिति भावः। समुद्रशब्दस्य खाताद्यर्थे प्रकृतोपयोगमाह ॥ न चेति॥ एवं श्रुतिरिति॥ सैंधवघनखंडिकया संपूर्णयेत्यर्थः ॥ अविनाशीति॥ सैंधवघनखंडिकाऽव्यवहितोत्तरखंडिकायां स होवाच मैत्रेयि 'अत्रैव मा भगवान्मोहांतमापीपन्न वा अहमिमं विजानामी'ति सहोवाच न वा अरेऽहं मोहं विजानाम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मेत्यस्यां न प्रेत्य संज्ञास्तीति पूर्ववाक्येन भूतवियोगानंतरं मुक्तौ ज्ञानं नास्तीति याज्ञवल्क्येनोक्ते किमात्मनाश एव मुक्तिः येन मुक्तावात्मनाशात् ज्ञानाभावः उताशेषविशेषगुणनाश एव अथवाऽद्वितीयचिन्मात्रावशेषो वा मुक्तिः। येन द्वितीयाभावात् ज्ञानाभावः इत्युक्तम्। याज्ञवल्क्येनेत्यादि स्वव्यामोहमाविष्कुर्वतीं मैत्रेयीं प्रति याज्ञवल्क्येन मतत्रयमपि निरस्तमित्यर्थः ॥ पुनरुक्तिरिति॥ अनिच् प्रत्ययानुपपत्तिश्च द्रष्टव्या। धर्मादनिच् केवलादिति केवलोपपदपूर्वात् केवलाच्च धर्मशब्दात्तदुक्तेः। ननूच्छित्तिधर्मा न भवतीति करणे नायं दोषः। न च पुनरुक्तिः। अविनाशीत्यनेन स्वरूपानाश-स्यानुच्छित्तिधर्मेत्यनेन विनाशानाधारत्वस्य चोक्तेरित्यत आह ॥ अनुच्छित्तिरिति॥ बहुव्रीहेस्तु-भयथाप्याश्रयणीयत्वादिति भावः। ननु चिन्मात्रं यद्यद्वैतं स्यात्किमपि न जानीयात्। यत्र द्वैतमिव तत्रैव ज्ञानमिति व्यतिरेकव्याप्तौ व्याप्यविशेषणमिवेति व्यर्थं स्यादित्यत आह ॥ यत्र हीति॥ यत्र द्वैतं तत्र ज्ञानमित्युक्ते परमतेऽप्रसिद्धिः। द्वैतस्य मिथ्यात्वेन सर्वत्र तदत्यंताभावस्यैव सत्त्वेन कस्यापि द्वैतानधिकरणत्वात्। इवेत्यस्योपादाने तु मिथ्याभूतं द्वैतं लभ्यते। तच्च स्वात्यंताभावाधिकरणेप्यस्तीति नाप्रसिद्धिः। नन्वेवं स्वमतेनैकांत्यम्। ज्ञाने सत्यपि मिथ्याद्वैताभावादित्यत आह ॥ पररीत्येति॥ युक्त इति शेषः ॥ अल्पत्वाद्वेति॥ यथाकथंचिद्भेद-सत्त्वमल्पशब्दार्थः। ननु दृष्टांताद्युपपत्तिभिरात्मविज्ञानेन सर्वविज्ञानमाघोषयंती सती चोपनिषत् न द्वितीयं सहते इति कथं तर्कपरा व्याख्यायत इत्यत आह ॥ अन्यथेति॥ द्वितीयमात्रनिषेधपरत्व इत्यर्थः ॥ वाक्यशेष इति॥ सर्वविज्ञानवाक्योत्तरवाक्य इत्यर्थः ॥ सर्वमिति॥ परमात्मव्यति-रेकेणान्यत्रान्याश्रितं सर्वमिति यो वेद तं पुरुषं तदेव सर्वं परादात् द्येत् खंडयेत् एवमेव

(तरङ्गिणी)

ब्रह्म तं परादादित्यादिना ब्रह्म क्षत्रं लोकान्देवान् वेदान् भूतानि सर्वमित्येवमंते वाक्ये बोध्यम्। ब्राह्मणाद्यभिमानिनी देवता परमात्माश्रितां मामन्याश्रितां जानातीति हेतोः क्रुध्यतीत्यर्थः। अन्यथा ब्रह्म तं परादाद्यो ब्रह्म वेदेत्यादिनैव पूर्णत्वेनान्यत्रेति व्यर्थः। अन्याश्रितत्वनिंदया तु ब्रह्माश्रितत्वे तात्पर्यमवसीयत इति भावः।

नन्वात्मनि विज्ञात इदं सर्वं विज्ञातमिति प्रतिज्ञायामात्मव्यतिरेकेण सर्वस्याभाव इत्येवंरूपहेतुं साधयितुं ब्रह्मोपादानकत्वं सर्वस्याभिमतम्। तदुपपादनाय स्थित्यादिषु ब्रह्माश्रितत्वं वक्तुं दुंदुभ्यादिदृष्टांता उक्ता इति द्वितीयाभावे तात्पर्यमवगम्यत इत्यत आह ॥न हीति॥ स यथा दुंदुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद्ग्रहणाय॥ दुन्दुभेस्तु ग्रहणाय दुन्दुभ्याघातस्य वा शद्बो गृहीतः। अत्र परमते स इति दृष्टान्तः लोके यथा दण्डादिना ताड्यमानस्य भेर्यादेः दुन्दुभिशद्बसामान्यात् निष्कृष्टान् तारमन्द्रादिरूपान् बाह्यशद्बान् गृहीतुं न शक्तो भवति। दुन्दुभेस्तु ग्रहणेनाहननमाघातः। आहनविशिष्टस्य दुंदुभेर्ग्रहणे सति शब्दसामान्य-विशिष्टदुंदुभिग्रहणे सति तद्गताः विशेषा गृहीता भवंति। न तु त एव निर्भिद्य ग्रहीतुं शक्यंते। एवं शंखस्य ध्मायमानस्येत्यत्र वीणायै वाद्यमानायै इत्यत्र च बोध्यम्। इत्यादिरूपेणार्थकरणेपि यथा सामान्यं विना विशेषो नावतिष्ठते तथा ब्रह्मव्यतिरेकेण जगन्नास्तीत्येव प्रतीयते न तु ब्रह्मणि तदध्यस्तमिति। दृष्टांतानानुगुण्यात्। सामान्ये विशेषस्यानध्यासात्। भवद्रीत्योत्पत्तिविषये आर्द्रैधनाग्निधूमदृष्टांतवाक्येपि लीलयानायासेन निश्वसितवज्जगत्सर्जनमित्येव प्रतीयते। न तु तत्राध्यासः। भवदभिमते प्रलयविषये अप्समुद्रदृष्टांते वाक्येपि स्पर्शत्व-ग्जिह्वारसाद्यनेकोपन्यासात् त्वग्वेद्यत्वेन स्पर्शस्य त्वगधीनत्वमिवात्माधीनत्वमेवावगम्यत इत्यर्थः।

व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि।
न्यायामृततरंगिण्यां यत्र त्वस्यार्थवर्णनम्॥ यत्र त्वस्येति श्रुत्यर्थः।

## न्यायामृतकण्टकोद्धारः

ननु तथापि यत्रत्वस्येति श्रुतौ मिथ्यात्वं प्रतीयते। तथाहि यत्र यस्यामवस्थायां सर्वं क्रियाफलकारकात्मकं सर्वमात्मैवाभूत् आत्मव्यतिरेकेण नाभूत् तत् तदा तस्यामवस्थायां केन करणेन किं कर्मादिकं पश्येत्? करणादेरभावेन किमपि न पश्यतीति। तथा च कथं मिथ्यात्वे श्रुतिप्रमाणाभाव इति शङ्कते नापीति। कुतो नेतिचेत् पूर्वोत्तरविरोधात्। कस्तर्हि पूर्वोत्तराविरुद्धो वाक्यार्थ इत्यततः तं दर्शयितुमाह अत्रहीति। नन्वत्र समुद्रशब्दस्योदकराशिवाचित्वात् तस्य च सैन्धव खिल्येत्यनेनाभेदात् कथमस्य जीवस्य ब्रह्मणि

(कण्टकोद्धारः)

**स्थितत्वे दृष्टान्तत्वमित्यत आह नहीति। समुद्रशब्देन खातादि ग्रहणे युक्तिमाह पूर्वत्रेति। न च तत्रापां समुद्र एकायनमित्युक्तेः समुद्रशब्देन खातादिरस्तु स्वस्य स्वाश्रयत्वासंभवात्। स यथा सैन्धवेत्यत्र समुद्रशब्देनोदकराशिग्रहणे किं बाधकम्? तत्रैवात्र स्वाश्रयत्वानुक्तेरिति वाच्यम्। एकेन शब्देन पूर्वं बुद्धिस्थितस्यैव ग्रहणे लाघवात् अनुपस्थितग्रहणे गौरवात्। यथा पदे जुहोतीत्यत्रैकहायन्याः पूर्वं प्रकृतत्वात् तत्पदमेव गृह्यते। तद्वदेव। ननु समुद्रशब्देनोदकराशिमेव गृहीत्वा तस्य सैन्धवखिल्याभेद एवात्रोच्यत इत्यङ्गीकारे को दोषः? ऐक्यश्रुत्यानुगुण्येना प्रकृतग्रहणोपपत्तेरित्यत आह एतच्चेति। सर्वासामपां समुद्र एकायनमिति दृष्टान्तेन मुक्तजीवपरमात्म भेद उच्यत इत्यत्र सम्मतिमाह उक्तंचेति। एवं पूर्ववाक्यार्थमुक्त्वा विवक्षितवाक्यार्थं दर्शयितुमाह एवमिति। अत्र श्रुतिरित्यस्याहेत्यनेन संबन्धः। तथा च यत्र त्वस्येत्यत्र न वस्तुस्थितिकथनम्। अपि तु मायिमते ब्रह्ममात्रावस्थानं मुक्तिरितिपक्षे मोक्षे दुःखं स्यादित्यनिष्टप्रसङ्गोऽभिधीयते, न मिथ्यात्वमित्यर्थः। उक्तार्थानङ्गीकारेऽनिष्टप्रसङ्गमाह अन्यथेति। धर्मशब्दवैयर्थ्यं चेति। एवं च शब्दाधिक्यादर्थाधिक्यमिति भावः। ननु यत्रत्वस्येत्यस्य मिथ्यात्वपरत्वानङ्गीकारे यत्र हि द्वैतमिवेति पूर्ववाक्यविरोधः। तत्रैवशब्देन द्वैतमिथ्यात्वप्रतीतेः। यथा रजतमिवेत्युक्ते रजताभावप्रतीतिस्तथा द्वैतमिवेत्युक्तेऽपि द्वैताभावप्रतीतिरित्यत इवशब्दं व्याचष्टे यत्र हि द्वैतमिवेति। तथाचेवशब्दस्य प्रमाणाविरुद्ध पूर्वोत्तराविरुद्धस्वल्पाद्यर्थत्वे संभवति न तद्विरुद्धमिथ्यात्वपरत्वम्। इवशब्दस्य स्वल्पाद्यर्थत्व इव मिथ्यात्वाद्यर्थत्वेऽभिधानाभावादिति भावः। प्रतीतिस्तु तात्पर्यवशादुपपद्यते। न च प्रकृते तात्पर्यज्ञापकं किंचिदस्तीति भावः। अन्यथेति। यत्र हि द्वैतमिवेति वाक्यानुसारेण यत्रत्वस्येत्यस्य मिथ्यात्वपरत्व इत्यर्थः। अन्येत्विति। श्रुतिस्मृतिभ्यां मोक्षे ज्ञानस्य प्रमितत्वात् तन्निषेधपरत्वेन व्याख्यानं प्रमाणविरुद्धम्। जन्यज्ञाननिषेधपरत्वेन व्याख्यानं तु नास्माकं विरोधि। उक्तरीत्या वाक्यार्थे संभवति क्लिष्टकल्पनानुपपत्तेश्चेति।**

**यत्र त्वस्येति श्रुत्यर्थः।**

## न्यायामृतप्रकाशः

सैंधवखिल्यो लवणखंडः। तदाश्रयः उदकराश्याश्रयः। ननु समुद्रशब्दस्य खातवाचित्वमयुक्तं "समुद्रं शोषयिष्यामि पद्भ्यां यातुं प्लवंगमा" इति प्रयोगाज्जलराशिपर एव समुद्रशब्द इत्यतः पूर्ववाक्यविरोधमाह॥ पूर्वत्रेति॥ तथापि समुद्रशब्दस्य जलराशिवाचित्वे किमायातमित्यत आह॥न चेति॥॥नचेश्वरेति॥ तथा च सैंधवखिल्यस्थानीयस्य मुच्यमानजीवस्यापि न खातवरुणस्थानीयेश्वराभेद इत्यर्थः॥नापीति॥ खातादिरूपेश्वरस्थितजलराशिरूपपूर्वमुक्तैरपि नाभेद इत्यर्थः। तथाच सैंधवखिल्यस्य खातादिना तत्रत्यजलराशिना च यथा नाभेदस्तथा जीवस्यापीश्वरेण पूर्वमुक्तैश्चेति भावः॥उक्तं चेति॥ बृहदारण्यकभाष्य इत्यर्थः। अविनाशीवा इत्यादेरर्थो "ज्ञानरूपस्य विज्ञाननाशस्तन्नाश एव तु। इति शून्यमतोच्छित्त्या" इत्याद्यनुव्याख्यानोक्तरीत्या द्रष्टव्यम्॥अन्यथेति॥ एवं यत्र त्वस्येति वाक्यस्य परमतनिरासकत्वाभावे वस्तुस्थितिमात्रकथनपरत्वे चेत्यर्थः॥धर्मेति॥ न हि चिन्मात्रावस्थानरूपे मोक्षे त्वन्मते ऽनुच्छिन्ना धर्माः संतीत्यर्थः॥अनुच्छित्तिरिति॥

(प्रकाशः)
स्वरूपानाशस्तस्येति भावः। ननु तर्हि यत्र हीति वाक्येऽनुपपत्तिरेव भवतां ''यत्र हि द्वैतमिवे''ति श्रुतौ इव शब्दमहिम्ना द्वैतस्यासत्त्वमवगम्यत इति चेत्तत्राह ॥यत्र हीति॥ ॥पररीत्येति॥ ''परसिद्धैर्दूषण''मित्युक्तत्वादिति भावः। तथा च यत्र मिथ्याभूतोपि भेदो भवति तत्र इतर इतरंपश्यतीत्यादि युज्यते यत्र निवृत्ताविद्यावस्थायां सोपि नास्ति तदा केन कं पश्येदित्यादिरर्थो द्रष्टव्यः ॥अल्पत्वादिति॥ यत्र हीति वाक्ये इव शब्दोऽल्पत्वार्थः। अस्वतंत्रो भेदो भवतीत्यर्थः। तदधीनः- दुंदुभ्याद्यधीनः। एवं दार्ष्टांतिकेपीति भावः। केवलस्य अप्राकृतदेहेंद्रियादिमतः ॥ज्ञानेति॥ ॥वृत्तिरूपज्ञानेत्यर्थः॥

यत्र त्वस्येति श्रुत्यर्थविवरणम्।

## ८. न तु तद्द्वितीयमिति श्रुत्यर्थविवरणम्

नापि ''यद्द्वैतं पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्'' इति श्रुतिस्तत्र मानम्। पूर्वत्र हि ''शुक्लस्य नीलस्य पिंगलस्य हरितस्य लोहितस्य पूर्णा'' इति नाडीस्थभगवन्मूर्तीनां विलक्षणरूपत्वमुक्तन्तेन तद्रूपाणामभेदः प्राप्तः तथा तद्वा अस्यैतदाप्तकाममात्मकाममकाममरूपमितिषष्ठ्या रूपरूपिभेदश्च तन्निरासार्थं भगवत् रूपादीनामभेदोऽत्रोच्यते। ''हृदयं ब्रह्मे''ति श्रुत्या तस्यैतदेव निरुक्तं हृदय'' मित्यादिश्रुत्या च ब्रह्मणि प्रसिद्धेन हृदयनिमित्तकेन ''हृदयस्य भवतीति''ति पूर्वत्र हृदयशब्देन निर्दिष्टं ब्रह्म यत्स्वगुणादिकं द्वैतं स्वस्माद् भिन्नं न पश्यति, तद्द्वितीयं नास्ति द्वितीयत्वेन नास्ति, कुतः? पश्यन्सर्वज्ञ एव सन्नीश्वरो न पश्यति। न हि द्रष्टुरीश्वरस्य दृष्टेःविपरिलोपो बाधो विद्यते नित्यत्वात्। यत्तु जीवजडादिकं स्वस्माद्विभक्तं पश्येत्तत्ततोऽन्यदिति श्रुत्यर्थप्रतीतेः पश्यतीति दर्शनकर्तुरेव पदिन्यायेन यद्द्वैतमित्यत्र प्रतियोगित्वेनान्वयात् तद्द्वैतमिति यच्छब्दस्य न तु तदिति व्यवहिततच्छब्दान्वयस्तु ''यत्तदोस्साकांक्षत्वादाकांक्षायाश्च सन्निधानाद्बलीयस्त्वाद्युक्तः। उक्तं हि जैमिनिसूत्रे ''आनन्तर्यमचोदने''ति वार्तिके च–

यस्य येनार्थसंबंधो दूरस्थेनापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥ इति ।

अन्यथा यद्विभक्तं तन्नास्तीत्येतावता पूर्णत्वेन शेषवैयर्थ्यम् । कथं च त्वत्पक्षे चैतन्यमात्रे "न हि द्रष्टुर्दृष्टेर्विपरिलोपः, न हि घ्रातुर्घ्रातेर्विपरिलोपः, न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपः" इत्यादिनोक्तं दृष्टित्वघ्रातित्वस्पृष्टित्वादिकं द्रष्टृत्वादिसम्बन्धश्च। किं च पूर्वत्र "यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तस्संहत्य पक्षौ सल्लयायैव ध्रियते एवमेवायं पुरुष" इति। "तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्, एवमेवायं पुरुष" इति भिन्नस्य नीडश्येन-स्त्रीपुरुषादिदृष्टान्तोक्तिः "प्राज्ञेनात्मना संपरिष्वक्त" इति जीवेशभेदोक्तिश्चायुक्ता स्यादिति।

न तु द्वितीयमस्तीतिश्रुत्यर्थः।

## न्यायामृततरङ्गिणी

॥ यद्वैतमिति ॥ अयं काण्वानां पाठः। माध्यंदिनानां पश्यत्वैतद्द्रष्टव्यं न पश्यतीत्यादिपाठः ॥ तत्रेति ॥ ननु कथं न मानम्। तथा हि शांकरीये बृहदारण्यकभाष्ये उक्तम्। सुषुप्तौ निष्प्रपंच आत्मा भवतीति विक्षिप्य पूर्वोक्तमर्थं पुंजीकृत्य वक्तुं तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णोवेत्यादिचतस्रः खंडिकाः प्रवृत्ताः। तत्र संपरिष्वक्तस्त्रीपुंसदृष्टांतेन प्राज्ञपरिष्वक्तात्मनो बाह्यांतरज्ञानराहित्यमुक्तम्। तच्च चैतन्यात्मस्वभावस्य स्वयंज्योतिषोऽनुपपन्नमित्याशंकायां ज्योतिर्ब्राह्मणे यद्वैतन्न पश्यतीति नव खंडिकाः प्रवृत्ताः। तत्तत्र सुषुप्ते यद्वैतं न पश्यति तत्तत्र सुषुप्ते पश्यन् वै पश्यन्नेव न पश्यति। ननु सुषुप्ते चक्षुरादिकरणव्यापाराभावान्न पश्यतीति जानीम इति चेन्न। हि यस्मात् द्रष्टुः स्वरूपभूतायाः दृष्टेर्ज्ञानस्य विपरिलोपो न विद्यते। यथाग्नेरौष्ण्यं यावदग्निर्भवति तथा यावद्द्रष्टृ दृष्टिर्भवति। कथं तर्हि न पश्यतीत्युच्यते। उच्यते। न तु तत् विषयभूतं द्वितीयमस्ति। यद्विभक्तं पश्येदिति श्रुतौ तथाग्रिमासु न जिघ्रतीत्यादिश्रुतिष्वपि एवं षाष्ठमैत्रेयीब्राह्मणगत यद्वैतं न पश्यतीत्यादिष्वपि द्वितीयमात्रनिषेधादित्याशंक्य श्रुत्यर्थमाह ॥ पूर्वत्रेति ॥ 'ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधाभिन्नस्तावताणिम्ना तिष्ठंति शुक्लस्य नीलस्ये'त्यादिवाक्येषु शुक्लादिभगवद्रूपैर्नाड्यः पूर्णा इत्युच्यत इत्यर्थः ॥ तद्रूपाणामिति ॥ भगवन्मूर्तीनां तन्निष्ठशुक्लादिगुणानां चेत्यर्थः। यत्। द्वैतमिति श्रुतौ पश्यतीति क्रियां प्रति कर्तृत्वेन ब्रह्म परामृश्यत इति वक्तुं ब्रह्मणः प्रकृतत्वमाह ॥ हृदयमित्यादिना ॥

(तरङ्गिणी)

ननु 'आगतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वांच्छोकान् हृदयस्य भवती'ति पूर्ववाक्ये तदा सुप्त्यवस्थायां सर्वशोकरहितो जीवो हृदयस्य परमात्मनः संबंधी भवतीत्यभिप्रायकहृदयशब्देन ब्रह्म प्रकृतमित्यर्थः। ननु हृदयशब्देन कथं ब्रह्मोच्यते। तस्य पुंडरीकाकारमांसपिंडवाचिनस्तत्स्थांतः करणलक्षणस्य शोकशब्दलक्षितकामान्वितत्वादित्याशंक्य तत्र रूढियोगौ दर्शयति ॥ हृदयं ब्रह्मेत्यादिना॥ हृदयं ब्रह्मेत्यारुणेया इत्यत्रोपासनाश्रवणेपि ब्रह्माहैव ता इति वाक्यशेषेण ते उदरहृदये ब्रह्मैवेत्यर्थकेन हृदयस्य ब्रह्मत्वसिद्धिरित्यर्थः। छांदोग्ये 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्य ब्रह्मणो हृदयमिति' निरुक्तं नाम। बृहदारण्यके च एष प्रजापतिर्हृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्र्यक्षरं हृदयमिति हृ इत्येकमक्षरमभिहरंत्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मैस्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेवेति स्वर्गलोकं य एवं वेदेत्यादिना हृदयशब्दस्य ब्रह्मणि रूढेरुक्तत्वात् हरति ददाती या तीति हृदयमिति योगस्यापि सूचितत्वाच्च। नाडीवाक्ये शुक्लादिगुणानां प्रकृतत्वात् यत् द्वैतमित्यत्र यच्छब्देन परामर्श इत्यभिप्रेत्याह ॥ यत् स्वगुणेति॥ स्वं च गुणादिकं चेति विग्रहः। स्वं नाडीस्थभगवन्मूर्त्यादि। गुणादिकं चार्थात्स्वस्यैवेत्यर्थः॥ तदिति॥ न तु तत् द्वितीयमस्तीत्यत्र विद्यमानस्य तच्छब्दस्य यत् द्वैतमित्यत्रान्वितस्य यत्पश्येदित्यत्र यच्छब्देनाप्यन्वय इत्यभिप्रायः। ननु द्वैतशब्दार्थं भेदं प्रति प्रतियोगित्वेन ब्रह्मणोऽनिर्देशात्कथं स्वस्माद्भिन्नमिति व्याख्यानमित्यत आह ॥ पश्यतीति॥

पदिन्यायेनेति। चतुर्थस्य प्रथमपादे विचारितं। पदकर्माप्रयोजकं नयनस्य परार्थत्वात्। ज्योतिष्टोमे एकहायन्या क्रीणातीति सोमक्रयणं प्रकृत्य श्रूयते षट्पदान्यनुनिष्क्रामति सप्तमं पदं गृह्णातीति। एकहायन्या गोः सोमक्रयदेशं प्रति नयने सति सप्तमं पदं यद्देशे भवति तद्देशगतपांसून् गृह्णातीत्यर्थः। तत्र एकहायनीनयने संदेहः किं पदपांसुप्रयुक्तमपि वा उत क्रयप्रयुक्तमेव वा। तदर्थं किं एकहायनी उभयार्था वा क्रयार्थमेव वा। तस्याह्युभयार्थत्वे तत्संस्कारार्थस्य नयनस्यापि तद्द्वारेणोभयप्रयुक्तत्वं स्यात्। क्रयमात्रार्थत्वे तु एकहायन्यास्तन्नयनस्यापि क्रयमात्रार्थत्वेऽपरस्याशेषित्वादप्रयोजकत्वम्। पूर्वपक्षस्तु। उभयार्थैकहायनी। न च तस्याः श्रुत्या क्रयार्थाया उभयार्थत्वे मानाभावः। क्रयार्थाया अपि तस्याः सन्निधानेनानुपपत्त्या च पदपांस्वर्थत्वस्यापि संभवात्। तथा हि। पदपांसूनां पदिनं विनानुपपत्त्या सन्निधानाद्योग्यत्वाच्च एकहायन्येव पदिनी संबध्यते। न च पदपांसूनामप्रयोजनत्वेन शेषित्वासंभवः। यर्हि हविर्धाने प्राचीं प्रवर्तयेतुस्तर्हि तेनाक्षमुपांज्यादिति सोमधारणार्थशकटस्य हविर्धानसंज्ञस्य योऽक्षो

(तरङ्गिणी)

दारुविशेषस्तदंजनं पदपांसुना कर्तव्यमिति तेषां सप्रयोजनत्वात्। तदुक्तं तंत्रसारे।

किं प्राप्तं यद्यपेक्षत्वात् पदस्य पदिनी स्वतः।
योग्यत्वात्सन्निधेश्चेहाप्यंगं स्यादेकहायनी।
श्रुत्यास्याः क्रयशेषत्वेप्यन्यथानुपपत्तितः।
सन्निधेरितरांगत्वमपि स्यात्पशुधर्मवत्।
प्रकृत्यर्थत्वबोधेपि शेषाणामुपदेशतः।
विकृत्यर्थत्वमप्येषामतिदेशेन चेष्यत इति।

सिद्धांतस्तु। श्रुत्या क्रयार्थाया एकहायन्याः संस्कारार्थस्य नयनस्यापि क्रयार्थत्वात्तदनुनिष्पन्नपदपांसूनां नयनं प्रत्यप्रयोजकत्वम्। तदुक्तं तंत्रसारे।

क्रयार्थायाः प्रसंगेन पांसुग्रहणसंभवात्।
न दुर्बलप्रमाणेन कल्पनीया तदर्थतेति।

सन्निधिलक्षणेन दुर्बलप्रमाणेन पदपांस्वर्थत्वमपि नैकहायन्याः कल्पनीयमित्यर्थः। अत्र पूर्वपक्षन्यायेन यथा पदपांसुषु प्रकृतैकहायनी पदिनी संबध्यते तथा द्वैतमित्यत्र प्रतियोगित्वेन प्रकृतं ब्रह्म संबध्यत इत्यर्थः। अत्र पदन्यायेनेत्यादिपाठकल्पनमत एव निरस्तम्।

॥आनंतर्यमिति॥ बहुषु पठितेषु कस्यचिदानंतर्यस्यावर्जनीयत्वादनुष्ठानक्रमार्थत्वेन च तत्सन्निधिविशेषाम्नानार्थवत्त्वोपपत्तेः उभयार्थाकांक्षादिरूपप्रकरणादिकल्पकत्वायोगात् श्रुतिवच्च क्रमस्य साक्षाद्विनियोजकत्वाभावादानंतर्यमंगांगिसंबंधस्यानाक्षेपकमिति जैमिनि सूत्रार्थः। तथा हि तृतीयस्य प्रथमपादेभिहितं हस्ताववनिक्ते उलपराजिं स्तृणातीति दर्शपूर्णमासयोः श्रूयते। तत्र हस्तावनेजनस्य हस्ते संस्कारार्थस्य तद्द्वारा किं स्वाव्यवहितोत्तरभाविउलपराजिस्तरणमात्रं प्रत्यंगत्वं उत स्वानंतरभाविउलपराजिस्तरणादिसर्वपदार्थांगत्वं वेति संशयः। ऊर्ध्वलूतानि उलपानि। सुगंध्यादिकठिनतृणानि। तैस्तृणैर्दीर्घवेदिमध्यस्तरणं उलपराजिस्तरणम्। तत्राव्यवहितानंतरातिक्रमहेतोरयोग्यत्वस्याभावात्किं भावयेदित्युपकार्यापेक्षायां अग्रे पठित एवोपतिष्ठते न पूर्व इति पूर्वत्रासंबंधादव्यवहितोत्तरोलपराजिस्तरणं प्रत्येव हस्तावनेजनमंगमिति प्राप्ते स्तरीतुमित्याद्यश्रवणाद्द्वयोराख्यातयोरेकवाक्यत्वाभावादाकांक्षायोग्यतयोरनंतरस्येव तदुत्तरेषामपि समत्वात्सन्निधिमात्रस्य चोक्तविधयान्यथासिद्धत्वात्साध्यांतराश्रवणेन चावांतरकथंभावरूपावांतरप्रकरणाभावात्सर्वस्योत्तरस्यांगमवने जनमिति सिद्धांतः। तदुक्तं वार्तिके।

(तरङ्गिणी)

न तावदेकवाक्यत्वं दृश्यते योग्यता समा।
अवांतरकथंभावस्तदानीं न च गम्यत इति।

तद्यथास्मिन्नाकाश इत्यादिषु प्रस्तुतस्य सुप्तजीवस्य पुण्यपापानन्वागतिमुक्त्वा सुषुप्ते स्वयं प्रकाशस्यात्मनो रूपादिविशेषदर्शनाद्यभावप्रतिपादनात् जीवपराः खंडिकाः कथं परमात्मनि योज्यंत इत्याशंक्य परपक्षेऽनुपपत्तिमाह ॥ कथं चेति॥ परपक्षे सुप्तौ दृशिघ्रात्यादेर्विलोप एवास्ति। चक्षुरादिकरणकरूपगंधादिविषयोपहितज्ञप्तेरेव दृशित्वघ्रातित्वादियुक्तत्वात्। सुप्तौ च तदभावात्। नित्याखंडचैतन्ये तु तथात्वाभावादिति भावः ॥ द्रष्ट्रादीति॥ न च षष्ट्योः सामानाधिकरण्यमिति वाच्यम्। तव मते कर्त्रर्थतृचोऽविवक्षितार्थत्वेन द्रष्टृदृष्टिशब्दयोरर्थभेदाभावेनान्यतरवैयर्थ्यात्। यथोक्तं त्वदीये बृहदारण्यकभाष्ये। नन्वनित्यक्रियाकर्तृविषय एव तृच् दृष्टो यथाच्छेत्ताभेत्तेत्याशंक्य अपरिलुप्तस्वभावैवात्मनोदृष्टिरतस्तया स्वयंज्योतिः स्वभावया पश्यन्नेव भवति सुषुप्ते इत्यादि। यथादित्यादयो नित्यप्रकाशस्वभावा एव संतः स्वाभाविकेन नित्येनैव प्रकाशेन प्रकाशयंतीत्युच्यंते तथाऽयमप्यात्माऽविपरिलुप्तस्वभावया दृष्ट्या नित्यया द्रष्टेत्युच्यत इति च ॥ यथेत्यादि॥ जीवगतसुषुप्त्यवस्थायाः परमात्माधीनत्वं वक्तुं दृष्टांत उच्यते श्रुतौ तद्यथास्मिन्नित्यादि। सुपर्णशब्देन क्षिप्रगामी श्येनविशेष उच्यते। संहत्य प्रसार्य पक्षौ। सम्यग्लीयतेऽस्मिन्निति सल्लयो नीडं तस्मै। नीडार्थमात्मनैव ध्रियते। नीडे तिष्ठतीति यावत्। एवमेवायं पुरुष एतस्मा अंताय धावति। यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति यथा पक्षी परिपतनजश्रमापनुत्तये स्वनीडमुपसर्पति एवमेव जाग्रत्स्वप्नजश्रमापनुत्तये परमात्मानं धावति प्राप्नोति। अयं पुरुषो जीवः। एतस्मै अंताय स्थानाय सुप्त्य वस्थाप्रदाय परमात्मने यत्र परमात्मनि सुप्तो जीवः।

स्वित्यानंदः परो विष्णुस्तमाप्तः सुप्त उच्यते।
संप्राप्य तमजं जीवः कामयेन्नैव किंचन।
न च स्वप्नसमभ्रांतिज्ञानं याति कदाचन।
सुषुप्तौ च किमुज्ञानान्मुक्तौ प्राप्तो जनार्दनमिति

बृहदारण्यकभाष्योक्तेः। 'तावा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधाभिन्नस्तावताणिम्ना तिष्ठंति शुक्लस्य नीलस्य पिंगलस्य हरितस्य पूर्णा अथ यत्रैनं घ्नती व जिनंतीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदं सर्वोस्मीति मन्यते सोस्य परमो लोकः'। पूर्वत्र परमात्मनो जीवं प्रति स्थानत्वमुक्तमत्र विविच्यते। ता वै शास्त्रांतरप्रसिद्धाः। अस्य सुप्तजीवशरीरस्य। एताः हितनामकाः सूक्ष्माः

(तरङ्गिणी)

शुक्लादिपरमात्ममूर्तिभिः पूरिता नाड्यस्संति तासु नाडीषु कंठदेशे यदा जीवो भवति तदा स्वप्नं पश्यति।

निहितो भगवान्यत्र हिता नाड्यः प्रकीर्तिताः।
नानावर्णो हरिस्तासु नानारूपी व्यवस्थितः।
तासां मध्ये सुषुम्ना च तत्र सुप्तिं व्रजत्ययम्।
ता एव कंठदेशस्था जीवस्तत्र व्यवस्थितः।
स्वप्नान्पश्यति जाग्रद्वद्वयं च प्रतिपद्यते।
अ इत्यादिश्यते विष्णुरविद्या तन्निरीक्षणम्।
तेन स्वप्नानयं पश्येज्जीवो जागरितं तथेति

बृहदारण्यकभाष्योक्तेः। ननु जीवतुल्यः परमात्मा कथं जीवस्याधारः स्यादत उच्यते। परमात्माज्ञाननिमित्तं जीवस्य हननादिकमस्ति। अतो न जीवतुल्यः स इत्यर्थः। जिनंति वशीकुर्वंति। विच्छाययति हस्तिवत् धावति। इवशब्दो हननादेरस्वभावत्वार्थः। अत्राविद्यया परमात्मविषयाज्ञानेन यत्र चेतनसमूहे देवोहमस्मीत्यादि यो मन्यते सः अस्य जीवस्य उत्कृष्टं स्थानं देवाद्युपमा तस्याल्पत्वार्थः इव शब्दः। 'तद्वा अस्यैतदतिच्छंदा अपहतपाप्माभयꣳ रूपं तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंच न वेद नांतरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नांतरं' 'तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकांतरम्'।

जीवाश्रयस्य परमात्मनो महिमा तयोर्भेदश्चात्रोच्यते एतस्य जीवाश्रयस्य परमात्मनः तदेतत्प्रसिद्धं रूपं वै कीदृशं तत्। तदुच्यते। अतिच्छंदाः छंदसामवाच्यम्। छंदःकामोतिगतो यस्मात् तदतिच्छंदम्। छांदसं सकारांतत्वमिति वा। अपहतपाप्म भयरहितम्। तेन प्राज्ञाख्येन भगवद्रूपेण। संपरिष्वक्तः बाह्याभ्यंतरविषयौ न जानाति। तत्र दृष्टांतस्तद्यथा प्रिययेत्यादि। अस्य प्राज्ञस्य एतत् आप्तकामादिकं शोकांतरं शोकेन रहितं रूपम्। 'अत्र माध्यंदिनानामशोकांतरमिति पाठः। तदभिप्रायेण शोकं विना सुरमणादित्यादि भाष्यम्। काण्वानां शोकांतरमिति पाठः। अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा ा अवेदा अत्रस्तेनोऽस्तेनो भवति भ्रूणहाभ्रूणहा चांडालोचांडालः पौल्कसोपौल्कसः श्रमणोश्रमणस्तापसोतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति'। अत्र संगं परमात्मानं प्राप्तस्य मुक्तस्यासंगत्वमुच्यते।

(तरङ्गिणी)

तेनाश्लिष्टस्स्वपुत्राणां दायादानां न वै पिता।
तेषां दुःखाद्दुःखित्वान्न माता लोकमान्यपि।
अलोकमानान्नो लोको देवोपि स्वाधिकारतः।
वर्षणादेर्व्युत्थितत्वान्न देवो देवमान्यपि।
अवेदमानान्नो वेदः पापी पापफलाप्ययात्।
अपापः श्रमणश्चापीत्यादि

बृहदारण्यकभाष्योक्तेः। अत्र परमात्मप्राप्तौ सत्यां पिताऽपिता भवति देवाः न दीव्यंति संसारवत्। वेदाश्च तथा। चांडालः शूद्रात् ब्राह्मण्यामुत्पन्नः। पौल्कसः शूद्रात् क्षत्रियायामुत्पन्नः। श्रमणः श्रमकरकर्मयुक्तः। हि यस्मात् तदा मुक्तौ सर्वान् शोकान् तीर्णः सन् हृदयस्य परमात्मनः संबंधी भवति अतो युज्यते तस्यासंगत्वम् एवं भूतः परमात्मा यज्जानाति तदस्ति यन्न जानाति तन्नास्तीत्येषोऽर्थो यद्वैतं न पश्यतीत्यादावुच्यते। तदुक्तं तत्रैव। यत्किञ्चिद्वस्तु भगवता न दृष्टं तन्नास्त्येव विद्यमानं सर्वं पश्यत्येवेति। तथा च श्येनाकाशादिस्थानीयस्य जीवसंसारस्य सत्यत्वमेव प्रतीयत इति सर्वसामंजस्येन वाक्योपपत्तौ व्याहत्यादिदोषयुक्त-द्वितीयमात्रनिषेधपरत्वायोगादित्यर्थः।

यद्वैतं नेति सुवचः शेषार्थग्रहणे परे।
चतुष्पदीमादिशत त्रिपदीमपरे गिरम्।

अत्रैव प्रकरणे यत्र हि द्वैतमित्यादौ द्वैतमिति पदस्य श्रवणाच्च।

व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगंयुजि।
न्यायामृततरंगिण्यामर्थो न त्वित्यदः श्रुतेः। न तु तद्द्वितीयमस्तीति श्रुत्यर्थः।

## न्यायामृतकण्टकोद्धारः

ननु तथापि यद्द्वैतं न पश्यतीति श्रुतिर्मिथ्यात्वे प्रमाणम्। तत्र यद्द्वैतं न पश्यति तद् द्वितीयं नास्तीति द्वितीयाभावप्रतीतेरित्यत आह नापीति। कुतो नेति चेत् आन्तरानुपपत्तेर्बाह्यानुपपत्तेश्च। तत्प्रदर्शनं च श्रुतिव्याख्यानावसर एव भविष्यति। तर्हिकोऽस्य वाक्यस्यार्थ इति चेत् भगवद्रूपाभेद एवेति गृहाण। ननु सोऽप्रसिद्ध इत्यत आह। पूर्वत्र हीति। तेन विलक्षणरूपवत्वेन। न च द्रव्यत्वपृथिवीत्वादिविलक्षणधर्माणामिव विलक्षणरूपाणामप्येकत्र समावेशः किं न स्यादिति वाच्यम्। विलक्षणशब्देन विरुद्धत्वस्य विवक्षितत्वात्।

(कण्टकोद्धारः)

रूपाणां व्याप्यवृत्तित्वेन विरुद्धरूपाणामेकत्रासमावेशात्। षष्ठ्चेति। यद्यपि सम्बन्ध एव षष्ठी। तथापि भिन्नयोरेव संबन्ध इति षष्ठ्या भेदप्रसक्तिः। ननु तथापि यद्द्वैतं न पश्यतीत्यत्र कर्तुरप्रतीतेः कथमन्वय इत्यत आह– हृदयं ब्रह्मेति। हृदयस्य भवतीति पूर्ववाक्ये हृदयशब्दनिर्दिष्टं ब्रह्मैव कर्तृ। अतो नान्वयानुपपत्तिः। न च हृदयशब्दः कथं ब्रह्मवाचीति वाच्यम्। श्रौतप्रयोगेन योगव्युत्पत्त्या वेत्याशयेनोक्तं हृदयमिति। ननु यद् द्वैतं न पश्यतीत्यत्र द्वैत प्रतियोगित्वेन ब्रह्मण एव कुतोऽन्वयः? जगत एव प्रतियोगित्वेनान्वयः किं न स्यात्? तथाच यद् जगद्द्वैतं न पश्यति तद्द्वैतं नास्तीति सुलभैव मिथ्यात्वप्रतीतिरित्यत आह पश्यतीति। तथा च दर्शनकर्तृत्वेन ब्रह्मणः सन्निहितत्वात् जगतस्त्वसन्निहितत्वात् सन्निहितपरित्यागे कारणाभावात् ब्रह्मण एव द्वैतप्रतियोगित्वेनान्वयोपपत्तिरिति भावः। यदिन्यायेनेति। अत्र यदिन्यायेनेति पाठो दृश्यते। यदिन्यायस्त्वित्थम्–

यदि न स्यात् ततः किं स्यात्।
स्याच्चेत् तन्नास्तिको हतः॥ इति।

अस्यार्थः। यदि सन्निहितं प्रधानं वा न स्यात् ततो दूरस्यासन्निहितग्रहणेऽङ्गानुष्ठाने वा किं स्यात्? न कोऽपि दोष इत्यर्थः। स्याच्चेत् सन्निहितं लभ्यते चेत् तदा तत्परित्यागी असन्निहितग्राही हतः। यद्वा स्याच्चेत् प्रधानं तदाङ्गाननुष्ठाता नास्तिको हतः। निरङ्गकर्मानुष्ठानेन फलाभावात् फलशून्यो जायत इति। तदिह दर्शनकर्तृत्वेन ब्रह्मणः सन्निहितत्वात् तस्यैव द्वैतप्रतियोगित्वेनान्वयः। नेतरस्य। असन्निहितत्वादिति। यद्यपि पदिन्यायः संभवति। तथापि पदिन्यायस्य मीमांसायां प्रसिद्धत्वात् सार्वजनीनत्वाद् अनुष्ठानसिद्धत्वाच्च स एवादर्तव्य इति भावेन पदिन्यायेनेति पठन्ति।

पदिन्यायस्त्वित्थम्। चतुर्थाध्याये प्रथमपादे चिन्तितम्। पदकर्माप्रयोजकं नयनस्य परार्थत्वात्। ज्योतिष्टोमे सोमक्रय आम्नायते। एकहायन्या क्रीणातीति। सोयमेकहायनी गौर्यदा सोमं क्रेतुमानीयते तदाध्वर्युस्तस्याः पृष्ठतोऽनुगच्छति। एतदप्याम्नातम्। षट्पदान्यनुनिष्क्रामतीति। ततः सप्तमपदे हिरण्यं निधाय हुत्वा तत्पदगतरजो गृह्णीयात्। एतदपि श्रुतम्। सप्तमं पदमध्वर्युरञ्जलिना गृह्णातीति। तदेतद्रजः संगृह्य हविर्धानयोः शकटयोरक्षे रजसा युक्तमञ्जनं प्रतिक्षिपेत्।

एतदपि श्रुतम्। यज्ञं वा एतत् संभरन्ति यत् सोमक्रयण्यै पदमिति प्रस्तुत्य यर्हि हविर्धाने प्राचीं प्रवर्तयेयुस्तर्हितेनाक्षमुपाञ्ज्यात् इति। तत्र संशयः। किं यदेतदक्षाभ्यञ्जनं सप्तमपदसाध्यं तदर्थमप्येकहायनीनयनं तेनापि प्रयुज्यते, उत क्रयार्थमेव नयनं तेनैव प्रयुज्यत इति। पूर्वपक्षस्तु सोम क्रयवत् पदकर्माक्षाञ्जनमप्येकहायन्यानयनप्रयोजकम्। सन्निकर्षस्याविशेषात्। सोमक्रयवत् अक्षाञ्जनस्यापि एकहायन्यानयनसाध्यत्वाच्च। न च दध्यानयनमामिक्षया यथा संयुक्तं तथाऽक्षाञ्जनं सोमक्रयण्यानयनेन संयुक्तमिति वाच्यम्। क्रयेपि सोमक्रयण्यानयनसंयोगाभावात्। अथासंयुक्तोऽपि क्रयो गवानयनेन निष्पद्यते तर्ह्यक्षाञ्जनमपि तेन निष्पाद्यत इति समानत्वात्। तस्मात् क्रयवत् पदकर्मापि सोमक्रयण्यानयनस्य प्रयोजकमिति

(कण्टकोद्धारः)

तदपचारे पुनर्गवानयनमिति। सिद्धान्तस्तु। एकहायन्या क्रीणातीति तृतीयाश्रुत्या गोः क्रयार्थता गम्यते। गोद्वारा तदानयनमपि क्रयार्थमेवेति क्रय एवानयने प्रयोजकः। न चैवं पदकर्मार्थित्वं गोर्वा तदानयनस्य वा क्वचित् श्रुतम्। येन तदपि प्रयोजकं स्यात्। यदर्थं द्रव्यं तदर्थस्तत्संस्कार इति गोरूपद्रव्यस्य क्रयार्थत्वे तत्संस्कारस्य नयनस्यापि तदर्थत्वात्। तथा च क्रय एव प्रयोजको, न ह्यक्षाञ्जनमपीति तदपचारे पुनर्नानयनानुष्ठानम्। एतदधिकरणं सप्तमंपदमित्यत्र पदशब्दस्य सन्निधानात् एकहायनीपदविषयकत्वं सिद्धं कृत्वा प्रवृत्तमिति पदिन्यायेनेत्युक्तम्।

ननु यद् द्वैतमित्यत्र यच्छब्दस्य सन्निहितपरित्यागेन व्यवहित तच्छब्दान्वयः कथम्? सन्निहित परित्यागेन दूरस्थग्रहणस्याव्यवहित न्यायविरुद्धत्वादित्यत आह यद् द्वैतमिति। उक्तं हीति। तृतीयाध्याये प्रथमपादे चतुर्दशाधिकरणे निर्णीतम् आनन्तर्यमचोदनेति। दर्शपूर्णमासप्रकरणे श्रूयते। हस्ताववनेनिक्ते उलपराजिं स्तृणातीति। वेद्यामास्तरितुं संपादितस्तृणस्तम्ब उलपराजिः। तत्र हस्तावनेजनं हस्तसंस्कारार्थम्। लिङ्गात्। करिष्यमाण कर्माङ्गं सत् अनन्तरपठितः उलपराजिः स्तरणमात्रस्याङ्गमुत सर्वकर्माङ्गमिति संशयः। पूर्वपक्षस्तु। हस्तशुद्धिदर्भास्तरणवाक्ययोर्नैरन्तर्येण पठितत्वात् क्रमप्रमाणेन हस्तशुद्धिरास्तरणमात्रस्याङ्गम्। न च महाप्रकरणेन करिष्यमाणसर्वकर्माङ्गमिति वाच्यम्। अवान्तरप्रकरणेनास्तरणाङ्गत्वात्। तस्य तदपेक्षया प्राबल्यादिति। सिद्धान्तस्तु। अवनेजनं हस्तसंस्कारः। संस्कृतौ च हस्तौ सर्वानुष्ठानयोग्यावित्येतादृश सामर्थ्यं लिङ्गम्। प्रकरणं च दर्शपूर्णमासयोः स्पष्टम्। अतः प्रबलाभ्यां लिङ्गप्रकरणाभ्यां क्रम बाधात् सर्वशेषो हस्तशुद्धिः। न च वाक्यात् हस्तावनेजनस्यास्तरणार्थत्वमिति वाच्यम्। यच्छब्दाद्युपबन्धरहितस्यैकवाक्यत्वाभावात्। न चावान्तरप्रकरणस्य महाप्रकरणापेक्षया प्रबलत्वात् तेन हस्तावनेजनस्योलपराज्यास्तरणार्थतेति वाच्यम्। प्रकरणापेक्षया लिङ्गस्य प्रबलत्वात्। पूर्वत्रोत्तरत्र चोलपराज्यास्तरणाङ्गाविधानेनावान्तरप्रकरणाभावाच्च। एवं च यथा सन्निहितमास्तरणं परित्यज्य लिङ्गप्रकरणाभ्यां करिष्यमाण सर्वकर्मार्थिता तथा यच्छब्दस्य सन्निहितपरित्यागेनाकाङ्क्षावशात् व्यवहित तच्छब्दान्वयः। उक्तेऽर्थे वार्तिकसंमतिमाह वार्तिके चेति। यस्य पदस्य येन दूरस्थेनार्थसंबन्धोऽर्थानां परस्पराकाङ्क्षत्वेनान्वयः तस्य तेन दूरस्थेनापि स संबन्धः स्वीकर्तव्यः। अर्थतोऽसमर्थानां परस्परानाकांक्षार्थकानां पदानामानन्तर्यं सन्निधानमन्वये कारणं न भवतीत्यर्थः। अन्यथेति। यदि द्वितीयाभाव मात्रमत्र प्रतिपाद्येतेत्यर्थः। अत्राद्वितीयचिन्मात्र परत्वाङ्गीकारे एतद्वाक्यस्यावान्तरवाक्यविरोध इत्याह कथंचेति। नकेवलमेतावत्। एतत्पूर्ववाक्यविरोधश्चेत्याह किंचेति। पूर्ववाक्ये जीवेशभेदस्योक्तत्वात् अत्रैक्यपरत्वाङ्गीकारे तद्विरोध इति भावः।

न तु तद्द्वितीयमस्तीति श्रुत्यर्थः।

## न्यायामृतप्रकाशः

यत्तु जीवजडादिकं स्वस्माद्विभक्तं पश्येत्ततोऽन्यदित्युक्ते स्वस्मादविभक्तमेव विभक्तत्वेन पश्यति भ्रांत्येति किं न स्यादित्याशंकावारणाय न हि द्रष्टुरीश्वरस्य दृष्टेर्विपरिलोपो विद्यते नित्यत्वादित्युक्तमिति योज्यम्।

(प्रकाशः)

ननु द्वैतशब्दार्थभेदं प्रति प्रतियोगित्वेन ब्रह्मणोऽनिर्देशात्कथं स्वस्माद्भिन्नमिति व्याख्यानमित्यत आह ॥ पश्यतीति दर्शनकर्तुरेवेति॥ दर्शनकर्तृत्वेन प्रकृतस्यैवेत्यर्थः ॥ पदिन्यायेनेति॥ चतुर्थाध्याये प्रथमपादे चिंतितं ''पदकर्माप्रयोजक''मित्यत्र। ज्योतिष्टोमे ''अरुणयैकहायन्या पिंगाक्ष्या गवा सोमं क्रीणाती''तिसोमक्रयणं प्रक्रम्य श्रूयते ''षड्पदान्यनु क्रामति सप्तमं पदमध्वर्युरंजलिना गृह्णाती''ति एकहायिन्याः गोः सोमक्रयणदेशं प्रति नयनकाले षड्पदक्रमणानंतरं सप्तमं पदं यद्देशे भवति तद्देशगतपांसुं अध्वर्युरंजलिना गृह्णातीत्यर्थः। तत्र संदेहः एकहायन्याः गोर्नयनं पदपांसुग्रहणार्थमुत सोमक्रयणार्थमिति। पूर्वपक्षस्तूभयार्थमिति। न च श्रुत्या सोमं क्रीणातीति क्रयणार्थत्वस्यैव श्रवणात् उभयार्थत्वे मानाभावः। क्रयणार्थस्यापि तस्याः नयनस्य संनिधानेनानुपपत्त्या च पदपांसुग्रहणार्थत्वस्यापि संभवात्। तथाहि पदपांसुग्रहणं तावदावश्यकं ''यर्हि हविर्धाने प्राचीं प्रवर्तयेयुस्तर्हि तेनाक्षमुपांज्यादि''ति सोमधारणार्थस्य शकटस्य हविर्धानसंज्ञिकस्य योऽक्षो दारुविशेषः तदंजनं पदपांसुना कर्तव्यमिति विधानात्। पदपांसूनां च पदिनीं पदवतीं पदगताविति धातोर्गमनवतीं गोव्यक्तिं विनानुपपत्तेर्नीयमानतया सन्निधानाद्योग्यत्वाच्च प्रकृता एकहायन्येव पदिनी संबध्यते तस्मादुभयार्थमेव एकहायन्या नयनमिति। सिद्धांतस्तु प्रधानक्रयणार्थमेव नयनं पदपांसुग्रहणं त्वनुषंगसिद्धं अतो न तदर्थत्वं तस्य कल्प्यम्। यथोक्तं तंत्ररत्ने

''क्रयार्थायाः प्रसंगेन पांसुग्रहणसंभवात्।
न दुर्बलप्रमाणेन कल्पनीया तदर्थते''ति।

एवं चात्र पदिन्यायेनेत्यत्र पूर्वपक्षन्यायोत्राभिप्रेतः यथा पूर्वपक्षन्यायेन पदपांसुषु प्रकृता एकहायनी पदिनी संबध्यते एवमिहापीत्यर्थः।

यद्वा पदिन्यायेनेत्यस्य पदसंबंधिन्यायेनेत्यर्थः। यथाज्योतिष्टोमे एकहायन्याः गोः सोमक्रयणार्थं नयनकाले आम्नायते ''पदे जुहोती''ति सामान्येन श्रवणाद्यस्यकस्यचित्पशोः पदे जुहोतीति शंकायां प्रकृतत्वादेकहायनीपदमेवात्रविवक्षितं नान्यस्येति निर्णीतमस्ति तन्न्यायेनेहापि दर्शनकर्तृत्वेन पूर्वप्रकृतो भगवानेव यद्वैतमित्यत्र भेदप्रतियोगित्वेनान्वेतीत्यर्थः। अत्र पदन्यायेनेति पाठकल्पनं पदिन्यायार्थाज्ञानमूलकमित्युपेक्ष्यम्। ननु भवत्पक्षे यच्छब्दस्य व्यवहितान्वयकल्पनमापद्यते। तथा च सन्निध्यभावो दोष इत्यत आह ॥ यद्वैतमिति यच्छब्दस्येति॥

आनंतर्यमिति॥ तृतीयाध्याये प्रथमपादे चिंतितम्। दर्शपूर्णमासयोः श्रूयते ''हस्ताववनेनिक्ते उलपराजिं स्तृणाती''ति। द्वौ हस्ताववनेनिक्ते छांदसो लिंगव्यत्ययः। अवनेनिक्तौ प्रक्षालितौ कुर्यादिति यावत् अनंतरमुलपराज्यास्तरणं कार्यमित्यर्थः। वेद्यामास्तरितुं संपादिततृणस्तंब उलपराजिः। एवं च यज्ञेहस्तप्रक्षालनानंतरं वेद्यामुलपराजिस्तरणं क्रियतेऽनंतरं कर्मकलापः क्रियत इत्यस्ति क्रमः। तत्र हस्तावनेजनमुलपराज्यास्तरणांगं उत करिष्यमाणसकलकर्मांगमिति संशये हस्तावनेजनानंतरमुलपराज्यास्तरणविधानेनानंतर्य-लक्षणात्क्रमादुलपराज्यास्तरणांगमेवेति प्राप्ते सिद्धांतितं जैमिनिना ''आनंतर्यमचोदने''ति। आनंतर्यं सान्निध्यं

(प्रकाशः)
अंगांगिभावेनान्वयस्य नाक्षेपकम्। अन्यथा गिरिर्भुक्तमग्निमाननेन।

अंबरमंबुनि पत्रमरातिः पीतमहीशगणस्य ददाह।
यस्य वधूस्तनयं गृहमब्जा पातु स वः शिवलोचनवह्निः

इत्यादावपि पदानामानंतर्यसत्त्वेनांगांगिभावेनान्वयबोधप्रसंगादिति सूत्रार्थः। एवं चानंतर्यरूपक्रमस्याप्रयोजकत्वाद्धस्तानेजनं करिष्यमाणोलपराज्यास्तरणादिसमस्तकर्मांगमेवेति संबंधो योग्यः स आश्रयणीयः ॥ अर्थत इति॥ परस्परान्वयायोग्यार्थानां गिरिर्भुक्तमित्यादिपदानामित्यर्थः ॥अन्यथेति॥ अस्य वाक्यस्याद्वैतपरत्व इत्यर्थः। चैतन्यमात्रे ज्ञानस्वरूपमात्रे ॥दृष्टित्वेत्यादि॥ दृष्टित्वादिरूपज्ञानगतजातिविशेषाणाम्। ज्ञानमात्रस्वरूपेनिर्धर्मके ब्रह्मण्यभावादिति भावः ॥द्रष्टृत्वादीति॥ असंगे चैतन्यमात्रे द्रष्टुर्घ्रातुः स्प्रष्टुरित्याद्युक्तो द्रष्टृत्वादिसंबंधोऽयुक्त इत्यर्थः।

॥न तु तद्द्वितीयमस्तीति श्रुत्यर्थविवरणम्।

## ९. वाचारम्भणश्रुत्यर्थविवरणम्

नापि "वाचारम्भणं विकारो नामधेयम्" इति श्रुतिस्तत्र मानम्। वाचारम्भणशब्दस्य मिथ्यात्वे रूढेरभावात्। आरभ्यत इत्यारम्भणमिति योगेऽपि कृद्योगे तृतीयायाः अयोगात्, वाचारब्धकाव्यादेरिव मिथ्यात्वालाभाच्च। वागालम्बनमात्रमिति व्याख्याने अश्रुतकल्पनाद् अक्षरसाम्येन निर्वचनेऽपि मात्रशब्दाश्रवणात्। त्वया नामधेयमित्यस्यापि नाममात्रं ह्येतदिति व्याख्यातत्वेन पौनरुक्त्याच्च। मृत्तिकेत्यत्रार्थविवक्षायामितिशब्दवैयर्थ्याच्च। पदार्थविपर्यासे खल्वत्रेतिशब्दः। स च शब्दप्रकरणे प्रसक्तं शब्दपदार्थकत्वं निवार्यार्थपदार्थकत्वं व्यवस्थापयति यथा "न वेति विभाषे"ति। अर्थप्रकरणे तु शब्दपदार्थकत्वं यथा गौरित्ययमाहेति। उक्तं हि महाभाष्ये– "न वेति विभाषेत्यत्र इति करणः क्रियते सोऽर्थनिर्देशार्थो भविष्यति तद्यथागौरित्ययमाहेति गोशब्दादितिकरणः प्रयुज्यमानः गोशब्दं स्वस्मात्पदार्थात्प्रच्यावयति सोऽस्मात्प्रच्युतश्शब्दपदार्थकस्संपद्यत" इति अत्र च अर्थप्रकरणादेवार्थपदार्थकत्वे सिद्धे किमितिशब्देन ? न चात्रेति शब्दः प्रकारार्थः। प्रकारस्यानुपादानत्वात्। तदुक्तम्—

वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।
पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता ॥

तस्माद्वाचया वागिन्द्रियेणारम्भणम् उत्पादनं यस्य सांकेतिकस्य भाषाशब्दस्य तन्नामधेयं विकारः ''कर्मणि घञ् विकृतं संस्कृतापभ्रंशरूपेण विक्रियमाणत्वात्। मृत्तिकेत्यादिसंस्कृतं नामधेयं तु सत्यं नित्यं ''नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमिति एतत् श्रुतावेवोत्तरत्र सत्यशब्दस्य नित्ये प्रयोगात्। सदाशब्दाद् 'अव्ययात् त्यप्' इति त्यबन्तस्य सत्यशब्दस्य नित्ये प्रयोगसम्भवाच्च। सनातनं सत्यमिति नित्यमेवोच्यते बुधैरिति वचनाच्च। इह विकृतत्वप्रतियोगिन एव सत्यशब्देन विवक्षणीयत्वाच्च। ''टापं चापि हलन्तानां यथा वाचा निशा दिशे''ति वचनाद्वाचारम्भणमितिसमासस्साधुः। तस्मात्तत्साद्दश्यादेकविज्ञानेन सर्वविज्ञाने मृत्पिण्डमृण्मयादिदृष्टान्ताः प्रधानज्ञानादप्रधानज्ञाने संस्कृतापभ्रंशदृष्टान्तः भाषाशब्दज्ञानाद्धि यत्फलं तच्चाधिकं च सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानाद् भवतीति तज्ज्ञो विद्वानित्युच्यते तदर्थं ''यथा सोम्ये''त्यादिकं ''तनूर्वर्षिष्ठे''त्यादिवदनुषंजनीयम्।

कथं च विवर्तपक्षे मृत्पिण्डमृण्मयादिदृष्टान्ताः ? ब्रह्माविद्याविशिष्टं सदुपादानमपीति चेत् न। मुमुक्षुज्ञेयशुद्धब्रह्मज्ञानेनैव सर्वविज्ञानप्रतिज्ञानात्। अन्यथा अविद्याया अपि ''येनाश्रुत''मित्यादिप्रतिज्ञावाक्योक्तज्ञेयकोटित्वापातात्। अनाद्यविद्यादीन् प्रत्युपादानत्वायोगाच्च। उपादानत्वाभिप्रायत्वे मृदा ज्ञातया मृण्मयं विज्ञातं स्यादित्येतावतैव पूर्णत्वेन मृत्पिण्डादिवाक्यत्रये प्रत्येकं श्रुतानामेकशब्दसर्वशब्दानां वैयर्थ्याच्च। न हि सर्वमृण्मयादिकमेकमृत्पिण्डविकारः। नखनिकृन्तनस्यान्त्यावयवित्वेनोपादानत्वस्यैवसंभवाच्च। मृत्त्वे निश्चितेऽपि घटादौ संशयादिदर्शनाच्च । न च घटादेरपि मृद्यध्यस्तत्वाद्विवर्तपक्षेऽपि तद्दृष्टान्तो युक्तः। मृत्वज्ञानेऽपि घटाद्यनिवृत्तेः व्यवहाररूपस्य घटादेरपि सत्त्वात्। तात्त्विकविवक्षायां तु मृदोऽपि सत्त्वोक्त्ययोगाच्च। रूप्यं तत्त्वतो ज्ञातं भवति। सा हि तस्य तत्त्वम्। एवं ब्रह्मज्ञानात्सर्वं तत्त्वतो ज्ञातं सर्वसाधारण्यात्। स्वस्य स्वहेतुत्वयोगाच्च। येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति श्रुतिगताश्रुतादिपदायोगाच्च। किं चासाधरणं स्वरूपमसाधारणधर्मो वा तत्त्वम्,

न तु भ्रमाधिष्ठानम्। तथात्वे हि ब्रह्माद्यनधिष्ठानमानन्दः शुक्तित्वादिकं ब्रह्म शुक्त्यादितत्त्वं न स्यात्। न च शुक्तिः शुक्तिज्ञाननिवर्त्यस्य रूप्यस्य स्वरूपं धर्मो वा। न चानेकारोप्यानुगतमधिष्ठानमेकैकस्यारोपितस्यासाधारणम्। किं चैवं शुक्तौ रूप्यन्धीरानन्दादौ ब्रह्म धीरिव प्रमा स्यात्। तत्तत्वे तद्धीत्वात्। तस्मात् परमते एकविज्ञानेन सर्वविज्ञानमयुक्तम्। अस्मत्पक्षे तु प्रधानपुरुषज्ञानाह्वानपूजनादौ लोके जनपदस्सर्वोऽपि ज्ञात आहुत इत्यादेः पुराणादौ च–

शशास पृथिवीं सर्वां सशैलवनकाननाम् ।
नाशिता पृथिवी सर्वा धार्तराष्ट्रेण दुर्नयैः ॥

इत्यादेश्च व्यवहारस्य दर्शनात्प्रधानभूतब्रह्मज्ञानादप्रधानभूतदेवतादिज्ञानफलसिद्धेस्त-द्युक्तम्, ''ज्ञानादेव सर्वे कामाः सम्पद्यन्ते'' इति श्रुतेः। ''तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानत'' इति स्मृतेश्च–

यथा मृत्पिण्डविज्ञानात्सादृश्यादेव मृण्मयाः ।
विज्ञायन्ते तथा विष्णोस्सादृश्याज्जगदेव च ॥
अनन्याधीनविज्ञानादन्याधीनं तथैव च ।
मृदयोलोहनाम्नां हि ज्ञानात्सांकेतिकं यथा ॥

इत्यादिस्मृतेश्च। एतेनैकविज्ञाने सर्वविज्ञानान्यथानुपपत्तिर्मिथ्यात्वे प्रमाणमिति निरस्तम्। केचित्तु सूक्ष्माव्यक्तादिविशिष्टब्रह्मणो महदादिविशिष्टात्मना परिणामात् कार्यकारण-योश्चाभेदात् कार्यस्य कारणातिरेकेणासत्त्वपरेयं श्रुतिर्न तु मिथ्यात्वपरेत्याहुः।

वाचारम्भणश्रुत्यर्थः।

## न्यायामृततरङ्गिणी

ननु छंदोगोपनिषदि पित्रोद्दालकेन गुरुकुलं प्रति प्रेषितं पुनः परावृत्यागतमब्रह्मविदं श्वेतकेतुं प्रति यस्मिन् ज्ञाते सर्वं ज्ञातं भवति तादृशमुपदिश्यमानं वस्तु गुरून् पृष्टं किमित्युक्ते अवाच्यमपि स्वगुरूणामज्ञानं पुनर्गुरुकुलप्रेषणभयात् श्वेतकेतुरुक्तवान् मम गुरवस्तद्वस्तु नावेदिषुः

(तरङ्गिणी)
यद्यावेदिष्यन् मां प्रत्युपादिक्ष्यन्निति। भवानेव तु पिता ब्रवीत्विति श्वेतकेतुना पृष्टे ब्रह्मज्ञानेन सर्वं ज्ञातमित्यस्योपपादकं सर्वस्य ब्रह्मानन्यत्वमुक्तमित्यतो वाचारंभणादिशब्दा मिथ्यात्वे मानमित्यत आह ॥ वाचारंभणेति॥ कृद्योग इति॥ कर्तृकर्मणोः कृतीति षष्ठ्या बाधितत्वात्तृतीया नोपपद्यत इत्यर्थः। नंनु करणे तृतीया भविष्यतीत्यत आह ॥ वाचेति॥ ॥ अक्षरेति॥ अप्येकाक्षरसाम्यान्निर्ब्रूयादिति यास्कोक्तेरित्यर्थः ॥ उक्तं हीति॥ अन्यथा स्वं रूपमिति परिभाषया न वा शब्दयोरेव विभाषासंज्ञायां विभाषा जसीत्यादौ न वा शब्दयोरेव ग्रहणं स्यान्नार्थस्येति भावः ॥ तनूर्वर्षिष्ठेत्यादि ॥

द्वितीयस्य प्रथमपादे विचारितं अनुषंगो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात्। पूर्वाह्णापराह्णयोरभ्यस्यमानमाग्नेयसौम्यवैष्णवयागत्रयमेकोपसत्। तथाविधानां तिसृणामुपसदां ज्योतिष्टोमे विहितानामवयवभूता प्रत्येकमादावाग्नेय्युपसदग्निमनीकमिति वाक्येन विहिता। ततश्चाग्नेय्यस्तिस्र उपसदो भवंति। ताश्च त्रिषु दिवसेष्वनुष्ठीयंते। तत्र यथासंख्यलक्षणेन क्रमप्रमाणेन प्रथमाया उपसदः 'याते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रंवचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा' इति निराकांक्षो मंत्र आम्नातः। उत्तरयोस्तु। 'याते अग्ने रजाशया' 'या ते अग्ने हराशये'ति साकांक्षौ मंत्रौ तत्रापरिपूर्णमंत्रस्यावश्यं परिपूर्णस्समर्थो वाक्यशेषः कल्पनीयः। तदुक्तं वार्तिके।

न्यूनवाक्यप्रयोगो हि वेदेन च समाश्रितः।
कश्चित्क्वापि स्थितः शेषः सोऽन्वेष्टव्यः प्रयत्नतः

इति। एवं स्थिते शेषे किं लौकिको वा वैदिको वा शेष इति चिंत्यते। तत्र लौकिक एवेति पूर्वपक्षः। तदुक्तं वार्तिके।

नान्यत्रोत्सहते गंतुं वैदिकं सन्निबंधनं।
यथेष्टविनियोगं तु सर्वार्थं वस्तु लौकिकमिति।

यद्यपि व्यवस्थितत्वेन बुद्धिविलंबाभावाद्वैदिकस्याव्यवस्थिताल्लौकिकाल्लघुतरप्रयोगत्वेन प्रयोज्यत्वमवधार्यते। तथापि तत्र वैदिकत्वबुद्धिविरहः पूर्वपक्षिणोऽभिमतः। तदुक्तं वार्तिके।

तानेव वैदिकान् वर्णान् भारतादिनिवेशितान्।
स्वाध्यायनियमं हित्वा लोकबुध्या प्रयुंजत इति।

सिद्धांतस्तु। वैदिकवाक्यस्य वैदिक एव शेषः न लौकिकः। तदुक्तं वार्तिके।

(तरङ्गिणी)

किमुक्तव्यापृतौ वेदे लौकिकावसरस्थितिः।
तद्व्यापारविमोकश्च सकलान्वेषणक्षये।
अदृष्टः प्रकृतावर्थः प्रत्ययेऽन्विष्यते ततः।
पदे स्वस्मिन्नलब्धस्तु प्रार्थनीयः पदांतरे।
स्वस्मिन्वाक्येऽपि न स्याच्चेन्मृष्यो वाक्यांतरे ततः।
वाक्यांतरेपि न स्याच्चेन्मृष्यः प्रकरणे ततः।
यदि प्रकरणे न स्यान्मृष्यः प्रकरणांतरे इति।

तदिह रजाशया हराशया मंत्रयोः शेषः स्वपदवाक्ययोरलब्धत्वाद्वाक्यांतरे नूनमित्युपसंह्रियते। स च यत्प्रदेशवर्तित्वेन ताभ्यामाकांक्षितस्तत्रैव विनियुज्यते। शक्नोति चायं सर्वैरन्वेतुं। अन्वयकारणानामाकांक्षादीनामविशेषात्। व्यवहितसमाम्नातानामपि असम्बन्धिपद व्यवधानाभावेन बुद्धिविपरिवृत्तिरूपसन्निधिसत्त्वात्। आनन्तर्यस्याप्रयोजकत्वात् तदुक्तं वार्तिके।

आकांक्षा सन्निधानं च योग्यता वेति तत्त्रयं।
संबंधकारणत्वेन क्लृप्तं नानंतरश्रुतिः।
तथानंतरेण संबंधः स्यात्परस्याप्यनंतरः।
ततः पुनस्तदा रूढः परानंतर्यमश्रुत इति।

तस्मादाम्नातमेव सर्वार्थमिति वैदिक एव शेष इति ॥कथं चेति॥ दृष्टांतस्य मृन्मयादेर्मृदाद्युपादानकत्वेन तद्विवर्तत्वाभावादित्यर्थः ॥ब्रह्मेति॥ तथा चोपादानत्वसाम्याद्दृष्टांतोक्तिरित्यर्थः ॥मुमुक्ष्विति॥ मोक्षहेतुब्रह्मज्ञानशून्यं स्तब्धं श्वेतकेतुं प्रति ब्रह्मणो बुबोधयिषया उद्दालकस्य तथा प्रतिज्ञानादित्यर्थः ॥अन्यथेति॥ विशिष्टज्ञानेन सर्वविज्ञानप्रतिज्ञायामित्यर्थः ॥अनादीति॥ ब्रह्मज्ञानेनाविद्यादेर्ज्ञानं न स्यादित्यर्थः ॥वैयर्थ्याच्चेति॥ निष्प्रयोजनत्वाद्विरुद्धार्थत्वाच्चेत्यर्थः। तदेवाह ॥न हीति॥ ॥मृत्व इति॥ तथा चासंभव इत्यर्थः। विवर्तत्वसाम्याद्दृष्टांता इति द्वितीयमाशंक्य निराकरोति ॥न चेति॥ मृदादौ घटादेरनध्यासाद्दृष्टांतानानुगुण्यमित्यर्थः। मृदादौ घटादेरनध्यासे हेतुमाह ॥मृत्त्वेति॥ मृद्घटयोः सत्वसाम्यात् मृत्तिकेत्येव सत्यमिति विशिष्य मृत्तिकासत्यत्वोक्त्ययोग इत्याह ॥व्यवहारेति॥ घटादेर्मृद्विवर्तत्वमभ्युपेत्यापि दूषयति ॥शुक्त्यादीति॥ घटादेर्मृद्विवर्तत्वेपि मृज्ज्ञानात् घटादिज्ञाननिदर्शनं न संभवति। शुक्तिरूप्यादावदर्शनादित्यर्थः ॥एवं हीति॥ प्रपंचतत्वस्य ब्रह्मरूपत्वादित्यर्थः ॥सर्वेति॥ घटज्ञाने सति घटस्यापि ज्ञातत्वादित्यर्थः। ननु न सर्वसाधारण्यं

(तरङ्गिणी)

घटादिज्ञानस्य। तत्प्रत्यहेतुत्वादत आह ॥ स्वस्येति॥ ब्रह्मज्ञानस्येत्यर्थः। ननु व्यक्तिभेदविवक्षायां न दोष इत्यत आह ॥ येनेति॥ ज्ञानव्यक्तिभेदेपि ज्ञातस्यैव ज्ञाततत्वादित्यर्थः ॥ तथात्व इति॥ ब्रह्मप्रमानधिष्ठानं आनंदो ब्रह्मतत्वं न स्यात्। एवं शुक्तित्वमपीत्यर्थः। तत्त्वलक्षणस्य शुक्त्यादावभावात् न तत् रूप्यादेस्तत्वमित्याह। न चेति। स्वरूपमेव न भवति। न तरामसाधारणं तदित्यर्थः। इतोपि नासाधारणमित्याह ॥ अनेकेति॥ ॥ किं चेति॥ तत्वतत्विनोरभेदादिति भावः। घटघटत्वादेः सपक्षत्वान्न व्यभिचारः। ननु मृन्निश्चयेपि घटादौ संशयात्तव मते न सदृशज्ञानादिना सर्वविज्ञानोपपत्तिरित्यत आह ॥ अस्मत्पक्ष इति॥ न वयमेकांततः प्रधानज्ञानेन सर्वविज्ञानं ब्रूमोपि तु सदृशप्रधानज्ञाने सति सर्वविज्ञानफलं भवतीति।

॥ वाचारम्भणमिति श्रुत्यर्थः ॥

## न्यायामृतकण्टकोद्धारः

ननु तथापि वाचारम्भणं विकारो नामधेयमिति श्रुतिर्मिथ्यात्वे प्रमाणं भविष्यति। अत्र वाचा केवलमारभ्यते। न तु वस्तुतो घटः शराव उदञ्चनं चेत्यर्थोऽस्तीति प्रपञ्चस्य मिथ्यात्वप्रतीतिरित्यत आह नापीति। अत्र हि वाचारम्भणशब्देन मिथ्यात्वं प्रतिपाद्यते इत्यभिमतम्। तत्र प्रष्टव्यम्। किं वाचारम्भणशब्देन रूढ्या मिथ्यात्वं प्रतिपाद्यते, योगेन वा? नाद्यः। तदभावादित्याह वाचेति। रूढिज्ञापकव्याकरणकोशादेरभावादिति भावः। न द्वितीय इत्याह आरभ्यत इतीति। कर्तृकर्मणोः कृतीति कृद्योगे षष्ठ्या विहितत्वादिति भावः। पदार्थविपर्यास इति। प्रकाराद्यर्थत्वासंभवादिति भावः। यथेति। नवेति विभाषेत्यत्र नवा शब्दग्रहणे तस्यैव विभाषासंज्ञा स्यात्। अन्यतरस्यामित्यादेर्न स्यात्। ततश्च ततो विकल्पार्थप्रतीतिर्नस्यादित्यर्थग्रहणम्। एवं चार्थे संज्ञा प्रयोजनाभावात् तद्वाचकशब्दमात्रे पर्यवस्यतीत्यन्यतरस्यामित्यादेरपि तत्संभव इति भावः। पदार्थविपर्यास इति शब्द इत्यत्र महाभाष्यसंमतिमाह उक्तंहीति। ननु तर्हि नवेत्यत्रेवात्रापि अर्थग्रहणार्थ इति शब्दो भविष्यतीति न वैयर्थ्यमित्यत आह अत्रेति। तथा चात्रार्थपदार्थकत्वस्य प्राप्तत्वात् तद्विपरीतं शब्दपदार्थकत्वमेव व्यवस्थाप्यत इति भावः। अनुपपादकत्वात्। एक विज्ञानेन सर्वविज्ञानोपपादकत्वाभावादित्यर्थः। नन्वर्थान्तराभावादश्रुतत्वादिकं सोढ्वा मिथ्यात्वपरत्वं स्वीकर्तव्यमेवेत्यतोऽर्थान्तरस्य विद्यमानत्वादित्याह तस्मादिति। ननु सत्यशब्दस्य नित्यशब्दार्थकत्वं कथम्? काप्यप्रयोगादित्यत आह नास्येति। सदाशब्दादिति। त्यपि सदा शब्दस्य सादेशे सत्यशब्दनिष्पत्तिः। वचनाचेति। तथाच बुधैरित्युक्तत्वात् विद्वद्रूढिरप्यस्तीति भावः। सत्यशब्दस्य नित्यपरत्वे युक्तिमप्याह इहेति। ननु तथापि वागारम्भणमिति भवेत्। चोः कुरिति कुत्वे झला जशोन्ते इति जश्त्वस्यावश्यकत्वात् इत्यत आह टापं चापीति। ननु संस्कृतादिनाम्नां प्राधान्यादि कथनं प्रकृतानुपयुक्तत्वादयुक्तमित्यत आह तस्मादिति। तथाच यथा सोम्येत्यादेरिव प्राधान्यादिकथनस्य दृष्टान्तार्थत्वान्न तदयुक्तमिति भावः। ननु यथा सोम्येत्यत्रेवात्र दृष्टान्तत्वज्ञापकाभावात् कथं दृष्टान्तत्वमित्यत आह तदर्थं चेति।

(कण्टकोद्धारः)

द्वितीयाध्याये प्रथमपादे चिन्तितम्। अनुषङ्गो वाक्यसमाप्तिः। सर्वेषु तुल्ययोगित्वात्। ज्योतिष्टोमे उपसद्धोमेष्वेवमाम्नायते याते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रंवचोऽपावधीं त्वेषं वचोपावधीन्त्स्वाहा याते अग्ने रजाशया या ते अग्ने हराशया। तत्रोत्तरौ मन्त्रावुदाहरणम्। किं तयोर्लौकिकः शेषोध्याहर्तव्य उत योऽसौ पूर्वमन्त्रानन्तरं पठितः तनूर्वर्षिष्ठेत्यादिः स एव सर्वेषामर्थेनाम्नातः पूर्वस्येवोत्तरयोरप्यनुषङ्गेण शेष इति संशयः। न चाध्याहारेऽनुषङ्गेवा विशेषाभावात् किमनेन विचारेणेति वाच्यम्। अध्याहारे याते अग्ने रजाशयेत्येतावानेव मन्त्रः। अध्याहारस्य लौकिकस्योहादिवदमन्त्रत्वात्। अनुषङ्गे तु तत्सहित एव मन्त्र इत्यस्ति मन्त्रपरिमाणसिद्धिर्विचारप्रयोजनम्। पूर्वपक्षस्तु लौकिकोऽध्याहार एव कर्तव्यः। कुतः? लौकिको हि शब्दः सर्वार्थः। न क्वचिदेव विशेषेण निबद्धः। स यत्र यत्र कार्यं तत्र सर्वत्र यथेष्टं विनियुज्यमानो न विरूध्यते। वैदिकस्तु यदर्थमाम्नातस्तेनैव निबद्धो नान्यत्र नेतुं शक्यते। नीयमानो वा समाम्नाय बहिर्भावात् लौकिक एव स्यात्। न च सर्वार्थमाम्नात इति वाच्यम्। तदाम्नानस्यानेकार्थतानुपपत्तेः। न चास्यैवं शेषो नान्यस्येति विशेषानवधारणमिति वाच्यम्। आनन्तर्येण देशभेदेन च विशेषग्रहणोपपत्तेः। प्रथमस्य ह्यसावनन्तरो न तृतीयस्य। द्वितीयस्य तुयद्यप्यनन्तरः तथापि परस्ताद्भावित्वेन वाक्य-शेषस्याकाङ्क्षितत्वान्न पुरस्ताद्भाविना संबन्धः। प्रथमस्य त्वपेक्षितदेश एव पठितः। तस्मात्तस्यैव शेषः। अन्ययोस्तु लौकिकोऽध्याहार इति।

सिद्धान्तस्तु। अनुषङ्गेण सर्वशेष इति। तथात्वे सर्वानन्तरं पाठः स्यादिति चेन्न। प्रत्येकं पाठे गौरवात्। सकृच्च सर्वानन्तरपाठासंभवात्। तर्हि कथं सर्वसंबन्ध इति चेत् बुद्धिविपरिवृत्तिमात्रेण सर्वैः साकाङ्क्षैः संबन्धसिद्धेः। पुनः पुनरसामाम्नातोऽपि सर्वशेष इत्येवाङ्गीकर्तव्यः। एवं च वेदसमर्पितेनानुषङ्गेण सर्वेषां नैराकांक्ष्यसिद्धेर्न लौकिको निष्प्रमाणकोऽध्याहारः। न च कथमकत्रोच्चारितस्य सर्वैः संबन्ध इति वाच्यम्। तादृशस्यापि सर्वैः संबन्धसंभवात् प्रथमेन हि संबन्धो द्वितीयस्याप्याकाङ्क्षाबलायां बुद्धौ विपरिवर्तमानः तेनाभिसंबध्यते। तत् संबन्धे विपरिवृत्त्यभङ्गात् तृतीयेनापि संबन्धसिद्धिः। कारणाविशेषात्। एतावच्च शब्दानामन्वये कारणम्। आकाङ्क्षा सन्निधिर्योग्यत्वं च। नत्वनन्तरसमाम्नानम्। व्यवहितस्या-प्यसंबन्धिव्यवधानाभावे बुद्धिविपरिवृत्तिरूपसन्निधानं सर्वत्र क्रमेण लभ्यते। तस्मात् सकृदाम्नानमेव सर्वार्थमिति सर्वशेषता। एवं च तनूर्वर्षिष्ठेत्यस्य यथानुषङ्गस्तथा यथा सोम्येत्यस्यापि वाचारम्भणमित्यत्रानुषङ्गात् तदपि दृष्टान्तार्थपरमेवेति युक्तमिति।

कथंचेति। मृत्पिण्डादिषु घटादीनां विवर्तत्वाभावादिति भावः। ब्रह्मेति। विवर्तपक्षे दृष्टान्तत्वा संभवेति उपादानत्वपक्षे दृष्टान्तत्वं संभवतीति भावः। अन्यथेति। यद्यविद्याविशिष्टज्ञानेन सर्वज्ञानं प्रतिज्ञायेतेत्यर्थः। अनादीति। न च प्रवाहानादित्वाङ्गीकारेणाविद्यादीन् प्रति ब्रह्मण उपादानत्वोपपत्तिरिति वाच्यम्। तथात्वेऽनवस्था स्यात्। अज्ञानादीन् प्रति शुद्धस्य नोपादानत्वम्। तस्य निर्विकारत्वात्। अविद्याङ्गीकारवैयर्थ्याच्च। जगत् प्रत्यपि ब्रह्मण एवोपादानत्वसंभवात्। अज्ञानविशिष्टस्य चोपादानत्वे तदज्ञानविशिष्टस्य तत्वे आत्माश्रयः। अज्ञानान्तरविशिष्टस्य तत्वे अनवस्थादीति भावः। वैयर्थ्याच्चेति विगतप्रयोजनत्वं विरुद्धप्रयोजनत्वं

(कण्टकोद्धारः)

चेत्यर्थद्वयमभिप्रेतम्। तत्र विरुद्धप्रयोजनत्वमुपपादयति नहीति। मृत्त्वे निश्चितेऽपीति। न च सादृश्यादेक विज्ञानेन सर्वविज्ञानमिति पक्षेऽपि मृत्त्वे निश्चितेऽपि घटादौ संशयादिदर्शनरूपं दूषणं तुल्यमिति वाच्यम्। अस्मत्पक्षे एकस्य मृत्पिण्डस्य यथाकथंचिज्ज्ञाने घटादिज्ञानमिति न विवक्षितम्। किन्तु सादृश्यात् तच्च सादृश्यमसाधारणम्। एवं च एकस्य मृत्पिण्ड कार्यस्य घटस्य पृथुबुध्नोदराकारत्वादिना ज्ञाने तादृश-सादृश्यदर्शनेऽन्यस्यापि घटत्वेन ज्ञानमिति कानुपपत्तिः? अत एवोक्तं सादृश्यादेकस्त्रीज्ञानादन्यस्त्रीज्ञानमिति। विवर्तपक्षे मृदादिदृष्टान्तासंभवः प्रागुक्तः। तमुपपादयितुमाशङ्क्य निषेधति न चेति। मृत्त्वेति। यत्तत्वज्ञानेन यन्निवर्तते तस्यैव तत्राध्यस्तत्वादिति भावः।

किंच घटादेर्व्यवहारतोऽसत्वं, तत्वतो वा? नाद्य इत्याह व्यवहारेति। न द्वितीय इत्याह तात्विकसत्वविवक्षायामिति। किंच विवर्तपक्षे ब्रह्मज्ञानेन नसर्वज्ञानम्। अधिष्ठानज्ञानेनाध्यस्तज्ञानादर्शनादित्याह शुक्त्यादीति। सर्वेति। ब्रह्मज्ञानेन सर्वज्ञानं भवतीति सर्वप्रहाणेन ब्रह्मैव ज्ञातव्यमिति न स्यादिति भावः। यद्यपि सामान्यज्ञानं विशेषज्ञाने हेतुरिति न स्वस्य स्वं प्रतिहेतुत्वम्। तथापि सामान्यविशेषभावाभावात् नैवंविधकार्यकारणभाव इति भावः। येनेति। न च विशेषरूपेणाश्रुतमिति अश्रुतादिपदोपपत्तिरिति वाच्यम्। दत्तोत्तरत्वात्। एतेनैव ब्रह्मत्वेन ज्ञाने तत्तत्वेन ज्ञानमिति निरस्तम्। निर्धर्मके ब्रह्मत्वतत्तत्वादेरभावेन तेन रूपेण ज्ञानस्य निःप्रयोजनत्वात्। ननु ब्रह्मैव जगत्तत्वरूपमिति ज्ञानं पुरुषार्थसाधनम्। तदेवात्र एकविज्ञानेन सर्वविज्ञानं विवक्षितमित्यत आह किञ्चेति। तथाच जगत्स्वरूपत्वादसाधारणधर्मत्वाभावात् न ब्रह्म जगत्तत्वमिति भावः तथात्वे अधिष्ठानस्यैव तत्वत्वे। उपसंहरति तस्मादिति।

ननु यथास्मत्पक्ष एकविज्ञानेन सर्वविज्ञानमयुक्तं तथा भवत्पक्षेऽपि ब्रह्मजगतोर्भेदेन ब्रह्मज्ञानेन जगज्ज्ञानमयुक्तम्। अन्यज्ञानेनान्यज्ञानादर्शनात् इत्यत आह अस्मत्पक्ष इति अस्मत्पक्षेतु तद्युक्तमित्यन्वयः। लोके इत्यादेः पुराणादौ चेत्यादेश्च व्यवहारस्य दर्शनादित्यन्वयः। तथाच मुख्यस्यैकविज्ञानेन सर्वज्ञानस्या संभवेऽपि निरूढोपचारेण प्रयोगोपपत्तिरिति भावः। उपचारे बीजं च जगज्ज्ञानफलस्य ब्रह्मज्ञानात् सिद्धिः। उपचारस्य किं प्रयोजनमित्यतो निरूढत्वान्न प्रयोजनापेक्षेति दर्शयितुमनेक व्यवहार प्रदर्शनमिति मन्तव्यम्। ब्रह्मज्ञानेन सर्वज्ञानफलसिद्धिरित्यत्र प्रमाणमाह ज्ञानादेवेति। सर्वेषु वेदेषु प्रतिपाद्यत्वेन ब्रह्म विज्ञानतो ब्राह्मणस्य ब्रह्माणनयोग्यस्य जगज्ज्ञानेन यावानर्थः तावान् ततोऽधिकश्च भवतीति स्मृत्यर्थः। स्मृत्या तथैव व्याख्यातत्वाच्चेत्याह यथेति। एतेन एकविज्ञानेन सर्वविज्ञानस्य प्रकारान्तरेणोपपन्नत्वेनेत्यर्थः। केचित्त्विति। अत्रास्वरसबीजं केवलब्रह्मपरस्य येनेत्यादि पदस्याव्यक्तादिविशिष्टपरत्वं लक्षणया स्वीकर्तव्यम्। निर्विकारस्य ब्रह्मणः परिणामादिकं च प्रमाणविरुद्धं कल्प्यमिति।

वाचारम्भणमिति श्रुत्यर्थः।

## न्यायामृतप्रकाशः

कृद्योग इति। आरंभणशब्दस्य ल्युडंतत्वात् ल्युटश्च कृत्त्वादित्यर्थः। तथा च तद्योगे षष्ठी स्यान्न तृतीयेति भावः। ननु कृद्योगे तृतीयाऽयोगः कुतः ''कर्तृकर्मणोः कृती''ति कृद्योगे कर्तरि कर्मणि च षष्ठी विहिता न तृतीया निषिद्धाऽतः कृद्योगेपि करणे तृतीयोपपद्यत इति चेन्न। परेण हि हंता रामशर इतिवत् करणे कर्तृत्वोपचारमंगीकृत्य वागिंद्रियमेव सर्वजगत्कल्पकमित्यंगीकृतत्वेन करणार्थकतृतीया-यास्तन्मतेऽयोगात्। ''कर्तृकरणयोस्तृतीये''ति कर्तर्यपि तृतीयाविधानात् रामेण बाणेन हतो वालीत्यादिप्रयोगाच्च कर्त्रर्थकत्वेपि मन्मते तृतीयोपपद्यत एवेति शंकायाः समाधानं विचार्यम्॥ वागालंबनमात्रमिति॥ न तु वस्त्वस्तीत्यर्थः। काव्यादौ वस्तुसत्त्वमस्तीति हृदयम्। यन्मिथ्याभूतं तत्रापि वागालंबनमात्रमिति शब्दः प्रयुज्यते जगत्यपि श्रुतौ स प्रयुक्तोऽतो मिथ्यात्वस्य तेन लाभ इत्यत आह॥ अक्षरेति॥ शब्देत्यर्थः॥ इतिकरणः क्रियत इति॥ इति शब्दः प्रयुज्यत इत्यर्थः। प्रकारार्थः मृत्तिकात्वादिप्रकारार्थ इत्यर्थः॥ प्रकारस्येति॥ अत्र ह्युपादानस्यैव सत्यत्वमेकविज्ञानार्थः। न हि मृत्तिकादिगतो मृत्त्वादिः प्रकारो घटाद्युपादानं येन सोऽर्थो युक्तः स्यादित्यर्थः। स्वमते श्रुत्यर्थमाह॥ तस्मादिति॥ कृद्योगे तृतीयाऽयोग इति दूषणं नास्मत्पक्षे प्राप्नोति समस्तपदत्वांगीकारेण वाचेत्यस्य तृतीयांतभिन्नपदत्वा नाश्रयणादित्याशयेनोक्तम्॥ वाचयेत्यादि॥॥ कर्मणि घञिति॥ विपूर्वात्करोतेः कर्मणि घञि अकारमात्रं विहाय सर्वस्यापि लोपेञित्त्वाद्धातोर्वृद्धौ रपरत्वे च विकारशब्दो विकृतत्वार्थक इति भावः। सत्यशब्दस्य नित्यार्थत्वे प्रयोगश्चोत्तरत्राऽस्तीत्यनुव्याख्या-नानुसारेणोपपादयति ॥ नास्येति ॥॥ त्यबंतस्येति॥ सदाशब्दात् त्यप्प्रत्यये पकारलोपे देत्याकारलोपे दस्य तत्वे सत्यशब्दो नित्यार्थक इति भावः ॥ विकृतत्वेति॥ ''वाचारंभण''मित्युक्तविकृतत्वेत्यर्थः। ननु वाचारंभणमिति कथं समासः वागारंभणमिति स्यादित्यत आह ॥ टापं चापीति॥ हलंताद्वाक् शब्दात् टापि वाचेत्याकारांतशब्दः तस्य चारंभणशब्देन समासो युक्त इत्यर्थः। प्रधानज्ञानादप्रधाने ज्ञाने संस्कृतापभ्रंशयोर्दृष्टांतत्वप्रतिपादनाय वाचारंभणवाक्यमित्ययुक्तम्। तत्र पूर्वदृष्टांतेषु यथा सोम्येत्यादिवदत्र तदभावादित्यत आह ॥ तदर्थमिति॥ दृष्टांतत्वलाभार्थमित्यर्थः ॥ तनूर्वर्षिष्ठेत्यादिवदिति॥ द्वितीयाध्याये प्रथमपादे चिंतितम्। 'अनुषंगो वाक्यसमाप्तिः सर्वेषु तुल्ययोगात्वादि''त्यत्र। ज्योतिष्टोमे उपसद्धोमे या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाह याते अग्ने रजाशयायाते अग्ने हराशयेति मंत्रत्रयमाम्नायते। अयं मंत्रार्थः। अयसा रजतेन हिरण्येन निर्मिता अग्नेस्तिस्रस्तनवो वेद प्रसिद्धाः ताः प्रतिप्रार्थनं क्रियते हे स्वाह स्वीयमादत्त इति स्वाह अग्ने या ते तव अयाशया अयोनिर्मिता तनूः या ते रजाशया रजतनिर्मिता तनूः या ते हराशया हिरण्यनिर्मिता तनूः कथं भूता वर्षिष्ठा अभिलषितवर्षणशीला गह्वरे स्थाने तिष्ठतीति गह्वरेष्ठा एतादृशी तनूः मे उग्रं वचः अशनायापिपासे तज्जन्यं दुःखमिति यावत् त्वेषं वचः उपपातकमहापातकाद्येतः अपावधीत् नाशयत्विति। तथाच ब्राह्मणं ''उग्रं वचोपावधीत्स्वाहेति अशनायापिपासे ह वा उग्रं वचः एनो हैव त्वेषं वच'' इति। तत्र रजाशया हराशयामंत्रयोः साकांक्षयोः किं लौकिकः शेषोऽध्याहार्य उत अयाशयामंत्रशेषस्तनूर्वर्षिष्ठेत्यादिरेव तयोरप्यनुषंगेण शेष इति संशये लोके विवक्षानुसारेणानुषंगो न चैवमनुषंगः क्रमनियमवति वेदे यदर्थं वाक्यशेषाम्नानं ततोन्यत्र तस्य न यनायोगात् तस्माल्लौकिकः शेषोध्याहार्य इति पूर्वपक्षः। वैदिके वाक्यशेषे लभ्यमाने न लौकिकशेषोध्याहार्यः। शक्नोति चायं सर्वैरन्वेतुं

(प्रकाशः)

अन्वयकारणानामाकांक्षासन्निधियोग्यतामविशेषात् व्यवधानेन समाम्ना तानामपि गिरिर्भुक्तमित्यादिवसंबद्धपदनि च यव्यवधानाभावेन बुद्धिविषयत्वरूपसन्निधिसद्भावादानंतर्यस्याप्रयोजकत्वात्। तस्मात्तनूर्वर्षिष्ठेत्येतदाम्नातं ''सर्वार्थ''मिति सर्वस्यैवायं शेष इति सिद्धांतः। स्वमतमुपपाद्य परपक्षे बाधकमाह ॥कथं चेति॥ एतेषां दृष्टांतानांत्वन्मते उपादानोपादेयाभिप्रायत्वाद्ब्रह्मणश्च चिन्मात्रस्य जगदुपादानत्वाभावादिति भावः। शुद्धस्योपादानत्वाभावेपि अविद्याविशिष्टस्य जगदुपादानत्वं युक्तमित्याशंकते ॥ब्रह्मेति ॥॥प्रतिज्ञानादिति॥ तथाचोपादानभूताविद्याविशिष्टब्रह्मज्ञानेनैव सर्वज्ञानं प्राप्तं न शुद्धज्ञानेन अतः प्रतिज्ञाहानिरित्यर्थः। ननूपादानभूताविद्याविशिष्टब्रह्मज्ञानेनैव सर्वज्ञानं प्रतिज्ञातमिति चेत्तत्राह ॥अन्यथेति॥ किंचाविद्याविशिष्ट-ब्रह्मणोविद्याद्युपादानत्वाभावेन ब्रह्मज्ञानेनाविद्यादिज्ञानाभावापत्त्या उपादानोपादेयभावेनैकविज्ञानेन सर्वविज्ञान-प्रतिज्ञा भग्नेत्याह ॥अनादीति॥ विगतप्रयोजनत्वमुपपाद्य विरुद्धप्रयोजनत्वमुपपादयति ॥न हीति॥ आदिपदाभ्यां लोहमणिविकारात्मकमन्यल्लोहमयमित्यस्य ग्रहणम्। नखनिकृंतनदृष्टांतस्त्वत्यंतासंबद्ध इत्याह ॥नखेति॥ किं च मृदा तत्त्वेन विज्ञातया सर्वं मृण्मयं घटशरावोदंचनादिकं सर्वं विज्ञातं स्यादित्येतदयुक्तम्। तथात्वे घटशरावादौ मृत्त्वे निश्चितेप्ययं घटो वा शरावो वा उदंचनं वा शराव एवेति संशयविपर्ययौ न स्यातामित्याह ॥मृत्त्व इति॥ मृद्यध्यस्तत्वादिति॥ मृद्व्यतिरेकेण घटादेरभावादित्यर्थः। अधिष्ठानतत्वज्ञानेनाध्यस्तं निवर्तत इति लोके दर्शनात् मृदादौ घटादेरध्यासे मृत्त्वज्ञानान्निवृत्तिः स्यात् न चैवमस्तीत्याह ॥मृत्त्वेति॥ घटादीनां मृद्व्यतिरेकेणासत्त्वरूपं मृदध्यस्तत्वं किं व्यवहारदशायामुच्यते तात्विकत्वदशायां वा नाद्य इत्याह ॥व्यवहारेति॥ घटादेः सत्त्वोपपादकं मृदादिवदिति ॥कारकव्यापारेति॥ कुलालादिव्यापारेत्यर्थः ॥अवस्थेति॥ पृथुबुध्नोदरा-कारत्वावस्थाविशेष एव घट इत्यर्थः। मृद्व्यतिरेकेणा सत्त्वे प्रागुक्तं कारकव्यापारसाध्यत्वमयुक्तं स्यादिति भावः। द्वितीये त्वाह ॥तात्विकेति॥ तात्विकत्वदशायां मृदोपि ब्रह्मण्यध्यस्तत्वेन ब्रह्मव्यतिरेकेणाभावात् उपादानत्वेन ''मृत्तिकैव सत्य''मिति मृदः सत्त्वोक्त्ययोगादित्यर्थः। एकविज्ञानेन सर्वविज्ञानस्याध्यस्तत्वाभिप्रायो न युक्तः। अधिष्ठानतत्वज्ञानेनाध्यस्तज्ञानस्य काप्यदर्शनात्। न हि शुक्तिज्ञो रजतज्ञ इत्युच्यत इत्याह ॥शुक्त्यादीति ॥॥वाचस्पतिनेति॥ शुक्त्यादितत्वज्ञानेन रूप्यादिज्ञानादर्शनादित्येतदसहमानेनेत्यर्थः ॥सा हीति॥ आरोपितस्य रूप्यस्य तत्त्वमधिष्ठानभूता शुक्तिरेव। एवं ब्रह्मणि ज्ञाते सति तत्राध्यस्तं जगत्तत्वतो ज्ञातं भवति तद्धि तस्य तत्त्वं अतोऽधिष्ठानज्ञानेनाध्यस्तस्य तत्वतो ज्ञानमेवैकविज्ञानेन सर्वविज्ञानशब्दार्थ इत्यर्थः ॥एवं हीति॥ अधिष्ठानतत्त्वज्ञानेनाध्यस्तं तत्त्वतो ज्ञातं भवतीत्युक्ते ब्रह्मण एवाध्यस्तत्वेन ब्रह्मज्ञानेन ब्रह्म ज्ञातं भवतीत्युक्तं स्यात्तच्चायुक्तमित्यर्थः। कुत इत्यत आह ॥सर्वेति॥ घटज्ञाने सति घटस्यापि ज्ञातत्वादिति भावः। ननु न सर्वसाधारण्यं घटज्ञानस्य घटज्ञानं प्रत्यहेतुत्वादिति चेत्समं प्रकृतेपीत्याह ॥स्वस्येति॥ ब्रह्मज्ञानस्यापि ब्रह्मज्ञानं प्रत्यहेतुत्वमेव। अन्यथा आत्माश्रयादिति भावः ॥येनेति॥ येन ब्रह्मणा श्रुतेनाश्रुतं जगत्तत्त्वं श्रुतं भवतीति तदर्थः। जगत्तत्त्वं च ब्रह्मैव तथा च येन श्रुतेन ब्रह्मणाऽश्रुतमित्येतदेव विरुद्धत्वान्न संभवतीत्यर्थः। ननु नेदं दूषणं येनाश्रुतं जगत्तत्त्वं श्रुतं भवतीत्युक्तेन विरोध इत्यस्वरसादाह ॥किं चेति ॥॥असाधारणं स्वरूपमिति॥ चाकचक्यस्यासाधारणस्वरूपं शुक्तित्वासाधारणधर्मो वा तत्त्वं न तु भ्रमाधिष्ठानं तत्त्वमित्युच्यत इति भावः। कुतो नेत्यत आह ॥तथात्वे हीति॥ यदि भ्रमाधिष्ठानमेव तत्त्वं तर्ह्यानंदो

(प्रकाशः)

ब्रह्म तत्त्वं न स्यात्। आनंदस्य ब्रह्मीयभ्रमाधिष्ठानत्वाभावात्। तथा शुक्तित्वं शुक्तेस्तत्वं न स्यात्। शुक्त्यारोपाधिष्ठानत्वाभावादित्यर्थः। एवं सत्यसाधारणस्वरूपासाधारणधर्मत्वरूपं तत्त्वलक्षणं रूप्यतत्त्वभूतायां शुक्तौ नास्तीत्याह ॥न चेति॥ शुक्तिज्ञाननिवर्त्यस्येति हेतुगर्भम्। न हि तज्ज्ञाननिवर्त्यं तस्य स्वरूपं भवतीत्यर्थः। इतोपि न शुक्तिरारोप्यस्य रूप्यस्यासाधारणं स्वरूपं अतो न तत्वमित्याह ॥न चेति॥ एकस्यामेव शुक्तौ वंगाद्यनेकाध्यासो भवति। एवं च शुक्तिर्नारोप्यस्य रूप्यस्य तत्त्वं तस्याः वंगाद्यनेकासाधारणस्वरूपत्वाभावादित्यर्थः ॥किं चैवमिति॥ यदि रूप्यतत्त्वं शुक्तिः स्यात्तर्हि आनंदस्य ब्रह्मतया आनंदो ब्रह्मेत्यानंदे ब्रह्मतया धीर्यथा प्रमा ब्रह्म तत्त्वे ब्रह्मधीत्वात्। एवं शुक्तौ रूप्यधीः प्रमा स्यात्। रूप्यतत्त्वे रूप्यधीत्वादित्यर्थः। तथा च शुक्त्यादिज्ञानेन रूप्यादिज्ञानादर्शनादित्युक्तं दूषणं युक्तमेवेति भावः। ज्ञानादेव प्रधानभूतब्रह्मज्ञानादेव। सर्वे कामाः देवतादिज्ञानफलभूताः ॥तावानिति॥ सर्ववेदेषु देवताज्ञानकर्मादिफलतया प्रमितं स्वर्गादिकं सर्वं ब्रह्मप्राप्तियोग्यस्यापरोक्षज्ञानिनः फलेंऽतर्भवतीत्यर्थः ॥एतेनेति॥ एकविज्ञानेन सर्वविज्ञानस्य सादृश्यादिनान्यथैवोपपन्नत्वादित्यर्थः। केचित् रामानुजीयाः। अव्यक्तादिविशिष्टस्य अव्यक्ताधिष्ठानतयाऽव्यक्तशरीरस्य तदधिष्ठिताव्यक्तस्येति यावत्। महदादिविशिष्टात्मना महदाद्यधिष्ठितात्मना तदधिष्ठितमहदादिरूपेणेति यावत्।

वाचारंभणश्रुत्यर्थविवणम्।

## १०. इदं सर्वं यदयमात्मेति श्रुत्यर्थविवरणम्

**नापि ''इदं सर्वं यदयमात्मा'' इत्यादि श्रुतिस्तत्र मानम्। जडाजडयोरैक्यासम्भवेन ब्रह्मव्यतिरेकेणासत्त्वस्यात्राभिप्रेतत्वादिति युक्तम्, ''सर्वेषु भूतेष्वेत''मितिश्रुतेः सर्वं जलं लवणमितिवत् सर्वव्याप्त्या वा, स हि सर्वस्य कर्तेति श्रुतेः ''आयुर्वैघृतं ब्राह्मणोऽस्य मुख''मितिवत् निमित्तत्वेन वा, ''यस्मिन्द्यौः पृथिवी चे''त्यादिश्रुतेः ''राजा राष्ट्रं ब्राह्मणो वै सर्वदेवता'' इतिवत् सर्वाधारत्वेन वा, ''न ऋते त्वत्क्रियते किंचने'' त्यादिश्रुते ''यजमानः प्रस्तर'' इतिवत् ''तत्सिद्ध्या वा,'' ''आदित्यो यूप'' इतिवत् सारूप्येण वा, सामानाधिकरण्योपपत्तौ सर्वप्रमाणबाधितायाः यः पुरुषः सः स्थाणुरितिवत् यत् सर्वत्वेन प्रतीतं तदात्मन्यध्यस्तमिति तदद्वयलक्षणायाः अयोगात्। उक्तं हि महाभाष्ये– ''अन्तरेणापि निमित्तं निमित्तार्थोऽवगम्यते तद्यथा आयुर्वैघृतं दधित्रपुसं प्रत्यक्षो ज्वर इति। अन्तरेणापि वतिमति देशोऽवगम्यते। अब्रह्मदत्तं ब्रह्मदत्त इत्याह ब्रह्मदत्तवदिति गम्यते'' इति। ''पुरुष एवेदं सर्वं पुरुषेणैवेदं सर्वं व्याप्तमातृणादाकरीषा''दिति श्रुतौ।**

असतश्च सतश्चैव सर्वस्य प्रभवो व्ययः ।
सर्वस्य च सदा ज्ञानात्सर्वमेनं प्रचक्षते ॥
पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदीयत्वान्न तु सर्वस्वरूपतः ॥

इति भारते, ''सर्वं समाप्नोषि ततोऽसि सर्व'' इति गीतायां चान्यथाव्याख्यातत्वाच्च। अन्यथा ''इदं सर्वं''मित्यस्य ''सर्वं तं परदाद्योऽन्यत्रात्मनस्सर्वं वेदेति पूर्वेण ''स यथा दुंदुभे''रित्यादिनोत्तरेण, ''पुरुष एवेदं सर्व''मित्यस्य स भूमिं विश्वतो वृत्वे''तिपूर्वेण ''उतामृत्वस्येशान'' इत्युत्तरेण, ''ब्रह्मैवेदं सर्व''मित्यस्य ''अस्यां पृथिव्यां तेजोमयोऽमृतमयस्स यश्चायमप्सु तेजोमयोऽमृतमय'' इत्यादिना पूर्वेण, ''सर्वं खल्विदं ब्रह्मे''त्यस्य ''ज्यायान्पृथिव्या ज्यायानन्तरिक्षा''दित्यादिनोत्तरेण, ''सर्वाणि भूतान्यात्मैवे''त्यस्य ''सर्वभूतेषु चात्मान''मित्यादिना पूर्वेण, ''यथा-तथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः'' इत्युत्तरेण च विरोधः।

इदं सर्वं यदयमात्मेत्यादिश्रुत्यर्थः।

## न्यायामृततरङ्गिणी

ननु बृहदारण्यके इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्म९ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योयमात्मेदममृतमिदं ब्रह्मेद९ सर्वमिति चतुर्दशकृत्वः सर्वस्य ब्रह्मात्मत्वं बोध्यते। तथा हि बृहदारण्यकभाष्ये। इदं सर्वं यदयमात्मेति प्रतिज्ञायामात्मैकोद्भवत्वस्यात्मैकप्रलयत्वस्य च हेतोरसिद्धिरत्र निवार्यते। तथा हि। यत् लोके परस्परोपकार्योपकारकभूतं तदेक-कारणपूर्वकमेकप्रलयं च दृष्टम्। इदमपि पृथिव्यादिलक्षणं जगत् परस्परोपकार्योपकारकत्वात्तथाभूतं भवितुमर्हति। इयं पृथिवी सर्वेषां ब्रह्मादिस्तंबपर्यंतानां भूतानां प्राणिनां मधु मध्विव मधु। यथैको मध्वपूपोऽनैकैर्मधुकरैर्निर्वर्तितः एवमियं पृथिवी सर्वभूतनिर्वर्तिता तथा सर्वाणि भूतानि पृथिव्यै पृथिव्याः अस्याः मधु। यश्चायमस्यां पृथिव्यां तेजोमयश्चिन्मात्रप्रकाशमयोऽमृत-मयोऽमरणधर्मा पुरुषो यश्चायमध्यात्मं शारीरः शरीरे भवः तेजोमयादिपुरुषो लिंगाभिमानी सर्वेषां भूतानामुपकारात् करणत्वेन मधु सर्वाणि च भूतान्यस्य मधु। च शब्दसामर्थ्यादेवमेतच्चतुष्टयं तावदेकं सर्वभूतकार्यं। सर्वाणि च भूतान्यस्य कार्यमतोस्यैककारणपूर्वकतया यमेव सः योऽयं

(तरङ्गिणी)

प्रतिज्ञात इदं सर्वं यदयमात्मेति। इदममृतं यन्मैत्रेय्यै अमृतत्वस्य साधनमात्मविज्ञानमुक्तम् इदं ब्रह्म यद्ब्रह्म ते ब्रवाणीत्यध्यायादौ प्रकृतम् इदं सर्वं अयमेव। तस्मान्मधुब्राह्मणं मिथ्यात्वे मानमिति। तत्राह ॥ब्रह्मैवेदं सर्वमिति॥ अत्र ब्रह्मशब्दो न श्रुतिपाठगतः। तस्य इदं ब्रह्मेति इदं शब्देनान्वयात्। किंतु अयमेव स योयमात्मेत्यत्रत्यस्यायमेवेत्यस्यार्थानुवादः इदं सर्वं अयमेव पूर्वप्रकृतं ब्रह्मैवेति। अत एव काण्वानां माध्यंदिनानां च श्रुतौ एव शब्दाभावादपपाठोयमिति न मंतव्यम्। अयमेवेत्यत्रत्यस्य एव शब्दस्यानुवादात् ॥पूर्वेणेति॥ उपलक्षणमेतत्। स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एवात्मानः समर्पिताः इत्युत्तरवाक्येन भूतादिसत्त्वतात्पर्यकेण च विरोधो ज्ञेयः ॥सर्वं खल्विदमिति॥ एष आत्मांतर्हृदये ज्यायान् पृथिव्या इत्यादिनेत्यर्थः ॥आत्मैवेत्यस्येति॥

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यत

इतीशावास्य श्रुतिः ॥सर्वभूतेष्विति॥

यस्मिन् सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं न ततो विजुगुप्सत

इत्यनेन ॥याथातथ्यत इति॥ यथार्थान्।

॥इदं सर्वं यदयमात्मेत्यादिश्रुत्यर्थः॥

## न्यायामृतकण्टकोद्धारः

नापीति। अत्र समानाधिकरणशब्दोपेताः सर्वं खल्विदं ब्रह्मेत्याद्याः श्रुतयो निर्णेयाः। न्यायसाम्यात्। अत एवाग्रे बहुषु श्रुतिषु पूर्वोत्तरविरोधकथनं संगच्छत इति अत्रहि यत् सर्वत्वेन प्रतीतं तद् आत्मा आत्मन्यध्यस्तमिति मिथ्यात्वं प्रतीयते। ननु सामानाधिकरण्यात् तत्त्वमसीतिवत् ऐक्यपरतैव किं न स्यात्? किमध्यस्तत्ववर्णनेनेत्यत आह जडाजडयोरिति। जडत्वाजडत्वरूप विरुद्धधर्माधिकरणत्वेनैक्यासंभवात् लक्षणया मिथ्यात्वपरत्वमेव युक्तमिति भावः। एकलक्षणयैव प्रमाणाविरुद्धार्थवत्वे संभवति पदद्वयलक्षणया प्रमाणविरुद्धार्थपरता न युक्तेति दूषयति सर्वेष्विति। अत्र सामानाधिकरण्योपपादने

(कण्टकोद्धारः)

**व्याप्तिनिमित्तत्वाधारत्वतत्सिधिसारूप्याणिहेतवोऽभिमताः। तत्र सर्वेष्वित्यादिनोक्त हेतुसद्भावे प्रमाणं, सर्वं जलमित्यादिनाप्रयोग प्रदर्शनं, सर्वव्याप्त्येत्यादिना हेतुकथनमिति द्रष्टव्यम्। अत्रादित्यो यूप इति वदित्यतः प्राक् साम्यमुपैतीति श्रुतेरिति द्रष्टव्यम्। निमित्तत्वादि प्रतिपादक शब्दं विनापि निमित्तत्वाद्यर्थो गम्यत इत्यत्र संमतिमाह उक्तं चेति। श्रुतिस्मृतिभ्यां सामानाधिकरण्यस्य व्याप्त्याद्यर्थतया व्याख्यातत्वाच्च नान्यथार्थो वर्णनीय इत्याह पुरुष एवेदं सर्वमिति। अन्यथेति। सामानाधिकरण्य व्यपदेशस्य मिथ्यात्वपरत्वे सर्वत्र पूर्वोत्तरवाक्य विरोध इत्यर्थः। इदं सर्वं यदयमात्मेति श्रुत्यर्थः।**

## न्यायामृतप्रकाशः

कथमियं श्रुतिर्मिथ्यात्वे मानमित्यत आह ॥जडाजडेति॥ सर्वशब्दोक्तजडाजडयोरित्यर्थः। सर्वव्याप्त्या सर्वमात्मेति सामानाधिकरण्योपपत्तावित्यन्वयः। इदं सर्वमात्मा आत्मना व्याप्तमित्यर्थः। भगवतः सर्वव्याप्तत्वे श्रुतिः ॥सर्वेष्विति॥ व्याप्त्या सामानाधिकरण्यं कुत इत्यत आह ॥सर्वमिति॥ लवणं लवणेन व्याप्तमित्यर्थः। एवमेवोत्तरत्रापि योज्यम्। आयुः घृतं घृतानिमित्तकम्। ब्राह्मणो मुखं मुखनिमित्तकः। राष्ट्रं राष्ट्राधारः। सर्वा देवताः सर्वदेवताश्रयः सर्वदेवतासन्निधिपात्रं ॥प्रस्तर इति॥ यथा यजमानकार्यकारी प्रस्तरः एवं न ऋत इति श्रुतेस्तत्सिद्ध्या जगच्चेष्टादिकार्यकारित्वेनेत्यर्थः ॥आदित्य इति॥ यूप आदित्यः आदित्यवत् आज्यांजननिमित्तौज्वल्येन आदित्यसदृश इत्यर्थः। एवं सारूप्येण सत्वादिसारूप्येण ॥सामानाधिकरण्येति॥ सर्वात्मनेति सामानाधिकरण्योपपत्तावित्यन्वयः ॥पदद्वयेति॥ सर्वशब्दस्य प्रतीतत्वे लक्षणा आत्मशब्दस्य आत्मन्यध्यस्तत्वे लक्षणेति पदद्वयलक्षणाया अयोगादित्यर्थः। इदं सर्वमात्मेति सामानाधिकरण्यमात्मनिमित्तकत्वेन व्याख्यातं तदयुक्तं निमित्तवाचकपदाभावादित्यतो निमित्तवाचकपदाभावेपि तदर्थोविगम्यत इत्यत्र संमतिमाह ॥उक्तं हीति॥ निमित्तं निमित्तवाचकं पदम्। त्रपुसं उर्वारुकं दधिमंडं वा। ज्वरो ज्वरनिमित्तम्। आदित्यो यूप इत्यत्र आदित्यवदिति सारूप्यं सामानाधिकरण्यार्थः। एवं सर्वमात्मा आत्मवदिति सारूप्येण सामानाधिकरण्योपपत्तिरित्युक्तं तदयुक्तं वत्यर्थकपदाश्रवणादित्यतो विनापि वतिं तदर्थोऽवगम्यत इत्येतत्संमत्या द्रढयति ॥अंतरेणापीति॥ वतिं वतिप्रयोगम्। अतिदेशः तद्वदित्यतिदेशः। यद्यब्रह्मदत्तमुद्दिश्य हे ब्रह्मदत्तेत्याह तर्हि ब्रह्मदत्तवदिति तत्सारूप्यं गम्यत इत्यर्थः। अस्याः श्रुतेर्न त्वदुक्तोऽर्थः किंत्वस्मदुक्त एव तथैव प्रमाणांतरेण व्याख्यातत्वादित्याह ॥पुरुष एवेदमित्यादिना॥ परव्याख्यने बाधकमाह ॥अन्यथेति॥ ''इदं सर्वं यदयमात्मे''त्येवं जातीयानि वाक्यान्युदाहृत्य तत्र सर्वत्रापि पूर्वोत्तरविरोधं दर्शयति ॥पुरुष एवेदमित्यादिना॥

॥इदं सर्वं यदयमात्मेति श्रुत्यर्थविवरणम्॥

# ११. यस्मात् परं नेति श्रुत्यर्थविवरणम्

"यस्मात्परं नापरमस्ति" इतिश्रुतेरपि यस्मात्परं न अपरं त्वस्ति तच्च किंचिदल्पमित्यर्थः। "पुरुषान्न परं किंचित्", "पादोऽस्य विश्वा भूतानी"त्यादिश्रुतेः, "वासुदेवात्परं नास्ती"त्यादिस्मृतेश्च। नञोऽनुषंगस्याकल्प्यत्वाच्च। "तेनेदं पूर्णं पुरुषेण सर्वं ततो तदुत्तरतर"मितिवाक्यशेषाच्च। विश्वस्यैवाभावे हि किं तेन पूर्णं कस्माच्च तदुत्तरतरं स्यात्। यस्मान्नाणीयो न ज्यायेऽस्ती"त्यत्र "अणोरणीयान् महतो महीयानि" त्यादिश्रुत्यन्तराद्वाक्यशेषाविरोधादुभयत्रापि नञः श्रवणाच्चोभयनिषेधः।

## यस्मात्परं नेति श्रुत्यर्थः।

## न्यायामृततरङ्गिणी

ननु यस्मात्परं नास्ति अपरं च नास्तीत्यर्थकरणादपराभावोपि सिध्यतीत्यत आह ॥नञ इति॥ यथा श्रुतेनैवोपपत्तेरित्यर्थः। अस्तिक्रियायास्तुन्यायप्राप्तन्नानुषंग इति भावः ॥तेनेदमिति॥ वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वमित्यनेन ॥ततो यदिति॥ ततो यदुत्तरतरं तदुनात्येति कश्चनेत्यनेन। ननु यस्मान्नाणीय इति वाक्यशेषेनिषेधद्वय श्रवणादत्रापि तदनुमीयत इत्यत आह ॥यस्मान्नाणीय इति॥

## ॥यस्मात्परं नेति श्रुत्यर्थः॥

## न्यायामृतकण्टकोद्धारः

ननु तथापि यस्मात् परं नापरमस्तीत्यत्र द्वितीयाभावः प्रतीयते। परापरयोरुभयोर्निषेधादित्यत आह यस्मात्परमिति। नन्वत्र परमात्रस्यैव निषेधोऽपरस्य च सत्तेत्यर्थः कुतः? नञोऽनुषङ्गेणोभयोरपि निषेधः किं न स्यादित्यतः श्रुतिस्मृतिभ्यां तथावगमादित्याह पुरुषान्न परमिति। ननु परशब्दस्यान्यार्थत्वं किं न स्यादित्यत आह तेनेति। ननु तर्हि यस्मान्नाणीय इत्यत्रापि उभयनिषेधो न स्यादित्य आह यस्मान्नाणीय इति। अत्र च श्रुत्यन्तराभावात् तद्विरोधाभावात् वाक्यशेषाविरोधात् उभयत्रनञोऽश्रवणाच्च नोभयनिषेध इति भावः।

## यस्मात्परंनेति श्रुत्यर्थः।

## न्यायामृतप्रकाशः

यस्मादिति। यस्माद्ब्रह्मणः परमपरं च नेति नञोनुषंगेण व्याख्यानान्मिथ्यात्वप्रतिपादकमिदं परमत इति ज्ञातव्यम्। तच्च परं अस्वतंत्रमित्यर्थः। यस्मात्परं नेत्यत्र प्रमाणसंवादमाह ॥पुरुषादिति॥ अपरंत्वस्तीत्यत्र

तमाह ॥पादोस्येति॥ तदधीनत्वे सति तत्सादृश्येन विश्वभूतान्येकः पाद इत्यर्थः। अपरं नास्तीति व्याख्याने बाधकमाह ॥नञोनुषंगस्येति॥ नञनुवृत्तेरित्यर्थः। विरोधमेवोपपादयति ॥विश्वस्यैवेति॥ तत् ब्रह्म। ''यस्मात्परं नापरमस्ति किंचिद्यस्मान्न ज्यायो नाणीयोस्ति कश्चि''दित्यत्र यथाणुज्यायोरूपोभयपदार्थनिषेधः तद्वदेव पूर्ववाक्येप्युभयनिषेधः कार्यः। असति ज्ञापके वैरूप्यायोगादित्यतस्तत्रोभयनिषेध ज्ञापकमाह ॥यस्मादिति॥ ॥अणोरिति॥ भगवत एव श्रुत्यंतरेऽणुत्वमहत्त्वोक्तेरत्रोभयनिषेधः कार्य एव। न च तथाऽपराभावप्रतिपादकं श्रुत्यंतरं नामास्तीति भावः ॥वाक्येति॥ अपरस्यापि निषेधे ''तेनेद''मिति वाक्यशेषविरोधवदत्रोभयनिषेधे तदभावादित्यर्थः ॥नञःश्रवणाच्चेति॥ त्वन्मते ज्ञापकाभावेप्यनुषंगः कार्यः सच लज्जाकर इति भावः।

॥यस्मात्परं नेति श्रुत्यर्थविवरणम्॥

## १२. मायामात्रिमदमितिश्रुत्यर्थविचारः

**प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥**
**विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥**

**इत्यत्राप्याद्यश्लोके भेदस्य भास्करादिमतप्राप्तसत्योपाधिकृतत्वं निरस्य द्वितीये मायावादप्राप्तमारोपितत्वं निरस्यानादिसत्यत्वमेवोच्यते। यथा ''तद्धैक आहुरि''ति श्रुतौ बौद्धमतप्राप्तमसत्कारणत्वं निरस्य ''सदेवे''त्यत्र सत्कारणत्वम्। तथा हि भेदप्रपञ्चो यदि विद्येत उत्पद्येत, तर्हि निवर्तेत न च निवर्तते, मोक्षेऽपि भेदश्रुतेः। तस्मादनादिरित्यर्थः। विद सत्तायामिति हि धातुः। उत्पत्तिरपि च सत्तायोग एव। अस्ति च सत्तार्थस्यापि भवतेः–**

**तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः ।**
**प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥**

**इत्यादावुत्पत्तौ प्रयोगः। विद्लृलाभ इति वा धातुः। तथा च विद्येत लभ्येत उत्पद्येतेत्यर्थः उत्पत्तिरपि हि स्वात्मनो लाभ एव। अस्तित्वार्थत्वे तु यद्यदस्ति तत्तन्निवर्तत इति व्याप्त्यभावात् श्रौतस्तर्क आभासः स्यात्। अत एव न ह्यत्रानूयाजा''**

इति श्रौतहेतौ राणके व्याप्तिरुक्ता। ननूपाधिकृतं न चेत् किं तर्हि स्वतन्त्रम्, नेत्याह— मायामात्रमीश्वरेच्छाधीनं मायेतीश्वरेच्छोच्यत इति वक्ष्यमाणत्वात्। विष्णोरिच्छावशत्वात्तुमायामात्र''मित्यादिस्मृतेश्च। पूर्वत्र ''स्वप्नमायासरूपेति 'सृष्टि-रन्यैर्विकल्पिते''त्यैंद्रजालिकत्वं मतान्तरत्वेनोक्त्वा ''इच्छामात्रं प्रभोस्सृष्टि'' रितीश्वरच्छाधीनत्वस्य स्वमतत्वेनोक्तेश्च। ''प्रभवस्सर्वभावानां सतामिति विनिश्चयः'' इति पूर्वत्र ''कल्पितौ यदि केनचि''दित्युत्तरत्र च सत्त्वोक्तेश्च। निवर्तेति तर्कस्य विपर्ययपर्यवसानलब्धानिवर्त्यत्वाविरुद्धार्थस्यैवेह वक्तव्यत्वाच्च। तर्ह्यद्वैतस्सर्वभावानाम् इतिश्रुतमद्वैतं कथमित्यत आह— अद्वैतं परमार्थत इति ल्यब्लोपनिमित्ता पंचमी। परमं स्वतंत्रमर्थमपेक्ष्य तत्। ''स्वतंत्रम् परमार्थाख्य''मिति स्मृतेः। परिभाषायाश्च कार्यार्थत्वेन ''आण्णद्या'' इत्यादाविवासति बाधे ''कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय'' इति न्यायेन पारिभाषिकस्यैव ग्राह्यत्वात्। यववराहाद्यधिकरणन्यायेन शास्त्रे शास्त्रीयार्थस्यैव ग्राह्यत्वाच्च। किं चास्ति स्वतन्त्रेऽर्थेपि परमत्वम्। न च तात्त्विकेऽपि क्लृप्तावयवशक्त्यैव काल्पनिकादुत्तमार्थत्वेनैव परमार्थशब्दसम्भवे समुदाय-शक्तिकल्पना युक्ता। अत एव प्रोक्षण्यधिकरणे प्रोक्षणीशब्दस्य जले योग एव न तु रूढिरित्युक्तम्। उक्तं च वार्तिके—

भवेतां यदि वृक्षस्य वाजिकर्णौ कथंचन ।
अदृष्टां समुदायस्य कश्शक्तिं जातु कल्पयेत् ।। इति ।

स्वतन्त्र एव च परमत्वं मुख्यम्। न च मुख्ये सम्भवत्यमुख्यं युक्तम्। परमार्थशब्दस्य तात्त्विके योगरूढ्यंगीरेऽपि मानान्तरैः पूर्वोत्तरवाक्यैश्चाविरोधाय योगेन स्वतंत्रपरत्वमेव युक्तम्। तथा च सर्वभावानां मध्येऽयमद्वितीय इत्युक्ते स्वातंत्र्यमेव सिद्ध्यति न तु सार्वभावासत्त्वमित्यर्थः।

केचित्तु ''अनाशी परमार्थः स्यादि''तिवचनादद्वैतं परमार्थत इत्यस्याद्वितीयं ब्रह्माविनाशीत्यर्थ इत्याहुः। एवं भेदस्योपाधिकृतत्वं निरस्य कल्पितत्वं निरस्यति। विकल्प इति। तर्कत्वान्न च निवर्तते तस्मान्न कल्पित इति विपर्यये पर्यवसातव्यम्। तत्त्वे आज्ञाते तु द्वैतं न विद्यत इत्यर्थः। श्लोकयोरतर्करूपत्वे यदि शब्दद्वयं

लिङ्प्रत्ययचतुष्टयं च व्यर्थं स्यात्। तदुक्तम्–

इत्यत्र यदि शब्दौ च निवर्तेतेति च द्वयम् ।
विश्वस्य सत्यतामाहुः विद्येतोत्पत्तिमेव च ॥ इति ।

स्पष्टीकृतश्चायमर्थः श्रुत्यन्तरे–

सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ।
न च नाशं प्रयात्येषः न चासौ भ्रान्तिकल्पितः ॥
कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ॥ इति ।

केचित्वेकस्मिन्नेवात्मनि देहभेदेन देवमनुष्यत्वादिरूपप्रपञ्चमिथ्यात्वपरेयं श्रुतिरित्याहुः। मायामात्रमिदमिति श्रुत्यर्थः।

## न्यायामृततरङ्गिणी

ननु प्रपंचो यदि विद्येतेत्यादिकं प्रपंचमिथ्यात्वे मानम्। तथा हि। मांडूकोपनिषत् विवरणरूपगौडपादीयवार्तिकस्य शांकरीयभाष्ये तदानंदगिरौ च व्याख्यातम्। प्रपंचो यदीत्येतस्मात्पूर्वश्लोके

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा

इत्येतस्मिन् तुरीयमद्वितीयमित्युक्तम्। तत्प्रपंचस्य द्वितीयस्य सत्त्वादयुक्तमित्याशंक्य तुरीयप्रबोधात्प्रपंचनिवृत्तौ तदद्वितीयत्वमविरुद्धमिति चोक्तम्। तव प्रपंचनिवृत्त्या चेदद्वितीयत्वं तर्हि प्रपंचनिवृत्तेः पूर्वमनिवृत्ते प्रपंचे कथमद्वैतमित्याशंकायां तत्परिहाराय प्रपंचो यदीति श्लोकः। सत्यमेवं स्यात्प्रपंचो यदि विद्येत रज्जौ सर्प इव कल्पितत्वान्न तु स विद्यते। यथात्मनि कारणाधीनः सन् प्रपंचो विद्येत तदा कृतकस्यानित्यत्वनियमात्तन्निवृत्तिरवश्यंभाविनी। कार्यस्य निवृत्तिर्नाम कारणसंसर्गः। ततः सति कारणे प्रपंचनिवृत्तेरनात्यंतिकत्वादद्वैतानुपपत्तिराशंक्येत। न च कारणाधीनः सन् प्रपंचोस्ति। तस्य कल्पितत्वेनावस्तुत्वात्। न हि रज्ज्वां भ्रांतिबुध्या

(तरङ्गिणी)

कल्पितस्सर्पो विद्यमानस्सन् विवेकतो निवृत्तः। न च माया मायाविना प्रयुक्ता तद्दर्शिनां चक्षुर्बंधापगमे विद्यमाना सती निवृत्ता। तथेदं प्रपंचाख्यं मायामात्रं द्वैतं रज्जुवन्मायाविवच्चाद्वैतं परमार्थतः। तस्मान्न कश्चित्प्रपंचः प्रवृत्तो निवृत्तो वास्ति। ननु शास्ता शास्त्रं शिष्य इति विकल्पः निवृत्त इत्यत्रोच्यते विकल्पो विनिवर्तेतेति। यदि केनचिद्धेतुना तत्वज्ञानाख्यकार्येण शास्तृशास्त्रादिर्विकल्पो हेतुतया कल्पितस्तथाप्यसौ बाधितो निवर्तेत। न तु तात्त्विकमद्वैतं प्रतिरोद्धुमर्हति। उपदेशात् उपदेशमुद्दिश्य तत्वज्ञानात्प्रागवस्थायामेव तत्वज्ञानहेतूपदेशनिमित्तोऽयं वादः शिष्यः शास्ता शास्त्रमिति। उपदेशकार्ये तु ज्ञाने निर्वृत्ते जाते परमार्थतत्वे द्वैतं न विद्यत इति। तस्मादिदं मानमित्यतस्तद्व्याख्याति।

॥प्रपंच इति॥ ॥इत्यत्रापीति॥ अनादीतिश्लोकयोर्विपर्ययपर्यवसायितर्करूपत्वादाद्यश्लोकेन सादित्वनिरासोऽनादित्वं च सिध्यति। द्वितीयेन कल्पितत्वनिरासोऽकल्पितत्वं च। अत एव न तद्वैक आहुरिति दृष्टांतवैषम्यमिति भावः। श्लोकयोर्भेदपदाभावेपि प्रपंचभेदेनैव भेदोऽभिधीयत इत्याह ॥भेदप्रपंच इति॥ ननु द्वितीयभावविकाररूपसत्तार्थकत्वाद्विदेः कथं विद्येतेत्यस्य उत्पद्येतेति व्याख्यानमित्यत आह ॥उत्पत्तिरपीति॥ अवांतरभेदविवक्षया द्वितीयभावविकारत्वमपि सत्ताया इति भावः। विदेरुक्तविधयोत्पत्त्यर्थत्वेपि तत्राप्रयोगादसाधुत्वमाशंक्य सत्तार्थस्यापि भवतेरुत्पत्तौ प्रयोगदर्शनात्समानन्यायेन विदेरप्युत्पत्तौ प्रयोगो नासाधुरित्यभिसंधाय भावार्थाधिकरणवार्तिकमुदाहरति ॥तेनेत्यादि॥ धात्वर्थभिन्ना भावना प्रत्ययप्रतिपाद्यास्तीति प्रस्तावे ननु भावनायाः प्रत्ययवाच्यत्वे धात्वर्थस्यैव निष्पाद्यत्वलक्षणक्रियारूपेण प्रत्ययेनाभिधानात् भावनात्वोपपत्तेर्भावयेद्यागेनेति क्रियाकरणतया भेदेन निर्देशोऽनुपपन्न इत्याशंक्य भवनक्रियाकर्तृकर्मनिष्ठप्रयोजकव्यापारत्वं धात्वर्थव्यावर्तकलक्षणमभिहितं तेनेत्यर्थः। भूतिषु भवनेषु कर्तृत्वं प्राप्तस्य भवतः उत्पद्यमानस्येति यावत्। अत्र उत्पद्यमानस्येति प्रयोक्तव्ये भूतिषु कर्तृत्वमित्यादिप्रयोगात् भवतेरुत्पत्तौ प्रयोगोऽवगम्यत इत्यर्थः ॥लभेतेति॥ क्वचिल्लभ्येतेति पाठो लेखकप्रमादात्। श्रौतस्यापि हेतोर्व्याप्त्यावश्यकतायामुपष्टंभकमाह ॥अत एवेति॥ शूर्पेण जुहोति तेन ह्यन्नं क्रियत इत्यत्र हिशब्दसूचितहेतुत्वकस्य होमसाधनतायामन्नकरणत्वस्य हेतोः प्रत्यक्षश्रुतहोमसाधनभावकस्य शूर्पस्यानेवंविधेन दर्विपिठरादिना विकल्पानुपपत्तेर्व्याप्त्यभावेनापरमार्थहेतुत्वे भाष्यस्थेन हेतुवदितिवतिप्रत्ययेन दर्शितः तद्व्यावर्त्यपरमार्थहेतुश्चतुर्गृहीतान्याज्यानि भवंति नह्यत्रानुयाजान्यक्षन् भवतीत्यादिकः। आतिथ्येष्टावनुयाजरहितायामष्टावुपभृति गृह्णातीति प्रकृतौ विहितस्योपभृत्यष्टगृहीतस्य चोदकप्राप्तस्य निवृत्त्यर्थं चतुर्गृहीते विधीयमानेऽनुयाजाभावस्य

(तरङ्गिणी)

हेतुत्वेनाभिहितस्य यत्र यत्रानुयाजाभावस्तत्र तत्राष्टगृहीताभाव इति ज्ञायते। प्रकृतौ चाष्टग्रहणस्य चतुष्टद्वयलक्षणार्थत्वद्योतनात् प्रयाजार्थं जुह्वां समानयने नियोगतोऽर्धमेव समानेयमिति ज्ञायत इत्यादिना व्याप्तिरुक्तेत्यर्थः ॥ अनुयाजा इति॥ अर्थानुवादोऽयं। वाक्यं तूदाहृतं द्वितीयांतम्। ॥ पूर्वत्रेति ॥

विभूतिं प्रसवं त्वन्ये मन्यंते सृष्टिचिंतकाः।
स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता।
इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिता

इत्यादिना सृष्टेरीश्वरेच्छाधीनत्वं स्वमतमित्युक्तम्। श्रुत्या मायामात्रमिदं द्वैतमित्यत्र मतांतरत्वद्योतकस्यान्यादिशब्दस्याभावेन तस्य स्वमतत्वविज्ञानात् स्वमते च सृष्टेरीश्वरेच्छाधीनत्वावगमात् मायामात्रमिदं द्वैतमित्यत्रापि मायाशब्देनेश्वरेच्छैव नत्वैंद्रजालिकादिसरूपा मायेत्यर्थः ॥ प्रभव इति ॥

प्रभवःसर्वभावानां सतामिति विनिश्चयः।
सर्वं जनयति प्राणश्चेतोंशून् पुरुषः पृथक् इति।

पूर्ववाक्ये सतामित्यनेन सत्यत्वपरेण पृथगित्यनेन भेदपरेण च विरोध इत्यर्थः। चेतोंशून् ज्ञानकिरणान् ॥ उत्तरत्र चेति॥ कल्पितो यदि केनचिदित्यस्य कल्पितत्वनिराकरणार्थकत्वेन व्याख्यास्यमानत्वात्तद्विरोध इत्यर्थः ॥ अविरुद्धेति॥ यथाश्रुतस्य मायाकल्पितत्वरूपमायामात्रत्वस्य निवर्त्यत्वनियतत्वेनानिवर्त्यत्वविरुद्धत्वादित्यर्थः ॥ इहेति॥ मायामात्रमिदं द्वैतमित्यत्रमात्रशब्देनेत्यर्थः ॥ तर्हीति ॥

निवृत्तेः सर्वभावानामीशानः प्रभुरव्ययः।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः

इत्यादिषु श्रुतं कथमित्यर्थः ॥ आहेति॥ श्रुतिरिति शेषः ॥ ल्यब्लोपेति॥ गम्यमानार्थत्वे सत्यप्रयुज्यमाने ल्यपि पंचमीत्यर्थः ॥ परममिति॥ परमार्थशब्दस्यावयुत्यानुवादोयं तदेकदेशग्रहणेन। अतो नाग्रिमासंगतिः ॥ अर्थमिति॥ नायमर्थशब्दः परमार्थशब्दैकदेशः किंत्वन्य एवेति बोध्यम्। ननु परमार्थशब्दस्य मिथ्याप्रतिद्वंद्विनि तात्विकेऽर्थे रूढत्वात्कथं परमार्थशब्देन स्वतंत्रार्थाभिधानमत आह ॥ तदिति॥ ग्राह्यत्वादित्यंतमेकं वाक्यम्। स्वतंत्रेऽर्थेपि तस्य स्मार्तरूढिरस्तीति भावः।

(तरङ्गिणी)

आण् नद्या इत्यादै यथा यूस्त्र्याख्यौ नदी इति परिभाषिता ईदंता स्थली वनी इत्यादिका नदीशब्देन गृह्यते। न तु गंगायमुनाद्याः तथात्रापीत्यर्थः। तर्हि नदीभिश्चेत्यादौ बहुवचनेपि लौकिकनदी न गृह्येतेत्यत उक्तम् ॥असतीति॥ तत्र बहुवचनं बाधकमित्यर्थः। ननु बहुत्वाल्लोकप्रसिद्धिर्बलवतीत्यत आह ॥यववराहेति॥ यववराहादिशब्दाः लोके प्रियंगुकाकादौ प्रसिद्धा अपि

वसंते सर्वसस्यानां जायते पत्रशातनं।
मोदमानाश्च तिष्ठति यवाः कणिशशालिनः

इति स्मृत्या वराहं गावोऽनुधावंतीति वाक्येन च दीर्घशूकसूकरार्था एव गृह्यंते यवमयश्चरुर्भवति वाराही उपानहावित्यादौ। न हि गोभिरनुगम्यमानः काको भवति किं तु गोसदृशः पशुरेवेत्यर्थः। ननूभयत्र रूढिकल्पने गौरवं परिभाषानुयोगेनोपपद्यतामित्यत आह ॥किं चेति॥ विप्रतिपन्नेऽस्मिन्वाक्ये परमार्थशब्देन यौगिकः स्वतंत्रलक्षणोऽर्थो गृह्यतां तत्र योगस्य संभवादित्यर्थः। ननु अक्षरैरेव बुध्यंते समुदायप्रसिद्धिषु। अर्थभानोपसंहारादितरा विप्रकृष्यत इति वार्तिकोक्तेः समुदाय प्रसिद्धिरूपायाः रूढेः श्रुतिस्थानीयाया वाक्यस्थानीयावयवप्रसिध्यपेक्षया बलवत्त्वस्य रथकाराधिकरणे स्थितत्वादिहापि परमार्थशब्देन समुदायप्रसिध्या तात्विकरूपएवार्थो गृह्यतामित्यत आह ॥न चेति॥ अवयवानामपि स्वार्थेऽवश्यं शक्तिराश्रयणीया। अन्यथाऽवयवप्रसिद्धिः समुदायप्रसिद्धिरिति विभागानुपपत्तेरिति भावः। नन्वेवं रथकाराधि-करणोक्तरूढिप्राबल्यभंग इत्यत आह ॥अत एवेति॥ सत्यमेतद्रूढिः प्रबलेति परं तु लब्धात्मिका तस्याः स्वात्मलाभो यत्र प्रमाणांतरेण पूर्वानुभूतावयवार्थरहितेऽर्थे शब्दप्रयोगो दृश्यते। तदुक्तं वार्तिके।

असत्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते।
तत्रानन्यगतित्वेन समुदायः प्रसिध्यती'ति।

एवं च यथा प्रोक्षणीशब्दे रूढिर्लब्धात्मिका न प्रबलेत्युक्तं यतः कारणादत एव परमार्थशब्दोपि तथैव। नत्वेतावता रूढिप्राबल्यभंग इत्यर्थः।

नामधेयपादे स्थितं। प्रोक्षणीष्वर्थसंयोगात्। प्रोक्षणीरासादयेत्यत्र प्रोक्षणीशब्दस्य उत्पवनादिसंस्कृतजले प्रयोगदर्शनात्संस्कारशब्दत्वे प्रोक्षणीभिरुद्वेजिताः स्म इति जातिमात्रनिबंधनो जले प्रयोगोऽनुपपन्नः। संस्कृतजलेपि जातिमात्रेण तत्प्रयोगसंभवात्। तस्माद्रूढ्या जातिशब्दोयमिति

(तरङ्गिणी)
प्राप्ते प्रोपसृष्टादुक्ष सेचन इति धातोर्ल्युटि ङीपि निष्पन्नस्य प्रोक्षणीशब्दस्य प्रकृष्टसेचनक्रियाकरणरूपयोगेनैव सर्वद्रवद्रव्यसाधारण इति सिद्धांतः। एवं च स्त्रीप्रत्यया-श्रयलिंगनिमित्तकस्य घृतादिषु बाधेपि चोदकप्राप्तस्य ईकाररहितस्य प्रोक्षणशब्दस्य न बाध इत्यर्थवानेव विचार इति।

नन्वेवं सर्वत्र यथाकथं चिद्योगस्य संभवादसत्स्ववयवार्थेष्वित्याद्युक्तमयुक्तमित्याशंकां परिजिहीर्षुर्वार्तिकमुदाहरति ॥उक्तमिति॥ प्रोक्षण्यधिकरण इति शेषः। वृक्षविशेषेऽश्व-कर्णशब्दवाच्येऽश्वसदृशकर्णयुक्तत्वादिरूपयोगासंभवेन तत्पुरस्कारेण वृक्षेऽश्वकर्णशब्दप्रयोगा-संभवात्तत्र तस्य रूढिः संभवतीत्यर्थः ॥मुख्यमिति॥ प्रथमोपस्थितमित्यर्थः। परमार्थशब्दस्य तात्विके रूढियोगार्थप्रतीतेः कथं योगमात्रेण स्वतंत्रार्थकत्वमित्यत आह ॥परमार्थेति॥ पंकजशब्दस्य कुमुद इवात्रापि रूढिरेव बोधिकेति भावः ॥निरस्येति॥ तन्निरासं बोधयित्वेत्यर्थः। ननु तर्कस्याप्रमाणत्वान्न कल्पितत्वनिरासबोधकत्वमत आह ॥तर्कत्वादिति॥ विपर्यय-पर्यवसानद्वारार्थबोधकत्वेन तर्कस्य प्रमाणत्वात्तत्सिद्धिरिति भावः ॥अज्ञात इति॥ ज्ञातेऽद्वैतं न विद्यत इत्यत्र नञः प्रश्लेषादेवंव्याख्यानमित्यर्थः ॥चतुष्टयमिति॥ कल्पितो यदीत्यत्र यदि कल्प्येतेति गम्यमानत्वाल्लिङ्चतुष्टं बोध्यं ॥विद्येतोत्पत्तिमिति॥ विद्येतेत्ययं शब्द उत्पत्ति-माहेत्यन्वयः ॥देवेति॥ ज्ञानानंदैकरस आत्मनि देवत्वादेर्मिथ्यात्वादित्यर्थः ॥मायामात्रमिति श्रुत्यर्थ इति॥ ननु मांडूकोपनिषद्विवरणरूपगौडपादीयवार्तिकस्थौ प्रपंचो यदीत्यादिश्लोकौ। न श्रुतिस्थौ। अत एव गौडपादीयवार्तिकभाष्यानंदगिरावुक्तम्। गौडपादाचार्यैर्मांडूक्योपनिषदं पठित्वा तद्व्याख्यानश्लोकावतरणमत्रैते श्लोका भवंति इत्यनेन कृतमिति। मांडूक्यस्थायाः नांतः प्रज्ञं न बहिः प्रज्ञमित्यादि श्रुतेर्विवरणरूपेषु निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्यय इत्यादिषु गौडपादीयवार्तिकश्लोकेषु मध्ये प्रपंचो यदीति श्लोकद्वयं पठ्यते। तत्कथमुच्यते श्रुत्यर्थ इति। मैवम्। आचार्यैः मांडूक्यभाष्ये

तन्वा स्वस्वामिसंबंधः प्रपंचोऽस्य शरीरिणः।
वस्तुतोसौ न चैवास्ति परमास्य वशेयतः।
तन्वादिकस्तथाप्येष ह्यभिमानात्प्रदृश्यते।
अतः स विद्यत इति ह्यंगीकारो भवेद्यदि।
तथापि भगवज्ज्ञानात्स निवर्तेदसंशय

इत्यादिना श्लोकयोर्व्याख्यातत्वात्तयोः श्रुति त्वमवसीयते। मांडूक्यभाष्ये अहमिदं ममेद-

(तरङ्गिणी)

मित्यादिस्वस्वामिभावरूपो द्वितीयः प्रपंचो यद्यपि जीवस्य विद्येत तथाप्यसौ भगवदिच्छाधीनस्तत्प्रसादान्निवर्तेत। महद्भिर्द्वितीयेन प्रकारेणाज्ञातम् अद्वैतम् इदं परब्रह्मादिवस्तु द्वैतम् अज्ञैर्द्विधा ज्ञातं विद्यमानप्रकारापेक्षया द्वितीयेन प्रकारेण ज्ञातम्। तत्र हेतुः परमार्थ इति। परमेश्वरात्। तस्यैव मायामात्रं तदिच्छया निर्मितं तदन्यथा ज्ञातं तस्मात्तदिच्छयैव निवर्तेत। अतो विकल्पः शरीरादिसंबंधः केनचिदज्ञानादिना कारणेन कल्पितोप्युपदेशान्निवर्तते अयं सतां वादः ज्ञाते सति ब्रह्मणि द्वैतमन्यथा ज्ञानं निवर्तत इति।

विकल्पो देहबंधादिः केनचित्कारणे न तु।
कल्पितो विनिवर्तेत गुरुवाक्यादसंशयः।
एष एव सतां वादो ज्ञाते ब्रह्मणि तत्वतः।

निवर्तेत तथाज्ञानं तत आनंदमेत्यसौ इति। इत्यादिना प्रमाणस्ववचनाभ्याम् आचार्यैरेतौ श्लोकौ व्याख्यातौ। ग्रंथकारेण तु तत्वनिर्णयाद्युक्तप्रकारेणात्रतर्कपरतया व्याख्याताविति बोध्यम्।

॥ मायामात्रमिति श्रुत्यर्थः ॥

## न्यायामृतकण्टकोद्धारः

ननु प्रपञ्चो यदि विद्येतेत्यस्यां श्रुतौ मिथ्यात्वं प्रतीयते। अत्र प्रपञ्चस्य मायामात्रत्वप्रतिपादनाद् अद्वैतस्यैव परमार्थत्वोक्तेश्चेत्यत आह प्रपञ्चो यदीति। ननु वादिसमयप्राप्तं कथं निराक्रियते श्रुत्या? तथा क्वाप्यदर्शनादित्यत आह यथेति। कथमस्य वाक्यस्यानादिसत्यपरत्वमित्यतो व्याख्याति तथाहीति। इति श्रुत्यर्थ इति। प्रथमश्लोकार्धार्थ इत्यर्थः। ननु विद्येतेत्यस्योत्पद्यतेति कथं व्याख्यानम्? विदेः सत्तार्थकत्वादित्यत आह विदेति। ननु सत्तार्थकस्योत्पत्तौ प्रयोगादर्शनात् कथमत्रोत्पत्तौ प्रयोग इत्यत आह अस्ति चेति। तेन भूतिषु उत्पत्तिषु कर्तृत्वं प्रतिपन्नस्य प्राप्तस्य विद्यते भवति उत्पद्यत इति प्रयोगात् घटादेर्यः प्रयोजको घटोत्पत्त्यनुकूलव्यापारवान् तस्य यो व्यापारस्तां भावनामाहुर्भावनाविद इति भट्टवार्तिकार्थः। पक्षान्तरमाह विद्लृलाभ इति। ननु लाभः कथमुत्पत्तिरित्यत आह उत्पत्तिरपीति। नन्वस्तित्वार्थत्वमेव विदेरस्तु प्रसिद्धत्वात् प्रसिद्धस्वीकारे बाधकाभावाच्चेत्यत आह अस्तित्वार्थत्वेत्विति। ननु श्रौतहेतौ व्याप्त्यभिधानस्य क्वाप्यदर्शनादिदमसांप्रदायिकमित्यत आह अत एवेति। अष्टावुपभृति गृह्णतीति वाक्येनोपभृत्यष्टग्रहणं विहितम्। यदष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तदित्यनेनाष्टग्रहणस्य प्रयोजनमुक्तम्। एवं च यत्र यागेऽनुयाजाभावस्तत्राष्टग्रहणं न कर्तव्यम्। कुत इत्यतो हेतुकथनार्थं न ह्यत्रानूयाजा इज्यन्त इत्यनेन हेतुरुक्तः। तत्र यत्रानूयाजाभावस्तत्राष्टग्राहणाभाव इति हेतुत्वसिद्धये श्रौतहेतावपि राणके व्याप्तिरुक्तेत्यर्थः।

(कण्टकोद्धारः)

तथाच श्रौतहेतावपि व्याप्तिरावश्यकीति तत्सिद्धये उत्पत्त्यर्थत्वमेव विदेः स्वीकर्तव्यमिति भावः। नन्विदं व्याख्यानमुत्तरार्धविरुद्धम्। तत्र मायामात्रशब्देन द्वैतमिथ्यात्वस्याभिधानादित्यत तन्निवर्त्यां शङ्कामाह नन्विति। मायया मीयते त्रायत इति व्युत्पत्त्येति भावः। तथाच मायामात्रशब्दस्यान्यार्थत्वात् नोत्तरार्धविरुद्धं पूर्वार्धव्याख्यानमिति भावः। नन्वैन्द्रजालिकत्वमेव मायामात्रशब्दार्थः किं न स्यदित्यत्राह पूर्वत्रेति। तथार्थेऽङ्गीक्रियमाणे तस्य पूर्वत्र मतान्तरत्वोक्तिविरोध इति भावः। मायामात्रशब्दस्य मिथ्यात्वार्थकत्वे पूर्वोत्तरविरोधश्चेत्याह प्रभव इति न चोत्तरवाक्ये कथं सत्वोक्तिः? तर्कबलेनानिवर्त्यत्वस्यैव तत्र प्रतीतेरिति वाच्यम्। अनिवर्त्यत्वशब्देनाबाध्यत्वोक्त्येष्टसिद्धेः। अन्यथा व्याप्त्यभावेन तर्काभासत्वं स्यादिति भावः। ननु प्रपञ्चस्यापि सत्यत्वेऽद्वैतं परमार्थत इति कथम्? तत्राद्वैतस्यैव सत्यत्वोक्तेरित्यतस्तन्निवर्त्यां शङ्कां दर्शयति नहीति। यद्वाऽनादिसत्यत्वपरत्वेन श्लोकद्वयव्याख्यानेऽद्वैतः सर्वभावानामित्यनेन विरोध इत्यत आह तर्हीति। परमार्थशब्दस्य स्वतन्त्रवाचित्वे किं प्रमाणमित्यतः स्मार्तपरिभाषैवेत्याह स्वतन्त्रमिति। ननु पारिभाषिकार्थापेक्षया सर्वलोकसिद्ध सत्यरूपार्थग्रहणमेव ज्याय इत्यत आह परिभाषायाश्चेति। अन्यथा परिभाषाकरणमनर्थकमापद्येतेति भावः। आण्नद्या इत्यादाविति। अत्र हि कृतनदीसंज्ञयोरेव ग्रहणम्। न तु प्रसिद्धाया नद्याः। युक्त्यन्तरमाह यववराहेति।

स्मृतिपादे पञ्चमाधिकरणे चिन्तितम्। दर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात्। यवमयश्चरुर्भवति। वाराही चोपानहावुपमुञ्चते। वैतसे कटे प्राजापत्यांश्चिनोतीति विधिवाक्येषु यववराह वेतस शब्दाः श्रूयन्ते। तत्र आर्याः यवशब्दं दीर्घशूके वराहशब्दं सूकरे वेतसशब्दं जम्बूवृक्षेषु प्रयुञ्जते। म्लेञ्छास्तु यवशब्दं प्रियङ्गुषु, वराहशब्दं वायसे, वेतसशब्दं वञ्जलके प्रयुञ्जते। तथाच संशयः। किं यवादिशब्दानां दीर्घशूकादिकमभिधेयं, किंवा प्रियङ्ग्वादिकमिति। पूर्वपक्षस्तु। लोकव्यवहारेण निश्चेतव्येषु शब्दार्थेषु आर्यम्लेञ्छ प्रसिध्योः समानबलत्वाद् उभयविधा अपि शब्दार्था विकल्पेन स्वीकार्या इति। सिद्धान्तस्तु। शास्त्रीय धर्मावबोधे शास्त्रप्रसिद्धिर्बलीयसी प्रत्यासन्नत्वात् अविच्छिन्न पारम्पर्या गतत्वाच्च। शास्त्रे यवादिशब्दानां दीर्घशूकादिषु कथं प्रसिद्धिरिति चेत् इत्थम्। यवविध्यर्थवादे चैवं श्रूयते यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति। इतरौषधिविनाशकाले येषां वृद्धिर्भवति ते यवशब्देन ग्राह्याः। तादृशाश्च दीर्घशूका एव। न प्रियङ्गवः। तेषामितरौषधिपाकात् पूर्वं पच्यमानत्वात्। उपानद् विध्यर्थवादश्चेत्थं भवति। वराहं गावोऽनुधावन्तीति गवानुधावनं सूकरे संभवति, न कृष्णशकुनौ। तथा वेतसविध्यर्थवादे अप्सुजो वैतस इति श्रूयते। अप्सुजत्वं च जम्बुवृक्षेष्वेव संभवति, न वञ्जुलके। तस्माद् वाक्यशेषानुगुण्यात् यवादिशब्दानां दीर्घशूकादय एवार्था ग्राह्याः। न प्रियङ्ग्वादय इति भाष्यकाराः। इदमधिकरणं वार्तिककारो नानुमेने। कुतः? यदि वाक्यशेषानुरोधेन निर्णयस्तर्हि संदिग्धेषु वाक्यशेषादित्यनेन गतार्थम्। किंच यत्र वाक्यशेषो नास्ति तत्रार्यम्लेच्छप्रसिध्योस्तुल्यबलत्वात् विकल्पेनोभयार्थता स्यात्। तथाच वाक्यशेषानपेक्षयैवाधिकरणरचना कर्तव्या। साचेत्थम्। पीलुशब्दमार्या वृक्षेषु प्रयुञ्जते। म्लेच्छास्तु हस्तिनि। तत्र चिन्त्यते किं तुल्यबलत्वमुतार्यप्रसिद्धिर्बलीयसीति। पूर्वपक्षस्तु यथा शास्त्रप्रमाणको धर्मः। तत्र शास्त्राभियोगशून्येभ्यो म्लेच्छेभ्यस्तदभियोगशालिनामार्याणां बलीयस्त्वं भवतु। इह च शब्दार्थो व्यवहारगम्यः।

(कण्टकोद्धारः)

स च म्लेच्छानामप्यविशिष्ट इति प्रमाणाविशेषादविशिष्टो द्वयोरपि शब्दार्थः। न च शिष्टव्यवहारस्यावध्यस्मरणात् अनादित्वमिति वाच्यम्। अनादित्वकारणस्यावध्य स्मरणस्य म्लेच्छव्यवहारेष्वविशेषात्। तस्मात् सममेवाभिधानविप्रतिपत्तिरिति। सिद्धान्तस्तु। न समानमेवोभयोः शब्दार्थत्वम्। कुतः? अनेकादृष्टशक्तिकल्पनाप्रसङ्गात्। शब्दप्रयोगे चान्यतरस्यानिश्चयात् व्यवहारविलोपश्चस्यात्। न च कदाचित् कस्यचिदुपादानमिति वाच्यम्। अष्टदोषदुष्टविकल्पापत्तेः। तर्हि कथमुभयत्र प्रयोग इति वाच्यम्। एकत्र मुख्यत्वेनान्यत्र गौणत्वेन तदुपपत्तेः। न च कुत्र मुख्यत्वं, कुत्र चामुख्यत्वमिति वाच्यम्। आर्यप्रयोगे मुख्यत्वं, म्लेच्छप्रयोगे गौणत्वमिति निश्चयोपपत्तेः। कथं तर्हि म्लेच्छानां तत्र मुख्याभिधानपरम्परानुवृत्तिरिति चेत् गौणप्रयोगे मुख्यत्वाभिमानेन तत्कथनेन चान्येषां तदुपपत्तेः। नन्वेवं तर्हि नानार्थतोच्छेद इति चेन्न। यत्र प्रयोगे विशेषानवधारणं तत्र नानार्थत्वसंभवात्। न च प्रकृतेऽपि विशेषानवधारणमिति वाच्यम्। अभियुक्तत्वानभियुक्तत्वविशेषसद्भावात्। अभियुक्ता हि शब्दैकसमधिगम्य धर्माधर्मविप्लावलिप्सया शब्दतत्वार्थं विचिन्त्य व्यवहरन्ति। म्लेच्छास्तु दृष्टस्य व्यवहारस्य यथाकथंचिदुपपत्तेः प्रयोजनाभावान्नाविप्लुतौ यतन्ते। अतस्तेषु विप्लुतिसंभवात् आर्यप्रसिध्यैव निर्दोषया बलीयस्यार्थसिद्धिरिति पील्वादिशब्दा वृक्षाभिधायिन इति।

तथाच यथा यववराहाधिकरणे यववराहादि शब्दैः शास्त्रीयप्रसिद्धिबलेन दीर्घशूकादिवाचित्वं तथा परमार्थशब्देन शास्त्रीयप्रसिद्धिबलेन स्वतन्त्र मेवाभिधीयत इति भावः। किंच परमार्थशब्दस्य योगेन स्वतन्त्रपरतैव युक्ता। न च रूढिर्योगस्य बाधिका। रूढिर्योगमपहरतीति न्यायादिति वाच्यम्। योगेनैव प्रयोगोपपत्तौ समुदायशक्तिकल्पकाभावात्। यत्र रूढिः सिद्धास्ति तत्रैव तन्न्यायस्य प्रवृत्तिरित्यभिप्रायेणाह किञ्चेति। तर्हि तात्विके कथं तच्छब्द प्रयोग इति चेन्न। क्लृप्तावयवशक्त्यैव तदुपपत्तेः। न च प्रकृते परमार्थशब्देन यत्किञ्चित् तात्विकं ग्राह्यं नियामकाभावादिति वाच्यम्। मुख्यत्वस्यैव नियामकत्वादिति भावः। अत एव प्रोक्षण्यधिकरणेति।

नामधेयपादे चिन्तितम्। प्रोक्षणीष्वर्थसंयोगात्। दर्शपूर्णमासयोः श्रूयते प्रोक्षणीरासादयतीति। तत्र संशयः किं प्रोक्षणीशब्दः संस्कारनिमित्तको जातिनिमित्तको यौगिको वेति। पूर्वपक्षस्तु। संस्कारनिमित्तक एव उत्पवनादिसंस्कृतास्वप्सु तत्प्रयोगस्य सार्वत्रिकत्वात्। न चैवमन्यत्र प्रयोगो न स्यात् संस्काराभावादिति वाच्यम् अन्यत्र लक्षणयापि प्रयोगोपपत्तेः। अस्तु वा जातिनिमित्तकः। प्रोक्षणीभिरूद्वेजिताः स्मेति देशविशेषे जातिमात्रे प्रयोगात्। न चैवं संस्कृते प्रयोगः कथमिति वाच्यम्। तत्राप्यस्वजातेः सत्वेन तत्पुरस्कारेणैव प्रयोगोपपत्तेः। उभयथापि रूढ इति। न च यौगिक एव किं न स्यात् प्रकृष्टमुक्षणं याभिरिति योगस्य क्लृप्तत्वादिति वाच्यम्। योगापेक्षया रूढेर्बलीयस्त्वात्। अवयवद्वारेण विशिष्टार्थप्रतीतिर्वाक्यादिव वाक्यार्थप्रतीतिर्योग्यतादिज्ञानसापेक्षत्वात् विलम्बिता। समुदायशक्त्या तु पदार्थमर्यादया शीघ्रेति सैव बलीयसीति। सिद्धान्तस्तु रूढेर्योगबाधकत्वं तदा यदि रूढिः क्लृप्ता स्यात्। न चैवम्। योगेनैव प्रयोगोपपत्तौ रूढिकल्पनायामेव न प्रमाणम्। प्रकृते चोक्षसेचन इत्यस्मात् प्रोपसृष्टात् करणे ल्युटि कृते प्रोक्षणीशब्दो निष्पद्यते। तथा

(कण्टकोद्धारः)

**चाप्सु प्रकृष्टोक्षणहेतुत्वात् स्त्रीलिङ्ग प्रोक्षणीशब्दवाच्यत्वोपपत्तेर्नादृष्टरूढिकल्पनेति कथं तस्या योगबाधकत्वम्? एवमेव परमार्थशब्दस्यापि योगेनैव स्वतन्त्राद्यर्थपरत्वसंभवे न रूढिकल्पनेति। योगसंभवे रूढिर्नकल्पनीयेत्यत्र भट्टवार्तिक संमतिमाह उक्तंचेति। एवं चाश्वकर्णादिशब्देऽपि योग एवास्त्विति भावः। ननु परमार्थशब्दस्य यौगिकत्वे परमत्वस्य सर्वत्र सत्वात् स्वतन्त्रपरत्वमेव कुत इत्यत आह स्वतन्त्र एव चेति। ननु परमार्थशब्दस्य यदि तात्विकत्वे रूढिर्न स्यात् तर्हि पङ्कजादिशब्दानामपि पद्मे रूढिर्न स्यात्। योगेनैवोपपत्तेः। न च योगार्थप्रतीतिं विनापि रूढार्थप्रतीतेस्तत्र रूढिरिति वाच्यम्। परमार्थशब्देऽपि तुल्यत्वात्। एवं च योगरूढिभ्यां केवलयोगापहारस्य पङ्कजादौ दृष्टत्वात् प्रकृतेऽपि तात्विके ताभ्यां केवलयोगबाधसंभवात् न स्वतन्त्रपरता युक्तेत्यत आह परमार्थशब्दस्येति। बाधकवशात् केवल योगार्थपरत्वमिति भावः। निर्णीतमद्वैतः सर्वभावानामिति श्रुतेरर्थं दर्शयति तथाचेति। केचित्त्विति। अत्र तसिल् प्रत्यय वैयर्थ्यं प्रकृतानुपयुक्तत्वं चास्वरसबीजं द्रष्टव्यम्। ननु श्लोकद्वये यथास्थितवस्तुकथनं किं न स्यात्? तर्कपरत्वे प्रमाणाभावादित्यत आह श्लोकयोरिति। केचित्त्विति। देवमनुष्यादिरूपप्रपञ्चस्यापि अर्थक्रियाकारित्वेन सत्यत्वात् तन्मिथ्यात्वपरत्वमयुक्तमिति अस्वरसबीजं द्रष्टव्यम्।**

**मायामात्रमिति श्रुत्यर्थः।**

## न्यायामृतप्रकाशः

सत्योपाधिकृतत्वं सत्योपाधिजन्यत्वम्। द्वितीये विकल्प इति श्लोके। अनादिसत्यत्वं आद्यश्लोके पंचविधभेदस्यानादित्वं द्वितीयश्लोके सत्यत्वमिति विवेकः। नन्वनादिश्रुतेः कथमाधुनिकभास्करादिमतप्राप्तनिषेधकत्वं अदर्शनादित्यत आह ॥यथेति ॥ ॥बौद्धेति॥ प्रवाहतोऽनादीति पूरणीयम्। श्लोकाभ्यां कथमनादित्वं सत्यत्वं लभ्यत इत्यतस्तौ व्याख्यातुं प्रतिजानीते ॥तथाहीति॥ अनादिसत्यत्वमेवैतत् श्लोकप्रतिपाद्यतया प्रसिद्धमित्यर्थः। आद्यश्लोकं व्याचष्टे ॥भेदेति॥ भेदरूपः प्रपंचः। विद्यतेत्यस्य उत्पत्त्यर्थत्वं व्युत्पादयति ॥विदेति॥ तर्हि प्रकृते कथमुत्पत्तिलाभ इत्यत आह ॥उपत्तिरपीति॥ असतः सत्तासंबंधरूपत्वाज्जनेरिति भावः। ननु विद्यतेरुत्पत्त्यर्थत्वेपि तत्राप्रयोगादसाधुत्वमाशंक्य सत्तार्थस्य भवतेरुत्पत्तौ प्रयोगदर्शनात्समानन्यायेन विदेरप्युत्पत्तौ प्रयोगो नासाधुरित्यभिसंधाय भावनार्थाधिकरणवार्तिकमुदाहरति ॥तेनेति॥ यजेतेत्यादौ धात्वर्थभूतयागातिरिक्ताप्रयत्नरूपा भावना लिङ्वाच्यास्तीत्याहानेन श्लोकेन। अयमर्थः। येन कारणेन धात्वर्थस्यैव भावनात्वे यागं भावयेदित्यादिप्रयोगायोगः "भावनैव प्रयत्नात्मा सदाख्यातस्य गोचरा" इत्यादिवाक्यविरोधश्च तेन कारणेन भूतिषु भवनेषु उत्पत्तिषु कर्तृत्वं प्रतिपन्नस्य प्राप्तस्य भवतः उत्पद्यमानस्येति यावत्। वस्तुनो यागादेः प्रयोजकक्रियां उत्पत्त्यनुकूलव्यापारं प्रयत्नरूपं भावनास्वरूपविदः परीक्षकाः लिङ्वाच्यां भावनां आहुरित्यर्थः। तथाच यजेतेत्यस्य यागं भावयेत् यागविषयकं यत्नं कुर्यादित्यर्थः पर्यवस्यतीति ज्ञातव्यम्। एवं चात्र वार्तिके उत्पद्यमानस्येति वक्तव्ये भूतिषु कर्तृत्वं प्रतिपन्नस्येति प्रयोगाद्भवतेरुत्पत्तौ प्रयोगोऽवगम्यत इत्यर्थः। तथाच तन्यायेन विदेरुत्पत्तौ प्रयोगो युक्त इति भावः। प्रकारांतरेण विद्येतेत्यस्य उत्पद्येतेति

(प्रकाशः)

व्याख्यानमुपपादयति ॥ विद्धुलाभ इति॥ लाभार्थकत्वेप्युत्पत्तिरर्थतया कथमागतेत्यत आह ॥उत्पत्तिरपीति॥ पराभिमतार्थे वाधकमाह ॥अस्तित्वेति॥ विद्येतेत्यस्येति शेषः ॥व्याप्त्यभावादिति॥ गगनादौ व्यभिचारादिति भावः। ननु निवृत्तिप्रयोजकत्वेनोक्तस्यास्तित्वहेतोः श्रौतत्वेन तत्र न व्याप्त्यपेक्षेत्यतो मीमांसाग्रंथविरोध इत्याह ॥अत एवेति॥ श्रौतस्यापि हेतोर्व्याप्त्यभावे आभासत्वमेव भवति यतोऽत एवेत्यर्थः ॥नह्यत्रानूयाजा इति॥ अस्त्यत्र मीमांसासंप्रदायविशेषः। आतिथ्येष्टिर्नाम काचिदिष्टिः उपभृन्नामकेष्टिप्रकृतिकाऽस्ति। तत्र चोपभृन्नामकेष्टौ प्रयाजानुयाजसंज्ञकौ यागौ वर्तेते। यथा ''अष्टावुपभृतिगृह्णाती''ति होमास्तं स्रुवे स्रुचा पात्रस्थमाज्यं अष्टवारं ग्रहीतव्यमिति विहितम्। एवंच ''प्रकृतिवद्विकृतिः कर्तव्ये''ति न्यायेन आतिथ्येष्टावपित्वरांगवदष्टगृहीताज्यत्वं प्राप्तं तत्रातिथ्येष्टाविदमाम्नायते ''चतुर्गृहीतान्याज्यानि भवंति। नह्यत्रानुयाजन्यजन्भवती''ति। यथाच तु गृहीतान्याज्यानि भवंति नह्यत्रानूयाजा इज्यंत इति। एवं चात्र नह्यत्रेति हेतोरेवोक्त्या व्याप्तेरनुक्तत्वात् अतिथ्येष्टिः चतुर्गृहीताज्यवती अष्टगृहीताज्यवती न भवतीति यावत्। अनूयाजशून्यत्वात्। यत्रानुयाजाभावस्तत्राष्ट-गृहीताज्यवत्त्वाभाव इति श्रौतहेतोर्व्याप्तिः। राणके शाबरभाष्यटीकायामुक्तेत्यर्थः। अन्यथा तदुपपादनं व्यर्थं स्यादिति भावः। अर्थानुवादोयं वाक्यं तूदाहृतम्। द्वितीयांतमित्येतत् द्वितीयवाक्यादर्शनमूलकमिति ज्ञातव्यम्। मायामात्रमित्येतदवतारयति ॥नन्विति ॥ ॥पूर्वत्रेति॥ प्रपंच इति श्लोकापेक्षया पूर्वं मांडूक इत्यर्थः। इतोपि न मायाकल्पितत्वं मायामात्रशब्दार्थ इत्याह ॥प्रभव इति ॥ ॥उत्तरत्रेति॥ ''कल्पितो यदिकेनचि''दित्यस्य कल्पितत्वनिराकरणपरतया व्याख्यास्यमानत्वात्तद्विरोध इत्यर्थः ॥सत्त्वोक्तेरिति॥ सतां सत्त्ववतां सर्वभवानामिति सर्वभावानां सत्त्वोक्तेरित्यर्थः ॥अविरुद्धार्थस्येति॥ सचाविरुद्धोऽर्थ ईश्वरेच्छाधीनत्वरूप एव न मायाकल्पितत्वरूपः। मायाकल्पितत्वमायारूपमात्रत्वस्य निवर्त्यत्वनियतत्वेनानिवर्त्यत्वविरुद्धत्वादिति भावः ॥इहेति॥ द्वितीयार्धे मायामात्रशब्देनेत्यर्थः ॥ल्यब्लोपेति॥ ल्यब्लोपे कर्मण्यधिकरणे च पंचमी वाच्येति वार्तिकादित्यर्थः। तदुदाहरणं तु प्रासादात्प्रेक्षते आसनात्प्रेक्षत इति प्रासादमधिरुह्य प्रेक्षते आसने उपविश्य प्रेक्षत इति ततः प्रतीतेः ॥तद्वत् अत्रापि कर्मणि पञ्चमीति भावः॥ (अत्र ग्रन्थपातः)......

## १३. अनन्तमिति श्रुत्यर्थविचारः

**यत्तु तत्त्वप्रदीपिकायाम् ''सत्यं ज्ञानमनन्त'' मित्यनन्तशब्दस्तत्र माना-मित्युक्तम्। तन्न, अन्तशब्दो हि परिच्छेदे व्युत्पन्नः, न तु परिच्छिन्ने। तथा चाभेदस्यापरिच्छेदरूपत्वेऽपि यथा देशाद्यपरिच्छेदाभिप्रायेणाकाशोऽनन्त इत्युक्ते देशादेराकाशतुल्यतया सत्त्वे सत्येव तदपरिच्छेदमात्रं सिध्यति, न तु देशादेर्मिथ्यात्वं तथेहापि वस्तुनो घटादेर्जीवचैतन्यवद् ब्रह्मतुल्यतया सत्त्वे सत्येव (प्रतीयमानभेदत्यागेन) ''विरुद्धांशत्यागेन'' ब्रह्मण्यभेदरूपं वस्त्वपरिच्छेदमात्रं सिध्येत्। न तु वस्तुनो मिथ्यात्वम्। जीवस्वरूपं सत्यं विश्वं तु मिथ्येति विभागस्त्वद्याप्यसिद्धः। वस्तुतस्त्वभेदो**

नापरिच्छेदः, परिच्छन्नाद्भेदाभावे अपरिच्छिन्नत्वायोगात्। कालापरिच्छिन्नेऽपि परमाण्वादौ देशपरिच्छेदेन परिच्छिन्नत्वबुद्धिवद् उभयापरिच्छिन्ने गगनादौ भेदमात्रेण परिच्छिन्नत्वबुद्धेरभावाच्च। अनन्तपदेनैव परिच्छिन्नाद् व्यावृत्तेस्त्वयैवोक्तत्वाच्च। भिन्न इत्यर्थे परिच्छिन्न इत्यप्रयोगाच्च। तस्माद् देशकालगुणापरिच्छेद एवानंतशब्दार्थः।

अनंतमिति श्रुत्यर्थः।

## न्यायामृततरङ्गिणी

ननु द्वितीयवस्तुकृतपरिच्छेदाभावार्थकेनानंतशब्देन द्वितीयाभावसिद्धेः स तत्र मानमित्यत-स्तदर्थमाह ॥अंतशब्दो हीति॥ न विद्यते अंतः परिच्छेदो भेदो यस्ये त्यर्थकरणे वृक्षस्य शाखादित इव ब्रह्मणः सर्वाभिन्नत्वं सिद्धति न तु शाखादेरिव सर्वस्य मिथ्यात्वमित्यर्थः ॥नत्विति॥ अंतशब्दस्य परिच्छिन्नार्थत्वे तु न विद्यते अंतः परिच्छिन्नं यस्येति करणे द्वितीयनिषेधो यद्यपि सिध्यति तथापि न तस्य तदर्थत्वमित्यर्थः ॥तुल्यतयेति॥ तुल्ये इत्यर्थः। ननु प्रत्यक्षविरोधान्न घटाद्यभेदः सिध्यतीत्यत आह ॥विरुद्धेति॥ प्रत्यक्षगृहीतं व्यावहारिकं घटब्रह्मभेदं त्यक्त्वा तदविरुद्धं तात्विकाभेदं गृह्णात्वित्यर्थः ॥वस्तुतस्त्विति॥ ब्रह्मणः परिच्छिन्नाद्भेदोऽस्ति न वा। आद्ये परिच्छिन्नत्वापत्तिः। परिच्छिनाद्भेदे सत्यपि यद्यपरिच्छिन्नत्वं तर्हि घटादितो भेदेपि ब्रह्मापरिच्छिन्नमस्त्विति न सर्वाभेदसिद्धिः। अंत्ये दोषमाह ॥परिच्छिन्नादिति॥ न परिच्छिन्नमपरिच्छिन्नमिति ह्युच्यते। अन्यथा हि परिच्छिन्नस्याप्य-परिच्छिन्नत्वापत्तिरित्यर्थः ॥उभयेति॥ तथा च व्यावर्त्याभावान्नाभेदो परिच्छेद इति भावः ॥अनंतपदेनेति॥ तथा च सर्वाभेदस्यानंतशब्दार्थत्वे विरोध इत्यर्थः ॥भिन्न इति॥ भिन्नस्य परिच्छिन्नशब्देनानभिधानादभिन्नमपरिच्छिन्नशब्देनाभिधीयत इत्यर्थः। स्वमतेनानंतशब्दार्थमाह ॥तस्मादिति॥ ननु ब्रह्मणो गुणापरिच्छिन्नत्वं नाम ब्रह्मगतगुणानां देशकालापरिच्छिन्नत्वमात्रं नत्वतिरिक्तं किंचिदस्ति। कालाद्यपरिच्छिन्ने गगनादौ गुणपरिच्छेदमात्रेण परिच्छिन्नत्वबुद्धेरभावाच्च। अल्पगुणे परिच्छिन्न इत्यप्रयोगाच्चेति चेन्नैवम्। देशाद्यपरिच्छिन्नगुणवत्त्वमेव गुणतो परिच्छिन्नत्वम्। अन्यथा घटप्रागभावध्वंसयोर्विनाशोत्पत्ती एव घटस्योत्पत्तिविनाशाविति घटस्य ते पृथक् न सिध्येयाताम्। देशाद्यपरिच्छिन्नेपि श्रीतत्वे गुणपरिच्छेदेन तद्बुद्धिप्रयोगयोः 'परो दिवा पर एना पृथिव्यैतावती महिना संबभूवे'ति दृष्टत्वेन तयोरिष्टत्वाच्च। मय्यनंतगुणेऽनंते गुणतोनंतविग्रह इति स्मृतेश्च।

॥अनंतमिति श्रुत्यर्थः॥

### न्यायामृतकण्टकोद्धारः

ननु सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्रानन्तशब्द एव मिथ्यात्वे प्रमाणम्। अनन्तशब्देन त्रिविधान्यराहित्य मुच्यते। तत्र वस्त्वन्तराहित्यं नाम वस्तु प्रतियोगिकभेद शून्यत्वम्। एवं च वस्तुनः प्रपञ्चस्य साक्षात् ब्रह्माभेदासंभवात् कल्पितत्व एव पर्यवस्यतीत्यनन्त शब्द एव मिथ्यात्वे प्रमाणमित्यत आह यत्त्विति। न तु परिच्छिन्न इति। अन्तशब्दस्य परिच्छिन्न परत्वेऽनन्तमित्यत्र बहुव्रीह्यसंभवः। तत्पुरुषेऽनन्तमिति नपुंसकानुपपत्तिः। परिच्छिन्नभिन्नत्वे मिथ्यात्वासिद्धिश्चेति द्रष्टव्यम्। तथाचेति। इदं परमता-भिप्रायेणाभ्युपगममात्रम्। अत एवापि शब्दः। वक्ष्यमाणरीत्याभेदस्यापरिच्छेदरूपत्वासंभवादिति द्रष्टव्यम्। ननु जीवस्य सत्यत्वात् तत्र विरुद्धांशत्यागेनाभेदमात्रसिद्धिः। प्रपञ्चस्य तु मिथ्यात्वेन तत्राभेदोक्त्या मिथत्यात्वमेव सिध्यतीत्यत आह जीवस्वरूपमिति। तथाचान्योन्याश्रय इति भावः। अपरिच्छेदोऽभेद इत्यङ्गीकृत्य दूषणमुक्तम्। इदानीमभेदो नापरिच्छेदः प्रमाणाभावात् विपरीतप्रमाणसद्भावाच्चेत्याशयेनाह वस्तुतस्त्विति। ननु यद्यभेदो नापरिच्छेदशब्दार्थस्तर्हि तस्य कोऽर्थ इत्यत आह तस्मादिति। अभेदरूपार्थासंभवात्। देशेति। देशकालगुणेयत्ताशून्यत्वमित्यर्थः।

अनन्तमिति श्रुत्यर्थः।

## १४. इन्द्रो मायाभिरिति श्रुत्यर्थविचारः

''इन्द्रो मायभिः पुरुरूप ईयत'' इत्यत्रापीश्वरस्य विचित्रशक्ति-भिर्मत्स्याद्यनेकरूपत्वमेवोच्यते। न त्वज्ञानेन घटादिरूपत्वम्। रूपं रूपं प्रतिरूपो बभूव इति पूर्वोक्तानां जीवाख्यप्रतिबिंबानि प्रतिबिंबभूतभगवद्रूपाणामेवेह रूपशब्देन प्रत्यभिज्ञानात्, उत्तरत्र च ''अयं वै हरयोऽवं वै दश च सहस्राणि च बहूनि चानंतानि चेति हरिशब्दवाच्यविष्णुरूपाणां दशत्वादिना बहुत्वोक्तेः। ''तदेतद् ब्रह्मापूर्वमनपर''मित्यादिना तेषां रूपाणां ब्रह्मत्वोक्तेश्च। चिन्मात्रस्यैव नानारूप-प्रपंचाधिष्ठानत्वेन परमैश्वर्यवाचीन्द्रशब्दास्वारस्याच्च। ''मायां तु प्रकृतिं विद्यादि'' त्यस्यापि मायया सन्निरुद्ध इति पूर्वोक्ता या माया सा प्रकृतिः त्रिगुणात्मकं प्रधानमित्यर्थः। न तु या प्रकृतिर्जगदुपादानं सा माया मिथ्येति पूर्वनिर्दिष्टस्य मायाशब्दार्थस्य बुभुत्सितत्वात् प्राथम्येन मायाया एवोद्देश्यत्वाच्च। प्रकृतिशब्दस्य श्रुतिषु प्रधाने प्रसिद्धत्वाच्च। मायाशब्दस्य सत्येऽपि प्रयोगाच्च।

इन्द्रो मायाभिरित्यादिश्रुत्यर्थः।

## न्यायामृततरङ्गिणी

ननु 'इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्। रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इंद्रो मायाभिः पुरुरूप ईयते युक्ताह्यस्य हरयः शतादशेत्ययं वै हरयोऽयं वै दशसहस्राणि बहूनि चानंतानि तदेतद्ब्रह्मापूर्वमनपरमनंतरमवाह्यमयमात्मा ब्रह्मा सर्वानुभूरित्यनुशासनम्' इति श्रुतौ सर्वस्य ब्रह्मरूपत्वं प्रतिपाद्यते। तथा हिबृहदारण्यकभाष्ये व्याख्यातम्। यन्मधु प्रवर्ग्यप्रकरणे सूचितं नाविष्कृतम् इहापि इयं पृथिवीत्यादिना पूर्वमनंतरनिर्दिष्टं यच्च त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामित्यत्र कक्ष्यशब्देन निर्दिष्टं कक्ष्यं गोप्यम् आत्मसंबंधित्वात्तद्विज्ञानाख्यं मधु प्रस्तुतं तदिदं मधु अथर्वणः कुले भवो दध्यङ् एतन्नामा ऋषिः अश्विभ्यामुवाच। कीदृशं तदात्मज्ञानरूपं मधु इत्याशंकायामुच्यते तदेतत् मधु ऋषिर्मंत्रः पश्यन्नपि रूपं रूपमित्यनेन मंत्रेण परमेश्वर एव हि नामरूपे कुर्वाणो यादृक्संस्थानौ मातापितरौ तत्संस्थानस्तादृग्रूप एव पुत्रादिरूपेण जायते। न हि चतुष्पदो द्विपाज्जायते। द्विपदो वा चतुष्पात्। किमर्थं पुनः प्रतिरूपागमनं तस्येत्यत उच्यते तदस्यात्मनो रूपं प्रति चक्षणाय प्रतिख्यापनाय। यदि हि कार्यकारणात्मना नामरूपेन व्याक्रियेते तदास्यात्मनो निरुपाधिकं प्रज्ञानघनाख्यं रूपं न प्रतिख्यायेत। इंद्रः परमेश्वरो नामरूपमिथ्याभिमानरूपाभिर्मायाभिः न तु परमार्थतः पुरुषो बहुरूपो बभूव एकरूप एव सन्। कस्मात्पुनः कारणात्। रथे वाजिन इव। स्वविषयप्रकाशनाहि यस्मात् हरणात् इंद्रियाख्या हरयः युक्ताः संबंधाः। ते च प्राणिभेदबाहुल्यात् शता शतानि दश च तस्मादिंद्रियविषयबाहुल्यात्तत्प्रकाशनायैव युक्तानींद्रियाणि नात्मानं प्रकाशयंति। परांचि खानि व्यतृणत्स्वयंभूरिति हि काठके। तस्मात्तैरेव विषयस्वरूपैरीयते न प्रज्ञानघनेन स्वेन रूपेण। एवं तर्ह्ययमन्यः परमेश्वरोऽन्ये च हरय इति प्राप्त उच्यते। अयं वै हरयोयं वै दशेत्यादि प्राणिबाहुल्यात्। किं बहुना तदेतत् ब्रह्मणः आत्मा अपूर्वं नास्य कारणं पूर्वं वर्तते अनपरं नास्यापरं कार्यं वर्तते नास्य जात्यंतरमंतराले विद्यत इत्यनंतरम्। नास्य बहिर्वर्तत इत्यबाह्यम्। किं पुनस्तन्निरंतरं ब्रह्म अयमात्मा कोऽसौ यः प्रत्यगात्मा श्रोता द्रष्टा मंता विज्ञाता सर्वात्मना सर्वमनुभवतीति सर्वानुभूः। इत्येतदनुशासनं सर्ववेदांतोपदेश इति। तस्मादिदमद्वैते मानमित्यत स्तद्व्याख्याति ॥ इत्यत्रापीति॥ न ह्यत्र पूर्वार्धर्चे पितृसंबंधेन बहुरूपत्वं परमेश्वरस्योच्यते किं तु जीवाख्यप्रतिबिंबान्प्रति तदुपास्यानि बिंबाख्यानि भगवद्रूपाणि। तान्येवोत्तरार्द्धर्चेपि रूपशब्देन प्रत्यभिज्ञायंते। तथा च काठके।

(तरङ्गिणी)

वायुर्यथैको भुवन प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथासर्वभूतांतरात्मा रूपं रूपं प्रतिरूपो बहिश्च।
सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतांतरात्मा न लिप्यते लोक दुःखेन बाह्य।

इत्यादिना पुण्यपापदुःखादिसंबंधरहितानि भगवद्रूपाण्युच्यंते न तु तद्वंति पितृजन्यानि जीवरूपाणि। मंत्रांतरं च।

रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परिस्वां।
त्रिर्यद्दिवः परिमुहूर्तमागातस्वैर्मंत्रैरनृतुषा ऋतावा।

अस्यार्थो माधवीये। मघवा धनवानिंद्रो यद्यद्रूपं कामयते तत्तद्रूपं बोभवीति तत्तद्रूपात्मको भवति। तत्र कारणमुच्यते मायाः कृण्वानः मायाः प्रज्ञाः। तन्नामसु पाठात्। अनेकरूपग्रहणसामर्थ्यानि आविष्कुर्वन्। तर्हि तानि रूपाणि पित्रादिजन्यानि किं नेत्याह तन्वं परिस्वां पंचम्यर्थे परिः। स्वतनोः सकाशादाविष्करोति। स्वां तनुं नानाविधरूपोपेतां करोति। यद्यस्मात् स्वैर्मंत्रैः स्वकीयैः स्तुतिलक्षणैर्वाक्यैराहूतः अनृतुपाः न केवलमृतुष्वेव पिबति किं तु अनृतुष्वपि बहुशः सोमं पिबन्नित्यर्थः। ऋतावा। सत्यवान्। सत्यजगत्कर्तेति यावत्। तादृश इंद्रः दिवः स्वर्गलोकान् परिमुहूर्तं एकस्मिन्नेव मुहूर्ते नानादेशवर्तिषु यज्ञेषु तत्रापि त्रिः त्रिषु वसनेषु। आगात् आगच्छति। एवं महाभागः परमेश्वरो नानारूपो भवतीति युक्तमेव। बोभवीतिति यङ्लुगंतम्। आगात् इणो लुङि रूपम्। यद्वृत्तयोगान्निघाताभावः। तस्मात्पूर्वार्द्धर्चे भगवद्रूपाण्येव रूपशब्देन प्रस्तुतानि। मायाशब्देन प्रज्ञापरपर्याया शक्तिरुच्यते। माया प्रज्ञा वयुनमिति नैघंटुवचनादित्याह ॥ विचित्रशक्तिभिरिति॥ हरिशब्देनापि नेंद्रियाणि लक्षणापत्तेः। दशादिसंख्याया अस्वारस्यं वा। किं तु रूढ्या भगवद्रूपाणि निर्दिश्यत इत्याह ॥ उत्तरत्र चेति॥ ॥ वुभुत्सितत्वादिति॥ तथा च मायाव्याख्येयाप्रकृतिस्तद्व्याख्यानमित्यर्थः ॥ सत्येपीति॥ ॥ मंत्रौषधादावित्यर्थः ॥

इंद्रो मायाभिरिति श्रुत्यर्थः।

### न्यायामृतकण्टकोद्धारः

नन्विन्द्रो मायाभिरित्यत्र मायाभिरज्ञानैर्घटादि बहुरूपत्वस्योक्तत्वात् अज्ञानकल्पितत्व इयमेव श्रुतिः प्रमाणमित्यत आह इन्द्र इति। नन्वत्र रूपशब्देन भगवद्रूपमेव विवक्षितमिति कुत इत्यत्राह रूपं रूपमिति। भगवान् रूपं रूपं जीवाख्य प्रतिबिम्बानि प्रति प्रतिरूपो बिम्बरूपो बभूव। तत् भगवतो रूपम् अस्य जीवस्य प्रतिचक्षणाय दर्शनाय भवतीति भगवद्रूपाणामेव सन्निहितत्वात् तत्परित्यागेनासंनिहित घटादिरूपग्रहणायोग इति भावः। ननु भगवद्रूपाणां बहुत्वमप्रामाणिकमित्यत आह उत्तरत्रेति। ननु येषां बहुत्वमुक्तं हरिशब्दवाच्यानां तेषां ब्रह्मत्वं कुत इत्यत आह तदेतदिति। मायाशब्दस्य शक्तिवाचित्वं प्रसिद्धमेवेति भावः। ननु मायां तु प्रकृतिं विद्यादित्यत्र प्रकृतिमनूद्य तस्या मायात्वं मिथ्यात्वं निश्चीयते। तदनुरोधादत्रापि मायाशब्दस्य मिथ्यात्वं निश्चीयते। तदनुरोधादत्रापि मायाशब्दस्य मिथ्यार्थकत्वमित्यत आह मायां त्विति। अत्र मायामुद्दिश्य प्रकृतित्वं विधीयते। अतो नैतस्य मिथ्यात्वपरत्वमिति भावः। मायाशब्दार्थस्योद्देश्यत्वं कुत इत्यत आह पूर्वेति। ननु दध्ना जुहोतीत्यत्र पश्चादुक्तस्यापि होमस्योद्देश्यत्वं दृष्टम्। तदिहापि किं न स्यादित्यत आह प्रकृतिशब्दस्येति। तथा च मायाशब्दस्याप्रसिद्धार्थत्वं तस्यैवोद्देश्यत्वमिति भावः। मायाशब्दस्येति। महामायेत्यस्यां श्रुताविति भावः।

इन्द्रो मायाभिरित्यादि श्रुत्यर्थः।

## १५. अतोऽन्यदार्तमिति श्रुत्यर्थविचारः

यत्तु कौमुद्याम् ''अतोऽन्यदार्तम्'' इति वाक्यं तत्र मानमित्युक्तं, तत्त्वतितुच्छम्। अज्ञान्तर्यामिणः प्रकृतत्वादेतच्छब्दस्य प्रकृतपरत्वात्। अन्यशब्दस्य च ''एतद् ब्राह्मणादन्यमानय'' ''समानमितरच्छ्येनेन'' इत्यादाविव प्रकृतसमानजातीयान्यपरत्वात्। ब्रह्मणोऽन्यज्जीवजातमार्तं दुःखीति जीवभेदस्यैवोक्तेः। न हि जीवादन्यस्यार्तिः।

अतोऽन्यदार्तमिति श्रुत्यर्थः।

### न्यायामृततरङ्गिणी

ननु एष आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तमिति वाक्यं तत्र मानं भविष्यतीत्यत आह ।। यत्त्विति ।। स्वभाष्यविरोधाद् एतदतीवाप्रामाणिकमित्याह ।। अतितुच्छमिति ।। तथाहि– शाङ्करीये बृहदारण्यकभाष्ये। अतोऽस्मादीश्वरादात्मनोऽन्यदार्तं विनाशीति व्याख्यातम् ।। समानमिति ।। इतरत् अङ्गजातं श्येनसङ्ज्ञकयागेन समानं तद्वदित्यर्थः ।। दुःखीतीति ।। आङ्पूर्वस्य ऋधातोर्दुःखवाचकत्वादिति भावः।

अतोऽन्यदार्तमिति श्रुत्यर्थः।

## न्यायामृतकण्टकोद्धारः

ननु तथापि अतोऽन्यदार्तमिति श्रुतिर्मिथ्यात्वे प्रमाणम्। तत्र ब्रह्मातिरिक्तस्यार्तशब्देन मिथ्यात्वाभिधानादित्यत आह यत्त्विति। प्रकृतत्वादिति। अन्तर्यामिब्राह्मणेऽस्य श्रवणादिति भावः। एतच्छब्दस्येति। अत इत्यस्येत्यर्थः। एतदोऽशित्यनेनाशादेशे जाते तसिल्यत इति भवतीति भावः। अन्येतरशब्दयोः समानार्थकत्वमङ्गीकृत्याह समानेति।

सप्तमाध्याये प्रथमपादे द्वितीयाधिकरणे चिन्तितम्। समाने पूर्ववत्वादुत्पन्नाधिकारः स्यात्। इषुनामकश्च श्येननामकश्च द्वावेकाहौ ज्योतिष्टोमविकारौ। तत्र इषावेकाहे न्योतिष्टोमविकारे इषुं विष्टुतिं करोति शस्तांगं भवतीति क्वचित्पाठः हुं भवतीति प्राकृतानां स्तोत्राणां विकारं विधाय श्रूयते समानमितरच्छ्येनेनेति। तत्र संशयः किमयमनुवाद उत श्येन वैशेषिकायामतिदेशविधिरिति। पूर्वपक्षस्तु इतरशब्दस्य सन्निहितपरत्वात् श्येनवैशेषिकाणां चासन्निहितत्वात् न तद्वाचकत्वम्। चोदकप्राप्तास्तु ज्योतिष्टोमधर्माः। ते श्येनेऽपि समाना विद्यन्ते। तच्च समानत्वमिषु प्रकरणे अनेन वाक्येनानूद्यते समानमितरच्छ्येनेनेति। नन्वत्रेतरशब्दोक्तिरनुपपन्ना, तत्प्रतियोगिनः कस्यचिदनिर्दिष्टत्वादिति चेन्न। पूर्ववाक्यविहितस्य विशेषधर्मस्य प्रतियोगित्वात्। इषौ यो वैशेषिको धर्मो विहितस्तं परित्यज्येतरच्चोदकप्राप्तं सर्वं श्येनेन समानमित्यर्थः। तस्मादनुवादकमिदं वाक्यमिति। सिद्धान्तस्तु। सत्यमितरशब्दः संनिहितमभिधत्ते। न तु तन्मात्रम्। पूर्वनिर्दिष्टसदृशं सन्निहितं च यद्द्रव्यं तदभिधत्ते। तद्यथा देवदत्त एवाधीते, नेतरः कश्चिदित्युक्ते अध्ययनप्रसक्तिमान् यज्ञदत्तादिमाणवकः प्रतीयते। न तु गवाश्वघटपटादिः। तदिह यत् सन्निहितं ज्योतिष्टौमिकं न तत् पूर्वोक्तसदृशम्। प्राकृतानां सप्ताहादीनां पूर्वमुक्तत्वात्। यत्त्वप्राकृतं लोहितोष्णीषादिकं श्येनवैशेषिकं तद् यद्यप्यसन्निहितं। तथापि सादृश्यमस्तीति अवश्यहातव्येऽन्यतरस्मिन् वचनार्थवत्त्वाय सन्निधिं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषिकाणामतिदेशविधिः। तथाचेषुवाक्यविहितस्य पूर्ववाक्योक्तस्य प्रतियोगित्वात् तत्सजातीयं श्येनगतं लोहितोष्णीषादिरूपं वैशेषिकधर्मजातमितरशब्देन प्रतिभाति। तच्च प्रकृतावभावाच्चोदकेन न प्राप्तमति देशेन विधीयते। यद्वा चोदकप्राप्तानां विष्टुत्यादीनां विकारः इषुः विष्टुत्यादिरपूर्वविहितः। तत इतरत् चोदकप्राप्तमितरशब्देनोद्दिश्य तस्य लोहितोष्णीषादिविकारः श्येनादतिदिश्यते। एवं सन्निहितवचनत्वमर्थवत्त्वं च वचनस्य भविष्यतीति। एवं च समानमितरच्छ्येनेनेत्यादौ यथेतरशब्दः सजातीयपरः तथैवातोऽन्यदित्यत्रान्यशब्दोऽप्येतच्छब्दनिर्दिष्ट ब्रह्मसदृशजीवपर इत्यर्थः। एवं सति फलितं वाक्यार्थं परप्रतिकूलं दर्शयति ब्रह्मण इति। अन्यशब्देनान्तर्यामिब्रह्मसजातीयजीवाग्रहणे बाधकमाह नहीति। आर्तिर्दुःखानुभव इत्यर्थः। तत्रैवार्तिशब्दप्रयोगात्। नहि घटादिकमार्तिमदिति प्रयोगः कस्यचिदिति भावः।

अतोन्यदार्तमिति श्रुत्यर्थः।

## १६. जगदसत्त्ववाचिपुराणवचनार्थः

पुराणादिषु क्वचित् जगतोऽसत्त्वोक्तिरसाधुत्वात्, ''नाऽसत्पुरुषमाश्रयेत्'' इत्यादिवत्। ''सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत'' इति, ''अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह'' इति च गीतोक्तेः। ''सच्छब्दः साधुवाचकः'' इति विष्णुपुराणोक्तेश्च। अस्वातन्त्र्याद्वा–

सत्त्वं स्वातन्त्र्यमुद्दिष्टं न च कृष्णे न चापरे ।
अस्वातन्त्र्यात् तदन्येषामसत्त्वं विद्धि भारत ॥

इति भारतोक्तेः। अन्यथा अत्यन्तासत्त्वापातात्। अवस्तुत्वोक्तिपारमार्थिकत्वोक्तिश्च परिणामित्वाद्विनाशित्वाच्च।

यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम् ॥
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।

इति विष्णुपुराणोक्तेः। मिथ्यात्वोक्तिस्तु वृथात्वात्, ''मिथ्यैष व्यवसायस्ते'' इत्यादिवत्। सदोषत्वाद्वा। मिथ्योपपदात्कृञोऽभ्यास इति सूत्रे वृत्तौ ''पदं मिथ्याऽकारयते'' इत्युदाहृत्य स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थ इत्युक्तत्वात्। न्यासे पदमंजर्यां च ''एतेन मिथ्याशब्दस्यार्थमाचष्टे'' इत्युक्तत्वात्। अतात्त्विकत्वोक्तिस्तु विकारित्वात्। ''तद्वदेव स्थितं यत्तु तात्त्विकं तत्प्रचक्षते'' इति कौर्मोक्तेः। अविद्यमानत्वोक्तिस्तु जीवसम्बन्धित्वेनाविद्यमानत्वात्। ''अविद्यमानं जीवस्य प्रतिभाति तदीयवत्'' इति स्कान्दोक्तेः। स्वप्नादिसाम्योक्तिस्त्वनित्यत्वादेः।

अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः ।
स्वप्नादिसाम्यं जगतो न तु बोधान्निवर्त्यते ॥

मायामयत्वोक्तिस्तु प्राकृतत्वात्, ''मायां तु प्रकृतिं विद्याद्'' इति श्रुतेः ।

त्रिगुणा प्रकृतिर्माया तज्जत्वाद्विश्वमीदृशम् ।
अनाद्यनन्तकालेषु मायेत्याहुर्विपश्चितः ॥ इति स्मृतेश्च ।

अन्यथा ''स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता'' इत्यादिश्रुतिभिः ''न मायेत्यवधार्यताम्'' इति स्मृतिभिः ''वैधर्म्याच्च न स्वप्नादिवत्'' इति सूत्रैस्तत्रैव पूर्वोत्तरवाक्यैश्च विरोधात्।

जगदसत्त्वादिवाचिपुराणार्थः।

## न्यायामृततरङ्गिणी

॥ असत्त्वोक्तिरिति॥ तावन्ममेत्यसदवग्रह आर्तिमूलमित्यादौ ॥ अपारमार्थिकत्वोक्तिरिति॥ माया यदात्मपरबुद्धिरियं ह्यपार्थेत्यादौ ॥ मिथ्यात्वोक्तिरिति॥ यत्र त्रिसर्गो मृषेत्यादौ ॥ एतेनेति॥ स्वरादिदुष्टमित्यनेन वाक्येनेत्यर्थः ॥ आचष्ट इति॥ काशिकाकार इति शेषः ॥ अविद्यमानत्वोक्तिरिति॥ अविद्यमानो ह्यवभाति हि द्वय इत्यादौ ॥ स्वप्नादिसाम्योक्तिरिति॥ ध्यातुर्धिया स्वप्नमनोरथो यथेत्यादौ। अत्र स्वप्नशब्देन स्वाप्नगजादिजाग्रत्त्वमुच्यते न स्वाप्नगजादि। तेषां तज्ज्ञानस्य च सत्यत्वेन जगति तत्साम्यस्यानिष्टत्वाभावेन तस्याव्याख्येयत्वात् ॥ अनित्यत्वादेरिति॥ नित्यत्वाभावादेरित्यर्थः। स्वप्नजाग्रत्त्वस्य भ्रमविषयतयाऽत्यन्तासत्त्वेन तत्र ध्वंसप्रतियोगित्वादिरूपानित्यत्वस्याभावात्। विकारित्वं कूटस्थत्वाभावः। पारतन्त्र्यं स्वातन्त्र्याभाव इति बोध्यम् ॥ मायेति॥ मायामये वासनाया शयान इत्यादौ।

॥ जगदसत्त्ववाचिपुराणार्थः ॥

## न्यायामृतकण्टकोद्धारः

ननु पुराणादिषु जगतोऽसत्वानृतत्वासत्यत्वमायामयत्वादीन्युच्यन्ते तेषां च मिथ्यात्वमेवार्थोऽन्यस्यासंभवादित्यतोऽर्थान्तरमाह पुराणादिष्विति। असच्छब्दस्यासाधुवाचित्वं कुत इत्यतः तत् समर्थयते नासत्पुरुषमिति। सच्छब्द इति। तथाचासच्छब्दस्यासाधुवाचकत्वमर्थात् सिध्यतीति भावः। अन्यथेति। असच्छब्दस्यात्यन्तासत्ववाचित्व इत्यर्थः। तथाचासद्विलक्षणत्वं त्वदभिमतं न सिध्येदिति भावः। वृथात्वात् निष्प्रयोजनत्वात्। अत्र प्रमाणमाह मिथ्यैष इति। मिथ्याशब्दस्य दुष्टवाचित्वं कुत इत्यत आह मिथ्योपपदादिति। तथाच मिथ्याशब्दो दुष्टवाचीति भावः। जीवसंबन्धित्वेनेति। जीवस्वामिकत्वेनेत्यर्थः। अन्यथेति। स्वप्नमायासरूपेत्यादेः मिथ्यात्वार्थत्वाङ्गीकार इत्यर्थः। सर्वत्र यववराहाधिकरणन्यायेन शास्त्रप्रसिद्धस्यैवार्थस्य ग्राह्यत्वादिति भावः।

जगदसत्वादिवाचिपुराणार्थः।

## १७. ज्ञाननिवर्त्यत्वान्यथोपपत्तिविचारः

नापि ज्ञाननिवर्त्यत्वान्यथानुपपत्तिस्तत्र मानम्। न हि ज्ञानमज्ञानस्यैव मिथ्याभूतस्यैव वा निवर्तकमिति नियमः। ज्ञानमात्रेण ज्ञानसमानविषयका- ज्ञानानुपादानकस्य सत्यस्य तत्प्रागभावस्येश्वरज्ञानेन घटादेरुत्तरज्ञानेन पूर्वज्ञानस्य, प्रत्यभिज्ञानादिना संस्कारस्य, विषये दोषदर्शनेन रागादेः, सुहृद्दर्शनेन दुःखादेर्गरुडध्यानादिना विषादेः, अग्निचित्कपिलादिदर्शनेन दुरितादेः, सेत्वादिदर्शनेन ब्रह्महत्यादेश्च निवृत्तेः। ननु सेत्वादिदर्शनमज्ञाननिवृत्तिद्वारेणादृष्टद्वारेण वा तन्निवर्तकम्। साक्षान्निवर्तकत्वेऽपि न ज्ञानत्वेन। किं तु विहितक्रियात्वेनेति चेत्, समं प्रकृतेऽपि। श्रुतदर्शनत्यागेन तत्प्राप्तिस्तज्जन्यादृष्टं वा निवर्तकं चेदिहापि ब्रह्मध्यानं तज्जन्यादृष्टं वा निवर्तकमस्तु। ''तस्याभिध्यानात्'' इत्यादिश्रुतेः। ननु सेतुदर्शनमात्रं न निवर्तकम्। किं तु दूरागमनादिविशिष्टमिति चेदिहापि ब्रह्मज्ञानमात्रं न निवर्तकम्, किन्तु नियमाधीतवेदान्तश्रवणादिविशिष्टम्। भाषाप्रबन्धजन्येनानधीतवेदान्तजन्येन, अधीत- वेदान्तजन्येनाप्यसम्भावनाविपरीतभावनाप्रबलारब्धकर्मादिना प्रतिबद्धेन तेन तदनिवृत्तेः। अन्यथा वेदान्ताध्ययनश्रवणादिनियमस्यासम्भावनादिनिवर्तकमननादेश्च वैयर्थ्यं स्यात्। प्रारब्धकर्मवशाज्जीवन्मुक्तस्य संसारानुवृत्तिश्च न स्यात्।

किं च, लोके अदृष्टत्वेऽपि विपक्षे बाधकाभावात् श्रुतिबलात् सत्यस्यापि बन्धस्य निवृत्तिः किं न स्यात्? अन्यथा लोके अधिष्ठानतत्त्वे साक्षात्कृते कर्मवशादपि निरुपाधिकभ्रमाननुवृत्तेर्जीवन्मुक्तिदशायां कर्मवशादनुवृत्तस्य जगतः सत्यतैव स्यात्। अपि च लोके कल्पितस्य नित्यनैमित्तिककर्मसाध्यान्तःकरणशुद्ध्यजन्यज्ञान- निवर्त्यत्वनियमात्तज्जन्यज्ञाननिवर्त्यस्य प्रपञ्चस्य तज्जन्यदेवतादर्शननिवर्त्यदुरितवत् सत्यतैव स्यात्। अपि च कल्पिते संस्कारनिरपेक्षज्ञाननिवर्त्यतायाः संस्कारसापेक्ष- गरुडभ्रमरादिज्ञानसन्ताननिवर्त्ये विषकीटत्वादौ च सत्यताया दर्शनेन, श्रवणादिजनितसंस्कारसापेक्षज्ञाननिवर्त्यस्य प्रपञ्चस्य सत्यतैव स्यात्। किं च लोके निवृत्तिनिवर्त्ययोः समानसत्ताकत्वनियमादज्ञाननिवृत्तिवदज्ञानमपि तात्त्विकं स्यात्। प्रातिभासिकस्य रूप्यस्य प्रध्वंसो व्यावहारिकश्चेत्तयोर्विरोधो न स्याद्, व्यावहारिक-

प्रातिभासिकयोः शुक्तिरूप्यभेदाभेदयोरिवेत्युक्तम्। किं चाज्ञानाज्ञेययोर्दोषाधिष्ठानयोश्च समानसत्ताकत्वनियमाद् ब्रह्मवदज्ञानमपि सत्यं स्यात्। किं च यथाऽनादि-भावरूपस्यान्यत्रादृष्टाऽपि निवृत्तिः श्रुतिबलात्तथा सत्यस्यापि किं न स्यात्।

किं च ज्ञानमज्ञानस्यैव निवर्तकमित्यत्र ज्ञानं नाम यदि ज्ञप्तिस्तदा असिद्धिः। त्वन्मते ज्ञप्तिरूपस्य चैतन्यस्य बन्धानिवर्तकत्वाद्। बन्धनिवर्तिकायाश्च वृत्तेरज्ञप्तित्वात्। वृत्तिप्रतिबिम्बितचैतन्यं ज्ञप्तिः, सा च तन्निवर्तिकेति चेत्, न। मुक्तावानन्द-ज्ञप्त्यभावापातात्। साक्षिविषयसुखादावज्ञानापाताच्च। एतेन येन यत् प्रकाशते तत्र सा ज्ञप्तिः। एवं च घटादौ वृत्तिप्रतिबिम्बितचैतन्यं ज्ञप्तिः। सुखादौ तु चैतन्यमात्रमिति निरस्तम्। मोक्षे आनन्दप्रकाशस्य स्वरूपचैतन्यस्य तज्ज्ञप्तिरूपत्वेन तेनैवाज्ञानस्य नित्यनिवृत्त्यापातात्। ज्ञानकरणं चेन्न व्याप्तिः। शुक्त्यज्ञानस्य रूप्यस्य वा ज्ञानकरणेन निवृत्तेरसंमतेः। न जानामीत्यज्ञानस्य ज्ञप्तिविरोधित्वेनैव प्रतीतेश्च।

एवमज्ञानं नाम यदि ज्ञानविरोधि भावरूपं सत्यं, न तर्हि विश्वमिथ्यात्वसिद्धिः। यदि तु मिथ्या, तर्हि न व्याप्तिः। शुक्तिज्ञाननिवर्त्यस्याज्ञानस्य शुक्तिवत् सत्यत्वात्। न हि बाधज्ञाने रूप्यमिथ्यात्ववत् शुक्त्यज्ञानमिथ्यात्वं भाति। प्रत्युतैतावन्तं कालं शुक्त्यज्ञानमासीदिति सत्त्वमेव। एवं यदि निवृत्तिर्नाम विनाशः। तदा विरोधः, लोके ज्ञाननाश्ये अज्ञानादौ सत्यताया एव, मिथ्याभूते रूप्यादौ च ज्ञाननाश्य-त्वाभावस्यैवानुभवात्। न हि रूप्यं ज्ञानेन नष्टमिति बाधोऽस्ति। यदि तु निवृत्तिर्नाम प्रतिपन्नोपाधौ निषेधस्तदाऽसिद्धिः। ''क्षीयंते चाऽस्य कर्माणि तस्मिन् दृष्टे'' इत्यादिश्रुत्या ''ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा'' इत्यादिस्मृत्या ''तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्'' इत्यादिसूत्रैश्च बन्धनाशस्यैवोक्तेः।

अत्र यदुक्तं विवरणे 'ज्ञानेन सत्यस्य निवृत्तिश्चेत् किं विषयेण संबन्धस्य निवृत्तिः ? किं वाश्रयेण ? यद्वोभाभ्याम्। नाद्यः। चित्रावयविनि नीलविशिष्टद्रव्यज्ञानेन तद्गतपीतिमादेरनिवृत्तेः। न द्वितीयः। आत्मज्ञानेन तद्गतधर्माद्यनिवृत्तेः। न तृतीयः। शरीरज्ञानेन देहात्मसंबन्धानिवृत्तेः' इति। तत्र ब्रूमः– ज्ञानेनाज्ञानस्यारोपितस्य वा कस्य निवृत्तिः ? न तावद्विषयेण सम्बन्धस्य। चैत्रनिष्ठमैत्रविषयकज्ञानेन मैत्रनिष्ठघट-

विषयकाज्ञानस्य, इदमंशज्ञानेन तत्रारोपितरूप्यस्य चाप्यनिवृत्तेः। नाप्याश्रयेण सम्बन्धस्य। चैत्रस्य घटज्ञानेन तदीयपटाज्ञानस्यात्मन्यारोपितदेहतादात्म्यस्य चानिवृत्तेः। नाप्युभाभ्यां सम्बन्धस्य। चैत्रनिष्ठमैत्रविषयकज्ञानेन मैत्रनिष्ठचैत्रविषयकज्ञानस्य आत्मनिष्ठदेहविषयकज्ञानेन देहात्मतादात्म्यादेश्चानिवृत्तेः।

ननु ज्ञानेन समानाश्रयविषयकस्याज्ञानस्य निवृत्तिः। निवृत्ते चाज्ञाने तत्कार्यं स्वयमेव निवर्तत इति चेन्न। चैत्रस्य शङ्खे श्वेतत्वानुमित्या तदीयश्वेतत्वविषयकाज्ञानस्यारोपितपीतत्वस्य वा, त्वन्मतेऽपि बिम्बप्रतिबिम्बयोरैक्यसाक्षात्कारेणैक्याज्ञानस्यारोपितभेदस्य वा अनिवृत्तेः। श्वेतत्वानुमित्यादिना तदज्ञाननिवृत्तौ अज्ञानकार्यस्यारोपितपीतत्वादेरनुवृत्तिर्न स्यात्। भ्रमस्य सोपाधिकत्वेऽपि उपादाननिवृत्तौ कार्यानुवृत्त्ययोगात्। किं च चैत्रस्येदानीन्तनेन घटसाक्षात्कारेण भविष्यद्घटसाक्षात्कारनिवर्त्याविद्यानिवृत्त्यापत्त्या सकृत्साक्षात्कृतस्य घटादेः सदा आपरोक्ष्यं स्यात्। नन्वज्ञानस्यैकत्वात् जडानावरकत्वाच्च घटादिज्ञानमज्ञाननिवर्तकमेव नेति चेत्, तर्हि बन्धस्य ज्ञाननिवर्त्यत्वेन दृष्टानुसारादज्ञानमयत्वमिति न स्यात्। ननु ज्ञाननिवर्त्यस्य भ्रान्त्यादेर्ज्ञानविरोधित्वं दृष्टमितिचेत्, तर्हि बन्धस्य दृष्टानुसारात् ज्ञानविरोधित्वं कल्प्यताम्। न भावरूपाज्ञानत्वं न वा मिथ्यात्वम्। न हि भ्रान्तिः स्वरूपेण मिथ्येत्यविद्यावादे वक्ष्यते। मिथ्याभूतस्य च रूप्यस्य ज्ञाननिवर्त्यत्वमसंमतमित्युक्तम्। अपि च चरमसाक्षात्कारेण जीवन्मुक्तिदशानुवृत्तस्याप्यविद्यालेशस्य वाऽज्ञानसंस्कारस्य वाऽऽरब्धकर्मादेर्वा निवृत्तिः किं न स्यात्? ज्ञानस्य प्रागभावनिवर्तन इवाज्ञाननिवर्तनेऽप्यन्यानपक्षेत्वात्। तस्मात् त्वयाऽप्यज्ञानस्यारोपितस्य वा ज्ञानविरोधिन एव ज्ञानेन निवृत्तिर्विरोधश्च कार्योन्नेय इति वाच्यम्। सममेतन्ममापि।

वस्तुतस्त्वीश्वरप्रसादादेव बन्धनिवृत्तिः। ''यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण'' इत्यादिश्रुतेः, ''मत्प्रसादात् तरिष्यसि'' इत्यादिस्मृतेश्च। ज्ञानं तु प्रसादहेतुः। तदुक्तम्–

यथा दृष्टया प्रसन्नः सन् राजा बन्धापनोदकृत्।
एवं दृष्टः स भगवान् कुर्याद् बन्धविभेदनम् ॥ इति ।

**"दृष्ट्वैव तं मुच्यते" इत्यवधारणमयोगव्यवच्छेदपरम्। मोक्षहेतुप्रसादेऽन्ययोगव्यच्छेदपरं वा। उक्तं हि विष्णुपुराणे–**

**"एवं ज्ञाते तु भगवाननादिः पुरुषोत्तमः ।**
**प्रसीदति ततस्तस्मिन् प्रसन्ने क्लेशसंक्षयः ॥" इति ।**

**ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभङ्गः ।**

## अद्वैतसिद्धिः

'तरति शोकमात्मवित्', 'तथा विद्वान् नामरूपाद्विमुक्तः', 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥' इत्यादिश्रुतिस्मृतिबोधित-ज्ञाननिवर्त्यत्वान्यथानुपपत्तिरपि बन्धमिथ्यात्वे प्रमाणम्। सत्यत्वे ब्रह्मवदनिवर्त्यत्वापत्तेः। तथा हि– शुक्तिरूप्यरज्जुसर्पादौ ज्ञाननिवर्त्यत्वे न तावत् तत्तद्रूपवत्त्वं ज्ञाननिवर्त्यतावच्छेदकम्। अननुगमात्। किन्तु सर्वानुगतं मिथ्यात्वमेवाज्ञानकल्पितत्वापरपर्यायमवच्छेदकम्, एवं ज्ञानस्यापि तन्निवर्तकत्वे न। शुक्त्यादिविषयत्वमवच्छेदकम्। अननुगमात्। किन्तु सर्वानुगतमधिष्ठानप्रमात्वमेव। तथा च यत्र ज्ञानस्याधिष्ठानप्रमात्वेन निवर्तकता, तत्र मिथ्यात्वेनैव निवर्त्यतेति नियमः सिध्यति। एतादृशनियमानभ्युपगमे चानन्त-नियमकल्पनागौरवरूपो बाधकस्तर्कः। तथा हि– यन्निष्ठा यदाकारा प्रमारूपाऽन्तः-करणवृत्तिरुदेति, तन्निष्ठं तदाकारमज्ञानं नाशयतीति नियमस्य सिद्धत्वात्। उपादाननाशस्य चोपादेयनिवर्तकत्वात् शुक्त्यादिज्ञानेन तत्तदाकाराज्ञाननाशे तदुपादेयानां रजतादीनां निवृत्तिरौचित्यावर्जितैवेति नियमान्तराकल्पनेन लाघवमनुकूलस्तर्कोऽस्मत्पक्षे। अज्ञानोपादेयत्वं च शुक्तिरजतादीनामन्वयव्यतिरेकसिद्धमग्रे स्थास्यति। एवं स्थिते कृत्स्नस्यापि प्रपञ्चस्यात्मप्रमानिवर्त्यत्वे तदज्ञानकल्पितत्वमेव तत्रावच्छेदकं कल्प्यते। न त्वननुगत-माकाशत्वादि। न वा ब्रह्मभिन्नत्वं सद्भिन्नत्वं वा सर्वानुगतमपि। तुच्छेऽतिप्रसक्तेः। तद्वारकविशेषणप्रक्षेपे तु सदसद्विलक्षणत्वरूपमिथ्यात्वमेव निवर्त्यताप्रयोजकं पर्यवसितम्। अन्यथा नियमान्तरकल्पनागौरवापत्तेः। तथा च शुक्त्यादिज्ञानस्य येन रूपेण निवर्तकत्वं, तेन रूपेणात्मज्ञानस्य निवर्तकत्वम्। रूप्यादौ येन रूपेण निवर्त्यत्वं, प्रपञ्चे तद्रूपं विनाऽनुपपद्यमानं स्वोपपादकतया तत्र तत् कल्पयतीति सिद्धं मिथ्यात्वम्।

(अद्वैतसिद्धिः)

ननु भवेदेतदेवम्, यद्यात्मज्ञानस्य प्रपञ्चे निवर्त्ये शुक्त्यादिज्ञानसाधारणमधिष्ठानप्रमात्वमेवावच्छेदकमित्यत्र किंचिन्मानं भवेद्। रूपान्तरेणापि निवर्तकत्वसंभवात्। श्रुतिस्तु द्वैतप्रपञ्चस्याद्वितीयात्मज्ञानं निवर्तकमित्येतावन्मात्रे प्रमाणम्। न त्ववच्छेदकविशेषेऽपि। न च ज्ञाननिवर्त्यतामात्रान्मिथ्यात्वसिद्धिः, सेतुदर्शनादिनिवर्त्यदुरितादिषु व्यभिचारात्। तत्र विहितक्रियात्वादिना निवर्तकत्वान्न व्यभिचार इति चेत्, प्रकृतेऽपि रूपान्तरं नावच्छेदकमिति कुतो निरणायि? ज्ञानस्य हि स्वप्रागभावं प्रति प्रतियोगित्वेन निवर्तकता, पूर्वज्ञानादिकं प्रति तु उत्तरविरोधिगुणत्वेन, संस्कारं प्रति फलत्वेन, रागादिकं प्रति विषयदोषदर्शनत्वेन, विषं प्रति गरुडध्यानत्वेन, सेत्वादिदर्शनस्य दुरितं प्रति विहितक्रियात्वेन। एवं च मिथ्यात्वं विनापि ज्ञाननिवर्त्यत्वदर्शनात् न तन्मिथ्यात्वस्य साधकम्। उदाहृतेष्वपि सत्यत्वासंप्रतिपत्त्या मिथ्यात्वमेवास्तीति चेत्, अस्तु वा मास्तु। ज्ञाननिवर्त्यत्वमात्रं तु न तस्य साधकमिति ब्रूमः। हेत्वन्तरेण सिद्धौ चैतदुपन्यासो व्यर्थः। शुक्तिरूप्यादौ कथमिति चेच्छृणु। अधिष्ठानज्ञानत्वेन तत्र ज्ञानस्य निवर्तकत्वात्। अधिष्ठानज्ञानत्वं हि अज्ञाननाशकज्ञानत्वं वा, अज्ञानसमानविषयकप्रमात्वं वेति तेन रूपेण निवर्तकत्वे मानाभावात् नात्माज्ञानोपादानकत्वरूपमिथ्यात्वसिद्धिः प्रपञ्चस्येति प्राप्तम्। अत्रोच्यते। आत्मज्ञानस्याप्यधिष्ठानज्ञानत्वेनैव प्रपञ्चं प्रति निवर्तकत्वम्। प्रकारान्तरासंभवात्। तथा हि– प्रतियोगित्वं तावन्नावच्छेदकम्। प्रपञ्चस्य भावरूपत्वात्। ज्ञानस्य प्रागभावनिवृत्तिरूपत्वेन प्रतियोगित्वेन प्रागभावनिवर्तकत्वासिद्धेश्च। नाप्युत्तरगुणत्वम्। आकाशादेरात्मविशेषगुणत्वाभावाद्। इच्छादेरपि प्रपञ्चनिवर्तकत्वापाताच्च। नापि फलत्वम्। संस्कारस्य स्मरणजनकत्ववदाकाशादेरात्मज्ञानजनकत्वाभावात्। संस्कारस्य स्मृत्यनाश्यत्वेनोदाहरणासिद्धेश्च। विषयदोषदर्शस्य तु रागादिनिवर्तकत्वं रागादिकारणीभूतबलवदनिष्टाननुबन्धीष्टसाधनत्वभ्रमरूपतत्कारणनिवर्तकत्वेनेति न प्रकृतोदाहरणादतिरिच्यते। शुक्तिरूप्यतुल्यत्वात्। गरुडध्यानं तु न प्रत्युदाहरणम्। ध्यानस्य रागादेरिव ज्ञानत्वानभ्युपगमात्। ज्ञानस्येच्छानधीनत्वेन तदधीनज्ञानापेक्षया वैलक्षण्यात्। स्पष्टं चैतदाकरे। ज्ञानत्वेऽपि तस्य सेतुदर्शनपक्षान्नातिरेकः, शास्त्रविहितत्वाविशेषात्। केवलं सेत्वादिदर्शनवद्विहितक्रियात्वमवशिष्यते। तच्च न संभवति। ज्ञानस्य कर्तुमकर्तुमशक्यत्वेन विधेयत्वायोगात्। विस्तरेण च ज्ञाने विधिराकरेषु निराकृतः। निराकरिष्यते चेहापि। सेतुदर्शने कथमिति चेत्? दिदृक्षाकारेण विधेयत्वोपपत्तेः। न

(अद्वैतसिद्धिः)

हि सेतुदर्शनमात्रस्य दुरितनाशकत्वम्। तत्रत्यम्लेच्छानामपि दुरितनाशप्रसङ्गात्। किन्तु परराष्ट्रादुपस्थानादिपूर्वकव्रतकलापविशिष्टस्य। तथा च छत्रपादुकादिवर्जनदोषोद्धोषण-दूरदेशगामित्वभिक्षाभोजित्वादिनियमानां कृतिसाध्यत्वात् तद्विशिष्टं सेतुदर्शनमपि कृतिसाध्यमिति विशिष्टरूपेण विधानोपपत्तिः। आत्मज्ञाने तु नास्ति किंचिद्विशेषणमपि कृतिसाध्यं, येन तद्विशिष्टत्वेनापि विधेयत्वं स्यात्। कर्मसमुच्चयस्य निराकरिष्यमाणत्वाद्। बन्धस्याज्ञानमात्रहेतुकत्वेन ज्ञानातिरिक्तनिवर्तकानपेक्षणाच्च। बन्धस्याज्ञानहेतुकत्वं च 'मायां तु प्रकृतिं विद्यात्' 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इत्यादिश्रुतिस्मृतिन्यायसिद्धम्। वक्ष्यते चाग्रे। अज्ञाननिवर्तकज्ञानस्य चोत्पत्तिमन्तरेणान्यापेक्षा नास्तीति शुक्त्यादिज्ञाने दृष्टम्। तथा चोक्तं वार्तिककृद्भिः।

''तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति'' ॥ इति ।
''प्रत्यग्याथात्म्यधीरेव प्रत्यगज्ञानहानिकृत् ।
सा चात्मोत्पत्तितो नान्यद् ध्वान्तध्वस्तावपेक्षते ॥''

इति च। अत एव 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति।' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिश्रुतिः।

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥'

इत्यादिस्मृतिश्चाविद्यावस्थायां संसारोपलम्भं विद्यावस्थायां च तदनुपलम्भं दर्शयति। तस्मादधिष्ठानप्रमात्वेनात्मज्ञाननिवर्त्यत्वाच्छुक्तिरूप्यादिष्विव बन्धेऽपि मिथ्यात्वं सिद्धम्।

यत्त्वीश्वरज्ञानेन सत्यं घटादि निवर्तत इति प्रत्युदाहरणम्। तन्न। ईश्वरज्ञानस्य तार्किकमतेऽपि उपादानगोचरापरोक्षज्ञानत्वेनैव कारणत्वाद्। अभावस्य च निरुपादानत्वाद्, अभावं प्रति कारणत्वे मानाभावात्। सोपादानत्वे तु समवेतत्वेन तस्यापि भावत्वापत्तेः। अत्यन्ताभावादिवच्च तदजन्यत्वेऽपि ध्वंसस्य तद्विषयत्वोपपत्तेः। न च तादृगीश्वरज्ञाने सम्प्रतिपत्तिरप्यन्येषामिति न काऽप्यनुपपत्तिः। यथा च शुक्त्यादिज्ञानस्य

(अद्वैतसिद्धिः)

रूप्यादिनिवर्तकत्वमप्रामाण्यज्ञानविरहमपेक्ष्यैव, एवमात्मज्ञानस्यापि श्रवणादिनिर्वृत्ताव-सम्भावनादिनिवृत्तिरूपाप्रामाण्यज्ञानविरहापेक्षत्वमिति न किञ्चिदप्यधिकं कल्पितम्। आत्मज्ञानस्य सर्वसुकृतसाध्यत्वं शुक्त्यादिज्ञानापेक्षया विलक्षणमिति तु दृष्टान्तदार्ष्टान्तिक-योर्वैधर्म्यमात्रोद्भावनाद् वैधर्म्यसमा जातिः। अज्ञानस्य च समानाधिकरणसमाना-कारज्ञाननिवर्त्यत्वं, जीवन्मुक्तौ च प्रारब्धकर्मप्रतिबन्धेन बन्धनाशविलम्ब इत्यादि सर्वमुपरिष्टा-दुपपादयिष्यते। सत्यस्य ज्ञाननिवर्त्यत्वे तु आश्रयविषयोभयसंबन्धित्वादिना अतिप्रसङ्गो विवरणकारैर्वर्णितः। तस्मादधिष्ठानज्ञानत्वेन ज्ञाननिवर्त्यत्वं मिथ्यात्वे प्रमाणमिति सिद्धम्।

इत्यद्वैतसिद्धौ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिः।

## न्यायामृततरङ्गिणी

**ननु शुक्तिरूप्यादौ ज्ञाननिवर्त्यतावच्छेदकं न तत्तद्रूप्यत्वादिकम्। अतिप्रसङ्गात्। किन्तु सर्वानुगतं मिथ्यात्वमेवाज्ञानकल्पितत्वापरपर्यायमवच्छेदकम्। अतस्तरति शोकमात्मविदित्यादि-श्रुतिसिद्धज्ञाननिवर्त्यत्वकस्य प्रपञ्चस्यापि ज्ञाननिवर्त्यतावच्छेदकमिथ्यात्वावच्छिन्नत्वमास्थेयम्। अन्यथा ज्ञाननिवर्त्यत्वानुपपत्तिरित्येतन्निराकरोति ॥ नापीति ॥ ॥ ज्ञानेति ॥ ज्ञानस्य निवर्तकत्वान्यथाऽनुपपत्तिरपि समानन्यायेन बोध्या। आद्यामनुपपत्तिं दूषयति ॥ ज्ञानमिति ॥ द्वितीयां दूषयति ॥ मिथ्याभूतस्यैवेति ॥ यतोऽयं न नियमोऽतो मिथ्यात्वं न ज्ञाननिवर्त्य-तावच्छेदकम्। मानाभावात्। शुक्तिरूप्यादेर्ज्ञाननिवर्त्यत्वाननुभवेनोक्तयुक्तेरसिद्धेः। श्रुतिस्त्वा-त्मज्ञानं संसारनिवर्तकमित्याचक्षाणाऽवच्छेदकविशेषं नान्वेषयतीति भावः। नन्वस्तु ज्ञाननिवर्त्य-त्वमात्रेण मिथ्यात्वमित्यत आह ॥ ज्ञानमात्रेणेति ॥ ॥ ईश्वरेति ॥ ननु घटादिनिवृत्तेरुपादान-शून्यतयोपादानाद्यगोचरमीश्वरज्ञानं न तत्र हेतुरिति चेन्न। कर्तृत्वनिविष्टज्ञानस्योपादानगोचरतया हेतुत्वेऽपि सर्वकार्यहेतोस्तस्य तन्नियमाभावात्। ईश्वरेच्छया सर्वं भवतीत्यापृथग्जनमनुभवेनेच्छावत् तज्ज्ञानस्यापि कार्यमात्रनिमित्तत्वात्। ध्वंसस्या भावत्वानुभवेन भावत्वापादानस्य बाधिततया तस्यानुपादानकत्वासिद्धेश्च ॥ प्रत्यभिज्ञानेति ॥ अनित्यात्मविशेषगुणत्वेन धर्मादिवत् संस्कारस्य प्रत्यभिज्ञारूपफलनाश्यत्वावसायादित्यर्थः। अग्निचित् चयनाख्यकर्मकर्ता। तथा च प्रागभावादिषु व्यभिचारात् ज्ञाननिवर्त्यत्वमात्रं न मिथ्यात्वापादकमित्यर्थः।**

(तरङ्गिणी)

साक्षात्वगर्भोक्तव्याप्तौ न व्यभिचार इति शङ्कते ॥ नन्विति ॥ ॥ अज्ञानेति ॥ सेत्वज्ञानेत्यर्थः । नन्वज्ञाननिवृत्तिः पक्षेऽपि समेत्यत आह ॥ अदृष्टेति ॥ ननु सेतुदर्शनानन्तरमेव पापनिवृत्तौ बाधकाभावेनादृष्टकल्पने मानाभाव इत्यत आह ॥ साक्षादिति ॥ प्रागभावादिष्वपि प्रतियोगित्वादिना ज्ञानं निवर्तकमतस्तत्रापि न व्यभिचार इत्यर्थः ॥ ध्यानमिति ॥ ध्यानं तु ज्ञानभिन्नमनोवृत्त्यन्तरं तवाभिमतमतो ज्ञाननिवर्त्यत्वं प्रपञ्चेऽ सिद्धमित्यर्थः ॥ तस्येति ॥ तथा च तवेव मम नात्यन्तमश्रुतकल्पनेत्यर्थः। ननु निवर्त्यातिरिक्तानपेक्षज्ञानजन्यध्वंसप्रतियोगित्वं मिथ्यात्वम्। पापे तु नैवमिति शङ्कते ॥ नन्विति ॥ ॥ किन्त्विति ॥ परिषदुपस्थानादिपूर्वकव्रतकलापविशिष्टं छत्रपादुकादिवर्जनस्वदोषोद्धोषणादिसहितं सेतुदर्शनं तथा। अन्यथा तत्रत्यम्लेच्छादीनामपि ततस्तन्निवृत्त्यापत्तेरित्यर्थः। 'तदा विद्वान् नामरूपाद्विमुक्तः' 'अथ मर्त्योऽमृतो भवति' इति श्रुतेः प्रपञ्चनिवृत्तौ कालादेर्हेतुत्वादुक्तस्यासिद्धिरिति दोषे सत्येव दोषान्तरमाह ॥ नियमाधीतेति ॥ गुरुमुखोच्चारणानूच्चारणानध्यायपरिपालनादिभिर्मुण्डकाध्ययनादौ शिरोव्रतादिभिश्च नियमैरधीतेत्यर्थः ॥ नियमादीति ॥ श्रवणादिनियमस्य प्रयोजनत्वेन कल्प्यमानं यद्दृष्टमदृष्टं वा तत्सहितम् इत्यर्थः। आदिशब्देन प्रबलप्रारब्धकर्मनिवृत्तिः। वेदान्तव्यावर्त्यमाह ॥ भाषेति ॥ भाषाप्रबन्धो भाषारचितग्रन्थः। अधीतव्यावर्त्यमाह ॥ अनधीतेति ॥ पुस्तकादिपठितवेदान्तजन्येनेत्यर्थः। नियमव्यावर्त्यमाह ॥ अधीतेति ॥ तेन ब्रह्मज्ञानेन। ननु ज्ञानस्य स्वप्रागभावनिवर्तन इवाज्ञाननिवर्तनेऽपि नान्यापेक्षा। तदुक्तं वार्तिके– 'प्रत्यग्याथात्म्यधीरेव प्रत्यगज्ञानहानिकृत्। सा च स्वोत्पत्तितो नान्यद्ध्वान्तध्वस्तावपेक्षते' इतीत्यत आह ॥ अन्यथेति ॥ अज्ञाननिवृत्तेर्दुरितनिवृत्त्यसाध्यत्व इत्यर्थः ॥ वैयर्थ्यमिति ॥ ननु श्रवणादिनियमादेर्ज्ञानादिनिवर्त्यजिज्ञासाप्रतिबन्धककल्मषातिरिक्तब्रह्मनिर्णयप्रतिबन्धककल्मषनिवृत्तिद्वारेण ब्रह्मज्ञान एवोपयोगोऽतो न वैयर्थ्यमिति चेन्न। अवघातजन्यवैतुष्यान्यापूर्वस्येव श्रवणादिजन्यब्रह्मज्ञानान्याज्ञाननिवृत्तेरेव नियमादृष्टसाध्यत्वौचित्यात्।

ननु मम रीत्या रूप्यनिवर्तके शुक्तिज्ञानेऽज्ञानसमानविषयकप्रमाणत्वेन तन्निवर्तकत्वात् तेनैव रूपेण ब्रह्मज्ञानस्य प्रपञ्चनिवर्तकत्वकल्पनात् निवर्त्यस्य प्रपञ्चस्य स्वनिवर्तकज्ञानसमानविषयकाज्ञानोपादानकत्वं सिध्यतीत्याशङ्क्याह ॥ किं चेति ॥ लोकेऽक्लृप्तेन ब्रह्मज्ञानत्वेन ब्रह्मज्ञानस्य प्रपञ्चनिवर्तकत्वमस्तु श्रुतिबलादित्यर्थः। ननु यागे श्रुतस्वर्गसाधनत्वोपपत्तयेऽपूर्वमिव बन्धे श्रुतज्ञाननिवर्त्यत्वोपपत्तये मिथ्यात्वं कल्प्यत इत्यत आह ॥ सत्यस्येति ॥ यागवत् प्रकृतेऽनुपपत्त्यभावात्सत्यस्यापि दुरितादेर्ज्ञानान्निवृत्तिदर्शनादित्यर्थः। एतेन निरुक्तावच्छेदकानादरं

(तरङ्गिणी)

सूचयति। ननु लोकदृष्टत्याग एव विपक्षे बाधक इत्यत आह ॥ अन्यथेति॥ शुक्तिब्रह्मणोर्ज्ञाने वैलक्षण्यस्य सर्वसिद्धत्वादित्यर्थः। वैधर्म्योपपादनमिदम्। न तु वैधर्म्येण प्रत्यवस्थानम्। अत एवेदं वैधर्म्यसमजातिरिति परास्तम्। भाषाप्रबन्धादिजन्येनासम्भावनादिप्रतिबद्धेन वेदान्तजन्येनापि ब्रह्मज्ञानेन उक्तरीत्याऽज्ञानानिवृत्त्या उक्तावच्छेदकस्य व्यभिचारेण वेदान्तविचारादिजन्यस्य विजातीयस्य ज्ञानस्य प्रपञ्चनिवर्तकत्वमित्याह ॥ अपि चेति ॥ ॥ नियमादिति॥ अज्ञानसमान-विषयकप्रमाणनिवर्त्यत्वेन स्वनिवर्तकप्रमासमानविषयकाज्ञानोपादानकत्वसिद्धिरस्त्विति शेषः ॥ सत्यतैवेति॥ रूप्यसाधारणरूपेण ज्ञाननिवर्त्यत्वाभावादिति भावः। एतेन शुक्तिब्रह्मणोर्ज्ञानयोः सर्वसुकृतासाध्यत्वतत्साध्यत्ववर्णनं वैधर्म्यसमजातिरिति परास्तम्। अवच्छेदकभेदोक्त्या प्रपञ्चे मिथ्यात्वापादकाभावस्योक्तत्वात् । वयं तु ब्रूमः । अज्ञानसमानविषयकप्रमानिवर्त्यत्वेऽपि रूप्यादेस्तन्निवर्तकप्रमाया अज्ञानसमानविषयत्वमायाति। न तु रूप्यादेरज्ञानोपादानकत्वम्। अज्ञाने व्यभिचारात्। अन्धकारोपादानाज्ञानानिवर्तकस्यापि प्रकाशस्य तन्निवर्तकत्ववदुपपत्तेश्चाविरोधस्य फलबलकल्प्यत्वादिति।

ज्ञाननिवर्त्यत्वस्य मिथ्यात्वं विऽनानुपपत्तिरूपव्याप्त्यभावं वक्तुं संस्कारानिवर्त्यत्वमुपाधिमाह ॥ अपि चेति॥ उपाधेः साध्येनान्वयव्याप्तिं दर्शयितुं कल्पित इत्यादि। अप्रयोजकत्वनिरासार्थं व्यतिरेकव्याप्तिप्रदर्शनाय संस्कारेत्यादि। उपाधेः स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापनसामर्थ्यं वक्तुं श्रवणादीत्यादि। ज्ञाननिवर्त्यत्वस्य मिथ्यात्वव्यभिचारमप्याह ॥ किं चेति॥ ॥ अज्ञानमपीति॥ तथा चाज्ञान एव व्यभिचार इति भावः। निवृत्तिनिवर्त्ययोः समानसत्ताकत्वनियमोऽसिद्धः। शुक्तिरूप्यतन्निवृत्त्योर्भिन्नसत्ताकत्वेन तत्र व्यभिचारादित्याशङ्क्य परिहरति ॥ प्रातिभासिकस्येति॥ प्रकारान्तरेणाज्ञाने व्यभिचारमुपपादयति ॥ अज्ञानेति॥ दोषेति॥ तथा चाविद्यारूपदोषस्याऽपि स्वाधिष्ठानेन ब्रह्मणा समसत्ताकत्वमित्यर्थः। नन्वज्ञानेपि ज्ञाननिवर्त्यत्वेन मिथ्यात्वमनुमीयतेऽतो न तत्र व्यभिचार इत्यत आह ॥ किं चेति॥ ॥ श्रुतिबलादिति॥ तथा चाप्रयोजकत्वान्नाज्ञाने मिथ्यात्वानुमानमिति भावः ॥ सत्यस्यापीति॥ अज्ञानस्येति शेषः। ज्ञानत्वाज्ञाननिवर्तकत्वयोः सामानाधिकरण्याभावान् नोक्तव्याप्तिसम्भव इत्याह ॥ किं चेति॥ ॥ मुक्ताविति॥ वृत्तिप्रति-बिम्बितचैतन्यस्य मुक्तावभावादित्यर्थः ॥ मुक्तावानन्दाज्ञानं च स्यादित्यपि बोध्यम्॥ ॥ साक्षीति॥ उक्तरूपस्याज्ञाननिवर्तकस्य सुखादावभावादित्यर्थः। सुखादौ ज्ञप्त्यभावश्च स्यादित्यपि बोध्यम् ॥ एतेनेति॥ चैतन्यमात्रस्याज्ञानरूपबन्धानिवर्तकत्वेन। चैतन्यमात्रस्याज्ञाननिवर्तकत्वे दोषमाह ॥ मोक्ष इति॥ मुक्त्यानन्दे सुखादौ च चैतन्यमात्रप्रकाश्ये तन्मात्रस्य ज्ञप्तित्वेन ज्ञप्तेश्चा-

(तरङ्गिणी)

ज्ञाननिवर्तकतया मुक्तानन्दस्येदानीं प्रकाशापातादित्यर्थः ॥ न जानामीति ॥ अज्ञानस्य ज्ञानकरणेन विरोधोऽपि नास्त्यतो न ज्ञानकरणमज्ञाननिवर्तकमित्यर्थः ॥ तदधिगम इति ॥ तस्य ब्रह्मणोऽधिगमे ज्ञाने सति ज्ञानोत्तरं कृतस्य पापस्य अश्लेषोऽसम्बन्धः ज्ञानात्पूर्वमुत्पन्नस्य पापस्य विनाशः। तद्यथा पुष्करपलाश इत्यादौ, तद्यथेषीकातूलमित्यादौ श्रुतौ तथा व्यपदेशादित्यर्थः।

सत्यभूतस्य ज्ञानान्निवृत्तौ दृष्टान्तासिद्धिरित्याह ॥ चित्रेति ॥ ननु चित्राख्यरूपस्यैकत्वात् तत्र नीलरूपाद्यभावात् कथं चित्रावयविनो नीलवैशिष्ट्यमुच्यते। अत्र केचित्। चित्रावयव्यारम्भकनीलविशिष्टज्ञानमित्यर्थः। न चैवं चित्रावयविनीतिपदवैयर्थ्यम्। नीलज्ञानस्य स्वविषयनिवर्तकत्वे चित्रावयविन एवानुपपत्तिरिति प्रदर्शनार्थत्वादित्याहुः। तन्न। नीलावयविनि पीतिमादेरभावेन तद्गतपीतिमादेरित्यस्यासङ्गत्यापत्तेः। अन्ये तु चित्रावयव्यारम्भकपीतावयवे नीलोऽयमासीदिति ज्ञानं नीलज्ञानमिह विवक्षितम्। न चैतज्ज्ञानं वर्तमानं पीतं निवर्तयति। न च वर्तमानविषयज्ञानमेव स्वविषयविरोधिनिवर्तकमिति वाच्यम्। पारमार्थिकप्रपञ्चवादिनः तत्काले तदसम्भवेन निष्प्रपञ्चब्रह्मज्ञानस्य प्रपञ्चनिवृत्तेः पूर्वं वर्तमानप्रपञ्चाभावविषयत्वासम्भवेन ततः प्रपञ्चनिवृत्त्यसम्भवादित्याहुः। तदपि न। चित्रावयविनीत्यस्यास्वारस्यापत्तेः। अपरे तु नानारूपसमाहार एव चित्रम्। तथैव प्रतीतेः। कारणे चित्राभावेन कार्ये तदयोगाच्च। शुक्लादिरूपस्य समानजातीयरूपारम्भकत्वनियमात्। नानारूपवदवयवारब्धद्रव्यरूपस्याव्याप्यवृत्तित्वं चानुभवबलात् स्वीकर्तव्यम्। अभावांतरे गुणान्तरे चादृष्टस्यापि तस्य संयोगे तदभावे च दर्शनबलेनाभ्युपगमात्। एकस्यैव संयोगात्यन्ताभावस्य व्याप्याव्याप्यवृत्तित्वाभ्युपगमे किमपराद्धं रूपेणेत्याहुः। तदपि न। नानारूपसमाहारस्य चित्रत्वे नीलधवलारुणेषु कर्बुरार्थकचित्रप्रत्ययापत्तेः। नीलपीतादिषु मिथस्संसृष्टेषु अनारब्धद्रव्येष्वपि कर्बुरप्रत्ययस्तु द्रव्यान्तरोत्पादावभिमानात्। तस्मात् नीलादिवत् चित्रमपि रूपान्तरमेव। नन्वेकरूपवदवयवसहितस्यावयविन उपलम्भेऽपि चित्रप्रत्ययः स्यादिति चेत् अस्त्येव तत्र चित्ररूपप्रत्ययः। चित्रत्वजातेस्तु न। अवयववृत्तिविजातीयसमाहाराभिव्यङ्ग्यत्वात् तस्याः। अत एव त्र्यणुके चित्रे कदापि न प्रत्ययः। तथाऽप्यचित्रे पार्श्वे चित्रप्रत्ययो मा भूत्। धवलप्रत्ययस्तु कुत इति चेत् अवयवरूपसञ्चरेणावयविनोऽपि तथाप्रत्ययात्। तस्माच्चित्रावयविनि नीलविशिष्टज्ञानमित्येतदनुपपन्नमेव। तदेतत् बौद्धाधिकारे स्पष्टम् ॥ तर्हीति ॥ घटादिज्ञानस्याज्ञानानिवर्तकत्वे ज्ञानस्याज्ञाननिवर्तकत्वे दृष्टान्ताभावात् ब्रह्मज्ञानस्य बन्धनिवर्तकत्वेन बन्धस्याज्ञानमयत्वं न सिध्येदित्यर्थः ॥ त्वयाऽपीति ॥ उक्तं च विवरणे। कथं पुनर्लोके सहाज्ञानेनाध्यासस्य तत्वज्ञानानिवृत्तेरप्रतिपत्तौ ब्रह्मज्ञानात् सहाज्ञाने-

(तरङ्गिणी)

**नाध्यासस्य निवृत्तिर्दृष्टद्वारेण कल्पन इति नैव दोषः। तत्त्वावभासविरोधिनोऽग्रहण-मिथ्याज्ञानादेस्तत्त्वज्ञानेन निवृत्तिदर्शनादिहापि तत्त्वावभासविरोधितयैव भावरूपाज्ञानादेः कल्प्यमानत्वात् तस्य ब्रह्मज्ञानान्निवृत्तेरुपपत्तेरिति ॥ सममेतदिति॥ प्रकाशेनान्धकारस्येव सत्यस्य बन्धस्य ब्रह्मज्ञानान्निवृत्तिर्विरोधादित्येवाङ्गीकर्तव्यमित्यर्थः।**

**॥ ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तिभङ्गः ॥**

## न्यायामृतकण्टकोद्धारः

ननु तथापि तरति शोकमात्मवित्। तथा विद्वान् नामरूपाद्विमुक्तः। भिद्यते हृदयग्रन्थिः इत्यादि श्रुतिबोधितज्ञाननिवर्त्यत्वान्यथानुपपत्तिर्मिथ्यात्वे प्रमाणम्। मिथ्यात्वं विना ज्ञाननिवर्त्यत्वासंभवादित्यत आह नापीति। न हीति। ननु शुक्तिरूप्यादौ ज्ञाननिवर्त्यत्वं तावदस्ति। तत्र निवर्त्यतावच्छेदकं न शुक्तिरूप्यत्वादिकम्। अननुगमात्। किन्तु मिथ्यात्वमेव। एवं ज्ञानस्य निवर्तकतावच्छेदकं न शुक्तिविषयत्वादिकम्। अननुगमात्। किन्तु सर्वानुस्यूतमधिष्ठानप्रमात्वमेव। एवं चाधिष्ठानप्रमात्वेन ज्ञानं यस्य निवर्तकं तन्मिथ्येति नियमः स्वीक्रियते। एवं चैकनियमकल्पनालाघवम्। अन्यथा गौरवमिति। एवंस्थिते जगति श्रुत्या ज्ञाननिवर्त्यत्वे बोधिते तदन्यथानुपपत्त्या मिथ्यात्वं सिध्यति। न च सद्विलक्षणत्वं ब्रह्मभिन्नत्वं ज्ञाननिवर्त्यतावच्छेदकमिति वाच्यम्। असतोपि निवृत्त्यापत्तेः। तद्व्यावृत्त्यर्थं विशेषणे मिथ्यात्व एव पर्यवसानमिति। मैवम्। एवं हि शुक्तिरजतादेर्मिथ्यात्वं न स्यात्। निवर्तकस्य शुक्तिज्ञानस्य त्वया प्रमात्वानङ्गीकारात्। किं चोभयसाधारणं प्रमात्वं न तावत् तद्वति तत्प्रकारकत्वम्। वेदान्तजन्यचरमान्तः करणवृत्तौ तदभावात्। नापि निष्प्रकारकत्वम्। शुक्तिवृत्तौ तदभावात् नापि भ्रमभिन्नज्ञानत्वम्। शुक्तिवृत्तेः सप्रकारकत्वेन त्वद्रीत्या भ्रमत्वेन तदभावात्। न च प्रमात्वपदस्थाने ज्ञानत्वं प्रवेश्यमिति वाच्यम्। अधिष्ठानज्ञानत्वस्य भ्रमसाधारणत्वेन निवर्तकतानवच्छेदकत्वात्। अन्यथा सप्रकारकब्रह्मज्ञानस्यापि निवर्तकत्वसंभवे अखण्डार्थत्ववर्णनं वृथा स्यात्। तस्मान्न निवर्तकतावच्छेदकमनुगतं संभवति। नापि मिथ्यात्वं निवर्त्यतावच्छेदकम्। तद्धि न तावदसत्वम्। प्रपञ्चस्याप्यसत्वापत्तेः। नाप्यज्ञानकल्पितत्वम्। तस्य शुक्तिरूप्ये ममासिद्धेः। ज्ञाननिवर्त्यत्वान्यथानुपपत्त्या तत्सिद्धौ चान्योन्याश्रयापत्तेः। ज्ञाननिवर्त्यत्वे सिद्धे तदन्यथानुपपत्त्योक्तमिथ्यात्वसिद्धिः। तत्सिद्धौ च तदवच्छेदेन ज्ञाननिवर्त्यत्वसिद्धिरिति। किंच निवर्त्यत्वं न ध्वंसप्रतियोगित्वम्। शुक्तिज्ञानेन रजतं नष्टमित्यननुभवात्। प्रतिपन्नोपाधावत्यन्ताभाव प्रतियोगित्वं चेत् तदवच्छेदकमसत्वमेवास्तु। तथाच जगतोऽप्यसत्वमेव स्यात्। किंच तादृशं ज्ञाननिवर्त्यत्वं न श्रुत्या बोधितमिति कस्यानुपपत्त्या मिथ्यात्वसिद्धिरिति। तस्मादनुगतेन निवर्त्यनिवर्तकभावासंभवात् मूलोक्तरीत्याननुगतमेव तत् स्वीकर्तव्यमिति। नचोक्तस्थलेषु सत्यत्वासंप्रतिपत्त्या मिथ्यात्वमस्त्येवेति वाच्यम्। तस्य ज्ञानानिवर्त्ये असत्यपि विद्यमानत्वेन ज्ञाननिवर्त्यतानवच्छेदकत्वात्। किंच ज्ञाननिवर्त्यत्वस्यान्यथाप्युपपत्त्या न मिथ्यात्वसाधकत्वमित्यन्यथासिद्धावुद्भावितायां सत्यत्वासंप्रतिपत्तिरनुत्तरम्।

(कण्टकोद्धारः)

अन्यथासिद्धिरेव परिहरणीयेति। ननु दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम्। दृष्टान्ते हि येन रूपेण निवर्तकता तेन रूपेण ब्रह्मज्ञाननिवर्तकतायाः प्रकृतेऽसंभवात्। तथाहि न तावद् ब्रह्मज्ञानस्य प्रतियोगित्वेन निवर्तकता तेन रूपेण ब्रह्मज्ञाननिवर्तकतायाः प्रकृतेऽसंभवात्। तथाहि न तावद् ब्रह्मज्ञानस्य प्रतियोगित्वेन निवर्तकता। प्रपञ्चस्य भावरूपत्वात्। ज्ञानस्य प्रागभावनिवृत्तित्वेन प्रतियोगित्वेन निवर्तकतासिद्धेश्च। नाप्युत्तरगुणत्वेन। आकाशादेरात्मविशेषगुणत्वाभावात्। इच्छादेरपि प्रपञ्च निवर्तकतापत्तेश्च। नापि फलत्वेन। संस्कारस्य स्मृति जनकत्ववत् आकाशादेरात्मज्ञानजनकत्वाभावात्। संस्कारस्य स्मृत्यनाश्यत्वेनोदाहरणासिद्धेश्च। विषयदोष दर्शनस्य तु रागादिनिवर्तकत्वं रागादि कारणीभूत बलवदनिष्टाननुबन्धिष्ट साधनत्व भ्रमरूप तत्कारण निवर्तकत्वेन। गरुडध्यानं तु न ज्ञानम्। तस्य मानसक्रियात्वात्। ज्ञानस्येच्छानधीनत्वेन तदधीनध्यानापेक्षया वैलक्षण्याच्चेति चेन्न। सत्यस्यापि ज्ञाननिवर्तकता संभवतीत्यस्मिन्नंशे दृष्टान्तः। ननु येनरूपेण दृष्टान्ते निवर्तकता तेन रूपेण प्रकृत इत्येतस्मिन्नंशे। तथाचानुक्तोपालम्भः। किंचास्तु प्रतियोगित्वेन निवर्तकता। प्रतियोगित्वं च विरोधित्वं तत्सत्ताऽसहिष्णुत्वम्। मूषक प्रतियोगि मार्जारादि साधारणम्। विरोधिता च फलबलकल्प्येति न किंचिदनुपपन्नम्। न च ज्ञानस्य प्रागभाव निवृत्तिरूपत्वेन न तन्निवर्तकतेति वाच्यम्। प्रागभावनिवृत्तिर्ज्ञानादितिरिक्तेत्येतन्मतेनास्याभिधानात्। यच्चोक्तं विषयदोषदर्शनस्य रागकारणनिवर्तकत्वेन रागानिवर्तकत्वमिति तत्तुच्छम्। उत्पन्नो यदा रागस्तदैव तत्कारणस्य ज्ञानस्य निवृत्तत्वात् न विषयदोषदर्शनस्य तत्र कारणता। किन्त्वन्वयव्यतिरेकाभ्यां रागनिवृत्तिकारणत्वमेव। स्मरणस्य संस्कारनाशकत्वं च स्मरणानन्तरं स्मृते स्मृत्यन्तरानुदयात् सिद्धमित्यलम्। यच्चोक्तं ध्यानं न ज्ञानमिति तन्न। स्मृतिसन्तानस्यैव ध्यानत्वात्। नच ध्यानस्येच्छाधीनत्वात् तदनधीनज्ञानात्मकत्वं विरुद्धमिति वाच्यम्। ज्ञानविशेषस्यापीच्छाधीनत्वात्। अन्यथाङ्गवलनादिरूपक्रियाया इच्छाधीनत्वात् ध्यानस्यापि तन्न स्यात्। तस्मात् ध्यानस्य ज्ञानत्वेऽपि इच्छाधीनत्वमुपपद्यते। तथाच गरुडध्यानं गरुडस्मृतिः। अत एव ध्याते स्मरामीत्यनुव्यवसायः। तस्मान्न दृष्टान्तदार्ष्टान्तिकासङ्गतिः। समं प्रकृतेऽपीति। ब्रह्मज्ञानस्यापि विहितक्रियात्वेनैव निवर्तकतास्त्वित्यर्थः। ननु ब्रह्मदर्शनस्य न विधेयत्वं संभवति। कर्तुमकर्तुमन्यथाकर्तुं शक्यस्यैव विधेयत्वात्। ज्ञानस्य चातथात्वात्। तथाच न विहितक्रियात्वेन निवर्तकतेति चेन्न। ज्ञानविशेषस्य तथात्वात्। उपपादयिष्यते चैतत्। तृतीयपरिच्छेदे। ननु दर्शनमात्रस्य न विधेयता। क्वाप्यदर्शनात्। सेतुदर्शनादौ दृष्टमिति चेन्न। तत्र कृतिसाध्य-बहुविशेषणविशिष्टाकारेण विधेयता। अन्यथा तत्रत्यम्लेच्छादीनां सेतुदर्शनमात्रात् ब्रह्महत्यानिवृत्तिः स्यात्। प्रकृते च न तादृशं विशेषणम्। ज्ञानस्याज्ञाननिवृत्तावन्योन्यानपेक्षणात्। बन्धस्य चाज्ञानमात्रोपादानकत्वेनाज्ञाने निवृत्ते निवृत्त्यवश्यंभावात्। तथाच ब्रह्मज्ञानस्याविधेयत्वात् कथं विहितक्रियात्वेन निवर्तकतेति शङ्कते नन्विति। इहापीति। तथाच ब्रह्मज्ञानस्यापि कृतिसाध्यविशेषण विशिष्टाकारेण विधेयत्वसंभवात् न काचिदनुपपत्तिरिति भावः। नन्वत्र विशेषणप्रवेशः किमर्थ इत्यत आह भाषाप्रबन्धेनेति। अन्यथेति। यदि भाषाजन्यब्रह्मदर्शनमात्रान्निवृत्तिरित्यर्थः। तथाच श्रवणाद्यभावेपि तत्वमस्यादि वाक्यजसाक्षात्कारसंभवात् अज्ञाननिवृत्त्यापातेनाज्ञाने निवृत्ते चोपादेयानवस्थानेन प्रारब्धकर्माभावात् सद्योमोक्षोदये जीवन्मुक्त्यादिकं किमपि न स्यादिति भावः। न च ब्रह्मज्ञानस्य प्रपञ्चनिवर्तकत्वाङ्गीकारेऽपि अधिष्ठानसाक्षात्कारत्वं न

(कण्टकोद्धारः)

निवर्तकतावच्छेदकम्। किन्तु नियमाधीत वेदान्तश्रवणादिसाध्यत्वमिति न भाषाजन्यस्य निवर्तकत्वमिति वाच्यम्। तथासति शुक्तिरजतादि साधारण्यं न स्यात्। तादृशज्ञाननिवर्त्यत्वेन मिथ्यात्वासिद्धेश्चेति। अत एव न वैधर्म्यसमा जातिः। नियमादिसाध्यस्य निवर्तकतावच्छेदकत्वानवच्छेदकत्वयोर्दोषाभिधानान्न वैधर्म्यमात्रादिति। ननु तथापि सत्यस्य निवृत्तिर्न संभवति। क्वाप्यदृष्टत्वात्। उक्तदृष्टान्तेषु सत्यत्वासंप्रतिपत्तेः। अन्यथा ब्रह्मणोऽपि निवृत्तिः स्यादित्यत आह किञ्चेति। सत्यत्वाविशेषेपि ब्रह्मणो न निवृत्तिः। तन्निवृत्तिबोधकप्रमाणाभावात्। अन्यथा मिथ्यात्वेऽपि न निवृत्तिः। अदर्शनात्। मिथ्याभूतस्य शुक्तिरजतादेर्निवृत्त्य संप्रतिपत्तेः। अन्यथा असतोऽपि निवृत्तिः स्यादिति सुवचत्वादिति भावः। अत एव बन्धो मिथ्या अधिष्ठानप्रमात्वेनात्मज्ञाननिवर्त्यत्वात् शुक्तिरूप्यवदिति निरस्तम्। अन्यथासिद्धिस्वरूपासिध्योरापत्तेः। बाधाच्च। ईश्वरज्ञाननिवर्त्यघटादिवत् सत्यत्वेनैवोपपत्तेश्च। न चेश्वरज्ञानस्योपादानसाक्षात्कारत्वेन कारणत्वात् ध्वंसस्य च निरूपादानत्वात् कथं तत्र कारणत्वमिति वाच्यम्। उपादानापेक्षया कारणत्वस्य लघुत्वात्। न च तादृशज्ञानासंप्रतिपत्तिरिति वाच्यं तस्य व्यवस्थाप्यत्वात्। अन्यथेति। यदि दृष्टानुसार्येव कल्पनेत्यर्थः। नचायमपि जीवन्मुक्त्यनुवृत्तः सोपाधिक एवेति वाच्यम्। जीवन्मुक्तिदशायां भिक्षाटनादि प्रवृत्तिसंपादकत्वेन निरुपाधिकत्वात्। सोपाधिकस्य प्रवृत्त्यसमर्थत्वस्य पीतः शङ्ख इत्यादौ दर्शनादिति भावः। अज्ञाननिवर्त्यत्वान्यथानुपपत्तेः प्रतिकूल तर्कपराहतिमाह अपि चेति। न च देवतादर्शननिवर्त्यदुरिते न साध्यसिद्धिः। तथाच कथं दृष्टान्त इति वाच्यम् यदतादृशयज्ज्ञाननिवर्त्यं तत् तत्र कल्पितं नेति व्याप्तौ उक्तदुरितस्य निदर्शनत्वोपपत्तेः। दुरितस्य देवतायामकल्पितत्वात्। अत्र यदि बन्धः ब्रह्मणि कल्पितः स्यात् विशिष्ट कर्मसाध्यान्तःकरणशुद्धिजन्यब्रह्मज्ञान निवर्त्यो न स्यात्। अत्र सामान्यान्वयव्याप्तौ शुक्तिरजतं दृष्टान्तः। व्यतिरेकव्याप्तौ मूलोक्त इत्यवधेयम्। न चैवं ब्रह्मणि कल्पितत्वाभावो विपर्ययपर्यवसानेन स्यात्। न सत्यता। तथा च सत्यतैव स्यादिति कथमुपसंहार इति वाच्यम्। ब्रह्मणि कल्पितत्वाभावेऽकल्पितत्वमेव सिध्यति। ब्रह्मातिरिक्ते तेन कल्पनानङ्गीकारादिति द्रष्टव्यम्। अपिचेति। न च ब्रह्मज्ञानोत्पत्तौ श्रवणादिजन्यसंस्कारसापेक्षत्वेऽपि ब्रह्मज्ञानेनापि ज्ञाननिवृत्तौ न तदपेक्षेति वाच्यम्। अस्माभिरपि संस्कारसापेक्षताया उत्पत्तावेवाभिधानात्। अत्रापि पूर्ववदेव समाधानं द्रष्टव्यम्। किञ्चेति। न चाज्ञाननिवृत्तिरपि न तात्विकीति वाच्यम्। तस्या मिथ्यात्वे मिथ्याभूतस्य निवृत्तिनियमेन मुक्तस्य संसारापत्तिः स्यात्। न चाविद्यानिवृत्तिः पञ्चमप्रकारेति वाच्यम्। बन्धस्यापि पञ्चमप्रकारतापातात्। पञ्चमप्रकारत्वे त्रितयान्यतरत्वापत्तेर्दुर्वारत्वात्। ननु रूप्यस्य प्रातिभासिकत्वेपि तद्ध्वंसस्य व्यावहारिकत्वात् कथं निवृत्तिनिवर्त्त्ययोः समानसत्ताकत्वमित्यत आह प्रातिभासिकस्येति। मया तस्या सत्वाङ्गीकारेण तद्ध्वंसासंप्रतिपत्तेश्चेत्यपि द्रष्टव्यम्। किञ्चेति। न चाज्ञानस्य मन्मते सर्वत्र प्रातिभासिकत्वात् अज्ञेयस्य च क्वचित् पारमार्थिकत्वात् क्वचिच्च व्यावहारिकत्वात् समानसत्ताकत्वनियमोऽसिद्ध इति वाच्यम्। अज्ञानस्यापि व्यावहारिकोपादानत्वात् ब्रह्मधीनाश्यत्वाच्च व्यावहारिकत्वमेष्टव्यम्। अन्यथा सतोऽप्यसदुपादानकत्वं मिथ्याभूतस्यापि सत्योपादानकत्वं स्यादिति कार्यानुगुणत्वेन मिथ्याभूतमुपादानमावश्यकमिति त्वत्सिद्धान्तो भज्येत। किञ्चेति। नन्वेतल्लोके अदृष्टत्वेपीत्यनेन पुनरुक्तम्। तत्रापि श्रुतिबलात् सत्यस्य निवृत्तेरुक्तेरिति चेन्न। अत्रान्यत्रादृष्टत्वेन सत्यनिवृत्त्यनङ्गीकारे अनादिभावरूपस्यापि अन्यत्र निवृत्तेरदृष्टत्वात् सापि न स्यादित्यत्र

(कण्टकोद्धारः)

तात्पर्यात्। अत एव यथानादिभावरूपस्येत्युक्तम्। त्वन्मत इति। चैतन्यस्य बन्धनिवर्तकत्वे तस्य सर्वदा सत्वात् सर्वदा बन्धनिवृत्तिः स्यादिति भावः। ननु तर्हि या निवर्तिका सैव ज्ञप्तिरित्यत आह बन्धेति। विवरणे वृत्तौ ज्ञानशब्दस्य करणव्युत्पत्त्या वृत्तिरित्युक्तत्वात् वृत्तिर्न ज्ञप्तिरिति भावः। मुक्ताविति। या ह्यज्ञाननिवर्तिका सैव प्रकाशिका। आवरण निवर्तकस्यैव प्रकाशत्वात्। तथा च मोक्षे वृत्त्यभावेन तत्प्रतिबिम्बित चैतन्यरूपज्ञस्यभावे आनन्दप्रकाशो न स्यादित्यर्थः। साक्षिविषयेति। वृत्त्यभाव दशायां सुखज्ञानाभावादिति भावः। मोक्ष इति। नच चैतन्येनानन्द प्रकाशमात्रं जायते, नत्वावरणनिवृत्तिरिति वाच्यम्। आवरण-निवर्तकातिरिक्तस्य प्रकाशत्वे मानाभावात्। तथाच प्रकाशत्वेऽज्ञाननिवर्तकत्वमावश्यकमिति नित्यनिवृत्त्यापात इत्यर्थः। ज्ञानकारणं चेदिति। न च ज्ञानशब्देन वृत्तिरेव विवक्षिता। अतो नोक्तदोष इति वाच्यम्। अज्ञाननिवर्तकस्यैव प्रकाशत्वेन वृत्तेरेव प्रकाशत्वे आध्यासिकसंबन्धस्यातन्त्रत्वप्रसङ्गः। मोक्ष आनन्दप्रकाशश्च न स्यादिति भावः। एवमिति। अज्ञानवद् विश्वस्यापि सत्यत्वोपपत्तेरिति भावः। असिद्धिरिति। क्षिधातोः, भस्मसात्करणशब्दस्य, विनाशशब्दस्य चोक्तरूपनिवृत्तौ शक्त्यभावात्। अन्यथा शुक्तिरजतं नष्टमित्यादि व्यवहारापातादिति भावः। निवर्त्यस्य सत्यत्वं मिथ्यात्वं चास्तु। निवर्तकतावच्छेदकं तु विरोधित्वम्। तच्च फलबलकल्प्यमिति वक्तुं विवरणमुत्थापयति। अत्रेति। नानारूप समाहारश्चित्रमित्यभिप्रायेणाह चित्रेति। प्रतिबन्द्या समाधत्ते ज्ञानेनेति। चैत्रनिष्ठेति। न च तन्मैत्रनिष्ठघटाज्ञान समानविषयकं नेति वाच्यम्। नीलविशिष्टज्ञानस्य पीतिमाद्यविषयत्वात्। इदं रजतमिति ज्ञानेन रजतनिवृत्त्यापत्तेश्च। ननु ज्ञानं मिथ्याभूतस्य यस्य कस्य चिन्निवर्तकमिति न नियमः। किन्तु ज्ञानमज्ञानस्यैव निवर्तकम्। अज्ञाने निवृत्ते तदुपादानकं स्वयमेव निवर्तत इति कथमेते विकल्पा इत्याशङ्कते नन्विति। ज्ञानमात्रस्याज्ञाननिवर्तकत्वं ज्ञानविशेषस्य वा ? नाद्य इत्याह चैत्रस्येति। ननु न ज्ञानसामान्यमज्ञाननिवर्तकम्। अपि तु प्रत्यक्षज्ञानमित्यत आह बिम्बप्रतिबिम्बयोरिति। इदं तु परमताभिप्रायेण। स्वेन तत्रैक्य साक्षात्कारानभ्युपगमात्। भेदज्ञाने विद्यमाने ऐक्यसाक्षात्कारायोगात्। ननु श्वेतत्वानुमितिरूपज्ञानेनापि तदज्ञानं निवर्तत एवेत्यत आह श्वेतत्वानुमित्यादिनेति। ननु सोपाधिकत्वादनुवृत्तिर्भविष्यतीत्यत आह भ्रमस्येति। ननु सोपाधिकभ्रमे उपाधिनिवृत्ति सहितं ज्ञानमज्ञाननिवर्तकम्। अतो नोक्तदोष इत्यत आह ज्ञानस्येति। अन्यथा प्रागभावनिवर्तनेऽपि उपाधिनिवृत्त्यपेक्षा स्यात्। एवमज्ञानत्वं न निवर्त्यतावच्छेदकमित्याह किंचेति। न चैकं ज्ञानमेकमज्ञानं नाशयति, नाज्ञानान्तरम्। फलबलेन तथास्वभावादिति वाच्यम्। तर्ह्यज्ञानान्तरस्य जवनिकावत् प्रतिबन्धकस्य सद्भावे कदापि घटप्रकाशो न स्यात्। प्रकृतदूषणपरिहारोपयोगित्वेन शङ्कते नन्विति। बन्धस्येति। तथाच ज्ञानं स्वसमानाश्रय-विषयकाज्ञाननिवर्तकमिति व्याप्तिरपि न स्यादिति भावः। नन्विति। तथाचज्ञानविरोधित्वादेव मिथ्यात्वमपि कल्प्यत इति भावः। अज्ञानत्वमज्ञानमयत्वम्। ज्ञानविरोधिनो भ्रान्त्यादेर्मिथ्यात्वासंप्रतिपत्तेर्न तद्विरोधित्वेन मिथ्यात्वं कल्प्यमिति भावः। ननु ज्ञाननिवर्त्यं शुक्तिरूप्यं मिथ्यादृष्टमित्यत आह मिथ्याभूतस्येति। तथात्वे शुक्तिरूप्यं नष्टमिति प्रतीतिः स्यादिति भावः। ननु ज्ञाते द्वैतं न विद्यत इति श्रुत्या ज्ञाने सति द्वैताभावः प्रतिपाद्यते। तदन्यथानुपपत्त्या ज्ञानस्य द्वैताभावप्रयोजकता कल्प्यते। तथाच ज्ञानप्रयुक्ता-भावप्रतियोगित्वमेव मिथ्यात्वम्। न चेदानीमपि ब्रह्मज्ञानसंभवात् द्वैताभावः स्यादिति वाच्यम्।

(कण्टकोद्धारः)
चरमसाक्षात्कारस्य द्वैताभावप्रयोजकत्वादित्यत आह अपि चेति। तथाच चरमसाक्षात्कारोपि न द्वैताभावप्रयोजकः। तस्मिन् सत्यपि द्वैतानुवृत्तिदर्शनादिति भावः। फलितं दर्शयति तस्मादिति। तथाच बोधकप्रमाणे सत्यस्यापि विरोधिना ज्ञानेन निवृत्तिर्युक्तैवेति भावः। ज्ञाननिवर्त्यत्वं प्रपञ्चस्याङ्गीकृत्योक्तम्। वस्तुतस्तु तन्नास्तीत्याह वस्तुतस्त्विति। ननु दृष्ट्वैव मुच्यते नापरेणेति श्रुत्यावधारणसहितयाऽन्यस्य कारणत्वं निषिध्यते। तथाच प्रसादस्य तत्कारणत्वे तत् श्रुतिविरोध इत्यत आह दृष्ट्वैवेति। विशेषस्मृतिबलात् सामान्यश्रुतेरर्थान्तरवर्णनं युक्तमेवेति भावः।

ज्ञाननिवर्त्यत्वान्यथानुपपत्तिः भङ्गः।

## १८. सत्यस्य इति श्रुत्यर्थापत्तिप्रमाणभङ्गः

नापि "प्राणा वै सत्यं तेषामेष सत्यः" इति श्रुतार्थापत्तिस्तत्र मानम्। राजराजः, देवदेवः, मन्मथमन्मथः, "पवित्राणां पवित्रं यो मंगलानां च मंगलम्" इत्यादौ राजत्वदेवत्वादीनामिव प्राणादिसत्यत्वस्य ज्ञानाबाध्यत्वे सत्येवापकृष्टत्वमात्रेण तदुपपत्तेः। नापि "सत्यं ज्ञानम्" इत्यादौ ब्रह्मणः सत्यत्वलक्षणोक्त्यन्यथानुपपत्तिर्मानम्। छान्दोग्ये (८।३।५) "तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तान्येतानि त्रीण्यक्षराणि सतीयमिति तद्यत् सत् तदमृतम्, अथ यत्ति तन्मर्त्यम्, अथ यद्यं तेनोभे यच्छति" इति मुक्तमुक्तनियन्तृत्वं सत्यत्वमित्युक्तेः।

सत्ये प्रतिष्ठितः कृष्णः सत्यमस्मिन् प्रतिष्ठितम् ।
सत्तासत्ते च गोविन्दस्तस्मात् सत्यः सतां मतः ॥

इति भारतोक्तेश्च। न च रूढ्यर्थं श्रौतयोगत्यागः। "यदाजिमीयुस्तदाज्यानामाज्यत्वम्" इत्यादाविव निरवकाशश्रौतयोगबाधायोगात्। शास्त्रस्था वेति न्यायेनासति बाधके वेदे वैदिकार्थस्यैव ग्राह्यत्वाच्च। उक्तं च वार्तिके

"गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् ।
वेदोऽयमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥" इति ।

किं च "विज्ञानमानन्दं ब्रह्म" इत्यत्र "सैषानन्दस्य" इत्यादिश्रुत्युक्तमानुषाद्यानन्द-

व्यावृत्तापरिच्छिन्नानन्दत्ववदिहापि अन्यव्यावृत्तमनन्याधीनसत्यत्वं लक्षणमस्तु। नापि "विमुक्तश्च विमुच्यते" इति श्रुतार्थापत्तिर्मानम्। सज्जनस्यासत्सङ्गाद्दौर्जन्यस्य ताम्रद्रवत्वादिवत् सत्यत्वेऽपि "सज्जनः सज्जनो जातः" इतिवत् संसारस्य सत्यत्वेऽपि अस्वाभाविकत्वेन तदुपपत्तेः। भारते–

"उभे सत्ये क्षत्रियाद्यप्रवृत्ते मोहो मृत्युः सम्मतोऽयं कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादादमृतत्वं ब्रवीमि ॥" इति ।

संसारः सत्योऽप्यज्ञानाधीन इत्युक्तेः। एवमन्यदपि योज्यमिति सत्यमेव जगत्।

इति सत्यस्य सत्य इत्यादिश्रुतार्थापत्तिभङ्गः।

## न्यायामृततरङ्गिणी

ननु बृहदारण्यके "तस्योपनिषत्सत्यस्य सत्यम्," इति प्राणा वै सत्यं तेषामेष सत्यमिति। अन्यत्रापि बृहदारण्यके "अथ नामधेयं सत्यस्य सत्यम्," इति प्राणा वै सत्यं तेषामेष सत्यमिति ब्रह्मणि सत्यस्य सत्यमिति नामनिर्वचनेनान्यस्य ब्रह्मसत्तातोऽपकृष्टा सत्ता प्रतीयत इत्यत आह ॥नापीति॥ ॥एष सत्यमिति॥ एष आत्मा। सत्यं सत्यः ॥लक्षणोक्तीति॥ "ब्रह्मविदाप्नोति परम्" इति सूत्ररूपे वाक्ये उद्दिष्टस्य ब्रह्मणः "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनेन लक्षणान्युच्यन्ते। तत्र ब्रह्मणोऽन्यस्य सत्यत्वे तत्रैव तल्लक्षणातिव्याप्तिः स्यादित्यर्थः। नात्र सत्यशब्देनाबाध्यत्वरूपसत्यत्वं ब्रह्मलक्षणत्वेनाभिमतम्। किन्तु सर्वनियंतृत्वम्। तच्च प्रपञ्चसत्यत्वेऽपि न तत्रातिव्याप्तमित्याशयेन दहरप्रकरणे छन्दोगोपनिषदि विद्यमानं सत्यशब्दनिर्वचनवाक्यं पठति ॥तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तानि ह वा एतानीत्यादि॥ हशब्दद्वयं च उभयत्र प्रसिद्धिद्योतनाय। उक्तं च सत्यशब्दस्यावयवत्रयवत्त्वं बृहदारण्यके– "ते देवाः सत्यमेवोपासते तदेतदक्षरं सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरम्" इति। अत्र क्वचित् बृहदारण्यक इति पठित्वा तस्य ह वा एतस्येति वाक्यलिखनं तत्तु लेखकप्रमादात् ॥सत्तासत्ते॥ मुक्तामुक्तौ गोविन्दाधीनौ।

रथकारादिशब्दे रूढ्यर्थं योगत्यागवदिहापि तथा स्यादित्यत आह ॥श्रौतेति॥ सत्यपदान्वाख्यानलब्ध इत्यर्थः ॥यदाजिमायन्निति॥ यदाजिमायन्निति छन्दोगानां पाठः। अन्यादृशस्त्वयुक्तः एतच्च प्राक् प्रपञ्चितम् ॥शास्त्रस्था वेति॥ शास्त्रस्था वा तन्निमित्तत्वादिति

(तरङ्गिणी)
जैमिनिसूत्रस्य सन्दिग्धार्थके शास्त्रे शास्त्रान्तरस्था प्रसिद्धिर्ग्राह्या। शास्त्रार्थनिर्णयस्य शास्त्राधीनत्वादित्यर्थः। यथा यवमयश्चरुर्भवतीत्यत्र यवशब्देन प्रियङ्ग्वादिकं वा दीर्घशूको वेति संशये पृथक्जनप्रसिध्या प्रियङ्ग्वादीति प्राप्ते "यदान्या ओषधयो म्लायन्तेऽथ ते मोदमानास्तिष्ठंति इति अन्यौषधिम्लानिकालेऽपि मोदमानानां दीर्घशूकानामेव यवशब्देन ग्रहणं तद्वदित्यर्थः। नन्वेवं घटादौ सत्यशब्दो न स्यात्। श्रौतयोगस्याभावादित्यत आह ॥वेद इति॥ यथा श्येनेन यजेतेति विहितयागे सामानाधिकरण्याच्छ्येननामकत्वेन प्रसिद्धेऽनेकशक्तिकल्पनाभयाच्छ्येनशब्दस्य तद्वाचकभावानभ्युपगमेऽपि "यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते" इत्यर्थवादावगत निपत्यादायकत्वसादृश्येन पक्षिजात्योपमितगौणत्वद्वारेणवाऽऽप्तप्रसिद्धिः श्येनशब्दः पुनरितरेषु यागेषु धर्मातिदेशाय समानमितरच्छ्येनेनेति प्रयुज्यमानो गौणोऽपि क्लृप्तत्वाद्यागविषयत्वेनैवावसीयते, लोके तु श्येनत्वजात्यां रूढ्या पक्षिपरः, तथा लक्षणाद्युक्तौ रूढियोगाभ्यां सत्यादिशब्दा ब्रह्माभिदधति लोके रूढिमात्रेण तद्व्यवहार इति न दोषः। प्रत्युताबाध्यस्वरूपभिन्ने घटादौ त्वन्मत एव सत्यशब्दो न स्यादिति भावः।

ननु धर्मातिदेशादिव्यवहारसिध्यर्थं केनचिद् गुणयोगेन श्येनशब्दस्य यागविशेषनामत्वाङ्गीकरणमर्थवत्। इह तु सत्यशब्दस्य रूढित्यागेन योगाङ्गीकारे न विशेषहेतुरस्तीत्याशङ्कां स्मृतिपादीयवार्तिकसम्मत्या परिहरति ॥उक्तं चेति॥ गौणं योगादिना लब्धम्। यथा श्येनशब्दस्य यागादिः ॥लाक्षणिकमिति॥ पुरोडाशानलं कुर्वित्यादौ पुरोडाशशब्दस्य धानाः करम्भः पुरोडाशः परीवापः पयस्येति सवनीयहविःपञ्चकं लाक्षणिकोऽर्थः। अश्ववालः प्रस्तर इत्यादौ कुशानामश्ववालशब्दवाच्यत्वं तेषां प्रस्तरकार्ये विधानमिति वाक्यभेदोऽपि वेदाङ्गीकृतत्वान् दोष इत्यर्थः। उक्तं चात्रैव वार्तिके। अथापि गौणशब्दत्वं तथापि बलवत्तरम्। स्वतन्त्रस्य हि वेदस्य गौणत्वं न विचार्यते॥ इति। तस्माच्छास्त्रमतैवैका प्रतिपत्तिर्बलीयसी। न समा मुक्तकाचारैर्विप्रकृष्टैः ससङ्करैरिति च ॥भारत इति॥ सनत्सुजाते "यदिदं शृणोमि मृत्युर्हि नास्तीति तवोपदेशम्। देवासुरा अचरन् ब्रह्मचर्यममृत्यवे तत्कतरन्नु सत्यम्।" हे सनत्सुजात मृत्युर्नास्तीति तवोपदेशं शृणोमि देवासुराः पुनः अमृत्यवे मृत्योरभावाय ब्रह्मचर्यमाचरन्निति मृत्योः सत्त्वमवगम्यते। न ह्यविद्यमानस्य मिथ्याभूतस्य वा निवृत्तये ब्रह्मचरणं सम्भवति। तथा च मृत्युरस्ति नास्तीत्येतयोः पक्षयोः कतरत् सत्यमिति धृतराष्ट्रेण सनत्सुजातं प्रति पृष्टे उभे सत्ये इत्यादि धृतराष्ट्रं प्रति सनत्सुजातवाक्यम्। हे क्षत्रियाद्य मृत्युस्तदभावश्चेत्युभे अपि सत्ये एव प्रवृत्ते। तयोर्मध्ये मृत्युः संसारमोह इति सनत्सुजातवाक्यस्यार्थः।

## न्यायामृतकण्टकोद्धारः

ननु तथापि प्राणा वै सत्यमितिं श्रुतौ सत्यस्य सत्यत्वमुच्यते। यद्युभयोः सत्यत्वं समानं तर्हि तस्य सत्त्वात् सत्यत्वोक्तिः वृथैव स्यादिति पूर्वसत्यत्वमौपचारिकं नास्तीति गम्यते इति सत्यसत्यत्वोक्त्यन्यथानुपपत्त्या मिथ्यात्वं सिद्ध्यतीत्यत आह नापीति तथाचोत्कृष्टत्वमात्रेण सत्यसत्यत्वोक्तिरूपपन्नेति भावः। नापि सत्यमिति। इतरव्यावृत्तस्यैव लक्षणत्वादितरस्य सत्त्वाभावः सिध्यतीति भावः। सत्यं ज्ञानमित्यत्र न सत्यशब्दस्य रूढोऽर्थो गृह्यते, किन्तु श्रौतो यौगिकोऽर्थोऽतस्तस्यानति-प्रसक्तत्वाल्लक्षणत्वमुपपद्यत इत्याह ॥ बृहदारण्यक इति॥ ननूत्सर्गप्राप्तो रूढोऽर्थो न त्याज्य इत्यत आह ॥ सत्य इति॥ भारते प्रपञ्चस्य बहुवारं सत्त्वोक्तेः सत्त्वस्य प्रपञ्चे साधारणत्वेन लक्षणत्वायोगान्न रूढार्थपरिग्रह इति भावः। अत्र सत्तासत्ते चेति न मूलपाठः। सत्यासत्येत्याकरपाठः।

ननु रूढेर्योगापहारकत्वस्य पङ्कजादौ दृष्टत्वात्प्रकृतेऽपि रूढार्थं गृहीत्वा तस्य लक्षणत्वार्थं प्रपञ्चस्य मिथ्यात्वमेवाङ्गीकर्तव्यम्। भारते सत्वोक्तिस्तु व्यावहारिकसत्वपराऽस्त्वित्याशङ्क्य निषेधति ॥ न चेति॥ एवं च योगस्यापि निरवकाशत्वेन प्रबलत्वात् रूढ्या बाधो, न वा भारतवचनस्य व्यावहारिकपरत्वम्। अन्यथा चित्राज्याधिकरणेऽप्याज्यशब्दस्य रूढार्थपरिग्रहः स्यादिति भावः। आज्याधिकरणं शास्त्रस्था वेति न्यायश्च प्रागेव समर्थित इति न पुनः प्रयतितव्यम्। रूढ्यनङ्गीकारे मुख्यार्थपरिग्रहापत्तिरिति शङ्का भट्टवार्तिकसंमत्या परिहरति ॥ उक्तं चेति॥ एवं च यदा रूढादिपरित्यागेन सर्वथा मुख्यलाक्षणिकादिपरिग्रहस्तदा रूढत्यागेन यौगिकपरिग्रहे न किमप्यनिष्टमिति भावः।

अस्तु रूढार्थपरिग्रहस्तथापि नानिष्टमित्याह ॥ किंचेति ॥॥ नापीति॥ अत्र विमुक्तश्चेत्युक्त्या मिथ्यात्वं गम्यते। सत्यं चेद्विमुक्तत्वं न स्यात्। निगडादिबन्धयुक्ते तद्प्रयोगादिति भावः ॥ अस्वाभाविकत्वेनेति॥ तथा च विमुक्तत्वस्यान्यथाप्युपपत्तेर्न तेन मिथ्यात्वसिद्धिरिति भावः। उभे सत्य इति। क्षत्रियेतरस्य विद्धीति मूलपाठः। प्रमादं संसारम्। तथा च संसारस्य सत्यत्वं प्रमादत्वं चोक्तमित्यस्वाभाविकत्वमेव सिध्यतीति भावः। उक्तन्यायमन्यत्राप्यतिदिशति ॥ एवमिति॥

सत्यस्य सत्य इत्यादिश्रुत्यर्थापत्ति भङ्गः।

## १९. दृष्टिसृष्टिभङ्गः

यच्च बौद्धाभिमतक्षणिकत्वसिद्ध्यर्थमुक्तं विश्वस्य दृष्टिसृष्टिः – चैत्रे सुप्ते तद्देहादिकं तं प्रति नास्त्येव। जाग्रतो मैत्रस्य तु तद्भ्रान्त्या भाति। प्रत्यभिज्ञा तु सोऽयं दीप इत्यादिवत् भ्रान्तिरिति, तन्न। "षडस्माकमनादयः" इति स्ववचनेन, बौद्धं प्रति प्रत्यभिज्ञादिना विश्वस्य स्थायित्वप्रतिपादकविवरणेन च विरोधात्। दृगन्यस्य सर्वस्य दृष्टिसृष्टित्वे तत्तत्कार्यस्य प्रतीतिमात्रशरीरत्वेन नियततत्तत्कारणाजन्यत्वे श्रुतिषु स्वर्गाद्यर्थं ज्योतिष्टोमादिविधेर्ब्रह्मसाक्षात्कारार्थं श्रवणादिविधेराकाशादेर्वाय्वादिहेतुत्वोक्ते-

श्चायोगात्। तवापि तृप्त्यर्थं भोजने, परप्रत्यायनाद्यर्थं शब्दोच्चारणादौ च प्रवृत्त्ययोगेन स्वक्रियादिविरोधाच्च। यदि तूक्तश्रुत्यादिकमपि स्वाप्नश्रुत्यादितुल्यमिति न पर्यनुयोज्यं, तर्ह्यद्वैतश्रुतितन्मीमांसादिकमपि तथेति न तेनाद्वैतसिद्धिः। दृष्टिसृष्टिपक्षे घटादेः ज्ञानात्पूर्वमसत्त्वेन प्रतिकर्मव्यवस्थानुपपत्तेश्च। शुक्तीदमंशस्यापि रूप्यवदिदं रूप्यमिति ज्ञानात्प्रागसत्त्वेन संप्रयोगादिहेतुत्रयजन्यत्वरूपस्याध्यासतटस्थलक्षणस्य, सत्यस्य मिथ्यावस्तुसम्भेदावभासत्वरूपस्वरूपलक्षणस्य चायोगाच्च। इदं रूप्यमिति ज्ञानकाले शुक्तित्वादेरभावेनाध्यासस्य तदज्ञानकार्यत्वादिप्रक्रियाविरोधाच्च। इदं रूप्यमिति ज्ञानयोर्भिन्नविषयत्वेन बाध्यबाधकभावानुपपत्तेश्च। रूप्यादिबाधस्यापि दृष्टिसृष्टित्वेन तेन रूप्यादेर्मिथ्यात्वासिद्धेश्च। सुषुप्तिप्रलयादौ जीवब्रह्मविभागस्याप्रतीतत्वेनाविद्यमानतया प्रत्यहं प्रतिप्रलयं च मुक्तस्य पुनरावृत्त्यापाताच्च। सुप्तं प्रति संस्कारादेरप्यभावेन तस्य पुनरुद्बोधायोगाच्च। मोक्षस्यापि दृगन्यत्वेन स्वाप्नमोक्षवद् दृष्टिसृष्टिमात्रत्वापाताच्च। चिन्मात्रस्यैव घटादिदृष्टित्वे तस्य सदा प्रतीत्यापत्त्या विशिष्टस्य तत्त्वे वाच्ये तस्यापि विशिष्टस्य दृष्टिसृष्टित्वेऽनवस्थादिप्रसंगाच्च। उक्तन्यायेन दोषाज्ञानद्रष्टृदेहेंद्रियादीनामभावे भ्रान्त्ययोगेन तेषामपि दृष्टिसृष्टित्वेऽनवस्थापाताच्च। घटादेर्दृष्टिसृष्टिरित्यस्यापि दृष्टिसृष्टित्वेन घटादेरदृष्टिसृष्ट्यापाताच्च। प्रत्यभिज्ञाविरोधाच्च। दीपादौ परिमाणादिभेदकस्येवेह बाधकस्याभावात्, तदभावेऽपि भ्रान्तित्वे च घटादेरप्येकस्मिन्नपि क्षणे भेदस्याऽऽत्मनोऽपि प्रतिक्षणं भेदस्य च प्रसंगात्। सोऽयं वेददत्त इत्यादिदृष्टान्तेन तत्त्वमस्यादौ जहदजहल्लक्षणयैक्यपरत्वोक्त्ययोगाच्च। अत्र भेदस्यापि दृष्टिसृष्टित्वेन तज्ज्ञानस्य बाधकत्वायोगाच्च। "ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ध्रुवं विश्वमिदं जगत्" इत्यादिश्रुतिविरोधाच्च। भिन्नत्वेन प्रतीतस्य घटपटादेरभेदः, अभिन्नत्वेन प्रतीतस्य घटस्य प्रतिक्षणं भेद इति दृष्टहानादृष्टकल्पनापाताच्च। तस्मात्–

निर्बाधप्रत्यभिज्ञानाद् ध्रुवं विश्वमिति श्रुतेः ।
स्वक्रियादिविरोधाच्च दृष्टिसृष्टिर्न युज्यते ॥

"अस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि व्युच्चरंति" इति श्रुतावपि पूर्ववाक्ये "यत्रैष एतत्सुप्तोऽभूत्" इति सुप्ताधारत्वेनोक्तस्य ब्रह्मणः

**सर्वस्रष्टृतोच्यते। न तु सुप्तोत्थिताज्जीवात्प्राणादिसृष्टिः, येनेयं दृष्टिसृष्टौ मानं स्यात्। अन्यथा वाक्यशेषे "नाड्यो द्वासप्ततिसहस्राणि हृऽदयात्पुरीततम्" इत्यादिना सुषुप्तौ नाड्याद्युक्तिः, "यथोर्णनाभिः" "यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा" इत्याद्युक्तिः, अत्रापि वाक्ये "सर्वे लोका इत्याद्युक्तिश्चायुक्ता स्यात्। न हि दृष्टिसृष्टिपक्षे सुषुप्तौ नाड्यादि-कमूर्णनाभ्यग्न्यादितः तन्तुविष्फुलिङ्गजन्म वा सुप्तोत्थितस्य सर्वलोकादिदृष्टिर्वाऽस्ति। न चोर्णनाभितन्त्वग्निविष्फुलिङ्गदृष्टान्तो दृष्टिसृष्ट्यनुगुण इति न कल्पितं जगत्।**

**इति दृष्टिसृष्टिभङ्गः।**

## अद्वैतसिद्धिः

शुक्तिरूप्यस्वप्नादिवद् दृष्टिदृष्ट्यन्यथानुपपत्त्याऽपि जगतो मिथ्यात्वसिद्धिः। अथ केयं दृष्टिसृष्टिः ? (१) दृष्टिरेव सृष्टिरिति वा ? (२) दृष्टिव्यतिरिक्तसृष्ट्यभावो वा ? (३) दृष्टि-व्यतिरेकेण सृज्याभावो वा ? (४) दृष्टिसामग्रीजन्यत्वं वा ? (५) दृष्टिसमानकालीनसृष्टिर्वा ? (६) दृष्टिसत्तासमानसत्ताकसृष्टिर्वा ? (७) सदसद्विलक्षणत्वं वा ? (८) त्रिविधसत्त्वबहिर्भूतत्वे सत्यसद्विलक्षणत्वं वा ? (९) अज्ञातसत्त्वाभावो वा ? (१०) ज्ञातैकसत्त्वं वा ? आद्ये वृत्तिरूपा चैतन्यरूपा वा दृष्टिरभिमता ? प्रथमे चरमवृत्तिविषयब्रह्मणोऽपि दृष्टिसृष्ट्यापत्तिः। द्वितीये सर्वदाऽपि सृष्ट्यापत्तिः। न द्वितीयः। चैत्रेण सृष्टो मया दृष्ट इति वैलक्षण्येन व्यवहारानुपपत्तेः। न तृतीयः। 'ज्ञातो घटो न ज्ञानम्' इति अनुभवविरोधात्। न चतुर्थः। एकसामग्रीप्रसूतत्वेन घटादेर्दृष्ट्यभिन्नत्वेनानन्तरोक्तदोषात्। न पञ्चमः। शाब्दादि-ज्ञानसमकालोत्पन्नघटादौ सिद्धसाधनात्। तद्वदन्यत्रार्थान्तरतापत्तेश्च। न षष्ठः। उभय-सत्त्वेऽप्युपपत्तेः सिद्धसाधनात्। न सप्तमः। अस्यैव मिथ्यात्वरूपत्वेन तत्साधनायैव तदुपन्यासानुपपत्तेः। नाष्टमः। त्रिविधसत्त्वमध्ये प्रातिभासिकसत्त्वस्याप्यन्तर्भावेन दृष्टिसृष्टिपक्षे तद्वति जगति तद्बहिर्भावानुपपत्तेः। न नवमः। तुच्छसाधारण्यात्। न दशमः। सुखादौ सिद्धसाधनात्, तद्वदन्यत्रार्थान्तराच्चेति- चेन्न। दोषप्रयुक्तत्वनिबन्धनस्य ज्ञातैकसत्त्वस्याज्ञात-सत्त्वाभावस्य वा, प्रतिपन्नोपाधिदृष्टिजन्यज्ञातैकसत्त्वस्य वा, द्रष्ट्रन्तरावेद्यत्वे सति ज्ञातैकसत्त्वस्य वा विवक्षितत्वात्। तथा च न सुखाद्यंशे सिद्धसाधनम्, तद्वदन्यत्रार्थान्तरं वा।

(अद्वैतसिद्धिः)

ननु– जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इति प्राचां वचनेन, बौद्धं प्रति प्रत्यभिज्ञानादिना विश्वस्य स्थायित्वप्रतिपादकेन च सूत्रभाष्यवार्तिकविवरणादिग्रन्थेन विरोध इति चेन्न। अनाद्यतिरिक्ते सृष्टिविषय एव दृष्टिसृष्टिस्वीकारात्, कारणात्मना स्थायित्वस्वीकाराच्च। तावतैव बौद्धाभिमतक्षणिकत्व-निराकरणोपपत्तेर्नाकरविरोधः। प्रत्युताकरेषु बहुशो दृष्टिसृष्टिरुपपादितैव।

नन्वेवं प्रतीतिमात्रशरीरत्वेन नियतकारणाजन्यत्वे श्रुतिषु स्वर्गाद्यर्थं ज्योतिष्टो-मादिविधेर्ब्रह्मसाक्षात्कारार्थं श्रवणादिविधेराकाशादेर्वाय्वादिहेतुत्वस्य चोक्तिरयुक्तेति चेन्न। स्वाप्नकार्यकारणभावबोधकवदुपपत्तेः। न चैवं वेदान्तवाक्यस्य तन्मीमांसायाश्च स्वप्नवाक्य-तन्मीमांसातुल्यतापत्तिः। विषयबाधाबाधाभ्यां विशेषोपपत्तेः। अत एव तृप्त्यर्थं भोजने परप्रत्ययनार्थं शब्दादौ च प्रवृत्तेरयोगेन स्वक्रियाव्याघात इति निरस्तम्। स्वाप्नव्यवहारवदुपपत्तेः।

अथैवं घटादेः स्वज्ञानात् पूर्वमसत्त्वेन प्रतिकर्मव्यवस्थानुपपत्तिः। अधिष्ठानस्यापि शुक्तीदमंशस्य रूप्यादिवद् 'इदं रजतम्' इति ज्ञानात् प्रागसत्त्वेन संप्रयोगादिहेतुत्रय जन्यत्वरूपाध्यासतटस्थलक्षणस्य सत्यस्य वस्तुनो मिथ्यावस्तु संभेदाभाव इत्यस्य स्वरूपलक्षणस्य चायोग इति चेन्न। प्रतिकर्मव्यवस्थायाः संप्रयोगादिहेतुत्रय जन्यत्व-रूपाध्यासतटस्थलक्षणस्य च मन्दाधिकारिविषयत्वात्। सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदावभास इति स्वरूपलक्षणं तु दृष्टिसृष्टिपक्षेप्यविरुद्धम्। न हि इदमंशा वच्छिन्नं चैतन्यं न वस्तु, न वा मिथ्यारूप्यस्य तेन सह न सम्भेदावभासः। न च– 'इदं रूप्यम्' इति ज्ञानकाले शुक्तित्वादेरभावेनाध्यासस्य तदज्ञानकार्यत्वादिप्रक्रियाविरोध इति– वाच्यम्। 'इदं रूप्यम्' इति ज्ञानकाले शुक्तित्वस्याभावेऽपि तदज्ञानस्थित्यविरोधात्। न हि सत्ताकाल इव सत्ताविरहकालेऽपि अज्ञानं विरुध्यते। न च– 'इदं रूप्यं नेदं रूप्यम्' इति ज्ञानयोर्भिन्नविषयत्वेन बाध्यबाधकभावानुपपत्तिरिति– वाच्यम्। भिन्नविषयत्वेऽपि विषययोः सारूप्यात् स्वप्नबाध्यबाधकयोरिव बाध्यबाधकभावोपपत्तेः। न च– रूप्यादिबाधस्यापि दृष्टिसृष्टित्वे तेन रूप्यादेर्मिथ्यात्वासिद्धिरिति– वाच्यम्। बाध्यान्यूनसत्ताकत्वमेव बाधकत्वे प्रयोजकम्, न त्वधिकसत्ताकत्वमित्यस्योपपादितत्वेन व्यावहारिकेण व्यावहारिकबाधवत् प्रातिभासिकेन

(अद्वैतसिद्धिः)

प्रातिभासिकबाधाविरोधात्। न च– सुषुप्तिप्रलयादौ जीवब्रह्मविभागस्याप्रतीतत्वेनाविद्यमानतया प्रतिसुषुप्ति प्रतिप्रलयं च मुक्तस्य पुनरावृत्त्यापत्तिरिति– वाच्यम्, जीवब्रह्मविभागादेरनादित्वेन दृष्टिसृष्टित्वानभ्युपगमस्योक्तत्वात्। न च सुप्तं प्रति संस्कारादेरप्यभावेन तस्य पुनः प्रबोधायोगः, कारणात्मना संस्कारादेः सत्त्वात्। न च मोक्षस्य दृगन्यत्वेन स्वाप्नमोक्षवद् दृष्टिसृष्ट्यापत्तिः। मोक्षस्य ब्रह्मस्वरूपत्वेन दृग्भिन्नत्वासिद्धेः। न च– चैतन्यमात्ररूपा दृष्टिर्न सृष्टिः। किन्तु वृत्तिविशिष्टचैतन्यरूपा वा, वृत्तिरूपा वा दृष्टिः सृष्टिरिति वाच्यम्। तथा च तस्या अपि दृष्ट्यन्तरं सृष्टिरित्यनवस्थेति– वाच्यम्। चैतन्यमात्रस्य दृष्टित्वे यद्यपि तत्समानसत्ताकतया घटादेः सदातनत्वापत्तिः, तथापि वृत्त्युपहितचैतन्यमेव दृष्टिशब्दार्थः। वृत्तावपि वृत्तिरेव स्वस्वरूपा चैतन्योपाधिरिति नानवस्था। अत एव– दोषाज्ञानद्रष्टृदेहेन्द्रियादीनामभावे न भ्रम इति तेषामपि दृष्टिसृष्टित्वे अनवस्थेति– निरस्तम्। स्वाप्नभ्रमवद् देहेन्द्रियादि-नैरपेक्ष्येणाप्युपपत्तेः। अन्वयव्यतिरेकानुविधानं च तद्वदेव। न च– दृष्टिसृष्टेरपि दृष्टिसृष्टित्वेन घटादेरदृष्टिसृष्टित्वापत्तिरिति– वाच्यम्। ज्ञानस्य ज्ञेयत्वेऽपि विषयस्याज्ञेयत्वाभाववत् दृष्टिसृष्टेर्दृष्टिसृष्टित्वेऽपि घटादेरपि दृष्टिसृष्टित्वोपपत्तेः।

ननु ऐक्यप्रत्यभिज्ञाविरोधः। पूर्वकालप्रतीतस्येदानीमभावात्। न चैषा भ्रान्तिः। दीपादौ परिणामभेदस्येवेह बाधकस्याभावात्। तदभावेऽपि भ्रान्तित्वे घटादेरप्येकस्मिन् क्षणे भेदस्यात्मनोऽपि प्रतिक्षणं भेदस्य च प्रसङ्ग इति चेन्न। 'नेह नाना' इत्यादिश्रुतिभिः प्रपञ्चस्य मिथ्यात्वेऽवधृते रज्जुसर्पादिवत् प्रतिभासमात्रशरीरत्वमेव प्रतिभासकालाति-रिक्तकालसत्त्वे बाधकम्। अतो भिन्नकालानामात्मभिन्नानां प्रत्यभिज्ञा भ्रान्तिः। आत्मन्ये-कत्वप्रतीतिरेककालावच्छेदेन घटादौ चैक्यप्रत्यभिज्ञा न भ्रान्तिः। एककालावच्छिन्न-घटादावात्मनि चाभेदे बाधकाभावात्। पुरुषान्तरप्रतीतेन सहैककालावच्छेदेनापि घटादौ प्रत्यभिज्ञानं भ्रम एव। प्रतिभासस्य भेदात्। यथा एकस्यामेव रज्ज्वां मन्दान्धकारवर्तिन्यां दशानां युगपत् सर्पभ्रमेण पलायमानानां परस्परसंवादेनैक एव सर्पः सर्वैरनुभूयत इति प्रत्यभिज्ञा भ्रमः, अन्यभ्रमसिद्धस्यान्येन ज्ञातुमशक्यत्वात्।

ननु– अत्र कथमभेदभ्रमः? तत्कारणस्य सादृश्यादेः कस्याप्यभावादिति चेन्न, स्वाप्नाभेदभ्रमवद् दृष्टिसृष्टिसिद्धसादृश्यादिसम्भवात्। न चैवमभेद एवोत्पद्यतामिति वाच्यम्। इष्टापत्तेः। रज्जुसर्पादिवदुत्पन्नस्यैव ग्रहणनियमात्। न च कचिदुत्पद्यते कचिन्नेत्यत्र

(अद्वैतसिद्धिः)

नियामकाभावः। मायाया विचित्रशक्तिकत्वाभ्युपगमात्। न च 'सोऽयं देवदत्तः' इति दृष्टान्तेन तत्त्वमस्यादिवाक्ये जहदजहल्लक्षणयैक्यपरत्वोक्त्ययोग इति वाच्यम्। यद्यपि धर्मवद्धर्म्यभेदोऽपि बाधित एवेति जहदजहल्लक्षणापि न युज्यते। तथापि यदा धर्मभेदो बाधान्न गृहीतः, किन्तु धर्म्यभेद एव, तदा 'सोऽयम्' इत्यादौ जहदजहल्लक्षणासम्भवेन दृष्टान्तत्वोपपत्तिः। न चाभेदस्यापि दृष्टिसृष्टित्वेन तज्ज्ञानस्य बाधकत्वायोगः। आत्माभेदस्यात्मरूपत्वेन दृष्टिसृष्टित्वाभावात्। अन्यूनसत्ताकत्वमात्रेण बाधकत्वोपपत्तेश्च। न च साक्षात्कारस्यापि दृष्टिसृष्टित्वेन प्रमाणजन्यत्वाभावात् तत्त्वज्ञानत्वाभावेन ततो मुक्तिर्न स्यादिति– वाच्यम्। अबाधितविषयत्वेनैव तत्त्वज्ञानत्वोपपत्तेः। तस्य च दृष्टिसृष्टित्वेऽप्यक्षतेः। न च 'ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगत्' इत्यादिश्रुतिविरोधः। अनित्यतावादिभिरपि ध्रुवेत्यस्यान्यथानयने आवश्यके दृष्टिसृष्टिप्रतिपादकश्रुत्यनुरोधेन आकल्पं सन्तानाविच्छेदपरत्वस्यैव युक्तत्वात्। अन्यथा 'ध्रुवो राजा' इत्यादावगतेः। दृष्टिसृष्टौ च 'एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति' इति श्रुतिः सुप्तोत्थितजीवात् प्राणादिसृष्टिं प्रतिपादयन्ती प्रमाणम्। न च सुषुप्तौ प्राणादिप्रपञ्चस्य सत्त्वात्किमर्थं पुनः सृष्टिरिति वाच्यम्। 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यादिना सुषुप्तौ सकलकार्यप्रपञ्चलयश्रवणात्। न च सुषुप्तौ 'हिता नाम नाड्य' इति नाडीसत्त्वप्रतिपादकवाक्यविरोधः। केन क्रमेण सुषुप्तो भवतीत्यपेक्षायां 'हिता नाम नाड्यो हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' इत्यादिना सुषुप्त्यव्यवहितकाले क्रमोक्तये नाडीसत्त्वं प्रतिपाद्यते, न तु सुषुप्तिकालेऽपि। वाक्यान्तरविरोधात्, प्राक् सत्त्वमात्रेण च क्रमाभिधानपर्याप्तेः।

ननु– 'यत्रैष एतत्सुप्तोऽभूत्' इति यच्छब्देन सुप्ताधारत्वेनोक्तस्य ब्रह्मण एवास्मादात्मन इत्यनेन परामर्शात्तत्कर्तृकैव प्राणादिसृष्टिर्न तु सुप्तोत्थितजीवकर्तृका। अन्यथाऽग्न्यूर्णनाभ्यादेस्तन्तुविस्फुलिङ्गादिजननोक्तिरत्रापि वाक्ये सर्वलोकसृष्ट्युक्तिश्चालीकार्था स्यात्। न हि दृष्टिसृष्टिपक्षे अग्न्यूर्णनाभ्यादेस्तन्त्वादिजनकत्वं सर्वलोकसृष्टिर्वास्तीति चेत्, न। यत्रेत्यस्य कालपरत्वेन यच्छब्देन ब्रह्मणो निर्देशाभावात्। न च यत्रेत्यस्य ब्रह्मरूपाधिकरणपरत्वं कालपरत्वं वेत्यत्र विनिगमनाविरहः। अनन्तरवाक्ये 'क्वैष तदाभूत्' इत्यत्र क्व तदेति पदद्वयोपादानस्यैव विनिगमकत्वात्, यत्रेत्यनेन देशनिर्देशे क्वेति देशप्रश्नानुपपत्तेः। कालानिर्देशे

(अद्वैतसिद्धिः)

च तदेति प्रतिनिर्देशानुपपत्तेः। भाष्यकारादिभिश्च स्थूलाधिकारिणं प्रति तथा व्याख्यानात्। ऊर्णनाभ्यादेस्तन्त्वादिजन्मोक्तिस्तु लौकिकभ्रमसिद्धकार्यकारणभावप्रसिद्धिमनुरुध्य। सर्वलोकादिसृष्टिश्च तत्तद्दृष्टिव्यक्तिमभिप्रेत्य। यदा तत् पश्यति, तत्समकालं तत् सृजतीत्यत्र तात्पर्यात्। न चाविद्यासहकृतजीवकारणकत्वे जगद्वैचित्र्यानुपपत्तिः। जगदुपादानस्याज्ञानस्य विचित्रशक्तिकत्वात्। उपपत्त्यन्तरं चात्र सिद्धान्तबिन्दुकल्पलतिकादावस्माभिरभिहितम्। वासिष्ठवार्तिकामृतादावाकरे च स्पष्टमेवोक्तम्। यथा–

'अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम्'।

इत्यादि। तस्मात् ब्रह्मातिरिक्तं कृत्स्नं द्वैतजातं ज्ञानज्ञेयरूपमाविद्यकमेवेति प्रातीतिकसत्त्वं सर्वस्येति सिद्धम्।

रज्जुसर्पादिवद्विश्वं नाज्ञातं सदिति स्थितम्।
प्रबुद्धदृष्टिसृष्टत्वात्सुषुप्तौ च लयश्रुतेः॥ इत्यद्वैतसिद्धौ दृष्टिसृष्ट्युपपत्तिः।

## न्यायामृततरङ्गिणी

**अत्र कश्चित् शुक्तिरूप्यस्वप्नादिवत् दृष्टिसृष्टित्वान्यथानुपपत्त्या जगतो मिथ्यात्वमिति वक्तुं जगतो दृष्टिसृष्टिरित्याह। तन्निराकरोति ॥यच्चेति॥ दृष्टिसृष्ट्यङ्गीकारे क्षणिकत्वमर्थतोऽङ्गीकृतं स्यादित्याह ॥बौद्धेति॥ ॥षडस्माकमिति॥ 'जीवो ब्रह्म विशुद्धा चिद्विभागस्त्वनयोर्द्वयोः। अविद्या तच्चितोर्योगः षडस्माकमनादयः' इति। नन्वनाद्यतिरिक्ते सृष्टिविषय एव दृष्टिसृष्टिस्वीकारान्न विरोध इति चेन्मैवम्। विभागादीनां दृष्टिसृष्ट्या मिथ्यात्वासिद्ध्या दृष्टिसृष्ट्या विश्वमिथ्यात्वसिद्धिरिति स्वोक्तिविरोधात् ॥स्वर्गाद्यर्थमिति॥ स्वप्नादिसाम्यज्ञाने सति ज्योतिष्टोमादौ प्रवृत्तिर्न स्यात्। ननु स्वाप्नकार्यकारणभावबोधकवाक्यवदुपपत्तिरिति शङ्कां निराकरोति ॥यदीति॥ स्वप्नवेदान्तवाक्यतन्मीमांसासाम्येन जागरे तत्र प्रवृत्तिर्न स्यात्। न च विषयाबाधतद्बाधाभ्यां स्वप्नाद्विशेषः। स्वप्नादविशेषे विषयाबाधादेरयोगात्॥ शुक्तीदमंशस्येति॥ यस्तु प्रतिकर्मव्यवस्थामध्यासतटस्थलक्षणं च मन्दाधिकारिकमित्याह स स्वाचार्यप्रक्रियायै न स्पृहयत इत्युपेक्षणीयः॥ सत्यस्येति॥ शुक्तीदमंशस्यापि रूप्यवन्मिथ्यात्वात्सत्यं वस्तु नास्तीत्यर्थः।**

**ननु दृष्टिसृष्टिपक्षेऽपि इदमंशावच्छिन्नचैतन्येन मिथ्यारूप्यस्य तेन सह सम्भेदावभासोऽस्त्येवेति। मैवम्। इदंवृत्तेः प्रागिदमोऽभावेन तदवच्छिन्नचैतन्यस्याभावात्। तस्य**

(तरङ्गिणी)

मिथ्यात्वाच्च ॥ इदं रूप्यमिति ज्ञानकाल इति॥ शुक्तित्वाज्ञाने शुक्तित्वरूपस्यैवाभावात्। तज्ज्ञाने तु तस्य सत्त्वेऽपि नाज्ञानावच्छेदकत्वम्। तस्य ज्ञातत्वात्। ननु शुक्तित्वाभावेऽपि तदज्ञानमस्तु। सत्ताकाल इव सत्ताविरहकालेऽप्यज्ञानाविरोधात्। मैवम्। ज्ञानस्य ज्ञातैकसत्त्वात्। तज्ज्ञानस्य च तदवच्छेदकविषयकत्वात् तदवच्छेदकस्य दृष्टिसृष्टित्वात् सत्ताविरहकालेऽज्ञानमित्यस्यासिद्धेः। सत्ताकालेऽज्ञानमिति तु सुतरामसङ्गतम्। ज्ञानस्यैव तत्सत्तारूपत्वात्। न च स्थायित्वपक्षे सत्ताकाल इति दृष्टान्तः। सत्ताविरहकालेऽज्ञानमित्यस्योक्तविधयाऽसङ्गतेः ॥ भिन्नेति॥ भ्रमकाले बाधकाले चेदमंशयोर्भेदात्। न च भेदेऽपि सारूप्याद्बाधादिव्यवस्थेति वाच्यम्। सारूप्यस्यापि दृष्टिसृष्टित्वेनोभयानुगतस्याभावात् ॥ रूप्यादिबाधस्यापीति॥ अधिकबलस्यैव बाधकत्वात्। एतेन बाधान्यूनसत्ताकत्वमेवाबाध्यत्वे प्रयोजकं, न त्वधिकसत्ताकत्वमित्यपास्तम् ॥ सुषुप्तीति॥ न च जीवादिविभागस्यानादितया न दृष्टिसृष्टिरिति वाच्यम्। तस्य मिथ्यात्वासिद्धेरित्युक्तत्वात् ॥ सुप्तं प्रतीति॥ न च कारणात्मना संस्कारोऽस्तीति वाच्यम्। कारणस्यापि दृष्टिसृष्टित्वेन सुप्तौ तस्याप्यभावात् ॥ मोक्षस्यापीति॥ अविद्यानिवृत्तिरूपस्येत्यर्थः ॥ दृगिति॥ मोक्षस्य दृग्रूपत्वेऽसाध्यत्वं स्यात्। ॥ सदेति॥ अर्थज्ञानस्य सदात्वेनार्थस्यापि सदातनत्वापत्त्या सदा प्रतीत्यापत्तिरित्यर्थः। न च वृत्त्युपहितचैतन्यमेव घटादेर्दृष्टिः, वृत्तौ तु वृत्तिरेव स्वस्वरूपा चैतन्योपाधिरिति वाच्यम्। वृत्तिज्ञानं विना वृत्तिस्वरूपासिद्ध्या वृत्तिविशिष्टचैतन्याभावेन वृत्तिस्वरूपसिद्ध्यर्थं वृत्त्यन्तरविशिष्टचैतन्यस्य वृत्तिज्ञानत्वं वाच्यम्। एवमन्यस्यान्यस्येत्यनवस्था ॥ उक्तन्यायेनेति॥ न च स्वाप्नवद्देहेन्द्रियनैरपेक्ष्येणैवायं भ्रम इति वाच्यम्। अन्वयव्यतिरेकाभ्यां भ्रममात्रे देहादेर्हेतुत्वेन स्वाप्नभ्रमेऽपि तद्धेतुत्वात्। दोषाज्ञानादेरवश्यं भ्रमहेतुत्वाच्च। अन्यथा मोक्षेऽपि भ्रमः स्यात्।

॥ घटादेरिति॥ यदा घटादौ दृष्टिसृष्टिरिति ज्ञानं नास्ति तदा घटादीनां दृष्टिसृष्टेरभावात् ॥ ध्रुवा द्यौरिति॥ यत्त्वत्र आकल्पसन्तानाविच्छेदपरत्वं ध्रुवपदस्य। अन्यथा ध्रुवो राजेत्यादावगतिरिति केनचिदुक्तं तद्वेदान्तार्थज्ञानगन्धवैधुर्यनिबन्धनम्। अनेन सूक्तेन सङ्ग्रामायोद्यतो राजा पुरोधसा नु सन्नाहनीयः। उक्तं च सूत्रे 'सङ्ग्रामे समुपोढे राजानं सन्नाहयेदात्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत्' इत्यादि। समुपोढे समुपस्थिते। पश्चाद्रथस्यावस्थाय पुरोहितो जपतीति शेषः। चैत्ययज्ञ इति खण्डे यत्र वेत्थ वनस्पत इत्येतयर्चेति ऋग्ग्रहणेन ऋचं पादग्रहणं इति परिभाषाया अनित्यत्वज्ञापनात् आ त्वाहार्षमंतरेधीति पश्चाद्रथस्येत्यत्र पादग्रहणे सत्यपि सूक्तस्यैव ग्रहणमिति वृत्तिकारोक्तेरत्र च सूक्ते अविचाचलिः

(तरङ्गिणी)

मापच्योष्ठा इत्यादिना राज्ञे स्थिरत्वमाशास्यते। तत्र दृष्टान्तो ध्रुवा द्यौरित्यादिना। यथा द्यौः पृथिवी पर्वताः विश्वं जगत् ध्रुवं स्थिरं तथा त्वमपि राजा स्थिरो भवेति। माधवीयेऽप्येवमेव व्याख्यातम्। तत्र कः प्रसङ्गः सन्तानादिकल्पनायाः। अन्यथा तत्सत्यमित्यादेरप्येवमेवार्थः कल्प्येतेति स्पष्टं बौद्धवादः स्यात्।

ननु "सहोवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः एष तदा तु कुत एतदागादिति तदुह न मेने गार्ग्यः स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयस्तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिंच्छेते इत्याद्युक्त्वा अथ यदा सुप्तो भवति यदा न कस्यचन वेद हि ता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते। स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते। अतिशयेन हन्तीत्यतिघ्नीं आनन्दस्यावस्थाम्। स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति। तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति। अत्र अब्रह्मविदं गार्ग्यं प्रति क्षत्रियोऽपि सन् ब्रह्मवित् काश्यो ब्रह्म बोधयितुं गार्ग्येण सह सुप्तं पुरुषं प्रत्यागम्य तं पाणिना पेष्य बोधयित्वा गार्ग्येण कर्तुमर्हं प्रश्नं अज्ञानादकृतं स्वयमेव काश्यो गार्ग्यं प्रति कृतवान् स होवाचेत्याद्यकण्डिकया। एतदिति क्रियाविशेषः। एष विज्ञानमयोऽन्तःकरणप्रायो यत्र सुप्तोऽभूत् तदा एषः क्वाभूत्, कुत आगात्। एतत्प्रश्नद्वयं प्रतिवक्तुं गार्ग्यो न ज्ञातवान्। अतः काश्य एव तदुत्तरं वक्ति स होवाचेत्यादिद्वितीयकण्डिकया। अन्तर्हृदये विद्यमानो य आकाशः तस्मिन् शेत इति सुषुप्तप्रकारनिरूपणाय अथ यदा सुषुप्तो भवतीत्यादिकण्डिका। कुत एव तदागादिति द्वितीयप्रश्नस्योत्तरं तस्मादात्मनः सर्वे प्राणा इत्यादि। तस्मादियं श्रुतिः सुप्तोत्थजीवात्प्राणादीनां सृष्टिं वक्तीति दृष्टिसृष्टौ प्रमाणमित्यत आह ।।तस्मादात्मन इति।। पाणिपेषादिना प्रबोधितस्य सुप्तस्य क आधार इति यत्रैष एतत्सुप्तोऽभूदित्यादिना काश्येन पृष्टस्य य एषोन्तर्हृदय आकाशस्तस्मिंच्छेत इत्यादिना प्रतिवचनं ब्रुवता काश्येनैव आकाशशब्दवाच्यः परमात्मा सुप्तपुरुषाधारत्वेन य उक्तः स एव अस्मादात्मन इत्यत्र इदंशब्देन परामृश्यत इति परमात्मन एव प्राणादिसृष्टिर्न तु सुप्तोत्थितात्। परेषां बृहदारण्यकभाष्येऽपि सुप्ताधारत्वेनात्रोक्त आकाशः परमात्मैवेति प्रतिपादितम्। अत एव तत्रैव ननु एवमेवास्मादात्मन इति संसारिण एवोत्पत्तिं दर्शयतीति चोदयित्वा य एषोऽन्तर्हृदय

(तरङ्गिणी)

आकाश इति परस्य प्रकृतत्वादस्मादात्मन इति परस्यैव परामर्श इत्युक्तम्। ननु यत्रैष इति प्रश्नवाक्ये यत्रेति नाधारप्रश्नः। किं तु कालप्रश्नः। अन्यथा क्वैष तदाभूदिति पुनर्देशप्रश्नानुपपत्तेः। मैवम्। तथाऽपि क्वेत्याधारप्रश्नस्यैवोत्तरं य एषोऽन्तर्हृदय आकाश इति। तत एव च सृष्टिः। वस्तुतस्तु यत्रेत्याधारप्रश्न एव। यत्राधारे सुप्तोऽभूत्स किं प्रकार आधार इति यत्रक्वशब्दयोरेकार्थत्वात् ॥ अन्यथेति ॥ ननु केन क्रमेण सुषुप्तो भवतीत्यपेक्षायां हि ता नाम नाड्य इति सुषुप्त्यव्यवहितकाले नाडीनां सत्त्वं प्रतिपाद्यते। न तु सुप्तिकाले। मैवम्। यदा सुषुप्तो भवति यदा न कस्यचन वेद हि ता नाम नाड्य इत्यत्र यदेति निर्देशात्तदेत्यवश्यमवगतेः सुषुप्तिकाल एव हि पुरीतन्नामकनाड्यादिसत्त्वावगमात्। पुरीतति शेत इति पुरीतत्स्थस्य सुप्ताधारत्वश्रुतेश्च। तस्मात् श्रुत्या स्वभाष्येण च विरोधान्न जीवात्प्राणादीनां सृष्टिः। अतिघ्न्यादिशब्दानामर्थास्तु आनन्दस्य परमात्मनः अतिघ्नीं समीपं कुमारो रुद्रः महाराजो वायुः महाब्रह्मणो ब्रह्मा इत्याचार्योक्ताः। यस्तु भाष्यं मन्दाधिकारिकमित्याह स स्वयमेव मन्दाधिकारी।

अस्मादात्मन इति वाक्ये पूर्ववाक्येन विरोधमभिधाय स्ववाक्येन विरोधमाह ॥ अत्रापीति ॥ ॥ नाड्यादिकमिति ॥ सुषुप्तौ नाड्यादिसृष्टेरभावात् ॥ तन्तुविस्फुलिङ्गेति ॥ जीवस्य तन्त्वादिदृष्टिरेव तन्त्वादिजन्म। न तु ऊर्णनाभ्यादितस्तन्त्वादिजन्मेत्यर्थः। सर्वलोकदृष्टिः सर्वलोकसाक्षात्कारः। तथा च सर्वलोकसाक्षात्काराभावात्सर्वलोकजन्मोक्तिरयुक्ता स्यात् ॥ न चोर्णनाभीति ॥ न हि ऊर्णनाभिनाऽग्निना वा तन्तूनां विस्फुलिङ्गानां वा दर्शनमेव तयोर्जन्म। किं तु स्वशरीरान्निष्कासनमेव। तस्मात् कुत एतदागादिति वाक्ये जीवस्य सुप्तिकालेऽविद्यमानं ज्ञातृत्वादिकं कुत आगतमिति द्वितीयप्रश्नस्य सर्वकर्तुः परमात्मन आगतमित्युत्तरं वक्तुं सर्वकर्तृत्वं परमात्मन उच्यते अस्मादात्मन इति वाक्ये।

दृष्टिसृष्टिभङ्गः।

## न्यायामृतकण्टकोद्धारः

ननु तथापि शुक्तिरूप्यस्वप्नादिवद् दृष्टिसृष्ट्यन्यथानुपपत्या मिथ्यात्वं सेत्स्यति। दृष्टिसृष्टेर्मिथ्यात्वं विनानुपपत्तेः। शुक्तिरजतादौ सिद्धत्वादिति। तदेतद्दूषयितुमनुवदति ॥ यच्चेति ॥ अत्र हि दृष्टिसृष्टिपदार्थस्यैव निर्वक्तुमशक्यत्वान्न तदन्यथानुपपत्त्या प्रपञ्चमिथ्यात्वसिद्धिः।

तथा हि। केयं दृष्टिसृष्टिः ? दृष्टिरेव सृष्टिरिति वा, दृष्टिव्यतिरेके सृष्ट्यभावो वा, दृष्ट्यव्यतिरेकेण सृज्याभावो वा, दृष्टिसामग्रीजन्यत्वं वा, दृष्टिसमानकालीनसृष्टिर्वा, दृष्टिसमानसत्ताकसृष्टिर्वा, सदसद्विलक्षणत्वं

(कण्टकोद्धारः)

वा त्रिविधसत्त्वबहिर्भूतत्वे सति असद्विलक्षणत्वं वा, अज्ञातसत्त्वाभावो वा, ज्ञातैकसत्त्वं वा। आद्ये दृष्टिः वृत्तिर्वा चैतन्यरूपा वा। प्रथमे चरमवृत्तिविषयब्रह्मणोः दृष्टिसृष्ट्यापत्तिः। द्वितीये सर्वदा सृष्ट्यापत्तिः। न द्वितीयः। चैत्रेण सृष्टो मया दृष्ट इति विलक्षणव्यवहारानुपपत्तेः। न तृतीयः। ज्ञातो घटः न ज्ञानमित्यनुभवविरोधात्। न चतुर्थः। एकसामग्रीप्रसूतत्वेन घटादेर्दृष्ट्यभिन्नत्वेऽनन्तरोक्तदोषात्। न पंचमः। शाब्दादिज्ञानसमानकालोत्पन्नघटादौ सिद्धसाधनात्। तद्वदन्यत्रार्थान्तरापत्तेश्च। न षष्ठः। उभयसत्त्वेऽप्युपपत्तेः। सिद्धसाधनात्। न सप्तमः। अस्यैव मिथ्यात्वरूपत्वेन तत्साधनायैतदुपन्यासानुपपत्तेः। नाष्टमः। त्रिविधसत्त्वमध्ये प्रातिभासिकसत्त्वस्यान्तर्भूतत्वेन दृष्टिसृष्टिपक्षे तद्वति जगति तद्बहिर्भावानुपपत्तेः। न नवमः। तुच्छसाधारणत्वात्। न दशमः। सुखादौ सिद्धसाधनात्। तद्वदन्यत्रार्थान्तराच्च। न च दोषप्रयुक्तत्वनिबन्धनस्य ज्ञातैकसत्त्वस्य ज्ञातसत्त्वाभावस्य वा प्रतिपन्नोपाधिदृष्टिजन्यज्ञातैकसत्त्वस्य वा दृष्ट्यन्तरावेद्यत्वे सति ज्ञातैकसत्त्वस्य वा विवक्षितत्वात्। एवं च न सुखाद्यंशे सिद्धसाधनं तद्वदन्यत्रार्थान्तरं वेति वाच्यम्। प्रमितानुपपत्त्या हि उपपादकार्थसिद्धिः। उक्तविधं च दृष्टिसृष्टित्वं प्रपञ्चेऽस्तीत्यत्र न किंचित्प्रमाणम्। प्रत्यक्षेण तदसिद्धेः। नाप्यनुमानम्। दृष्टान्ताभावात्। नाप्यागमः। तस्योक्तविधदृष्टिसृष्टित्व-प्रतिपादकत्वस्यानुपलम्भात्। मिथ्यात्वादेव दृष्टिसृष्टित्वं चेदन्योन्याश्रयः। तृतीयचतुर्थयोः सुखादिवत्सत्त्वेऽप्युपपत्त्याऽर्थान्तराच्च। स्वसुखादेरपि दृष्ट्यन्तरावेद्यत्वस्य सत्त्वात्। परसुखादेः परस्य प्रत्यक्षत्वात्। यदीश्वरे दृष्टिवेद्यत्वं तदाऽसिद्धिः। अन्यथैतादृशदृष्टिसृष्टित्वस्य बौद्धैर्ब्रह्मण्यपि सुवचत्वेन तस्यापि मिथ्यात्वं स्यात्। यदि चैतादृशदृष्टिसृष्टित्वं तस्य प्रमाणाप्रमितं प्रमाणविरुद्धमिति तदैतदन्यत्रापि तुल्यमिति दूषणे सत्येव दूषणान्तरमाह ॥ तन्नेत्यादिना॥

किंच सर्वत्र प्रपञ्चे दृष्टिसृष्ट्यङ्गीकारे सिद्धान्तविरोध इत्याह ॥ षडिति॥

"जीवो ब्रह्म विशुद्धा चिद् विभागस्त्वनयोर्द्वयोः।
अविद्यातच्चितोर्योगः षडस्माकमनादयः"

इति तद्वचनेनेत्यर्थः। न चानाद्यतिरिक्ते सृष्टिविषय एव दृष्टिसृष्टिस्वीकारात् नानादित्वप्रतिपादकवचनविरोधो, नापि प्रत्यभिज्ञायाः स्थायित्वप्रतिपादनविरोधः कारणात्मना स्थायित्वाङ्गीकारादिति वाच्यम्। एवं ह्यविद्यादौ मिथ्यात्वसाधकाभावात्तस्य मिथ्यात्वासिद्धेः। तत्र प्रकारान्तरेण मिथ्यात्वे तेनैव सर्वत्र सम्भवेऽस्यासिद्धस्य तत्साधकत्वानुपपत्तेः।

किंच स्वाचार्यवचनविरोधेन तदतिरिक्तविषयत्वमङ्गीकुर्वता "अनादिर्वाऽयमाकाशः" इत्यादि-श्रुत्याऽऽकाशादिव्यतिरिक्तविषयत्वमेव स्वीकर्तव्यम्। स्वाचार्यवचनात् श्रुतेः प्रबलत्वात् श्रुतेरप्रामाण्ये चाचार्यवचनस्य सुतरामप्रामाण्यम्।

अपि च दृष्टिसृष्टिप्रमाणाभिमतस्य ब्रह्मातिरिक्तसर्वसाधारणत्वान्नाविद्याद्यतिरिक्तविषयत्वम्। दृश्यत्वादि-नाघटादिप्रपञ्चवद् दृष्टिसृष्टित्वस्यैवोचितत्वाच्च। दृष्टिसृष्टित्वे दृश्यत्वादेरप्रयोजकत्वे मिथ्यात्वे तत्त्वापाताच्च।

(कण्टकोद्धारः)

किंचानादित्वाङ्गीकारे ब्रह्मवत्सत्वापत्तेः। कारणात्मना स्थायित्वं तु नाविद्यादिकमादाय तस्योक्तरीत्या दृष्टिसृष्टित्वात् चाक्षुषादिप्रत्यभिज्ञाने अविद्यायाः विषयत्वासम्भवाच्च। नापि ब्रह्मादाय शून्यमादय। तन्मतेऽपि प्रत्यभिज्ञासम्भवादविशेषापत्तेः। उपनिषदेकसमधिगम्यस्य चाक्षुषादिप्रत्यभिज्ञाविषयत्वासम्भवाच्चेति दिक्।

न चाचार्यवचनविवरणादिकं न वास्तवाभिप्रायम्। किंचापातप्रतीतार्थपरं परमताभिप्रायं वेति न तद्विरोध इत्यत आह ॥ दृगन्यस्येति ॥ ॥ तर्हीति ॥ न च विषयबाधाबाधाभ्यां विशेषादतुल्यत्वमिति वाच्यम्। बाधाबाधयोरपि दृष्टिसृष्टित्वेनोभयत्र साम्यात्। कल्पिते बाधस्य तत्रापि सत्वात्। अकल्पितबाधस्य तत्राप्यभावात्। अबाधस्य ब्रह्मातिरिक्तत्वेन कल्पितत्वावश्यं भावात्। प्रपञ्चबाधकाभावस्योपपादितत्वाच्च। ॥ दृष्टिसृष्टिपक्ष इति ॥ न च प्रतिकर्मव्यवस्थादिकं मन्दाधिकारिविषयम्। नोत्तमाधिकारिविषयमिति वाच्यम्। वैपरीत्यस्यापि सम्भवात्। नियामकाभावात्। ब्रह्मवादो मन्दाधिकारिविषयः शून्यवादस्तूत्तमाधिकारिविषय इत्यापाताच्च। प्रौढाधिकारिणो घटादिनियतविषयज्ञानानुपपत्तेश्च। शुक्तिरजतादिज्ञानार्थं सम्प्रयोगाद्यपेक्षाभावापत्तेश्च। न च तेषां शुक्तिरजतादिभ्रमो न भवत्येवेति वाच्यम्। तथात्वे प्रपञ्चभ्रमाभावेन सङ्करादीनां भिक्षाटनादौ प्रवृत्तिर्न स्यात् ॥ शुक्तीदमंशस्येति ॥ न च सत्वस्य मिथ्यावस्तुसंभेदावभासत्वरूपं स्वरूपलक्षणं युज्यते शुक्तेरसत्यत्वेऽपि शुक्तीदमंशावच्छिन्नचैतन्यस्य सत्यत्वादिति वाच्यम्। इदमित्यत्र शुक्तेरेव विषयत्वेन चैतन्याविषयत्वात्। तस्य रूपादिरहितत्वेन चाक्षुषादिज्ञानविषयत्वासम्भवात्।

किंच केवलस्य विषयत्वे सद्यो मोक्षापातोऽवच्छिन्नस्य चेतनत्वे तस्य मिथ्यात्वेनोक्तलक्षणासम्भव एवेति वाच्यम्। किंचेदमित्यत्र चैतन्यविषयत्वे चैतन्यज्ञानमिति व्यवहारापत्तिः ॥ इदं रूप्यमितीति ॥ न च शुक्तित्वाभावे तद्विषयकाज्ञानसत्ता न विरुद्धेति वाच्यम्। विषयावरणार्थमज्ञानं तत्र च तत्कृत्यं तज्ज्ञानप्रतिबन्धः। तत्र तदभावादेव तज्ज्ञानाभावे नावरणकृत्यमिति न तद्भावे तदज्ञानम्। अन्यथा शुक्तिरूप्यविषयकमज्ञानमपि स्यात्।

अपि च शुक्तित्वस्य सृष्टित्वेन प्रातिभासिकत्वात्। प्रातिभासिकविषयकाज्ञानस्यादृष्टेर्न तद्विषयकाज्ञानमिति। ॥ इदं रूप्यं नेदं रूप्यमितीति ॥ न च भिन्नविषयत्वेऽपि विषययोः सारूप्यात् स्वप्नबाधकयोरिव बाध्यबाधकभावोपपत्तिरिति वाच्यम्। सारूप्याद् बाधकत्वेऽप्रतिबद्धस्येव प्रतिबद्धस्यापि तथापत्तेः। विषयसारूप्यस्य बाधकत्वोपयुक्तस्य तत्रापि सत्वात्। सर्वसारूप्यस्य प्रकृतेऽप्यभावात्। दृष्टान्ते भिन्नविषयत्वासम्प्रतिपत्तेश्च। सारूप्यमात्रेण तत्कार्यकारित्वे गुंजापुञ्जादपि दाहापत्तेश्च ॥ रूप्यादीति ॥ न च बाध्यान्यूनसत्ताकत्वस्यैव बाधकत्वे तन्त्रत्वेन प्रातिभासिकस्यापि व्यावहारिकवत् प्रातिभासिकबाधकतोपपत्तिरिति वाच्यम्। बाध्यान्यूनसत्ताकत्वस्य बाध्येऽपि सत्त्वेन बाधकत्वप्रयोजकत्वासम्भवात्। अन्यथा इदं रजतमित्यनेनापि नेदं रजतमित्यस्य बाधापत्तेः। तस्यापि बाध्यान्यूनसत्ताकत्वात्। द्वयोरपि प्रातिभासिकत्वात्। तस्मादधिकसत्त्वमेव तन्त्रमिति तदभावेन तस्य बाधकत्वासम्भवात् ॥ रूप्यादिमिथ्यात्वासिद्धिरिति ॥ ॥ सुषुप्तिप्रलयादाविति ॥ न च जीवब्रह्मविभागस्यानादित्वेन दृष्टिसृष्ट्यविषयत्वमिति वाच्यम्। तदनादित्वस्य प्रागेव दूषितत्वात्। आकाशादेरपि दृष्टिसृष्टिविषयत्वाभावापाताच्च ॥ सुप्तं प्रतीति ॥

(कण्टकोद्धारः)

ननु संस्कारादेः कारणात्मनाऽवस्थानाभ्युपगमात् पुनरुद्बोधसम्भव इति चेन्न। कारणस्याविद्यादेः प्रातीतिकत्वेन तदभावे कारणात्मनावस्थानासम्भवात्। न च तत्प्रतीतिः शुद्धचिद्रूपैवेति वाच्यम्। मोक्षेऽप्यविद्यादेरनुवृत्यापातात्। ब्रह्मरूपकारणस्य च मोक्षेऽपि सद्भावेन मोक्षानन्तरमपि तदुद्बोधापाताच्च ॥ मोक्षस्यापीति ॥ न च तस्य ब्रह्मरूपत्वेन न दृष्टिसृष्टित्वमिति वाच्यम्। ब्रह्मरूपत्वे श्रवणादिसाध्यत्वानुपपत्तेः। संसारदशायामपि ब्रह्मसद्भावेन मुक्तत्वापाताच्च। ॥ अनवस्थादीति ॥ न च वृत्त्युपहितचैतन्यमेव दृष्टिः वृत्तावपि वृत्तिरेव स्वस्वरूपा चैतन्योपाधिरिति नानवस्थादिकमिति वाच्यम्। एवं हि वृत्तिविशिष्टचैतन्यमेव वृत्तिविशिष्टचैतन्यदृष्टिरिति आयातम्। तथा च वृत्तेः स्वविषयकत्वे स्वप्रकाशत्वापत्तेः वृत्तेरुपलक्षणत्वे तदुपलक्षितचैतन्यस्य वृत्तिदृष्टित्वे तस्य मोक्षेऽपि सद्भावेन तत्रापि वृत्त्यनुवृत्यापत्तेः। विशेषणत्वोपलक्षणत्वातिरिक्तोपाधित्वपक्षस्य प्रागेव दूषितत्वात्। एवं च वृत्त्यन्तरविशिष्टचैतन्यस्य दृष्टित्वे कथं नानवस्थेति ॥ उक्तन्यायेनेति ॥ न च स्वाप्नवद्देहेन्द्रियादिनिरपेक्ष एव भ्रम इति वाच्यम्। स्वाप्नभ्रमेऽपि देहेन्द्रियाद्यभावासम्प्रतिपत्तेः। क्लृप्तदेहेन्द्रियादिकारणं विनापि भ्रमाङ्गीकारेऽज्ञानाद्यभावेऽपि भ्रमापत्तौ मोक्षेऽपि तदापत्तेश्च ॥ घटादेरिति ॥ न च ज्ञानस्य ज्ञेयत्वेऽपि विषयस्याज्ञेयत्वाभाववद्दृष्टेः दृष्टिसृष्टित्वेऽपि घटादेर्दृष्टिसृष्टितोपपत्तिरिति वाच्यम्। भावानवबोधात्। तथा हि। ज्ञानस्य ज्ञानमित्यस्य ज्ञानं नेति नार्थः। तथात्वे घटस्याज्ञेयत्वावश्यं भावात्। दृष्टिसृष्टिर्दृष्टिसृष्टिरित्यस्य तु वस्तुतो न दृष्टिसृष्टिरित्येवार्थः पर्यवस्यति। तथा च वास्तवदृष्टिसृष्टित्वाभावेऽवास्तवदृष्टिसृष्टित्वमेव पर्यवस्यति। विरुद्धयोरन्यतरस्यावास्तवत्वेऽन्यतरस्य वास्तवत्वनियमादिति युक्तमेवोक्तम्।

ननु दीपादाविव प्रत्यभिज्ञा भ्रान्तिरित्यत आह ॥ दीपादाविति ॥ नन्विहापि प्रतिभासकालातिरिक्तकालसत्वे प्रतिभासमात्रशरीरत्वमेव बाधकम्। न च तदेवासिद्धम् ''नेह नाना'' इति श्रुत्या मिथ्यात्वेन तत्सिद्धेरिति चेन्न। नेह नानेत्यादि श्रुतिनामिथ्यात्वपरत्वाभावस्य सम्यक्प्रतिपादितत्वात्। नेह नानेति श्रुतेरपि दृष्टिसृष्टित्वेन तत्सिद्धमिथ्यात्वादेर्दृष्टिसृष्टित्वेनामिथ्यात्वादेरदृष्टिसृष्टित्वापाताच्च। अभेदभ्रमकारणसादृश्याद्यभावेनाभेदभ्रमायोगाच्च। न च दृष्टिसृष्टिसिद्धमेव सादृश्यादिकं तत्कारणमिति वाच्यम्। तत्रापि तत्कारणान्तरान्वेषणेऽनवस्थापातात्। कारणं विना भ्रमाङ्गीकारे च मोक्षेऽपि तदापातात्। अत एवाह ॥ तदभाव इति ॥ न च तत्र बाधकाभावादात्मनि एकस्मिन्क्षणे घटादौ चाभेदो न भेद इति वाच्यम्। दृष्टिसृष्टिसिद्धबाधकस्य तत्रापि वक्तुं शक्यत्वात्। वास्तवबाधकस्य च प्रकृतेऽप्यभावादिति ॥ सोऽयमिति ॥ न च यदा धर्मभेदो न गृहीतः किन्तु धर्म्यभेद एव तदा सोऽयमित्यादौ जहदजहल्लक्षणासम्भवेन दृष्टान्ततोपपत्तिरिति वाच्यम्। दृष्टिसृष्टिपक्षे धर्मभेदग्रहसमय एव धर्मिभेदस्यापि भावत्वेन धर्म्यभेदग्रहासम्भवात्। तद्वदेव वास्तवाभेदपरत्वस्यापाताच्च। बाधाबाधाभ्यां व्यवस्थेति तु निरस्तम् ॥ अभेदस्येति ॥ न चाभेदो ब्रह्मस्वरूपोऽतो नोक्तदोष इति वाच्यम्। अभेदस्य सोपाधिकत्वेन निरूपाधिकब्रह्मस्वरूपत्वासम्भवात्। अन्यथा चिन्मात्रस्य प्रत्यहं भातत्वेन तदभिन्ने अभेदे विप्रतिपत्त्यादि न स्यात्।

न चान्यूनसत्ताकत्वमात्रेण बाधकत्वमिति वाच्यम्। तस्य बाध्येऽपि सत्त्वेन बाधकताप्रयोजकत्वासम्भवात्। किंचाभेदसाक्षात्कारस्य दृष्टिसृष्टित्वेन प्रमाणजन्यत्वाभावात् तत्त्वज्ञानत्वाभावे ततो मोक्षो न स्यात्। न

(कण्टकोद्धारः)

चाबाधितविषयत्वेन तत्त्वज्ञानत्वमिति वाच्यम्। दृष्टिसृष्टिसिद्धबाधस्य तत्रापि सम्भवात्। वास्तवबाधस्य प्रकृतेऽप्यभावात्। बाधाभावस्य ब्रह्मातिरिक्तत्वेन दृष्टिसृष्टित्वावश्यंभावात्। ॥ध्रुवेति॥ न चानित्यत्वपक्षेऽपि ध्रुवेत्यस्यान्यार्थपरत्वे आवश्यके दृष्टिसृष्टिपक्षेऽपि दृष्टिसृष्टिप्रतिपादकश्रुत्यनुरोधेनाकल्पसन्तानाविच्छेदपरत्वमेव युक्तमिति वाच्यम्। ध्रुवपदस्य बहुकालावस्थायित्वमात्रवाचकत्वेनान्यार्थपरत्वाभावात्। पंच महाभूतानामुपचितरूपेण नित्यत्वाभावेऽपि सूक्ष्मरूपेण नित्यत्वाच्च। न च राजेत्यादावगतिरिति वाच्यम्। राजशब्देन नियामकेश्वरग्रहणेन तस्य ध्रुवत्वसम्भवात्। तस्यैव राजशब्दमुख्यार्थत्वात्। बुद्धिस्थत्वेनेदं शब्दप्रयोगासम्भवाच्च। उक्तमर्थं कारिकारूढं करोति ॥तस्मादिति॥

ननु "अस्मादात्मनः" इति दृष्टिसृष्टिप्रतिपादकप्रमाणस्यैव बाधकस्य सद्भावे कथं प्रत्यभिज्ञानिर्बाध इत्यत आह ॥अस्मादिति॥ अस्य वाक्यस्य ब्रह्मणः सर्वसृष्टिप्रतिपादनपरत्वेन सुप्तोत्थितजीवप्राणादिसृष्टि-प्रतिपादकत्वाभावात्। ब्रह्मण्येवात्मशब्दस्य मुख्यत्वात्। अत एव द्युभ्वाद्यायतनं स्वशब्दादित्यत्रात्मशब्देन ब्रह्मत्वं साधयामास सूत्रकारः।

किंच प्राणादेः श्वासादिरूपेण सत्त्वात् न तत्सृष्टिप्रतिपादकत्वम्। न च न तु तद्द्वितीयमस्तीत्यनेन सुप्तौ सर्वप्रपञ्चाभावः प्रतिपाद्यत इति वाच्यम्। तस्य प्रागेव सम्यग्व्याख्यातत्वात्। प्रत्यक्षादिविरोधाच्च न प्राणादिसृष्टिप्रतिपादकत्वम्।

ननु प्राक् ब्रह्मणः प्रकृतत्वात्कथमस्मादित्यनेन परामर्श इत्यत आह ॥यत्रेति॥ तथा च यच्छब्देन प्रकृतत्वेनास्मादिति परामर्शो युज्यत इति भावः। न च यत्रेति कालपरमिति वाच्यम्। तृलो देश एव व्युत्पत्तेः। न च क्व तदेति देशप्रश्नानुपपत्तिरिति वाच्यम्। देशविशेषाभिप्रायेण तदुपपत्तेः। न च तदेति प्रतिनिर्देशानुपपत्तिरिति वाच्यम्। बुद्धिस्थत्वेन तदुपपत्तेः।

किंचास्य वाक्यस्य जीवात्सृष्टिप्रतिपादनपरत्वमनुपपन्नम्। जीवस्य सर्वलोकस्रष्टृत्वासम्भवात्। बाधकान्तरं चाह ॥अन्यथेति॥ न च केन क्रमेण सुप्तो भवतीत्यपेक्षायां हितानामनाड्यो पुरीततमभिप्रतिष्ठान्ते, ताभिः प्रत्यवसृत्य पुरीतति शेते इत्यादिना सुप्त्यव्यवहितकाले क्रमोक्तये नाडीसत्त्वं प्रतिपाद्यते न सुप्तिकाल इति वाच्यम्। क्रमप्रतिपादकशब्दाभावेन सुप्तिकाल एव नाडीसत्त्वप्रतीतेः वाक्यान्तरे आसु तदा नाडीषु सुप्तो भवतीति सुप्त्याधारत्वेन नाडीसत्वोक्तेश्च। अन्यथाऽश्रुतकल्पनापत्तेः भाष्यकारादिव्याख्यानविरोधाच्च।

न च भाष्यकारादिभिः स्थलाधिकारिणं प्रति तथा व्याख्यातमिति वाच्यम्। अस्याः कल्पनायाः दृष्टिसृष्टिसिध्युत्तरकालीनत्वेनान्योन्याश्रयात्। न चोर्णनाभ्यादेः तन्त्वादिजन्मोक्तिर्लौकिकभ्रमसिद्धकार्यकारण-भावप्रसिद्धिमनुसृत्येति वाच्यम्। अन्योन्याश्रयादेव ॥अत्रापीति॥ न च सर्वलोकदृष्टिरेव सर्वलोकसृष्टिरिति वाच्यम्। सुप्तोत्थितस्य सर्वलोकदृष्ट्यभावाद् दृष्टौ व्युच्चरतीति प्रयोगाभावाच्च। बाधकाभावे लक्षणाया अन्याय्यत्वात्।

(कण्टकोद्धारः)

किंचाविद्यासहकृतजीवकारणत्वे जगद्वैचित्र्यानुपपत्तिः। न च जगदुपादानस्याज्ञानस्य विचित्रशक्तित्वाज्जगद्वैचित्र्यमिति वाच्यम्। अज्ञानवैचित्र्यस्याप्रामाणिकत्वात्। न च जगद्वैचित्र्यान्यथानुपपत्या तत्कल्पनम्। प्रमितेश्वरशक्तिवैचित्र्येणैव तदुपपत्तेः। तस्माच्च जगतः प्रतिभासमात्रशरीरत्वरूपं दृष्टिसृष्टित्वमिति न तदन्यथानुपपत्या मिथ्यात्वमिति।

इति दृष्टिसृष्टिभङ्गः

## २०. एकजीवाज्ञानकल्पितत्वभङ्गः

यच्चेदमुच्यते– "एकमेव च शरीरं सजीवमन्यानि तु स्वाप्नशरीरवन्निर्जीवानि। कृत्स्नं च जगत्तदज्ञानकल्पितम्। बद्धमुक्तव्यवस्था तु नास्त्येव। जीवस्यैकत्वात्। गुरुशिष्यादिव्यवस्था तु यावदविद्यं स्वप्नवद्युक्ता। निवृत्तायां तु तस्यां नास्त्येव" इति। तन्न। तस्मिन्नेकस्मिन् जीवे सुप्ते जगदप्रतीत्यापातात्। दृष्टिसृष्टिपक्षे तस्य सुषुप्तावुद्बोधकस्य संस्कारदेरप्यभावेन पुनरुद्बोधायोगाच्च। मम कल्पकत्वे तव मोक्षार्थं प्रवृत्त्ययोगेन तवैव कल्पकत्वे वाच्येऽस्मदादिबोधार्थं तव शब्दप्रयोगरूपस्वक्रियाविरोधाच्च। परमार्थतो मया नोच्यत इति चेन्न। व्यवहारत उक्तावपि मूकोऽहमित्यादाविव स्वक्रियाविरोधात्। न च स्वाप्नपुरुषवत् त्वत्कल्पितत्वादहं न पर्यनुयोज्य इति वाच्यम्। अपर्यनुयोज्यत्वे निर्मर्यादतया कथानधिकारापातात्। सजीवशरीर इवान्यत्रापि प्रतिशरीरमहं दुःखी अहं संसारी अहमस्वाप्समिति संसाराद्याधारजीवात्मानुभवाच्च। न चेयं धीभ्रान्तित्वादेव निर्जीवेष्वेव शरीरेषु युक्ता। तेषामयं दुःखीत्यादिभ्रान्तिविषयत्वेऽप्यहं दुःखीत्यादिभ्रान्त्याधारत्वायोगात्। न हि स्वाप्नादिशरीराणि तथा भ्राम्यन्ति। न चेयं धीः सर्वदेहानुगतचिन्मात्रस्यैव न तु जीवस्येति युक्तम्। प्रतिबिम्बरूपे जीवे एव तदौचित्यात्।

ननु जीवो न ब्रह्मप्रतिबिम्बादिः, किं तु कौन्तेयस्यैव राधेयत्ववत् ब्रह्मण एव जीवत्वं तच्च सर्वदेहगतमिति चेत्, कथं तर्हि शरीरान्तराणां निर्जीवत्वम्। वक्ष्यते च कल्पितेनापि संसारेण कदाऽप्यस्पृष्टचैतन्याभावे नित्यमुक्तत्वश्रुतिविरोधः। नापीयं धीः कल्पकजीवकल्पितजीवान्तरस्य। कल्पितस्य भ्रान्त्याधारत्वायोगात्।

अन्यथा अज्ञानभ्रान्तिसम्यग्ज्ञानमोक्षाणामैकाधिकरण्यनियमेन बहुजीववादः स्यात्। कल्पितस्य जीवस्य कल्पकं प्रति प्रत्यक्त्वायोगाच्च। अप्रत्यक्त्वेन भासमाने च प्रत्यक्त्वारोपायोगात्। अन्यस्य च प्रत्यक्त्वेनानुभवितुश्चेतनस्याभावात्। तथानुभवापलापे च तस्याप्येकस्य जीवस्याद्वैतश्रुतेश्चासिद्धेः। ननु चोक्ता दोषा एकशरीरैकजीववादे, न त्वनेकशरीरैकजीववादे, तस्य सर्वत्रापि सत्त्वादिति चेन्न। तथात्वेऽननुसन्धाने तन्त्रस्य व्यावहारिकजीवभेदस्याप्यभावेन योगिनोऽनेकशरीरेष्विव तस्य सर्वशरीरगतदुःखाद्यनुसन्धानापातात्। तस्य शुकादिदेहस्थस्य तत्त्वज्ञानमोक्षावन्यदेहस्थस्य तु नताविति बन्धमोक्षादिसङ्करापाताच्च। तस्यैव तमेव प्रति प्रत्यक्त्वपराक्त्वयोरयोगेन मैत्रं प्रति त्वमिति धीविषयस्य चैत्रस्य तमेव प्रत्यहमिति धीविषयत्वायोगाच्च।

किं च श्रुतिषु "अविद्यायामन्तरे वर्तमाना" इत्यादावविद्या "रमणीयचरणा" इत्यादौ कर्मबन्धः "सति सम्पद्य न विदु"रित्यादौ सुषुप्तिः, "वेदान्तविज्ञानसुनिश्चितार्था" इत्यादौ तत्त्वज्ञानं "परामृतात्परिमुच्यन्ति सर्वे" इत्यादौ मुक्तिश्च चेतनधर्मः कथमनेकेषूच्येत। न ह्यस्मिन्मते चेतनबहुत्वं व्यावहारिकमप्यस्ति। न च मुक्तादिबहुत्वं प्राप्तम्। येन श्रुतिरतत्परा स्यात्। किं चैकस्यैव जीवस्येश्वरादिसर्वकल्पकत्वे जीवस्य कारणत्वं निषिध्येश्वरस्य कारणत्वविधायकैरविद्याश्रयाश्चिन्मात्राश्रितत्वभङ्गे वक्ष्यमाणैः श्रुतिस्मृतिसूत्रैर्विरोधः। किं चैवं सर्वज्ञत्वसर्वकर्तृत्वादिश्रुतीनां निर्विषयत्वं स्यात्। चिन्मात्रे ज्ञत्वस्यैवाभावाद्। ईश्वरस्य च अयं सर्वज्ञ इति जीवेन कल्पित्वेऽप्यहं सर्वज्ञ इति ज्ञातृत्वाभावेन, "तान्यहं वेद सर्वाणि" इत्याद्ययोगात्। जीवस्य चासार्वज्ञ्यादिनैवानुभवात्। अपि च यः कल्पको जीवस्तस्यापि भावितत्त्वज्ञानमुपदेशसाध्यम्। "आचार्यवान् पुरुषो वेद" इतिश्रुतेः। न चान्यस्तत्त्वविद् गुरुरस्ति। ननु स्वप्नवत्तत्त्वविक्त्वेनैवान्यो गुरुः कल्पित इति चेन्न। तत्त्वविद् गुरुः शिष्यायाद्वैतमुपदिशतीति भ्रान्तेः कल्पके जीवे प्रागेव जातत्वेनाद्वैतस्य ज्ञाततया तदैव मोक्षापातात्। तत्त्वविशेषवित्त्वेन गुरुकल्पनाकाल एव तत्त्वस्य ज्ञाततया पुनरुपदेशवैयर्थ्याच्च। गुरोः कल्पितत्वस्यापि तत्त्वान्तर्गतत्वेन कल्पनाकाल एव गुरोः कल्पितत्वस्य निश्चिततया तत् श्रवणे प्रवृत्त्ययोगाच्च। स्वप्ने

तु शब्दविशेषवक्तृत्वेनैव गुरुकल्पना न तूपदेशसाध्यज्ञानविषयतत्त्वविशेषवित्त्वेन। न च प्रकृतेऽपि तथा ''यदेव भगवान् वेद तदेव मे ब्रूहि'' इत्यादिश्रुतेः ''उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः'' इत्यादिस्मृतेश्चायोगात्।

किं च ''स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्'' इत्यादिविधिरपि भावितत्त्वज्ञानं कल्पकं चेतनं प्रत्येव। न च तस्य शिष्यः स्वाज्ञानकल्पित इति जानतस्तन्मोक्षार्थं प्रवचने प्रवृत्तिर्युक्ता। स्वप्ने तु कल्पितत्वाज्ञानात्प्रवृत्तिः। न चापरोक्षज्ञाना-भावात्प्रवृत्तिः। दिङ्मोहादौ परोक्षज्ञानेनापि तत्प्रतिबन्धात्। न च संस्कारवशात् प्रवृत्तिः। न ह्ययं वेगादिवद् बलात्प्रवर्तते। किं तु तत्त्वनिश्चयप्रतिबन्धद्वारा। ततश्च भिक्षाटनादौ कथञ्चित् प्रवर्ततां नाम। अद्वैतं बोधयंस्तु कथं तदनुसन्धानहीनः स्यात्? न चायं स्वाप्नगुरुवत् कल्पितत्वादपर्यनुयोज्यः। कल्पकस्यैव गुरुत्वोक्तेः। कल्पितत्वेऽपि तत्त्वज्ञानहेतुत्वेन वेदस्य मीमांस्यत्ववद् गुरोरपि पर्यनुयोज्यत्वाच्च। अन्यथा कथासु सदुत्तराप्रतीतावहं त्वत्कल्पितो न पर्यनुयोज्य इत्येवोत्तरं स्यात्।

एतेन यावदविद्यं स्वप्नवद् व्यवस्थेति निरस्तम्। इह कल्पक एव शिष्यत्वगुरुत्वयोरुक्तत्वेन स्वाप्नवैषम्यात्। किं च स कल्पकजीव इदानीं निश्चिताद्वैतो न वा? आद्ये इदानीं संशयाद्यभावेनाद्वैतशास्त्रप्रणयनादिव्यर्थं स्यात्। अन्त्ये त्वद्वैतशास्त्रं प्रमामूलं न स्यात्। अपि च सोऽमुक इत्यनिश्चितो, निश्चितो वा? नाद्यः। वह्वायाससाध्यमोक्षार्थं प्रवृत्त्ययोगात्। न चाभिसन्धिपूर्विकाऽपीयं प्रवृत्तिः कल्पितत्वादपर्यनुयोज्या। कथासु स्वकीयविरोधादेरप्यनुद्भाव्यतापातात्। न द्वितीयः। त्वया जीवन्मुक्तत्वेन निश्चितेष्वद्वैतिषु मृतेष्वपि विश्वभ्रमानुवृत्तिदर्शनेन स गुरुश्शिष्यो वा, गुरुत्वेऽपि चैत्रो मैत्रो वेति निश्चेतुमशक्यत्वात्। ननु गुरुशिष्यादिशब्दैः केनचित्क्रोडीकृतं चैतन्यमुच्यते निरस्तसमस्तभेदं वा? नाद्यः। तस्य मिथ्यात्वे-नाकल्पकत्वात्। अन्त्ये कथमनिश्चयः? तस्यैकत्वादिति चेन्मैवम्। भ्रमाधिष्ठानस्य चिन्मात्रस्यैकत्वेऽपि तस्य मुखमात्रस्थानीयस्यासंसारित्वेनाकल्पकत्वात्। तस्य मोक्षार्थं प्रवृत्त्ययोगाच्च। कल्पकानां च संसारिणामनेकेषामुपलम्भेनायं सत्यः संसारीत्यनिश्चयेन मुमुक्षुप्रवृत्त्ययोगात्।

अपि चानादौ संसारे कस्यचित्तत्त्वज्ञानं मुक्तिश्चाभून्न वा? आद्ये इदानीं संसारोपलब्धिर्न स्यात्। जीवान्तराभावात्। नान्त्यः, सम्प्रदायाभावेनोत्तरत्रापि तत्त्वज्ञानासम्भवात्। तत्त्ववित्त्वेन कल्पितगुरुसम्प्रदायस्य च निरासात्। तत्त्ववित्त्वेन श्रुत्यादिसिद्धानां शुकादीनां त्वदभिमतानां गौडपादादीनां चाभूता मुक्तिरन्यस्य भविष्यतीत्याशायोगाच्च। मोक्षशास्त्रप्रामाण्यात् सा युक्तेति चेदेवं यदि शास्त्रे श्रद्धा तर्हि "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" "बहवो ज्ञानतपसा पूता मद्भावमागताः" इत्यादिश्रुतिस्मृतिप्रामाण्यात् पूर्वमपि केषाञ्चिन्मुक्तिः किं न स्यात्? न हि प्रत्यक्षेण, सुखदुःखाद्यनुसन्धानाननुसन्धानादिलिङ्गेन, "चेतनश्चेतनानाम्" इत्यादिश्रुत्या, "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः" इत्यादिस्मृत्या च सिद्धे जीवभेदे बाधकमस्ति। "अनादिमायया सुप्तो यदा जीवः" इत्यादिश्रुतावेकवचनं तु "यथा नीतिपरो राजा" इत्यादिवत्, "स्वर्गकामो यजेत" इत्यादिवच्च युक्तम्। अन्यथा "इति सृष्टौ विनिश्चिताः" इति पूर्वेण, "स पूज्यः सर्वभूतानाम्" इत्युत्तरेण च जीवभेदवाक्येन विरोधात्। न चाविद्यैक्येन तदुपहितजीवस्यैकत्वेऽप्यन्तःकरणोपहितानामनेकत्वाद् बद्धमुक्तव्यवस्थेति वाच्यम्। जीवभावेऽन्तःकरणोपाधेरपि तन्त्रत्वे बहुजीववादापाताद्। अननुगमाच्च।अतन्त्रत्वे देहादिनिवृत्तिवदन्तःकरणनिवृत्तेरप्यमुक्तित्वेनोक्तव्यवस्थायोगात्।

एतेनैव हिरण्यगर्भ एव ब्रह्मप्रतिबिम्बो मुख्यो जीवः। अन्ये तु तत्प्रतिबिम्बभूता जीवाभासाः संसारादिभाज इति निरस्तम्। हिरण्यगर्भमुक्तितः प्राक्तस्याप्यमुक्त्या-पातात्। अतीतहिरण्यगर्भमुक्तेः श्रुत्यादिसिद्धत्वेनेदानीं संसार्युपलम्भायोगाच्च। सादि-हिरण्यगर्भप्रतिबिम्बस्थस्य संसारस्य सादित्वापाताच्च। न चातीतकल्पानामानन्त्ये-नैकैकस्मिन् कल्पे एकैकस्य मुक्तावपि एकैकमाषापचये माषराश्यपचयवत् क्रमेण सर्वजीवमुक्तेरिदानीं संसारोपलम्भो न स्यादिति बाधकं कल्पानन्त्यात्क्षणानन्त्य इव क्षणानन्त्याज्जीवानन्त्येऽतिशयस्य

अतीतानागताश्चैव यावन्तः सहिताः क्षणाः ।
अतोऽप्यनन्तगुणिता जीवानां राशयः पृथक् ॥

**इत्यादिस्मृतिसिद्धत्वेन प्रतिक्षणमेकैकमुक्तावपीदानीं संसारोपलम्भसम्भवात्। तस्मात्**

**एकजीवमतं शब्दयुक्तिप्रत्यक्षबाधितम् ।**
**तदप्रमाणतायां तु सोऽपि जीवो न सिद्ध्यति ॥**

**तस्माज्जगन्नाविद्यकम्। इति एकजीवाज्ञानकल्पितत्वभङ्गः।**

## अद्वैतसिद्धिः

स च द्रष्टैक एव। तन्नानात्वे मानाभावात्। ननु– कथमेक एव जीवः ? प्रतिशरीरं 'अहं सुखी, अहं दुःखी, अहं संसारी, अहमस्य स्वामि' इत्याद्यनुभवविरोधादिति चेन्न। अविद्यावशाद् ब्रह्मैवैकं संसरति। स एव जीवः। तस्यैव प्रतिशरीरमहमित्यादिबुद्धिः। स्वाप्नशरीरे 'अयं सुखी, अयं दुःखी' इत्येव यत्र बुद्धिर्न त्वहं सुखीत्यादि, तत्तु निर्जीवम्। यत्र त्वहमित्यादि तत् सजीवम्। जाग्रच्छरीरान्तरे अहमिति प्रतीत्यवच्छेदके सजीवतोक्तिर्न द्वितीयेन जीवेन सजीवत्वमित्यभिप्रेत्य। तत्र मानाभावात्। बन्धमोक्षादिव्यवस्थानुपपत्तिस्तत्र मानमिति चेन्न। बन्धमोक्षगुरुशिष्यादिव्यवस्थायाः स्वप्नवद्यावदविद्यमुपपत्तेः। न चैवं तस्मिन्नेकस्मिन्नेव जीवे सुप्ते समस्तजगदप्रतीत्यापातः। समष्टयभिमानिनो मुख्यजीवस्यासुप्तत्वात्। तस्मिन् लयकाले प्रसुप्ते जगदप्रतीतेः। अन्तःकरणावच्छिन्ने जीवाभासे तु सुप्ते तमेव प्रति जगदप्रतीतिः। न त्वन्यानपि प्रति। तदुपाधीनामप्रलीनत्वात्। संस्कारस्य कारणात्मना स्थितेर्न सुप्तस्य पुनरुत्थानानुपपत्तिरित्युक्तम्।

एतेन– मम कल्पकत्वे तव मोक्षार्थं प्रवृत्त्ययोगः। तव कल्पकत्वे त्वत्कल्पितास्मदादिबोधार्थं तव शब्दप्रयोगाद्यनुपपत्तिः। न च स्वप्नवत् पर्यनुयोगायोगः। एवमपर्यनुयोज्यत्वे निर्मर्यादतया कथानधिकारप्रसङ्गादिति निरस्तम्। चैत्रमैत्रादिसर्वाभिमानिनो जीवस्य कल्पकत्वेन तव ममेत्यादिविकल्पानुपपत्तेः। नापि स्वक्रियादिविरोधः। स्वक्रियायाः कल्पितत्वादिनिश्चयविरहकालीनत्वेन पर्यनुयोगायोगात्। अथ ब्रह्मण एव जीवत्वेन तस्यैव बन्धमोक्षाविति तस्य नित्यमुक्तत्वादिश्रुतिविरोधः। न। मुक्तेः स्वस्वरूपत्वेन बन्धस्य चाऽविद्यकत्वेन तदविरोधः। न हि मृगतृष्णिकाकल्पितोदकेन स्वभावशुष्काऽपि मरुभूमिरार्द्रीभवति।

(अद्वैतसिद्धिः)

एतेन कल्पितस्य जीवस्य कल्पकं प्रति प्रत्यक्त्वायोगः। तेन कल्पकेन प्रत्यक्त्वेनाज्ञानात्। अन्यस्यानुभवितुरभावात्। तथाऽनुभवापलापे एकजीवाद्वैतश्रुत्यादेरप्यसिद्धिरिति निरस्तम्। अनेकशरीरैकजीववादस्याङ्गीकारात्। न च तर्हि तमेव प्रति प्रत्यक्त्वपराक्त्वयोरयोगः। मैत्रं प्रति त्वमितिधीविषयस्य चैत्रस्य तमेव प्रति अहमितिधीविषयत्वायोगश्चेति वाच्यम्। भिन्नभिन्नान्तःकरणाभेदाध्यासेन तत्तदन्तःकरणमादाय प्रत्यक्त्वपराक्त्वाहमित्यादिबुद्धि-विषयत्वव्यवस्थोपपत्तेः। न च चैत्रसुखदुःखादीनां मैत्रेणानुसन्धानापत्तिः। अन्तःकरणा-वच्छिन्नेनाविद्यावच्छिन्नेन वा? नाद्यः। तत्र परस्परं भेदात्। न द्वितीयः। इष्टापत्तेः। अत एव चैत्रस्य शुक्तिसाक्षात्कारेण रजतभ्रमनिवृत्तावन्येषामपि तन्निवृत्तिः स्यादिति निरस्तम्। अन्तःकरणभेदेन व्यवस्थोपपत्तेः। ननु एवं मुक्तावपि चैत्राद्यन्यतमान्तःकरणावच्छेदेन साक्षात्कारे उत्पन्ने तदवच्छेदेनैव संसारनिवृत्तिः स्यात्, न तु तदितरान्तःकरणावच्छेदेनापीति चेन्न। तत्साक्षात्कारस्य सविलासमूलाज्ञाननिवृत्तिरूपतया तत्कालेऽन्तःकरणस्याभावेन वैषम्यात्।

ननु श्रुतिषु 'अविद्यायामन्तरे वर्तमानाः' इत्यादावविद्या, 'रमणीयचरणाः' इत्यादौ कर्मबन्धः, 'सति सम्पद्य न विदुः' इत्यादौ सुषुप्तिः, 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यादौ तत्त्वज्ञानं, 'परामृतात्परिमुच्यन्ति सर्वे'इत्यादौ मुक्तिश्च चेतनधर्मः कथमनेकेषूच्यत इति चेन्न। 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इत्यादिश्रुतिस्थैकवचन-प्राप्तैकत्वविरोधेनोदाहृतश्रुतीनामनेकत्वपरत्वाभावात्। सर्वजनीनभ्रमसिद्धतदनुवादेनाविरोधात्। न चोदाहृतश्रुतिविरोधेन 'इति सृष्टौ विनिश्चिताः' इति पूर्वेण 'स पूज्यः सर्वभूतानाम्' इत्युत्तरेण च विरोधेनेदमेकवचनं 'यदा नीतिपरो राजा,' 'स्वर्गकामो यजेत' इत्यादिवन्नैकत्वपरमित्येव किं न स्यादिति वाच्यम्। प्रत्यक्त्वपराक्त्वमहमित्यादि-व्यवहारप्रयोजकान्तःकरणाभेदाध्यासबलाद् बहुत्वस्य प्राप्तत्वेन पूर्वोत्तरवाक्योदाहृत-श्रुत्यादीनामतत्परत्वात्। न च मुक्तबहुत्वं नान्यतः प्राप्तमिति वाच्यम्। जीवबहुत्वस्य प्राप्तत्वेन मुक्त्यंश एवाप्राप्तत्वपर्यवसानात्। न चैकस्यैव जीवस्य सर्वकल्पकत्वे जीवस्य कारणत्वं निषिध्य ईश्वरकारणत्वविधायकैः श्रुत्यादिभिर्विरोधः। अविद्यायाः चिन्मात्रा-श्रयत्वोपपादने निरसिष्यमाणत्वात्। न चै एवं सर्वज्ञत्वसर्वकर्तृत्वादिबोधकश्रुतीनां निर्विषयत्वम्। शुद्धचैतन्ये ज्ञत्वस्यैवाभावात्। ईश्वरस्य च जीवभिन्नस्याभावाद्, जीवे सार्वज्ञ्यस्यानुभव-

(अद्वैतसिद्धिः)

बाधितत्वादिति वाच्यम्। समष्ट्यभिमानिनो जीवस्य सर्वज्ञत्वसर्वकर्तृत्वादिस्वीकारात्। न चानुभवविरोधः। अन्तःकरणाभेदाध्यासबलात्तदननुभवतद्विपरीतानुभवयोरुपपत्तेः। सर्वाभिमानिनस्तु सार्वज्ञ्यानुभवोऽस्त्येव। अत एव 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप' इत्याद्युपपद्यते। न च 'आचार्यवान् पुरुषो वेद' इति श्रुतेरुपदेशं विना जीवस्य तत्त्वज्ञानमनुपपन्नम्। उपदेष्टव्यादन्यस्य चैतन्यस्याभावाच्च नोपदेशो युज्यत इति वाच्यम्। स्वप्न इवोपदेष्टुः कल्पितस्य सम्भवात्।

ननु उपदेष्टृत्वं न कल्पितमात्रस्य। किन्तु तत्त्ववित्त्वेन कल्पितस्य। तथा चोपदेशात्प्राक् तत्त्वज्ञाने तदैव मोक्षापत्तिः। उपदेशवैयर्थ्यं च। न चैवं स्वप्नेऽपि तुल्यम्। तदा हि शब्दविशेषवक्तृत्वेनैव गुरुकल्पना, न तूपदेशसाध्यज्ञानविषयविशेषवित्त्वेनेति विशेषादिति चेन्न। अत्रापि तद्वदेव वाक्यविशेषवक्तृत्वेनैव तत्कल्पनसम्भवात्। ननु तर्हि 'यदेव भगवान्वेद तदेव मे ब्रूहि' इत्यादिश्रुतिः, 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इत्यादिस्मृतिश्चायुक्ता स्यादिति चेन्न। सामान्यतो मोक्षोपयोगिज्ञानविषयवित्त्वेनाज्ञाततत्त्ववित्त्वेन तत्त्वमस्यादिवाक्यवक्तृत्वेन वा कल्पितस्य उपदेष्टृत्वसम्भवेन उदाहृतवाक्याविरोधात्। अन्यथा तवापि मते तत्त्ववित्त्वेन प्रमित एवाचार्यत्वेनानुसरणीय इति प्रथमत एव तत्त्वज्ञाने तत्कालमोक्षापत्त्युपदेशवैयर्थ्यादिकं च स्यात्। एतेन 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्' इत्यादिविधिरपि भावितत्त्वज्ञानिकल्पकचेतनं प्रत्येव। न च तस्य शिष्यः स्वाज्ञानकल्पित इति जानतस्तन्मोक्षार्थं प्रवचने प्रवृत्तिर्युक्ता। न च स्वप्नवत् कल्पितत्वाज्ञानात्प्रवृत्तिः। तत्त्वविदस्तदज्ञानानुपपत्तेरिति निरस्तम्। स्वप्नगुरुवत् कल्पितत्वेन गुरोरपर्यनुयोज्यत्वात्। न च तत्त्वज्ञानहेतुत्वेन वेदस्य मीमांस्यत्ववद् गुरोरपि पर्यनुयोज्यत्वमिति वाच्यम्। तर्केण वेद इव तत्तद्रूपकल्पनया गुरावपि तत्परिहारात्। न च कथास्वपि सदुत्तरापरिस्फूर्तावहं त्वत्कल्पितो न पर्यनुयोज्य इत्युत्तरं स्यादिति वाच्यम्। कथायाः कल्पितत्वानिश्चयकालीनत्वेन समयबन्धविशेषनिबन्धनत्वेन च तादृगुत्तरानवकाशात्। तस्माच्छिष्यवत् गुरोरपि कल्पितत्वात् स्वप्नवत्सर्वव्यवस्थोपपत्तिः।

अथ कल्पको न निश्चिताद्वैतः। शास्त्रप्रणयनवैयर्थ्यात्। नाप्यनिश्चिताद्वैतः। शास्त्रस्य प्रमामूलकत्वाभावप्रसङ्गादिति चेन्न। प्रमामूलकत्वाभावेऽप्यबाधितविषयत्वेन शास्त्रप्रामाण्योपपत्तेरन्त्यपक्षाभ्युपगमात्। न चामुकः स इत्यनिश्चये बह्वायाससाध्यमोक्षार्थं प्रवृत्त्ययोगः।

(अद्वैतसिद्धिः)

प्रतिशरीरमहमहमिकया 'बद्धोऽहम्' इति निश्चयस्य स्वानुभवसाक्षिकत्वेन प्रवृत्तिसम्भवात्, एकेनैव जीवेन चैत्रमैत्रादिशरीराणां सजीवत्वसम्भवस्य प्रागेवोक्तत्वात्। किं च चैत्रमैत्रादिषु 'कोऽसौ' इति प्रश्नस्य किं केनचित् क्रोडीकृतं चैतन्यं विषयः। किं वा निरस्तसमस्तभेदम्। नाद्यः। तस्य कल्पितत्वेनाकल्पकत्वात्। न द्वितीयः। तस्यैकत्वेन तदनिश्चयासिद्धेः। शुद्धचित एकत्वेन वस्तुतोऽसंसारित्वेऽपि आवरणविक्षेपशक्तिद्वयशालिस्वाश्रिताविद्यावशात् संसारित्व-कल्पकत्वमोक्षार्थं यतमानत्वाद्युपपत्तिः।

नन्वनादौ संसारे कस्यचित्तत्त्वज्ञानं मुक्तिश्चाभून्न वा? आद्ये इदानीं संसारोपलब्धिर्न स्यात्। जीवस्यैकत्वाद्। अन्त्ये संप्रदायासम्भवेन तत्त्वज्ञानासम्भव इति चेन्न। न ह्यसाम्प्रदायिकत्वमुत्पत्तिविरोधि। अपूर्वजातीयानुत्पत्तिप्रसङ्गात्। किन्तु कारणासत्त्वम्। तन्नेदानीम् उपदेष्ट्रादिकारणस्य कल्पनासुदृढस्य सत्त्वात्। जीवैक्यस्य प्रमाणासिद्धत्वेन संसारोपलम्भ एवातः पूर्वं तत्त्वज्ञानानुत्पत्तौ प्रमाणम्। न च तत्त्ववित्त्वेन श्रुत्यादिसिद्धानां शुकवामदेवादीनां मुक्तिर्मा भूत्, मम तु भविष्यतीति कथं श्रद्दध्यादिति वाच्यम्। शास्त्रप्रामाण्यदार्ढ्यादिति गृहाण। अन्यथा तेषां महानुभावानां मुक्तत्वेऽपि मम भविष्यति न वेति शङ्कापिशाच्या प्रवृत्तिप्रतिबन्धापत्तेः। ननु तर्हि श्रुतिप्रामाण्यबलादेव तत्सिद्धो जीवभेदः, पूर्वमपि केषांचिन्मोक्षश्चाभ्युपेयताम्। श्रूयते हि 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्', 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः', 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादि। स्मर्यते च—

बहवो ज्ञानतपसा पूता मद्भावमाश्रिताः ।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥

इत्यादीति चेन्न। उक्तवाक्यानां सार्वलौकिकभ्रमसिद्धभेदानुवादकत्वेन तत्परत्वाभावात्। जीवैक्यबोधकवाक्यानां च मानान्तराप्राप्तस्वार्थपरत्वात्। स्वप्नन्यायेन भेदस्य कल्पितत्वोपपत्तेश्च। ज्ञानस्तुतिपराणि वाक्यानि नात्मभेदं प्रमातुं शक्नुवन्ति। तात्पर्यवद्वाक्याविरोधेनातात्पर्यवद्वाक्यानां गुणवादत्वोपपत्तेः।

''अतीतानागताश्चैव यावन्तः सहिताः क्षणाः ।
ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक् ॥''

(अद्वैतसिद्धिः)

इत्यादिस्मृतिरपि जीवोपाधिभेदानुवादकतया व्याख्येया। तस्मादविद्योपाधिको जीव एक एवेति सिद्धम्। इत्यद्वैतसिद्धौ एकजीवाज्ञानकल्पितत्वोपपत्तिः ॥

## न्यायामृततरङ्गिणी

**तस्मिन्निति।** आन्ध्यमप्रतीतिः। ननु सुप्त्यभिमानिनो मुख्यजीवस्य हिरण्यगर्भस्यासुप्तत्वान्न जगदान्ध्यम्। तस्मिंस्तु लयकाले सुप्ते जगदप्रतीतिरिष्टैव। अन्तःकरणावच्छिन्ने जीवाभासे तु सुप्ते तमेव प्रति जगदप्रतीतिः। न त्वन्यानपि प्रति। तदुपाधीनामप्रलीनत्वात्। मैवम्। अन्तःकरणावच्छिन्नानां जीवाभासानां चित्त्वे नानाजीववादापत्तेः। अचित्त्वे जगदान्ध्यापातात्। अतीतहिरण्यगर्भमुक्तेः प्रमाणसिद्धत्वेनेदानीं संसार्युपलम्भायोगादिति वक्ष्यमाणत्वाच्च ॥ **दृष्टिसृष्टीति॥** कारणात्मनाऽपि संस्कारावस्थानायोगस्योक्तत्वादित्यर्थः। स्वप्नपुरुषवत् स्वप्नद्रष्टृपुरुषवत्। त्वदिति पञ्चम्यन्तं पर्यनुयोज्य इत्यनेन सम्बध्यते। चैत्रमैत्रादिसर्वाभिमानिनो जीवस्य कल्पकत्वेन तव ममेत्यादिकल्पना न युक्तेति तु निरस्तम् ॥ **अनुसन्धानापातादिति॥** ननु भिन्नभिन्नान्तःकरणभेदाध्यासेन तत्तदन्तःकरणमादाय प्रत्यक्त्वपराक्त्वत्वमित्यादिबुद्धिविषयत्वं सुखानुसंधानाननुसंधानादिकं चोपपन्नमिति। मैवम्। बन्धतत्वज्ञानमोक्षावच्छेदकानामन्तःकरणादीनां भेदे नानाजीववादापत्तेः। तदभेदे तु दुःखाद्यनुसन्धानप्रत्यक्त्वाद्यनुपपत्तेर्दुष्परिहरणीयत्वात्। वक्ष्यते चैतज्जीवभेदप्रस्तावे।

॥ **यदेव मे भगवान् वेदेति॥** एतेन सामान्यतो मोक्षोपयोगिज्ञानविषयचित्त्वेन तत्त्वमस्यादिवाक्यवक्तृत्वेन वा कल्पितस्योपदेष्टृत्वमिति निरस्तम्। भेदस्यापि तादृशज्ञानविषयत्वसम्भावनया विशिष्य ज्ञातव्यत्वात्। भेदवादिनोऽपि तत्त्वमस्यादिवाक्यवक्तृत्वाच्च ॥ **मीमांस्यत्ववदिति॥** न च तर्केण वेद इव तत्तद्रूपकल्पनया गुरावपि तत्परिहार इति वाच्यम्। तथा कल्पनासम्भवस्योक्तत्वात् ॥ **सदुत्तरेति॥** न च कथायाः कल्पितत्वानिश्चयकालीनत्वेन समयबन्धविशेषनिबन्धनत्वेन तादृगुत्तरानवकाश इति वाच्यम्। अद्वैतिनः कल्पितत्वनिश्चयवतस्तदनिश्चयसमयबन्धविशेषयोरसम्भवात् ॥ **सम्प्रदायाभावेनेति॥** ननु सम्प्रदायाभावेऽप्यपूर्ववदुत्पत्तिरस्त्विति चेन्मूर्खोऽसि। न ह्यनादौ संसारेऽद्याप्यनुपपन्नजातीयमपूर्वमुत्पद्यत इति कोऽप्यभ्युपैति। किन्तूत्पन्नपूर्वजातीयमेवापूर्वमग्रेऽप्युत्पद्यते। कर्मणां तज्जन्यापूर्वाणां तत्फलानां

(तरङ्गिणी)

च नियतत्वात् ॥ तत्त्ववित्त्वेनेति ॥ कल्पनाकाल एव तत्त्वस्य ज्ञातत्वादुपदेशानर्थक्यादिनेत्यर्थः ॥ इति पूर्वेणेति ॥ 'इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिता' इति पूर्ववाक्ये बहुवचनेन। ॥ उत्तरेणेति ॥ 'त्रिषु धामसु यत् तुल्यं सामान्यं वेत्ति निश्चितः। स पूज्यः सर्वभावानां वन्द्यश्चैव महामुनिः' इत्युत्तरवाक्ये पूजावन्दनकर्तृत्वेन निश्चितचित्तानां भावानामिति बहुवचनेन बहुत्वावगमात्तेन विरोध इत्यर्थः।

व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि ॥
न्यायामृततरङ्गिण्यां विश्वं नैकाज्ञकल्पितम् ॥
॥ एकजीवाज्ञानकल्पितत्वभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

नन्वेकजीवमात्रदृष्टत्वान्यथानुपपत्त्या मिथ्यात्वम्। एकजीवमात्रदृष्टे स्वप्नादौ तद्दर्शनात्। न चैकजीवमात्रदृष्टत्वमसिद्धम्। द्रष्टुनानात्वे मानाभावात्। एकस्यैव सर्वद्रष्टृत्वोपपत्तेरित्येकजीववाद एव मिथ्यात्वप्रमापक इति तदेन्मतं दूषयितुमनुवदति ॥ यच्चेति ॥ नन्वेकस्यैव जीवत्वे बद्धमुक्तव्यवस्था न स्यादित्यत आह ॥ बद्धेति ॥ शुकवामदेवादिमुक्तादिवादस्त्वर्थवाद एवेति भावः ॥ तस्मिन्निति ॥ न च समष्ट्यभिमानिनो मुख्यजीवस्यासुप्तत्वात् सोऽज्ञानेन जगत्कल्पयतीति न जगदप्रतीत्यापत्तिरिति वाच्यम्। तस्मिन्सुप्ते जगदप्रतीत्यापत्तेः। न च स प्रलय एव स्वपिति तदा जगदप्रतीतिरिष्टेवेति वाच्यम्। स प्रलय एव स्वपिति मध्ये नेत्यत्र मानाभावात्। अहरहर्गच्छन्त्य एव ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढा इति बहुनामत्वोक्तिविरोधश्च।

किंच समष्ट्यभिमानिन एव मुख्याज्ञत्वे इदानीं प्रत्यहं सुप्तोत्थितानामहमज्ञो न किमप्यवेदिषमिति प्रतीत्या अज्ञानसिध्युक्तिविरोधः। तेषां जडत्वेन घटवदज्ञानशून्यत्वात्। सुप्तोत्थितसमष्टिजीवप्रतीतेश्चासिद्धेः।

किंचेदानीं शास्त्रेण समष्टिजीवकल्पित इति निश्चितवतस्तव शिष्यबोधनार्थं प्रवृत्तिर्नस्यात्। स्वप्ने तु स्वप्नत्वाज्ञानादेव प्रवृत्तिरित्यलमतिपल्लवेन ॥ दृष्टिसृष्टिपक्ष इति ॥ न च संस्कारस्य कारणरूपेण स्थितत्वात्पुनरुद्बोधोपपत्तिरिति वाच्यम्। अविद्यादेरपि दृष्टिसृष्टित्वेन तदात्मना स्थित्ययोगस्योक्तत्वात्। अविद्यादेरपि दृष्टिसृष्टित्वस्योपपादितत्वात्। ॥ मम कल्पकत्व इति ॥ न च चैत्रमैत्रादिसर्वजीवाभिमानिनः कल्पकत्वेन तव ममेत्यादिविकल्पानुपपत्तिः। सर्वजीवाभिमानिकल्पिता वयमिति शास्त्रव्याख्यातुर्गुरोर्निश्चयोऽस्ति। नवाद्ये शिष्यबोधनानुपपत्तिः। द्वितीये वेदान्तव्याख्याने गुरुत्वं न स्यात्। न ह्यत्र स्वप्नादिसाम्यमित्युक्तम् ॥ स्वक्रियेति ॥ न च क्रियायाः कल्पितत्वादिनिश्चयविरहकालीनत्वेन पर्यनुयोगायोगः इति वाच्यम्। कल्पितत्वादिनिश्चयकाले एव स्वक्रियाया उक्तत्वेन पर्यनुयोगात्। अन्यथा गुरुत्वानुपपत्तेः।

(कण्टकोद्धारः)

किंचैकं शरीरं सजीवमन्यानि निर्जीवानीति निश्चयो नोपपद्यते। सजीवत्वप्रयोजकानुभवस्य सर्वत्रा-विशिष्टत्वेन विनिगमकाभावात्। अनुभवापलापे त्वेकस्यापि सजीवत्वं न स्यादित्याह ॥सजीवेति॥ ननु अन्यानि निर्जीवानीत्यस्य सर्वथा निर्जीवत्वं नार्थः। किन्तु तत्रापि जीवोऽस्ति द्वितीयो नास्तीति। न चैवं बद्धमुक्तव्यवस्थाद्यनुपपत्तिः। तस्य यावदविद्यं स्वप्नवत्कल्पितत्वादिति चेन्न। एवं एक एव सर्वशरीरेऽस्तीत्युक्तं भवति। तस्य प्रतिशरीरं कल्पितोऽपि भेदो नास्ति उतास्तीति। आद्ये सर्वदेहेषु सर्वेषां ममायं देह इति प्रतीत्यापत्तेः। स्वीयपरकीयव्यवस्थानुपपत्तिश्च। द्वितीये बहुजीववादापातः। बहुजीववादिभिरपि प्रतिशरीरं कल्पितभेदस्वीकारात्। वास्तवभेदस्य क्वाप्यनङ्गीकारात्। न च बहुजीववादिमते चैतन्यस्यैवाज्ञानान्यवच्छेदकानि। तत्तदज्ञानावच्छिन्नस्यान्तः करणान्यवच्छेदकानि। एकजीववादे तु एकाज्ञानावच्छिन्नस्यान्तः करणान्यवच्छेदकानीति भेद इति वाच्यम्। तत्तदज्ञानावच्छेदेन चैतन्यभेदवत् तत्तदन्तःकरणावच्छेदेन जीवभेदस्यावश्यकत्वात्। लाघवादन्तःकरणानामेवावच्छेदकत्वोपपत्तेश्च। एकाज्ञानपक्षस्य दूषितत्वात् दूषयिष्यमाणत्वाच्च ॥प्रतिबिम्बादीति॥

उपाधेः प्रतिबिम्बपक्षपातित्वात्। अन्यथाऽहमिति न प्रयुज्येत। अहमिति स्थाने चिन्मात्रमिति प्रयुज्येतेति भावः ॥नित्यमुक्तेति॥ न च मुक्तेः स्वरूपत्वेन बन्धस्य चाविद्यकत्वेनाविरोध इति वाच्यम्। मुक्तेः स्वरूपत्वे मुक्तेर्ज्ञानसाध्यत्वश्रुतिविरोधः।

किंच प्रातिभासिकाज्ञानादिकमेव संसारस्तन्निवृत्तिरेव मोक्ष इति हि त्वया वक्तव्यम्। एवं च संसारनिवृत्तिर्नित्या तत्प्रतीतिश्चेति महद्वैशसम् ॥अन्यथेति॥ कल्पितस्य भ्रान्त्यादाधारत्वेत्यर्थः। भ्रान्त्या-धारस्यैव मुक्तत्वेनानेके संसरन्ति मुच्यन्त इत्यङ्गीकारे बहुजीववादः स्पष्ट एवेति भावः ॥कल्पितस्येति॥ तथा चाहं सुखीत्यादिप्रत्ययः सर्वशरीरावच्छेदेन न स्यादिति भावः। ननु प्रत्यक्त्वाभावेऽपि तदारोपात्तथा धीरित्यत आह ॥अप्रत्यक्त्वेनेति॥ ननु तत्रान्य एव प्रत्यक्त्वेनानुभवितेत्यत आह ॥अन्यस्य चेति॥॥तस्यैवेति॥ न च विद्याप्रयुक्तभेदाभावेऽपि भिन्नभिन्नान्तः करणावच्छेदप्रयुक्तभेदस्य विद्यमानत्वात् सुखादिव्यवस्थाद्युपपत्तिरिति चेन्न। सुखादिव्यवस्थानिमित्तस्यैव जीवत्वप्रयोजकत्वेन बहुजीववादापातात्। अन्यथैकान्तःकरणावच्छिन्नस्यानेकदेहावच्छेदे तत्प्रयुक्तभेदस्य विद्यमानत्वात् योगिनोऽनेकशरीरेष्वनुसन्धानं न स्यात्। तत्र त्वया जीवत्वप्रयोजकभेदस्यैव सुखादिव्यवस्थापकत्वमिति वक्तव्यम्। तथा च तदभावे पूर्वोक्तदोषानतिवृत्तिः ॥किंचेति॥ न च "अनादिमायया सुप्तः" इत्येकवचनानुरोधेन बहुवचनस्यैकत्वपरत्वात् नोक्तविरोध इति वाच्यम्। एकवचनस्यैव समुदायैकत्वपरत्वेन सावकाशत्वात्। सावकाशेन च निरवकाशबाधायोगात्। तस्यैकत्वपरत्वे पूर्वोत्तरविरोधस्य वक्ष्यमाणत्वाच्च। न च जीवबहुत्वस्यान्तः-करणाध्यासभेदात्प्राप्ततया श्रुतेन तत्परत्वमिति वाच्यम्। अन्तःकरणभेदाध्यासस्यासिद्धेः। मुक्तबहुत्वस्याप्राप्तेश्च। न च मुक्त्यंश एवाप्राप्तिरिति वाच्यम्। एवं हि विशिष्टार्थपरं किमपि न स्यात्। अंशप्राप्तेः सर्वत्र सम्भवात्।

(कण्टकोद्धारः)

तथा च "तत्त्वमसि" इत्यादेरपि जीवब्रह्मैक्यपरता न स्यात्। ननु कल्पकजीव एव सर्वज्ञत्वादिश्रुतीनां विषय इत्यत आह ॥जीवस्येति॥ न च सकलजीवाभिमानिनः सर्वज्ञत्वमङ्गीक्रियत इति वाच्यम्। सर्वज्ञत्वेऽज्ञानायोगेन कल्पकत्वानुपपत्तेः। सर्वज्ञस्य चाधिष्ठानतत्वसाक्षात्कारस्यावश्यकत्वात्। अधिष्ठानतत्वसाक्षात्कारस्य चाज्ञानविरोधित्वात्। अन्यथा सर्वज्ञत्वानुपपत्तेः। यादृशतादृशसर्वज्ञत्वस्य च सर्वसाधारणत्वात् ॥तथेति॥ वाक्यविशेषवक्तृत्वेनेत्यर्थः ॥सदैवेति॥ श्रुतिस्मृत्योः तत्त्वविशेषवित्त्वेनैव गुरुत्वनिश्चयप्रतीतेरिति भावः। न च सामान्येन तत्त्वज्ञानेऽपि विशेषतोऽज्ञातत्वात् न सद्यो मोक्षादिकम्। अन्यथा भवतामपि तत्त्वज्ञो गुरुरिति निश्चयानन्तरं प्रवृत्तौ तत्त्वस्य निश्चितत्वात् श्रवणादिवैयर्थ्यमेव स्यादिति वाच्यम्। निर्विशेषे चित्त्वे ज्ञाताज्ञातविभागायोगात्। अत एव नास्मत्प्रतिबन्दी। अस्माभिर्निर्विशेषत्वानङ्गीकारात्।

किंच येन रूपेण कल्पकेन कल्पितस्तेनैव रूपेण स इति त्वन्मतम्। तथा च गुरौ तदकल्पितविशेषवित्वाभावात्तद्वाक्याद् विशेषज्ञानं न स्यादेवेति। ततः श्रवणादि व्यर्थमेव। न च तत्त्वमसिवाक्यवक्तृत्वेन गुरुकल्पनमिति वाच्यम्। तथापि तस्य वाक्यस्यैक्यप्रतिपादकत्वस्याकल्पितत्वे तस्य तन्न स्यात्। कल्पितत्वे कल्पनासमय एव तत्वस्य ज्ञातत्वेन पूर्वोक्तदोषतादवस्थ्यमेवेति ॥किं चेति॥ अचेतनस्य प्रमादादेरप्रसक्त्या तत्प्रति तदभावविधानासम्भवादिति भावः ॥न चेति॥ न चासौ गुरुः स्वशिष्यः स्वाज्ञानकल्पित इति न जानात्यतः तन्मोक्षार्थं स्वाप्नगुरुवत्प्रवर्तत इति वाच्यम्। शास्त्रार्थः सर्वं स्वातिरिक्तं मदज्ञानकल्पितमिति तदनुसंधानाभावे च तस्याद्वैतशास्त्रव्याख्यातृत्वाभावेन गुरुत्वमेव न स्यादिति तं प्रति निषेधोप्यर्थ एव इति भावः ॥कल्पितत्वेऽपीति॥ गुरोरिति शेषः। न तर्केण वेद इव गुरोरपि तत्तद्रूपपरिकल्पनया परिहार इति वाच्यम्। तत्ववितत्वेनैतदंशपरिहारकरूपपरिकल्पनानुपपत्तेः ॥अन्यथेति॥ यदि कल्पितत्वेनापर्यनुयोज्यत्वमित्यर्थः। न च कथाया कल्पितत्वानिश्चयकालीनत्वेन समयबन्धविशेषनिबन्धकत्वेन तादृगुत्तरानवकाश इति वाच्यम्। शास्त्रार्थविचारसमये शास्त्रार्थानिश्चयायोगात्। शास्त्रार्थानिश्चये च कथकत्वासम्भवाच्च। एतादृशमुत्तरं न वक्तव्यमिति समयबन्धानिश्चयाच्च। कथायाम् अवयवादिनियमादौ समय भङ्गः। न त्वेतादृशं न वक्तव्यमित्यत्रापि। अन्यथा समयबन्धेन बाधिताद्यवचने बाधादेरदूषणत्वमेव स्यादिति दिक् ॥बह्वायासेति॥ न च प्रतिशरीरम् अहमहमिकया बद्धोऽहमिति निश्चयस्यानुभवसाक्षित्वेन प्रवृत्तिसम्भव इति वाच्यम्। कल्पकानिर्धारण एव एवं, तन्निर्धारणे तु तादृशनिश्चयस्यैवानुपपत्तेः। न चैकेनैव जीवेन मैत्रादिशरीराणां सजीवत्वसम्भवः प्रागुपपादित इति वाच्यम्। सर्वशरीराणामेकजीववत्वे सुखादिव्यवस्थायोगस्योक्तत्वात्। अन्यथैकत्वोक्तेरुक्तत्वात् ॥तस्येति॥ न च शुद्धचित् एकत्वेऽपि वस्तुतोऽसंसारित्वेप्यावरणविक्षेपशक्तिस्वाश्रिताविद्यावशात् संसारित्वकल्पकत्वमोक्षार्थं यतमानत्वाद्युपपत्तिरिति वाच्यम्। तर्हि एकजीववादभङ्गप्रसङ्गात् न स्वस्मिन् जीवः कल्पकः। चिन्मात्र एवाविद्यासहकारेण कल्पकत्वोक्तेः। सर्वस्य चैतन्यस्य संसारित्वेन बद्धाबद्धव्यवस्थायोगाच्च। एतत्पक्षे जीवस्य संसारिणोऽभावेन तत्त्वमसीत्यादेः जीवब्रह्मैक्यपरत्वायोगाच्च। न च चैतन्यमेव जीवशब्दवाच्यमिति वाच्यम्। तथात्वे तदतिरिक्तशुद्धब्रह्माभावे पूर्वोक्तदोषानतिवृत्तेः। अहमिति प्रत्ययवेद्ये एव जीवत्वव्यवहाराच्च। व्यवहारात्तु मेयत्वात्सङ्केतस्येत्यलम्।

(कण्टकोद्धारः)

ननु सत्यसंसारिण एव मोक्षार्थं प्रवृत्तिर्भविष्यतीत्यत आह ॥ कल्पकानां चेति ॥ ॥ सम्प्रदायाभावेनेति॥ न चासांप्रदायिकत्वं नोत्पत्तिविरोधि। अपूर्वजातीयानुत्पत्तिप्रसङ्गात्। किन्तु कारणासत्वम्। तत्रेदानीम्, उपदेष्ट्रादिकारणस्य कल्पनासुदृढस्य सत्वादिति वाच्यम्। अन्यत्रासाम्प्रदायिकत्वस्य उत्पत्यविरोधकत्वेऽपि तत्त्वज्ञानेऽप्रामाण्यशङ्काधायकतयाऽसाम्प्रदायिकत्वस्य तत्वज्ञानविरोधित्वेन साम्प्रदायिकत्वस्य तत्वज्ञानोपयोगित्वात्। अन्यथा श्रुतिपुराणादावितिहासो नोच्येत। न चापौरुषेयत्वादिना सकलशङ्कानिरास इति वाच्यम्। कल्पितापौरुषेयत्वस्य गूढकर्तृकवाक्येऽपि सत्वात्। वास्तवस्य च वेदेऽप्यभावात्।

ननु तत्त्ववित्वेन गुरुकल्पितसम्प्रदायस्य सत्वान्नोक्त दोष इत्यत आह ॥ तत्वविन्वेनेति॥ कल्पनासमय एव तत्वज्ञानस्योत्पन्नत्वेन गुरूपसत्यादिवैयर्थ्यादिनेत्यर्थः। पूर्वं तत्वज्ञानं नोत्पन्नमित्यत्र प्रमाणाभावाच्च। न च जीवैक्यस्य प्रमाणसिद्धत्वे संसारोपलम्भ एवातः पूर्वं तत्वज्ञानानुदये प्रमाणमिति वाच्यम्। जीवैक्यस्यैव प्रामाणिकत्वात्। वक्ष्यमाणरीत्या प्रमाणाभावनिश्चयोपपत्तेः ॥ तत्ववित्वेनेति॥ न च महानुभावानां तेषां मोक्षसत्वेऽपि मम भविष्यति न वेति शङ्का भवत्पक्षेऽपि स्यादिति तुल्यमिति वाच्यम्। गुरुपदेशेन निश्चयोपपत्तेः।

ननु जीवभेदे प्रमाणाभावात् बाधकसत्त्वाच्च कथं कस्यचिन्मुक्तिः कस्यचित्संसार इति स्वीकर्तव्यम्। जीवभेदप्रसङ्गात्। तस्मात् ज्ञानप्रशंसापराण्युदाहृतवाक्यानीत्यत आह ॥ न हि प्रत्यक्षेणेति॥ न चोक्तवाक्यानां सार्वलौकिकभ्रमसिद्धभेदानुवादकत्वेनातत्परत्वमिति वाच्यम्। भेदस्य भ्रमसिद्धत्वे वाक्यस्या तत्परत्वं, वाक्यस्यातत्परत्वे चैकजीवसिद्धौ भेदस्य भ्रमसिद्धत्वमित्यन्योन्याश्रयात्। द्वयोः प्रणयन्तीत्यादिवाक्यवत् भेदवाक्यानामबाध्यभेदप्रापकत्वापत्तेश्च। मिथ्यात्वश्रुत्यादेरेव विज्ञानवादादिप्राप्तमिथ्यात्वानुवादित्वापत्तेश्च। बहुप्रमाणसंवादस्य दाढर्यहेतुत्वाच्च। ऐक्यवाक्यस्यैवाद्वैतिशास्त्रापादित भ्रमसिद्धजीवब्रह्मैक्यानुवादकत्वा-पत्तेश्चेति दिक्।

न चातात्पर्यवद् वाक्यं तात्पर्यवद् वाक्यानुसारेण नेयमिति वाच्यम्। ऐक्यवाक्यस्य ऐक्ये तात्पर्यं, भेदवाक्यस्य न भेदे तात्पर्यमित्यस्यासिद्धेः। तात्पर्यज्ञापकस्य प्रकृतेऽपि सद्भावात्। यथा चैतत्तथा प्रागेवोक्तम्।

ननु कथं भेदप्रतिपादकवाक्यस्य बाधकाभावः। "अनादिमायया सुप्तः" इत्येकजीवप्रतिपादकं वाक्यमेव बाधकमित्यत आह ॥ अनादिमाययेति॥ अत्रैकवचनं समुदायाभिप्रायत्वात्सावकाशत्वेन न तद्बाधकमिति भावः ॥ अन्यथेति॥ एकजीवप्रतिपादकत्व इत्यर्थः। इदमुपलक्षणम्। बद्धमुक्तादिव्यवस्था च न स्यादिति द्रष्टव्यम्। अत एव बद्धमुक्तादिव्यवस्थोपपत्तिमाशङ्क्य निषेधति ॥ न चेति ॥ ॥ अननुगमाच्चेति॥ अविद्यान्तःकरणमात्रसाधारणस्यैकस्योपाधेरनुगमकस्याभावादिति भावः।

ननु हिरण्यगर्भमुक्तितः प्राक्तस्यापि मुक्तिर्नास्त्येव प्रमाणाभावात्। शुको मुक्त इत्यादिरर्थवाद एवेत्यत आह ॥ अतीतेति॥ प्रमाणसिद्धस्याप्यतीतमुक्तस्यापलापे कापि वस्तुसिद्धिर्नस्यादिति भावः।

नन्वतीतमुक्त्यङ्गीकारे संसारानुपलम्भबाधकस्य विद्यमानत्वात् न श्रुतिस्तत्परेत्यत आह ॥ न चेति ॥ ॥ अतीतानागताश्चेति॥ न चेयं श्रुतिरनुवाद इति वाच्यम्। उक्तलक्षणजीवानन्त्यस्य प्रमाणान्तराप्राप्तत्वात्।

(कण्टकोद्धारः)
न चेयं श्रुतिरनानुभाविकार्थत्वादतत्परेति वाच्यम्। त्वत्पक्षे तस्य गुणत्वात्। उक्तमर्थं कारिकारूढं करोति ॥ तस्मादिति॥ तथा च मिथ्यात्वे प्रमाणाभावान्न प्रपञ्चः आविद्यकः।

इति एकजीवाज्ञानकल्पितत्वभङ्गः।

## २१. अविद्यालक्षणभङ्गः

यच्चोक्तम्-(१) अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वं, (२) भ्रमोपादानत्वं वाऽविद्यालक्षणम्। प्रमाणं त्वहमज्ञः, मामन्यं च न जानामि, त्वदुक्तमर्थं न जानामीत्यादिप्रत्यक्षं, तथा एतावन्तं कालं न किंचिदहमवेदिषमिति परामर्शसिद्धसौषुप्तिकानुभवः। तथा 'प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वाद्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावद्' इति विवरणोक्तमनुमानम्। स्वप्रागभावं, स्वोत्पादकादृष्टं, स्वप्रतिबन्धकादृष्टं, विषयगतमज्ञातत्वं च व्युदसितुं साध्यविशेषणानि। तथा 'चैत्रप्रमा चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका, प्रमात्वात्, मैत्रप्रमावत्,' 'विगीतो विभ्रमः एतज्जनकाबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, सम्मतवद्' इति तत्त्वप्रदीपिकोक्तानुमानम्। तथा ''तम आसीत्'' इत्यादिश्रुतिः। तथा मिथ्याभूतस्यार्थज्ञानात्मकस्य भ्रमस्य कादाचित्कत्वेन सोपादानत्वाद् भावरूपं कार्यानुगुणं मिथ्याभूतमुपादानमनवस्थापरिहारार्थमनाद्यंगीकार्यमित्याद्यर्थापत्तिश्च। न च न जानामीति प्रत्यक्षं ज्ञानाभावविषयम्। धर्मिण्यात्मनि प्रतियोगिनि च ज्ञाने ज्ञाते तस्य विषयनिरूप्यत्वेन विषयस्यापि ज्ञाततया तज्ज्ञानाभावायोगात्। अज्ञाते तु हेत्वभावेन ज्ञानाभावज्ञानायोगात्। न च विषयोऽपि सामान्यतो ज्ञायत इति युक्तम्। सामान्यस्य ज्ञातत्वादेव तज्ज्ञानाभावायोगात्। विशेषज्ञानाभावे सत्यपि निरूपकविशेषज्ञानाभावेन तन्निरूपितविशेषज्ञानाभावज्ञानायोगादिति।

तत्र ब्रूमः– आद्यलक्षणे अव्याप्तिः। सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञानानामनादित्वायोगस्योक्तत्वाद्। आरोपिताभावोपादानाज्ञाने भावत्वाभावाच्च। अभावस्य भावोपादानकत्वे असत्यस्य सत्योपादानकत्वापातात्। तस्याज्ञानानुपादानकत्वे

ज्ञानान्निवृत्तिर्न स्यात्। शुद्धं ब्रह्म वृत्तिव्याप्यमपि नेति मते तदज्ञाने, चरम-साक्षात्कारानन्तरभाविजीवन्मुक्त्यनुवृत्ते अज्ञाने, ऊर्ध्वाग्रत्वाद्यधिष्ठानतत्त्वसाक्षात्कारा-निवर्तितजलस्थवृक्षाधोग्रत्वादिसोपाधिकभ्रमोपादानाज्ञाने च ज्ञाननिवर्त्यत्वाभावाच्च। न हि अब्रह्मज्ञानेन ब्रह्माज्ञाननिवृत्तिः। जीवन्मुक्त्यनुवृत्ताज्ञानस्य ज्ञाननिवर्त्यत्वे च स्वकार्यैरारब्धकर्मभिः सह पूर्वेणैव साक्षात्कारेण निवृत्तिः स्यात्। न च सोपाधिकभ्रमोपादानमज्ञानमुपाधिनिवृत्तिसचिवतत्त्वज्ञाननिवर्त्यम्। तस्य स्वप्रागभावं प्रतीवाज्ञानं प्रत्यप्यन्यनिरपेक्षस्यैव निवर्तकत्वात्। न हि ज्ञाते क्वचिदपि न जानामीति धीरस्ति। चैतन्याविद्यासम्बधेऽतिव्याप्तिश्च। साक्षाज्ज्ञाननिवर्त्यत्वविवक्षायां चानादि-पदवैयर्थ्यम्। असम्भवश्च। कल्पितत्वेन दोषजन्यधीमात्रशरीरस्याज्ञानस्या-नादित्वायोगस्योक्तत्वात्। ज्ञाननिवर्त्यस्याभावविलक्षणस्य रूप्यवदनादित्वायोगाच्च। अज्ञानसम्बन्धोऽपि पक्षतुल्यः। न चाज्ञानत्वानधिकरणत्वमुपाधिः, पक्षेतरत्वात्। अवच्छिन्नाज्ञाने साध्याव्याप्तेश्च। व्यतिरेकासिद्धेश्च। त्वन्मते अज्ञानस्य भावाभावविलक्षणत्वेन भावत्वाभावाच्च। भावविलक्षणस्याभावत्वनियमेन भावविलक्षणे अभाववैलक्षण्यस्याप्ययोगाच्च। अपि चानादेरभावविलक्षणस्यात्मवदनिवर्त्यत्वम्। न च भावत्वमात्मत्वं वोपाधिः। अत्यन्ताभावे असति च साध्याव्याप्तेः। त्वन्मते आत्मन्यप्यभाववैलक्षण्यातिरेकेण भावत्वाभावाच्च।

यदत्रोक्तं विवरणे– "न सादित्वमनादित्वं वा विनाशाविनाशयोर्निमित्तम्। किं तु विरोधिसन्निपातासन्निपातौ। किं चानादिभावो न निवर्तत इति सामान्यव्याप्तेरज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्तिर्बलीयसी। अपि चाभाववैलक्षण्यादात्मवदनिवृत्तौ भाववैलक्षण्यात्प्रागभाववन्निवृत्तिः किं न स्याद्" इति तन्न। अनादिभावत्वेनैव विरोध्यसन्निपातस्याप्यनुमानात्। यः पर्वतः सोऽनग्निकः इति विशेषव्याप्ति-रित्यतिप्रसङ्गाच्च। त्वदभिमतानाद्यज्ञानस्य ज्ञाननिवर्त्यत्वे दृष्टान्ताभावेनाज्ञानशब्देन सादिभ्रान्त्यादिसाधारणज्ञानविरोधिमात्रस्य विवक्षणीयत्वेन विशेषव्याप्तित्वायोगाच्च। भाववैलक्षण्येन निवृत्तावत्यन्ताभावस्य ध्वंसस्य च निवृत्त्यापाताच्च। अविद्यानिवृत्तिरूपमोक्षाभावोऽपि मयैवापाद्यते। प्रतीतिमात्रशरीरस्याज्ञानस्य यावत्स्वविषयधीरूपसाक्षिसत्त्वमनुवृत्तिनियमेन निवृत्त्ययोगाच्च। अज्ञानस्यात्यन्ताभाव-प्रतियोगित्वरूपमिथ्यात्ववतो निवृत्त्ययोगस्योक्तत्वाच्च।

द्वितीयलक्षणेऽपि, यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मते अभ्रमपूर्वक-प्रमानिवर्त्याज्ञाने, अभावारोपनिवर्तकप्रमानिवर्त्याज्ञाने चाव्याप्तिः। अभावस्य निरुपादानकत्वात्। सोपादनकत्वेऽपि भावरूपाज्ञानोपादानकत्वायोगात्। किं च, ब्रह्म जगदुपादानमायाधिष्ठानमिति पक्षे दोषाभावेऽपि मायावच्छिन्नं ब्रह्मोपादानमिति पक्षे असम्भवः। रज्वाः सूत्रद्वयमिव मायाब्रह्मणी उपादाने इति पक्षे अतिव्याप्तिः। अपि चार्थज्ञानरूपस्य भ्रमस्य भावविलक्षणत्वेन निरुपादानत्वादसम्भवः। न च भावविलक्षणाज्ञानोपादेयस्य भ्रमस्य भावत्वं युक्तम्। कार्यकारणयोरभेदात्। सोपादानत्वे च भावत्वमेव तन्त्रम्। न त्वभावविलक्षणत्वम्। गौरवात्। अपि चार्थस्य मन्मते असत्त्वेन त्वन्मते च सद्विलक्षणत्वेन निरुपादानत्वात्, ज्ञानस्य तु त्वन्मते सद्विलक्षणत्वेन निरुपादानत्वात्, मन्मते तु सत्त्वेन तत्प्रत्यात्मनोऽन्तःकरणस्य वोपादानत्वात् नाज्ञानमुपादानम्। सोपादानत्वे कदाचित्सत्त्वमेव तन्त्रम्। न त्वसद्विलक्षणत्वम्। कदाचिदेव सत्त्वेन प्रतीयमानत्वं वा, गौरवात्। तुच्छस्यापि शब्दाभासादिना सत्त्वेन प्रतीतिसम्भवाच्च। न च ज्ञानस्य सत्त्वेऽर्थस्यापि सत्त्वप्रसङ्गः। मिथ्याभूतमज्ञानं वेदान्ततात्पर्यं चरमसाक्षात्कारं च प्रति विषयस्य ब्रह्मणः सत्त्ववत्, सन्तं व्यवहारं परोक्षज्ञानं च प्रति विषयस्य खपुष्पादेरसत्त्ववत्, सत्यसाक्षिवेद्याज्ञानादेर्मिथ्या-त्ववच्चोपपत्तेः। एतावन्तं कालं रजतज्ञानमासीदिति ज्ञानस्य सत्त्वानुसन्धानाच्च। असद्वैलक्षण्यमात्रेण सत्त्वानुसन्धाने च सद्वैलक्षण्येन नासीदित्यनुसन्धानापाताद्। अर्थेऽप्यासीदित्यनुसन्धानापाताच्च। एतावन्तं कालमिहादर्शे मुखमासीदित्यनुसन्धानं तु प्रतिबिम्बस्य छायादिवत्सत्यत्वात्। किं च अज्ञानस्य भावविलक्षणत्वात् सद्विलक्षणत्वाच्च नोपादानत्वम्। अन्यथा तत्त्वज्ञानप्रागभाव एव भ्रमोपादानं स्यात्। उपादानत्वे च भावत्वं सत्त्वं च तन्त्रम्। न त्वाभावविलक्षणत्वमसद्विलक्षणत्वं वा। गौरवात्। किं च यद् यदनुविद्धतया भाति तत्तदुपादानकम्। न च रूप्यं तज्ज्ञानं वा अज्ञानमिति भाति।

यत्तु ज्ञाननिवर्त्यत्वमज्ञानलक्षणम्, न च प्रपञ्चेऽतिव्याप्तिः, तस्याज्ञान-परिणामत्वात्। न हि पृथिवीलक्षणस्य घटादावतिव्याप्तिरिति, तन्न। जीवन्मुक्त्यनुवृत्ता-ज्ञानादावव्याप्त्यादेरुक्तत्वात्। यद्भावरूपाज्ञानं विप्रतिपन्नं तस्य शुक्तिरूप्यादिव्यावृत्तस्य

**कारणावस्थानाद्यज्ञानस्यैव लक्षणीयत्वेन, रूपित्वस्य तेजोलक्षणत्वे तत्परिणामेऽप्यबदाविवास्यापि प्रपञ्चेऽतिव्याप्तेश्च, पृथिवीलक्षणेऽपि कारणावस्थस्यैव लिलक्षयिषितत्वे घटादावतिव्याप्तिरेव। साक्षात्पदप्रक्षेपेणोपादाननिवृत्तिद्वारेण ज्ञानेन निवर्त्ये प्रपञ्चेऽतिव्याप्तिपरिहारेऽपि "अभावाभावो भावव्याप्यः" इति मते ज्ञानप्रागभावस्यापि साक्षात्तन्निवर्त्यत्वाच्च। अन्यथा विवरणाविद्यानुमाने आद्यविशेषणवैयर्थ्यम्।**

**इति अविद्यालक्षणभङ्गः।**

## अद्वैतसिद्धिः

अथ– केयमविद्या? न तावद् (१) अनादिभावरूपत्वे सति ज्ञाननिवर्त्या सेति। सादिशुक्त्याद्यवच्छिन्नचैतन्यावारकाज्ञानेऽव्याप्तेः। तस्यानादित्वाभावात्। अभावोपादानाज्ञाने च भावत्वाभावात्तत्राव्याप्तिः। अभावस्य भावोपादानकत्वे असत्यस्यापि सत्योपादानकत्वं स्याद्। अज्ञानानुपादानकत्वे तस्य ज्ञानान्निवृत्तिर्न स्यादिति। अत्र ब्रूमः– रूप्योपादानाज्ञानमप्यनादिचैतन्याश्रितत्वादनाद्येव। उदीच्यं शुक्त्यादिकं तु तदवच्छेदकमिति न तत्राव्याप्तिः। भावत्वं चात्राभावविलक्षणत्वमात्रं विवक्षितम्। अत आरोपिताभावोपादानाज्ञानेऽप्यभावविलक्षणत्वस्वीकारान्नाव्याप्तिः। न च सजातीयोपादानकत्वनियमः, अन्यथा असत्यस्यापि सत्यमुपादानं स्यादिति वाच्यम्। सर्वथा साजात्ये सर्वथा वैजात्ये वोपादानोपादेयभावादर्शनेन तथा साजात्यस्य वैजात्यस्य वा आपादयितुमशक्यत्वात्। न हि कार्याकारकारणाकारतोऽप्यभेदे कार्यकारणभावः। सत्यस्य त्वसत्योपादानत्वे सत्यस्य निवृत्त्यसंभवेन तदुपादेयस्यासत्यस्यापि निवृत्तिर्न स्याद्। उपादाननिवृत्तिमन्तरेणोपादेयानिवृत्तेः। अतो न सत्यमसत्यस्योपादानम्। सत्यस्यापरिणामित्वाच्च। विवर्ताधिष्ठानत्वं त्वभ्युपेयत एव। न च ब्रह्माज्ञाने ब्रह्मणो वृत्त्यव्याप्यत्वपक्षेऽव्याप्तिः। तस्य ज्ञानानिवर्त्यत्वादिति वाच्यम्। स्वरूपसदुपाधिमत्तद्विषयकज्ञाननिवर्त्यस्य तन्मतेऽपि भावात्। उपपादितं चैतद् दृश्यत्वहेतूपपादने।

अथ– औपाधिकभ्रमोपादानाज्ञाने, ब्रह्मसाक्षात्कारानन्तरविद्यमानजीवन्मुक्ताज्ञाने च ज्ञाननिवर्त्यत्वाभावादव्याप्तिः। तयोर्ज्ञाननिवर्त्यत्वे उपाधिकालजीवन्मुक्तिकालयोरेव

(अद्वैतसिद्धिः)

ज्ञानप्रागभाववत्तन्निवृत्त्यापत्तिरिति चेन्न। उपाधिप्रारब्धकर्मणोः प्रतिबन्धकयोरभावविलम्बेन निवृत्तिविलम्बेऽपि तयोर्ज्ञाननिवर्त्यत्वानपायात्। न हि क्वचिदविलम्बेन जनकस्य क्वचित् प्रतिबन्धेन विलम्बे जनकताऽपैति। न च तर्हि ज्ञातेऽपि तत्राज्ञात इति व्यवहारापत्तिः। तादृग्व्यवहारे आवरणशक्तिमदज्ञानस्य कारणत्वेन तदावरणशक्त्यभावादेव ईदृग्व्यवहारानापत्तेः। यथा चैतत्तथोपपादयिष्यते। न चाविद्याचैतन्यसम्बन्धेऽतिव्याप्तिः। साक्षाज्ज्ञाननिवर्त्यत्वस्य विवक्षितत्वात्, तस्याप्यविद्यात्मकत्वाद्वा। न च विशेषणान्तरवैयर्थ्यम्। अनादिपदस्योत्तरज्ञाननिवर्त्ये पूर्वज्ञाने, भावपदस्य ज्ञानप्रागभावे ज्ञानजन्यकार्यप्रागभावे चातिव्याप्तिवारकत्वेन सार्थकत्वात्। ज्ञानत्वेन साक्षाज्ज्ञाननिवर्त्यत्वं तु भवति लक्षणान्तरम्। ननु– असम्भवः, कल्पितत्वेन दोषजन्यधीमात्रशरीरस्याज्ञानस्य ज्ञाननिवर्त्यस्याभावविलक्षणस्य च रूप्यवदनादित्वायोगादिति चेन्न। कल्पितत्वमात्रं हि न दोषजन्यधीमात्रशरीरत्वे सादित्वे वा तन्त्रम्। किन्तु प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वं, सादिकल्पकवत्त्वं, विद्याऽनिवृत्त्यप्रयुक्तनिवृत्तिप्रतियोगित्वं, प्रागभावप्रतियोगित्वं वा तन्त्रम्। न च तत् प्रकृतेऽस्ति। ज्ञाननिवर्त्यत्वसमानाधिकरणाभावविलक्षणत्वेनाविद्यायाः सादित्वसाधने 'अजामेकाम्', 'अनादिमायया' इत्यादिशास्त्रविरोधः। अनादित्वसाधकेन ज्ञाननिवर्त्यत्वे सति भावविलक्षणत्वेन सत्प्रतिपक्षश्च, भावत्वस्योपाधित्वं च।

न च अभावविलक्षणाविद्यादौ भावविलक्षणत्वमसम्भवि, परस्परविरोधादिति वाच्यम्। भावत्वाभावत्वयोर्बाधकसत्त्वेन तृतीयप्रकारत्वसिद्धौ परस्परविरहव्यापकत्वरूपविरोधासिद्धेः। परस्परविरहव्याप्यत्वरूपस्तु विरोधो नैकविरहेणापरमाक्षिपति। न हि गोत्वविरहोऽश्वत्वमाक्षिपतीत्युक्तम्। न चात्मवदनादेरभावविलक्षणस्यानिवर्त्यत्वम्। आत्मत्वस्यैवोपाधित्वात्। न चात्यन्ताभावान्योन्याभावयोः साध्याव्याप्तिः। अधिकरणातिरिक्तस्यानिवर्त्यस्यात्यन्ताभावादेरनभ्युपगमात्। न च तुच्छे साध्याव्याप्तिः। अभावविलक्षणत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वोपपत्तेः। किं च सादित्वमनादित्वं वा न निवर्त्यत्वानिवर्त्यत्वयोः प्रयोजकम्। ध्वंसप्रागभावयोस्तदभावात्। नापि भावत्वविशेषितं तत् तथा। अभावे तदसत्त्वेन भिन्नभिन्नप्रयोजककल्पनापत्तेः। भावनिवृत्त्यनिवृत्त्योरेव तयोः प्रयोजकत्वे च भावविलक्षणाविद्यादौ ताभ्यां तयोरनापादनात्। तस्मान्नाशसामग्रीसन्निपातासन्निपातावेव निवर्त्यत्वानिवर्त्यत्वयोः प्रयोजकाविति मन्तव्यम्। तौ च फलबलकल्प्याविति न कोऽपि

(अद्वैतसिद्धिः)

दोषः। अपि च यद्यविद्यादेरभावविलक्षणत्वसमानाधिकरणानादित्वेनाऽत्मवदनिवर्त्यत्वं साध्यते। तर्हि भावविलक्षणत्वेन प्रागभाववन्निवर्त्यत्वमेव किं न साध्यते ? न च ध्वंसात्यन्तान्योन्याभावेषु व्यभिचारः। अधिकरणातिरेके तेषामपि निवर्त्यत्वाभ्युपगमात्। न च– अज्ञानस्य यावत्स्वविषयधीरूपसाक्षिसत्त्वमनुवृत्तिनियमेन निवृत्त्ययोग इति वाच्यम्। दुःखशुक्तिरूप्यादेः स्वभासके साक्षिणि सत्येव निवृत्त्यभ्युपगमेन साक्षिभास्यानां यावत्साक्षिसत्त्वमवस्थाननियमानभ्युपगमात्। किं च केवलचिन्मात्रं न साक्षि, किन्त्वविद्यावृत्त्युपहितम्। तथा चास्थिराविद्यावृत्त्युपहितस्य साक्षिणोऽप्यस्थिरत्वेन तत्सत्त्वपर्यन्तमवस्थानेऽप्यविद्यादेर्निवृत्तिरुपपद्यते। न च वृत्त्यनुपधानदशायामविद्यादेः शुक्तिरूप्यवदसत्त्वापत्तिः। सादिपदार्थ एवैतादृङ्नियमाद्। धारावाहिकाविद्यावृत्तिपरम्पराया अतिसूक्ष्माया अभ्युपगमाद्वेति शिवम्।

(२) यद्वा भ्रमोपादानत्वमज्ञानलक्षणम्। इदं च लक्षणं विश्वभ्रमोपादानमायाधिष्ठानं ब्रह्मेति पक्षे। न तु ब्रह्ममात्रोपादानत्वपक्षे, ब्रह्मसहिताविद्योपादानत्वपक्षे वा। अतो ब्रह्मणि नातिव्याप्तिः। इतरत्र तु पक्षे परिणामित्वेनाचेतनत्वेन वा भ्रमोपादानं विशेषणीयमिति न दोषः। न चाभावारोपनिवर्तकप्रमानिवर्त्येऽव्याप्तिः। तस्यापि भ्रमोपादानत्वात्। ननु– भ्रमे भावविलक्षणाज्ञानोपादानकत्वं न घटते। भ्रमस्य भावविलक्षणत्वे उपादेयत्वायोगाद्। भावत्वे च भावोपादानकत्वनियमादिति चेन्न। अज्ञानस्य भ्रमस्य च भावविलक्षणत्वेऽप्युपादानोपादेयभावोपपत्तेः। न हि भावत्वमुपादानत्वे उपादेयत्वे वा प्रयोजकम्। आत्मनि तददर्शनात्, किन्त्वन्वयिकारणत्वमुपादानत्वे तन्त्रम्। सादित्वमुपादेयत्वे। तदुभयं च न भावत्वनियतम्। अत उपादानोपादेयभावोऽपि न भावत्वनियतः। न चैवं ध्वंसस्याप्युपादेयत्वापत्तिः, इष्टापत्तेः। न चैवं ज्ञानप्रागभावस्यैव भ्रमोपादानत्वमस्तु, किमभावविलक्षणाज्ञानोपादानकल्पनेनेति वाच्यम्। प्रागभावस्य प्रतियोगिमात्रजनकत्वनियमेन भ्रमं प्रति जनकत्वस्याप्यसिद्धेः, तद्विशेषरूपोपादानत्वस्यैव दूरनिरस्तत्वात्। अतः सद्विलक्षणयोरज्ञानभ्रमयोर्युक्त उपादानोपादेयभावः। भ्रमस्य च सद्विलक्षणत्वमुक्तम्। वक्ष्यते च। न चैवमज्ञानानुविद्धतया भ्रमस्य प्रतीत्यापत्तिः, मृदनुविद्धतया घटस्येवेति वाच्यम्। यद् यदुपादानकं, तत् तदनुविद्धतयैव प्रतीयत इति व्याप्त्यसिद्धेः। न हि घटोपादानकं रूपं घट इति प्रतीयते। प्रकृतिद्व्यणुकाद्यनुविद्धतया प्रतीतेः परैरप्यनभ्युपगमात्। केनचिद्धर्मेण

(अद्वैतसिद्धिः)

तदनुवेधस्तु प्रकृतेऽपीष्ट एव। न च यावन्ति ज्ञानानि तावन्त्यज्ञानानीति पक्षे भ्रमापूर्वकप्रमानिवर्त्येऽज्ञाने अव्याप्तिः। भ्रमोपादानतायोग्यत्वस्य विवक्षितत्वात्। सहकारिवैकल्यात् कार्यानुदयेऽपि योग्यतानपायात्। अथ योग्यतावच्छेदकरूपापरिचये कथं तद्ग्रहणम्? प्रथमलक्षणस्यैव योग्यतावच्छेदकत्वात्। एकमेवाज्ञानमिति पक्षे तु तत्र भ्रमोपादानत्वमक्षतमेव। न चैवं शुक्तिज्ञानेनैवाज्ञाननाशे मोक्षापत्तिः। तस्यावस्था-विशेषनाशकत्वाङ्गीकारात्। व्युत्पादितं चैतदस्माभिः सिद्धान्तबिन्दौ। ज्ञानत्वेन रूपेण साक्षाज्ज्ञाननिवर्त्यत्वं वा तल्लक्षणमिति च प्रागुक्तमेव। तस्मान्नाविद्यालक्षणासम्भव इति सर्वमवदातम्।

॥ इत्यद्वैतसिद्धावविद्यालक्षणोपपत्तिः ॥

## न्यायामृतरङ्गिणी

**जगतोऽनाविद्यकत्वायाविद्यां प्रतिक्षिपति ॥ यच्चोक्तमित्यादिना ॥ ॥ अनादीति ॥ शुक्तिरूप्यं उत्तरज्ञाननिवर्त्यज्ञानं वा, ज्ञानप्रागभावं आत्मानं च व्यावर्तयितुं क्रमेण विशेषणानि। चैतन्याविद्यासम्बन्धं वारयितुं ज्ञानपदम्। तस्य च न ज्ञाननिवर्त्यत्वं, किं तु ज्ञानजन्याज्ञाननिवृत्तिनिवर्त्यत्वमिति भावः ॥ भ्रमेति ॥ अन्तःकरणवृत्तेरभ्रमत्वात्तदुपादानेऽन्तः-करणे नातिव्याप्तिरित्यर्थः ॥ अहमज्ञ इति ॥ एतस्य अन्यविषयकज्ञानाभावविषयत्वं व्युदसितुमन्यं न जानामीत्युदाहृतम्। एतस्याप्यन्यार्थज्ञानाभावविषयत्वं व्युदसितुं त्वदुक्तमर्थं न जानामीत्युक्तम्। एतस्यापि तदुक्तार्थसंख्याज्ञानाभावविषयत्वं व्युदसितुं संख्यां न जानामि शास्त्रार्थं न जानामीत्याद्युदाहर्तव्यम्। संख्यायां संख्यान्तराभावात्संख्यां न जानामीत्युक्तेः। संख्याज्ञाना-भावविषयत्वं विरुद्धम्। ननु तत्रापि परोक्षतया ज्ञातेऽपरोक्षज्ञानाभावाभिप्रायेण व्यपदेशोपपत्तिरितिशङ्कानिरासाय शास्त्रार्थं न जानामीत्युदाहृतम्। नित्यपरोक्षापूर्वादौ तथा व्यपदेशस्यापरोक्षज्ञानाभावाभिप्रायत्वानुपपत्तिरिति भावः।**

**॥ प्रमाणज्ञानमिति ॥ अत्र विवादगोचरापन्नं प्रमाणज्ञानमिति विवरणपाठानुसारेण पठनीयम्। धर्म्यंशप्रमाणवृत्तेरिदमित्याकाराया अज्ञानानिवर्तिकाया अपक्षत्वाय विवादेति विशेषणम्। रूप्यादिज्ञानेऽबाधाय प्रमाणपदम् ॥ स्वोत्पादकेति ॥ एतच्चोपलक्षाम्। उत्तरज्ञानव्यावर्त्य-**

(तरङ्गिणी)

पूर्वज्ञानवारणार्थमपि। मिथ्याज्ञानव्यावृत्त्यर्थं वस्त्वन्तरेति। हेतौ द्वितीयादिज्ञाने व्यभिचारवारणायाप्रकाशितेति। दृष्टान्त सौरालोकदेशस्थप्रभाव्यावृत्त्यर्थमन्धकारेति। द्वितीयादि-प्रभाव्यावृत्त्यर्थं प्रथमेति विशेषणमित्याहुः ॥ चैत्रगतेति॥ एतच्च प्रमाप्रागभावविशेषणम्। न प्रमायाः। तस्या अन्तःकरणसमवेतत्वेन चैत्रगतत्वाभावात्। चैत्रसम्बन्धित्वमात्रविवक्षायां तु मैत्रनिष्ठचैत्रविषयकप्रमाप्रागभावातिरिक्तघटप्रमाप्रागभावनिवर्तकत्वेन चैत्रप्रमायां सिद्धसाधनात्। पक्षे प्रमाप्रागभावातिरिक्तज्ञाननिवर्त्यानाद्यज्ञानमादाय साध्यसिद्धिः। दृष्टान्ते तु चैत्रप्रमाप्रागभाव-भिन्नमैत्रप्रमाप्रागभावमादाय साध्यसिद्धिरित्यर्थः ॥ एतज्जनकेति॥ पक्षीभूतभ्रमस्य यदुपादानं तस्य पक्षीभूतभ्रमजनकतया तदतिरिक्तत्वस्य तदुपादाने बाधितत्वेन तदुपादानेऽबाध्यातिरिक्तत्वसिद्ध्या पक्षीभूतभ्रमेऽबाध्यातिरिक्ताविद्योपादानकत्वं सिध्यति। दृष्टान्तीभूतभ्रमे तु पक्षीभूतभ्रमजनकाति-रिक्तोपादानकत्वमादाय साध्यसिद्धिरित्यर्थः ॥ तम आसीदिति॥ तमोनीहारादिशब्दा अविद्या-वाचकाः। तन्मिथ्यात्वं तु नासदासीदित्यादिना सदसती निषिध्य तम आसीदित्युच्यमानं तमोऽविद्याख्यं सदसद्विलक्षणमुच्यत इत्यर्थात्सिद्धम्।

॥ अव्याप्तिरिति॥ शुक्त्याद्यज्ञानेष्विति शेषः। तेषां सादित्वादित्यर्थः। ननु रूप्योपादानाज्ञानमप्यनादिचैतन्याश्रितत्वादनाद्येव वाच्यम्। शुक्त्यादिकं तु तदवच्छेदकमिति न तत्राव्याप्तिरिति तत्राऽह ॥ सादीति॥ रूप्यस्य शुद्धचैतन्यावरकाज्ञानोपादेयत्वे तदज्ञानस्य शुक्तिज्ञानान्निवृत्त्यभ्युपगमे सद्यो मोक्षापातः। अनभ्युपगमे रूप्यादेः सविलासाविद्यानिवृत्तिरूपबाधो न स्यात्। ज्ञानस्याज्ञाननिवर्तनद्वारेणैवान्यनिवर्तकतयाऽज्ञानमनिवर्त्य रूप्यनिवर्तकत्वा-सम्भवश्चेत्यर्थः ॥ उक्तत्वादिति॥ प्रतिकर्मव्यवस्थाभङ्ग इति शेषः ॥ आरोपितेति॥ अत्यन्तं वैजात्येनाभावं प्रति भावस्यानुपादानत्वादित्यर्थः। अनादित्वाभावश्चकारार्थः। ननु सर्वथा साजात्ये वैजात्ये चोपादानोपादेयभावादर्शनेन तथा साजात्यं वैजात्यं वा नोपपादयितुं शक्यम्। कार्याकारकारणाकारतया सति सादृश्ये कार्यकारणभावस्यासम्भवः स्यादित्यत आह ॥ अभावस्येति॥ सत्यासत्ययोरपि किञ्चित्सादृश्यमस्तीति भावः। ननु सत्यस्यासत्योपादानत्वे सत्यस्य निवृत्त्यसम्भवेन तदुपादेयस्यासत्यस्यापि निवृत्तिर्न स्यात्। सत्यस्यापरिणामित्वाच्च। भावस्याभावोपादानत्वे तु न किञ्चिद्बाधकमिति। मैवम्। समवायिकारणनाशाद्वा, विरोधिसन्निपाताद्वा कार्यनाशदर्शनात्। सत्यस्य दुग्धादेः परिणामदर्शनाच्च ॥ ज्ञानादिति॥ त्वद्रीत्येति शेषः।

(तरङ्गिणी)

न केवलमनादित्वाभावोऽपि तु ज्ञाननिवर्त्यत्वमपि नास्तीत्याह ॥शुद्धमिति॥ स्वरूपसद्वृत्त्युपहितस्यावृत्तिविषयत्वात् शुद्धस्य वृत्त्यविषयत्वं, तदज्ञानस्य ज्ञाननिवर्त्यत्वं चोपपन्नमिति भावः। तदेवाह ॥न हीति॥ उपाधिरूपया वृत्त्या स्वरूपसत्याऽपि स्वोपधेये शुद्धे ब्रह्मणि किञ्चिन्मालिन्यकरणे तस्य शुद्धत्वाभावेन तद्विषयकवृत्तेः शुद्धब्रह्मज्ञानत्वाभावेन तया शुद्धब्रह्माज्ञाननिवृत्त्ययोगः। किञ्चिन्मालिन्यकरणे तस्याशुद्धत्वेन वृत्त्यविषयत्वान्न तदज्ञाननिवृत्तिः। न ह्यशुद्धब्रह्मज्ञानेन शुद्धब्रह्माज्ञाननिवृत्तिरित्यर्थः। ननु जीवन्मुक्त्यनुवृत्तस्य सोपाधिकभ्रमोपादानस्य चाज्ञानस्य प्रारब्धकर्मभिरुपाधिना च प्रतिबन्धनान्न पूर्वतनेन साक्षात्कारेण निवृत्तिः। न हि प्रतिबन्धदशायां कार्याजनकमकारणं भवतीत्याशङ्क्य निराकरोति ॥न चेति॥ एतज्जीवन्मुक्त्यनुवृत्ताज्ञानस्याप्युपलक्षणम् ॥उपाधीति॥ आरब्धकर्मणामप्युपलक्षणम्। ननु प्रतिबन्धकाभावस्य कार्यमात्रहेतुत्वात् ज्ञाने सत्यप्यज्ञानवृत्त्या सोऽपेक्षित इत्यत आह ॥न हीति॥ अज्ञाननिवृत्तिस्थले प्रतिबन्धकाभावस्य ज्ञानस्वरूपमात्रपर्यवसायित्वादिति भावः। नन्वावरणशक्तेर्न जानामीति व्यवहारहेतोरपगमान्न तथा व्यवहार इति चेन्न। शक्तेरज्ञानातिरिक्तत्वे तत्रैवैतल्लक्षणातिव्याप्तिः। अज्ञानरूपत्वे तन्निवृत्त्ययोगात् ॥चैतन्येति॥ तस्यानादित्वादिति भावः। न च तस्य ज्ञाननिवर्त्यत्वं नास्तीत्युक्तमिति वाच्यम्। सर्वस्य चैतन्यान्यस्य ज्ञाननिवर्त्यत्वमिति परमसिद्धान्तेनास्याभिधानात् ॥अनादीति॥ तद्व्यावर्त्यस्य घटादेः साक्षात् ज्ञाननिवर्त्यत्वाभावादित्यर्थः। न चोत्तरज्ञाननिवर्त्यपूर्वपूर्वज्ञानं वारयितुमनादिपदमिति वाच्यम्। निवर्त्यमात्रस्य ज्ञाननिवर्त्यतया ज्ञानपदस्याव्यावर्तकतया ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्यावश्यवाच्यत्वे तत एव तद्वारणात्। न चैवं भावपदमपि व्यर्थमिति वाच्यम्। इष्टापत्तेः। ननु लक्षणद्वये तात्पर्यान्न कोऽपि दोष इति तत्राह ॥असम्भवश्चेति॥ ननु कल्पितत्वमात्रं न दोषजन्यधीमात्रशरीरत्वे सादित्वे वा तन्त्रम्। किं तु प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वं वा प्रागभावप्रतियोगित्वं वा। न च तत्प्रकृतेऽस्तीत्यत आह ॥उक्तत्वादिति॥ कल्पितत्वेन प्रागभावप्रतियोगित्वादेरप्यापाद्यमानत्वादित्युक्तत्वादित्यर्थः ॥ज्ञानेति॥ न चात्रानुमानेऽजामेकां अनादिमाययेत्यादिशास्त्रविरोधः। आद्यस्य प्रकृतिविषयत्वात्। द्वितीयस्य भगवदिच्छाविषयत्वात् ॥व्यतिरेकेति॥ उपाधिव्यतिरेकवति पक्षे साध्यव्यतिरेकस्य सन्दिग्धत्वादित्यर्थः। भावत्वमपि नोपाधिः। प्रध्वंसे साध्याव्याप्तेः।

प्रकारान्तरेणासम्भवमाह ॥त्वन्मत इति॥ ननु भावशब्देनाभाववैलक्षण्यमात्रं विवक्षितम्। किञ्चोक्तस्य सादित्वसाधकहेतोरनादित्वसाधकेन ज्ञाननिवर्त्यत्वे सति भावविलक्षणत्वेन हेतुना

(तरङ्गिणी)

सत्प्रतिपक्ष इत्यत आह ॥भावेति॥ परस्परविरोधादित्यर्थः। तथा च स्वरूपासिद्ध्या न तुल्यबलत्वमत एवोक्तलक्षणस्यासम्भवोऽपीति भावः। तृतीयप्रकारसिद्धौ न तयोर्विरोध इति त्वन्योन्याश्रयान्निरस्तम् ॥अनिवर्त्यत्वमिति॥ तथा चासम्भव इत्यर्थः ॥अत्यन्ताभाव इति॥ प्रतिपन्नोपाधिस्थनिषेध इत्यर्थः। अधिकरणस्वरूपातिरिक्तस्यात्यन्ताभावस्यानङ्गीकारे नेति नेतीति श्रौतनिषेधस्य ब्रह्मस्वरूपमात्रबोधनपर्यवसानेन परस्येष्टापत्तिरिति भावः ॥असतीति॥ न चाभावविलक्षणत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वमिति वाच्यम्। असत्यभाववैलक्षण्यस्यापि सत्त्वादिति भावः ॥आत्मनीति॥ तथा च पक्षे नोपाधिविरह इत्यर्थः। उक्तानुमाने विरोध्यसन्निपातमुपाधिं शङ्कते ॥यदत्रेत्यादिना॥ ॥सादित्वमिति॥ ध्वंसप्रागभावयोर्व्यभिचारात्। भावत्वविशेषणेऽव्यभिचारेऽपि अभावे प्रयोजकान्तरकल्पनापत्तिः। अभावनिवृत्तिप्रयोजकेनानादिभावत्वेन भावविलक्षणाविद्याया अनिवृत्त्यापादनायोगश्चेति भावः ॥अनादिभावत्वेनेति॥ तथा च पक्षे नोपाधिविरह इत्यर्थः ॥विशेषेति॥ प्रागभावादिसाधारण्यादिति भावः।

परोक्तानुमाने व्यभिचारमाह ॥भाववैलक्षण्यादिति॥ ॥अत्यन्ताभावस्येति॥ अत्यन्ताभावादेर्निवर्त्यत्वे प्रतियोगिसत्त्वापत्तिरिति भावः। नन्वज्ञानस्यानिवर्त्यत्वानुमाने तन्निवृत्तिबोधकागमबाध इत्यत आह ॥अविद्येति॥ अज्ञाननिवृत्तिबोधकागमवशात् भावत्वाद्यनन्तर्भावेनाज्ञानलक्षणं वाच्यम्। इतरथा तन्निवृत्तिरूपमोक्षासिद्धिः स्यादिति भावः ॥प्रतीतिमात्रेति॥ ननु सुखादेः शुक्तिरूप्यादेश्च स्वभासके साक्षिणि सत्येव निवृत्त्यभ्युपगमेन साक्षिभास्यानां यावत्साक्षिसत्त्वमवस्थानं नेष्यते। किञ्च न केवलचिन्मात्रं साक्षि। किन्तु अविद्यावृत्त्युपहितम्। तथा चास्थिराविद्यावृत्त्युपहितस्य साक्षिणोऽप्यस्थिरत्वेन तत्सत्त्वपर्यंतमवस्थानेऽप्यविद्यादेर्निवृत्तिरुपपद्यते। मैवम्। सुखादेरक्षणिकत्वस्य दुःखादिसमानकालीनत्वस्य च त्वयाङ्गीकृतत्वेन तत्प्रतीतिनिवृत्तिमन्तरेण तन्निवर्तकाभावेन यावत्प्रतीतिसत्त्वमवश्यं सुखादेरवस्थानं वाच्यम्। तदिदमुक्तम् प्रतीतिमात्रशरीरस्येति। अविद्यावृत्त्युपहितचितःसाक्षित्वेऽविद्यावृत्तेर्दोषजन्यत्वेन सुखादिज्ञाने व्यवहारकालेऽपि भ्रमत्वापत्तिः। वृत्त्यनुपधानदशायामविद्यादेः शुक्तिरूप्यवदसत्त्वापातच्च। न च सादिपदार्थ एवायं नियम इति वाच्यम्। नियामकाभावात्। अविद्यावृत्तेरपि वृत्त्यन्तरप्रतिबिम्बितचिद्वेद्यत्वेऽनवस्थादिकं च। विस्तृतं चैतदविद्याप्रतीतिभङ्गे ॥अज्ञानस्येति॥ मिथ्याभूते रूप्यादौ ज्ञाननिवर्त्यत्वाननुभवात्। न हि ज्ञानेन रूप्यं नष्टमिति प्रतीतिरित्यर्थः ॥उक्तत्वादिति॥ ज्ञाननिवर्त्यत्वभङ्ग इति शेषः।

(कण्टकोद्धारः)
तदभिप्रायेण अहमज्ञ इत्यादेः प्रत्यक्षत्वमुक्तमिति सामान्यविशेषभावाच्च। समुच्चयोऽप्युपपद्यत इति भावः ॥ तथा प्रमाणज्ञानमिति॥ अत्र यद्यपि उक्तलक्षणविशिष्टमज्ञानं न विषयः, ज्ञाननिवर्त्यत्वस्य व्यापककोटि प्रवेशेऽपि अनादित्वभावत्वयोरप्रवेशात्। तथापि ज्ञाननिवर्त्यत्वसिद्धौ साक्षाज्ज्ञाननिवर्त्यत्वेन हेतुना प्रागभावदृष्टान्तेनानादित्वस्योपादानत्वादिनाभावत्वस्य सिद्धिरिति।

यद्वा आवरणस्य सादित्वे तत्कारणपरम्परयानवस्था स्यात्। अनादित्वे च लाघवमिति। लाघवप्रमाणोपस्थितमनादित्वं कर्त्रैकत्वमिव परमाणुनिरवयत्वमिव च अनुमितावेव विषयो लाघवस्य प्रमाण मात्रसहकारित्वादिति आवरणत्वादेव भावत्वसिद्धिः। अन्धकारस्यापि भावत्वात् न तत्र व्यभिचारः। अत्राप्रकाशितार्थप्रकाशकत्वं पक्षतावच्छेदककोटिनिविष्टम्। तेन द्वितीयादिज्ञानेन बाधासिद्धी। प्रथमोत्पन्नप्रमायाः पक्षीकरणाच्च ॥ अज्ञातत्वं चेति॥

नन्वज्ञातत्वमज्ञानविषयत्वम्। तद्व्युदसनं नामाज्ञानव्युदसनमेव। तथा चेदं विशेषणमज्ञानसिद्धिविरोधीति चेन्न। ज्ञातो घट इति प्रतीत्यन्यथानुपपत्त्या ज्ञातत्वमिव अज्ञातो घट इति प्रतीत्यन्यथानुपपत्त्याज्ञातत्वमपि विषयनिष्ठं भिन्नं नाज्ञानविषयत्वम्। अन्यथा ज्ञातत्वमपि ज्ञानविषयत्वमेव स्यात्। तथा च विषयनिष्ठस्याज्ञातत्वस्य भिन्नत्वात्तद्व्यावृत्त्यर्थं स्वदेशगतत्वं विशेषणं युक्तम् ।

नन्वज्ञानं प्रमाणदेशगतं कथं प्रमाणज्ञानस्यान्तःकरणाश्रितत्वादज्ञानस्य च चिन्मात्राद्याश्रितत्वादिति चेन्न। प्रमाणज्ञानस्य ज्ञानस्य चैकचिन्मात्राध्यासेनाधिष्ठानैक्यादेकदेशगतत्वम्। न चैवं विषयगताज्ञातत्वस्यापि तत्रैवाध्यासात्स्वदेशगतपदेन कथं तद्व्यावृत्तिरिति वाच्यम्। तस्य विषयावच्छिन्ने चैतन्येऽध्यासेन भिन्नदेशगतत्वेन भवति तद्व्यावृत्तिरिति। अत्रानुमाने विपक्षाविशेषदूषणावसर एव प्रपञ्चयिष्याम इति नेह मन्यते ॥ तथेति॥ अत्र चानुमानेऽनादित्वज्ञाननिवर्त्यत्वे सिध्यतः। भावत्वमात्रमनुमानान्तरेण साध्यमिति पूर्वापेक्षया लाघवम् ॥ विगीत इति॥ अत्र भ्रमोपादानत्वविशिष्टमज्ञानं सिध्यति। अभावभ्रमस्यापि सोपादानत्वान्न तत्र व्यभिचारः। न चैतन्मते शुक्तिरजतभ्रमे संमतेऽबाध्यातिरिक्तोपादानत्वस्यातत्त्ववादिमतेऽभावाद्दृष्टान्तः साध्यविकलः। भ्रममात्र आत्मनः अन्तः करणस्य वा संबाध्यस्यैवोपादानत्वात् इति वाच्यम्। तत्र भ्रमस्य मिथ्यात्वं प्रसाध्य वक्ष्यमाणयार्थापत्त्या मिथ्याभूतमेवोपादानं स्वीकर्तव्यमिति सिद्धम्। कृत्वैतदनुमानप्रयोग इति न काप्यनुपपत्तिरिति।

यद्वा आत्मनि व्यतिरेकव्याप्तिरिति। ननु प्रत्यक्षेण नाज्ञानसिद्धिस्तत्र। ज्ञानाभावस्यैव विषयत्वात्। क्लृप्तेन ज्ञानाभावेन प्रतीतिव्यवहारयोरुपपत्तावतिरिक्तकल्पने गौरवादित्याशङ्क्य निषेधति ॥ न चेति॥ ॥ अज्ञाते त्विति॥ तथा च न ज्ञानाभावविषयत्वेनोपपत्तिरिति भावः ॥ उक्तत्वादिति॥ प्रतिकर्मव्यवस्थाभङ्ग इति शेषः। आवरणस्य चाव्रियमाणेन व्याप्तत्वात्तदभावे तदसम्भवादिति भावः। न चेश्वरज्ञानस्य सादिघटादिविषयत्वेऽपि अनादित्वं, तथा प्रकृते शुक्त्यादेः सादित्वेऽप्यज्ञानमनादि किं न स्यादिति वाच्यम्। तत्रानादिविषयान्तरसम्भवात्। सविषयकत्वादेः अज्ञानस्वभावत्वात् न च प्रकृतेऽप्यज्ञानस्यैक्याद्विषयान्तरं

(तरङ्गिणी)

॥ अभ्रमेति ॥ न च योग्यत्वं विवक्षितं अभ्रमपूर्वकप्रमानिवर्त्याज्ञाने सहकारिवैकल्यात् कार्यानुत्पादकेऽपि तद्योग्यताऽस्त्येवेति वाच्यम्। योग्यतावच्छेदकापरिचये तदग्रहात्। न चाद्यलक्षणमेव तदवच्छेदकम्। तस्य निरस्तत्वादिति भावः ॥ गौरवादिति ॥ एतच्चोपलक्षणम्। भावविलक्षणेऽभाववैलक्षण्यस्याप्यभाव इत्युक्तम्। यत्त्वन्वयिकारणत्वमुपादानत्वे तन्त्रमिति। तन्न। तत्र किमन्वयित्वम्। न भावत्वम्। असिद्धेः। नाप्ययुतसिद्धत्वम्। अज्ञानेऽसिद्धेः। भ्रमं विविच्य तस्याज्ञानोपादानकत्वं दूषयति ॥ अपि चेति ॥ अर्थस्येति ॥ नाज्ञानमुपादानमित्यनेनान्वयः ॥ अन्यथेति ॥ भावविलक्षणस्याप्युपादानत्व इत्यर्थः ॥ तत्वज्ञानेति ॥ न च प्रागभावस्य प्रतियोगिमात्रजनकत्वेन न भ्रमं प्रति जनकत्वं। नतरां चोपादानत्वमिति वाच्यम्। धर्मिकल्पनागौरवेण क्लृप्तप्रागभाव एव तत्कल्पनौचित्यात्। न चैकाविद्यातिरिक्तानन्तप्रागभावे मानाभावः। उत्पन्नस्योत्पत्त्यदर्शनेन तस्यावश्यकत्वात्। तस्याभावविलक्षणत्वाभावाच्च ॥ यद्यदनुविद्धेति ॥ न च रूपं घट इति प्रतीत्यभावान्नायं नियम इति वाच्यम्। शुक्लो घटश्चलति घट इति विशेषानुवेधस्य सत्त्वात्। न च प्रकृत्याद्यनुवेधः परमतेऽपि नास्तीति प्रकृत्युपादानकत्वमपि न स्यादिति वाच्यम्। मृद्घट इत्यादेरेव तदनुवेधात्। भ्रान्तेस्तु न केनापि रूपेणाज्ञानानुवेधः सम्भवतीति भावः ॥ भावव्याप्य इतीति ॥ अभावाभावो भाव इति मते ज्ञानप्रागभावनिवृत्तेः ज्ञानरूपाया न ज्ञानजन्यत्वमिति ज्ञानजन्यनिवृत्तिप्रतियोगित्वरूपं ज्ञाननिवर्त्यत्वं ज्ञानप्रागभावे नास्ति। प्रतियोगिव्याप्या प्रतियोगिभिन्ना प्रतियोगिजन्या प्रागभावस्य निवृत्तिरिति मते प्रागभावस्य साक्षाज्ज्ञाने निवर्त्यत्वमस्तीति तत्रातिव्याप्तिरित्यर्थः ॥ अन्यथेति ॥ प्रागभावस्य ज्ञाननिवर्त्यत्वाभावे स्वनिवर्त्येति विशेषणेनैव तद्व्यावृत्तिसिद्धौ स्वप्रागभावव्यतिरिक्तेत्याद्यविशेषणमविद्यानुमाने व्यर्थं स्यादित्यर्थः।

व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि।
न्यायामृततरङ्गिण्यामविद्यालक्षणक्षतिः ॥
॥ अविद्यालक्षणभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

किंच लक्षणप्रमाणाभावाच्चाविद्या गगनकुसुमायमानाऽतस्तन्मयत्वं प्रपञ्चस्यासम्भवीति वक्तुं परोक्तं लक्षणं प्रमाणं च दूषणायानुवदति ॥ यच्चेति ॥ तत्रानुभव इत्यन्तेन प्रत्यक्षमुक्तम्। यद्यपि न जानामीत्यादिकमपि साक्ष्यनुभवरूपं परामर्शसिद्धसौषुप्तिकानुभवोऽपि साक्षिप्रत्यक्षमेव, तथा च कस्यचित् प्रत्यक्षशब्देन कस्यचिदनुभवशब्देनोपादानमयुक्तम्। तथाप्यहमज्ञ इत्यादेः प्रत्यक्षत्वं तार्किकादिसिद्धम् न सौषुप्तिकानुभवस्येति

(कण्टकोद्धारः)

स्यादिति वाच्यम्। एकाज्ञानपक्षे शुक्तिज्ञानेन तन्नाशो सद्यो मोक्षापत्त्या प्रतिविषयमज्ञानमनेकमिति वाच्यम्। तथा चोक्तदोषः। न च चैतन्याश्रितत्वादनाद्येवाविद्या। उदीच्यशुक्त्यादिकं तु तदवच्छेदकमिति न तत्राव्याप्तिरिति वाच्यम्। शुद्धस्याश्रयत्वे विषयत्वे चैतन्यमज्ञं चैतन्यमज्ञातमिति प्रतीत्यापत्त्या अहमज्ञो शुक्तिर्नज्ञातेति प्रतीत्यनापत्त्या च विशिष्टस्य तत्त्वे तस्य ब्रह्मान्यत्वेन सादित्वात् तदाश्रिततद्विषयाज्ञानस्यानादित्वायोगात्। चैतन्यमात्राश्रयत्वे च शुक्तिज्ञानेन तस्य निवृत्तौ सद्योमोक्षापाताच्च। तथा चाव्याप्तिः सुदृढेति भावः ॥आरोपितेति॥ न च भावपदेन अभावविलक्षणत्वं विवक्षितम्। आरोपिताभावोपादानाज्ञाने तु अभावविलक्षणत्वस्वीकारात् न तत्राव्याप्तिरिति वाच्यम्। अभावविलक्षणस्यारोपिताभावोपादानत्वानुपपत्तेः। कार्यस्य सजातीयोपादानकत्वनियमात्। अन्यथा सत्योपादानकत्वापत्तेः। न च सर्वथा साम्ये उपादानोपादेय भावानुपपत्तिरिति वाच्यम्। आकारभेदेऽप्यभावविलक्षणस्योपादानत्वानुपपत्तेः। अन्यथा मृद्विलक्षणस्य घटोपादानत्वानुपपत्तेः। न च सत्योपादानकत्वे ज्ञानान्निवृत्तिर्न स्यात्। उपादानद्वारैवोपादेयस्य निवृत्तेः। सत्यस्य चानिवृत्तेरिति वाच्यम्। सत्यस्यापि निवृत्तेः प्रागेव समर्थनात्। मिथ्याभूतत्वे परं निवृत्तिर्न युज्यते। न हि शुक्तिरजतस्य निवृत्तिरनुभूयत इत्युक्तम्। उपादाननिवृत्तिं विनापि द्व्यणुकादिवन्निवृत्तिसम्भवाच्च। तथा चारोपिताभावोपादानाज्ञाने भावत्वमवश्यं स्वीकर्तव्यमित्यव्याप्तिरेव ।

किंचोपादानत्वस्य भावत्वनियतत्वात्कथं तदभावोपादानत्वम्? अन्यथाऽभावस्याप्युपादानत्वं स्यात्। न चाभावविलक्षणत्वमेव तत्र तन्त्रम्। गौरवात्। भावत्वाभावे भावविलक्षणत्वानुपपत्तेश्चेत्यलम् ॥शुद्धं ब्रह्मेति॥ न च स्वरूपसदुपाधिमत्तद्विषयज्ञाननिवर्त्यत्वस्य तन्मते भावान्नोक्तदोष इति वाच्यम्। वृत्तिव्याप्यत्वाभावे ज्ञानस्य तद्विषयकत्वानुपपत्तेः ब्रह्मणो वृत्तिव्याप्यत्वाभावे वेदान्तजन्यज्ञानस्य तत्त्वानुपपत्तेश्च। उपपादितं चैतत् दृश्यत्वभङ्ग इति नेह तन्यते ॥तस्येति॥ उपलक्षणं चैतत्। जीवन्मुक्तौ निरुपाधिकभ्रमो न स्यात्। तदभावे च भिक्षाटनाद्यर्थं प्रवृत्त्यभावापत्तिरिति द्रष्टव्यम् ॥न हीति॥ न च न जानामीति बुद्धावज्ञानगतावरणशक्तेः प्रयोजकत्वात्साक्षात्कारेण च तस्य निवृत्तत्वात् न जानामीति व्यवहारो न भवतीति वाच्यम्। आवरणशक्तेरप्यज्ञानकार्यत्वेनाज्ञानमनिवर्त्य तन्निवर्तकत्वायोगात्। आवरण-शक्तेरज्ञानोपादानकत्वाभावे च ज्ञानान्निवृत्तिर्न स्यात्। ज्ञानस्याज्ञानतदुपादेयनिवृत्तावेव सामर्थ्यात्। न चावरणशक्तिरज्ञानमेवेति वाच्यम्। तथात्वेऽज्ञानस्य निवृत्तत्वात्संसारोपलम्भो न स्यात्। न चावरणशक्तिरज्ञानांश इति वाच्यम्। अज्ञानस्य निरंशत्वात्। तस्मादज्ञानानिवृत्तौ न जानामीति व्यवहारः स्यादिति साधूक्तम्। एवं प्रत्येकविशेषणाभावप्रयुक्तामव्याप्तिमुक्त्वातिव्याप्तिमाह ॥चैतन्येति॥ साक्षादिति च शब्दो भिन्नक्रमः। तथा च अनादिपदवैयर्थ्यमतिव्याप्तिश्चेत्यर्थः। उपलक्षणं चैतत्। भावपदवैयर्थ्यं च द्रष्टव्यम्। न चाविद्याचैतन्यसम्बन्धस्याज्ञानमयत्वात्कथं साक्षाज्ज्ञाननिवर्त्यत्वम्? अज्ञाननिवृत्तिद्वारैव तस्य ज्ञाननिवर्त्य-त्वादिति वाच्यम्। अविद्यासम्बन्धस्यानादित्वेनाज्ञानमयत्वानुपपत्तेः। अज्ञानमयत्वं ह्यज्ञानोपादानकत्वम्। अन्यस्यानिर्वचनात्। तथा च कथमनादित्वम्? अन्यथा ज्ञानस्याप्यज्ञानोपादानकत्वापत्तेः। तथा च तन्निवर्तकत्वमपि न साक्षादित्यसम्भवापत्तेः। न चोत्तरज्ञाननिवर्त्यपूर्वज्ञानेऽतिव्याप्तिनिराकरणार्थमनादिपदमिति वाच्यम्। तस्याप्यज्ञानमयत्वेन साक्षाज्ज्ञाननिवर्त्यत्त्वाभावस्य त्वया वक्तव्यत्वात्। न हि

(कण्टकोद्धारः)
परप्रक्रियालक्षणप्रणयनमुचितम्। ब्रह्मातिरिक्तस्य सर्वस्यैवाज्ञानोपादानकत्वात्। न च प्रागभावेऽतिव्याप्तिवारणार्थं भावपदमिति वाच्यम्। तत्रोक्तरीत्या ज्ञाननिवर्त्यत्वाभावादेवातिव्याप्त्यभावात्।

किं च ज्ञाननिवर्त्यत्वं हि ज्ञानजन्यनिवृत्तिप्रतियोगित्वम्। न चैतत्प्रागभावेऽस्ति। ज्ञानस्यैव प्रागभावनिवृत्तित्वेन तज्ज्ञानजन्यनिवृत्तेरभावात्। विषयगताज्ञातत्वेऽप्यतिव्याप्तिश्च इति द्रष्टव्यम्। विषयगताज्ञातत्त्वं चावश्यमङ्गीकर्तव्यमित्युक्तम्॥ कल्पितत्त्वेनेति॥ ननु न कल्पितत्त्वमात्रं दोषजन्यधीमात्रशरीरत्वे सादित्वे प्रयोजकम्। किन्तु प्रतिभाससमानकालीनकल्पकवत्वम्, सादिकल्पकवत्त्वं वा अविद्यानिवृत्त्यप्रयुक्तनिवृत्तिप्रतियोगित्वं वा तत्रम्। न च तत्प्रकृतेऽस्ति। तथा चानादित्वसम्भवान्नासम्भव इति चेन्मैवम्। लाघवात्कल्पितत्त्वस्यैव दोषजन्यप्रतिभासशरीरत्वे तत्वात्। दोषाजन्यस्यापि कल्पितत्वे ब्रह्मणोऽपि कल्पितत्त्वापत्तेः। उक्तप्रयोजकत्रयस्याविद्यादावपि सत्त्वाच्च। शुक्तिरजदातौ कल्पकस्य सादित्वं च शरीराद्यपेक्षया। तच्चाविद्याकल्पकेऽप्यस्ति। स्वरूपतस्तु शुक्तिरजतादिकल्पकेऽपि नास्ति। अविद्याया अपि अविद्यानिवृत्त्यप्रयुक्तनिवृत्तिप्रतियोगित्वाच्च। न ह्यविद्यानिवृत्तिरविद्यानिवृत्तिप्रयुक्ता। आत्माश्रयात्। आद्यं त्वविद्यायां स्पष्टम्। तत्कल्पकस्य प्रतिभाससमानकालीनत्वात्। तत्प्रतिभासकाल एव वृत्तित्वं तु शुक्तिरजतादिकल्पकेऽपि नास्ति। तस्मात्कल्पितत्त्वस्यैव सादित्वप्रयोजकत्वादसम्भवः सुस्थ इति ॥ज्ञाननिवर्त्त्यस्येति॥ न चाविद्यायाः सिद्धौ बाधः। तस्या अनादित्वेनैव सिद्धत्वात्। तदसिद्धौ पक्षासिद्धेः कथं सादित्वसाधनमिति वाच्यम्। जगदुपादानत्वेन पक्षत्वात्। न च तथापि भवन्मते बाधासिद्धी स्याताम्। भवद्भिर्जगदुपादानस्य सादित्व ज्ञाननिवर्त्त्यत्वयोरनङ्गीकारादिति वाच्यम्। जगदुपादानं यदि ज्ञाननिवर्त्त्यत्वे सति अभावविलक्षणं स्यात् सादि स्यादित्यापादनमात्रस्याभिप्रेतत्वात्। अनेन ''अजामेकाम्'' इत्यादिश्रुतिबाधोऽप्यपास्तः। तर्के तस्यानुगुणत्वात्। न च ज्ञाननिवर्त्त्यत्वे सति भाव विलक्षणत्वेन सत्प्रतिपक्ष इति वाच्यम्। अभावविलक्षणत्वेन भावत्वेनासिद्धेः। परस्परविरुद्धयोरन्यतरप्रतिक्षेपेऽन्यतरसत्तानियमात्। न च गोत्वाश्वत्वयोः व्यभिचारः। तृतीयप्रकाराभावे सतीति विशेषणात्। न चासिद्धिः। प्रकृतेऽप्युभयत्र बाधकात् तृतीयप्रकारकल्पनादिति वाच्यम्। एवं हि तृतीयप्रकारोऽपि न स्यात्। तत्रापि बाधकानामुक्तत्वात्। वक्ष्यमाणत्वाच्च। न च तत्र कथञ्चित्परिहारं प्रकल्प्य तृतीयः प्रकारः कल्प्यत इति वाच्यम्। एवं हि भावत्वाभवत्वयोरेव प्रामाणिकत्वात्। तत्रैव बाधकपरिहारः कल्प्यते। लाघवात् भावत्वे बाधकाभावाच्च। न चानिर्वचनमेव बाधकम्। तस्य ब्रह्मण्यपि साम्यात्। भावत्वादेरन्यत्र निरुक्तत्वाच्च। तथा चासिद्धया न सत्प्रतिपक्षत्वम्। ब्रह्मत्वस्योपाधित्वाच्च। न च प्रागभावे साध्याव्यापकत्वम्। अभावविलक्षणत्व-रूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वसम्भवात्। अत एव भावत्वोपाधिरपि परास्तः। साधनव्यापकत्वादेव। ननु अज्ञानसम्बन्धे सन्दिग्धैनैकान्तिकतेत्यत आह ॥अज्ञानेति॥ ननु पक्षतुल्यत्वेऽपि सन्दिग्धैनैकान्तिकतायाः भवद्भिरुपपादितत्वात्कथमत्र तदभाव इति चेन्न। अत्र तमादायापि पक्षत्वासम्भवात्। यत्रासम्भवस्तत्रैव सन्दिग्धैनैकान्तिकतया उक्तत्वादित्याशयात् ॥पक्षेतरत्वादिति॥ न च पक्षेतरत्वं नाम पक्षमात्रव्यावर्तक-विशेषणवत्वम्। प्रकृते च तद् विशेषणाभावेऽप्रसिद्धिरेवेति वाच्यम्। अनधिकरणत्वं यत्किञ्चिदनधिकरणत्वं सर्वानधिकरणत्वं वा प्रसिद्धमेवेति पक्षेतरत्वमेव। ॥अवच्छिन्नेति॥ सादिशुक्त्याद्यवच्छिन्न इत्यर्थः। तत्र

(कण्टकोद्धारः)

सादित्वस्योपपादितत्वादिति भावः ॥ व्यतिरेकेति॥ तथा च सत्प्रतिपक्षोत्थापकत्वं व्यभिचारोन्नायकत्वं वा न सम्भवति। उभयोरपि उपाधिव्यतिरेकसिद्ध्यधीनत्वादिति भावः ॥ त्वन्मत इति॥ तथा च भावत्वाभावादप्यसम्भव इति भावः। ननु भावत्वमभावविलक्षणत्वमतो नोक्तदोष इत्यत आह ॥ भावविलक्षणस्येति॥ तथाप्यसम्भव एवेति भावः। यथा चैतत्तथोपपादितम्। ज्ञाननिवर्त्यत्वाभावाच्चासम्भव इत्याह ॥ अपि चेति॥ ॥ अत्यन्तेति॥ न चाधिकरणातिरिरिक्तात्यन्तान्योन्याभावयोरनङ्गीकारान्नोक्तदोष इति वाच्यम्। प्रतीतिवैलक्षण्येन तयोरवश्यं स्वीकार्यत्वात्। अन्यथा प्रागभावप्रध्वंसयोरपि अधिकरणातिरिक्तत्वं न स्यात्। त्वदुक्तरीत्या सापेक्षस्याभावादेर्निरपेक्षाधिकरणात्मत्वानुपपत्तेश्च। न चाभाववैलक्षण्यावच्छिन्नसाध्य-व्यापकत्वान्न तुच्छे साध्याव्याप्तिरिति वाच्यम्। तुच्छस्याप्यभावविलक्षणत्वात्। न हि तुच्छमभावः। तथात्वे तस्य सत्त्वापत्तेः। अभावस्य भाववत्सत्वात् ॥ त्वन्मत इति॥ तथा च भावत्वोपाधिः साधन-व्यापकोऽपीति भावः।

ननु अनादिभावत्वादज्ञानस्यानिवर्त्यत्वसाधनं न युज्यतेऽप्रयोजकत्वात्। न च निवर्त्यत्वे सादिभावत्वं प्रयोजकम्। प्रागभावे तदभावात्। न च तत्रान्यदेव प्रयोजकम्। भिन्नप्रयोजककल्पनायां गौरवात्। सर्वत्र विरोधिसन्निपातस्यैव निवर्त्यत्वप्रयोजकत्वे लाघवात्। तथा चाज्ञानस्य निवर्त्यत्वं युक्तमित्यभिप्रायेण शङ्कते ॥ यदत्रेति॥ तथा च भवदीयानुमाने विरोध्यसन्निपातोपाधिरपीति भावः ॥ किञ्चेति॥ सामान्यव्याप्तेर्विशेषे तत्र सावकाशत्वाद्दुर्बलत्वम्। विशेषव्याप्तेर्निरवकाशत्वेन प्रबलत्वात्। तथा सामान्यव्याप्तिबाध इति भावः ॥ अपि चेति॥ नन्वेवं सत्प्रतिपक्षे ज्ञाननिवर्त्यत्वस्याप्यसिद्धौ कथं लक्षणत्वम्? निश्चितस्यैवेतरभेद साधकत्वेन लक्षणत्वादिति चेन्न। विशेषव्याप्तिसहितस्यैव तस्य बलवत्वेन निश्चायकत्वोपपत्तेः ॥ अनादीति॥ तथा त्वत्कल्पितप्रयोजकस्याप्यभावादनिवर्त्यत्वमिति भावः। न च फलबलात्तत्कल्पनम्। फलाभावसाधकं प्रति फलबलस्यासिद्धेः। न चैवं प्रयोजकद्वयकल्पनागौरवं भावनिवर्त्यत्वाभावनिवर्त्यत्वयोः प्रयोज्ययोर्भेदे तस्यावश्यकत्वात्। किं चेत्युक्तं दूषयति ॥ यः पर्वत इति॥ अप्रयोजकत्वात्र विशेषव्याप्तिरिति यदि तदैतदत्रापि तुल्यम्। विशेषव्याप्तित्वमपि नास्तीत्याह ॥ त्वदभिमतेति॥ न च ज्ञानविरोधित्वं ज्ञानाविरोधिभ्यो विशेष एवेति वाच्यम्। तर्हि अनादिभावत्वस्यापि सादि भावापेक्षया विशेषत्वेन विशेषव्याप्तित्वापत्तेः साम्यात्। यद्येकव्यक्तिमात्रविषयत्वमेव विशेषव्याप्तित्वं तदा तत्प्रकृतेऽपि नास्तीति भावः ॥ भाववैलक्षण्येनेति॥ न च ध्वंसादीनांमधिरणव्यतिरेकेणासत्वान्न तत्र व्यभिचार इति वाच्यम्। प्रागभाववत्तेषामप्यतिरिक्तत्वस्या-वश्यकत्वात्। अन्यथा तस्याप्यधिकरणस्वरूपत्वापत्तेः ।

किं च ध्वंसस्याधिकरणमात्रत्वे प्रतियोगिकालेऽप्यधिकरणस्य सत्वेन ध्वंससत्वापत्त्या ध्वंसप्रतियोगिनः। कालिकविरोधः सर्वसिद्धो न स्यात्। अज्ञाननिवृत्तिरूपमोक्षस्य ब्रह्मस्वरूपत्वेन श्रवणादिसाध्यत्वानुप-पत्तेस्तद्विधिवैयर्थ्यप्रसङ्गाच्च। आधाराधेयभावप्रतीत्ययोगाच्च। तच्छब्दानां पर्यायतापाताच्च।

नन्वविद्यायाः निवृत्त्यनङ्गीकारे मोक्षो न स्यात्। तथा च मोक्षशास्त्रविरोध इत्यत आह ॥ अविद्येति॥ आपादने प्रमाणविरोधो न दूषणमिति भावः ॥ प्रतीतिमात्रशरीरस्येति॥ न च सुखशुक्तिरूप्यादीनां

(कण्टकोद्धारः)
साक्षिप्रतीतिमात्रशरीराणांमपि साक्षिणि सत्येव यथा निवृत्तिस्तया प्रकृतेऽपि स्यात् इति वाच्यम्। सुखादीनां साक्षिप्रतीतिमात्रशरीरत्वानभ्युपगमात्। अभ्युपगमे वा तस्यापि पक्षतुल्यत्वात् ।

ननु न चिन्मात्रं साक्षी। तथात्वे ह्यसङ्गश्रुतिविरोधात्। किन्त्वविद्यावृत्त्युपहितम्। तथा च साक्षिणोऽप्यस्थिरत्वेन तत्पर्यन्तमवस्थानेऽप्यविद्यानिवृत्त्युपपत्तिरिति चेन्न। उपहितस्य जडत्वेन साक्षित्वानुपपत्तेः। सत्यां चाविद्यायां तादृशः साक्षी तस्मिंश्च सति तत्प्रतीतिशरीराविद्या इत्यन्योन्याश्रायाद्यापाताच्च। सुषुप्तावविद्यावृत्त्यभावेनाविद्यप्रतीत्यभावे परामर्शविरोधश्च। अविद्यावृत्तेरप्यविद्यावृत्त्युपहितचिद्वेद्यत्वेऽन्योन्याश्रयाद्यापाताच्च। वृत्त्युपधानदशायां शुक्तिरूप्यवदविद्यादेरसत्वापत्तेश्च। न च सादिपदार्थ एव तादृङ्नियम इति वाच्यम्। सादिप्रतीतिमात्र शरीरस्यासत्वानुपपत्तेः। न च धारावाहिकाया अविद्यावृत्तिपरम्पराया अतिसूक्ष्माया अभ्युपगमान्नोक्तदोष इति वाच्यम्। तस्या एवासिद्धौ तद्वृत्तिपरम्परायाः खपुष्पायमानत्वात्। एवं च चिन्मात्रस्यैव साक्षित्वे तन्मात्रप्रतीतिरूपाया अविद्यायाः निवृत्तिर्न सम्भवतीत्यसम्भवः सुस्थः ॥ अज्ञानस्येति॥ सादिसत्यत्वस्यैव भावनिवृत्तिप्रयोजकत्वात्। अन्यथा शशविषाणस्यापि निवृत्तिः स्यादिति भावः। एवमव्याप्त्यतिव्याप्त्यसम्भव ग्रस्तत्वात्प्रथमलक्षणमयुक्तमित्युपपादितम्। इदानीं द्वितीयलक्षणं दूषयति ॥ द्वितीयलक्षणेऽपीति॥ न च भ्रमोपादानत्वयोग्यत्वं विवक्षितमतो नाभ्रमपूर्वकप्रमानिवर्त्याज्ञानेऽव्याप्तिरिति वाच्यम्। अवच्छेदकाभावेन योग्यताया ज्ञातुमशक्यत्वात्। न च सर्वं लक्ष्यमवच्छेदकं, तस्य दूषितत्वात्।

नन्वभावारोपनिवर्तकप्रमानिवर्त्यज्ञाने नाव्याप्तिः। तस्यापि भ्रमोपादानत्वात्। न चैवमभावस्यापि सोपादानत्वापत्तिः। तन्मतेऽर्थज्ञानात्मकस्याध्यासस्य भ्रमत्वादिति वाच्यम्। इष्टापत्तेरित्यत आह ॥ अभावस्येति॥ सोपादानत्वे साकारत्वापत्तिः। न ह्यभावस्य संस्थानविशेषात्मकाकारोपलब्धिरस्ति। न च सोपादानत्वेऽपि गुणादाविवोपपत्तिरिति वाच्यम्। गुणादीनां गुण्याद्यभेदेन तदाकारस्यैव तदाकारत्वसम्भवात्। न च प्रकृतेऽपन्यभावस्याधिकरणाभेदेनाकारोपपत्तिरिति वाच्यम्। दत्तोत्तरत्वात्। नन्वज्ञानमपि भावविलक्षणमित्यरुचेराह ॥ किं चेति॥ न च प्रथमपक्ष एवेदं लक्षणमिति वाच्यम्। विवरणादिपर्यालोचनयाऽस्य सर्वमतसाधारणत्वप्रतीतेः। ननु मतत्रयसाधारणमेवेदं लक्षणमस्तु। न च द्वितीय तृतीययोरसम्भवातिव्याप्ती इति वाच्यम्। द्वितीयपक्षे भ्रमोपादानकावच्छेदकत्वस्य लक्षणत्वात् तृतीये परिणामित्वेनाचेतनत्वेन विशेषणान्न कोऽपि दोष इति चेन्न। तथाऽपि साधारणत्वानुपपत्तेः। भ्रमोपादानकावच्छेदकत्वस्य प्रथमपक्षे सम्भवात्। परिणामित्वादिविशिष्टस्य च द्वितीयपक्षे सम्भवात्। न च तत्तन्मतानुसारेण व्यवस्थितमेव लक्षणमिति वाच्यम्। वस्तुव्यवस्थायोगेन सर्वस्याप्यसम्भवात्। न ह्येकमेवोपादानतावच्छेदकमुपादानं परिणाम्यपरिणामि चेति सम्भवति। न त्वभ्युगमाधीना वस्तुव्यवस्था। गुञ्जापुञ्जस्य वह्नित्वापत्तेः ।

ननु भ्रमस्य भावत्वाद्धेतुरसिद्ध इत्यत आह ॥ न चेति॥ ॥ कार्यकारणयोरिति॥ तथात्वेऽज्ञानस्यापि भावत्वं स्यात्। अन्यथोपादानोपादेययोरभेदो न स्यात्। न चासावसिद्ध इति वाच्यम्। अपसिद्धान्तापातात्। एकविज्ञानेन सर्वविज्ञानस्योपादानोपादेयभावेनोपपादनासम्भवाच्च ॥ गौरवादिति॥ न च सोपादानत्वे सादित्वं तन्त्रम्। न तु भावत्वम्। तथा च भावविलक्षणत्वेऽपि सोपादानत्वं भविष्यतीति वाच्यम्। तथात्वे भावस्यापि

(कण्टकोद्धारः)

सोपादानत्वापत्तेः। न चेष्टापत्तिरिति वाच्यम्। तस्य प्रागेव दूषितत्वात् ॥ अपिचेति॥ न च सद्विलक्षणत्वमेव सोपादानत्वे तन्त्रमिति वाच्यम्। तथात्वे सतोऽपि सोपादानत्वापत्तेः। न चासद्विलक्षणत्वे सति सद्विलक्षणत्वम्। गौरवादसिद्धेश्च। तथा चासम्भव एवेति ॥ कादाचित्कत्वमेवेति॥ कादाचित्कभावत्वमित्यर्थः। तेन नाभावस्य सोपादानत्वापत्तिरिति भावः। आद्ये दोषमाह ॥ गौरवादिति॥ अन्त्य आह ॥ तुच्छस्यापीति॥ उपलक्षणमेतत्। ब्रह्मणोऽपि सोपादानत्वं स्यादित्यपि बोध्यम्। किमत्र ज्ञानस्य यादृशं रूपं तादृशं विषयस्येति सामान्यव्याप्तिरुज्ञानस्य सत्वे विषयस्यासत्वमिति विशेषव्याप्तिः। आद्ये मिथ्याभूतमिति द्वितीये सन्तमिति।

नन्वसद्विषयकज्ञानादेः सत्त्वं न सम्प्रतिपन्नमित्यत आह ॥ सत्येति॥ न चाविद्यावच्छिन्नचैतन्यस्य साक्षित्वात्तस्य च न सत्यत्वमिति वाच्यम्। मिथ्याभूतस्य जडत्वेन साक्षित्वानुपपत्तेः। अर्थासत्वेन ज्ञानासत्वे प्रत्यक्षविरोधश्च। न च प्रत्यक्षमसिद्धम्। अनुसन्धानसिद्धत्वादित्याह ॥ एतावन्तमिति ॥

नन्वादर्शे मुखासत्वेऽपि सत्वानुसन्धानवत्प्रकृते किं न स्यादित्यत आह ॥ एतावन्तमिति ॥ तत् प्रतिमुखस्य सत्वादनुसन्धानं युक्तम्। न च प्रतिबिम्बस्य सत्वमसिद्धमिति वाच्यम्। प्रतिबिम्बस्य जीवस्यासत्वे तस्य ब्रह्मैक्यरूपमोक्षानुपपत्तेरुक्तत्वात्। प्रतिबिम्बसत्वस्य वक्ष्यमाणत्वाच्चेति भावः। एवं तावदुपादेयत्वप्रयोजका-भावादुपादेयत्वं न सम्भवतीति न तदुपादानत्वमज्ञानस्येत्युपपाद्योपादानत्वप्रयोजकाभावादपि उपादानत्वा-भावादसम्भव इत्यत आह ॥ किं चेति॥ ॥ अन्यथेति॥ भावविलक्षणस्याप्युपादानत्व इत्यर्थः। न च प्रागभावस्य प्रतियोगिमात्रजनकत्वनियमेन भ्रमं प्रति जनकत्वस्याप्यभावात् तद्विशेषोपादानत्वं सुतरामसम्भवीति वाच्यम्। धर्मिकल्पनातो धर्मकल्पनायाः लघीयस्त्वेन प्रतियोगिजनकत्वमात्रनियमं परित्यज्य तत्त्वज्ञानप्रागभाव एव भ्रमोपादानत्वस्य कल्प्यत्वात्। क्लृप्ताक्लृप्तयोः क्लृप्ते कार्यसम्प्रत्यय इति न्यायाच्च ।

ननु कार्योपादानत्वे कार्यान्वयित्वं प्रयोजकम्। तच्चास्त्यज्ञान इति चेत्किं कार्यकाले सत्वं कार्यान्वयित्वमुत कार्यजनकत्वम्। आद्यं तु तत्त्वज्ञानप्रागभावसाधारणम्। द्वितीयं तु निमित्तसाधारणम् ॥ किं चेति॥ मृद्घट इति मृदनुविद्धतया घटप्रतीतिदर्शनादित्यर्थः। यद्यपादानकं तत्तदनुविद्धतया प्रतीयते इति नियमो नास्ति। घटोपादानकस्य रूपस्य तदनुविद्धतया प्रतीत्यभावादिति चेन्न। घटरूपयोरुपादानोपादेयभावासिद्धेः ।

किं च यत् यदुपादानकं तत् तत्समानाधिकरणतया प्रतीयते। अस्ति च रूपस्य श्यामो घट इति घटसामानाधिकरण्येन प्रतीतिः। न च प्रकृतेऽज्ञानं रजतमित्यस्ति प्रतीतिः कदाचिदपि। अतो नाज्ञानोपादानकत्वं प्रपञ्चस्येति ॥ यत्त्विति॥ ज्ञानत्वेन ज्ञाननिवर्त्यत्वमित्यर्थः। तेनोत्तरज्ञाननिवर्त्यपूर्वज्ञानादौ नातिव्याप्तिः ॥ जीवन्मुक्त्यनुवृत्तेति॥ न च तत्र नाज्ञानानुवृत्तिः। किन्तु संस्कारादेरिति वाच्यम्। तस्याज्ञानान्यत्वोपादानत्वानुपपत्तेः। अन्यथाऽज्ञानसिद्धिरेव नस्यात्। तदात्मकत्वे तु कथं नाव्याप्त्यादि? किं चोपादानोपादेयभावेऽप्यसङ्कीर्णव्यवहारार्थमसङ्कीर्णमेव लक्षणं वाच्यमिति कारणलक्षणस्य कार्येऽव्याप्तिरेवेत्याह ॥ यदिति॥ दृष्टान्तोऽप्यसम्प्रतिपन्न इत्याह ॥ पृथिवीति ॥ ॥ अन्यथेति॥ अभावाभावो भावव्याप्य इत्यनङ्गीकार इत्यर्थः। शुक्तितत्त्वज्ञानेनाज्ञाननिवृत्तौ सद्योमोक्षश्च स्यादिति। न चाज्ञानावस्थैव तत्र निराक्रियते नाज्ञानमिति

(कण्टकोद्धारः)

**वाच्यम्। दत्तोत्तरत्वात्। दूषितं चैतत् प्रतिकर्मव्यवस्था भङ्गे इत्यलम्। तस्मान्नाविद्यालक्षणं युक्तमिति।**
**अविद्यालक्षण भङ्गः।**

## न्यायामृतप्रकाशः

अत्र प्रमाणज्ञानमित्येवोक्ते वेदांतजन्यद्वितीयज्ञानमादाय बाधः स्यात्। तस्य प्रथमज्ञानरूपवस्तुपूर्वकत्वेपि तस्य स्वविषयप्रकाशकत्वेन स्वविषयावरणत्वाभावात् अतो विवादगोचरापन्नेति वक्तव्यम्। प्रमाणजन्यं चरमसाक्षात्काररूपं प्रथमज्ञानमित्यर्थः। साध्ये स्वशब्देन पक्षभूतं प्रमाणज्ञानं ग्राह्यम् ॥स्वप्रागभावमित्यादि॥ अत्र स्वविषयावरणेत्याद्येवोक्तौ प्रमाणज्ञानप्रागभावरूपवस्त्वंतरपूर्वकत्वमादायार्थांतरता स्यात्। तस्यापि स्वविषयावरणत्वात्। स्वविषयावरणशब्देन स्वसत्तादशायां कार्यानुत्पादप्रयोजकत्वस्यैव विवक्षितत्वात्। अतः कथं प्रमाणज्ञानप्रागभावस्य स्वपदोक्तप्रमाणज्ञानविषयभूतब्रह्मावरकत्वं अभावस्यावरकत्वानंगीकारादिति कुचोद्यानवकाशः। एवं चप्रमाणज्ञानप्रागभावस्यापि स्वसत्तादशायां कार्यानुत्पादप्रयोजकत्वेन स्वविषयावरणत्वात् आत्मनिष्ठत्वेन प्रमाणज्ञानसमानदेशत्वात् स्वेन निवर्त्यत्वाच्च। ननु प्रमाणज्ञानप्रागभावस्य कथं प्रमाणज्ञाननिवर्त्यत्वं स्वजन्यध्वंसप्रतियोगित्वमेव हि स्वनिवर्त्यत्वं नहीदं प्रमाणज्ञानप्रागभावे युक्तम्। अभावाभावस्य भावत्वेन प्रतियोगिन एव प्रागभावध्वंसरूपत्वेन प्रमाणज्ञानस्यैव प्रमाणज्ञानप्रागभावध्वंसरूपतया स्वस्य स्वजन्यत्वाभावादिति चेत्सत्यम्। अभावाभावो भावव्याप्य इति मते प्रागभावनिवृत्तेः प्रतियोग्यन्यत्वात् प्रमाणज्ञानजन्य-ध्वंसप्रतियोगित्वरूपं स्वनिवर्त्यत्वं प्रमाणज्ञानप्रागभावेऽस्त्येवातः स्वप्रागभावव्यतिरिक्तेत्युक्तम्। स्वविषयावरण-पदत्यागे प्रमाणज्ञानोत्पादकादृष्टरूपवत्वं तरपूर्वकत्वमादायार्थांतरता तस्यात्। स्यापि स्वप्रागभावव्यतिरिक्तत्वात् अदृष्टस्य फलनाश्यत्वेन प्रमाणज्ञानोत्पादकादृष्टस्य प्रमाणज्ञाननाश्यत्वात् आत्मगतत्वेन प्रमाणज्ञानसमान देशत्वाच्च। तत उक्तम् ॥स्वविषयावरणेति॥ तस्य चोत्पत्त्यनुकूलत्वेन स्वसत्तादशायां कार्यानुत्पादप्रयोजकत्व-रूपस्वविषयावरणत्वाभावान्न तदादायार्थांतरता। स्वनिवर्त्यपदत्यागे प्रमाणज्ञानोत्पत्तिप्रतिबंधकादृष्टरूपवस्त्वंतर-पूर्वकत्वमादायार्थांतरता स्यात्। तस्यापि स्वप्रागभावव्यतिरिक्तत्वात् स्वोत्पत्तिप्रतिबंधकत्वादेव स्वसत्तादशायां प्रमाणज्ञानरूपकार्यानुत्पादप्रयोजकत्वेन स्वविषयावरणत्वात् आत्मनिष्ठत्वेन स्वदेशगतत्वाच्च। अत उक्तम् ॥स्वनिवर्त्येति॥ लोके च प्रतिबंधकनिवृत्त्यनंतरमेव कार्योत्पत्तिदर्शनेन कार्येण प्रतिबंधकनिवृत्त्यभावेन प्रमाणज्ञानोत्पत्तिबंधकादृष्टस्य प्रमाणज्ञाननिवर्त्यत्वाभावान्न तेनार्थांतरता। स्वदेशगतपदत्यागे विषये ज्ञाततावदज्ञाततापि काचन तिष्ठति। एवं च विषयावरकत्वेन विषयभूतब्रह्मगताज्ञातत्वस्य विषयभूतब्रह्मावरणत्वात् प्रमाणज्ञाननिवर्त्यत्वाच्च तेनार्थांतरतेत्यत उक्तम् ॥स्वदेशगतेति॥ प्रमाणज्ञानस्य चात्मगतत्वात्तस्य च विषयगतत्वेन समानदेशत्वाभावान्नार्थांतरता। वस्त्वंतरपदत्यागे स्वप्रागभावव्यतिरिक्तेत्यादि विशेषणोपेतमिथ्याज्ञानपूर्वकत्व-मादायार्थांतरतास्यादतो वस्त्वंतरपदम्। अर्थज्ञानोभयविधभ्रमांगीकारेण मिथ्याज्ञानस्यावस्तुत्वान्न तेनार्थांतरतेति साध्ये पदानां कृत्यं द्रष्टव्यम्। हेतौ तु अर्थप्रकाशकत्वादित्येवोक्तौ धारावाहिकद्वितीयादिज्ञाने व्यभिचारः स्यात् तत्र प्रथमज्ञानेनैव ज्ञानस्य निवृत्तत्वेन द्वितीयादिज्ञानेन तदनिवृत्तेः स्वनिवर्त्यवस्त्वंतरपूर्वकत्वाभावात्

(प्रकाश:)

अतो प्रकाशितेत्युक्तम्। अर्थपदं तु स्पष्टीकरणार्थम्। दृष्टांते सौराद्यालोकप्रदेशे प्रथमोत्पन्नप्रदीपप्रभायां साध्यसाधनवैकल्यपरिहाराय अंधकार इत्युक्तम्। अंध कारोत्पन्नद्वितीयादिप्रभायां उभयवैकल्यपरिहाराय प्रथमेत्युक्तम्। अत्र पक्षेऽज्ञानमादाय साध्यपर्यवसानं दृष्टांतें धकारमादायेति विवेक: ॥चैत्रप्रमेति॥ अत्र पक्षे चैत्रप्रमाप्रागभावातिरिक्तानाद्यज्ञानमादाय साध्यपर्यवसानं दृष्टांते चैत्रप्रमाप्रागभावातिरिक्तमैत्रीय-प्रमाप्रागभावमादायेति द्रष्टव्यम्। साध्ये चैत्रप्रमेति विशेषणमप्रसिद्धिवारणाय। दृष्टांते मैत्रप्रमायां अभावव्यतिरिक्तानादिनिवर्तकत्वस्य प्रतिवादिनोऽसंमतेः। प्रमाप्रागभावातिरिक्तेति विशेषणं प्रागभावमादाय सिद्धसाधनतावारणाय। पूर्वज्ञानं मिथ्यात्वज्ञानमादाय सिद्धसाधनतावारणायानादीत्युक्तम् ॥ विगीतो विभ्रम इति॥ प्रपंच भ्रम इत्यर्थ: ॥एतज्जनकेति॥ पक्षीभूतभ्रमजनकं यदबाध्यं तदतिरिक्तोपादानक इत्यर्थ:। एतज्जनकाबाध्यातिरिक्तत्वं एतज्जनकाबाध्यभिन्नत्वं इदं च विशिष्टस्य एतज्जनकाबाध्यत्वस्याभावरूपम्। एवं च दृष्टांतीभूतो यो रूप्यभ्रमस्तदुपादाने शुक्त्यज्ञानेऽबाध्यत्वरूपविशेष्यसत्त्वेपि एतज्जनकत्वरूपविशेषणाभावेन पक्षीभूतभ्रमजनकेऽज्ञाने एतज्जनकत्वरूपविशेषणसत्त्वेपि बाध्यत्वाभावरूपविशेष्याभावेन विशिष्टाभावोऽनुगत:। दृष्टांत इव न विशेषणाभावमादाय विशिष्टाभावसिद्धि:। पक्षीभूतभ्रमस्य यदुपादानं तस्य पक्षीभूतभ्रमजनकतया तत्रैतज्जनकातिरिक्तत्वस्य बाधितत्वादिति ध्येयम्। पक्षीभूतभ्रमेऽबाध्यातिरिक्तं बाध्यं यदज्ञानं तदुपादानकत्वमादाय साध्यसिद्धि:। दृष्टांतीभूतभ्रमे तु पक्षीभूतभ्रमजनकातिरिक्तशुक्त्यज्ञानोपादानकत्वमादायेति विवेक:। बाध्योपादानक इत्येवोक्ते दृष्टांतेऽप्रसिद्धि: प्रतिवादिनस्तदुपादाने बाध्यत्वासंमतेः अतो नञ्द्वयगर्भं साध्यं तच्च विशेषणाभावेनोक्तरीत्यास्तीति ज्ञातव्यम्। भावरूपाविद्यासद्भावे श्रुतिं चाह ॥तथा तम इति॥ तमोनीहारादिशब्दानां तन्मतेऽविद्यावाचकत्वादिति भाव:। ननु तदुपादानं मिथ्याभूतं कुतोंगीकरणीयं सत्यमेव किं न स्यादित्यत उक्तं ॥मिथ्याभूतस्येति॥ भ्रमस्य तावन्मिथ्यात्वं सिद्धं तदुपादानस्याज्ञानस्य सत्यत्वे सत्योपादानकत्वाद्भ्रमस्यापि सत्यत्वापत्तेरतो मिथ्याभूतभ्रमरूपकार्यानुगुणं मिथ्याभूतमेवांगीकार्यमिति भाव:। एतादृशाज्ञानस्यानादित्वं कुतोंगीकार्यमित्यत उक्तम् ॥अनवस्थेति॥ तस्य सादित्वे पुनरज्ञानांतरपरंपरयाऽनवस्था स्यादित्यर्थ:। अहमज्ञ इति प्रत्यक्षं ज्ञानाभावविषयकं किं न स्यादित्याशंक्य निषेधति ॥न चेति॥ न जानामीति प्रत्यक्षं अहमज्ञ इति प्रत्यक्षम्। ज्ञानाभावविषयकं कुतो न भवतीत्यत आह ॥धर्मिणीति॥

इदं वाक्यमित्थं संप्रदायपरिशुद्ध्या कक्षाक्रमेण बुद्ध्या विविच्य योज्यम्। तथाहि। न जानामीत्यस्य मयि ब्रह्मज्ञानंनास्तीत्यर्थ:। तथाचास्य न ज्ञानाभावविषयकत्वं युज्यते। अत्र धर्मिभूतात्मज्ञानस्यैव सत्त्वादित्यादौ वाच्यम्। एतदुपरि शंका किमनेन धर्मिज्ञानोपपादनेनाजागलस्तनायितेन। एतावताऽज्ञ इति प्रत्यक्षस्य धर्मिज्ञानाभावविषयकत्वमुच्यते येनेदं दूषणं स्यात् किं तु ब्रह्मविषयकज्ञानाभावविषयकत्वमिति। अस्तु तर्हि धर्मिणो ज्ञातत्वाज्ञातत्वाभ्यां ज्ञानाभावज्ञानायोग:। किंतु यदभावविषयकत्वं त्वयोच्यते तज्ज्ञानभावाभावाभ्यामेवास्य प्रत्यक्षस्य न तदभावविषयकत्वमित्याशयेनोक्तं ॥प्रतियोगिनिचेति॥ न जानामीति प्रत्यक्षस्य ब्रह्मज्ञानाभावविषयकत्वं न वक्तुं शक्यते। तथाहि। अत्र प्रतियोगिभूतस्य ब्रह्मज्ञानस्य ज्ञानमस्ति नवा। नेति पक्षे प्रतियोगिज्ञानाभावादेव ज्ञानाभावज्ञानायोग:। आद्ये ब्रह्मज्ञानस्य ज्ञातत्वेन तस्य विषयनिरूप्यत्वेन विषयभूतस्य ब्रह्मणो ज्ञातत्वाद्ब्रह्मविषयकज्ञानाभावायोगेन प्रत्यक्षस्य तद्विषयकत्वं न संभवतीति

(प्रकाशः)

भावरूपाज्ञानविषयकत्वमेव वाच्यमिति भावः। तत्र च नोक्तदोषावकाशः। तस्य भावत्वादेव प्रतियोगिज्ञानापेक्षाया अभावादिति ज्ञातव्यम् ॥हेत्वभावेनेति॥ अभावज्ञानहेतुभूतधर्मिप्रतियोगिज्ञानाभावेनेत्यर्थः। ननु ज्ञानाभावज्ञाने प्रतियोगिनो ब्रह्मज्ञानस्य ज्ञानमस्त्येव। नच ब्रह्मज्ञानस्य विषयनिरूप्यत्वेन ब्रह्मणोपि ज्ञाततया तज्ज्ञानाभावज्ञानायोग इति वाच्यम्। विषयस्य ब्रह्मणोपि सामान्याकारेण ज्ञानांगीकारादित्याशंक्य निषेधति ॥न चेति॥ अत्र सर्वत्र सामान्यविशेषशब्दौ सामान्यविशेषाकारपरौ। अयमर्थः। ब्रह्मणः सामान्यतो ज्ञातत्वेपि किमायातं प्रकृते। नह्यहमज्ञ इति प्रत्यक्षस्य सामान्येन ब्रह्मज्ञानाभावविषयकत्वं युक्तम्। ब्रह्मज्ञानरूपप्रतियोगिनिरूपकस्य सामान्याकाररूपविषयस्यापि ज्ञातत्वात्। ननु सामान्यतो ज्ञाते तस्मिन्विशेषाकार ज्ञानं नास्तीति विशेषज्ञानाभावविषयकत्वमेव प्रत्यक्षस्योच्यते तत्राभावज्ञानविरोधिनो विशेषज्ञानविषयीभूत-विशेषाकारस्याज्ञातत्वाद्विशेषज्ञानाभावो युक्त एव। यच्चाऽस्ति सामान्याकारज्ञानं तत् न विशेषाकार-ज्ञानाभावविरोधीति चेत्। सत्यम्। सामान्यतो विषयस्य ज्ञातत्वे तस्य तज्ज्ञानाभावविरोधित्वाद्विशेषज्ञानाभावः संभवत्येव तथापि तत्रैवायं विकल्पःप्रसरति। तथाहि। प्रतियोगि भूतं विशेषाकारज्ञानं ज्ञातं नवा। नेति पक्षे विशेषज्ञानाभावं प्रति प्रतियोगितया निरूपकस्य विशेषज्ञानस्य ज्ञानाभावेन तन्निरूपितविशेषज्ञाना-भावज्ञानायोगात्। आद्ये प्रतियोगिभूतविशेषाकारज्ञाने ज्ञाते तस्य विषयनिरूप्यत्वेन विषयस्य विशेषाकारस्यापि ज्ञातत्वाद्विशेषाकारज्ञानाभावज्ञानं न युक्तमिति न प्रत्यक्षस्य तद्विषयकत्वमपि तु भावरूपाज्ञानविषयकत्वमेवेति भावः। एवं पूर्वपक्षे प्राप्ते सिद्धांताभिधानं प्रतिजानीते ॥ तत्र ब्रूमइति ॥ आद्यलक्षणमव्याप्त्यसंभवातिव्याप्तिभिर्दूषयितुं आदावव्याप्तिं तावदाह ॥आद्य इति सादीति॥ शुक्त्यादेः सादित्वात्तदवच्छिन्नचैतन्यावरकाज्ञानमपि साद्येवेत्यनादित्वाभावादव्याप्तिरित्यर्थः। नच शुक्त्यवच्छिन्नचैतन्यावरकाज्ञानानामप्यनादित्वमेवेति वाच्यम्। तथात्वे शुक्त्यादेः सादित्वेन तदुत्पत्त्यपेक्षया पूर्वं निर्विषयावरणापत्तेः। न च तदा शुद्धचैतन्यमात्रावरकत्वमेवेति वाच्यम्। तथात्वे शुद्धचैतन्यावरकाज्ञानस्य मूलाज्ञानत्वापत्त्या रूप्यस्य तदुपादेयत्वे शुक्तिज्ञानेन निवृत्त्यापत्त्या मूलाज्ञानस्य नष्टत्वात्सद्यो मोक्षापत्तिरिति भावः ॥उक्तत्वादिति॥ प्रतिकर्मव्यवस्थाभंग इति शेषः। अनादित्वविशेषणस्या-व्याप्तिमुक्त्वा भावत्वरूपविशेषणस्याप्यव्याप्तिमाह ॥आरोपितेति॥ अज्ञानमभावोपादानमेव न भवति अभावस्य तन्मते निरुपादानत्वादित्यत उक्तमारोपितेति व्यावहारिकस्य कथंचित्तथात्वेपि यदा घटवति भूतले घटाभावारोपो भवति तदारोप्यमात्रस्याज्ञानोपादानकत्वमंगीकार्यं अन्यथा द्वितीयलक्षणस्यासंभवप्रसंगात्। अतस्तस्मिन्ना-रोपिताभावोपादानाज्ञाने भावत्वाभावादव्याप्तिः स्यादित्यर्थः। नन्वारोपिताभावोपि भावरूपाज्ञानोपादानक एवेति नाव्याप्तिरिति चेत्तर्हि अतिप्रसंग इत्याह ॥अभावस्येति॥ ननु यद्यज्ञानोपादानकत्वमभावस्य स्यात् तदैव तदुंपादानभूतेऽज्ञानेऽव्याप्तिः स्यात्। नच तदंगीक्रियत इति चेन्नर्हि घटवति भूतले आरोपितस्य घटाभावस्य घटज्ञानेन निवृत्तिर्दृश्यते सा न स्यात् यतो ज्ञानमज्ञानस्य निवर्तकमित्याह ॥ज्ञानान्निवृत्तिर्नस्यादिति॥ न चेष्टापत्तिरिति वाच्यं तथात्वे ब्रह्मवत्सत्त्वापत्तेरिति द्रष्टव्यम्।

अनादित्वभावत्वयोर्विशेषणयोरव्याप्तिमुक्त्वा ज्ञाननिवर्त्यत्वस्याप्यव्याप्ति माह ॥शुद्धमिति॥ अस्मन्मते पुंगतमेव तमः। परमते विषयावरकतया विषयगतम्। एवंच ब्रह्मावरकाज्ञानस्य ज्ञाननिवर्त्यत्वं नास्ति कुतः यतो ब्रह्मज्ञाननिवर्त्यत्वमेव तस्य वक्तव्यं अब्रह्मज्ञानात्तन्निवृत्त्यनुपपत्तेः। तथाच ब्रह्मज्ञानमेव तन्मते नास्ति

(प्रकाशः)

शुद्धब्रह्मणो वृत्तिव्याप्यत्वाभावात्। अतो ब्रह्मावरकाज्ञाने ज्ञाननिवर्त्यत्वाभावादव्याप्तिरित्यर्थः ॥जीवन्मुक्तीति॥ जीवन्मुक्त्यनुवृत्ताज्ञानस्य ज्ञाननिवर्त्यत्वांगीकारे स्वकार्यारब्धकर्मादिभिः सह पूर्वेण चरमसाक्षात्कारेण निवृत्त्यापत्त्या भिक्षाटनादौ प्रवृत्तिर्न स्यात्। अतो ज्ञाननिवर्त्यत्वाभावादव्याप्तिरित्यर्थः। जलस्येत्युक्त्या भ्रमोपाधिर्दर्शितः। शुद्धं ब्रह्म वृत्तिव्याप्यं नेति मते ब्रह्माज्ञानस्य ब्रह्मज्ञाननिवर्त्यत्वाभावेपि ब्रह्मभिन्नज्ञानेन निवृत्तिरस्त्वित्यत आह ॥नहीति॥ तथा च ब्रह्मज्ञानेनैव तन्निवृत्तिर्वक्तव्या तच्च त्वन्मते न संभवतीत्यर्थः। जीवन्मुक्त्यनुवृत्ताज्ञानेऽव्याप्तिमुपपादयति ॥जीवन्मुक्तीति॥ जीवन्मुक्त्यनुवृत्ताज्ञानस्य ज्ञाननिवर्त्यत्वाङ्गीकारे स्वकार्यारब्धकर्मादिभिः सह पूर्वेण चरमसाक्षात्कारेण निवृत्त्यापत्त्या भिक्षाटनादौ प्रवृत्तिर्न स्यात्। अतोऽज्ञाननिवर्त्यत्वाभावादव्याप्तिरित्यर्थः। सोपाधिकेति। वृक्षाधोग्रत्वादि सोपाधिकभ्रमाज्ञानेष्वव्याप्तिः। तत्र ज्ञाननिवर्त्यत्वाभावात्। अधिष्ठान तत्त्वसाक्षात्कारेणैव हि तन्निवृत्तिः वक्तव्या। न चासौ सम्भवति। अधिष्ठानभूतो यो वृक्षः तस्य यदूर्ध्वाग्रादितत्त्वं तत्साक्षात्कारे सत्यपि अज्ञानस्यानिवृत्तत्वात्। तन्निवृत्तौ च सोपाधिकभ्रमानुवृत्तिरेव न स्यादतः तत्राव्याप्तिरित्यर्थः। जलस्येत्युक्त्या भ्रमोपाधिः दर्शितः। शुद्धं ब्रह्म वृत्तिव्याप्यं नेति मते ब्रह्माज्ञानस्य ब्रह्मज्ञाननिवर्त्यत्वाभावेपि ब्रह्मभिन्नज्ञानेन निवृत्तिरस्त्वित्यत आह। नहीति। तथा च ब्रह्मज्ञानेनैव तन्निवृत्तिर्वक्तव्या। तच्च त्वन्मते न संभवतीत्यर्थः। जीवन्मुक्त्यनुवृत्ताज्ञाने व्याप्तिमुपपादयति। जीवन्मुक्तीति। ॥पूर्वेणेति॥ नोत्तरेणेत्यर्थः ॥स्यादिति॥ तथा च भिक्षाटनादौ प्रवृत्तिर्न स्यादिति भावः। ननु न सोपाधिकभ्रमोपादानाज्ञानेऽव्याप्तिः। तत्त्वज्ञाननिवर्त्यत्वं हि लक्षणं तच्च सोपाधिकभ्रमाज्ञानस्याप्यस्ति। वृक्षाधोग्रत्वादेर्जलाद्युपाधिनिवृत्तिसचिवोर्ध्वाग्रत्वाद्यधिष्ठानतत्वज्ञाननिवर्त्यत्वादित्याशंक्य निषेधति ॥नचेति॥ ॥तस्येति॥ यथा तत्त्वज्ञानस्य स्वप्रागभावनिवर्तनेऽन्यनिरपेक्षत्वं एवमज्ञाननिरसनेप्यन्यनिरपेक्षस्यैव कारणत्वं वाच्यमित्यर्थः। अन्यनिरपेक्षस्यैवाज्ञाननिवर्तकत्वमुपपादयति ॥नहीति॥ यदि ज्ञानस्याज्ञाननिरसनेन्यापेक्षा तर्हि कदाचिद्वस्तुनि सुखादौ ज्ञातैकसति सहकरिविलंबेन न जानामीति धीः स्यात् नह्येवमस्त्यतो ज्ञानस्याज्ञाननिवर्तनेऽन्यापेक्षा नास्तीत्यर्थः। एवं सति प्रकृते ज्ञाननिवर्त्यत्वमित्यत्रान्यनिरपेक्षतत्वज्ञानमात्र-निवर्त्यत्वमेव लक्षणतयाभिप्रेतमित्यवश्यं वाच्यम्। सोपाधिकभ्रमोपादानाज्ञाने चोपाधिनिवृत्तिसचिवतत्वज्ञाननिवर्त्ये तदभावादव्याप्तिर्वज्रलेपायितेति भावः। अव्याप्तिमुक्त्वातिव्याप्तिमप्याह ॥चैतन्येति॥ चैतन्यातिरिक्तस्य सर्वस्यापि ज्ञाननिवर्त्यत्वांगीकाराच्चैतन्याविद्यासंबंधस्यापि जगदंतः पातित्वाल्लक्षणस्य तत्रातिव्याप्तिरित्यर्थः। ननु तत्र नातिव्याप्तिः साक्षाज्ज्ञाननिवर्त्यत्वस्य लक्षणतयाभिप्रेतत्वात् चैतन्याविद्यासंबंधस्य चाविद्यारूपसंबंधिनिवृत्तिद्वारैव ज्ञानेन निवर्तमानत्वादित्यत आह ॥साक्षादिति॥ ॥अनादिपदेति॥ शुक्तिरूप्येऽतिव्याप्तिवारणायह्यनादिपदं साक्षाज्ज्ञाननिवर्त्यत्वाभिप्राये च शुक्तिरूप्यादेरप्यज्ञाननिवृत्तिद्वारा निवर्तमानत्वेन साक्षाज्ज्ञाननिवर्त्यत्वा-भावात्तेनैवातिव्याप्तिपरिहारे सति अनादीति विशेषणं व्यर्थमित्यर्थः ॥असंभवश्चेति॥ क्रमेण विशेषणानामसंभवमुपपादयितुमादावनादित्वविशेषणस्यासंभवमाह ॥कल्पितत्वेनेति॥ कथमज्ञानस्य दोषजन्यधीमात्रशरीरत्वमित्यत उक्तं ॥कल्पितत्वेनेति॥ प्रातिभासिकत्वेनेत्यर्थः ॥ज्ञानेति॥ तथा च अज्ञानं नानादि ज्ञानविलक्षणत्वे सत्यभावविलक्षणत्वाद्रूप्यवदित्यनुमानमुक्तं भवति। ब्रह्मज्ञानप्रागभावयोर्व्यभिचारवारणाय विशेषणविशेष्यभागौ। ननु चैतन्याविद्यासंबंधे ज्ञाननिवर्त्यत्वे सति अभावविलक्षणत्वमस्ति अनादित्वमेवास्तीति

(प्रकाशः)

व्यभिचार इत्यत आह ॥अज्ञानेति॥ अत्राप्यनेनैव हेतुनाऽनादित्वाभावोनुमीयतेऽतः पक्षतुल्यत्वान्नव्यभिचार इति। नहि पक्षे पक्षतुल्ये वा व्यभिचार इति पदार्थविदो मन्यंत इति भावः ॥अज्ञानत्वेति॥ अनादित्वाभाववति शुक्तिरूप्ये सत्त्वात्साध्यव्यापकः हेतुमति पक्षे चाविद्यमानत्वात्साधनाव्यापकश्चेति भावः ॥पक्षेतरत्वादिति॥ अज्ञानत्वाधिकरणत्वमेवाज्ञानत्वं तदनधिकरणत्वं नामाज्ञानेतरत्वमेवेत्यर्थ इत्याहुः। वस्तुतस्तु अनधिकरणत्वस्य केवलान्वयितया साधनव्यापकत्वादज्ञानेति पदस्य पक्षमात्रव्यावर्तकत्वादुपाधेः पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वमित्यर्थः। पक्षेतरत्वं चानुमानमात्रोच्छेदकत्वान्नोपाधिरित्याशयः ॥अवच्छिन्नेति॥ शुक्त्याद्यवच्छिन्नाज्ञान इत्यर्थः। अनादित्वाभावे सत्यपि अज्ञानत्वाधिकरणत्वस्यैव सत्वादिति भावः ॥व्यतिरेकेति॥ साध्याभावाविनाभाव्यभावप्रतियोगिन एवोपाधित्वेन यत्राज्ञानत्वाधिकरणत्वं तत्रानादित्वमित्युपाध्य-भावपुरस्सराव्याप्तिः सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञाने व्यभिचारादयुक्तेत्यर्थः। भावत्वविशेषणस्याप्यसंभवमाह ॥त्वन्मत इति॥ अनिर्वाच्यवादिनस्तव मत इत्यर्थः। ननु भावत्वस्य नासंभवः। लक्षणे भावशब्देनाभाववैलक्षण्यस्यैव विवक्षितत्वादिति चेत्तत्राह ॥भावेति॥ अज्ञानं अभावविलक्षणं न भवति। अभाव एवेति यावत्। भावविलक्षणत्वात्प्रागभाववदित्यनुमाने व्याप्त्युपपादनायोक्तं ॥भावविलक्षणइति॥ परस्परविरुद्धयोरिति न्यायादिति भावः। तथा च भावशब्देनाभाववैलक्षण्यविवक्षायामप्यसंभव एवेति भावः। ज्ञाननिवर्त्यत्वविशेषणस्याप्यसंभवमाह ॥अपिचेति॥ तथा चाज्ञानं न निवर्तते अनादित्वे सत्यभावविलक्षणत्वादात्मवदित्यनुमानंमुक्तं भवति। घटतत्प्रागभावयोर्व्यभिचारवारणाय विशेषणविशेष्यभागौ ॥भावत्वेति॥ अनिवृत्ते आत्मनि तयोः सत्त्वाद्धेतुमति पक्षे चाभावादिति भावः ॥अत्यंताभाव इति॥ जगदत्यंताभाव इत्यर्थः। अत्यंताभावस्य नित्यत्वेनानिवर्त्यत्वादसतश्चज्ञानेनानिवर्त्यत्वात्तयोश्चभावत्वस्यात्मत्वस्य चाभावादित्यर्थः। त्वन्मते भावत्वोपाधेरात्मनि निर्धर्मके साध्याव्याप्तिश्चेत्याह ॥त्वन्मत इति॥ अज्ञानं न निवर्तते अनादित्वे सत्यभावविलक्षणत्वादित्यनुमाने विरोध्यसन्निपात उपाधिः साध्यव्यापकत्वात्पक्षे ज्ञानस्यैव विरोधिनः सत्त्वेन साधनाव्यापकत्वाच्च तथा च ज्ञाननिवर्त्यत्वस्य नासंभव इति विवरणोक्तं दूषयितुमनुवदति ॥यदत्रोक्तं विवरण इति॥ अनादित्वमविनाशेऽनिवर्त्यत्वे निमित्तं प्रयोजकं न भवति। किंनाम विरोध्यसन्निपात एव विनाशकसामग्र्यसन्निधानमेव प्रयोजकमित्यर्थः। यथा विनाशे सादित्वं न प्रयोजकं किं नाम विरोधिसन्निपात एव विनाशकसामग्रीसान्निध्यमेवेति दृष्टांतार्थमिति केचित्। वस्तुतस्तु परेणोपाधिमुक्त्वा प्रतिपक्षोन्नयनं कार्यं अज्ञानं निवर्तते विरोधिसन्निपातवत्त्वादिति। तत्र सादित्वमुपाधिरिति प्रतिपक्षोन्नयनमयुक्तमिति शंकायां तत्रेदमुच्यते। विनाशे न सादित्वं प्रयोजकं किंतु विरोधिसन्निपात एवेति। तथा चोपाधिना प्रतिपक्षोन्नयनं युक्तमिति भावः। अनादिभावः अनादित्वे सति अभावविलक्षणः ॥सामान्यव्याप्तेरिति॥ समस्तानादिसङ्ग्राहकत्वादिति भावः। अज्ञानं अनाद्यज्ञानम् अज्ञानं ज्ञाननिवर्त्यं अनाद्यज्ञानत्वादिति प्रतिपक्ष उक्तो भवति ॥ विशेषव्याप्तिरिति॥ अनादिभावविशेषाज्ञाननिष्ठत्वादिति भावः। अस्मदनुमानस्य प्रतिकूलतर्कपराहतिं प्रतिपक्षांतरं चाह ॥अपि चेति॥ अज्ञानं निवर्तते भावविलक्षणत्वात्प्रागभाववदिति प्रतिपक्षानुमानं द्रष्टव्यम् ॥अनुमानादिति॥ तथा चाज्ञानं विरोधिसन्निपातशून्यं अनादित्वे सति भावत्वादित्यनुमाने नोपाधेरपि पक्षे साधनात्साधनव्यापकोयमुपाधिस्ततश्चनुमानस्य निर्दोषत्वेन ज्ञाननिवर्त्यत्वाभावस्य सिद्ध्याऽसंभवः सुस्थ इति

(प्रकाशः)

भावः। किं चेत्यादिनोक्तं दूषयति ॥य इति॥ यो धूमवान्सोग्निमानिति सामान्यव्याप्तेः धूमवद्विशेषपर्वतनिष्ठा यः पर्वतः सनिरग्निक इति विशेषव्याप्तिर्बलवती प्रसज्येत। तथा च पर्वतोग्निमानित्यस्यापि पर्वतो निरग्निकः पर्वतत्वादिति प्रतिपक्षसंभवेनातिप्रसंग इति भावः ॥दृष्टांताभावेनेति॥ अनाद्यज्ञानस्यैव पक्षत्वेनान्वयदृष्टांता-भावादित्यर्थः। व्यतिरेकव्याप्तिश्च वक्रत्वादुपेक्षितेति हृदयम्। ॥अज्ञानशब्देनेति॥ अयमर्थः। अत्र ज्ञाननिवर्त्यतावच्छेदकं नानाद्यज्ञानत्वम्। ज्ञाननिवर्त्येषु साद्यज्ञानेषु अभावेन न्यूनवृत्तित्वात् अतोऽनादित्वविशेषणं परित्यज्याज्ञानत्वमेव निवर्त्यतावच्छेदकमिति वक्तव्यम्। नेदमपि संभवति ।ज्ञाननिवर्त्यत्वस्य भ्रांतावपि भावेन न्यूनवृत्तित्वात् अतोऽनाद्यज्ञानसाद्यज्ञानभ्रांतिसाधारणं ज्ञाननिवर्त्यतावच्छेदकं ज्ञानविरोधित्वमात्रं विवक्षणीयम्। एवं चाज्ञानं ज्ञाननिवर्त्यं ज्ञानविरोधित्वादित्यनुमानं वाच्यम्। तथा च यज्ज्ञानविरोधि तज्ज्ञाननिवर्त्यमित्येवं व्याप्तिर्वाच्या। तथा चानादिसाद्यज्ञानभ्रांतिसाधारणत्वान्नेयमपि विशेषव्याप्तिः। न च ज्ञानविरोधिविशेषभूतानाद्य-ज्ञाननिष्ठा व्याप्तिरिति वाच्यम्। अन्वये दृष्टांताभावादिति भावः। व्यतिरेकव्याप्तेरेव विशेषव्याप्तित्वोपपत्तेर्नेदं दूषणं समीचीनमिति। अपि चेत्यादिनोक्तं दूषयति ॥भावेति॥ निवृत्तौ आपादितायामिति शेषः। तथा चात्यंताभावे ध्वंसे च व्यभिचारः। तयोश्चनिवर्त्यत्वे प्रतियोग्युन्मज्जनापत्तिरिति ध्येयम्। तथा चाज्ञानं न ज्ञाननिवर्त्यं अनादित्वे सत्यभावविलक्षणत्वादात्मवदित्यनुमानं सुस्थमिति भावः। ननु नैवमनुमातुं शक्यं ''विश्वमायानिवृत्तिः'' तरत्यविद्यामित्यादिज्ञाननिवर्त्यत्वप्रतिपादकश्रुतिबाधापत्तेरिति चेन्न। स्यादिदं दूषणं यदि साधनानुमानमस्माकमभिप्रेतं स्यात् न चैवं किं नाम अनादित्वे सत्यभावविलक्षणत्वादात्मवदज्ञानस्यानिवर्त्यत्वं स्यात् ततश्चासंभव इत्यापाद्यमानत्वात् तत्र प्रमाणबाधादेरदूषणत्वादित्याशयेनाह ॥अविद्येति॥ अत्रादौ मयैवापाद्यत इत्येतद्योजनीयम्। मया आपाद्यत एव न साध्यते येन प्रमाणबाधः स्यादिति तदर्थः। तदुपर्येवमाशंका। ननु भवत्तर्कस्य प्रतितर्कपराहतिः। तथाहि। अनादित्वे सत्यभावविलक्षणत्वादज्ञानं ज्ञाननिवर्त्यं न स्याद्यदि तर्ह्यविद्यानिवृत्तिरूपो मोक्षो न स्यात्। अस्ति चासौ प्रमाणप्रमितोऽतो ज्ञाननिवर्त्यत्वमंगीकार्यम्। ततश्चनासंभव इत्याशंकायामविद्येत्यादिकं समग्रं वाक्यं योजनीयम्। तथाहि। नैतदेवं मयापाद्यते अपि तु ममायमाशयः। अज्ञानस्य भावविलक्षणत्वात्प्रागभाववन्निवृत्तिर्यदि स्यात् तर्ह्यनादित्वे सत्यभावविलक्षणत्वादनिवृत्तिरपि स्यादित्यापादिते अत्रेष्टापत्तिस्त्वया नाशंक्या। तथात्वेऽविद्यानिवृत्तिरूपो मोक्षो न स्यादिति मयैवापाद्यमानत्वादिति संप्रदायविदः। प्रकारांतरेण ज्ञाननिवर्त्यत्वस्यासंभवमाह ॥प्रतीतीति॥ अज्ञानस्य त्वन्मते प्रातिभासिकत्वेन प्रतीतिमात्रशरीरतया यावत्प्रतीति सत्त्वमनुवृत्तिनियमात् प्रतीतिनिवृत्तिमंतरेण निवर्तकाभावादज्ञानप्रतीतेश्च साक्षिचैतन्यरूपत्वेन तस्य च नित्यत्वेन निवृत्त्यभावान्नज्ञाननिवर्त्यत्वमज्ञानस्येति भावः। नन्वविद्यावृत्तिप्रतिबिंबितसाक्षिचैतन्यस्यैवाज्ञानप्रतीति रूपत्वात्तस्य च विशिष्टजन्यत्वेन नाशादज्ञाननाशो युक्त एवेति न ज्ञाननिवर्त्यत्वस्यासंभव इत्यस्वरसात्प्रकारांतरेण असंभवमाह ॥अज्ञानस्येति॥ ॥अत्यंताभावेति॥ तादृशमिथ्यात्ववतो रूप्यादेर्ज्ञाननिवर्त्यत्वाननुभवात्। न हिशुक्तिज्ञानेन रूप्यं नष्टमिति धीरस्तीति ज्ञाननिवर्त्यत्वभंगे उक्तत्वेनाज्ञानस्यापि तादृशमिथ्यात्ववतो ज्ञानेन निवृत्तिरयुक्तेति सुस्थोऽसंभव इति भावः।

एवमाद्यं लक्षणमव्याप्त्यादिना दूषयित्वा भ्रमोपादानत्वरूपं द्वितीयलक्षणमप्यव्याप्त्यादिना दूषयति ॥द्वितीयलक्षणेपीति॥ अज्ञानमेकमेवेति मते तस्य चरमसाक्षात्कारनिवर्त्यत्वेन शुक्त्यादिप्रमानिवर्त्यत्वं नास्ति

(प्रकाशः)

तथात्वेऽज्ञानस्यैकत्वेन तन्निवृत्तौ सद्योमोक्ष एव स्यादत उक्तम् ।।यावंतीति।। भ्रमनिवर्त्याज्ञानाभावात् प्रमानिवर्त्येत्युक्तम्। नन्विदं रजतमिति भ्रमानंतरं जायमाननेदं रजतमिति प्रमानिवर्त्यं यदज्ञानं शुक्त्यज्ञानं तत्र भ्रमोपादानत्वमस्त्येवेति नाव्याप्तिरित्यत उक्तम् ।। अभ्रमपूर्वकेति।। भ्रमानंतरं जायमाना प्रमा न भवतीत्यर्थः। तथा चादावेवेयं शुक्तिरिति जायमाना या प्रमा तया शुक्त्यज्ञानं निवर्तते तस्मिन्नज्ञाने भ्रमस्यैवाभावेन भ्रमोपादानत्वाभावादव्याप्तिः स्यादित्यर्थः। न च भ्रमोपादानत्वयोग्यत्वं विवक्षितं अभ्रमपूर्वकप्रमानिवर्त्याज्ञाने सहकारिवैकल्यप्रयुक्तकार्यानुत्पादकत्वरूपं योग्यत्वमस्त्येवेति वाच्यम्। योग्यताहि किंचिदवच्छेदेन ज्ञातव्या। प्रकृते च योग्यतावच्छेदकीभूतो धर्मो न निरूपयितुं शक्यः। न तावदज्ञानत्वं तस्येदानीं निरुच्यमानत्वात्। न चाद्यं लक्षणमेवयोग्यतावच्छेदकमिति वाच्यम्। तस्य दूषितत्वादिति द्रष्टव्यम्। अत एवास्वरसादाह ।।अभावारोपेति।। घटवति भूतले आरोपितो घटाभावो घटप्रमया घटाज्ञाननिवृत्तिद्वारा निवर्तते तस्मिन्नज्ञाने भ्रमोपादानत्वाभावादव्याप्तिः स्यादित्यर्थः। प्रमापदाभावे आरोपधारायां द्वितीयारोपेण पूर्वारोपो निवर्तते। तत्र प्रथमारोपनिवर्तकद्वितीयारोपनिवर्त्याज्ञानाभावात्तत्राव्याप्तिकथनमयुक्तं स्यादत उक्तम् ।।प्रमानिवर्त्येति।। ननु तदप्यज्ञानं आरोपिताभावोपादानं भवत्विति चेत्तत्राह ।।अभावस्येति।। ।।सोपादानकत्वेपीति।। सोपादानकत्वांगीकारेपीत्यर्थः ।।भावरूपेति।। तथात्वे अभावस्यापि भावोपादानकत्वाद्भावत्वमेव स्यात्। असत्यस्यापि सत्योपादानकत्वप्रसंगादिति भावः। एवमव्याप्तिमुपपाद्यासंभवातिव्याप्ती मतभेदेनोपपादयति ।। किंचेति।। अत्र मतत्रयमस्ति। मायैव सर्वजगदुपादानं ब्रह्म तु तदधिष्ठानमात्रमित्येकं मतम्। मायावच्छिन्नं ब्रह्मैव सर्वजगदुपादानं न केवलं माया नापि केवलं ब्रह्मेत्यपरं मतम्। रज्वाः सूत्रद्वयमिव मायाब्रह्मणी द्वे अपि प्रत्येकं जगदुपादाने इत्यन्यन्मतम्। तत्राद्ये मते नासंभवः। माया शब्दवाच्याज्ञानस्यैव सर्वजगदुपादानत्वांगीकारात् भ्रमस्य च जगदंतः पातित्वेन मायायां भ्रमोपादानत्वसंभवात् अतो द्वितीयमतेऽसंभवः स्यात्। मायावच्छिन्नब्रह्मण एव सर्वजगदुपादानत्वेन मायायां भ्रमोपादानत्वाभावात्। विशिष्टस्य यद्भवतीति न्यायस्य च निरासात् ब्रह्मण्यतिव्याप्तिश्च द्रष्टव्या। तृतीये मतेऽसंभवाभावेपि ब्रह्मण्यतिव्याप्तिः स्पष्टैवेत्यर्थः ।।भावेति।। तथा च भ्रमो निरुपादानकः भावविलक्षणत्वादभाववदित्यनुमानं द्रष्टव्यम्। तथा च भ्रमस्य निरुपादानत्वादज्ञाने भ्रमोपादनत्वाभावादसंभव इत्यर्थः। ननु भ्रमस्य भावत्वेन भावविलक्षणत्वाभावात्स्वरूपा-सिद्धिरित्यत आह ।।न चेति।। ।।भावेति।। अज्ञानस्यानिर्वचनीयत्वेन भावाभावविलक्षणत्वादिति भावः। तथापि कुतो न युक्तमित्यत आह ।।कार्येति।। तथा च भावविलक्षणाज्ञानकार्यस्य भाववैलक्षण्यमेव युक्तमिति न स्वरूपासिद्धिरिति भावः। ननु भवदनुमानस्य भ्रमः सोपादानः अभावविलक्षणत्वाद्घटवदिति सत्प्रतिपक्षत्वान्नासंभव इत्यत आह ।।सोपादानत्वेचेति।। तथा च भावत्वमत्रोपाधिः। घटादौ साध्यव्यापकत्वात्। हेतुमपि पक्षे भावविलक्षणाज्ञानोपादाने भावत्वाभावे न साधनाव्यापकत्वाचेत्युक्तं भवति ।।गौरवादिति।। अभावरूपत्वेन गौरवादिति भावः। इदानीं भ्रमस्वरूपं विविच्य तस्याज्ञानोपादानत्वं दूषयति ।।अपिचेति।। भ्रमशब्देनार्थो विवक्षितः तज्ज्ञानं वा नाद्य इत्याह ।।अर्थस्येति।। तथा चार्थरूपो भ्रमो निरुपादानः असत्त्वाच्छशशृंगवदित्यनुमानेन निरुपादानत्वसिद्धेरज्ञानेऽर्थरूपभ्रमोपादानत्वाभावान्मद्रीत्याऽसंभव इत्यर्थः। त्वद्रीत्या वाऽसंभव इत्याह ।। त्वन्मते चेति।। तथा चार्थरूपो भ्रमो निरुपादानः सद्विलक्षणत्वादज्ञानवदित्यनुमानेन

(प्रकाशः)

निरुपादानत्वसिद्धेरज्ञाने तदुपादानत्वाभावात्त्वद्रीत्या चासंभव इत्यर्थः। मायिनाऽर्थस्यासद्विलक्षणत्वांगीकारेणासत्त्वानंगीकारान्मद्रीत्या तन्मतेऽसत्त्वेन निरुपादानत्वानुमानायोगात्सद्विलक्षणत्वेनेत्युक्तम्। न द्वितीय इत्याह ॥ज्ञानस्यत्विति॥ ॥त्वन्मत इति॥ तथा चार्थज्ञानं निरुपादानं सद्विलक्षणत्वादित्यनुमानेन निरुपादानत्वे सिद्धेऽज्ञाने तदुपादानत्वाभावात्त्वद्रीत्याऽसंभव इत्यर्थः। मद्रीत्या चासंभव इत्याह ॥मन्मतेत्विति॥ ॥सत्त्वेनेति॥ भ्रम आसीदित्यनुभवादित्यर्थः ॥तत्प्रतीति॥ भ्रमरूपज्ञानं प्रतीत्यर्थः। तार्किकरीत्या आत्मनः समवायिकारणत्वेनोपादानत्वान्नाज्ञानोपादानकत्वं स्वरीत्या तु ''धीर्भीरित्येतत्सर्वं मन एवे''ति श्रुतेरंतःकरणोपादानकत्वेनाज्ञानोपादानकत्वाभावादसंभव इत्यर्थः। मनस्यतिव्याप्तिश्च। नन्वर्थज्ञानात्मको भ्रमः सोपादानो भवितुमर्हति। असद्विलक्षणत्वात् कदाचिदेव सत्त्वेन प्रतीयमानत्वात् घटवत्। कदाचिदेवेति विशेषणं ब्रह्मण्यतिव्याप्तिपरिहाराय। तथा चानेनानुमानेन सोपादानत्वसिद्धेर्न तदुपादानाज्ञानेऽसंभव इत्यत आह ॥सोपादानत्वेचेति॥ तथा च कदाचित्सत्त्वमुपाधिरित्युक्तं भवति। अर्थे उभयरीत्या सत्वाभावात् ज्ञाने त्वद्रीत्या सत्त्वाभावात्साधनाव्यापक इति द्रष्टव्यम् ॥गौरवादिति॥ कदाचित्सत्त्वापेक्षयाऽसद्विलक्षणत्वस्याभावरूपत्वेन गुरुत्वात् द्वितीयस्य शब्दतोऽपि गुरुत्वादिति भावः। सोपादानत्वसाधकत्वदुक्तद्वितीयहेतोस्तुच्छे व्यभिचारश्चेत्याह ॥तुच्छस्यापीति॥ यदुक्तं भ्रमरूपज्ञानस्वरूपस्य सत्त्वेनांतःकरणोपादानकतया नाज्ञानोपादानकत्वमिति तद्युक्तम्। तथात्वे ज्ञानस्य सत्त्वेऽर्थस्य रूप्यस्यापि सत्त्वापत्तेः विषयविषयिणोः समानसत्ताकत्वनियमादित्याशंक्य निषेधति ॥न चेति॥ कुतो न चेत्यतो विषयविषयिणोः समानसत्ताकत्वनियमो नास्ति विषयिणो मिथ्यात्वाद्व्यभिचार इत्याह ॥मिथ्याभूतमिति॥ एवमव्याख्याने ज्ञानसत्त्वेनार्थस्यापि सत्त्वे परेणोक्तेऽज्ञानादेर्मिथ्याभूतत्वेपि विषयस्य ब्रह्मणः सत्त्वोक्तेरसंगतत्वादिति ध्येयमिति संप्रदायविदः ॥मिथ्याभूतमिति॥ अज्ञानादित्रयस्य ब्रह्मव्यतिरेकेण स्वरूपतो मिथ्यात्वादिति भावः। विषयिणः सत्त्वेपि विषयस्य मिथ्यात्वाच्च नोक्तनियम इत्याह ॥संतमिति॥ पूर्वं सामान्यनियमे व्यभिचारमुक्त्वा इदानीं ज्ञानस्य सत्त्वेऽर्थस्यापि सत्त्वमिति परोक्तनियमं एव व्यभिचारमाह ॥सत्येति॥ सत्यचैतन्यरूपत्वेन सत्यत्वादिति भावः। भ्रमरूपज्ञानस्वरूपस्य सत्त्वानंगीकारे तत्सत्त्वग्राहिणानुभवेन विरोध इत्याह ॥एतावंतमिति॥ नन्वासीदित्यनेन न ज्ञानस्य सत्त्वं विषयीक्रियते किंनामासद्वैलक्षण्यमात्रमित्याशंक्यातिप्रसंगमाह ॥असद्वैलक्षण्यमात्रेणेति॥ न सत्त्वेनेत्यर्थः ॥सद्वैलक्षण्येति॥ भ्रमरूपज्ञानस्य सदसद्विलक्षणत्वांगीकारादिति भावः। असद्वैलक्षण्यमात्रस्य सत्त्वानुसंधानप्रयोजकत्वेऽतिप्रसंगांतरमाह ॥अर्थेपीति॥ रूप्येपीत्यर्थः। त्वन्मते तस्यासद्विलक्षणस्वरूपत्वादिति भावः। तथा चैतावंतं कालं रूप्यमासीदित्यनुसंधानं स्यादिति भावः। नन्वारोपितार्थस्य क्वचित्सत्त्वमनुसंधीयत एव। एतावंतं कालं ग्रीवास्थं मुखं आदर्श आसीदित्यनुसंधीयमानत्वादित्यत आह ॥एतावंतमिति॥ मुखं ग्रीवास्थमेव मुखं ॥प्रतिबिंबस्येति॥ तथा च मुखमासीदित्यस्य मुखप्रतिबिंबं आसीदित्यर्थः। नन्वेवं चेत्तर्हिप्रतिबिंबस्यापि मिथ्यात्वात्तत्रैवासीदित्यनुसंधानं प्राप्तमेवेति तत्राह ॥छायादिवदिति॥ अस्तु वा भ्रमस्वरूपं यत्किंचित्। तथाप्यज्ञानस्योपादानत्वं नास्तीत्यसंभव इत्याह ॥किं चेति॥ तथा चाज्ञानं नोपादानं भावविलक्षणत्वादभाववत् अज्ञानं नोपादानं सद्विलक्षणत्वात् खपुष्पवदित्यनुमानद्वयमुक्तं भवति। आद्यानुमानेऽप्रयोजकत्वमतिप्रसंगेन परिहरति ॥अन्यथेति॥ भावविलक्षणस्याप्युपादानत्व इत्यर्थः।

(प्रकाशः)

ननु अज्ञानं उपादानं अभावविलक्षणत्वादसद्विलक्षणत्वाद्वा मृद्वदित्यनुमानाभ्यां भवदनुमाने सत्प्रतिपक्षतेत्याशंकायां भावत्वं सत्वं वा उपाधिः मृदादौ साध्यव्यापकत्वादनिर्वचनीयतया भावाभावविलक्षणे असद्विलक्षणे चाज्ञाने उक्तोपाध्योरभावेन साधनाव्यापकत्वाच्चेत्याशयेनाह ॥उपादानत्वे चेति॥ ॥गौरवादिति॥ अभावरूपत्वादिति भावः। एतावता प्रबंधेनाज्ञाने भ्रमोपादानत्वं नास्तीत्युपपाद्येदानीं भ्रमेऽज्ञानोपादानकत्वं नास्तीत्याह ॥किं चेति॥ ॥यदिति॥ मृद्धट इति मृदनुविद्धतया प्रतीयमानो घटो मृदूपादानको दृष्ट इत्यर्थः ॥अज्ञानमितीति॥ रूप्यमज्ञानं तज्ज्ञानं वा ज्ञानमित्यज्ञानानुविद्धतया न भाति येन तदुपादानकं स्यादित्यर्थः। यत्त्वित्यस्य तन्नेत्यनेनान्वयः। तदुक्तमनुवदति ॥ज्ञानेति॥ अनादित्वाद्यविशेषितमित्यर्थः। अस्य लक्षणस्य प्रपंचेऽतिव्याप्तत्वात्तत्परिहाराय विशेषणं देयमेवेत्याशंक्य परिहरति ॥न चेति॥ प्रपंचस्याज्ञानपरिणामत्वेपि कुतोऽज्ञानलक्षणस्य तत्कार्ये नातिव्याप्तिरित्यत आह ॥न हीति॥ न हि पृथिव्या गंधवत्त्वं लक्षणमित्युक्ते घटेऽतिव्याप्तौ केनचिदुक्तायां तत्परिहाराय केनचिद्विशेषणं दीयते किं नाम तस्यापि पृथिवी विकारत्वेन लक्ष्यांतर्गतत्वान्नातिव्याप्तिरित्येव समाधीयते तद्वदिहापि प्रपंचस्याज्ञानपरिणामत्वेन लक्ष्यांतर्गतत्वान्नाति-व्याप्तिशंकेत्यर्थः ॥जीवन्मुक्तीति॥ भिक्षाटनाद्यन्यथानुपपत्त्येत्यर्थः। आदिशब्देनाज्ञानसंस्कारारब्धकर्मग्रहणम् ॥विप्रतिपन्नमिति॥ विषयावरकत्वानिर्वचनीयत्वादिना विप्रतिपन्नमित्यर्थः ॥शुक्तीति॥ शुक्तिरूप्यादिक-मज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्यं तद्व्यावृत्तस्य साक्षाज्ज्ञाननिवर्त्यस्येत्यर्थः ॥कारणेति॥ प्रपंचादिकार्यं विहाय कारणावस्थं यदनाद्यज्ञानं तस्यैवेह लक्षणीयत्वादित्यर्थः। अयमर्थः। ज्ञाननिवर्त्यत्वं हि कारणावस्थापन्नं यन्मूलाज्ञानं भावरूपं विवादास्पदं तस्यैवलक्षणं न तु सादिशुक्त्याद्यावरकाज्ञानादेः तथा च कारणावस्थस्यैवानाद्यज्ञानस्य लक्ष्यत्वेन तल्लक्षणस्य तत्परिणामे प्रपंचेऽतिव्याप्तिः स्यादेव यथा ''अग्नेराप'' इति श्रुतेरबादिकारणावस्थापन्नस्य सूक्ष्मतेजस एव लिलक्षयिषितत्वे रूपित्वलक्षणस्य तत्परिणामभूतेऽबादौ अतिव्याप्तिः स्यादेव तद्वदित्यर्थः। भेदाभेदसद्भावात्। नन्वेवं पृथिव्या गंधो लक्षणमित्यत्रापि कारणावस्थापन्नसूक्ष्मपृथिव्या एव लिलक्षयिषितत्वे घटादावतिव्याप्तिः स्यादेवेति चेत् इष्टापत्तिरित्याह ॥पृथिवीति॥ ननु तर्हि प्रपंचेऽतिव्याप्तिवारणाय साक्षाज्ज्ञाननिवर्त्यत्वं विवक्षितमिति चेन्न। तथापि ज्ञानप्रागभावेतिव्याप्तिः स्यात्। तस्य साक्षाज्ज्ञाननिवर्त्यत्वात्। ननु ज्ञानप्रागभावे ज्ञानजन्यध्वंसप्रतियोगित्वरूपं ज्ञाननिवर्त्यत्वं नास्ति। अभावाभावो भाव एवेति नियमात्। ज्ञानस्यैव ज्ञानप्रागभावध्वंसरूपत्वेन ज्ञानस्य ज्ञानाजनकत्वादिति चेत् अभावाभावो भाव एवेति नियमात्। ज्ञानस्यैव ज्ञानप्रागभावध्वंसरूपत्वेन ज्ञानस्य ज्ञानाजनकत्वादिति चेत् अभावाभावो भावव्याप्त इति मते प्रागभावध्वंसस्य प्रतियोग्यतिरिक्तत्वात् अन्यथा तन्मतानाश्रयणे विवरणकारोक्तं यदाद्यानुमानं ''प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्ते''त्यादिकं तत्र स्वप्रागभावव्यतिरिक्तेत्याद्यविशेषणं व्यर्थं स्यात् प्रागभावव्यावृत्त्यर्थं हि तद्विशेषणं तद्व्यावृत्तेश्च स्वनिवर्त्यपदेनैव जातत्वात्। अत उक्तमताश्रयणेनैव तद्विशेषणसार्थक्यं वाच्यम्। तथा च ज्ञाननिवर्त्यत्वस्य ज्ञानप्रागभावेऽतिव्याप्तिः स्यादेवेति नाविद्यालक्षणद्वयमपि युक्तमित्याह ॥साक्षादित्यादिना॥

॥ अविद्यालक्षणभंगविवरणम् ॥

## २२. भावरूपाज्ञानप्रत्यक्षभङ्गः

यच्चाज्ञाने प्रत्यक्षं मानमित्युक्तम्। तन्न। त्वन्मतेऽप्यहमर्थस्य भावरूपाज्ञानानाश्रयत्वेनाहमज्ञोऽहं न जानामीत्यादेः प्रामाण्याय ज्ञानाभावविषयत्वावश्यम्भावात्। साक्षिवेद्यसुखदुःखाज्ञानादौ, प्रातिभासिके च भावरूपाज्ञानाभावेन सुखं न जानामि, शुक्तिरूप्यं न जानामीत्यादेः ज्ञानाभावविषयत्वे वक्तव्ये त्वदुक्तमर्थं न जानामीत्यादेरपि तथात्वाच्च। त्वन्मते परोक्षवृत्तेर्विषयावरकाज्ञानानिवर्तकत्वेन परोक्षतो ज्ञातेऽपि न जानामीत्यनुभवापाताच्च। त्वन्मते जडावरकाज्ञानाभावेन त्वदुक्तमर्थं न जानामीत्यादेरपि प्रामाण्याय ज्ञानाभावविषयत्वाच्च। न च जडे आवरणरूपातिशयाभावेऽपि विक्षेपरूपातिशयस्य सत्त्वादज्ञानविषयताऽस्तीति न जानामीत्यनुभव इति वाच्यम्। अपरोक्षतो घटत्वेन ज्ञातेऽपि घटेऽयं पट इति वाक्याभासाद्विक्षेपसद्भावेऽपि घटं न जानामीत्यनुभवाभावात्।

ननु जडे न जानामीत्यनुभवस्य जडावच्छिन्नं चैतन्यं विषय इति चेन्न। निरसिष्यमाणत्वाद्। वृत्तिः चिदुपरागार्थेति मते जडावच्छिन्नचैतन्यावरकाज्ञानस्याप्यभावाच्च। भावरूपाज्ञानविषयत्वेनाभिमतस्याहमज्ञ इति ज्ञानस्य ज्ञानाभावविषयत्वेनाभिमतात् मयि ज्ञानं नास्तीति ज्ञानादघटं भूतलमिति ज्ञानस्य भूतले घटो नास्तीति ज्ञानादिवद्विशेषणविशेष्यभावव्यत्यासं विना इच्छाद्वेषाभावज्ञानयोरिव विषयभेदाप्रतीतेश्च। प्रतियोगिज्ञानाज्ञानाभ्यां ज्ञानाभावज्ञानदूषणं तु स्वव्याहतम्। भावरूपाज्ञानवादेऽपि इदानीं वेदान्तश्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावस्य सत्त्वेन तज्ज्ञानस्य त्वयाऽपि वक्तव्यत्वात्। न च भावरूपाज्ञानेन लिङ्गेन ज्ञानाभावानुमेति वाच्यम्। वृत्तिज्ञानस्य साक्षिवेद्यत्वेन तदभावस्यापि दुःखाद्यभाववत् साक्षिणा अनुपलब्ध्या वा झटिति प्रतीतेः। त्वन्मते जडे भावरूपाज्ञानरूपलिङ्गाभावाच्च। अपरोक्षतो ज्ञाते भावरूपाज्ञानाभावेन तत्र परोक्षज्ञानाभावसिद्ध्यापाताच्च। दुःखादौ प्रातिभासिके च भावरूपाज्ञानाभावेन दुःखादिज्ञानाभावप्रतीत्ययोगाच्च। प्रतियोग्यादिज्ञानाज्ञानाभ्यामनुमित्याऽपि ज्ञानाभावस्य दुर्ग्रहत्वाच्च।

अपि च भावरूपाज्ञानमपि न जानामीति ज्ञानविरोधित्वेनैव भाति। मुग्धोऽस्मीत्यादौ तु प्रलयादिशब्देष्विव नञनुल्लेखमात्रम्। अत एव ज्ञानाभावाभि-

प्रायेणापि मुग्धोऽस्मीत्युच्यते। उक्तं च विवरणे– "अज्ञानमिति द्वयसापेक्षज्ञान-पर्युदासेनाभिधानाद्" इति। अन्यथा ह्यज्ञानस्य ज्ञानविरोधोऽप्रामाणिकः स्यात्। तथा च विरोधनिरूपकभूतज्ञानस्य ज्ञानाज्ञानाभ्यामज्ञानस्यापि ज्ञानं दुर्घटं स्यात्। ज्ञानाभावोऽपि हि प्रमेयत्वादिना ज्ञाने प्रतियोग्यादिज्ञानानपेक्षः। एतेन निपुणे कुशलादिशब्दवद् भावरूपज्ञाने अज्ञानशब्दो रूढ इति निरस्तम्। वृत्तिज्ञान-निवर्त्यस्याज्ञानस्य तद्विरुद्धत्वेन कृप्तावयवशक्त्यैवोपपत्तौ समुदायशक्तिकल्पकाभावात्। शब्दाप्रयोगेऽपि न जानामीति प्रत्यक्षेण ज्ञानविरोधप्रतीतेश्च। एवं च–

अभाव इव भावेऽपि ज्ञानाज्ञानविरोधिता ।
न जानामीत्यतश्चोद्यपरिहारौ समौ तयोः ॥

अपि च भावरूपाज्ञानावच्छेदकविषयस्याज्ञाने अज्ञानज्ञानायोगात् ज्ञाने चाज्ञानस्यैवाभावात् कथं भावरूपाज्ञानज्ञानम्? ननु विरोधनिरूपकज्ञानावच्छेदकस्य च विषयस्य ज्ञानं साक्षिरूपमिति न तद्भावरूपाज्ञानविरोधि, वृत्तेरेव तद्विरोधित्वादिति चेत्। समं भावपक्षेऽपि। अवच्छेदकस्य विषयस्य ज्ञानं साक्षिरूपम्। न जानामीति धीस्तु वृत्तिज्ञानाभावविषयेति सुवचत्वात्। तस्मात् त्वयाऽप्यवच्छेदकस्य विषयस्य सामान्यतो ज्ञानेऽपि विशेषे भावरूपाज्ञानमिति वाच्यम्। तत्समं ज्ञानाभावेऽपि। तद्विशेषज्ञानाभावज्ञानं प्रति च तत्सामान्यज्ञानमेवान्वयव्यतिरेकाभ्यां हेतुः, न तु तद्विशेषज्ञानमित्यविद्याविषयभङ्गे वक्ष्यते।

अपरे तु विशेषस्य स्वरूपेण ज्ञानेऽपि विशेषप्रकारकज्ञानं निषिध्यते। तस्यैव संशयादिविरोधित्वात्। सम्भवति हि सर्वत्र प्रमेयत्वाद्याकारेण विशेषज्ञानमित्याहुः। केचित्तु करतलामलकादिज्ञाने स्वविषयेतरप्रतियोगिकव्यावृत्त्यधिकरणतावच्छेदक-धर्मविषयत्वादिकं प्रसिद्धमिह ज्ञाने निषिध्यत इत्याहुः। अन्ये तु साक्षात् त्वदुक्तार्थविषयकं प्रमाणज्ञानं मयि नास्तीत्यर्थः। न चास्यैव विशिष्टविषयज्ञानस्य प्रमाणत्वात् तद्विशेषणतयाऽर्थस्यापि प्रमाणेनाधिगमात् स्ववचनव्याघात इति वाच्यम्। अस्य साक्षात्तद्विषयत्वाभावात्। साक्षात्प्रमाणविषयत्वस्यैव च सत्त्वप्रयोजकत्वादित्याहुः।

किं चाज्ञानं वृत्त्यग्राह्यं चेत्, तत्रानुमानाद्युक्तिरयुक्ता स्यात्। रहस्यं न जानासीत्यादिपरवाक्यात् स्वनिष्ठाज्ञानधीश्च न स्यात्। वृत्तिग्राह्यं चेत्, तदवच्छेदको

विषयोऽपि तयैव गृह्यते न वा? आद्ये कथं तत्राज्ञानम्? त्वन्मतेऽपि वृत्तेरज्ञानविरोधित्वात्। न च परोक्षवृत्तिरज्ञानविरोधिनी नेति युक्तम्। परोक्षतोऽपि ज्ञाते कदाऽपि न जानामीत्यननुभवात्। अज्ञानानिवृत्तौ परोक्षे व्यवहाराद्ययोगाच्च। यदि च तत्राज्ञाननिवृत्तिं विना वृत्त्यैव व्यवहारसंस्कारादि, तस्य परोक्षेऽपि तां विना वृत्त्यैव तत्स्यात्। विषयस्यापरोक्ष्यं त्वावश्यकाद् वृत्तिगतविशेषादेवेत्युक्तम्। परोक्षवृत्त्या परोक्षभ्रमानिवृत्तिप्रसंगाच्च। अनुमित्या वह्न्यज्ञानं शास्त्रश्रवणेन च धर्माद्यज्ञानं निवृत्तमित्यनुभवाच्च। तस्य ज्ञानाभावविषयत्वे च भावरूपाज्ञानं न सिद्ध्येत्। परोक्षतो ज्ञातेऽप्यपरोक्षभ्रमोऽस्मन्मते उपाध्यादिदोषाद् युक्तः। त्वन्मते तु भ्रमस्याज्ञानोपादानकत्वात् स न स्यादेव। अन्त्ये तद्वदेव विषयाग्रहणेऽपि ज्ञानाभावावच्छेदकस्य ज्ञानस्य ग्रहणसिद्धिः। न किंचिदहमवेदिषमिति परामर्शोऽपि एतावन्तं कालं दुःखं नावेदिषं, शुक्तिरूप्यं नावेदिषमित्यादिवत् ज्ञानाभावविषयः। न च तदा धर्म्यादिज्ञानाभावादभावज्ञानायोगः। भावरूपाज्ञानस्याप्यज्ञानत्वेन प्रतीतौ तदपेक्षणात्। यदि च विषयसामान्यविशेषितमेव ज्ञानं सुषुप्तावज्ञाननिरूपकं तर्हि तदेव तदा ज्ञानाभावनिरूपकमस्तु। ननु तदा स्वरूपेणानुभूतमज्ञानमिदानीं प्रतियोगिविशेषावच्छेदेनानुभूयत इति चेत्, समं ज्ञानाभावेऽपि। अभावस्यापि प्रमेयत्वादिना ज्ञाने तदनपेक्षणात्। यद्वा, नायं परामर्शः। किंत्वानुमानिको ज्ञानाभावानुभवः। अवस्थाविशेषस्य वा, इन्द्रियसंप्रसादेन तदुपरमानुमाने सामग्रभावस्य वा, प्रातर्गजाद्यभाव इव तत्तुल्ययोगक्षेमे आत्मादौ स्मर्यमाणेऽपि नियमेनास्मर्यमाणत्वस्य लिङ्गत्वात्। त्वन्मतेऽप्यहमर्थांशे परामर्शत्वाभावात्। सुषुप्तावहमर्थाभावेनान्यानुभूते अज्ञानांशेऽप्यहमर्थस्य परामष्टृत्वायोगाच्च। सुषुप्तावज्ञानस्याविद्यावृत्तिप्रतिबिंबित-साक्षिवेद्यत्वे जागरणादावपि तद्वेद्यत्वापातेन वृत्त्यभावदशायामज्ञाने सन्देहाद्यापत्त्या केवलसाक्षिवेद्यत्वे वक्तव्ये त्वन्मते नित्यज्ञानस्य संस्काराजनकत्वेनाज्ञानपरामर्शायोगाच्च। अन्यथा तवापि सुषुप्तौ ज्ञानाभावो न सिद्ध्येत्। भावरूपाज्ञानेन लिङ्गेन सोऽनुमीयत इति चेन्न। त्वन्मते जडे भावरूपाज्ञानाभावादित्युक्तत्वात्। साक्षिवेद्य इच्छादौ तदा ज्ञानाभावासिद्ध्यापाताच्च। किं चैवं सुषुप्तिकालीनो रागाद्यभावो न सिद्ध्येत्। न हि तदा रागादिविरोधी द्वेषोऽस्ति, येनाज्ञानेन ज्ञानाभाव इव द्वेषेण रागाभावोऽनुमीयेत।

**न च ज्ञानाभावादेव रागाद्यभावसिद्धिः। प्रकाशमान आत्मादौ तदभावासिद्धेः। तस्मान्न प्रत्यक्षं भावरूपाज्ञाने मानम्।**

**इति भावरूपाज्ञानप्रत्यक्षभङ्गः**

## अद्वैतसिद्धिः

तत्र चाज्ञाने सामन्यतः 'अहमज्ञो मामन्यं च न जानाति' इति प्रत्यक्षं, 'त्वदुक्तमर्थं न जानामि' इति विशेषतः प्रत्यक्षम्, 'एतावन्तं कालं सुखमहमस्वाप्सं न किंचिदवेदिषम्' इति परामर्शसिद्धं सौषुप्तप्रत्यक्षं च प्रमाणम्। न च– अहमर्थस्याज्ञानानाश्रयत्वेन कथमयं प्रत्ययो भावरूपाज्ञानपक्षे उपपद्यत इति– वाच्यम्। अज्ञानाश्रयीभूतचैतन्ये अन्तःकरणतादात्म्याध्यासेन एकाश्रयत्वसंबन्धेनोपपत्तेः। अत एव– जडे आवरणकृत्याभावात् 'घटं न जानामि' इत्यादिप्रतीतेर्ज्ञानाभावविषयत्वे प्रकृतेऽपि तथाऽस्त्विति– निरस्तम्। तत्तदवच्छिन्नचैतन्यस्यैवाज्ञानाश्रयत्वेन तत्रापि तद्व्यवहारोपपत्तेः। न च– साक्षिवेद्ये सुखदुःखाज्ञानादौ प्रातिभासिके च भावरूपाज्ञानाभावेन तत्र न जानामीति प्रतीतिः कथमुपपद्यत इति– वाच्यम्। स्वस्मिन्विद्यमाने साक्षिवेद्ये सुखादौ स्वभ्रमसिद्धे रूप्यादौ च 'न जानामि' इति व्यवहारासंभवात्, परसुखादौ 'न जानामि' इति व्यवहारस्य परोक्षज्ञाननिवर्त्येन प्रमातृगताज्ञानेनैवोपपत्तेः। अत एव परोक्षज्ञानेन प्रमातृगताज्ञाने नाशितेऽपि विषयगताज्ञानसत्त्वेन 'न जानामि' इति व्यवहारापत्तिरिति– निरस्तम्। प्रमातृगताज्ञानकार्यस्य 'न जानामि' इति व्यवहारस्य विषयगताज्ञानेनापादयितुमशक्यत्वात्।

ननु– भावरूपाज्ञानविषयत्वेनाभिमतस्य 'अहमज्ञः' इति प्रत्यपस्य 'मयि ज्ञानं नास्ति' इति ज्ञानाभावविषयात् प्रत्ययात् 'अघटं भूतलम्' इति प्रत्ययस्य 'घटो नास्ति' इति प्रत्ययादिव विशेषणविशेष्यभावव्यत्यासं विना इच्छाद्वेषाभावज्ञानयोरिव विषयभेदाप्रतीतिरिति– चेत्, सत्यम्। धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां ज्ञानसामान्याभावज्ञानस्य व्याहतत्वेन 'मयि ज्ञानं नास्ति' इत्यस्यापि भावरूपाज्ञानविषयत्वेन विषयभेदाप्रतीतेर्युक्तत्वात्। तथा हि– 'मयि ज्ञानं नास्ति' इति प्रतीतिः 'वायौ रूपं नास्ति' इति प्रतीतिवद्या-वद्विशेषाभावान्यसामान्याभावविषया, सामान्यावच्छिन्नप्रतियोगिताकयावद्विशेषाभावविषया वा अभ्युपेया। तथा च तत्कारणीभूतधर्मिप्रतियोगिज्ञानाज्ञानाभ्यां कथं न व्याघातः?

(अद्वैतसिद्धिः)

यत्किञ्चिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वाभावाद्। अभावज्ञाने प्रतियोग्यंशे प्रकारीभूतधर्मस्यैव प्रतियोगितावच्छेदकत्वात्। अन्यथा सामान्याभावसिद्धिर्न स्यात्। यावद्विशेषाभावान्यसामान्याभावानभ्युपगमेऽप्ययं दोषः। यत्किञ्चिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे घटवत्यपि भूतले 'निर्घटं भूतलम्' इति प्रतीतिः स्यात्। 'वायौ रूपं नास्ति' 'पुरो देशे रजतं नास्ति' इत्याद्याप्तवाक्यजन्यप्रतीत्यनन्तरमपि तत्तत्संशयनिवृत्तिर्न स्यात्। एकविशेषाभावबोधनेऽपि विशेषान्तरमादाय संशयोपपत्तेः।

अथ – अभावबोधे प्रकारीभूतधर्मस्यावच्छेदकत्वं पूर्वानुपस्थितमपि संसर्गमर्यादया शाब्दबोधे अन्यत्र च भासते। न ह्यवच्छेदकत्वस्य स्वरूपसंबन्धविशेषस्य ग्रहे अन्या सामग्री क्लृप्ता। तथा च तत्तद्विशेषाभावानां तत्तद्विशेषावच्छिन्नप्रतियोगिताकत्वात्, सामान्यावच्छिन्नप्रतियोगिताकत्वं यावद्विशेषाभावकूटे वा व्यासज्यवृत्तितदतिरिक्तसामान्याभावे वा प्रत्येकविश्रान्तमिति तादृगभावप्रतीतेर्यावद्विशेषप्रतीतिविरोधित्वात् कुतो विशेषसंशयादिरिति चेत्, सत्यम्। प्रकृतेऽपि ज्ञानत्वसामान्यावच्छिन्नप्रतियोगिताकाभावप्रतीतिर्यावज्ज्ञानविशेषविरोधिनीति कथं तत्तत्कारणत्वाभिमतज्ञानविशेषे सति सा न व्याहन्यते? तथा च क्लृप्ताभावप्रतीतिवैलक्षण्येऽवश्यकल्प्ये लाघवाद्विषयस्यैवाभाववैलक्षण्यं कल्पयितुमुचितम्। विषयावैलक्षण्ये प्रतीतिवैलक्षण्यायोगात्। विषयाज्ञानमनुभूय च पुरुषस्तन्निवृत्त्यर्थं विचारे प्रवर्तत इति सर्वानुभवसिद्धम्। तद्यदि ज्ञानविशेषाभावो 'न जानामी'ति प्रतीतेर्विषयः, तदा ज्ञातेऽपि तथा प्रतीत्यापातः। तद्विचारार्थं च प्रवृत्तिः स्यात्। सामान्याभावे च बाधकमुक्तमेव। तस्मादभावविलक्षणमेवाज्ञानं 'मयि ज्ञानं नास्त्यहमज्ञः' इत्यादि– धीविषय इति सिद्धम्।

ननु अभावविलक्षणमप्यज्ञानं 'न जानामि' इति ज्ञानविरोधित्वेनैव भासते। मोहादिपदेऽपि प्रलयादिपदवत्तदनुल्लेखमात्रम्। उक्तं च विवरणे– 'अज्ञानमिति द्वयसापेक्षज्ञानपर्युदासेनाभिधानाद्' इति। अन्यथा ज्ञानस्याज्ञानविरोधित्वमप्रामाणिकं स्यात्। तथा च विरोधनिरूपकज्ञानस्य ज्ञानाज्ञानाभ्यां तवापि कथं न व्याघातः? एवं निर्विषयाज्ञानाप्रतीतेर्विषयज्ञानाज्ञानयोरपि व्याघात आपदनीयः। तथा च

(अद्वैतसिद्धिः)

यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥

इति न्यायेन उभयपरिहरणीयस्य व्याघातस्य ज्ञानाभावपक्ष एवापादनमनुचितमिति– चेन्न। प्रमाणवृत्तिनिवर्त्यस्यापि भावरूपाज्ञानस्य साक्षिवेद्यस्य विरोधनिरूपकज्ञानतद्व्यावर्तकविषयग्राहकेण साक्षिणा तत्साधकेन तदनाशाद्व्याहत्यनुपपत्तेः। अज्ञानग्रहे विषयगोचरप्रमापेक्षायां व्याहतिः स्यादेव, सा च नास्ति। तदुक्तं विवरणे– 'सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव' इति। न चैवं ज्ञानाभावपक्षेऽपि विषयादिज्ञानं साक्षिरूपम्। 'न जानामि' इति धीस्तु प्रमाणवृत्त्यभावविषयेति न व्याहतिरिति– वाच्यम्। भावरूपाज्ञानस्य साक्षात् साक्षिवेद्यत्वेन तदवच्छेदकविषयादेस्तद्द्वारा साक्षिवेद्यत्वसंभवेऽपि अभावस्यानुपलब्धिगम्यत्वेन साक्षात् साक्षिवेद्यत्वाभावात् न तद्द्वारा तदवच्छेदकविषयादेः साक्षिवेद्यत्वमिति वैषम्यात्। यद्यपि ज्ञानं साक्षिवेद्यं, तद्द्वारा तदवच्छेदको विषयश्च साक्षिवेद्यः, तथापि ज्ञानाभावो न साक्षिवेद्यः, तस्यानुपलब्धत्वात्। उत्पन्नं च ज्ञानं साक्षात् साक्षिवेद्यम्। तस्मिंश्चोत्पन्ने तद्विषयोऽपि स्फुरतीति कुतो ज्ञानाभावोऽपि? अज्ञानविशेषणतया तु अनुत्पन्नमपि ज्ञानं साक्षिवेद्यमिति न दोषसाम्यम्। न च– अवच्छेदकस्य विषयादेः प्रागज्ञाने कथं तद्विशिष्टाज्ञानज्ञानम्? विशेषणज्ञानाधीनत्वाद्विशिष्टज्ञानस्येति– वाच्यम्। विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वे मानाभावात्। प्रतियोगित्वाभावत्वयोः पूर्वानुपस्थितयोरपि तार्किकैरभावबोधे प्रकारीभूय भानाभ्युपगमात्। तथापि– विशेषणतावच्छेदकप्रकारकज्ञानं विना कथं विशिष्टवैशिष्टबुद्धिरिति– चेन्न। विशिष्टवैशिष्ट्यबुद्धित्वेन विशेषणतावच्छेदकप्रकारकज्ञानत्वेन च कार्यकारणभावे मानाभावात्। प्रत्यक्षत्वादिरूपेण पृथक् पृथक् क्लृप्तकार्यकारणभावेनैवोपपत्तेः विशिष्टवैशिष्ट्यबुद्धित्वस्यार्थसमाजसिद्धत्वात्। इह च सामग्रीतुल्यत्वेन 'विशेष्ये विशेषणं तत्र च विशेषणान्तरम्' इति न्यायेन विशिष्टवैशिष्ट्यज्ञानसंभवात्। अन्यथा तार्किकाणामपीश्वरस्य भ्रान्तिज्ञत्वं न स्यात्। भ्रमविषयस्य स्वातन्त्र्येण ग्रहे भ्रान्तत्वापत्त्या भ्रमावच्छेदकतयैव तद्ग्रहणं वाच्यम्। तथा च क्व प्राक्तदवच्छेदकग्रहनियमः? ग्रहणसामग्रीतुल्यत्वं च प्रकृतेऽपि समम्।

ननु– श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावस्य सत्त्वेन तज्ज्ञानं त्वयापि वाच्यम्। तथा च तत्रापि व्याहतिस्तुल्येति– चेन्न। श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानरूपस्य प्रतियोगिनो

(अद्वैतसिद्धिः)

ज्ञानाज्ञानाभ्यां व्याहत्यभावात्। न हि श्रवणादिसाध्यत्वमोक्षहेतुत्वादिप्रकारकं ब्रह्मज्ञानज्ञानं ब्रह्मज्ञानमपि सत् श्रवणादिसाध्यम्, मोक्षहेतुर्वा। येन तस्मिन् सति तादृग्ज्ञानप्रागभावो व्याहन्येत।

नन्वेवं– 'न जानामि' इति धियो ज्ञानाभावविषयत्वेऽपि न प्रतियोगिज्ञानादिना व्याहतिः। सामान्यतो विषयप्रतियोगिज्ञानेऽपि विशेषतस्तदभावसंभवात्। अन्यथा प्रागभावधीर्न स्यात्। तत्प्रतियोगिविशेषस्य सामान्यधर्मं विना विशेषतो ज्ञातुमशक्यत्वादिति– चेन्न। विशेषज्ञानाभावे हि विशेषज्ञानत्वावच्छिन्नं प्रतियोगीति तस्य ज्ञाने स विशेषोऽपि ज्ञात एवेति विशेषज्ञानाभावव्याघातात्। यत्किञ्चिद्विशेषाभावश्च न सामान्यावच्छिन्नप्रतियोगिताक इत्युक्तम्। प्रतियोगितावच्छेदकप्रकारकज्ञानाभावेन प्रागभावप्रतीतिरसिद्धैव। ननु– प्रतियोगितावच्छेदकप्रकारकज्ञानं नाभावज्ञाने कारणम्। किंत्वभावज्ञाने भासमानप्रतियोगिवृत्तिधर्मप्रकारकं ज्ञानम्। सामान्यलक्षणप्रत्यासत्त्यभ्युपगमे तु प्रतियोगिविषयत्वमपि तस्याधिकम्। इतरथा तु तदेव इष्टवृत्तिसामान्यधर्मप्रकारकज्ञानमिवासिद्धव्यक्तिविषयेच्छाकृत्योः। न च– प्रतियोगितानवच्छेदकधर्मेण कथं प्रतियोगिता गृह्यतामिति– वाच्यम्। विशेषावच्छिन्नाया व्याप्तेरिव सामान्येन ग्रहणसंभवात्। तथा हि– 'इदमभिधेयवत्, प्रमेयात्' इत्यनुमाने 'यत्र प्रमेयं तत्राभिधेयम्' इति व्याप्तिग्रहणसमये वृत्तिमत्प्रमेयत्वावच्छेदेनैव सामानाधिकरण्यरूपव्याप्तिसत्त्वेऽपि तस्याः प्रमेयत्वरूपेणैव ग्रहणं, न तु वृत्तिमत्प्रमेयत्वेन, गौरवात्। वृत्तिमत्त्वविशेषणस्य व्यभिचारावारकत्वेन वैयर्थ्याच्च। अवृत्तिषु साध्यसामानाधिकरण्यरूपव्याप्त्यभाववत् साध्याभावसामानाधिकरण्यरूपव्यभिचारस्याप्यभावात्। व्यर्थविशेषणत्वरहितत्वे सति व्यभिचारिव्यावृत्तत्वमात्रेणैव व्याप्यतावच्छेदकत्वसंभवाच्च। तथा च यथा वृत्तिमत्प्रमेयगतापि व्याप्तिः प्रमेयत्वेनैव गृह्यते, तथा तत्तन्नीलादिव्यक्तिगता प्रतियोगिता नीलत्वादिरूपेण गृह्यत इति न काचिदनुपपत्तिः। एवं च 'इहेदानीं घटो नास्ति' इति प्रतीतिरिव घटोपादानगततत्प्रागभावविषया 'मयि ज्ञानं नास्ति' इति प्रतीतिरपि प्रमातृगततत्प्रागभावविषयेति न काप्यनुपपत्तिरिति– चेन्न। अभावज्ञाने प्रतियोग्यंशे भासमानस्य धर्मस्यैव प्रतियोगितावच्छेदकतया यत्किञ्चिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे घटवत्यपि भूतले 'निर्घटं भूतलम्' इति, घटज्ञानवत्यपि स्वस्मिन् 'मयि घटज्ञानं नास्ति' इति च प्रतीतेरापत्तेः पूर्वोक्तदोषात्। यत्किञ्चिद्घटज्ञानं घटाभावज्ञाने प्रतिबन्धकमिति

(अद्वैतसिद्धिः)

तु ज्ञानज्ञानेऽपि तुल्यम्। उदाहृतव्याप्तिग्रहणे तु बाधकाभावात् सामान्यावच्छेदेऽपि न दोषः।

अथैवं प्रागभावप्रतीतिरेव न स्यात्। न स्यादेव। 'घटो भविष्यति' इति प्रतीतेः धात्वर्थभविष्यत्ताविषयत्वेन प्रागभावाविषयत्वात्। अन्यथा दिनान्तरोत्पत्स्यमानघटे एतद्दिनवृत्तिप्रागभावप्रतियोगित्वेन 'अद्य घटो भविष्यति' इति धीप्रसङ्गः। भविष्यत्त्वं च प्रतियोगितद्ध्वंसानाधारकालसंबन्धित्वम्। ध्वंसत्वं च प्रागभावानङ्गीकर्तृमते कादाचित्काभावत्वमेव। तदङ्गीकर्तृमतेऽपि प्रतियोग्यजनककादाचित्काभावत्वम्। जनकत्वं च स्वरूपसंबन्धविशेषो न प्रागभावघटितः। प्रागभावस्याजनकत्वापत्तेः। अन्यथात्माश्रयात्। अतः प्रागभावमङ्गीकुर्वतोऽपि तत्प्रत्यक्षत्वं दुर्लभम्। तमनङ्गीकुर्वतस्तु न काऽपि हानिः। 'इहेदानीं घटो नास्ति' इति प्रतीतिस्तु सामान्यधर्मावच्छिन्नप्रतियोगिताकतत्कालावच्छिन्नयावद्विशेषाभावविषया, समयविशेषस्याप्यभावावच्छेदकत्वात्। अन्यथा 'आद्यक्षणे घटो नीरूपः' इत्यादिप्रतीतिर्न स्यात्।

अथ– अस्मिन्पक्षे सामान्याभावो न सिध्येदिति– चेत्, प्रागभावाभ्युपगमेऽपि तुल्यमेतत्। सामान्याभावप्रागभावयोः सुन्दोपसुन्दयोरिव परस्परपराहतत्वात्। तथा हि– प्रागभावसिद्धौ विशेषाभावस्यापि सामान्यावच्छिन्नप्रतियोगिताकत्वात् न तावन्मात्रप्रमाणकसामान्याभावसिद्धिः। सामान्याभावसिद्धौ च विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वाभावात् कादाचित्काभावस्य च सामान्याभावत्वायोगात् न सामान्यधर्मावच्छिन्नप्रतियोगिताकविशेषप्रतीतिमात्रशरणप्रागभावसिद्धिरिति न तदुभयमपि विपश्चितां चेतसि चमत्कारमावहति। ननु– यावद्विशेषाभावनिश्चयेऽपि 'रूपं वायुवृत्ति न वा', 'वायू रूपवान्न वा' इति रूपाभावसन्देहात् निश्चिते च संशयायोगाद्यावद्विशेषाभावान्यसामान्याभावसिद्धिः। अत एतावन्त्येव रूपाणीति निश्चयदशायामेतादृशसंशयस्याननुभूयमानत्वेन तदनिश्चयदशायामेवैतादृशः संशयो वाच्यः। तथा च 'रूपत्वं पार्थिवाप्यतैजसरूपत्रितयातिरिक्तवृत्ति भविष्यति' इत्यधिकसंभावनया अनिश्चितेष्वेव संशयः। उक्तसंभावनाविरहसहकृतनिश्चयस्यैव प्रतिबन्धकत्वादिति– चेन्न। एवं प्रतिबन्धककल्पने मानाभावाद्। उक्तसंभावनाविरहदशायामप्येतादृशसंशयदर्शनाच्च।

(अद्वैतसिद्धिः)

ननु– यथा यावद्विशेषाभावेभ्योऽतिरिक्तः सामान्याभावो रूपस्य संशयकोटिः, तथा रूपसामान्यमपि यावद्विशेषेभ्योऽतिरिक्तं संशयकोटिर्नाभ्युपगन्तुं शक्यते। तथा च कथं रूपस्य संशयकोटित्वम्? सर्वरूपाभावनिश्चयात्। यदि तु नीलपीताद्यभावत्वेन निश्चयेऽपि रूपाभावत्वेनानिश्चयाद्रूपसंशय इति ब्रूषे, तदा किं सामान्याभावेन? रूपत्वावच्छिन्न-प्रतियोगिताकाभावत्वेन संशयसंभवात्। धर्मिकल्पनातो धर्मकल्पनाया लघुत्वेन यावद्विशेषाभावानामेव रूपत्वावच्छिन्नप्रतियोगिताकत्वकल्पनाद्। अतो न यत्किञ्चिदभावमादाय 'घटो नीरूपः' इति प्रतीतिप्रसङ्ग इति– चेन्न। यावद्विशेषाभावेषु यद्रूपत्वावच्छिन्न-प्रतियोगिताकत्वं, तत् प्रत्येकविश्रान्तं, व्यासज्यवृत्ति वा? आद्ये यत्किञ्चिदभावमादाय 'घटो नीरूपः' इति प्रतीतिप्रसङ्गः। द्वितीये, तत्तद्रूपत्वावच्छिन्नप्रतियोगिताकत्वस्या-व्यासज्यवृत्तिस्वभावत्वेन तद्व्यतिरिक्तं रूपत्वावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्ति कल्पनीयम्। तद्वरं रूपत्वावच्छिन्नप्रतियोगिताक एक एवाभावः कल्प्यते। ममैकोऽभावः रूपत्वावच्छिन्नप्रतियोगिताकत्वं चेति वस्तुद्वयं कल्प्यम्। तव तु रूपत्वावच्छिन्नप्रतियोगिताकत्वं तस्य च व्यासज्यवृत्तित्वेन बहुष्वभावेषु प्रत्येकं संबन्धा इति बहु कल्प्यम्। 'धर्मिकल्पनातो धर्मकल्पनाया लघुत्वम्' इति न्यायस्तु कल्पनीयाधिक्यापेक्षः। किं च घटद्वये यावद्विशेषाभावसत्त्वेऽपि रूपसामान्याभावबुद्ध्यनुदयाद् ऐकाधिकरण्यावच्छेदेनाप्यभावा विशेषणीयाः। तथा चातिगौरवम्। अपि च व्यासज्यवृत्तिधर्मग्रहे यावदाश्रयग्रहस्तद्भेदग्रहश्च हेतुः। अगृहीतेष्वभिन्नतया वा गृहीतेषु वस्त्रादिषु द्वित्वादिबुद्ध्यनुदयात्। तथा च यावदभावतद्भेदाग्रहे प्रथमत एव नीरूप इति धीर्न स्यात्। व्यासज्यवृत्तिसामान्यप्रतियोगिता-कत्वस्याग्रहणात्। अतः सामान्याभावस्य प्रामाणिकत्वात् कथं तत्पराहतिरिति– चेत्, अत्र ब्रूमः– एवं तर्हि सामान्यप्रकारेण विशेषाभावाप्रतीतेर्ज्ञानविशेषप्रागभावो न जानामीति धियो ज्ञानत्वावच्छिन्नप्रतियोगिताको न विषय इति सिद्धं नः समीहितम्। न हि प्रागाभावोऽपि कश्चित्सामान्याभावोऽस्ति। येन तत्प्रतियोगिता सामान्यधर्मेणावच्छिद्येत, विशेषाभाव-प्रतियोगिता तु तत्तद्घटत्वादिना विशेषेणावच्छिद्यते। न च तेन तेन रूपेण भविष्यद्घटादि ज्ञातुं शक्यम्। तज्जन्मानन्तरं तु तत्तद्रूपेण तज्ज्ञानसंभवेऽपि न प्रागभावधीः प्रत्यक्षा स्यात्। तदानीं प्रागभावासत्त्वात्। प्रत्यक्षस्य विषयजन्यत्वात्। सामान्यप्रकारकज्ञानं च न विशेषाभावज्ञाने हेतुरित्युक्तम्। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावत्व-

(अद्वैतसिद्धिः)

प्रकारकाभावज्ञाने हेतुत्वात्। तस्यानुमानगम्यत्वेऽपि 'न जानामि' इति धियोऽपरोक्षायास्तद्विषयत्वायोगात्। अव्यभिचारिलिङ्गाद्यभावात्तदनुमानमपि दूरनिरस्तमेव। ननु– 'इदं मा भूत्' इतीच्छाविषयतया तत्सिद्धिः। न, प्रागभावस्य स्वरूपतोऽसाध्यत्वेन प्रतियोगिजनकविघटनेन तत्संबन्धस्येवात्यन्ताभावसंबन्धस्यापि साध्यत्वात्तेनैवान्यथासिद्धेः।

अथ– उत्पन्नस्य द्वितीयक्षणे पुनरुत्पत्त्यभावात्तत्पूर्वक्षणे सामग्र्यभावो वाच्यः। स च प्रागभावाभावादेव। अन्यहेतूनां सत्त्वादिति– चेन्न। सामयिकात्यन्ताभावेनैवान्यथासिद्धेः। उत्पन्नस्यैव स्वोत्पत्तिविरोधित्वाच्च। अपि च सामग्री कार्यसत्त्वे प्रयोजिका, न तु तस्याऽद्यकालसंबन्धरूपोत्पत्तावपि। आद्यकालसंबन्धो हि स्वसमानकालीनपदार्थध्वंसानाधारकालाधारत्वम्। तत्र सामग्री कार्यस्य कालाधारत्वांशमात्रे प्रयोजिका, न तु विशेषणांशेऽपि। तस्य तादृक्पदार्थध्वंससामग्रीविरहादेव सिद्धेः। पाकजरूपादिभेदोऽप्यग्निसंयोगभेदात् पूर्वरूपादिध्वंसभेदाद्वा, न तु प्रागभावभेदात्। प्रतियोगिभेदं विना प्रागभावभेदायोगाच्च। नाप्युपादानत्वव्यवस्था तत्र मानम्। तन्तुत्वादिनैव तत्सिद्धेः। अन्यथा प्रागभावस्य संबन्धिविशेषोऽपि कुतः सिद्ध्येत्? न च तदत्यन्ताभाववतः कथं तदुपादानत्वम्? संबन्धान्तरेण त्वयाऽप्यभ्युपगमात्समयावच्छेदतदनवच्छेदाभ्यां वैलक्षण्याभ्युपगमाच्चेत्यलमतिविस्तरेण।

एवं सामान्याभावोऽपि गौरवपराहत एव। तथा हि– सामान्यावच्छिन्नप्रतियोगिताकत्वं, अभावः, तस्य च तत्तदधिकरणसंबन्धा इति त्रयं वा कल्प्यताम्? क्लृप्ततत्तदधिकरणसंबन्धानामेकाधिकरणवृत्तित्वावच्छेदेन सिद्धानामभावानां सामान्यावच्छिन्नप्रतियोगिताकत्वं, तस्य च व्यासज्यवृत्तित्वमिति द्वयं वा कल्प्यताम्। तत्रोत्तरः पक्ष एव प्रेक्षावद्भ्यो रोचते। आद्यक्षणे 'घटो नीरूपः' इति प्रतीतेः सर्वसिद्धत्वाद्। यावदाश्रयतद्भेदग्रहस्य द्वित्वादिग्रहे हेतुत्वेऽपि उक्तप्रतियोगिताग्रहे हेतुत्वानभ्युपगमात्। कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात्। न चैवं– अतिलाघवात् क्लृप्तानामधिकरणानामेवाभावधीहेतुत्वमस्तु, किं विशेषाभावैरपीति– वाच्यम्। अस्माकमिष्टापत्तेः। घटाभावो नेत्याद्यवतिरिक्ताभावस्य त्वयाऽप्यनभ्युपगमेन भावस्याप्यभावत्वप्रकारकप्रमाहेतुत्वस्योभयवादिसिद्धत्वात्।

यदपि कश्चिदाह– प्रतियोगितावच्छेदकभेदस्याभावभेदनियामकत्वाद्विशेषाभावान्यसामान्याभावसिद्धिः। अन्यथा अभावभेदासिद्धेः। प्रतियोगिभेदस्याभावभेदकत्वे एकघट-

(अद्वैतसिद्धिः)

प्रतियोगिकस्य प्रागभावादिचतुष्टयस्याभेदप्रसङ्गाद्। अवच्छेदकभेदात्तु तद्भेदे न कोऽपि दोषः। क्वचित्तादात्म्यस्य, क्वचित्संसर्गस्य, क्वचित् पूर्वापरकालीनतत्तद्घटत्वादेश्च भेदात्– इति। तन्न। संसर्गप्रतियोगिविशेषणसाधारणस्यैकस्यावच्छेदकत्वस्य दुर्वचत्वात्। तादात्म्यादेश्च प्रतियोगितावच्छेदकत्वे मानाभावात्। भेदसिद्धिस्तु भाववदभावस्यापि विरुद्धधर्माध्यासादेव। अवच्छेदकभेदस्याभावभेदनियामकत्वं लिङ्गविधया तज्ज्ञापकत्वमेव वाच्यम्, न तु तज्जनकत्वम्। तच्च न। विपक्षबाधकतर्काभावेन सामानाधिकरण्याभावेन च व्याप्तेरेवासिद्धेः। अत एव– तदितरधर्मावच्छिन्नप्रतियोगिताकत्वं तदवच्छिन्नप्रतियोगिताकान्यत्वव्याप्यमित्यपि– निरस्तम्। एवं चावृत्तीनां गगनादीनां समनियतानां चाऽन्येषां धर्माणामेक एवात्यन्ताभावः, युगपद्भिनष्टानामुत्पन्नानां वा समानदेशानामसति बाधके एक एव ध्वंसः प्रागभावो वा, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽपि चेदभावः प्रामाणिकः, तदा तस्यैकस्यैव प्रतियोगिताः सर्वैरेव व्यधिकरणैः सर्वैश्च समानाधिकरणैः संबन्धैरेवावच्छिद्यन्ताम्। आकाशाभाव एव वा तथाऽऽस्ताम्। एकेनैवोपपत्तावभावभेदकल्पने मानाभावात्। न च– एवमेक एव जगतीतले भवत्वभावः। स एव तत्तदवच्छेदकदेशकालादिभेदेन तत्तद्व्यवहारभेदं जनयिष्यतीति किमधिककल्पनयेति– वाच्यम्। उपपद्यते चेदस्तु। प्रकृते तु न बाधकं किंचित्। अत एव वैशेषिकाणां स्वाभ्युपगतकालपदार्थस्यैव सर्वव्यवहारहेतुत्वोपपत्तौ न पदार्थान्तरसिद्धिरित्यद्वैतवादिनो वदन्ति। तदेवं 'अहमज्ञः' इति ज्ञानस्याभावज्ञानसामग्रीविलक्षणसामग्रीजन्यत्वादभावविलक्षणविषयत्वं सिद्धम्।

एवं 'त्वदुक्तमर्थं न जानामि' इति प्रत्यक्षस्यापि। ननु– 'साक्षात्त्वदुक्तार्थविषयं प्रमाणज्ञानं मयि नास्ति' इत्येतद्विषयकमुदाहृतज्ञानम्। तच्च न साक्षादर्थविषयम्। प्रमाणज्ञानावच्छेदकतयाऽर्थस्य भानाद्, अतो न व्याघात इति– चेन्न। साक्षात्त्वदुक्तार्थमवेत्य हि तदभावो ग्राह्यः। तज्ज्ञानं च न साक्षिणा। स्वस्मिंस्तादृक्प्रमाणज्ञानाभावात्। अन्यनिष्ठं तु शब्दादिना ग्राह्यम्। शब्दादिश्च त्वदुक्तार्थं बोधयन्नेव तद्विषयत्वं ज्ञाने बोधयेत्। तथा च प्रथमतस्त्वदुक्तार्थविषयकं साक्षादेव ज्ञानमागतमिति तन्निषेधे न कुतो व्याघातः? अत एव– विशेषस्य स्वरूपतो ज्ञानेऽपि विशेषप्रकारकज्ञानाभावो न व्याहत– इत्यपास्तम्। करतलामलकज्ञाने स्वविषयव्यावर्तकधर्मविषयत्वं प्रसिद्धमिह निषिध्यत इत्यपि न। त्वदुक्तत्वस्यापि मदुक्ताद्व्यावर्तकत्वेन सामान्यतो व्यावर्तकधर्मविषयत्वस्य निषेद्धुमशक्यत्वात्।

(अद्वैतसिद्धिः)

ननु– अवच्छेदकतया विशेषज्ञाने जातेऽपि न व्याहतिः। तथा हि– न हि विशेषज्ञानाभावस्त्वदुक्तार्थविषयकज्ञानाभावो वाऽत्र प्रतीयते। किं तु त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानाभावः। तत्र च त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानत्वेन प्रतियोगिज्ञानेऽपि तादृक्प्रकारकतद्विशेष्यकज्ञानाभावसंभवः। अस्य ज्ञानस्य ज्ञाने विशेष्ये विशेषप्रकारकत्वप्रकारकत्वात्। यत्रापि 'त्वदुक्तविशेषं न जानामि' इत्यभिलापः, तत्राप्येवमेव व्याहत्यभावः कथंचिदुन्नेयः। न च यत्रोक्तप्रतियोग्यप्रसिद्धिः तत्र कथमभावप्रतीतिरिति– वाच्यम्। समवेतवाच्यत्वं नास्तीत्यत्रेव विशेष्ये विशेषणाभावविषयत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावविषयत्वेन वोपपत्तेरिति– चेन्न। अनुभवविरोधाद्। विशेषज्ञानाभावस्य त्वदुक्तार्थज्ञानाभावस्य वाऽनभ्युपगमे तद्विषयज्ञानसत्त्वेन तद्व्यवहारापत्तेश्च। न चैवं दृश्यते। स्वतःप्रामाण्यमते तु तत्प्रकारकत्वे तद्विशेष्यकत्वे च गृह्यमाणे तद्वत्त्वग्रहणस्यावश्यकतया तदंशे तत्प्रकारकतद्विशेष्यकत्वस्य तादृशप्रतियोगिज्ञाने संभवात् स्पष्ट एव व्याघातः। भावरूपाज्ञानपक्षे तु सर्वस्यापि साक्षिवेद्यतया न व्याघात इत्युक्तम्। तदेवं 'त्वदुक्तमर्थं न जानामि' इति प्रत्यक्षं भावरूपाज्ञानविषयमिति सिद्धम्।

'एवमेतावन्तं कालं न किंचिंदवेदिषम्' इति परामर्शसिद्धं सौषुप्तं प्रत्यक्षमपि भावरूपाज्ञानविषयमेव। ननु– परामर्शः किमनुमानं, किं वा स्मरणम्? आद्ये ज्ञानाभाव एवानुमीयताम्, किं भावरूपाज्ञानेन? तथा हि– संप्रतिपन्नोदयास्तमयकालवद्विवादपदयोरप्युदयास्तमययोरन्तरालकालमनुमाय तत्कालमहं ज्ञानाभाववान्, अवस्थाविशेषवत्त्वात्, ज्ञानसामग्रीविरहवत्त्वात्, तुल्ययोगक्षेम आत्मादौ स्मर्यमाणेऽपि तद्वत्तया नियमेनास्मर्यमाणत्वाद्वेति प्रयोगसंभवात्। द्वितीये तु नास्त्युपपत्तिः। संस्कारासंभवाद्। विनश्यदेव हि ज्ञानं संस्कारं जनयति, विना व्यापारं व्यवहितकार्यजननाक्षमत्वाद्। अविनश्यता तु तेन स्वयमेव तत्कार्यस्य जनयितुं शक्यत्वात् किमिति संस्कारो जन्येत? न हि संस्कारोऽपि प्रत्यक्षः। येन कार्यान्यथानुपपत्तिमन्तरेणापि अभ्युपेयेत। सौषुप्तं चानाद्यज्ञानोपरक्तं साक्षिचैतन्यरूपं ज्ञानं स्वतो वा उपाधितो वा न विनश्यतीति संस्कारं कथं जनयेत्? तदभावात् कथं स्मर्येत, अस्मर्यमाणं वा कथं प्रमाणत्वेनोदाह्रियेतेति– चेन्न। न तावदनुमानं तत्र संभवति। हेतोः पक्षविशेषणस्य चाज्ञानात्। न हि ज्ञानाभावमन्तरेणावस्थायां विशेषो वक्तुं शक्यः। ज्ञानसामग्रीविरहश्च ज्ञानाभावानु-

(अद्वैतसिद्धिः)

मेयत्वेनान्योन्याश्रयग्रस्तः। न चेदानीन्तनेनेन्द्रियप्रसादेन पूर्वकालीनं तदुपरममनुमाय सामग्रीविरहानुमानम्। इन्द्रियप्रसादस्य सुखानुभवहेतुकस्य तदुपरमहेतुकत्वासिद्धेः। नियमेनास्मर्यमाणत्वं च यथाश्रुतं वा सुषुप्तिकालावच्छेदेनेति वा? आद्ये असिद्धिः। द्वितीये तूपेक्षणीयज्ञानाभावो न सिध्येत्। तत्रैव व्यभिचारश्च।

न च– तर्हि प्रातरनुभूतचत्वरे गजज्ञानाभावं कथमिति– वाच्यम्। ज्ञानानुपलब्ध्यैवेत्यवेहि। अनुपलब्धिज्ञानं च भावरूपाज्ञानेन लिङ्गेन। तथा हि– पूर्वकालेऽहं, गजज्ञानाभाववान्, गजाज्ञानवत्त्वात्, यन्नैवं तन्नैवम्, यथा गजज्ञानवानहमिति। एवं सर्वत्राज्ञानस्य ज्ञानाभावव्याप्यत्वेन तदनुमापकत्वम्। न च– सुषुप्तिकाले ज्ञानाभावानुमानार्थं भावरूपाज्ञानमिव रागाभावानुमार्थं द्वेषोऽपि स्वीकरणीयः, तद्विरोधिपदार्थानुभवं विना तदभावानुमानायोगादिति– वाच्यम्। भावरूपाज्ञानेन ज्ञानाभावेन वा रागाभावानुमानसंभवात्। तस्यापि तद्विरोधित्वात्। अथापरोक्षतो ज्ञाते त्वज्ञानाभावात् कथं परोक्षज्ञानाभावानुमानम्? सामग्रीविरहादिनेति गृहाण। न चात्राप्यन्योन्याश्रयः। शब्दादीनां योग्यानां योग्यानुपलब्ध्या अभावनिश्चयेन परोक्षज्ञानविरहज्ञानं विनैव सामग्रीविरहनिश्चयात्। सुषुप्तिकाले चेन्द्रियादिघटितसामग्रीविरहस्य फलाभावं विना ज्ञातुमशक्यत्वेनान्योन्याश्रयोक्तेः। न च स्मरणपक्षे संस्कारानुपपत्तिः। अज्ञानस्याज्ञानवृत्तिप्रतिबिम्बितसाक्षिभास्यत्वेन वृत्तिनाशादेव संस्कारोपपत्तेः। अज्ञानवृत्तिप्रतिबिम्बितचैतन्यस्यैव साक्षिपदार्थत्वात्। न च– जागरेऽप्यज्ञानस्य वृत्तिवेद्यत्वे वृत्त्यभावदशायां संशयाद्यापत्तिरिति– वाच्यम्। अज्ञानविषयाज्ञानाभावेन तदयोगात्। संशयादेस्तत्कारणीभूताज्ञानसमानविषयत्वनियमात्। भावत्वादिना संशये त्विष्टापत्तिरेव। भावत्वादेः साक्षिवेद्यत्वाभावेनाज्ञानविषयत्वाद्। अज्ञानस्य स्वरूपेणैव साक्षिवेद्यत्वात्। ननु– तदा ज्ञानाभावोऽपि स्वरूपेणैव भासताम्। सप्रतियोगिकत्वेनाभावज्ञान एव प्रतियोगिज्ञानस्य हेतुत्वाद्। अन्यथा 'प्रमेयम्' इति ज्ञानेऽप्यभावो न भासेतेति– चेन्न। साक्षिणा तावन्न स्वरूपेणाभावावगाहनम्। तस्य साक्षात्साक्ष्यवेद्यत्वात्। नापि शब्दादिना। तदानीं तेषामभावात्। नाप्यनुपलब्ध्या। तस्याः प्रतियोगिज्ञाननिरपेक्षाया अजनकत्वात्। न च– दृष्टाभावान्तरविलक्षणस्वभाव एवायमभाव इति स्वरूपेण साक्षिवेद्योऽस्त्विति– वाच्यम्। निर्विकल्पकबुद्धिवेद्यत्वे भावत्वस्यैवौचित्याद्। अन्यथा परिभाषामात्रापत्तेः। ननु ज्ञानविरोधित्वादेस्तदाऽननुभवेन 'नावेदिषम्' इति तेनाकारेण

(अद्वैतसिद्धिः)

कथं परामर्शः ? न। द्रष्टर्यन्तःकरणतादात्म्येनाहमुल्लेखस्येव ज्ञानविरोधित्वादेरपि तदैवानुभूयमानत्वेन तदंशे परामर्शत्वानभ्युपगमात्। सुषुप्तिकालीनस्य द्रष्टुरेव मरामृष्टत्वात्।

नन्वज्ञानवृत्तिप्रतिबिम्बितचैतन्यरूपस्याज्ञानानुभवस्य जाग्रत्यपि विद्यमानत्वात् कथमज्ञानस्मरणम्? न हि धारावाहिकेषु अनुभवेषु तुल्यसामग्रीकेषु स्मरणव्यवहारः। तथा च धारावाहिकोऽज्ञानानुभव इति वक्तव्यम्, न तु परामर्श इति। सत्यम्। सुषुप्त्याख्यायास्तामस्या अज्ञानवृत्तेर्नाशेन जाग्रति तद्विशिष्टाज्ञानस्य साक्षिणाऽनुभूयमानत्वाभावेन संस्कारजन्याविद्यावृत्त्यैव सुषुप्तिविशिष्टाज्ञानभानात् परामर्शत्वोपपत्तेः। केवलाज्ञानांशे तु तुल्यसामग्रीकत्वाद्धारावाहिकत्वमेव। अत एव कार्योपाधिविनाशसंस्कृतमज्ञानमात्रमेव प्रलयोपमं सुषुप्तिरित्यभिप्रेत्य वार्तिककारपादैः सौषुप्ताज्ञानस्मरणमपाकृतम्। तथा चोक्तम्–

न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः ।
कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् ॥

न भूतकालस्पृक्प्रत्यङ् न चागामिस्पृगीक्ष्यते ।
स्वार्थदेशः परार्थोऽर्थो विकल्पस्तेन स स्मृतः ॥

इत्याद्यव्याकृतप्रक्रियायाम्। विवरणकारैस्तु– 'अभावप्रत्ययालम्बना वृत्तिर्निद्रा' इति योगसूत्रानुसारेण तमोगुणात्मकावरणमात्रालम्बना काचिद्वृत्तिः सुषुप्तिरित्यभिप्रेत्य तदुपरक्तचैतन्यस्य तन्नाशेनैव नाशात्तत्कालीनाज्ञानानुभवजनितसंस्कारवशेन 'न किंचिदवेदिषम्' इति 'स्मरणमभ्युपेतम्' इति वार्तिकविवरणयोरप्यविरोधः। अत एवोक्तं वार्तिककारैरुषस्तिब्राह्मणे–

न चेदनुभवव्याप्तिः सुषुप्तस्याभ्युपेयते ।
नावेदिषं सुषुप्तोऽहमिति धीः किंबलाद्भवेत् ॥ इत्यादि ।

अभिप्रायस्तु वर्णित एव। साक्ष्यज्ञानसुखाकारास्तिस्रोऽविद्यावृत्तयः सुषुप्त्याख्यैकैव वा वृत्तिरित्यन्यदेतत्। निर्विकल्पकस्यापि स्मरणजनकत्वम्, अहंकारोपरागकालीनत्वाभावेन तत्तानुल्लेख इत्यादि सर्वमुपपादितमस्माभिः सिद्धान्तबिन्दौ। तस्मात् सौषुप्तानुभवोऽपि भावरूपाज्ञानविषय इति सिद्धम्। इत्यद्वैतसिद्धौ अज्ञानप्रत्यक्षत्वोपपत्तिः।

## न्यायामृततरङ्गिणी

त्वन्मत इति। अहमज्ञ इति प्रतीतेर्ज्ञानाभावविषयत्वं त्वयाऽपि वाच्यम्। अन्यथा तस्याः प्रामाण्यं न स्यादित्यर्थः। नन्वहमर्थस्याज्ञानानाश्रयत्वेऽपि तदाश्रयीभूत चैतन्येन्तःकरण-तादात्म्याध्यासेनैकाश्रयसम्बन्धेन स्थूलो गच्छतीतिवदहमज्ञ इति प्रतीतिर्भावरूपाज्ञानविषयैवेति चेन्न। शुद्धचैतन्यस्याज्ञानाश्रयतया विशिष्य प्रतीत्यसम्भवेनान्यस्य मुख्यतत्प्रत्ययस्याभावेनाहमज्ञ इत्यस्यैव मुख्यप्रत्ययत्वे वाच्ये अहमर्थस्याज्ञानाश्रयतया तस्य ज्ञानाभावविषयत्वं त्वयाऽपि वाच्यमित्यर्थात्। स्पष्टयिष्यते चैतदविद्याश्रयभङ्गे ॥ साक्षीति ॥ न च स्वस्मिन्विद्यमाने साक्षिवेद्ये सुखादौ स्वभ्रमसिद्धे रूप्यादौ च न जानामीति न व्यवहारः। परसुखादौ तथा व्यवहारस्तु परोक्षज्ञाननिवर्त्येन प्रमातृगताज्ञानेनैवोपपन्न इति वाच्यम्। अर्थाबोधात्। स्वसमवेते स्वभ्रान्तिसिद्धे चातीतसुखादौ रूप्यादौ च न जानामीति व्यवहारस्य सर्वसिद्धस्य सुखादावज्ञानमनिच्छता त्वयाऽपि ज्ञानाभावविषयत्वेन समर्थनीयत्वादित्यर्थात्। विषये प्रमातरि चाज्ञानस्यैकत्वाच्च। आवृतं विषयमजानन् प्रमाताऽज्ञ इत्युच्यते। अत एव परोक्षज्ञानेन प्रमातृगताज्ञाने नाशितेऽपि विषयगताज्ञानसत्त्वेऽपि न न जानामीति व्यवहारापत्तिः। प्रमातृगताज्ञानकार्यस्य न जानामीति व्यवहारस्य विषयगताज्ञानेनापादयितुमशक्यत्वादिति निरस्तम्। तच्छक्तेरप्येकत्वाच्च ॥ विक्षेप इति ॥ विपर्यय इत्यर्थः ॥ अपरोक्षत इति ॥ विक्षेपरूपकार्यस्याज्ञानविषयत्वं प्रत्यप्रयोजकतया जडे न जानामीत्यस्य नाज्ञानविषयत्वमित्यर्थः ॥ निरसिष्यमाणत्वादिति ॥ तस्याज्ञानकल्पितत्वेनान्यो-न्याश्रयात् स्वयमेव प्रकाशहीने तत्कृत्याभावाच्चेत्यादिनाऽविद्याविषयभङ्ग इति शेषः ॥ वृत्तिरिति ॥ विषयप्रकाशकं सर्वगतजीवचैतन्यमविद्यानावृतमिति मते वृत्तेश्चिदुपरागार्थत्वादित्यर्थः।

ननु मयि ज्ञानं नास्तीति प्रतीतिरपि न ज्ञानाभावविषया। तथाहि– अत्र हि ज्ञानाभावे ज्ञानत्वावच्छिन्नप्रतियोगिताकत्वमनुभूयते। तच्च तज्ज्ञानविशेषनिष्ठानां कथञ्चिदनुगतीकृतानां तत्तद्विशेषाभावकूटप्रतियोगिताकानां ज्ञानत्वस्यावच्छेदकत्वेन वा, विशेषाभावकूटातिरिक्त-सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावविषयत्वेन वा? प्रकारान्तरासम्भवात्। तदुभयमपि न सम्भवति। अभावज्ञानकारणधर्म्यादिज्ञाने सति न तदुभयविधाभावज्ञानम्। प्रतियोगिभूत-ज्ञानज्ञानस्य तु स्वविषयीभूतज्ञानविषयविषयकत्वेन तस्यैव तज्ज्ञानत्वात्। तयोर्यत्किञ्चित्प्रति-योगिव्यक्तिविरोधित्वेन तद्वति तयोरसम्भवात्। धर्म्यादिज्ञानाभावे तु कारणाभावादेव तयोर्न ज्ञानम्। अतो मयि ज्ञानं नास्तीत्यपि न ज्ञानाभावज्ञानम्। किन्तु भावरूपाज्ञानज्ञानमेवेति। मैवम्। यत्किञ्चिद्विशेषाभावस्यैव तथा प्रतीत्युपपत्तेः। न च तत्प्रतियोगिता न ज्ञानत्वावच्छिन्नेति वाच्यम्। अवच्छेदकत्वं हि नानतिरिक्तवृत्तित्वादिकम्। अवच्छेदकत्वाभिमतघटत्वादिसमनियत-

## न्यायामृततरङ्गिणी

त्वन्मत इति। अहमज्ञ इति प्रतीतेर्ज्ञानाभावविषयत्वं त्वयाऽपि वाच्यम्। अन्यथा तस्याः प्रामाण्यं न स्यादित्यर्थः। नन्वहमर्थस्याज्ञानानाश्रयत्वेऽपि तदाश्रयीभूत चैतन्येन्तःकरण-तादात्म्याध्यासेनैकाश्रयसम्बन्धेन स्थूलो गच्छतीतिवदहमज्ञ इति प्रतीतिर्भावरूपाज्ञानविषयैवेति चेन्न। शुद्धचैतन्यस्याज्ञानाश्रयतया विशिष्य प्रतीत्यसम्भवेनान्यस्य मुख्यतत्प्रत्ययस्याभावेनाहमज्ञ इत्यस्यैव मुख्यप्रत्ययत्वे वाच्ये अहमर्थस्याज्ञानाश्रयतया तस्य ज्ञानाभावविषयत्वं त्वयाऽपि वाच्यमित्यर्थात्। स्पष्टयिष्यते चैतदविद्याश्रयभङ्गे ॥साक्षीति॥ न च स्वस्मिन्विद्यमाने साक्षिवेद्ये सुखादौ स्वभ्रमसिद्धे रूप्यादौ च न जानामीति न व्यवहारः। परसुखादौ तथा व्यवहारस्तु परोक्षज्ञाननिवर्त्येन प्रमातृगताज्ञानेनैवोपपन्न इति वाच्यम्। अर्थाबोधात्। स्वसमवेते स्वभ्रान्तिसिद्धे चातीतसुखादौ रूप्यादौ च न जानामीति व्यवहारस्य सर्वसिद्धस्य सुखादावज्ञानमनिच्छता त्वयाऽपि ज्ञानाभावविषयत्वेन समर्थनीयत्वादित्यर्थात्। विषये प्रमातरि चाज्ञानस्यैकत्वाच्च। आवृतं विषयमजानन् प्रमाताऽज्ञ इत्युच्यते। अत एव परोक्षज्ञानेन प्रमातृगताज्ञाने नाशितेऽपि विषयगताज्ञानसत्त्वेऽपि न न जानामीति व्यवहारापत्तिः। प्रमातृगताज्ञानकार्यस्य न जानामीति व्यवहारस्य विषयगताज्ञानेनापादयितुमशक्यत्वादिति निरस्तम्। तच्छक्तेरप्येकत्वाच्च ॥ विक्षेप इति॥ विपर्यय इत्यर्थः ॥अपरोक्षत इति॥ विक्षेपरूपकार्यस्याज्ञानविषयत्वं प्रत्यप्रयोजकतया जडे न जानामीत्यस्य नाज्ञानविषयत्वमित्यर्थः ॥ निरसिष्यमाणत्वादिति॥ तस्याज्ञानकल्पितत्वेनान्यो-न्याश्रयात् स्वयमेव प्रकाशहीने तत्कृत्याभावाच्चेत्यादिनाऽविद्याविषयभङ्ग इति शेषः ॥ वृत्तिरिति॥ विषयप्रकाशकं सर्वगतजीवचैतन्यमविद्यानावृतमिति मते वृत्तेश्चिदुपरागार्थत्वादित्यर्थः।

ननु मयि ज्ञानं नास्तीति प्रतीतिरपि न ज्ञानाभावविषया। तथाहि– अत्र हि ज्ञानाभावे ज्ञानत्वावच्छिन्नप्रतियोगिताकत्वमनुभूयते। तच्च तज्ज्ञानविशेषनिष्ठानां कथञ्चिदनुगतीकृतानां तत्तद्विशेषाभावकूटप्रतियोगिताकानां ज्ञानत्वस्यावच्छेदकत्वेन वा, विशेषाभावकूटातिरिक्त-सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावविषयत्वेन वा? प्रकारान्तरासम्भवात्। तदुभयमपि न सम्भवति। अभावज्ञानकारणधर्म्यादिज्ञाने सति न तदुभयविधाभावज्ञानम्। प्रतियोगिभूत-ज्ञानज्ञानस्य तु स्वविषयीभूतज्ञानविषयविषयकत्वेन तस्यैव तज्ज्ञानत्वात्। तयोर्यत्किञ्चित्प्रति-योगिव्यक्तिविरोधित्वेन तद्वति तयोरसम्भवात्। धर्म्यादिज्ञानाभावे तु कारणाभावादेव तयोर्न ज्ञानम्। अतो मयि ज्ञानं नास्तीत्यपि न ज्ञानाभावज्ञानम्। किन्तु भावरूपाज्ञानज्ञानमेवेति। मैवम्। यत्किञ्चिद्विशेषाभावस्यैव तथा प्रतीत्युपपत्तेः। न च तत्प्रतियोगिता न ज्ञानत्वावच्छिन्नेति वाच्यम्। अवच्छेदकत्वं हि नानतिरिक्तवृत्तित्वादिकम्। अवच्छेदकत्वाभिमतघटत्वादिसमनियत-

(तरङ्गिणी)

कम्बुग्रीवत्वाद्यतिप्रसक्तेः। किन्तु स्वरूपसम्बन्धविशेष एव। तच्चास्ति सामान्यधर्मस्यापि विशेषप्रतियोगितया। नन्वेवं वायौ रूपं नास्ति, पुरोदेशे रजतं नास्तीत्याभासवाक्यजन्यप्रतीत्यनन्तरमपि तत्संशयादिनिवृत्तिर्न स्यात्। एकविशेषाभावबोधनेऽपि विशेषान्तरमादाय संशयोपपत्तेरिति चेत्, प्रथमं न कथञ्चित्। अपशवो वा अन्ये पशवो गोऽश्वेभ्य इत्यादाविव विशेषपरत्वशङ्कयाः सकलरूपाद्यभावतात्पर्यावगमान्निवृत्तौ उक्तवाक्यात्संशयादिनिवृत्तेः। किं च वायौ रूपं नास्ति, मयि ज्ञानं नास्तीति समानाकारप्रतीत्योः कथं विषयवैजात्यम्। ननु प्रतियोगिज्ञानाज्ञानाभ्यामनुपपत्त्याऽगत्या तत्कल्प्यत इति चेन्न। तर्हि तत एव यावदभावकिञ्चिदभावविषयत्वमेव कल्प्यताम्। एवं च प्रतीतिसारूप्यमपि समर्थितं स्यात्। त्वद्रीत्या एकस्या अभावविषयकत्वमन्यस्या अभावविलक्षणाज्ञानविषयत्वे सर्वथा तद्बाध एव भावरूपाज्ञानवादेऽपीति।

ननु श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावस्य ज्ञानेऽपि प्रतियोगिज्ञानाज्ञानाभ्यां न व्याहतिः। न हि श्रवणादिसाध्यत्वमोक्षहेतुत्वादिप्रकारकं ब्रह्मज्ञानज्ञानमपि सत् श्रवणादिसाध्यं मोक्षहेतुर्वा। येन तस्मिन् सति तादृक् ज्ञानप्रागभावो व्याहन्येतेति चेन्न। तद्विषयकज्ञाने सत्येव तद्विषयकज्ञानाभावस्य निरूपणं त्वयाऽपि वाच्यमित्यत्र तात्पर्यात्। श्रवणादिसाध्यमोक्षहेतुज्ञानं निष्प्रपञ्चत्मविषयकमतस्तादृशात्मज्ञानस्य ज्ञानमपि निष्प्रपञ्चत्मज्ञानस्य ज्ञानमिति तस्मिन् सति कथं तादृशज्ञानप्रागभावस्तिष्ठेत्। निष्प्रपञ्चात्मविषयतयाऽऽत्मसाक्षात्कारस्य तस्मिन् सति कथं प्रपञ्चनिवर्तकता। न तु श्रवणादिजन्यत्वेनाधिष्ठानतत्वसाक्षात्कारे सति। निरुपाधिभ्रमादर्शनादिति भावः। अत एव साक्षात्कारभिन्नं शङ्कते ॥ न चेति॥ ॥ अनुपलब्ध्या वेति॥ वाशब्दोऽनास्थायाम्। अनुमित्यभावे तात्पर्यात्। ननु ज्ञानाभावस्य झटिति प्रतीतिः स्वकारणस्य झटिति समवधानमाक्षेप्स्यति न तु स्वस्यानुमितिभिन्नत्वमित्यत आह ॥ त्वन्मत इति॥ ननु जडे ज्ञानाभावो न प्रत्यक्षः। ज्ञानरूपप्रतियोगिग्राहकस्य मनसो बहिरस्वातन्त्र्येण यावत्प्रतियोग्युपलम्भकसमवधानरूपयोग्यतायुक्तप्रतियोग्यनुपलब्धिविरहात्। अतो जडे लिङ्गान्तरमेव ज्ञानाभावानुमापकमिति चेन्न। घटो यद्यवच्छेदकविशेषेण ज्ञानाधारः स्यात् प्रत्यङ् स्यात्। तादृशज्ञानत्वेनोपलभ्यमानत्वस्य प्रत्यक्त्वादित्यनुपलम्भप्रतियोग्युपलम्भापादनसम्भवात्॥ अपरोक्षत इति॥ लिङ्गान्तरं तु नानुसंहितमिति भावः ॥ दुःखादाविति॥ स्ववृत्त्यतीतदुःखादिज्ञानाभावस्येत्यर्थः। भावरूपाज्ञानेन लिङ्गेन ज्ञानाभावोऽनुमीयत इत्यत्र दूषणान्तरमाह ॥ प्रतियोगीति॥ विषयावच्छिन्नज्ञानरूपविशेषणज्ञानं विना विशिष्टज्ञानानुदयादित्यर्थः।

(तरङ्गिणी)

त्वदभिमताज्ञानविषयत्वेऽसंमतेः। तस्मान्न जानामीति ज्ञानविरोधि किञ्चित् साक्षिणाऽनुभूयते। तद्द्वारा विषयोऽपीत्येतावत्सिद्धम्। तस्याभावविलक्षणत्वं प्रकल्प्य तद्द्वारा विषयानुभव इति कल्पनापेक्षया क्लृप्तेऽभावे विषयानुभावकताकल्पनैवोचिता। लाघवात्। भावविलक्षणस्य द्वारत्ववदभावस्यापि तत्सम्भवाच्च। बाह्यविषयस्य साक्षिणा ग्रहणेऽतिप्रसङ्गभङ्गाय स्वसम्बद्धाभाव-प्रतियोगिज्ञानविषयत्वस्य नियामकस्य सम्भवाच्च।

नन्ववच्छेदकस्य विषयादेः प्रागज्ञाने कथं तद्विशिष्टाभावज्ञानमिति शङ्का तत्परिहारश्च अभावबुद्धौ प्रतियोगित्वानुयोगित्वादिवत्पूर्वानुपस्थितस्यापि विशेषणस्य विशिष्टबुद्धौ भानसम्भवेन विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वे मानाभाव इत्येवंरूपोऽपि समः। विशेषणतावच्छेदक-प्रकारकज्ञानं विना कथं विशिष्टवैशिष्ट्यज्ञानमित्यपि न। प्रत्यक्षत्वादिरूपेण पृथक्क्लृप्तकार्यकारण-भावेनैवोपपन्नस्यार्थसमाजसिद्धस्य विशिष्टवैशिष्ट्यज्ञानत्वस्य कार्यतानवच्छेदकत्वेन तत्र कारणान्तराकल्पनात्। इह च विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेन विशिष्टवैशिष्ट्यज्ञानसम्भवादिति। साक्षिणा विशेषतो ज्ञायमानेऽपि विषयेऽज्ञानमिति पक्षे ज्ञानाभावेनान्यथासिद्धिमुक्त्वा सामान्येन विषयज्ञाने विशेषतस्तज्ज्ञानमिति पक्षेऽपि ज्ञानाभावेनान्यथासिद्धिरित्याह ॥ तस्मादिति ॥ ॥ अवच्छेदकस्येति ॥ विरोधनिरूपकज्ञानं प्रत्यज्ञानं च प्रत्यवच्छेदकस्येत्यर्थः। ननु विशेषज्ञानाभावे विशेषज्ञानत्वावच्छिन्नं प्रतियोगीति तस्य ज्ञाने स विशेषोऽपि ज्ञात एवेति विशेषज्ञानाभावव्याघात इत्यत आह ॥ तद्विशेषेति ॥ ॥ तत्सामान्येति ॥ निरूपणीयाभावप्रतियोगिज्ञानविषयीभूतविशेषसमानाधिकरणसामान्यधर्मविषयकज्ञानमित्यर्थः। ननु विशेषज्ञानाभावं प्रति सामान्यज्ञानं तत्प्रतियोगिज्ञानं वाऽप्रतियोगीति कथं तस्य विशेषज्ञानाभावज्ञानं प्रति हेतुताऽप्रयोजकता वस्यादित्यत आह ॥ अन्वयेति ॥ निरूपणीया-भावप्रतियोगिविज्ञानव्यक्तिज्ञानं विनाऽपि सामान्येन तज्ज्ञाने सत्येव विशेषज्ञानाभाव-ज्ञानस्यानुभूयमानत्वादित्यर्थः ॥ न त्विति ॥ यस्याः ज्ञानव्यक्तेरभावो निरूप्यते तज्ज्ञानव्यक्तिस्तत् ज्ञानं वा तदभावज्ञाने न हेतुरित्यर्थः ॥ अपर इति ॥ त्वदुक्तमर्थं न जानामीत्यादाविति शेषः। अत्र मते निरूपणीयाभावप्रतियोगिज्ञानापेक्षया अभावज्ञानहेतौ ज्ञाने व्यक्तिभेदे प्रकारभेदे सत्यपि समानविषयत्वं लभ्यत इत्यर्थः।

॥ केचित्त्विति ॥ त्वदुक्तमर्थं न जानामीत्यादौ भासमानधर्मातिरिक्तो व्यावृत्त्यधिकरण-तावच्छेदको धर्मो विवक्षितः। तेन त्वदुक्तत्वस्य मदुक्ताद्व्यावर्तकत्वेन सामान्यतो व्यावर्तकधर्म-विषयत्वं निषेद्धुमशक्यमिति निरस्तम् ॥ तद्विशेषणतयेति ॥ तत्र विशिष्टार्थविषयके ज्ञाने

(तरङ्गिणी)

प्रमाणज्ञानविशेषणतयेत्यर्थः। ज्ञानावच्छेदकविषयाग्रहे ज्ञानग्रहसम्भवादभावग्रहो भविष्यतीत्याह ॥ किं चेति॥ ॥अनुमानादीति॥ विषयाभावेनानुमितिरूपवृत्त्यसम्भवादित्यर्थः ॥रहस्यमिति॥ शब्दवृत्तेरज्ञानविषयत्वस्यानुभूयमानत्वादित्यर्थः ॥आद्य इति॥ अज्ञानविषयकानुमित्यादि-वृत्त्याऽज्ञानावच्छेदकविषयस्य ग्रहणे तयैव वृत्त्या तदज्ञाननाशापत्तिरित्यर्थः ॥त्वन्मत इति॥ साक्षिणोऽज्ञानाविरोधित्वेऽपि वृत्तेस्तद्विरोधित्वस्य त्वयाऽपि स्वीकारादित्यर्थः ॥यदि चेति॥ परोक्षवृत्त्या अज्ञानाभिभवे वा, प्रमातृगताज्ञाननाशेऽपि वा विषयावरकाज्ञाननिवृत्त्यनङ्गीकार इत्यर्थः ॥तां विनेति॥ अज्ञाननिवृत्तिं विनेत्यर्थः ॥उक्तमिति॥ दृश्यत्वहेतुभङ्गे ॥परोक्षेति॥ गुञ्जापुञ्जे वह्निभ्रमानन्तरमुष्णस्पर्शानुमितेः कण्ठे धार्यमाणत्वादिलिङ्गजन्यानुमित्यादिनेत्यर्थः ॥भ्रमेति॥ भ्रमोपादानस्याज्ञानस्य सत्त्वादित्यर्थः ॥तस्येति॥ अज्ञानाकारप्रतीतेरुभयत्र समत्वादिति भावः। ननु परोक्षवृत्तेरज्ञाननिवर्तकत्वे उपादानाभावादपरोक्षभ्रमो न स्यादित्यत आह ॥परोक्षत इति॥ अस्मन्मते ह्यज्ञानस्य भ्रमानुपादानत्वादिति भावः। तव मते तस्यापि दोषस्य बोद्धव्यत्वादित्याह ॥त्वन्मत इति॥ अज्ञानविषयकानुमित्यादिवृत्त्या तदवच्छेदको विषयो न गृह्यत इति पक्षे आह ॥अन्त्य इति॥ परामर्शः स्मरणाम्। सुषुप्त्यवस्थायां ज्ञानाभावानुभवाभावान्न तस्य जागरे परामर्शः सम्भवतीत्याशङ्क्य परिहरति ॥न चेति॥ धर्म्यादिज्ञानाभावनिमित्तकः सुषुप्त्यवस्थायां विशेषरूपेण ज्ञानाभावाननुभव इत्युच्यते सामान्यरूपेण वा। आद्य आह ॥भावरूपेति॥ तथा च सुषुप्त्यवस्थायां तेन रूपेण ज्ञानस्याप्यननुभवात्तस्यापि परामर्शो न स्यादित्यर्थः ॥तदपेक्षणादिति॥ अज्ञानावच्छेदक-विषयविषयकविरोधनिरूपकज्ञानस्यापेक्षणादित्यर्थः। द्वितीये त्वाह ॥सामान्येति॥ विरोधनिरूपकं ज्ञानमज्ञानविषयं सामान्यरूपेणोल्लिखतीति न विशेषरूपेऽज्ञानविरोध इत्यर्थः ॥तर्हीति॥ अभावप्रतियोगिभूतं ज्ञानमपि स्वविषयं सामान्येनोल्लिखदभावनिरूपकमस्त्वित्यर्थः। द्वितीयपक्षे ज्ञानेन साम्यं वक्तुं शङ्कते ॥नन्विति॥ ॥सममिति॥ अज्ञानज्ञानाभावयोः साक्षियोग्यत्वतद-योग्यत्वाभ्यां वैषम्यमिति शङ्कां परिहरत्यपिशब्देन। नन्वभावस्य ससम्बन्धिकत्वात्स्वरूपेण ज्ञानमेव नास्तीत्यत आह ॥अभावस्यापीति॥

ज्ञानाभावस्य ज्ञानग्राहकग्राह्यत्वेऽपि सुषुप्तौ न तद्ग्रहः। तस्या एव प्रतिबन्धकत्वादित्यत आह ॥यद्वेति॥ ॥किन्त्विति॥ सुषुप्तौ ज्ञानाभावः स्थित - इति जाग्रत्यनुमीयत इत्यर्थः ॥अवस्थेति॥ सम्प्रतिपन्नोदयास्तमयकालवद्विवादपदयोरप्युदयास्तमययोरन्तरालकालमनुमाय तत्कालेऽहंज्ञानाभावात् अवस्थाविशेषवत्त्वात् व्यतिरेकेण जाग्रदहमिवेत्यनुमानेनेत्यर्थः। न च

(तरङ्गिणी)

ज्ञानाभावमंतरेणावस्थाविशेषो वक्तुमशक्य इति वाच्यम्। श्रुतिसिद्धप्राज्ञपरिष्वङ्गविशेषकालस्य सुषुप्त्याख्यस्य ज्ञानाभावभिन्नस्य सुवचत्वात् ॥सामग्र्यभावस्येति॥ ननु ज्ञानसामग्रीविरहस्य ज्ञानरूपकार्यविरहानुमेयत्वेनान्योन्याश्रय इत्यत उक्तम्॥ इंद्रियेति॥ इदानीन्तनेन्द्रियप्रसादेन सुषुप्तिकालीनेन्द्रियोपरमानुमानमित्यर्थः। न चेन्द्रियप्रसादस्य सुखानुभवहेतुकस्य तदुपरमहेतुकत्वमसिद्धमिति वाच्यम्। स्वरूपसुखानुभवस्येन्द्रियोपरमं प्रत्यप्रयोजकत्वात्। इन्द्रियविषयानुभवजन्यसुखानुभवस्य तदानीमभावात् ॥तत् तुल्येति॥ तुल्यत्वं चानुपेक्षणीयत्वम्। तेनोपेक्षणीये न व्यभिचारः। तदंशे संस्कारानुद्बोधेनास्मर्यमाणे व्यभिचारवारणाय नियमेनेति ॥त्वन्मत इति॥ सुषुप्तावहमर्थाभावेन तदा तस्याननुभूततया न किञ्चिदवेदिषमिति जाग्रत्कालीनज्ञानस्याहमर्थे परामर्शत्वं न सम्भवतीत्यर्थः ॥अन्यानुभूत इति॥ अहमर्थानवच्छिन्नस्य सुषुप्तावज्ञानद्रष्टृत्वं, तदवच्छिन्नस्य जाग्रति तत्परामर्ष्टृत्वमित्यसम्भवेन अहमर्थानवच्छिन्नस्यैव जाग्रत्यज्ञानानुभव एवायमित्यस्यैव वक्तव्यत्वादित्यर्थः। संस्काराभावान्नाज्ञानांशे परामर्श इत्याह ॥सुषुप्तावित्यादिना॥ विनष्टस्य ज्ञानस्य स्मरणजननायोगेन तेन संस्कारो जननीयः। अविनश्यत्तु साक्षादेव स्मरणजननयोग्यमिति न तेन संस्कारो जन्यते। न हि संस्कारः प्रत्यक्षः। येन कार्यान्यथानुपपत्तिं विनापि स कल्प्येतेत्यभिप्रायेणोक्तंनित्यज्ञानस्येत्यादिना। अविद्यावृत्तेरनित्यत्वात् तदुपहितसाक्षिरूपस्याज्ञानज्ञानस्याप्यनित्यत्वात तस्य संस्कारजनकत्वं भविष्यतीति शङ्कापरिहारायोक्तम् ॥अविद्यावृत्तीत्यादि॥ न चाज्ञानविषयकाज्ञानाभावेन न तत्र संशयादिरिति वाच्यं। अज्ञानगोचरज्ञानाभावेन तत्राज्ञानस्याप्यापाद्यमानत्वादिति भावः।

ननु प्रमाणस्यानाशेऽपि प्रमेयस्य नाशात् संस्कारोपपत्तिः। तथाहि–सुषुप्तिविशिष्टाज्ञानभानात् परामर्शत्वोपपत्तिरिति चेन्न। सुषुप्त्यवस्थाया अविद्यावृत्तित्वे मानाभावात्। दोषाजन्यत्वात् व्यवहारदशायामबाध्यत्वाच्च सुषुप्तेर्नाविद्यावृत्तित्वम्। तथापि केवलाज्ञानांशे सुषुप्तिजागरयोः तुल्यसामग्रीकत्वात् धारावाहिकबुद्धित्वमेव न परामर्शत्वम्। अत एवाव्याकृतप्रक्रियायां वार्तिक उक्तं– "न सुषुप्तिगविज्ञानान्नाज्ञासिषमिति स्मृतिः। कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक्। न भूतकालस्पृक् प्रत्यङ् न चागामिस्पृगीक्षते। स्वार्थदेशपरार्थोऽर्थोऽविकल्पस्तेन स स्मृतः॥" इति। एतत् सर्वमभिसन्धायोक्तम् ॥जागरणादावपीति॥ यदि सुषुप्तौ सुषुप्त्यवस्थाविशिष्टमनुभूयेत तर्हि जागरेऽपि तथैवानुभूयेतेत्यर्थः। तत्तानुल्लेखाच्च नायं परामर्शः। किन्तु ज्ञानाभावानुभव एव। अत एव अभावप्रत्ययालम्बनावृत्तिस्सिद्धेति योगसूत्रमिति। ज्ञानाभावानुमानानभ्युपगमे बाधकमाह

(तरङ्गिणी)

॥ अन्यथेति ॥ ॥ इच्छादाविति ॥ इच्छादावज्ञानाभावादित्यर्थः। तदा सुषुप्तौ ॥ न हीति ॥ विरोधिपदार्थानुभवेनैव तदभावानुमानस्य त्वयाऽङ्गीकारादित्यर्थः ॥ ज्ञानाभावादेवेति ॥ अज्ञानानुमितादिति शेषः ॥ तदभावेति ॥ प्रकाशमाने आत्मादौ ज्ञानाभावाभावेन तत्र रागाद्यभावो न सिध्येदित्यर्थः ॥

व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि ॥
न्यायामृततरङ्गिण्यामज्ञानाक्षमभावगम् ॥

॥ भावरूपाज्ञानप्रत्यक्षभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

प्रमाणज्येष्ठत्वात् निरपेक्षत्वेन प्रबलत्वाच्च प्रथमं प्रत्यक्षमज्ञाने प्रमाणत्वेनोक्तम्। अतस्तदेव दूषयति ॥ यच्चेति ॥ ॥ त्वन्मतेऽपीति ॥ नन्वत्र नाहमर्थो ज्ञानाश्रयत्वेन प्रतीयते ॥ किन्तु चैतन्यमेव तथा प्रतीतिस्त्वज्ञानाश्रयचैतन्येऽन्तःकरणतादात्म्याध्यासादिकार्थसम्बन्धेनैकं रूपमिति वदुपपद्यत इति चेन्न। किमियमेव प्रतीतिश्चिन्मात्राश्रयत्वे प्रमाणमन्या वा। नाद्यः ॥ आहमज्ञो मय्यज्ञानमित्यहमर्थाश्रयत्वेनैवा-ज्ञानविषयत्वात्। न द्वितीयः। तस्या असिद्धेः। न हि चिन्मात्रमज्ञमिति प्रतीतिः कस्याप्यस्ति। एवं चान्योन्याश्रयः। सिद्धे चिन्मात्राश्रयत्वे प्रतीतेरेकार्थसम्बन्धेनोपपत्तिः। तदुपपत्तौ च चिन्मात्राश्रयत्वमिति।

किं च चैतन्येऽन्तःकरणतादात्म्याध्यासोऽसिद्ध एव। तथा चासिद्धे न सिद्धसाधनमिति। मिथ्यात्वप्रमाणस्य प्रागेव सम्यग् दूषितत्वात् ॥ साक्षिवेद्य इति ॥ न च स्वसाक्षिसिद्धे स्वभ्रमसिद्धे च न जानामीति व्यवहार एव नेति वाच्यम्। सुखमात्रं जानामिति तद्विशेषं तु न जानामित्येवमनुभवस्य सर्वसिद्धत्वात्। एवं भ्रमसिद्धेऽपीति। परसुखादौ न जानामीत्याद्यनुभवस्य सर्वसिद्धत्वाच्च। न च सोऽनुभवः प्रमातृगताज्ञानेनैवोपपन्नो न विषयगताज्ञानमपेक्षत इति वाच्यम्। एवं हि सर्वत्र न जानामीति व्यवहारस्य प्रमातृगताज्ञानेनैवोपपत्त्या विषयगताज्ञानासिद्धिप्रसङ्गात्। अहमज्ञ इत्यादेरपि प्रमातृगताज्ञाने प्रमाणत्वेन विषयगताज्ञाने प्रमाणाभावप्रसङ्गाच्च। प्रमातृगतमप्यज्ञानं परकीयसुखादिविषयमेव वाच्यम्। अन्यविषयस्यान्यत्र न जानामीति व्यवहारानापादकत्वात्। तथा चापसिद्धान्तः। दुःखादिविषयस्याज्ञानस्यानङ्गीकारात्। अज्ञानद्वैविध्यकल्पने गौरवाच्च। प्रमातृगताज्ञानस्य विषयगतार्थोपादानत्वायोगेन भ्रमोपादानत्वलक्षणासम्भवाच्च ॥ त्वन्मत इति ॥

ननु परोक्षज्ञानेन प्रमातृगतमज्ञानं निवृत्तम्। तेन विषयगताज्ञाने विद्यमानेऽपि प्रमातृगताज्ञानाभावाच्च न जानामीति व्यवहारः। प्रमातृगताज्ञानकार्यस्य विषयगताज्ञानेनोपपादयितुमशक्यत्वात् इति चेन्न। उक्तप्रमाणानां प्रमातृगताज्ञान एव प्रमात्वेन विषयगताज्ञाने प्रमाणाभावात्। भ्रमान्यथानुपपत्त्या तत्कल्पनमित्यपि

(कण्टकोद्धारः)

न। तस्य प्रकारान्तरेणैवोपपाद्यमानत्वात्। न जानामीति व्यवहाररूपकार्याक्षमस्याज्ञानत्वे प्रमाणाभावाच्च। अज्ञानद्वैविध्ये गौरवाच्चेति॥ त्वन्मत इति॥ न च त्वदुक्तमर्थमित्यत्र जडावच्छिन्नं चैतन्यमेव विषय इति न ज्ञानासम्भव इति वाच्यम्। विशिष्टस्यापि जडत्वेनाज्ञानविषयत्वासम्भवात्। न चैते प्रत्ययाः अप्रमाणमेवेति वाच्यम्। अप्रमाणैः प्रमेयसाधनायोगात्। अन्यथा बाष्पारोपितधूमेनापि वह्निः सिध्येत्। तथा च तेनाप्यर्थक्रिया स्यात्। तथा च त्वदुक्तमर्थं न जानामीत्यादेः ज्ञानाभावविषयत्वे तद्वदेवास्यापि तद्विषयत्वसम्भवः। निरसिष्यमाणत्वादविद्याविषयभङ्गे इति शेषः॥ भावरूपाज्ञानविषयत्वेनेति॥

ननु धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां ज्ञानसामान्याभावस्य व्याहतत्वेन मयि ज्ञानं नास्तीत्यस्यापि भावरूपाज्ञानविषयत्वात् विषयभेदप्रतीतिर्युक्ता। तथा हि। मयि ज्ञानं नास्तीति प्रतीतिः वायौ रूपं नास्तीति प्रतीतिवत् सामान्याभावविषया वा यावद्विशेषाभावविषया वा वाच्या। न च तद्युक्तम्। धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां व्याहतत्वादिति चेन्न। मयि ज्ञानं नास्तीति प्रतीतेः विशेषाभाव विषयत्वेनोक्तद्विविधपक्षानभ्युपगमात्। न च प्रतियोगितानवच्छेदकस्य प्रतियोग्यंशे प्रकारत्वात्प्रकृते च ज्ञानरूपप्रतियोग्यंशे प्रकारस्य ज्ञानत्वस्यैवावच्छेदकत्वम्। अन्यथा सामान्याभावसिद्धिर्न स्यात्। इति वाच्यम्। प्रतियोगिप्रकारत्वेन भावस्यैव प्रतियोगितावच्छेदकत्वमिति नियमासिद्धेः। अन्यथा प्रथमे क्षणे रूपं नास्तीति प्रतीतेरपि सामान्याभावविषयत्वापत्तिः। न चेष्टापत्तिः। कस्यचित्प्रागभावेन कस्यचिदत्यन्ताभावेन सामान्याभावासम्भवात्। सामान्याभावे प्रतियोगिवत् तत्प्रागभावस्यापि प्रतियोगित्वेन तत्सत्वे तदसम्भवात्। सामान्याभावस्य यत्किञ्चित्प्रतियोगिसत्वविरोधित्वात्। प्रमेयो घटो नास्तीत्यत्र प्रमेयघटत्वस्याप्यवच्छेदकत्वापत्तेश्च। अत एव गङ्गेशचरणेन सामान्याभावे रूपं नास्तीति प्रतीतिः प्रमाणत्वेन नोपन्यस्ता। न चैवं सामान्याभावसिद्धिर्न स्यादिति वाच्यम्। तस्य गङ्गेश्वराद्युक्तरीत्या सिद्ध्युपपत्तेः। न चैवं वायौ रूपं नास्तीति प्रतीतेः सामान्याभावविषयत्वं न स्यादिति वाच्यम्। सामान्यप्रतीतेः सामान्यविषयत्वस्य बाधकैकापोद्यत्वेन वायौ रूपं नास्तीति प्रतीतेः सामान्याभावविषयत्वे बाधकाभावेन तदविषयत्वोपपत्तेः। न च प्रकृतेऽपि तथा। धर्मिप्रतियोगिज्ञानाज्ञानव्याघातरूपस्य बाधकस्य सत्वात्। नन्वत एवाज्ञानविषयत्वं कल्प्यतामिति चेन्न। विशेषविषयत्वेन चोपपत्तावतिरिक्तधर्म्यन्तराकल्पनात्। अज्ञानविषयत्वानुपपत्तेश्च। तथा हि अज्ञानमपि न जानामीति ज्ञानसामान्यविधिनोपेततया प्रतीयत इति वक्तव्यम्। तथा च विरोधनिरूपकज्ञानाज्ञानाभ्यां व्याघातस्तुल्य एव। तथा च सामग्रीवैचित्र्ये कल्प्यमानेऽभाव एव तत्कल्प्यताम्। क्लृप्तत्वेन लाघवात्। न त्वतिरिक्तमज्ञानं कल्पनीयम्। गौरवात्।

किं चाज्ञानज्ञाने विद्यमाने कथं ज्ञानसामान्यविरोध्यज्ञानम्। न चाज्ञानं वृत्तिरूपविशेषज्ञानविरोधि न ज्ञानसामान्यविरोधीति वाच्यम्। न जानामीति सामान्यविरोधित्वस्यैव प्रतीतेः। सामान्यविरोधित्वेन प्रतीयमानमपि बाधकात् विशेषविरोधीति कल्प्यते। तर्हि बाधकादेकसामान्यतोऽभावप्रतीतिरपि विशेषविषयेत्यस्तु।

किंच वृत्तिरूपज्ञानस्य निरूपकत्वे तज्ज्ञानं वक्तव्यम्। तस्य च विषयनिरूप्यतया तद्विषयोऽपि ज्ञात इति कथं तत्राज्ञानम् ? न च निरूपकतद्विषयाज्ञानज्ञानं साक्षिरूपमतस्तस्मिन्विद्यमानेऽपि

(कण्टकोद्धारः)

वृत्तिरूपविरोधिज्ञानाभावात् ज्ञानं युक्तमिति वाच्यम्। तर्ह्यज्ञानज्ञानं तत्प्रतियोगितद्विषयज्ञानमपि साक्षिरूपमिति न काचिदनुपपत्तिः। न चायमभाव अनुपलब्ध इति वाच्यम्। अभावस्याप्रत्यक्षत्वे साक्षात्करोमीत्यनुभवायोगात्। अभावस्य प्रतियोगिग्राहकग्राह्यत्वनियमाच्च। प्रतियोगिनोऽज्ञानस्य साक्षिवेद्यत्वे तदभावस्यापि तत्त्वमुचितमेव।

ननु विषयाज्ञानम् अनुभूय पुरुषस्तन्निवृत्यर्थं तद्विचारे प्रवर्तते इति सर्वानुभवसिद्धम्। तद्यदि ज्ञानाभावो न जानामीति प्रतीतेः विषयः स्यात्तदा ज्ञातेऽपि तथा प्रतीत्यापत्तिः। तद्विचारार्थं प्रवृत्यापत्तिरिति चेन्न। अज्ञानस्य ज्ञानविरोधित्वेन प्रतीत्या निरूपकज्ञानावश्यकतया दूषणसाम्यात्। वक्ष्यमाणरीत्या सामान्यतोज्ञाने विशेषज्ञानाभावसम्भवेन विशेषनिश्चयार्थं प्रवृत्याद्युपपत्तेश्च। तथा च मयि ज्ञानं नास्तीति प्रतीतौ नाज्ञानं विषयः। किन्तु ज्ञानाभावो विषय इति अहमज्ञ इत्यत्रापि ज्ञानाभाव एव विषय इति साधूक्तम्।

एतेन भावरूपाज्ञानं च सर्ववृत्त्यधिष्ठानतया तत्र ज्ञानबुद्धिप्रयोजकज्ञानत्वसामान्यभूतचैतन्यं निवर्त्यम्। चैतन्यं चैकमेवेति ज्ञानसामान्यविरोधीति निरस्तं। चैतन्यरूपे ज्ञाने विद्यमानेऽप्यज्ञानानिवृत्तेस्तस्य ज्ञानसामान्यविरोधित्वाभावात्। चैतन्यरूपस्य साक्षिणो ज्ञानसाधकतया तद्विरोधित्वानुपपत्तेश्च। चैतन्यस्य ज्ञानत्वरूपत्वे प्रमाणाभावाच्च। वृत्तौ सत्यामेव घटं जानामीति प्रत्ययाद् वृत्तेरेव चैतन्ये ज्ञानव्यवहारप्रयोजकत्वमिति वैपरीत्यापत्तेश्च॥ भावरूपाज्ञानवादेऽपीति॥

ननु श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानरूपस्य प्रतियोगिनो ज्ञानाज्ञानाभ्यां नाऽत्र व्याहतिः। न हि श्रवणादि साध्यमोक्षहेतुत्वप्रकारकं ज्ञानं ब्रह्मज्ञानम्। ब्रह्मज्ञानमपि वा तत्र मोक्षहेतुर्न वा श्रवणादिसाध्यमतः प्रतियोगिनोऽभावेन प्रागभावसम्भव इति चेन्न। प्रतियोगिज्ञानस्य ब्रह्मज्ञानत्वे मोक्षहेतुत्वस्याप्यावश्यकत्वात्। "ब्रह्मविदाप्नोति परम्" इति ब्रह्मज्ञानम् तस्य मोक्षहेतुत्वावगमात्। न च ब्रह्मसाक्षात्कारस्तद्धेतुरिति वाच्यम्। उक्तज्ञानज्ञानस्य साक्षिवेद्यत्वेन तज्ज्ञानविषयविषयस्यापि साक्षात्कारसम्भवात्। तज्ज्ञानस्य साक्षिवेद्यत्वानङ्गीकारे ज्ञानमप्राणिकमेव स्यात्। ज्ञानस्यापि अबुबुत्सिततयाङ्गत्वेन सुखादिवत् ज्ञातैकसत्वाच्च। ब्रह्मज्ञानत्वेनैव श्रवणादिसाध्यत्वस्याप्यापादनात्। एवं च श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञाने कथं प्रागभाव इति व्याहतिरेवोत्पाद्या।

यद्वा शाब्दादिसाधारणब्रह्मज्ञानप्रागभावस्य सत्वात् तज्ज्ञाने प्रतियोगिविशेषज्ञानाज्ञानाभ्यां व्याहतिरित्यनेन ग्रन्थेनोपलक्षणाददोषः। न च प्रागभावस्य सामान्याभावाभावशाब्दज्ञानं नास्तीति प्रतीयमानाभावस्य शाब्दज्ञाने विद्यमाने सम्भवात् शाब्दज्ञानपदं शाब्दज्ञानविशेषपरम्। अतो न व्याघात इति वाच्यम्। तथा सति न हि ज्ञानं नास्तीति तथैवेति प्रतिबन्दिमात्रे तात्पर्यात्। घटज्ञानप्रागभावादेरप्युपलक्षणमेतत्। तत्रापि घटज्ञानज्ञाने घटज्ञानस्य वृत्तत्वात् प्रागभावासम्भवो ज्ञाने प्रतियोगिज्ञानाभावात् प्रागभावज्ञानासम्भव इति व्याहतेः साम्यात्। प्रागभाव एव नास्ति तज्ज्ञानं वा नास्तीति तु निरसिष्यते॥ वृत्तिज्ञानस्येति॥ उपलक्षणमेतत्। अज्ञानस्यापि विषयनिरूप्यतया तज्ज्ञानाज्ञानाभ्यां ज्ञानं दुष्करमिति न तेन प्रागभावानुमानम्।

(कण्टकोद्धारः)
लिङ्गज्ञानाभावेऽनुमानासम्भवादिति द्रष्टव्यम् ॥अनुपलब्ध्या वेति॥ परीत्या स्वमतेऽनुपलब्धेरप्रमाणत्वात् ॥ झटितीति॥ तथा च यदाऽज्ञानं प्रतीतं तदैव प्रागभावोऽपि प्रतीत इति न तयोःलिङ्गलिङ्गिभाव इति भावः। तद्दूषणं तु स्वव्याहतत्वेन जात्युत्तरमित्याह॥अपि चेति॥

ननु यद्यज्ञानं ज्ञानविरोधित्वेन प्रतीयते तर्हि मुग्धोऽस्मीत्यादौ विरोधभावार्थं नञ् उल्लेखः स्यादित्यत आह॥मुग्धोऽस्मीत्यादौ त्विति॥ नन्वज्ञानं प्रकारान्तरेण प्रतीयते यदा तदा ज्ञानविरोधित्वेन न प्रतीयत इति तत्प्रतीतौ न विरोधनिरूपकज्ञानाज्ञानाभ्यां व्याघातः। अभावस्तु यदा प्रतीयते तदा धर्मिप्रतियोगिसापेक्ष एव प्रतीयत इति तत्र व्याघात एवेत्यत आह ॥ज्ञानाभावोऽपि हीति॥ तथा चाज्ञानप्रतीति-साम्यमेवाभावप्रतीतेरिति भावः ॥क्लृप्तावयवशक्त्यैवेति॥ प्रोक्षण्यधिकरणन्यायेनेति भावः।

ननु बहुलप्रयोगादिना रूढिरवश्याभ्युपेया। अन्यथा पङ्कजादिशब्दानामपि रूढिर्नाङ्गीकर्तव्या। योगस्यातिप्रसक्तत्वात्। तत्परिहारार्थं रूढिरभ्युपगम्यते चेत्तुल्यं प्रकृतेऽपीत्यत आह ॥शब्दप्रयोगेऽपीति॥ तथा च शब्दजन्यप्रतीतौ विरोधाभावेऽपि प्रत्यक्षजन्यप्रतीतौ तज्ज्ञानमावश्यकमिति तत्र व्याघात एवेति भावः। उक्तमर्थं कारिकया सङ्गृह्णाति ॥एवं चेति॥

किञ्च मास्तु विरोधनिरूपकज्ञानाज्ञानाभ्यां व्याघातोऽज्ञानावच्छेदकज्ञानाज्ञानाभ्यां तु सत्वात् अवच्छिन्नज्ञानेऽवच्छेदकस्य ज्ञानस्य कारणत्वात्। अन्यथा प्रतियोगिज्ञानादिकमप्यभावज्ञानकारणं न स्यात्। यद्यन्वयव्यतिरेकाभ्यां प्रतियोग्यादिज्ञानम् अभावज्ञानकारणं तदा ससम्बन्धिकपदार्थज्ञाने सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानस्य कारणत्वात् तादृशज्ञाने कथमज्ञानम्? न च सम्बन्धीति गौरवात्त्याज्यमिति वाच्यम्। सम्बन्धितावच्छेदकप्रकारकज्ञानस्यैव तद्विरोधित्वादित्याह ॥अपि चेति॥ ॥सममिति॥ धर्मिप्रतियोग्यादिज्ञानस्यापि साक्षिरूपत्वादिति भावः।

ननु तथाऽपि ज्ञानसामान्ये विद्यमाने कथं तदभावः? सामान्याभावस्य यत्किञ्चित्प्रतियोगिसत्व-विरोधित्वादित्यत आह ॥न जानामीति धीस्त्विति॥

ननु सामान्याभावविषयतया प्रतीयमानस्य कथं विशेषाभावविषयेतेति चेत्तर्हि ज्ञानसामान्यविरोधितया प्रतीयमानस्य कथं वृत्तिरूपज्ञानविशेषविरोधित्वम्। ज्ञानसामान्यविरोधित्वासम्भवादिति। यदि तदेतदत्रापि तुल्यम्। न चैवमुभयत्राप्यनुपपत्तिसाम्येऽभावविषयत्वे किं बीजमिति चेदभावस्य क्लृप्तत्वेन तद्विषयत्वे लाघवम् अज्ञानविषयत्वे गौरवमिति विभावय।

एतेनैव त्वदुक्तमर्थं न जानामीत्यादि प्रतीतिरपि नाज्ञानविषयेति समाहितम्। तत्राप्यज्ञाना-वच्छेदकज्ञानाज्ञानाभ्यां अज्ञानज्ञानस्य व्याहतत्वात्। ननु सामान्यतोऽवच्छेदकज्ञानमेवावच्छिन्नज्ञाने कारणम्। तेन सामान्याकारेणावच्छेदके ज्ञातेऽपि विशेषाज्ञानं सम्भवति। न च येन रूपेणाज्ञानं तेन रूपेण ज्ञानं कारणमिति वाच्यम्। विशेषाज्ञानज्ञानेऽन्वयव्यतिरेकाभ्यां सामान्येनैवावच्छेदकज्ञानस्य हेतुत्वात्। अन्यथाऽसम्भवात्। तथा च न व्याघात इति चेत् तुल्यमेतत्सर्वमभावज्ञानेऽपीत्याह ॥तस्मादिति॥

(कण्टकोद्धारः)

नन्वेतावता सामान्यतः प्रतियोगिज्ञाने अज्ञानविशेषावच्छिन्नप्रतियोगिकाभावज्ञानमिति पर्यवसितम्। तच्चायुक्तम्। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावज्ञाने कारणत्वात्। अन्यथा प्रमेयत्वेन घटज्ञाने घटत्वेनाभावप्रतीतिः स्यादिति चेन्न। अज्ञानावच्छेदकस्याप्यज्ञानावच्छेदकतावच्छेदकप्रकारकज्ञानं कारणम्। अन्यथा प्रमेयत्वेनावच्छेदकज्ञाने घटं न जानामीति प्रतीतिः स्यादिति तुल्यत्वात्। तत्र विशेषप्रकारकं ज्ञानं साक्षिरूपमिति यदि तदपि तुल्यमत एवाह ॥ वृत्तिरूपविशेषज्ञानाभाव इति॥ यदि चान्यत्र तथाभावेऽपि अज्ञानावच्छेदकस्य सामान्यज्ञानमेव कारणं तर्हि अन्यत्र प्रतियोगितावच्छेदकप्रकारकज्ञानस्य कारणत्वेऽपि ज्ञानाभावज्ञाने सामान्येनैव प्रतियोगिज्ञानं कारणमिति तुल्यम्। वस्तुतस्तु अभावज्ञाने प्रतियोगिनि भासमानधर्मप्रकारकमेव ज्ञानं कारणम्। एवं च प्रमेयत्वेन ज्ञानमादाय नातिप्रसङ्गः। प्रमेयत्वमात्रस्याभावज्ञाने प्रतियोगिन्यभावात्। न चाभावज्ञाने प्रतियोग्यंशे प्रतियोगितावच्छेदकमेव भासते न तदतिरिक्तमिति वाच्यम्। अप्रयोजकत्वात्। प्रतियोगितानवच्छेदकस्यापि प्रमेयत्वस्य प्रमेयो घटो नास्तीति प्रतियोग्यंशे भानाच्च। प्रथमक्षटे घटे रूपं नास्तीति प्रतियोगितानवच्छेदकस्य रूपत्वस्य भावाच्च। अत एव घटानुत्पत्तिदशायां विशेषाभावरूपस्यापि घटप्रागभावस्य घटो नास्तीति ज्ञानं सम्भवति। प्रतियोगितावच्छेदकस्यैव प्रतियोगिनि भावनियमाभावात्। न च प्रतियोगितावच्छेदक धर्मेण कथं प्रतियोगिताया धीरिति वाच्यम्। वह्नौ वैजात्यस्य तृणजन्यताग्रहोत्तरकल्प्यत्वेन वह्नित्वेनोपस्थिते तृणाजन्यताग्रहवत् यागजन्यतावच्छेदकेन स्वर्गत्वेनोपस्थिते यागजन्यताग्रहवत् इदं अभिधेयवत् प्रमेयादित्यत्राभिधेयनिरूपितव्याप्त्यनवच्छेदेनापि प्रमेयत्वेन व्याप्यत्वग्रहवच्च प्रतियोगितानवच्छेदकधर्मपुरस्कारेणापि प्रतियोगिताग्रहोपपत्तेः। न चैवं घटवत्यपि घटो नास्तीति प्रत्ययापत्तिरिति वाच्यम्। किं घटसामान्याभिप्रायेण वा घटविशेषाभिप्रायेण वा। नाद्यः। घटसामान्यस्य तत्रोपलब्धत्वेन सामान्याभिप्रायेण तादृशप्रत्ययासम्भवात्। न द्वितीयः। इष्टापत्तेः। विशेषाभिप्रायेण सामान्यव्यवहारस्य सकलजनसिद्धत्वात्। अत एव विशेषाभिप्रायेण मम धनं नास्तीति व्यवहरन्ति। न चैवं सामान्याभावसिद्धिर्नस्यात्। तत्प्रतीतेः सामान्यरूपेण विशेषाभावविषयत्वसम्भवादिति वाच्यम्। प्रतियोगिनि भासमानस्य प्रतियोगितावच्छेदकत्वस्य बाधके सत्येव त्याज्यत्वेन यत्र बाधकाभावस्तत्र सामान्यस्य प्रतियोगितावच्छेदकत्वेन सामान्याभावप्रतीतिसम्भवात्। न हि विशेष्यवति विशिष्टाभावो विशेषणाभावपर्यवसायीति सर्वत्र तथात्वेन विशिष्टाभावसिद्धिः। उभयाभाववति तत्प्रतीतेरबाधात्। विशिष्टाभावतुल्य योगक्षेमत्वात्सामान्याभावस्य। न च यावद्विशेषाभावविषयत्वेन तत्प्रतीत्युपपत्तौ सामान्याभावः किमर्थमङ्गीकर्तव्य इति वाच्यम्। अस्य सामान्याभाववादत्वेनाज्ञानवादत्वाभावात्। न हि सामान्याभाव सिद्धावज्ञानसिद्धिः। येन तवेष्टं स्यात्। सामान्याभावाङ्गीकर्त्रापि विशेषाभावाङ्गीकारे यावद्विषयत्वेनाज्ञानप्रतीतेरुपपादयितुमशक्यत्वात्। किं वा प्रसिद्धरूपाभावे वायौ निश्चिते वायौ रूपं न वा वायू रूपवान्न वेति संशयस्यानुभवसिद्धत्वात्। तत्कोटित्वेन सामान्याभावसिद्धिः। न च यावद्विशेषाभावानामेव संशयकोटित्वमिति वाच्यम्। तेषां निश्चितत्वेन संशयकोटित्वासम्भवात्। न चैतावन्त्येवरूपाणीति निश्चयदशायां संशयाभाव आपाद्यते उत तदनिश्चयदशायाम्। नाद्यः। इष्टापत्तेः। न द्वितीयः। अतिरिक्तरूपसम्भावनया तादृशसंशयोपपत्तेः। उक्तसम्भावनाविरहसहकृतस्य यावद्विशेषाभाव निश्चयस्य प्रतिबन्धकत्वादिति वाच्यम्। उक्तरूपप्रतिबन्धकल्पने मानाभावात्। एतावन्त्येव रूपाणीति निश्चयदशायामपि अस्य संशयस्यानुभवसिद्धत्वाच्च।

(कण्टकोद्धारः)

ननु यथा रूपं रूपत्वेन एककोटितया भासते तथा यावद्विशेषाभावोऽप्यनिश्चितेन रूपेण संशयकोटिरस्तु। अन्यथा रूपमप्यतिरिक्तं स्वीकर्तव्यमिति चेन्न। अनिश्चितं हि रूपं न रूपाभावत्वम्। विशेषाभावप्रतियोगिनि रूपत्वनिश्चयेन रूपत्वोपहिताभावत्वस्य निश्चितत्वात्। न च रूपत्वावच्छिन्नप्रतियोगिकाभावत्वमनिश्चितमेवेति वाच्यम्। तस्यानिश्चितत्वेऽपि विशेषाभावे रूपत्वावच्छिन्नाभावत्वाभावेन तेन रूपेण विशेषाभावस्य संशयविषयत्वासम्भवात्। विशेषाभावो हि तत्तद्रूपत्वावच्छिन्नप्रतियोगिकः न तु रूपत्वावच्छिन्नप्रतियोगिकः। न हि तत्तद्रूपत्वावच्छिन्नं तत्तद्रूपं रूपत्वावच्छिन्नं रूपं तु रूपत्वावच्छिन्नमिति न रूपप्रतिबन्धीगृहः। अतो विशेषाभावस्य संशयकोटित्वासम्भवात् संशयकोटित्वेन सामान्याभावः स्वीकर्तव्यः। अत एव गङ्गेश्वरेणापि तथैव विभावितम्। न चात्र संशये संशयकोटित्वेन भासमानाभावप्रतियोगिनि भासमानरूपत्वस्यावच्छेदकत्वं नभासत इति वाच्यम्। बाधकाभावे प्रतियोगिनि भासमानस्य स्वरूपसम्बन्ध विशेषरूपावच्छेदकत्त्वभावनियमात्। अत एव बाधकबलात् प्रतियोगिनि भासमानस्य नावच्छेदकत्वमित्युक्तम्।

एवं हि 'घटो भूतः' इत्यत्रापि क्रियातीततैव भासते। अन्यथाऽनन्तध्वंसस्य तद्दिनवर्त्तित्वेनाद्य 'भूतः' इति प्रतीतिप्रसङ्गात्। अतीतता च प्रतियोगितप्रागभावानाधारसमयसम्बन्धिता। प्रागभावत्वं च कादाचित्काभावत्वं प्रतियोगिजनकाभावत्वं वा। जनकत्वं चानन्यथासिद्धनियतपूर्ववृत्तित्वम्। पूर्ववृत्तित्वं च प्रागभाव-परिमितसमयवृत्तित्वम्। अतो न प्रागभावादावव्याप्तिः। सर्वथा निर्वचनासामर्थ्ये स्वरूपसम्बन्धविशेष-पर्यन्तानुसरणात्। अन्यथा सर्वत्र तस्यैव लक्षणत्वापत्त्याऽविद्यालक्षणनिर्वचनस्यायुक्तत्वप्रसङ्गाच्चेति। सर्वस्य वक्तुं शक्यत्वेन ध्वंसोऽपि न सिध्येत्। अद्येति पदप्रयोगश्च परदिनवर्त्तित्वव्यावृत्तिप्रतीतिर्माभूदित्येतदर्थमिति वक्तुं शक्यत्वाच्च। यदि चैतादृशातीततताविषयत्वापेक्षया ध्वंसविषयत्वं सिद्धयति तर्हि तादृशभविष्यत्तापेक्षया प्रागभावविषयत्वं लभ्येति समम्।

न च तत्त्वज्ञानव्यतिरेके ब्रह्ममात्राविद्यानिवृत्तिव्यतिरेक इति सम्भवति। ब्रह्मणोऽनित्यत्वप्रसङ्गात्। न च 'घटो भूत' इति प्रतीतिबलात् ध्वंसोऽङ्गीकार्य इति वाच्यम्। तर्हि घटो भविष्यतीति प्रतीतिबलात् प्रागभावोऽपि स्वीकर्तव्यः। ननु तत्र प्रागभावो न विषयः। किन्तु क्रिया भविष्यत्येव। अन्यथा दिनान्तरोत्पत्स्यमानघटे एव दिनवर्त्तिप्रागभावप्रतियोगित्वेनाद्य घटो भविष्यतीति प्रतीतिप्रसङ्गः। न च भविष्यत्ता प्रागभावमन्तरेण दुर्निरूपेति वाच्यम्। प्रतियोगितद्ध्वंसानाधारकालसम्बन्धित्वस्य भविष्यत्त्वस्य निर्वक्तुं शक्यत्वात्। न च ध्वंसत्वं प्रागभावप्रतियोग्यभावत्वमेवेति प्रागभावाङ्गीकार एवेति वाच्यम्। ध्वंसत्वस्य प्रतियोग्यजनकाभावत्वेन कादाचित्काभावत्वेन वा निर्वक्तुं शक्यत्वात्। न च जनकत्वं प्रागभावगर्भमिति वाच्यम्। तस्य स्वरूपसम्बन्धविशेषत्वात्। अन्यथा प्रागभावादावव्याप्तेरिति चेन्मैवम्।

माऽस्तु वा सामान्याभावः। तथाऽपि नास्माकं क्षतिः। प्रागभावादीनामेव विशेषाभावानां सामान्येन रूपेण 'अहमज्ञ' इत्यादौ प्रतीतिसम्भवादित्युक्तमेव। प्रतियोगिनि भासमानस्य प्रतियोगितावच्छेदकत्वनियमो नेत्यपि प्रतिपादितमेवेति।

(कण्टकोद्धारः)

नन्वेवं ज्ञानप्रागभावविषयत्वेन 'अहमज्ञः' इत्यादीनाम् उपपत्तिरिति वाच्यम्। तन्न युज्यते। प्रागभावसत्त्वे प्रमाणाभावेन तस्याभावादिति चेत्, तर्हि ध्वंसोऽपि न स्यात्। न चेष्टापत्तिः। ध्वंसानङ्गीकारे अविद्यानिवृत्तिरूपमोक्षाभावे तदर्थं शास्त्रप्रणयनादौ न प्रवर्तेत। न चाज्ञानध्वंसो ब्रह्मस्वरूप एवेति वाच्यम्। तथात्वे मोक्षस्य नित्यसिद्धत्वेन संसारानुपलम्भप्रसङ्गात्। तत्त्वज्ञानसाध्यत्वानुपपत्तेश्च। न च योगक्षेमसाधारणं जन्यत्वमिहाप्यस्तीति वाच्यम्। यस्मिन् सत्यग्रिमक्षणे यत्सत्त्वं, यदभावे चासत्त्वं, तत्तेन गम्यम्। विपक्षबाधकस्य उक्तत्वात्। अनेनैतदपि निरस्तम्। सामान्याभावस्वीकारे त्रयं कल्प्यम्। सामान्याभावस्तस्य सामान्यावच्छिन्नप्रतियोगिकत्वं, तत्तदधिकरणसम्बन्ध इति। तदनङ्गीकारे तत्प्रतीतेर्यावद्विशेषाभावानां सामान्यावच्छिन्नप्रतियोगिकत्वं तस्य व्यासज्यवृत्तित्वमिति द्वयमेव। तथा च लाघवादुत्तरपक्षः समीचीन इति न सामान्याभावसिद्धिरिति। प्रमितिसिद्धेऽर्थे गौरवस्यादोषत्वात्। अनेकेषां विषयत्वे कारणत्वे च गौरवमिति वैपरीत्याच्च। सामान्यावच्छिन्नप्रतियोगिकत्वस्य व्यासज्यवृत्तित्वे द्वित्वादिवदनेकप्रतीतावेव प्रतीतिप्रसङ्गाच्च। तादृशस्यापि व्यासज्यवृत्तित्वे घटत्वस्यापि तत्त्वप्रसङ्गाच्च। विशेषावच्छिन्नानां सामान्यावच्छिन्नत्वस्याप्रामाणिकत्वाच्च। तस्मात् सामान्याभावसिद्धिरप्रत्यूहैवेति। अत एवावृत्तिगगनादीनामेक एवाभाव इति परास्तम्। "गगनमिह नास्ति" इति प्रतीयमानस्यापराभावत्वसम्भवादित्यलमतिविस्तरेण।

तादात्म्यस्यावच्छेदकत्वे मानाभाव इति वाच्यम्। घटः पटो नेति प्रतीतेरेव मानत्वात्। अन्यथा घटस्याभावप्रतियोगित्वेऽपि प्रमाणाभावः स्यात्। नत्वत्र घटत्वस्य प्रतियोगितावच्छेदकत्वे बाधकं पश्यामः। न चावच्छेदकभेदस्याभावभेदनियामकत्वं लिङ्गविधया तद्ज्ञापकत्वं, न तु तज्जनकत्वम्। तच्च न सम्भवति। विपक्षे बाधकतर्काभावेन सामानाधिकरण्याभावेन च व्याप्तेरसिद्धेरिति वाच्यम्। यदावच्छेदक भेदस्तदा तदवच्छिन्नाभावभेद इति कालिकव्याप्तिसम्भवात्। मन्मते व्याप्तेरविनाभावरूपत्वेन सामानाधिकरण्याघटितत्वाच्च। भिन्नभिन्नाभावप्रतीतेरबाधितत्वेन विपक्षबाधकत्वसम्भवाच्च। यत्र तदितरधर्मावच्छिन्नप्रतियोगिताकत्वं तत्र तदवच्छिन्नप्रतियोगिताकान्यत्वमिति दैशिकव्याप्तिरपि सम्भवति।

किञ्चावच्छेदकभेदस्याभावभेदकत्वमवश्यं वाच्यम्। प्रतियोगिभेदस्य तत्त्वे प्रागभावादीनाञ्चतुर्णाम् ऐक्यं स्यात्। एवं च रूपत्वरूपप्रतियोगितावच्छेदकधर्मभाननियमाभ्युपगमे सामान्याभावाद्यसिद्धिरूपबाधकाभावात् प्रतियोगितानवच्छेदकेनापि ज्ञानत्वादिना रूपेण ज्ञानप्रागभावादिभानं युक्तमित्यहमज्ञ इत्यादिप्रतीतयो ज्ञानप्रागभावविषयत्वेन नाज्ञानविषया इति स्थितम्।

नन्ववच्छेदकभेदेन कथमभावभेदः ?भिन्नानामवच्छेदकानां वक्तुमवशक्यत्वादिति चेन्न। क्वचित् तादात्म्यस्य क्वचित् संसर्गस्य क्वचित्पूर्वापरकालीनत्वादेश्चावच्छेदकभेदस्य सम्भवात्। न च संसर्गप्रतियोगिसाधारणमवच्छेदकत्वं दुर्वचमिति वाच्यम्। रूपसम्बन्धविशेषत्वेन तस्य सुवचत्वात्। न च स्वरूपसम्बन्धत्वमपि दुर्वचमिति वाच्यम्। सम्बन्धान्तरमन्तराविशिष्टप्रत्ययजननयोग्यत्वस्य तत्त्वात्। न च नष्टो ध्वस्त इति प्रतीत्या ध्वंससिद्धिरिति वाच्यम्। तत्रापि क्रियाविशेषातीततताया एव विषयत्वसम्भवात्। न च ध्वंसोऽप्रत्यक्षोऽपि तु अनुमीयत इति वाच्यम्। साक्षात्करोमीत्यबाधितप्रत्ययात्। तत्प्रतिबद्धलिङ्गाभावाच्चेति। प्रागभावेऽपि तथा वक्तुं शक्यत्वाच्च।

(कण्टकोद्धारः)

तस्माद्दुरुत्तराप्रतिबन्दितरङ्गिणीध्वंसो नाङ्गीक्रियत इति तु निराकृतमेव। किं वेदं मा भूत् इति इच्छाविषयतया प्रागभावसिद्धिः। न च प्रागभावस्यासाध्यतया इच्छाविषयत्वासम्भव इति वाच्यम्। योगक्षेमसाधारसाध्यत्वस्य तत्र सम्भवात्। प्रतियोगिजनकविघटनेन तत्सम्बन्धस्यापि साध्यत्वाच्च। न चात्यन्ताभावविषयतयोपपत्तिरिति वाच्यम्। तस्य तत्सम्बन्धस्य चानादिनित्यत्वेनासाध्यत्वात्। अन्यथाऽत्यन्ताभावत्वस्य पारिभाषिकतापत्तेः। अपि चोत्पन्नस्य द्वितीयक्षणे पुनरुत्पत्यभावात्पूर्वक्षणे सामग्र्यभावो वाच्यः। स च प्रागभावाभावादेव। अन्यहेतूनां सत्त्वादिति प्रागभावसिद्धिः। न च सामयिकात्यन्ताभावेनैवोपपत्तिरिति वाच्यम्। तस्य कादाचित्कत्वेऽत्यन्ताभावत्वस्य पारिभाषिकतापत्तेः। अनादि सान्तत्वे चेष्टस्यैव सिद्धेः। अनाद्यनन्तत्वे च पुनरुत्पत्तिप्रसङ्गदोषातिवारणम्। न च घटस्यैव विरोधित्वात् नोत्पन्नस्य पुनरुत्पत्तिरिति वाच्यम्। विरोधिताया कारणविघटकत्वेनैव दृष्टत्वात्। तद्विघट्टकारणगवेषणायां प्रागभावे एव विश्रामात्। न च सामग्रीसत्त्वप्रयोजिका नोत्पत्ताविति वाच्यम्। सामग्र्यभावेऽपि सत्त्वस्य दर्शनेनोत्पत्तावेव तस्याः प्रयोजकत्वात्। अन्यथा नित्येऽपि सामग्रीकल्पनापत्तेः। किञ्चोपादनत्वव्यवस्थार्थं प्रागभावस्य स्वीकरणमावश्यकम्। न च तन्तुत्वादिनैव तद्व्यवस्थेति वाच्यम्। तन्तुत्वादीनामनन्तत्वेन प्रागभावस्य कर्तृजन्यतावच्छेदककार्यत्ववत् उपादानतावच्छेदकत्वात् तन्तुत्वादेश्च सर्वथा कार्याक्षमेऽपि सत्त्वेनोपादानताव्यवस्थापकत्वाच्च। प्रागभावस्य च फलबलकल्प्यत्वेनानतिप्रसङ्गात्।

किञ्च घटोत्पत्तावासन्नायामस्ति घटो नास्तीति प्रतीतिः। न च सा ध्वंसविषयिणी। तदानीं तस्याभावात्। नाप्यत्यन्ताभावविषयिणी। तस्य सदा सत्वेन घटकालेऽपि प्रतीत्यापत्तेः। अभावभ्रमानुपपत्तेश्च। न च सा भ्रमः। बाधकाभावात्। तस्मात् प्रागभावविषयिण्येवेति सिद्धः प्रागभावः। न चोत्पत्तिक्षणावच्छिन्नघटात्यन्ताभाव एव स इति वाच्यम्। दत्तोत्तरत्वात्। घटसत्त्वकालेऽपि तस्य सत्वेन तथाप्रतीत्यापत्तेश्च। प्रतियोगितावच्छेदकस्यैव प्रतियोगिनि भाननियमश्चोक्तप्रतीतिबलादेव त्याज्यः। उत्पादविनाशशीलात्यन्ताभावस्वीकरणं च गौरवादेव त्याज्यमिति संक्षेपः।

एतेन सर्वे प्रागभावनिरसनप्रकाराः कण्ठकोलाहलरूपा इत्युपरम्यते। तथा च प्रागभावप्रतीतेर प्रत्यूहत्वात्तदविषयत्वेन अहमज्ञ इत्यादिप्रतीत्युपपत्तेः साधूक्तं तस्मादित्यादिना॥ अपरे त्विति॥ न चैवं निर्विकल्पकविशेषज्ञानेऽपि तज्ज्ञानाभावप्रतीतिः स्यादिति वाच्यम्। निर्विकल्पकस्य खपुष्पतुल्यत्वात्। न चात्र प्रतियोगिज्ञानं न साक्षिणा। प्रतियोगिनोऽविद्यमानत्वात्। शाब्दं च तज्ज्ञानं विशेषप्रकारकमेवेति वाच्यम्। साक्षिणो विद्यमानमात्रस्यैव प्रतीयमानत्वादिति चिन्तनीयम्।

किं च प्रागभावादिर्न कपाले घट इति विद्यमानताविरोधेन प्रतीयते। न तथाऽत्यन्ताभावः। तस्यान्यत्र विद्यमानताविरोधिविषयत्वानभ्युपगमेन तादृशप्रतियोगिविषयत्वसम्भवात्। अन्यथा तस्य प्रामाण्यग्राहकत्वाभावे प्रामाण्यस्य परतस्त्वापत्तेः। प्रामाण्यस्याबाधितार्थकत्वरूपत्वेन अतीतादिघटितत्वात्। शाब्दज्ञानस्यापि विशेषप्रकारत्वेऽपि येन रूपेण तदपेक्षितं तद्रूपेण प्रकारत्वाभावाच्च॥ प्रमेयत्वाद्याकारेणेति॥ अतद्गुणसंविज्ञानबहुव्रीहिणा प्रतियोगिनिरूपकेऽर्थे भासमानप्रकारकज्ञानसम्भवादिति द्रष्टव्यम्॥ केचित्त्विति॥

(कण्टकोद्धारः)

न च त्वदुक्तस्य मदुक्ताद्व्यावर्तकत्वेन सामान्यतो व्यावर्तकधर्मविषयत्वस्य निषेधोऽशक्य इति वाच्यम्। न मया सामान्यतो व्यावर्तकधर्मविषयत्वं निषिध्यते। किन्तु करतलामलकेत्याद्युक्त्याऽसाधारणव्यावर्तकधर्मविषयत्वस्य निषेधात्। यादृशधर्मविषयत्वे सति तदधिकरणे साधारणे व्यवहारः केनाप्यभेदारोपो वा न भवति। अत एवाह॥ करतलेति॥ ॥ अत्येत्विति॥ न चात्रापि साक्षात् त्वदुक्तार्थविषयप्रमाणज्ञानं प्रतियोगितज्ज्ञानं च न साक्षिणा। तस्य विद्यमानार्थविषयत्वात्। शब्दश्चार्थं बोधयन्नेव ज्ञानं बोधयतीति साक्षात् प्रमाणज्ञानस्य वृत्तत्वात्कथं तदभाव इति वाच्यम्। साक्षिणो विद्यमानमात्रविषयत्वनियमस्य प्रागेव दूषितत्वात्।

किं च प्रतियोगितावच्छेदकप्रकारकज्ञानत्वेनैव हेतुता। न तु प्रतियोगिज्ञानत्वेन गौरवात्। तथा च तादृशज्ञानमन्यस्मिन्विद्यमाने साक्षिणा भविष्यतीति किमनुपपन्नम्। शब्देनापि ज्ञानविषयत्वेनैवार्थस्य बोधनसम्भवाच्च। साक्षादित्यस्यान्याविषयेत्यर्थात्। त्वदुक्तार्थविषयप्रमाणज्ञानमित्यादिशब्दादेश्च ज्ञानविशेषणतयैव अर्थज्ञानजनकत्वाच्च।

किं च यत्र यत्र विशेषाज्ञानं प्रतीयते तत्र सर्वत्रार्थविशेष्यकविशेषविषयप्रकारकज्ञानाभावो वा अर्थसत्ताविश्चयरूपज्ञानाभावो वा निष्कम्प्रप्रवृत्तिजनकज्ञानाभावो वा विषय इति न कश्चित् क्षुद्रोपद्रवः। प्रतियोगिज्ञानं साक्षिरूपमानुमानिकं शाब्दं वा। घटो भवत्येवेत्यादिवत्। नार्थसत्ताविश्चयरूपम्। न वा निष्कम्प्रप्रवृत्तिहेतुः। न वा घटविशेष्यकं घटत्वप्रकारकमिति हि सर्वसिद्धम्। तादृशत्वे वा तत्राज्ञानप्रतीतेरसिद्धेः। अत एव वादिवाक्यात् विशेषज्ञाने जातेऽपि तस्योक्तरूपत्वाभावात् न जानामीति व्यवहरन्ति इति सर्वमनवद्यम्। अत एव तादृशज्ञानप्रामाण्यग्राहिणाऽर्थतथात्वं विषयीकृतमिति तस्यार्थरूपत्वमिति परास्तम्। तादृशज्ञानेऽर्थांशे प्रामाण्यसंशयेनार्थांशे साक्षिणस्तथात्वानिश्चायकत्वात्। निश्चायकत्वे वा तत्राज्ञानप्रतीतेरसिद्धेरिति॥ किं चेति॥ नन्वनुमानादिना ज्ञानव्यावृत्तिरेव क्रियते। तेन त्वज्ञानं बोध्यते इति चेन्न। तद्बोधं विना तद्व्यावृत्तेः कर्तुमशक्यत्वात्। अनुमितेः व्यापकतावच्छेदकप्रकारकत्वनैयत्येनाज्ञानाव्यावृत्तिबोधकत्वासम्भवाच्च। तद्व्यावृत्तेस्तत्रैव पर्यवसानाच्च। प्रत्यक्षादावप्येवमेव वक्तुं शक्यत्वाच्च। जानामीति व्यवहारस्योभयत्र तुल्यत्वात्। समानन्यायेन शब्दस्यापि तदबोधकत्वेऽतीन्द्रियाद्यसिद्धिप्रसङ्गाच्च। अज्ञानाद्यनिवृत्तौ परोक्षज्ञानेनेति शेषः॥ यदि चेति॥ व्यवहाराद्यविरोधिनोऽज्ञानत्वस्य पारिभाषिकत्वादिति भावः। नन्वपरोक्षस्थलेऽज्ञाननिवृत्त्यनङ्गीकारे चैतन्याभिव्यक्त्यभावेऽपरोक्षैकरसचैतन्यसम्बन्धाभावविषयापरोक्ष्यं न स्यात्। विषयापरोक्ष्येऽन्यस्य प्रयोजकस्याभावादित्यत आह॥ विषयापरोक्ष्यं त्विति॥ वृत्तिमात्रस्य चैतन्याभिव्यक्तिहेतुत्वे परोक्षस्थलेऽपि तत्प्रसङ्गः। तथा च वृत्तिविशेषः स्वीकरणीय इति वृत्तिविशेषसम्बन्धादेव तत्सम्भवे चैतन्याभिव्यक्तेरप्रयोजकत्वमिति भावः॥ परोक्षवृत्त्येति॥ भ्रमस्याज्ञानोपादानत्वेन तन्निवृत्तिद्वारैव भ्रमनिवर्तकत्वादिति भावः॥ तस्येति॥ धर्माद्यज्ञानं निवृत्तमित्यनुभवस्येत्यर्थः। ननु यदि परोक्षज्ञान मज्ञाननिवर्तकं तर्हि सोपाधिभ्रमो न स्यात्। उपादानाभावात्। अज्ञानस्य च परोक्षज्ञानेन नाशितत्वादित्यत आह॥ परोक्षत इति॥ आत्मादिकमेवोपादानमिति भावः॥ त्वन्मत इति॥ त्वयाऽन्तःकरणादेरुपादानत्वास्वीकारात्। अज्ञानस्य च

(कण्टकोद्धारः)

नष्टत्वादिति भावः॥ अन्त्य इति॥ अज्ञानविषयोऽज्ञानवृत्त्या न गृह्यत इति पक्ष इत्यर्थः। ननु मास्तु अहमज्ञ इत्याद्यज्ञाने प्रमाणम्। न किञ्चिदहमवेदिषमित्य नु भवस्तु स्यात्। तस्यान्यथोपपादयितुमशक्यत्वादित्यत आह॥ न किञ्चिदिति॥ नन्वेवं भवन्मतेऽप्यज्ञानं न सिध्येत्। सर्वस्याप्यनुभवस्योक्तरीत्या ज्ञानाभावविषयत्वादिति चेन्न। जीवस्वरूपावरणान्यथानुपपत्त्यादिनाऽज्ञानसिद्धिसम्भवात्। परमते च चैतन्यस्य निर्विशेषत्वेन तदसम्भवस्य वक्ष्यमाणत्वात्। तथा च नास्मत्प्रतिबन्दी ग्रहः।

किञ्च कथञ्चिज्ज्ञानविरोधिपदार्थमात्रसिद्धावपि उक्तविशेषणत्रयविशिष्टस्य न सिद्धिः। उक्तप्रत्यक्षेऽन्यतमस्यापि विशेषणस्यास्फुरणात्। तत्रैव विवादात्। न हि ज्ञानविरोधिनि पदार्थे कस्यापि विवादः। तथा चोक्तलक्षणविशिष्टे प्रमाणप्रश्ने ज्ञानविरोधिनि प्रमाणोपदर्शनमर्थान्तरग्रस्तमित्यपि बोध्यम्॥ भावरूपेति॥ न च सुषुप्तावज्ञानं नाज्ञानत्वेनाभूयत इति वाच्यम्। एवं हि सुतरां ज्ञानाभावविषयत्वं उपपन्नम्। ज्ञानाभावोऽपि नाभावत्वेन भासत इति वक्तुं शक्यत्वात्।

ननु यथाकथञ्चिदप्यभावज्ञानं प्रतियोगिज्ञानसापेक्षमित्यत आह॥ अभावस्यापीति॥ न हि प्रमेयमित्यादिज्ञाने प्रतियोग्यादिज्ञानापेक्षेति भावः। किञ्चायं परामर्शः अनुमानमुत स्मरणम्। आद्ये ज्ञानाभाव एवानुमीयत इत्याह॥ यद्वेति॥ न च पक्षासम्भवात्कथमनुमानमिति वाच्यम्। तत्कालीनाहं पदार्थस्य पक्षत्वात्। न च कालविशेषासिद्धेः पक्षासिद्धिरिति वाच्यम्। सम्प्रतिपन्नोदयास्तमयकालवत् विवादपदयो-रप्युदयास्तमययोरन्तरा कालानुमानसम्भवात्। विप्रतिपन्नौ उदयास्तमयावन्तराकालयुक्तौ उदयास्तमयत्वात् सम्प्रतिपन्नोदयास्तमयवदित्यनुमानात्।

यद्वा कालस्य तद्विशेषस्य वा केवलसाक्षिवेद्यत्वस्यान्यत्रोक्तत्वेन साक्षिणा कालविशेषसिद्धिसम्भवात्। न च तथाऽत्र ज्ञाने विद्यमाने कथं ज्ञानाभावानुमेति वाच्यम्। विशेषज्ञानाभावानुमानसम्भवात्। ननु तथापि हेतोरभावात् कथमनुमानमत आह॥ अवस्थाविशेषत्वस्यापीति॥ अत्रैवं प्रयोगः। तत्कालीनोऽहं ज्ञानाभाववान् अवस्थाविशेषवत्वात् ज्ञानसामान्यविरहवत्वात्। तुल्ययोगक्षेम आत्मादौ स्मर्यमाणेऽपि तद्वत्तया नियमेनास्मर्यमाणत्वात् वेति।

नन्ववस्थाविशेषवत्वं नाम ज्ञानाभावत्वम्। अन्यस्य दुर्निरूपत्वात्। तथा च हेतोः साध्याविशेष इति चेन्न। कालविशेषरूपस्त्रुट्यपरनामकावस्थाविशेषस्य निर्वक्तुं शक्यत्वाच्च। कालविशेषश्च साक्षिसिद्ध इति पूर्वमेवोक्तम्। अत एव पक्षविशेषणासिद्धिरप्यपास्ता। न च द्वितीयेऽसिद्धिः। ज्ञानाभावेन च सामग्रीविरहानुमाने चान्योन्याश्रय इति वाच्यम्। इदानीन्तनेनेन्द्रियसम्प्रसादेन पूर्वकालीनतदुपरममनुमाय तेन सामग्रीविरहानुमानसम्भवात्। न इन्द्रियसम्प्रसादः सुखानुभवहेतुको नोपरमहेतुक इति वाच्यम्। सुखानुभवहेतुकत्वेऽपि उपरमहेतुकत्वाविरोधात्। सुषुप्तौ सुखानुभवे विद्यमानेऽपि इन्द्रियसम्प्रसादादर्शनाच्च।

किञ्चेन्द्रियसम्प्रसादस्योन्मीलनादिव्यापाररूपतयोपरमस्य च तत्प्रागभावरूपतयाऽवश्यं सम्प्रसादस्यो-परमहेतुत्वम्। तथा च तेन सामग्रीविरहानुमानसम्भवः। यद्वा इन्द्रियाणां स्वव्यापारत्वे तत्कार्यानुभवः स्यात्। तथा च तदन्यथानुपपत्त्या उपरमसिद्धौ सामग्रीविरहसिद्धिरिति।

(कण्टकोद्धारः)

ननु तृतीये हेतौ नियमेनास्मर्यमाणत्वं किं यथाश्रुतम्। किं वा सुषुप्तिकालावच्छेदेन। नाद्योऽसिद्धेः। न द्वितीयः। अनुपेक्षणीयज्ञानाभावसिद्ध्यापत्तेस्तत्रैव व्यभिचाराच्चेति चेन्न। द्वितीयस्यैवाश्रयणीयत्वात्। यद्यदा यदवच्छेदेनैतत्तुल्ययोगक्षेमे स्मर्यमाणे नियमेन प्रतिबन्धाद्यभावेन स्मर्यते। तत्तदा न ज्ञायत इति व्याप्तेरभिमतत्वात्। न ह्युपेक्षणीययोरेकं स्मर्यते नापरमिति सम्भवति। सत्यनुभवे उभयोरपि स्मरणात्। उपेक्षाज्ञानस्य संस्कारजनकत्वे तत्तुल्ययोगक्षेमस्य इति विशेषणाभावेन विशिष्टाभावसम्भवात्। न चैवं तदभावसिद्धिः कथं। प्रकारान्तरेण तत्सिद्धिसम्भवात्। तदसिद्धावनिष्टाभावाच्च। अत एव तत्र व्यभिचारोऽप्यपास्तः। विशेषणाभावेन तदविशिष्टहेत्वभावात्। अन्यथा प्रातरनुभूतचत्वरे गजाभावज्ञानं न स्यात्। न च तत्र ज्ञानानुपलब्ध्याऽभावोऽनुमीयत इति वाच्यम्। अनुपलब्धिज्ञानोपायाभावात्। न च भावरूपाज्ञानमेव तत्र लिङ्गम्। तथा हि। अहं पूर्वकाले गजज्ञानाभाववान् गजाज्ञानवत्वात् यन्नैवं तन्नैवम्। यथा गजज्ञानवानहमिति वाच्यम्। भावरूपाज्ञानासिद्ध्या हेतोरसिद्धेः। जडे ज्ञानानङ्गीकाराच्च। अनुपलब्धे साक्षिवेद्यत्वेन तत्राज्ञानस्य लिङ्गत्वायुक्तेश्च। प्रकृतेऽपि ज्ञानुपलब्ध्या ज्ञानाभावानुमान सम्भवाच्चेति। नन्वयं परामर्शो नानुभवः अपि तु स्मरणमेवेति चेन्न। स्मरणस्य संस्कारजन्यत्वेन संस्काराभावे तदयोगात्। तदभावश्च जनकाभावात्। न च साक्षिरूपोऽनुभवः संस्कारजनक इति वाच्यम्। तस्य नित्यत्वेन तत्कार्यस्य कर्तुं शक्यतया तेन संस्काराजनकात्। न हि संस्कारः प्रत्यक्षसिद्धः। येन कार्याभावेऽपि कल्प्येत। तस्मान्नायं परामर्शः स्मरणम्।

किञ्च सर्वांशे स्मरणं त्वन्मतेऽपि न सम्भवतीत्याह॥ त्वन्मत इति॥ सुप्तावहमर्थस्य त्वया लयाङ्गीकारादिति भावः। सुषुप्ताविति विशिष्टस्य केवलादन्यभावादिति भावः। नन्वयं परामर्शः स्मरणमेव। न च साक्षिरूपज्ञानस्य नित्यत्वात् न संस्कारजनकत्वम्। तथा च कथं स्मरणमिति वाच्यम्। अविद्याप्रतिबिम्बितचैतन्यस्य साक्षित्वाङ्गीकारादित्यत आह॥ सुषुप्ताविति॥ उपलक्षणमेतत्। वृत्तेरपि वृत्तिप्रतिबिम्बितसाक्षिवेद्यत्वेऽनवस्था चेत्यपि द्रष्टव्यम्। ॥अन्यथेति॥ ज्ञानाभावाद्यनुमानाङ्गीकार इत्यर्थः॥ त्वन्मत इति॥ अज्ञाना-सिध्याऽन्योन्याश्रयाच्चेत्यपि द्रष्टव्यम्। साक्षिवेद्य इति तत्राज्ञानानङ्गीकारादिति भावः॥ एवमिति॥ यद्यज्ञानेन लिङ्गेन ज्ञानाभावोऽनुमीयत इत्यर्थः।

यद्वा ज्ञानविरोधिनाऽज्ञानेनैव ज्ञानाभावसिद्धिर्नान्येन तदेत्यर्थः॥ प्रकाशमानेनेति॥ तथा चात्मादिविषयकरागाभावो न सिध्येदिति भावः। तत्र यदि प्रकारान्तरेण रागाभावसिद्धिस्तर्हि प्रकृतेऽपि ज्ञानाभावसिद्धिः प्रकारान्तरेणैवेति नाज्ञानं तत्र लिङ्गमिति भावः।

॥ इति भावरूपाज्ञानप्रत्यक्षत्वभङ्गः॥

## न्यायामृतप्रकाशः

यच्चोक्तमहमज्ञ इति प्रत्यक्षं भावरूपाज्ञानसद्भावे मानमिति तद्युक्तम्। तस्य ज्ञानाभावविषयकत्वस्य त्वयाप्यवश्यं वाच्यत्वादित्यभिप्रेत्याह ॥यच्चेत्यादिना ॥॥अहमर्थस्येति॥ अहमज्ञ इति प्रतीतेः प्रामाण्याय ज्ञानाभावविषयकत्वं त्वयापि वाच्यम् अन्यथा तस्याः प्रामाण्यमेव न स्यादिति भावः। अज्ञानानाश्रयेऽहमर्थेऽज्ञानाश्रयत्वावगाहित्वादिति भावः। किं च न जानामीति प्रतीतेर्ज्ञानाभावविषयकत्वं कुत्रचित्त्वयापि वाच्यं तन्न्यायेन ज्ञानाभावविषयकत्वमेव सर्वत्रास्त्वित्याह ॥साक्षीति॥ साक्षिवेद्ये प्रातिभासिके अज्ञानसुखादौ शुक्तिरूप्यादौ च भावरूपाज्ञानं नांगीकृतम् अज्ञानसुखाद्यावरकाज्ञानांगीकारे साक्षिरूपशुद्धचैतन्यस्याज्ञानानिवर्तकत्वादंतःकरणवृत्तेरेव तन्निवर्तकत्वात्तस्याश्च सुखादिविषयेऽभावात्तन्निवृत्तिरेव न स्यात्। ततश्च तज्ज्ञानमेव न स्यात्। अतस्तदभावे सुखं न जानामीत्यादेर्भावरूपाज्ञानविषयकत्वेऽप्रामाण्यप्राप्त्या तत्प्रामाण्याय ज्ञानाभावविषयकत्वमेवांगीकार्यमिति भावः ॥तथात्वाच्चेति॥ ज्ञानाभावविषयकत्वस्यैव वक्तव्यत्वादित्यर्थः। किं च न जानामीति प्रत्यक्षस्य सर्वत्रापि भावरूपाज्ञानविषयकत्वे परोक्षतो ज्ञातेऽपि धर्मादौ न जानामीत्यनुभवः स्यात् भावरूपाज्ञानसद्भावात्। न च परोक्षज्ञानेनाज्ञानस्य निवृत्तत्वात्तथाऽनुभवाभाव इति वाच्यम्। त्वन्मते परोक्षवृत्तेरज्ञानानिवर्तकत्वात् तथात्वेऽज्ञानस्य निवृत्तत्वेनापरोक्षचित्संबंधाद्विषयस्याप्यापरोक्ष्यं स्यात्। अतो ज्ञानाभावविषयकत्वमेव वाच्यं परोक्षज्ञानेन तु ज्ञानाभावस्य निवृत्तत्वान्न जानामीति व्यवहाराभावो युक्तः। तथा च तन्न्यायेन सर्वत्रापि ज्ञानाभावविषयकत्वमस्त्वित्याशयेनाह ॥त्वन्मत इति॥ किं च त्वदुक्तमर्थं न जानामीत्यादेः प्रत्यक्षस्य ज्ञानाभावविषयकत्वमेव वाच्यं न भावरूपाज्ञानविषयकत्वं तथात्वेऽप्रामाण्यापत्तेः। त्वन्मते अज्ञानस्य विषयावरकतया विषयगतत्वाङ्गीकारात् जडे च प्रकाशप्रसक्तेरेवाभावेन प्राप्तप्रकाशप्रतिबंधरूपावरणकृत्यभावेन भावरूपाज्ञानायोगात्। अतो भावरूपाज्ञानाभाववत्यर्थे तदवगाहित्वे प्रत्यक्षस्याप्रामाण्यापत्त्या तत्प्रामाण्याय ज्ञानाभावविषयकत्वमेव वाच्यमित्याह ॥त्वन्मत इति॥ जडे विषये। अज्ञानस्येति शेषः। आवरणरूपो योऽतिशयः फलंकृत्यमिति यावत् ॥विक्षेपेति॥ तदाकारप्रतिभासरूपेत्यर्थः ॥न जानामीति॥ तथा च भावरूपाज्ञानविषयकत्वेनैव प्रामाण्यमस्त्विति भावः ॥विक्षेपेति॥ घटाद्यतदाकारप्रतिभासरूपकार्यसद्भावेन तत्कारणतया भावरूपाज्ञानसत्वमङ्गीकार्यं तथा च घटं न जानामीत्यनुभवः स्यादिति भावः। नन्विदमयुक्तम् अपरोक्षतो घटत्वेन घटस्य ज्ञातत्वेन योग्यतानिश्चयात्तत्र प्रयुज्यमानं वाक्यम् अयोग्यतानिश्चयेन स्वार्थाबोधकमिति विक्षेपकारी नेति चेत् सत्यम्। एवं हीदं योज्यम् अपरोक्षत एकेन घटो घटत्वेन ज्ञातः अयं घट इति वाक्याभासाच्च विक्षेपरूपं कार्यं येन घटोऽपरोक्षतो घटत्वेन ज्ञातस्तस्यायोग्यतानिश्चयाभावो न संभवत्येव ततश्च घटे विक्षेपरूपकृत्यसद्भावेनाज्ञानस्थितिप्राप्त्या येन घटत्वेनापरोक्षतो घटो ज्ञातस्तस्यापि घटं न जानामीत्यनुभवः स्याद्विषयेऽज्ञानस्य सत्वादित्यर्थ इत्याहुः। यस्य विक्षेपस्तस्य भवत्येवायमनुभवः यस्यापरोक्षतो निश्चयस्तस्य तु भवत्येवेति कथमेतदिति विचार्यमस्ति ॥जडे विषये न जानामीति॥ जडे आवरणरूपकृत्याभावेन तत्राज्ञानाभावेपि जडावच्छिन्नचैतन्ये एव मयाऽज्ञानांगीकारात् तस्य स्वप्रकाशत्वेन प्रकाशप्रसक्तौ तत्प्रतिबंधकतया आवरणकृत्यसद्भावात्। तथा च त्वदुक्तमर्थं न जानामीत्यादेर्भावरूपाज्ञानविषयकत्वमेव संभवतीति भावः ॥निरसिष्यमाणत्वादिति॥ अज्ञानसिद्धौ जडसिद्ध्या तदवच्छिन्नचैतन्यसिद्धिः तत्सिद्धौ च तद्विषयाज्ञानसिद्धिरित्यन्योन्याश्रयत्वेनेत्यर्थः ॥वृत्तिरिति॥

(प्रकाश:)

अज्ञानावृतचैतन्यमेवाधिष्ठानं तस्य चासङ्गत्वेन विषयसम्बन्धाभावाद्वृत्तिश्रितोविषयोपरागमात्रमेव करोति नाज्ञानं नाशयतीति मते जडावच्छिन्नेऽनावृतचैतन्ये तदावरकाज्ञानाभावेन त्वदुक्तमर्थं न जानामीत्यादि प्रत्यक्षस्य ज्ञानाभावविषयकत्वमेवेति वाच्यम् अन्यथाऽप्रामाण्यापत्तेरित्यर्थः ॥भावरूपेत्यादि॥ अहमज्ञ इति भावरूपाज्ञानविषयकतया त्वदभिमतस्य प्रत्यक्षस्य मयि ज्ञानं नास्तीति ज्ञानाभावविषयकप्रत्यक्षस्य च न विषयभेदः प्रतीयते किं तु अघटं भूतलं भूतले घटो नास्तीति प्रत्यक्षयोर्यथा एकत्र घटाभावो विशेषणं भूतलं विशेष्यम् अपरत्र तु भूतलं विशेषणं घटाभावो विशेष्यमिति विशेषणविशेष्यभावव्यत्यास एव प्रतीयते न विषयभेदः एवमिहापि एकत्राज्ञानं विशेषणम् आत्मा विशेष्यः अपरत्र तु आत्मा विशेषणं ज्ञानाभावो विशेष्य इति विशेषणविशेष्यभावव्यत्यास एव प्रतीयते न विषयभेदः तत्र व्यतिरेकेण दृष्टांतः ॥इच्छेति॥ यथा इच्छाद्वेषाभावज्ञानयोरिच्छाद्वेषाभावरूपो विषयभेदः प्रतीयते तथा नेत्यर्थः। एवं चाहमज्ञ इति प्रतीतेर्मयि ज्ञानं नास्तीत्यत्र प्रतीयमानज्ञानाभावातिरिक्ताज्ञानविषयकत्वाङ्गीकारेऽघटं भूतलमिति प्रतीतेरपि भूतले घटो नास्तीत्यत्र प्रतीयमानात् घटाभावादतिरिक्त एवाघटो विषय इत्यङ्गीक्रियतामित्यतिप्रसंगः सूचितो भवतीति ध्येयम् ॥प्रतियोगीति॥ अहमज्ञ इति प्रतीतेर्ब्रह्मज्ञानाभावविषयकत्वे प्रतियोगिभूतज्ञानाज्ञाने ज्ञानाभावज्ञानानुपपत्त्या तज्ज्ञाने वाच्ये तस्य विषयनिरूप्यत्वेन विषयस्य ब्रह्मणोपि ज्ञातत्वात्तज्ज्ञानाभावज्ञानायोग इति दूषणमित्यर्थः। स्वव्याहतिमेवोपपादयति ॥भावरूपेति॥ इदानीमित्यादिविशेषणं ब्रह्मज्ञानप्रागभावसत्वावश्यकत्वोपपादनायेति ज्ञातव्यम्। ब्रह्मज्ञानप्रागभावाभावे ब्रह्मज्ञानसद्भावप्राप्त्या इदानीं वेदांतश्रवणादेर्वैयर्थ्यापात इत्याशयः। तथा चेदानीं ब्रह्मज्ञानप्रागभावोस्तीति ज्ञात्वैव किल वेदांतश्रवणाद्यनुष्ठीयते तथा च प्रागभावस्य प्रतियोगिज्ञानाधीनज्ञानत्वेन प्रतियोगिभूतब्रह्मज्ञानज्ञानाभावे प्रागभावस्य ज्ञातुमशक्यत्वात्तज्ज्ञाने वाच्ये तस्य विषयनिरूप्यत्वेन ब्रह्मणोपि ज्ञातत्वात्तज्ज्ञानाभावज्ञानं न प्रत्यक्षेण येन प्रतियोगिज्ञानापेक्षा स्यादिति स्वव्याहतमित्यर्थः। स्वव्याहतिमाशङ्क्य निराकरोति ॥न चेति॥ अयमर्थः। ब्रह्मज्ञानाभावज्ञानं न प्रत्यक्षेण येन प्रतियोगिज्ञानापेक्षा स्यात् किंत्वनुमानेन। न च तत्र लिङ्गाभावः भावरूपाज्ञानस्यैव लिङ्गत्वात् अभावप्रत्यक्षत्वावच्छेदेनैव प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य हेतुत्वं नाभावानुमित्यवच्छेदेनापि। अनुमितेर्व्यापकतावच्छेदकप्रकारकव्यापकज्ञानाधीनत्वेनाभाववानित्यनुमितिः प्रतियोगिज्ञानाभावेपि भवत्येव तथा शब्दस्यापि शक्यतावच्छेदकप्रकारकज्ञानजनकत्वेनाभाव इति पदाज्जायमाने प्रतियोगिज्ञानानपेक्षणात् अतोहं ब्रह्मज्ञानाभाववान् अज्ञानवत्त्वादित्यनुमानेन ज्ञानाभावानुमानांगीकारात् तत्र च प्रतियोगिज्ञानानपेक्षणात् न व्याहतिरिति भावः। कुतो न वाच्यमिति चेदनुभवबाधादित्याह ॥वृत्तीति॥ प्रतियोगितदभावयोरेकेन्द्रियग्राह्यत्वादिति भावः ॥अनुपलब्ध्येति॥ करणेनेत्यर्थः। षष्ठप्रमाणवादिभाट्टरीत्योक्तमिति ध्येयम् ॥झडितीति॥ "झडित्येव परिज्ञानान्न लिङ्गोद्भवता मते"ति वचनात्। अनुमापकत्वांगीकारेऽनुभवविरोध इति भावः ॥त्वन्मत इति॥ ज्ञानाभावः सर्वत्रानुमानवेद्य इति वदता जडे तावज्ज्ञानाभावज्ञानम् अनुमानेनेति वक्तव्यं तच्चाऽयुक्तं जडे आवरणकृत्याभावेन भावरूपाज्ञानाख्यलिङ्गाभावादिति भावः। ननु तत्रापि विक्षेपाख्यकार्यसद्भावेन भावरूपाज्ञानसद्भावाज्ज्ञानाभावानुमानं संभवत्येवेत्यस्वरसादाह ॥अपरोक्षत इति॥ ॥भावरूपेति॥ अपरोक्षभावरूपाज्ञानस्य तन्निवर्त्यत्वेन लिङ्गाभावादिति भावः। अपरोक्षतो ज्ञाते ज्ञानाभाव

(प्रकाशः)

एव नास्तीत्यतः परोक्षेत्युक्तम्। प्रातिभासिके रूप्यादौ प्रातिभासिकदुःखादिपदार्थस्य साक्षिवेद्यत्वात्तद्विषयकाज्ञानांगीकारे तन्निवर्तकांतःकरणवृत्तेस्तत्राभावेन शुद्धचैतन्यस्यानिवर्तकतयाऽज्ञाननिवृत्त्ययोगेन प्रातिभासिकज्ञानाभावापत्तेः अतस्तत्र दुःखादिविषयकभावरूपाज्ञानवत्वादित्यनुमानेन दुःखादिज्ञानाभावप्रतिपत्त्ययोग इत्यर्थः। अतः साक्षिप्रत्यक्षेण दुःखाभावप्रतिपत्तिर्वाच्या तत्र स्वव्याहतिरेवेति भावः। अस्तु वानुमित्यैव ज्ञानाभावज्ञानं तथापि स्वव्याहतिः स्यादेव। अहं ज्ञानाभाववानित्यत्राधिकरणीभूतात्मज्ञानाभावे पक्षज्ञानाभावेनानुमित्यभावापत्तेस्तज्ज्ञाने वाच्ये ज्ञानसामान्याभावानुमित्ययोगात्। ननु मास्तु धर्मिज्ञानं किं तेन ब्रह्मविषयकज्ञानाभावानुमितिस्तावद्युक्तैवेति चेत्तर्हि प्रतियोगिभूतब्रह्मज्ञानज्ञानाभावे तदभावानुमित्ययोगात् तज्ज्ञाने वाच्ये तस्य विषयनिरूपणत्वेन विषयस्य ब्रह्मणोपि ज्ञातत्वात्तद्विषयकज्ञानाभावानुमित्ययोग एव। न च प्रतियोगिज्ञानमभावप्रत्यक्षे हेतुर्नानुमित्यादावित्युक्तमिति वाच्यम्। तत्रापि प्रतियोगिविशेषघटिताभावज्ञानमात्रे प्रतियोगिज्ञानस्य हेतुत्वमावश्यकमेवेति कृते चानुमितेर्ब्रह्मज्ञानाभावविषयकत्वेन प्रतियोगिविशेषघटिताभावविषयकत्वात्प्रतियोगिज्ञानस्यावरूपत्वेन प्रतियोगिज्ञानापेक्षाया अभावात्कथं दौर्घट्यमिति वाच्यम् अज्ञानं तावज्ज्ञानविरोधित्वेनैव प्रतीयत इति तवापि संमतम् एवं च प्रतियोगिज्ञानाज्ञानाभ्यां दौर्घट्याभावेपि विरोधनिरूपकीभूतज्ञानस्य ज्ञानाज्ञानाभ्यामेव दौर्घट्यं विरोधनिरूपकीभूतस्य ज्ञानस्याज्ञाने तन्निरूपितविरोधस्यैव ज्ञातुमशक्यत्वेन तद्विरोध्यज्ञानज्ञानायोगः तज्ज्ञाने तु विरोधनिरूपकीभूतज्ञानविषयतया ब्रह्मणोपि ज्ञातत्वाद्ब्रह्मज्ञानविरोध्यज्ञानस्यैवाभावेनाज्ञानस्य ज्ञानायोग इति स्वव्याहतिः स्यादेव। ननु स्यादिदं यद्यज्ञानं ज्ञानविरोधित्वेन प्रतीयेत न चैवम् अतो न दोष इत्याशंकायामज्ञानस्य ज्ञानविरोधित्वेनैव प्रतीतिं तावदुपपादयति ॥अपिचेत्यादिना ॥ ॥ज्ञानविरोधित्वेनैवेति॥ नञो विरुद्धार्थत्वाज्ज्ञाधात्वर्थभूतज्ञानविरोधित्वं प्रतीयत इत्यर्थः। ननु यदाऽज्ञानं न जानामीति प्रतीयते तदानञुल्लेखाज्ज्ञानविरोधित्वेन भानम्। यदा तु मुग्धोस्मीति प्रतीयते तदा कथं ज्ञानविरोधित्वेन भानं नञुल्लेखाभावादित्यत आह ॥मुग्धोस्मीत्यादावपीति॥ मोहोऽज्ञानं तद्वानस्मीत्यर्थः। यथा प्रलयादिशब्देषु नञोनुल्लेखेपि ध्वंसो गम्यते एवमत्रापि नञोनुल्लेखेपि ज्ञानविरोधित्वं प्रतीयत एवेत्यर्थः ॥अत एवेति॥ नञोनुल्लेखेपि तदर्थस्य प्रतीयमानत्वादेवेत्यर्थः ॥उक्तं चेति॥ अज्ञानस्य ज्ञानविरोधित्वेन प्रतीयमानत्वमित्यर्थः ॥द्वयेति॥ आश्रयविषयेत्यर्थः। ज्ञानपर्युदासेन ज्ञानविरोधेन। तथा चाश्रयविषयरूपद्वयसापेक्षं यज्ज्ञानं तद्विरोधेनैवाज्ञानमुच्यत इत्यर्थः ॥अन्यथेति॥ अज्ञानस्य ज्ञानविरोधित्वेन प्रतीत्यनंगीकार इत्यर्थः। अज्ञानस्य ज्ञानविरोधः कुत इति शङ्कायां तथा प्रतीतिरेव तत्र प्रमाणत्वेन वक्तव्या तदनङ्गीकारे विरोधोऽप्रामाणिक एव स्यादित्यर्थः ॥तथा चेति॥ एवमज्ञानस्य ज्ञानविरोधित्वेन प्रतीयमानत्वे सिद्धे सतीत्यर्थः। ननु नाज्ञानं विरोधनिरूपकज्ञानज्ञाननियतज्ञानम् अज्ञानमित्यादिशब्दैस्तत्प्रतीतौ तन्नियमेपि तमोनीहारादिशब्दैः सामान्यतस्तत्प्रतीतौ विरोधस्यैवाप्रतीयमानत्वेन तन्निरूपकज्ञानज्ञानापेक्षणादित्यतोत्रापि मुग्धोस्मीत्यादाविव नञोऽनुल्लेखमात्रमिति समाधाने सत्येव समाधानांतरमाह ॥ज्ञानाभावोपीति॥ यदा ज्ञानाभावोपि ज्ञानाभावत्वेनैव प्रतीयते तदैव प्रतियोग्यादिज्ञानापेक्षानियमेपि प्रमेयत्वादिना रूपेण सामान्यतः प्रतीतौ तदपेक्षाभावान्न त्वद्दूषणावकाश इत्यपि वक्तुं सुशकत्वादिति भावः। ननु यथा निपुणे कुशलशब्दो रूढ एव न तु कुशं लातीति व्युत्पत्त्या यौगिकः एवं न ज्ञानमज्ञानमिति अज्ञानशब्दो न यौगिकः

(प्रकाश:)

येनावयवार्थभूतज्ञानविरोधस्य भानमावश्यकं स्यात्। न चैवं किं तु रूढ एवेत्याशंकापि निरस्तेत्याह ॥एतेनेति॥ एतेनेत्युक्तं विशदयति ॥वृत्तीति॥ तद्विरुद्धत्वोपपादनायोक्तम् ॥वृत्तिज्ञाननिवर्त्यस्येति ॥॥क्लृप्तेति॥ कुशलादिशब्देतु ''निपुणः कुशलः कृति'' इत्यभिधानेन समुदायशक्तिः क्लृप्ता योगस्तु कल्प्य इति तत्र रूढ्या योगबाधः इह तु योग एव क्लृप्तो रूढिस्तु कल्प्या। अतः प्रोक्षण्यधिकरणन्यायेन रूढ्यपेक्षया योग एव प्रबल इति विरोधभानमावश्यकमिति भावः। अस्त्वज्ञानशब्दो यौगिको रूढो वा। अयं च विचारः शब्द एव यदा तु प्रत्यक्षेण अज्ञानं प्रतीयते तदा कथमिति चेत्तदापि ज्ञानविरोधित्वेनैवाऽज्ञानं प्रतीयत इत्याह ॥शब्देति॥ अन्यथाऽज्ञानस्य ज्ञानविरोधो न सिध्येदिति भावः। सङ्गृह्णाति ॥एवं चेति॥ भावे भावरूपाज्ञाने तयोः ज्ञानभावाभावयोरित्यर्थः। प्रतियो गिज्ञानज्ञानभावाभावाभ्यां चोद्यपरिहारौ। किं च भावरूपाज्ञानस्य ब्रह्मविषयकमज्ञानमिति सविषयतानुभूयमानत्वाच्च तत्रापि विकल्प्य दूषणीयमित्याह॥अपि चेति ॥॥अज्ञानज्ञानेति॥ विषयावच्छिन्नाज्ञानज्ञानायोगादित्यर्थः ॥ज्ञाने चेति॥ अवच्छेदकीभूतब्रह्मरूपविषयज्ञान इत्यर्थः ॥अज्ञानस्येति॥ ब्रह्मविषयकाज्ञानस्येत्यर्थः। उभयत्रापि परिहारमाशंकते ॥नन्विति॥ यदुक्तं यौगिकत्वेन नञर्थविरोधनिरूपकीभूतज्ञानस्य ज्ञानाज्ञानाभ्याम् अज्ञानस्य ज्ञानं दुर्घटमिति तत्र वदामः। विरोधनिरूपकीभूतज्ञानज्ञानमस्तीति तत्र विरोधनिरूपकीभूतज्ञानविषयतया ब्रह्मणोपि ज्ञातत्वाद्ब्रह्म-ज्ञानविरोध्यज्ञानस्यैवा भावेनाज्ञानज्ञानायोग इति। तत्र वदामः विरोधनिरूपकीभूतज्ञानावच्छेदकस्य ब्रह्मणो ज्ञानं साक्षिरूपमस्त्येव। ननु तद्विरोध्यज्ञानायोग इति चेन्न साक्षिचैतन्यस्याज्ञानस्फोरकत्वेनाज्ञानाविरोधित्वात् प्रमाणजन्यांतःकरणवृत्तेरेव तद्विरोधित्वात् तस्याश्चाभावात्। एवं च ब्रह्मज्ञानस्य साक्षिरूपस्य सत्वेपि तदविरोध्यज्ञानसंभवादज्ञानज्ञानं युक्तमेव तथा च न जानामीत्यस्य साक्षिणा ज्ञाते ब्रह्मणि भावरूपाज्ञानमस्तीत्यर्थः। तथाऽज्ञानशब्दरूढिपक्षे भावरूपाज्ञानावच्छेदकविषयज्ञानाज्ञानाभ्यां भावरूपाज्ञान-ज्ञानायोग इति यदुक्तं तत्रापि वदामः अज्ञानावच्छेदकस्य ब्रह्मरूपविषयस्य ज्ञानं साक्षिरूपमस्त्येव तच्चाज्ञानाविरोध्येव अतस्तदविरोध्यज्ञानज्ञानं युक्तमेव साक्षिविषयब्रह्मविषयकभावरूपमज्ञानमस्तीत्यर्थोपपत्तेरिति भावः ॥सममिति॥ प्रतियोगिभूतब्रह्मज्ञानज्ञानभावाभावाभ्यां न जानामीति ब्रह्मज्ञानाभावज्ञानं न संभवतीति यदुक्तं तत्र वयमपि वदामः। प्रतियोगिभूतब्रह्मज्ञानज्ञानं साक्षिरूपमिति। ननु तर्हि ब्रह्मज्ञानावच्छेदकीभूतस्य ब्रह्मरूपविषयस्यापि ज्ञातत्वात्तदज्ञानासंभव इति चेन्न न जानामीत्यस्य वृत्तिज्ञानाभावविषयकत्वात् एवं च न जानामीत्यस्यास्मन्मतेपि साक्षिणा ज्ञाते ब्रह्मणि प्रमाणजन्यवृत्तिज्ञानं नास्तीत्यर्थोपपत्तेरित्यर्थः। एवं प्रतिबंद्योत्तरमभिधाय परमुखेनैव समाधानं कथयति ॥तस्मादिति ॥॥अवच्छेदकस्येति॥ विरोधनिरूपकीभूतज्ञानावच्छेदकस्य ब्रह्मरूपविषयस्येत्यर्थः। सामान्यतः सामान्याकारे विशेषतः विशेषाकारे एवं च न जानामीत्यस्य सामान्यतो ज्ञाते ब्रह्मणि विशेषाकारविषयकं भावरूपाज्ञानमस्तीत्यर्थो वक्तव्यः ॥तत्सममिति॥ एवमेव न जानामीत्यस्य सामान्यतो ज्ञाते ब्रह्मणि विशेषज्ञानं मम नास्तीत्यर्थोपपत्तेरित्यर्थः। ननु तर्ह्यत्रापि दूषणमुक्तं विशेषज्ञानाभावविषयकत्वे प्रतियोगिभूतस्य ज्ञानस्य ज्ञानमस्ति न वेति। नेति पक्षेऽभावज्ञानायोगः। आद्ये ज्ञानावच्छेदकतया विशेषस्यापि ज्ञातत्वेन तज्ज्ञानाभावस्यैवायोगेन तज्ज्ञानायोग इतीति चेन्न। यदुक्तं त्वया विशेषज्ञानज्ञानमस्ति न वेति तत्र नास्तीति ब्रूमः। तर्ह्यभावज्ञाने प्रतियोगिज्ञानस्य

(प्रकाशः)

हेतुत्वेन विशेषज्ञानाभावज्ञाने विशेषज्ञानरूपप्रतियोगिज्ञानस्य कारणत्वात्। तदभावे प्रतियोगिज्ञानाभावे न तद्विशेषज्ञानाभावज्ञानायोग इति चेत्तत्राह ॥तद्विशेषज्ञानाभावज्ञानं प्रतीति॥ ब्रह्मगतविशेषाकारेत्यर्थः ॥तत्सामान्येति॥ निरूपणीयाभावप्रतियोगिज्ञानविषयीभूतविशेषसमानाधिकरणसामान्यधर्मविषयकं ज्ञानमित्यर्थः। ननु विशेषज्ञानाभावं प्रति सामान्यज्ञानं न प्रतियोगिभूतमिति कथं तस्य विशेषज्ञानाभावज्ञानं प्रति हेतुत्वं स्यादित्यत आह ॥अन्वयेति॥ ज्ञायमानविशेषज्ञानाभावप्रतियोगिभूतविशेषज्ञानस्य ज्ञानाभावेपि सामान्येन तज्ज्ञाने सत्येव विशेषज्ञानाभावज्ञानस्यानुभूयमानत्वादित्यर्थः ॥नन्विति॥ यस्य विशेषज्ञानस्याभावो निरूप्यते तद्विशेषज्ञानमेव तदभावज्ञाने न हेतु र्येन तज्ज्ञानापेक्षा स्यादित्यर्थः ॥वक्ष्यत इति॥ गुहायां किंचिदस्तीति सामान्यतो निश्चये सत्येव तत्किमिति विशेषे संदेहो भवति तत्र तद्विशेषसंशये तत्सामान्यनिश्चयस्यैव हेतुत्वं न तु विशेषनिश्चयस्यापि तथात्वे संशयानुपपत्तेः एवं तद्विशेषज्ञानाभावज्ञानं प्रति तत्सामान्यज्ञानमेव हेतुः न तु तद्विशेषज्ञानं तथात्वे तद्विशेषज्ञानस्यैव सत्वेन विशेषज्ञानाभावस्य विरुद्धत्वेनायोगादित्यादिकं वक्ष्यत इत्यर्थः। पूर्वं न जानामीत्यस्य तद्विशेषज्ञानाभावार्थत्वेऽस्माभिरभिहिते विशेषज्ञानस्य ज्ञानमस्ति न वेति पृष्टे नेति पक्षमङ्गीकृत्य स्वेन समाहितम्। अपरे तु विशेषज्ञानज्ञानमस्त्येव तर्हि तदवच्छेदकतया विशेषस्यापि ज्ञातत्वात्तदभावज्ञानायोग इति चेन्न। विशेषज्ञानं नास्तीत्यस्य विशेषप्रकारकज्ञानं नास्तीत्यर्थः विशेषज्ञानं तु संसर्गमर्यादयास्तीत्यङ्गीक्रियते। एवं च तार्किकमते दंडीत्यत्र .संसर्गमर्यादया संसर्गस्य प्रतीतत्वेपि दंडीति ज्ञानं दंडसम्बन्धप्रकारकं न भवति ततश्च सम्बन्धस्य स्वरूपेण ज्ञाने सत्यपि सम्बन्धप्रकारकज्ञाननिषेधे न दोषः। एवं विशेषस्य स्वरूपेण ज्ञानेपि विशेषप्रकारकज्ञाननिषेध एव क्रियते कुत इति चेत्। विशेषप्रकारकज्ञानस्यैव संशयादि विरोधित्वात्। तदपि कुत इति चेत् विशेषप्रकारकसंशयादिविरोधित्वानङ्गीकारे सर्वत्र संशयादिस्थले प्रमेयत्वादिना सामान्याकारेण विशेषज्ञानसद्भावात्संशयादिकं न स्यात् अतः स्वरूपेण विशेषज्ञाने सत्यपि संशयादिविरोधिभूतं यद्विशेषप्रकारकं ज्ञानं तन्मम नास्तीति न जानामीत्यस्यार्थ इत्यङ्गीकारे न कोपि दोष इत्याहुरित्याह ॥अपरेत्विति ॥॥स्वरूपेणैवेति॥ विशेषणतया विशेष्यतया च यत्र भासते तत्स्वरूपेण भासते संसर्गमर्यादया भासत इति यावदित्यर्थः। तस्यैव विशेषप्रकारकज्ञानस्यैव। तदनङ्गीकारे बाधकमाह ॥संभवतीति ॥॥केचित्त्विति॥ न जानामीत्यस्य ब्रह्मज्ञानं नास्तीति विशेषविषयकज्ञाननिषेधो नार्थः येन पूर्वोक्तविकल्पदूषणावकाशः किं तु ब्रह्मज्ञाने विशेषविषयकत्वं नास्तीत्येवार्थः। अत्र चासाधारणधर्मो विशेष पदेन विवक्षितः तथा च ज्ञानेऽसाधारणधर्मविषयकत्वं नास्तीति निषध्यत इत्यर्थः। असाधारणधर्मत्वं नाम किमिति शंकायां शिष्यबुद्धिवैशद्याय तन्निर्वक्ति ॥स्वेति॥ ननु कुत्राप्यप्रसिद्धस्य शशशृङ्गादे निषेधायोगादेतादृशासाधारणधर्मविषयकत्वं कुत्र प्रसिद्धं यदिह ज्ञाने निषिध्यत इत्यत उक्तम् ॥करतलामलकादिज्ञान इति॥ स्वेत्यादेरयमर्थः स्वशब्दः समभिव्याहृतपरः तथा च स्वशब्देन करतलामलकादिज्ञानं तद्विषयः करतलामलकादिः तदितरत् जगत् तत्प्रतियोगिकव्यावृत्त्यधिकरणं करतलामलकादिकं तत्राधिकरणतास्ति तदवच्छेदकीभूतो धर्मः करतलामलकत्वादिरसाधारणो धर्म इति यावत् तद्विषयकत्वं करतलामलकादिज्ञानेस्ति। एवमिहापि स्वशब्दे ब्रह्मज्ञानं ग्राह्यं तद्विषयभूतं यत् ब्रह्म तदितरत् जगत् तत्प्रतियोगिकव्यावृत्त्यधिकरणं ब्रह्म तन्निष्ठाधिकरणतावच्छेदकीभूतो यो धर्मोऽसाधारणो ब्रह्मत्वादिः तद्विषयकत्वं निषिध्यत इत्यर्थः। अत्र

(प्रकाशः)

स्वेत्यनुक्त्वा करतलामलकादिज्ञानविषयेत्येवोक्तौ करतलामलकत्वविषयकत्वं ब्रह्मज्ञाने निषिध्यत इति स्यात्। तच्चासङ्गतम्। ब्रह्मज्ञानेत्येवोक्तौ ब्रह्मत्वादिविषयकत्वं ब्रह्मज्ञाने निषिध्यत इति स्यात् इदं चान्यत्राप्रसिद्धम् अतः स्वेत्युक्तमिति मन्तव्यम्। साक्षादित्युक्तस्य कृत्यं वक्तुमाह ॥न चेति ॥॥विशिष्टेति॥ अर्थविशिष्टप्रमाणज्ञानविषयकस्याभावज्ञानस्येत्यर्थः ॥तद्विशेषणतयेति॥ तत्र विशिष्टार्थविषयेऽभावज्ञाने प्रमाणज्ञानविषयतयेत्यर्थः ॥स्ववचनेति॥ अर्थविषये प्रमाणज्ञानं नास्तीति यदा ब्रूते तदा पुनरेतज्ज्ञानरूपप्रमाणविषयत्वप्राप्त्या स्ववचनव्याघात इत्यर्थः ॥साक्षादिति॥ अस्मिन्नभावज्ञाने प्रमाणज्ञानस्यैव निषेध्यतया साक्षादविषयत्वादवच्छेदकतयार्थस्याविषयीकृतत्वान्न साक्षात्प्रमाणज्ञानविषयत्वमित्यर्थः। ननु यथा कथंचिदेतत्प्रमाणज्ञानविषयतयार्थस्य सत्वप्राप्तेः पुनः प्रमाणज्ञाननिषेधे स्ववचनव्याहतिरेवेत्यत आह ॥साक्षादिति॥ अन्यथेदं रजतमिति ज्ञानवानहमिति ज्ञानद्वारानुव्यवसायरूपप्रमाणज्ञानविषयरूप्यस्यापि सत्वं सिद्ध्येदित्यर्थः। ज्ञानावच्छेदकस्य विषयस्याग्रहेपि ज्ञानसंभवादभावग्रहो भविष्यतीति वक्तुमाह ॥किं चेति॥ अज्ञानम् अनुमित्यादिवृत्तिविषयो न वा न तावद्वितीय इत्याह ॥अज्ञानमिति॥ तत्र अज्ञानसद्भावे आदिपदेन "तम आसीदि"ति श्रुत्युक्तिर्ग्राह्या। स्वनिष्ठा परकीया ज्ञानधीः सेत्यर्थः। न स्यात् सर्वथा ज्ञानाविषयत्वे शब्दवृत्तिविषयत्वम् अनुभूयमानं न स्यादित्यर्थः। आद्येत्वाह ॥वृत्तीति॥ तया स्वग्राहकवृत्त्या ॥त्वन्मत इति॥ विषयस्य वृत्तिज्ञानविषयत्वात् वृत्तेरेव चाज्ञानविरोधित्वात्तद्विषयकाज्ञानं न संभवतीत्यर्थः। नन्वर्थस्य वृत्तिग्राह्यत्वेपि तत्राज्ञानं युक्तम् अज्ञानस्य प्रमाणजन्यपरोक्षवृत्तिविषयत्वेन तदवच्छेदकविषयस्यापि परोक्षवृत्तिविषयत्वात् परोक्षवृत्तेश्चाऽज्ञानाविरोधित्वादित्याशङ्क्य निषेधति ॥न चेति ॥॥अननुभवादिति॥ तथा च परोक्षवृत्तिरप्यज्ञानविरोधिन्येवेति भावः। अपरोक्षवृत्तेरज्ञानविरोधित्वानङ्गीकारे दूषणांतरमाह ॥अज्ञानानिवृत्ताविति॥ परोक्षवृत्तेरज्ञानाविरोधित्वेन परोक्षवृत्तेः सकाशात् अज्ञानानिवृत्तावित्यर्थः ॥व्यवहारादीति॥ आदिपदेन संस्कारग्रहणं व्यवहारादेरज्ञाननिवृत्तिकार्यत्वादिति भावः। तत्रापरोक्षवृत्त्यैव केवलवृत्तिमात्रेण। ताम् अज्ञाननिवृत्तिम्। ननु अपरोक्षस्थलेऽज्ञानानिवृत्त्यङ्गीकारेऽभिव्यक्तापरोक्षचित्सम्बन्धाभावेन विषयस्यापरोक्ष्यं न सिद्ध्येदित्यत आह ॥विषयस्येति॥ चैतन्यविषयस्यापरोक्ष्यं चैतन्याभिव्यञ्जकत्वार्थम् आवश्यकेनेन्द्रियजन्यत्वप्रयुक्तेन वृत्तिगतेन साक्षात्कारत्वविशेषेणैवोपपन्नमित्युक्तं दृश्यत्वभङ्ग इत्यर्थः। परोक्षवृत्त्याज्ञानानिवृत्तौ बाधकांतरमाह ॥परोक्षवृत्त्येति ॥॥भ्रमेति॥ अज्ञानस्यैवानिवृत्तत्वेन भ्रमोपादानाज्ञानस्य सत्वादिति भावः। परोक्षवृत्त्याप्यज्ञाननिवृत्तेरनुभूयमानत्वात्तद्विरोधश्चेत्याह ॥अनुमित्येति ॥॥तस्येति॥ अनुभवस्येत्यर्थः ॥ज्ञानाभावेति॥ वह्निधर्मादिज्ञानाभावो निवृत्त इति वह्निधर्मादिज्ञानाभावविषयकत्व इत्यर्थः ॥भावरूपेति॥ भावरूपाज्ञानसाधको योऽनुभवः कथ्यते तस्यापि ज्ञानाभावविषयकत्वस्यैव वक्तुं शक्यत्वादिति भावः। ननु परोक्षवृत्तेरज्ञाननिवर्त्तकत्वाङ्गीकारे शङ्खः श्वेतः शङ्खत्वादित्यनुमिति रूपपरोक्षवृत्त्या भ्रमोपादानस्याज्ञानस्य नाशापत्त्याऽपरोक्षभ्रमानुवृत्तिर्नस्यादित्यत आह ॥परोक्षत इति ॥॥उपाधीति॥ अस्मन्मते भ्रमस्यांतःकरणरूपोपाध्युपादानकत्वेनाज्ञानानुपादानकत्वादित्यर्थः। प्रत्युतायं दोषस्त्वन्मत एवेत्याह ॥त्वन्मते त्विति ॥॥सन स्यादिति॥ परोक्षवृत्तेरज्ञाननिवर्तकत्वस्योपपादितत्वाच्छङ्खत्वानुमित्या श्वैत्याज्ञानस्य नष्टत्वात्स भ्रमो न स्यादिति मयैव त्वांप्रत्यापाद्यते न तवापादनावकाश इत्याशयः। अज्ञानविषयकानुमिति शाब्दवृत्त्या

(प्रकाशः)

तदवच्छेदको विषयो न गृह्यत इति पक्षे आह ॥अंत्य इति ॥॥तद्वदेवेति॥ अवच्छेदकीभूतविषयाग्रहणेपि यथा भावरूपाज्ञानं गृहीतं तद्वदेवेत्यर्थः ॥अवच्छेदकेति॥ प्रतियोगितयाऽवच्छेदकेत्यर्थः। एतावन्तं कालं न किंचिदहमवेदिषमिति परामर्शसिद्धसौषुप्तिकानुभवोप्यत्रमानमित्युक्तं तद्दूषयति ॥न किंचिदिति॥ परामर्शः स्मरणं तत्र भावरूपाज्ञानाङ्गीकारे दुःखादेरान्तरपदार्थत्वेन तन्निवर्तकान्तःकरणवृत्त्ययोगेन तदनिवृत्त्यापत्तेरुक्तत्वेन ज्ञानाभावविषयकत्वमेव तत्रेति भावः। तदा सुषुप्त्यवस्थायाम् ॥धर्म्यादीति॥ तदानीं सर्वज्ञानोपरमादिति भावः ॥अयोग इति॥ तथा च तदाज्ञानाभावानुभवान्नपरामर्शस्तद्विषयः किंत्वनुभूतभावरूपाज्ञानविषय एवेत्यर्थः। अज्ञानत्वेन प्रतीतौ ज्ञानविरोधित्वेन प्रतीतावित्यर्थः। तदपेक्षणात् धर्म्यादिज्ञानापेक्षणात् तस्याप्याश्रय-विषयद्वयसापेक्षज्ञानपर्युदासत्वादिति भावः। तथा च तदा सर्वज्ञानोपरमाद्विरोधनिरूपकज्ञानविषयादेर-प्रतीतेर्ज्ञानविरोधित्वेन भावरूपाज्ञानविषयकत्वमपि सौषुप्तिकानुभवस्य नयुक्तमित्यवधेयम्। अज्ञानविरोधनिरूपकं ज्ञानविरोधित्वेनाज्ञानस्य प्रतीयमानत्वादज्ञाननिष्ठविरोधनिरूपकमित्यर्थः। तथा च विरोधनिरूपकं ज्ञानम् अज्ञानविषयं सामान्येनोल्लिखतीति न विशेषरूपेऽज्ञानविरोध इत्यर्थः ॥तर्हीति॥ अभावप्रतियोगिभूतं ज्ञानमपि स्वविषयं सामान्येनोल्लिखदभावनिरूपकमित्यर्थः। तदा सुषुप्त्यवस्थायां स्वरूपेण ज्ञानविरोधित्व-प्रकारौदासीन्येनेत्यर्थः। इदानीं जाग्रदवस्थायाम् ॥प्रतियोगीति॥ न किंचिद्रूपेणेत्यर्थः ॥अनुभूयत इति॥ तथा चैतावन्तं कालमित्यादिकं न स्मरणरूपं येन सुषुप्ताविषयादिघटिताज्ञानविरोधित्वेन भावरूपाज्ञानानुभवानुपपत्तिः किं नाम तदा स्वरूपेणैवाज्ञानमनुभूतम् इदानीं प्रतियोगिविषयावच्छेदयुक्ततयानुभूयते अतो नोक्तदोष इत्यर्थः ॥सममिति॥ सुषुप्तौ ज्ञानाभावोपि स्वरूपेणैवानुभूतः इदानीं प्रतियोगिविशेषावच्छेदयुक्ततयानुभूयत इति सममित्यर्थः। नन्वभावस्य ससम्बन्धिकत्वात्स्वरूपेण ज्ञानमेव नास्तीत्यत आह ॥अभावस्यापीति॥ तदनपेक्षणात् प्रतियोग्याद्यनपेक्षणात् तथा च तद्वत्सुषुप्तावपि प्रतीतिर्युक्तेति भावः। परामर्शः ज्ञानाभावस्मरणमित्यर्थः। ननु लिङ्गाभावान्नानुमानिकानुभव इत्यत आह ॥अवस्थेति। अवस्थाविशेषवत्त्वस्येत्यर्थः। जाग्रत्स्वप्नांतरकालिकाहं ज्ञानाभाववान् अवस्थाविशेषवत्त्वात् यथा जाग्रदहमित्यवस्थाविशेषवत्त्वस्य लिङ्गत्वादित्यर्थः। लिङ्गातरमाह ॥सामग्रीति॥ तत्कालीनोहं ज्ञानाभाववान् इन्द्रियसंनिकर्षादिरूपतत्सामग्रीशून्यत्वादिति सामग्र्यभावस्यैव लिङ्गत्वादित्यर्थः। स्वरूपासिद्धो हेतुरित्यत आह ॥इन्द्रियसंप्रसादेनेति॥ सुषुप्तौ स्थितस्येन्द्रियाणि सम्यग्विकासविशेषरूपप्रमादवंति भवन्ति। तेन सुषुप्ताविन्द्रियोपरमरूपं कार्यं तथा च सामग्र्याभावः सिद्ध इत्यर्थः। लिङ्गान्तरमाह ॥प्रातरित्यादिना॥ तथा च सुप्तौ ज्ञानं नानुभूतं स्मरणार्हतया ज्ञानतुल्ययोगक्षेमे आत्मादौ स्मर्यमाणेपि नियमेना-स्मर्यमाणात्मान्तर्गतत्वाभावादित्यनुमानेन ज्ञानाभावानुमानमित्यर्थः । हस्तिहस्तिपयोरुभयोरनुभवेपि तत्रैक-स्मिन्दृष्टेपि संस्कारानुद्बोधेनापरास्मरणदशायां तस्मिन्व्यभिचारवारणाय नियमेनेत्युक्तम्। प्रातः काले राजद्वारि गजभावमनुभूयाऽन्यत्र गतः पुनः सायं दृष्ट्वा प्रातरत्र गजोनाभूदिति प्रत्येति तत्र गजाभावज्ञानं न प्रत्यक्षेण प्रतियोगिनः पुरतस्सत्वात्। अत उक्तलिङ्गेनैव तदभावानुमानं सिद्धमिति ज्ञेयम् ॥त्वन्मतेपीति॥ न

(प्रकाशः)

किंचिदहमवेदिषमित्यस्य न त्वन्मतेप्यहमर्थांशे स्मरणरूपत्वं युक्तं सुषुप्तौ तद्भिलयाङ्गीकारेणाननुभूतत्वादित्यर्थः। किं च न किंचिदहमवेदिषमिति अज्ञानांशेऽहमर्थस्य परामर्शत्वं प्रतीयते तन्न युक्तं सुषुप्तावहमर्थस्याभावेनाज्ञानस्याहमर्थेनाननुभूतत्वात्। शुद्धचैतन्यमात्रेणैव तस्यानुभूतत्वादित्याह ॥ सुषुप्ताविति ॥ ॥ अन्येति ॥ अन्येन शुद्धचैतन्येनेत्यर्थः। परामृष्टत्वं स्मृतत्वम्। किं च त्वन्मतेऽज्ञानस्मरणमेवायुक्तं तथाहि अज्ञानं किं वृत्तिप्रतिबिम्बितसाक्षिवेद्यं शुद्धसाक्षिवेद्यं वा नाद्य इत्याह ॥ सुषुप्ताविति ॥ तद्वेद्यत्वापातेनेति ॥ वृत्तिप्रतिबिम्बितसाक्षिवेद्यत्वापातेनेत्यर्थः। अस्त्विति चेत्तत्राह ॥ वृत्त्यभावेति ॥ वृत्तेः कादाचित्कत्वादिति भावः ॥ असंदेहेति ॥ ज्ञातैकसत्वेन सन्देहादेस्तत्रायोगादिति भावः। न चाविद्यावृत्तेरनित्यत्वात्तदुपहितसाक्षिरूपस्याज्ञानज्ञानस्याप्यनित्यत्वात्तस्य संस्कारजनकत्वं भविष्यतीति शङ्का परिहाराय वृत्त्यभावदशायामित्याद्युक्तमिति ज्ञातव्यम्। सुषुप्तौ ज्ञानं नास्तीति जाग्रदवस्थायामनुमीयत इत्येवम् अनुमानिको ज्ञानाभावानुभव इत्यनङ्गीकारे बाधकमाह ॥ अन्यथेति ॥ ॥ तवापीति ॥ सुप्तौ भावरूपाज्ञानवत् ज्ञानाभावोप्यस्ति स न सिद्ध्येत्। प्रतियोग्यादिज्ञानाभावेन सुषुप्तौ प्रत्यक्षेण तदनुभवायोगादिति भावः। शङ्कते ॥ भावरूपेति ॥ त्वन्मते विषयसंबंध्यावरणत्वेन विषयनिष्ठत्वेन तत्रैव जडेऽहमर्थे भावरूपाज्ञानलिङ्गेन ज्ञानाभावानुमानं कार्यं तत्र संभवतीत्याह ॥ त्वन्मत इति ॥ जडे विषये तदावरकतयेति यावत् आवरणकृत्याभावादिति भावः। तथा चाहं घटादिज्ञानाभाववान् तद्विषयकभावरूपाज्ञानवत्त्वादित्यत्रासिद्धिः। विक्षेपसद्भावाद्युक्तमेवाज्ञानमित्यस्वरसादाह ॥ साक्षीति ॥ इच्छादौ विषये। तदा सुषुप्तौ। इच्छादौ भावरूपाज्ञानं नास्ति तथात्वे चैतन्यस्याज्ञानानिवर्तकत्वात् अंतःकरणवृत्तेश्चेच्छादावभावेनाज्ञानानिवृत्त्या कदापीच्छादिप्रकाशो न स्यात्। अत इच्छादौ भावरूपाज्ञानरूपलिङ्गाभावात्। अहम् इच्छाज्ञानाभाववान् तद्विषयकभावरूपाज्ञानवत्त्वादित्येवं तत्र ज्ञानाभवो न सिद्धेदित्यर्थः। भावरूपाज्ञानेन तद्विरोधिनो ज्ञानस्याभावोनुमीयत इत्युक्तं तथा चैकस्य विरोधिनः पदार्थस्यानुभवेन तद्विरोधिनोऽपरस्य पदार्थस्याभावेऽनुमानं वदता विरोधिपदार्थाभावे तद्विरोध्यपरपदार्थानुभवः प्रयोजक इत्युक्तं स्यात् ॐमिति चेत्तत्राह ॥ किं चेति ॥ तस्मिन्सत्यभवतस्तदप्रयोजकत्वादिति भावेन तदुपपादयति ॥ न हीति ॥ ॥ रागादीति ॥ तथा चाहं रागाद्यभाववान् रागादिज्ञानशून्यत्वादित्यनुमानेन रागाद्यभावसिद्धिर्न तु तद्विरोधिद्वेषसद्भावेनेत्यर्थः। इच्छापरपर्यायरागादेर्ज्ञानसाध्यत्वाद्वस्तुसिद्धेर्ज्ञानाधीनत्वाच्चेति भावः। सुखादिवत् इच्छादावपि ज्ञातैकसत्वेन प्रकाशमानत्वादुत्पत्त्यनंतरं ज्ञानाभावस्यैवाभावेन हेतोः स्वरूपासिद्धिरित्याह ॥ प्रकाशमानेति ॥ आत्मादावित्यत्रादिपदेनेच्छादेर्ग्रहणम्। तथाचोत्तरकालीनपरामर्शसिद्धसौषुप्तिकानुभवोनुभावरूपाज्ञाने मानमित्याशयः। भङ्गार्थमुपसंहरति ॥ तस्मादिति ॥ उक्तप्रत्यक्षस्य भावरूपाज्ञानविषयत्वासमर्थनादित्यर्थः।

॥ भावरूपाज्ञानप्रत्यक्षभङ्गाविवरणम् ॥

## २३. अविद्यानुमानभङ्गः

यच्चाद्यानुमानं, तत्र सुखादिप्रमायां बाधः। तस्याः साक्षिरूपत्वेनाज्ञानानिवर्तकत्वात्। वृत्तेः पक्षत्वेऽपि परोक्षवृत्तौ बाधः। तस्याः स्वविषये अज्ञाननिवर्तकत्वे तद्विषयस्याभिव्यक्तापरोक्षैकरस चैतन्यसम्भेदेनापरोक्षत्वापाताच्च। उक्तं च विवरणे 'विषयत्वं नानुमेयादौ सुषुप्तिव्यावृत्तिः' इति। अपरोक्षवृत्तेः पक्षत्वेऽपि परोक्षवृत्तौ व्यभिचारः। तद्व्यावृत्त्यर्थे हेतुविशेषणे अप्रयोजकत्वम्। सर्वभ्रमेष्वधिष्ठानत्वेनानुगतसदर्थविषयापरोक्षवृत्तौ बाधश्च। तन्निवर्त्याज्ञानसद्भावे भ्रमोपादानत्वलक्षणस्य तत्राव्याप्तिः स्यात्। न हि सदर्थरूपाधिष्ठानाज्ञाने क्वचिद् भ्रमः। तदन्यस्य पक्षत्वे धारावाहिकद्वितीयादिप्रमायां बाधोऽसिद्धिश्च। स्वनिवर्त्यप्रथमप्रमाव्यवहितायास्तस्याः द्वितीयादिप्रमायाः तमः प्रतीवाज्ञानं प्रत्यनिवर्तकत्वात्। सूक्ष्मतत्तत्क्षणानामप्रत्यक्षत्वेन प्रकाशितप्रकाशकत्वाच्च। तदन्यस्य पक्षत्वेऽपि अनात्मविषयापरोक्षवृत्तौ बाधः। त्वन्मते जडावरकाज्ञानाभावात्। ननु घटोऽयमित्यादिवृत्तिरपि तदवच्छिन्नचैतन्यविषया, अज्ञानमपि तथेति न बाध इति चेन्न। एकाज्ञानपक्षे तदभावाद्। अवच्छिन्नस्याप्यस्वप्रकाशत्वेनाप्रसक्त प्रकाशतयाऽऽवरणायोगाच्च। रूपादिहीनस्याऽत्मन आकाशादिवद् घटाद्यवच्छिन्नस्यापि चाक्षुषत्वाद्ययोगस्योक्तत्वाच्च। अयं घट इति शब्दजन्येन घटमात्रविषयकज्ञानेनायं घट इत्यपरोक्षवृत्तेः विषयभेदाप्रतीतेश्च। आत्मविषयापरोक्षवृत्तेः पक्षत्वेऽप्यनात्मज्ञाने व्यभिचारः। आत्मविषयत्वेन हेतुविशेषणे दृष्टान्तस्य साधनवैकल्यमिति दिक्।

साध्येऽप्याद्यं विशेषणं व्यर्थम्। यतो ज्ञानमज्ञानस्यैव निवर्तकमिति त्वन्मते, अभावनिवृत्तिरेव भाव इति मन्मते च स्वनिवर्त्यविशेषणेनैव प्रागभावव्यावृत्तिसिद्धेरभावव्यतिरिक्तपदेनैव तद्व्यावृत्तिसिद्ध्या शेषवैर्थ्याच्च। द्वितीयं चायुक्तम्। जडे अज्ञानस्यानंगीकृतत्वात्। निर्विशेषचितश्चाज्ञानादिसाक्षितया प्रकाशमानत्वेनाज्ञानस्यावरणत्वायोगात्। स्वोत्पादकादृष्टव्यावृत्तेरावरणपदेनैव सिद्ध्या शेषवैयर्थ्याच्च। ज्ञानमज्ञानस्यैव निवर्तकमिति त्वन्मते स्वोत्पादकादृष्टस्य स्वनिवर्त्यपदेनैव व्यावृत्तिसिद्धेः। तृतीयं चायुक्तम्। वृत्तिश्चिदुपरागार्थेति मते, घटाकारवृत्त्या

तत्प्रतिबिंबितचैतन्येन वाऽभिव्यक्तं घटाधिष्ठानचैतन्यं घटप्रकाशकमिति मते च घटप्रकाशकज्ञानस्य घटाज्ञानानिवर्तकत्वाद्। घटाकारवृत्तिः तत्प्रतिबिंबितचैतन्यं वा घटप्रकाशकमिति मतस्य चाऽध्यासिकसम्बन्धस्यातन्त्रत्वापातेनायोगात्। चरमसाक्षात् कारोत्पत्ति प्रतिबन्धकादृष्टस्य तदनिवर्त्यत्वे मिथ्यात्वासिद्ध्या स्वनिवर्त्यपदेन तद्व्यावृत्यसिद्धेश्च। चतुर्थं चायुक्तम्। अज्ञानस्य चिन्मात्राश्रितत्वाद्। वृत्तेः, तत्प्रतिबिंबितचैतन्यस्य वा, तदभिव्यक्ताधिष्ठानचैतन्यस्य वा प्रमाणज्ञानस्य तदनाश्रितत्वात्। त्वन्मतेऽपि विषयस्थाज्ञानस्यैवावरणत्वाच्च। अज्ञातत्वस्य तद्विषयक-ज्ञानाभावरूपत्वे आद्यविशेषणेनैव व्यावृत्तिसिद्धेः अविद्याविषयत्वरूपत्वे चाविद्यासिद्ध्या चतुर्थवैयर्थ्याच्च। किं च स्वविषयावरणपूर्वकमित्येतावतैवालम्। अन्यद् व्यर्थम्। न हि प्रमाप्रागभावः, प्रमोत्पत्तिप्रतिबन्धकादृष्टं वा, अज्ञानातिरिक्तमन्यत्किञ्चिद्वा आवरणम्। तथात्वे तेनैव स्वप्रकाशब्रह्मावरणसम्भवेन हेतोरप्रयोजकत्वापातात्। न च तमोव्युदासाय तृतीयम्। तस्य प्रमामात्रविषयावरणत्वाभावात्। न च व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वादवैयर्थ्यमिति वाच्यम्। यत्राविशेषितं साध्यं प्रति हेतोरप्रयोजकता विमतं भिन्नाभिन्नं, समानाधिकृतत्वादित्यादौ तत्रैव विशिष्टप्रतीतेरुद्देष्टव्यत्वात्। अन्यथा अतिप्रसंगात्। नीलधूमकरणिका वह्निप्रमोद्देश्येत्यपि सुवचत्वेन हेतावपि व्यर्थविशेषणत्वस्यादोषत्वापाताच्च।

हेतौ च प्रकाशकत्वं ज्ञानत्वं वा? ज्ञानहेतुत्वं वा? साक्षात् परंपरया व्यवहारहेतुत्वमात्रं वा? तमोनिवर्तकत्वं वा? आवरणनिवर्तकत्वं वा? अज्ञानान्धकारान्यतरनिवर्तकत्वं वा? प्रकाशकशब्दवाच्यत्वमात्रं वा? नाद्यः, दृष्टान्ते अभावात्। न द्वितीयः, असिद्धेः इन्द्रियादौ व्यभिचाराच्च। अत एव न तृतीयः। न चतुर्थः। अज्ञानान्धकारानुगततमस्त्वाभावात्। साध्यावैशिष्ट्याच्च। अत एव न पंचमः। कुलालादौ व्यभिचाराच्च। न षष्ठः। साध्यावैशिष्ट्यादेव। न सप्तमः। शब्दसाम्येनैकसाध्यसाधने पृथिव्यादेरपि गोत्वेन शृंगित्वसाधनापातात्। उक्तं च विवरणे–ज्ञानप्रकाश्यत्वादज्ञानविरोधिनोऽन्यदेवालोकप्रकाश्यत्वं तमोविरोधित्वं नामेति। एवं च–

पक्षदृष्टान्तानुगतं प्रकाशत्वं न विद्यते ।
शब्दसाम्येन चेत्पृथ्व्या गोत्वाच्छृंगं समापतेत् ॥

किं च प्रमाणस्य च ब्रह्मज्ञानस्य चिदन्याप्रकाशकत्वात् स्वप्रकाशचितश्चाध्यासाधिष्ठानत्वादिना सदा प्रकाशमानत्वेनाप्रकाशितत्वाभावात् तत्र हेतोरसिद्धिः। किं चास्या अनुमितेरप्रकाशितप्रकाशित्वाभावे प्रकाशितप्रकाशकत्वं वा, अप्रकाशकत्वं वा स्यादुभयथाप्यनुमितिर्व्यर्था। तत्प्रकाशकत्वे चात्रैव बाधो व्यभिचारो वा। अस्याः स्वविषयावरणानिवतर्कत्वात्। न ह्यज्ञानावरणमज्ञानमस्ति। दृष्टान्तेऽपि द्वितीयादिप्रभायाः अन्धकारानुत्पन्नत्वेन प्रथमपदं व्यर्थम्। दृष्टिसृष्टिपक्षे दृष्टान्ते उभयवैकल्यं च। अनादित्वे सति भावत्वमभावविलक्षणत्वं वा न निवर्त्यनिष्ठमनादिमात्रवृत्तित्वात्। अनाद्यभावविलक्षणमात्रवृत्तित्वाद्वा, आत्मत्ववत्। निवर्त्यत्वं वा नानादिभावनिष्ठं नानाद्यभावविलक्षणनिष्ठं वा, निवर्त्यमात्रवृत्तित्वात्, प्रागभावत्ववत्। प्रमाणज्ञानं वा अभावान्यानाद्यनिवर्तकम्, ज्ञानत्वाद् भ्रमवदित्यादिना सत्प्रतिपक्षता च। पूर्वं कृत्यभावमात्रेणाकृतस्य कृतिवत् स्मृत्यभावमात्रेणास्मृतस्य स्मृतिवच्च पूर्वं प्रकाशाभावमात्रेणाप्रकाशितस्य प्रकाशोपपत्तेरप्रयोजकत्वं च। किं च घटादिविषय आलोकप्रकाशस्तमोविरोधीति तन्निवर्तकोऽस्तु। ज्ञानप्रकाशस्तु नाज्ञानविरोधी, घटाद्यधिष्ठानचैतन्यस्याज्ञानाविरोधित्वाद्, वृत्तेस्त्वनधिष्ठानत्वेन तज्ज्ञानत्वाभावात्। त्वन्मते हि ज्ञानज्ञेययोराध्यासिकस्सम्बन्धः।

द्वितीयानुमानेऽप्युक्तरीत्या सुखादिप्रमासु बाधः। किं च साध्ये चैत्रगतत्वं किं प्रमातत्प्रागभावयोरन्यतरविशेषणम्? तदतिरिक्तानादेर्वा? नाद्यः। वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य वाऽधिष्ठानचैतन्यस्य वा, प्रमाया आत्मगतत्वाभावात्। प्रमाप्रागभावस्य च प्रतियोगिसामानाधिकरण्यात्। न द्वितीयः। दृष्टान्ते साध्याभावात्। मैत्रप्रमायाः स्वसमानाधिकरणं स्वप्रागभावमज्ञानं च प्रति निवर्तकत्वेऽपि चैत्रगतानाद्यनिवर्तकत्वात्। साध्ये प्रमापदवैयर्थ्यं च। चैत्रप्रमा चैत्रगतस्याभावातिरिक्तस्यानादेः निवर्तिका न, प्रमात्वान्मैत्रप्रमावदिति प्रकरणसमता च। न चात्रोपाध्याभाससाम्ये शंक्ये। उक्तसाध्यानंगीकारे गौरवेण लाघवतर्कानुग्रहाच्चैत्रगतप्रमाभावातिरिक्तभावनिवर्तकत्वं समव्याप्तोपाधिश्च। व्यतिरेकोपसंहारस्थलं च प्रागभावः। चैत्रप्रमा स्वप्रागभावातिरिक्ताभावनिवर्तिका, प्रमात्वान्मैत्रप्रमावत्। घटः, चैत्रेच्छा वा, चैत्रप्रमा वा स्वप्रागभावातिरिक्तानादिनिवर्तिका, घटत्वाद् इच्छात्वाद्वा, अप्रमात्वाद्वा, घटान्तरवत्, मैत्रेच्छावद्वा, मैत्रप्रमावद्वेत्याद्याभाससाम्यं च।

**किं चैवं विशिष्टव्यतिरेकिणः चैत्रप्रमा चैत्रनिष्ठत्वे सति चैत्रप्रमाभावातिरिक्तानादिनिवर्तकत्वानधिकरणम्, प्रमात्वान्मैत्रप्रमावदिति साध्याभावेऽपि सुवचत्वात् स्वव्याघातः। न चात्रोपाधिः शंक्यः। अयमुपाधिः एतदुपाधित्वे सति साध्याव्यापकत्वानधिकरणं, धर्मत्वादित्यादिना विशिष्टव्यतिरेकिणैव साध्याव्यापकत्वादेः सुसाधत्वात्। अत एव तृतीयानुमानं निरस्तम्। किं च भ्रान्तेस्तद्विषयस्य वा पक्षत्वे द्वितीयलक्षणभंगरीत्या बाधः। विगीतो भ्रमः, एतज्जनकबाध्यातिरिक्तोपादानकः, विभ्रमत्वात् संमतवदिति प्रकरणसमता च। एतेन विमता अनित्यप्रमा स्वाभावातिरिक्तस्वविरोधिनिवर्तिका, प्रमात्वाद् भ्रमोत्तरप्रमावत्। ज्ञानत्वं स्वविषयावरणनिवर्तकनिष्ठं, प्रकाशवृत्तित्वादालोकत्ववत्। अनित्यज्ञानमभावत्वानधिकरणस्वविरोधिसमानाधिकरणं प्रयत्नान्यत्वे सत्यनित्यत्वे सति सविषयकत्वादनित्येच्छावत्। इच्छा हि स्वविरोधिद्वेषसमानाधिकरणाज्ञानविरोधी, एवं चाज्ञानमित्यादिनवीनानुमानं निरस्तम्। अप्रयोजकत्वाद्यनिस्तारात्।**

**अविद्यानुमानभङ्गः।**

## अद्वैतसिद्धिः

अनुमानमपि तत्र विवरणोक्तं प्रमाणम्– 'विवादपदं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वाद्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति। अत्र प्रमाणपदं प्रमाणवृत्तेरेव पक्षत्वेन सुखादिप्रमायां साक्षिचैतन्यरूपायामज्ञानानिवर्तिकायां बाधवारणाय। धर्म्यंशप्रमाणवृत्तेरिदमित्याकाराया अज्ञानानिवर्तिकायाः पक्षबहिर्भावाय विवादपदमिति विशेषणम्। विशेषाकारप्रमाणवृत्तिरिति फलितोऽर्थः। परोक्षप्रमाया अप्यसत्त्वावरणरूपप्रमातृगताज्ञाननिवर्तकत्वात् न तदंशेऽपि बाधः। नन्विदमिति प्रमाणवृत्तेरज्ञानानिवर्तकत्वे अज्ञातज्ञापकत्वरूपप्रमात्वेन व्यवहारो न स्यात्, न इदमाकारभ्रमसंशयादर्शनेन तद्गोचराज्ञानकल्पने मानाभावेन तत्र सुखादिज्ञानवद्यथार्थत्वमात्रेण प्रमात्वव्यवहारोपपत्तेः। यथाहुः– 'धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्यय' इति। यदि तु भ्रमसंशयाजनकमपि तदाकारमज्ञानमनुभवबलादास्थीयेत, तर्हि सापि पक्षेऽन्तर्भवतु, प्रमाणवृत्तित्वा-

(अद्वैतसिद्धिः)

वच्छेदेनैवाज्ञाननिवर्तकत्वानपायात्, तदा च विवादपदमिति विशेषणमनादेयम्। एतस्मिन् पक्षे भ्रमोपादानत्वयोग्यत्वमविद्यालक्षणं द्रष्टव्यम्, भ्रमोपादानत्वस्य धर्म्यंशज्ञान-निवर्त्याज्ञानेऽव्याप्तेरित्यवधेयम्। धारावाहिकबुद्धीनां च तत्तत्कालावच्छिन्नार्थविषयत्वेना-ज्ञातज्ञापकत्वमस्त्येव; कालस्य सर्वप्रमाणवेद्यत्वाभ्युपगमात्। अनात्माकारप्रमाणवृत्तीनां च तत्तदवच्छिन्नचैतन्यविषयत्वेन स्वविषयावरणनिवर्तकत्वमस्त्येव, चित्त्वेनैव प्रकाशप्रसक्तेः, न त्वनवच्छिन्नचित्त्वेन, गौरवात्, 'एतावन्तं कालं मया न ज्ञातोऽयमिदानीं ज्ञात' इत्यनुभवाच्च। रूपादिहीनस्यापि तत्तदवच्छिन्नचैतन्यस्य प्रत्यक्षादिविषयत्वमुक्तं प्राक्। प्रतिकर्म-व्यवस्थामभ्युपगम्य चेदमनुमानम्, न तु दृष्टिसृष्टिपक्ष इति ध्येयम्। साध्ये चाद्यं विशेषणं' प्रतियोग्यतिरिक्ता प्रागभावनिवृत्तिरिति मते प्रागभावेनार्थान्तरवारणाय। तदुदीच्य-ध्वंसादिकमादाय नार्थान्तरप्रसक्तिः, किंतु पूर्ववर्त्यभावमादायेति वस्तुगतिमनुरुध्य प्राक्पदम्। अवैयर्थ्यं च प्रतियोगिविशेषणत्वेनाखण्डाभावसंपादकतया।

एतेन– यतो ज्ञानमज्ञानस्यैव निवर्तकमिति नियमात् स्वनिवर्त्यपदेनैव प्रागभावव्युदासे किमाद्यविशेषणेनेति– निरस्तम्; प्रमात्वेन ज्ञाननिवर्त्यत्वमन्येषां नेत्यत्र तात्पर्यात्। न च स्वविषयावरणपदेनैव तद्व्युदासः, 'अस्ति प्रकाशत' इति व्यवहारविरोधित्वरूपस्यावरणत्वस्य भावाभावसाधारणत्वात्। वृत्तिजनकादृष्टेनार्थान्तरवारणाय तु विशेषणमिदम्। न चावरणपदेनैव तद्व्युदासे स्वविषयेति व्यर्थम्, यददृष्टं स्वविषयज्ञानजनकं विषयान्तरज्ञानप्रतिबन्धकतया तदावरकं, तादृशादृष्टपूर्वकत्वेनार्थान्तरवारकत्वात्।

न च जडे अज्ञानस्यानङ्गीकाराच्चितश्चाज्ञानादिसाक्षितया भासमानत्वात् क्वावरणमिति– वाच्यम्, अज्ञानादिसाक्षितया चितः प्रकाशमानत्वेऽपि 'अस्ति प्रकाशत' इति व्यवहाराभावेन तदंशेऽज्ञानावरणस्यावश्यकत्वात्। वक्ष्यते चैतत्। स्वनिवर्त्येति च विशेषणं वृत्तिप्रतिबन्धकादृष्टेनार्थान्तरवारणाय। न च– चरमसाक्षात्कारोत्पत्तिप्रतिबन्धकादृष्टस्य तदनिवर्त्यत्वे मिथ्यात्वासिद्धिः तन्निवर्त्यत्वे तद्व्युदसनमशक्यमिति– वाच्यम्, प्रतिबन्धकादृष्टे विद्यमाने न ज्ञानोत्पत्तिरिति प्रथमं तन्निवृत्तेः कारणात्मना स्थितस्य तस्य ज्ञाननिवर्त्यत्वाच्च मिथ्यात्वम्। न चैवमपि स्वनिवर्त्यत्वमव्याहतम्, स्वनिवर्त्यस्वरूपत्वे तात्पर्यात्। अन्धकारेणार्थान्तरवारणार्थमिदमिति– केचित्। तन्न, स्वदेशगतेत्यनेनैव तद्व्युदासात्। यथा च वृत्तिप्रतिबिम्बितचैतन्यस्य विषयावच्छिन्नचैतन्येन सहैकलोलीभावादज्ञाननिवर्तकत्वं, तथोक्तं

(अद्वैतसिद्धिः)

प्राक्। स्वदेशगतेति च विशेषणं विषयगताज्ञातत्वेनार्थान्तरवाणाय। यद्यप्यविद्याविषयत्व-रूपमज्ञातत्वमसिद्धम्, ज्ञातत्वाभावरूपं तु प्रथमविशेषणेनैव परास्तम्, तथापि प्रथमेन प्रागभावव्युदासादत्यन्ताभावव्युदासाय चतुर्थमिति द्रष्टव्यम्।

ननु– कथं ज्ञानाश्रयगतत्वमज्ञानस्य? वृत्त्यादिरूपस्य ज्ञानस्याज्ञानाश्रय-चिदनाश्रितत्वादिति चेन्न; अन्तःकरणस्य चिदाश्रितत्वेन तद्वृत्तेस्तत्प्रतिफलितचैतन्यस्य वा ज्ञानस्य चिदाश्रितत्वसंभवात्, किंचिदवच्छिन्नतदाश्रितस्यापि तदाश्रितत्वानपायात्, कर्णशष्कुल्यवच्छिन्नाकाशाश्रितस्य शब्दस्याकाशाश्रितत्ववत्। एवं च भावाभावसाधारण-मावरणमिति मतेन साध्यमुपपादितम्। अभावो नावारक इति सिद्धान्ते तु साध्यद्वये तात्पर्यम्– स्वप्रागभावातिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकम्। स्वविषयावरण (स्वनिवर्त्यस्वदेशगतवस्त्वन्तर) पूर्वकमित्यपरमिति न किंचिदसमञ्जसम्।

हेतौ च प्रकाशकत्वं प्रकाशकपदवाच्यत्वं, अप्रकाशविरोधित्वं वा ज्ञानालोकयोः साधारणम्। यद्यपि प्रकाशकपदवाच्यत्वं नामकरणवशात् कस्मिंश्चित् पुरुषेऽप्यस्ति, तथापि प्रकाशकशब्देन शास्त्रे सर्वदेशकालयोर्वा व्यवह्रियमाणत्वं तद्विवक्षितम्। अथवाऽस्तु साधारणम्। अप्रकाशितार्थगोचरेति विशेषणाद् व्यभिचार व्युदासः।

अप्रकाशितत्वं च 'न प्रकाशत' इति व्यवहारगोचरत्वम्, तच्च स्वप्रकाशचैतन्येऽप्यस्तीत्युपपादितम्। एवं निरुक्ताप्रकाशविरोधित्वमपि ज्ञानालोकयोः प्रत्यक्षसिद्धम्। उक्तं च विवरणे– 'ज्ञानप्रकाश्यत्वादज्ञानविरोधित्वादन्यदेव आलोकप्रकाश्यत्वं तमोविरोधित्वं नामेति। अत उभयोरेव साक्षादप्रकाशविरोधित्वसंभवान्नेन्द्रियसन्निकर्षादौ व्यभिचारः। एवं चाप्रकाशितार्थगोचरत्वे सति प्रकाशशब्दवाच्यत्वाद् अप्रकाशविरोधि-प्रकाशत्वादिति वा हेतुः पर्यवसितः। विपर्ययविषयस्तु नाज्ञातः, विपर्ययान्यकालासत्त्वेन तस्यानिर्वचनीयस्य मानगोचरत्वाभावेन प्रकाशप्राक्कालसत्त्वघटिताप्रकाशितत्वासंभवाद्, अत एव स नाप्रकाशविरोधी, स्वविषये अप्रकाशाभावाद्, अधिष्ठानाप्रकाशस्तु तस्य जनक एव। स्मरणे च व्यभिचाराभावः स्पष्टः। अनुकूलतर्कश्च 'त्वदुक्तमर्थं न जानामीति प्रतीत्यन्यथानुपपत्त्यादिरूपः प्रागुक्त एव। एतेन गोशब्दवाच्यत्वेन पृथिव्या अपि शृङ्गित्वानुमानापातोऽपास्तः, तत्रानुकूलतर्काभावात्। अज्ञानस्य स्वरूपेणाज्ञानाविषयत्वेऽपि

(अद्वैतसिद्धिः)

तद्भावत्वादिकमज्ञानविषयो भवत्येव, तस्याज्ञानग्राहकसाक्ष्यग्राह्यत्वात्। अन्यथा तत्र विवादो न स्यात्। एवं प्रमाया स्वविषयावरणाभावपूर्वकत्वमपि न प्रमास्वरूपग्राहकसाक्षिग्राह्यम्। तथा च तद्ग्राहिकाया एतस्या अनुमितेः साध्यसाधनोभयाधिकरणत्वात् न कोऽपि दोषः दृष्टान्ते चान्धकाराव्यवहितोत्पत्तिकत्वं विशेषणम्। तेन न प्रथमपदवैयर्थ्यं न वा द्वितीयादिप्रभायां साध्यसाधनवैकल्यम् विस्तरेण चान्यत्र व्युत्पादितमिदमस्माभिः।

ननु– अनादित्वे सति भावत्वमभावविलक्षणत्वं वा, न निवर्त्यनिष्ठम्, अनादिभावमात्रवृत्तिधर्मत्वाद्, अनाद्यभाव विलक्षणमात्रवृत्तित्वाद्वा, आत्मत्ववत्। निवर्त्यत्वं वा, नानादिभावनिष्ठम्, अनाद्यभावविलक्षणनिष्ठं नेति वा, निवर्त्यमात्रवृत्तित्वात्, प्रागभावत्ववत्। अनादित्वं वा, नावरणनिष्ठम्, अनादिमात्रवृत्तित्वात्, प्रागभावत्ववत्। प्रमाणज्ञानं वा अनाद्यभावान्यानाद्यनिवर्तकम्, ज्ञानत्वाद्, भ्रमवदित्यादिना सत्प्रतिपक्षता, कृत्यभावमात्रेणाकृतस्य कृतिवत् पूर्वप्रकाशाभावमात्रेणाप्रकाशितस्य प्रकाशोपपत्तेरप्रयोजकत्वं चेति– चेन्न, अनुकूलतर्काभावेनाप्रयोजकत्वात्, सिद्धान्तिहेतोश्चानुकूलतर्कसद्भावेन साध्यव्याप्यत्वे निश्चिते सत्प्रतिपक्षाप्रयोजकत्वादीनामनवकाशात्। अनादिभावत्वस्य निवर्त्यावृत्तित्वेऽप्यविद्याया भावविलक्षणाया निवर्त्यत्वोपपत्तेराद्यानुमानेनाविरोधश्च। द्वितीये त्वनाश्रितमात्रवृत्तित्वमुपाधिः। तृतीयचतुर्थयोः सकलनिवर्त्यावृत्तित्वमुपधिः। पञ्चमे सकलानाद्यवृत्तित्वमुपाधिः। षष्ठे प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरिति च दूषणानि।

तत्त्वप्रदीपिकोक्तं च– चैत्रप्रमा, चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका, प्रमात्वान्मैत्रप्रमावत्। विगीतो विभ्रमः, एतज्जनकाबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, संमतवदिति। अत्राद्ये सुखादिज्ञानेषु न बाधः, अन्तःकरणवृत्तेरेव प्रमापदेनोक्तेः। चैत्रगतत्वं च नानादेर्विशेषणम्, मैत्रप्रमायाश्चैत्रनिष्ठानादिनिवर्तकत्वाभावेन दृष्टान्ते साध्यवैकल्यापातात्, किंतु प्रमातदभावयोरन्यतरस्य। प्रमायाश्चात्मगतत्वं प्राग्व्याख्यातम्। साध्ये तु प्रमापदमुपरञ्जकमेव। यदि त्वभावे प्रागिति विशेषणं नास्ति, 'तदा भावरूपाज्ञानस्यापि स्वाभावाभावत्वेन तदतिरिक्तानादिनिवर्तकत्वे बाधवारणाय। चैत्रासमवेतत्वं चैत्रान्यसमवेतत्वं च नोपाधिः, चैत्रसुखादौ व्यभिचारेण साध्याव्यापकत्वात्।

न च चैत्रप्रमा चैत्रगतस्याभावातिरिक्तस्यानादेर्निवर्तिका न, प्रमात्वात्, मैत्रप्रमादिवदिति सत्प्रतिपक्षः, प्रतियोगिप्रसद्ध्यप्रसिद्धिभ्यां व्याहतेः। चैत्रगतप्रमाभावातिरिक्ताभावनिवर्तकत्वं

(अद्वैतसिद्धिः)

तु नोपाधिः, चैत्रगतप्रमाभावातिरिक्तस्य स्वजन्यव्यवहारप्रागभावस्य निवर्तकतया पक्षे साधनव्यापकत्वात्। विपक्षबाधकसत्त्वाच्च नाभाससाम्यम्। अत एव द्वितीयानुमानमपि सम्यक्। न च – विगीतो विभ्रमः, एतज्ज्ञानजनकबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, संमतवदिति सत्प्रतिपक्ष इति– वाच्यम्, बाध्यस्य त्वन्मतेऽजनकत्वात्, साध्याप्रसिद्धेः, ब्रह्माविद्योभयोपादानकत्वेनाविरोधाच्च।

नव्यास्तु विमता प्रमा, प्रमाभावातिरिक्तस्यानादेर्निवर्तिका, कार्यत्वाद्, घटवद्। भ्रमानुत्तरप्रमा, स्वाभावातिरिक्तस्वविरोधिनिवर्तिका, प्रमात्वात्, भ्रमोत्तरप्रमावत्। ज्ञानत्वं, स्वविषयावरणनिवर्तकनिष्ठम्, अप्रकाशितार्थप्रकाशवृत्तित्वाद् आलोकत्ववत्। अनित्यज्ञानम्, अभावत्वानधिकरणस्वविरोधिसमानाधिकरणम्, प्रयत्नान्यत्वे सति सविषयत्वे सत्यनित्यत्वाद्, अनित्येच्छावत्। सा हि तादृग्द्वेषसमानाधिकरणा। न चैतेषु अप्रयोजकत्वशङ्का, विपक्षबाधकतर्कस्योक्तत्वात्। एवमन्यदप्यूहनीयम्। ज्ञानविरोधित्वं, अनादिभावत्वसमानाधिकरणम्, सकलज्ञानविरोधिवृत्तित्वाद्, दृश्यत्ववत्। यद्वा– अनाद्यभावविलक्षणत्वम्, ज्ञानविरोधिवृत्ति, अनाद्यभावविलक्षणमात्रवृत्तित्वाद्, अभिधेयत्ववदिति। एवमभावविलक्षणाज्ञाने अनुमानान्यूहनीयानि।

इत्यद्वैतसिद्धावविद्यानुमानोपपत्तिः।

## न्यायामृततरङ्गिणी

**तस्या इति॥ साक्षिणोऽज्ञानसाधकत्वेन तदनिवर्तकत्वादित्यर्थः। परोक्षवृत्तेः स्वविषयेऽज्ञानानिवर्तकत्वे संमतिमाह ॥उक्तं चेति॥ अतीतादेर्ज्ञानं प्रति कारकत्वं नास्तीत्युक्ते तर्हि तद्वदेव विषयत्वमपि न स्यादित्याशङ्कायां तदपि नास्तीत्युत्तरिते विषयत्वस्योपलभ्यमानत्वात्कथं तदभाव इति पुनः शङ्कायां अतीतादिषु विषयत्वाभावं दर्शयितुं विषयशब्दार्थकथनपरमिदं विवरणवाक्यम्। विपयत्वं नामानुमेयेषु सुषुप्तिव्यावृत्तिः। सा चाभावस्तद्धर्मो न भवति। विज्ञानाकारतापि न विषयव्यापारः। किन्तु विज्ञानस्यैवेति नातीतेऽर्थे क्रियाकारित्वमिति। एतच्च तत्त्वप्रदीपने व्याख्यातम्। सुषुप्तिव्यावृत्तिस्तद्विषयाज्ञाननिवृत्तिः। सा चानुमेयधर्मो न भवति। किंत्वज्ञानस्यात्माश्रितत्वात्तन्निवृत्तिरप्यात्माश्रितैवेति। अन्ये तु सुषुप्तिव्यावृत्तिरित्यस्य साधकाद्यभावात् विषयस्य या पूर्वसंशययोग्यता तस्याः निवृत्तिरित्यर्थः। स च नातीतादौ।**

(तरङ्गिणी)

असतस्तदाश्रयत्वायोगादित्याहुः। केचित्तु परोक्षस्थले विषयावच्छिन्नाभावावरणतत्कार्यसद्भावेऽपि प्रमात्रवच्छिन्नासत्त्वावरणानिवृत्त्याऽनुमेयादौ व्यवहारोपपत्तिः। इदमेव सुषुप्तिव्यावृत्ति-शब्देनोक्तमित्याहुः। सर्वथाऽपि विषयावच्छिन्नप्रमेयचैतन्यगताज्ञानं न निवर्तत इत्यविवादम्। तदिदमुक्तं तस्याः स्वविषयेऽज्ञाननिवर्तकत्व इति। तथा च परोक्षवृत्तौ स्वविषयावरणस्य स्वनिवर्त्यत्वाभावाद्बाध इत्यर्थः। ननु धर्म्यंशाज्ञानेऽपि भ्रमोपादानत्वयोग्यताऽस्तीति तत्र नाव्याप्तिरित्यत आह ॥ नहीति॥ धर्म्यंशाज्ञाने सति धर्मिणोऽज्ञानाभावात् भ्रमो न स्यादित्यर्थः ॥ धारावाहिकेति॥ न चास्मन्मते धारावाहिका बुद्धिरेव नास्ति। एकस्यैव ज्ञानस्य तावत्समयस्थित्युपपत्तेरिति वाच्यम्। तथापि प्रतिपाद्यं नैयायिकं प्रति बाधःस्यादेव। बाधमुपपादयति ॥ तस्या इति॥ असिद्धिमुपपादयति ॥ सूक्ष्मेति॥ ॥ रूपादिहीनस्येति॥ स्वरूपायोग्यस्य किञ्चिदवच्छिन्नस्यापि न चाक्षुषत्वमिति भावः ॥ उक्तत्वाच्चेति॥ परिच्छिन्नत्वहेतुभङ्ग इति शेषः। एतेन रूपहीनस्यापि तार्किकाभिमतात्मनः प्रत्यक्षत्ववदरूपस्यापि रूपस्य चाक्षुषत्ववच्च सन् घट इति सदर्थस्य ब्रह्मणश्चाक्षुषत्वमविरुद्धमिति निरस्तम् ॥ अयं घट इति॥ यथा शाब्दज्ञानेन चैतन्यं विषयस्तथा तत्समानविषयेऽपरोक्षज्ञानेऽपि न तद्विष यइत्यनात्मविषयापरोक्षवृत्तौ बाध इति भावः ॥ आत्मविषयेति॥ सा चान्ततश्चरमवृत्तिरेवेति भावः ॥ यत इति॥ प्रागभावस्याज्ञानभिन्नत्वान्न ज्ञाननिवर्त्यत्वमित्यर्थः ॥ अभावेति॥ प्रमाणज्ञानं स्वप्रागभावनिवृत्तिरेव न तु तन्निवर्तकमिति न प्रमाणज्ञानप्रागभावस्तन्निवर्त्य इत्यर्थः। न च प्रतियोग्यतिरिक्ता प्रागभावनिवृत्तिरिति मतेनैतदुक्तमिति वाच्यम्। तस्याप्रामाणिकत्वात् ॥ शेषेति॥ न च प्रतियोगिविशेषणत्वेनाखण्डाभावसम्पादकतया न वैयर्थ्यमिति वाच्यम्। तत्त्वनिर्णयकथायां लघुना साध्यनिर्देशेन साध्यसिद्धौ सम्भवन्त्यामखण्डाभावान्तर्भाविनः साध्यस्यानिर्देश्यत्वात्। अन्यथा अखण्डाभावन्यायेनाखण्डोपाधावपि तदनापत्तेः ॥ आवरणत्वायोगादिति॥ तथा च तद्विशेषणविशिष्टं साध्यं पक्षे बाधितमित्यर्थः। नन्वज्ञानादिसाक्षितया चितोभासमानत्वेऽप्यस्ति प्रकाशत इति व्यवहाराभावेन तदंशेऽज्ञानावरणमस्तीति शङ्कानिरासायोक्तम् ॥ निर्विशेषेति॥ सत्ताप्रकाशयोः प्रकाशमानचिन्मात्रत्वेन तादृशव्यवहारानुपपत्तेरित्यर्थः ॥ स्वोत्पादकादृष्टेति॥ अदृष्टस्यावरणत्वाभावादित्यर्थः ॥ शेषेति॥ स्वविषयेत्यस्येत्यर्थः। एतेन यददृष्टं स्वजनकं विषयान्तरज्ञानप्रतिबन्धकतया तदावरकं तादृशादृष्टपूर्वकत्वेनार्थान्तरवारणाय स्वविषयेति विशेषणमिति निरस्तम्। स्वजनकं स्वविषयज्ञानान्तरप्रतिबन्धकतया स्वविषयावरणं चादृष्टविशेषमादायार्थांतरतादवस्थ्याच्च ॥ वृत्तिरिति॥ वृत्तिश्चिदुपरागोर्थेति मते चितोऽनावृतत्वेन वृत्तेरावरणनिवर्तकत्वं नास्तीत्यर्थः ॥ घटाकारेति॥ घटाकारवृत्त्यादिनैव घटप्रकाशकघटाधिष्ठान-

(तरङ्गिणी)

चैतन्यस्यावरणाभिभवरूपाभिव्यक्तेर्जातत्वेन घटज्ञानरूपस्य घटादिष्ठानचैतन्यस्यावरणनिवर्तकत्वं नास्तीत्यर्थः। ननु वृत्तिस्तत्प्रतिबिम्बितचैतन्यं वा घटप्रकाशकम्। तच्च घटाधिष्ठानचैतन्यस्य प्रमेयभूतस्यावरणं निवर्तयतीति शङ्कां परिहरति ॥ वृत्तिरिति ॥ ज्ञाने ज्ञेयाध्यासस्यानुक्तेरित्यर्थः ॥ चरमेति ॥ न च चरमसाक्षात्कारप्रतिबन्धकादृष्टे सति न तदुत्पत्तिरिति प्रथमं तन्निवृत्तिः। कारणात्मनाऽवस्थितस्य तस्य ज्ञाननिवर्त्यत्वाच्च मिथ्यात्वमपीति वाच्यम्। तावताऽपि ज्ञाननिवर्त्यत्वाव्याहतेः ॥ अज्ञानस्येति ॥ वृत्त्यादिरूपस्य ज्ञानस्याज्ञानाश्रयचिन्मात्रानाश्रितत्वादित्यर्थः। नन्वन्तःकरणस्य चिदाश्रितत्वेन तद्वृत्तिस्तत्प्रतिबिम्बितचैतन्यं वा ज्ञानं चिन्मात्राश्रितमेव। किञ्चिदवच्छिन्नाश्रितस्याप्यवच्छेद्याश्रयत्वानपायात्। कर्णशुष्कुल्यवच्छिन्नाकाशाश्रितस्य शब्दस्याकाशाश्रितत्ववत्। मैवम्। त्वन्मतेऽवच्छेद्यावच्छिन्नयोर्भेदात्। अन्यथा विशिष्टनिष्ठयोर्दृश्यत्वमिथ्यात्वयोर्विशेष्यनिष्ठत्वं स्यात्। किञ्च वृत्तिस्तत्प्रतिबिम्बितचैतन्यं वा न घटादिज्ञानम्। तत्र तदनध्यासात्। किन्तु वृत्त्याद्यभिव्यक्तं घटाधिष्ठानचैतन्यं घटादिज्ञानम्। तच्च नाज्ञानाश्रयचिन्मात्राश्रितम्। तदिदमुक्तम् तदभिव्यक्ताधिष्ठानचैतन्यस्य वेति। प्रमाणज्ञानस्यान्तःकरणनिष्ठत्वादावरणस्य विषयनिष्ठत्वान्न तयोः समानदेशत्वमित्याह ॥ त्वन्मत इति ॥ ॥ आद्येति ॥ न चाद्यविशेषणेन प्रागभावो व्यवच्छिद्यते स्वनिवर्त्येत्यनेन त्वत्यन्ताभाव इति वाच्यम्। स्वप्राक्पदविरहितेनाद्यविशेषणेनैवोभयव्यवच्छेदसम्भवादित्यर्थः ॥ अविद्येति ॥ अज्ञानसिद्धिरेव स्यान्न तु सिद्धसाधनादिकमित्यर्थः। ननु अस्ति प्रकाशत इति व्यवहारविरोधित्वरूपमावरणत्वं भावाभावसाधारणमत आह ॥ तथात्व इति ॥ ॥ तस्येति ॥ असाधारण्येन व्यपदेशा भवन्तीति न्यायेन वा मात्रशब्दान्तर्भावेण वा स्वविषयमात्रावरणत्वरूपार्थलाभसम्भवादिति भावः। यत्तु स्वप्रागभावव्यतिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वंतरपूर्वकमित्येकं साध्यं स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वंतरपूर्वकमिति द्वितीयं साध्यमिति साध्यद्वये तात्पर्यमिति। तन्न। उक्तरीत्या ज्ञानाज्ञानयोः समानदेशत्वाभावात्। प्रागभावस्य स्वनिवर्त्यत्वाभावेन प्रथमसाध्ये स्वप्रागभावव्यतिरिक्तेत्यस्य वैयर्थ्याच्च। द्वितीयसाध्ये आवरणपूर्वकमित्येतावतैव पूर्णत्वाच्च ॥ अप्रयोजकतेति ॥ एतच्चोपलक्षणम्। यादृशसाध्यनिर्देशं विना विवादपदसाध्यसिद्धिर्न भवति तादृशं साध्यं निर्देष्टव्यमित्यर्थः। तेनार्थान्तरादिवारकविशेषणानां नानुपादानप्रसङ्गः। एतेन ईश्वरानुमानेऽदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोगीति विशेषणं विनाभावकार्यत्वहेतोरप्रयोजकत्वाभावात्तद्विशेषणमप्यनुपादेयं स्यादिति निरस्तम्। तत्राथान्तरवारणात्। प्रकृते तदभावात् ॥ शब्दसाम्येनेति ॥ पर्वतमहानसवृत्तिधूमव्यक्त्योर्भेदेऽपि धूमत्वस्यैकत्ववत् ज्ञानप्रभयोरेकं प्रकाशत्वं नास्तीत्यर्थः।

(तरङ्गिणी)

पक्षदृष्टान्तयोरनुगतो हेतुर्नास्तीत्यत्रोपष्टम्भकमाह ।। उक्तं चेति ।। अहङ्कारस्यात्मव्यतिरिक्तत्वसाधकसंविदभिन्नस्य स्वात्मनः स्वप्रकाशत्वं साधयितुं संविदो स्वप्रकाशत्वे विश्वस्यानवभासप्रसङ्ग इति दूषणेऽभिहिते नन्वप्रकाशमानमेव ज्ञानं चक्षुरादिवद्विषयमवभासयेदिति कुतो विश्वस्यानवभास इति शङ्किते विषयप्रकाशजनने न चक्षुषः प्रकाशकत्वं संवेदनं तु स्वयमर्थप्रकाश एव प्रदीपवदवभासमानमेवार्थं प्रकाशयतीति परिहृते ननु प्रदीपालोकस्याप्यर्थानुभवजननेनैव चक्षुरादिवदर्थप्रकाशकताऽस्त्विति पुनः शङ्कायं ज्ञानप्रकाश्यत्वादज्ञानविरोधिनोऽन्यदेवालोकप्रकाश्यत्वं तमोविरोधितया प्रसिद्धम् तदव्यवधानेनालोकेन क्रियत इत्यादिना चक्षुरपेक्षया आलोकसंवेदनयोर्वैलक्षण्यमभिधाय आलोकसंवेदनयोरपि प्रकाशकत्वे वैलक्षण्यमस्तीति विवरणेऽभिहितमित्यर्थः ।। प्रमाणस्येति ।। चरमवृत्तेरित्यर्थः ।। अध्यासेति ।। प्रकाशमानस्यैवाधिष्ठानत्वादित्यर्थः। नन्वधिष्ठानचित्प्रकाशेऽप्यस्ति प्रकाशत इत्यादिरूपेण न प्रकाश इति चेन्न। निरस्तत्वात् ।। अस्या इति ।। अज्ञानविषयिण्याः ।। प्रकाशितेति ।। विशेषणाभावाद्विशिष्टहेतोरभावे प्रकाशितप्रकाशकत्वं विशेष्याभावात्तदभावेऽप्रकाशकत्वं स्यादित्यगत्याऽनुमितौ विशिष्टाभावस्यासम्भव इत्यर्थः ।। उभयथेति ।। आद्ये सिद्धसाधनं। द्वितीये बाधादनुमितिर्व्यर्था। अर्थविषया न भवतीत्यर्थः। तर्कितानुमितौ विकल्पनान्न व्याघातः ।। तदिति ।। अप्रकाशितेत्यर्थः ।। अत्रैवेति ।। पक्षबहिर्भावे व्यभिचारः पक्षत्वे तु बाध इत्यर्थः। केचित्तु विवादगोचरापन्नमित्यनेन जन्यसविकल्पकाजन्यचाक्षुषघटप्रमाणज्ञानं विवक्षितम्। परमते जन्यज्ञानमात्रस्य सविकल्पकजन्यत्वात्सविकल्पकस्य जन्यज्ञानजन्यत्वाच्च पक्षाप्रसिद्धिवारणाय जन्यसविकल्पकाजन्येत्युभयोपादानम्। अनेन धारावाहिकद्वितीयादिबुद्धिव्युदासः। पराभिमतेश्वरज्ञानव्यावृत्तये चाक्षुषप्रमाणज्ञानेति। साध्ये च स्वशब्दः समभिव्याहृतपरः। स्वप्रागभावपदेन स्वसमानाधिकरणप्रागभावः कथ्यते। स्वविषयावरणेति स्वजननायोग्यम्। स्वनिवर्त्येति स्वजन्यध्वंसप्रतियोगि। स्वदेशगतेति स्वाश्रये वर्तमानम्। एवं च पक्षीभूतज्ञानस्य घटपटादेः संशयजनकत्वसम्भवात् तत्प्रागभावस्तन्निवर्त्य इति संशयादिप्रागभावात्मत्वस्वजनकादृष्टेच्छाप्रागभावपूर्वकत्वेनार्थान्तरत्वव्यावृत्तये प्रातिलोम्येन विशेषणानि। अज्ञानं चैवंविधमिति न बाधः। अथवा प्रमाणज्ञानस्य प्रागभाव एव स्वप्रागभावः स्वविषये संशयादिजनकतायोग्यमेव स्वविषयावरणम्। स्वसत्ताक्षणनियतध्वंसप्रतियोगिस्वनिवर्त्यम्। ततश्च प्रागभावोऽपि परमते विशेषादर्शनतया संशयादिजनक इति स्वप्रागभावस्वजनकादृष्टान्धकारादिव्यावृत्तये स्वप्रागभावेत्यादिविशेषणानि। परमते मनःसंयोगपूर्वकत्वनार्थान्तरनिवृत्तये स्वनिवर्त्येतीति। अत्र

(तरङ्गिणी)

ब्रूमः। पटबुभुत्सयोन्मीलितेन चक्षुषा दैवात् घटपटसंयोगे सति इच्छाप्राबल्यात् पटज्ञानानन्तरं जायमाने घटचाक्षुषज्ञाने पटज्ञानपूर्वकत्वेन सिद्धसाधनम्। पटज्ञानं हि स्वशब्दनिर्दिष्टघटज्ञानसमानाधिकरणप्रागभावव्यतिरिक्तं स्वजननायोग्यं स्वजन्यध्वंसप्रति-योगिस्वाश्रयगतं च भवति। द्वितीयसाध्येऽपि यत्र घटे पाषाणादिसंशयानन्तरं विशेषदर्शनं विनैव समीपागमनादिना घट इति प्रमाणज्ञानं चाक्षुषं जायते तत्र पूर्वतनसंशयमादाय सिद्धसाधनम्। घटविषयकसंशयोऽपि धर्मिज्ञानकोटिज्ञानत्वादिना घटविषयकसंशयान्तरजननयोग्य इति घटप्रमाविषयावरणं भवति। स्वसत्ताक्षणनियतध्वंसप्रतियोगी च भवतीति। यथाश्रुतेन स्वविषयावरणपूर्वकमित्यनेनैव साध्यसिद्धेरुक्तकुसृष्टेरनाश्रयणीयत्वाच्च। ग्रन्थस्वारस्यस्य त्वयाऽपि त्यक्तत्वाच्च। नन्वन्धकारनिवृत्त्यव्यवहितोत्तरकालीनं चाक्षुषज्ञानं पक्षत्वेनाभिमतम्। साध्यं च स्वसमानाधिकरणप्रागभावव्यतिरिक्तेत्यादिविवक्षितमिति चेन्न। स्मृत्यभावमात्रेणास्मृतस्य स्मृत्यनन्तरं स्मृतत्ववत्पूर्वं प्रकाशाभावमात्रेणाप्रकाशितस्य तस्मिन्सति प्रकाशितत्वो-पपत्त्याऽप्रयोजकत्वात्। एतच्च आकर एव स्पष्टम्। अन्धकारनिवर्तकत्वं चोपाधिः ॥ अनादित्वे सतीत्यादि ॥ नन्वनादिभावत्वस्य निवर्त्यावृत्तित्वेऽप्यविद्याया भावविलक्षणाया निवर्त्यत्वोपपत्तेर्न विरोध इति चेन्न। अनादित्वे सत्यभावविलक्षणत्वेनानिवर्त्यत्वस्यापि प्रसङ्गेनाभावविलक्षणनिवृत्तौ सादित्वस्यैव प्रयोजकत्वात्। न च द्वितीयानुमाने अनाश्रितमात्रवृत्तित्वमुपाधिः। ध्वंसत्वे साध्याव्याप्तेः ॥ निवर्त्यत्वं चेति ॥ न चैतयोः सफलनिवर्त्यावृत्तित्वमुपाधिः। विनाशसामग्रीयुक्तत्वे साध्याव्याप्तेः। न च विनाशसामग्रीयुक्तत्वेऽनादिभावनिष्ठत्वस्य वा अनाद्यभावविलक्षणनिष्ठत्वस्य वा अभावो नेति न तत्र साध्याव्याप्तिरिति वाच्यम्। अभावविलक्षणस्य विनाशे सादित्वस्य प्रयोजकत्वेन अनादिभावे विनाशसामग्रीयुक्तत्वस्याभावात्। साध्यव्यापकोपाधिव्यतिरेकनिश्चयवति विनाशसामग्रीयुक्तत्वेऽनादिभावनिष्ठत्वादेः साध्यव्यतिरेकस्य सन्दिग्धत्वेन निश्चितव्यापकाभाववति व्याप्यसंशयरूपव्यभिचारसंशयेनोपाधेर्व्यतिरेकव्याप्त्यसिद्धेश्च ॥ अनादित्वं चेति ॥ कारणा-जन्यत्वमित्यर्थः। न चात्र सकलानाद्यवृत्तित्वमुपाधिः। निश्चितोपाधिव्यतिरेकवति प्रागभावप्रतियोगित्वादौ साध्यस्यसन्देहेनोपाधेर्व्यतिरेकव्याप्त्यसिद्धेः ॥ प्रमाणज्ञानं चेति ॥ न चात्र प्रतियोग्यप्रसिध्या साध्याप्रसिद्धिरिति वाच्यम्। आवाभ्यामप्रसिद्धप्रतियोगिकस्याप्यभावस्य स्वीकारात् ॥ आत्मगतत्वाभावादिति ॥ न च वृत्तिरूपैकोपाध्यारूढत्वेन प्रमायाश्चैत्रगतत्वमिति वाच्यम्। तथा सति प्रमातृप्रमाणप्रमेयसाङ्कर्यापत्त्या तत्परिहाराय कल्पितभेदमादाय व्यवस्थायास्त्वयाऽपि वाच्यत्वेन प्रमातत्तत्प्रागभावयोश्चैत्रगतत्वाभावादित्यर्थः ॥ साध्य इति ॥ चैत्रप्रमायाः पक्षीकृताया प्रमामात्रप्रागभावनिवर्तकत्वनिश्चयेन प्रमापदस्याव्यावर्तकत्वादित्यर्थः

(तरङ्गिणी)

॥ प्रकरणसमता चेति॥ तेनैव हेतुना सत्प्रतिपक्ष इत्यर्थः। ननु सत्प्रतिपक्षानुमाने चैत्रासमवेतत्वमुपाधिः। चैत्रप्रमा चैत्रगतानादिनिवर्तिका न प्रमात्वात्। मैत्रप्रमावदित्यनुमानेन चैत्रप्रमाप्रागभावोऽपि न सिध्येदित्याभाससाम्यमित्यत आह ॥ न चात्रेति॥ आत्मत्वादौ साध्याव्याप्तेरित्यर्थः। आभाससाम्यं परिहरति ॥ उक्तेति॥ ननु जन्यमात्रे चैत्रगतप्रमाभावातिरिक्तस्वप्रागभावनिवर्तकत्वेनोपाधिसाध्ययोः सत्वात्तद्व्यतिरेकसहचाराग्रह इत्यत आह ॥ व्यतिरेकेति॥ ॥ प्रागभाव इति॥ आकाशादिरप्युत्पन्न इति पक्षे प्रागभावः। मतान्तरे त्वाकाशादिरप्युपसंहारस्थलमिति बोध्यम् ॥ चैत्रप्रमेति॥ अनेन प्रागभावद्वयसिध्यापत्तिः ॥ घट इति॥ अनेन प्रागभावातिरिक्तमनादिभूतं घटविरोधि सिध्यति ॥ चैत्रेच्छावेति॥ अनेन प्रागभावद्वेषाभ्यामतिरिक्तं इच्छाविरोधिभूतं अप्रमाप्रागभावाज्ञानाभ्यामतिरिक्तप्रमानिवर्त्यं च सिध्यतीत्यति प्रसङ्ग इत्यर्थः ॥ चैत्रनिष्ठत्वे सतीति॥ एतच्च निवर्तकत्वविशेषणम्। चैत्रप्रमायां चैत्रनिष्ठत्वस्य विशेषणत्वस्य सत्त्वेन तद्विशिष्टस्य चैत्रप्रमाभावातिरिक्तानादिनिवर्तकत्वस्यानधिकरणत्वे साध्यमामाने विशेष्यभूतस्य निरुक्तनिवर्तकत्वस्यानधिकरणत्वं सिध्यतीत्यर्थः। नन्वत्र चैत्रावृत्तित्वमुपाधिरित्यत आह ॥ न चेति॥ ॥ एतदुपाधित्वे सतीति॥ एतच्च साध्यव्यापकत्वस्य विशेषणम्। साध्यव्यापकत्वानधिकरणत्वमादाय पक्षे साध्यसिद्धिः ॥ अत एवेति॥ आभाससाम्यसत्प्रतिपक्षादिनेत्यर्थः ॥ किं चेति॥ अभावप्रमादौ व्यभिचारेण। ज्ञानस्य भ्रमानुपादानत्वादित्यर्थः ॥ एतज्जनकेति॥ एतज्जनकबाध्यातिरिक्तोपादानक इति पर्यवसितार्थः। न च बाध्यस्याजनकत्वादेतज्जनकबाध्याप्रसिध्या तदतिरिक्ताप्रसिद्धिरिति वाच्यम्। प्रतियोग्यप्रसिद्धेरभावप्रसिद्धिं प्रति गुणत्वेन दोषत्वाभावात् ॥ प्रयत्नान्यत्वे सतीति॥ एतच्च प्रवृत्त्यभाव एव निवृत्तिरिति मतमाश्रित्य प्रयत्ने व्यभिचारवारणाय। मतान्तरेतु प्रवृत्तेर्निवृत्त्या निवृत्तेश्च प्रवृत्त्या समानाधिकरणत्वेन साध्यसत्त्वाद्व्यभिचाराभावेन तदनुपादेयमिति ध्येयम्। नन्विच्छाविरोधिद्वेषसिद्धावपि अनिच्छा यथा न सिध्यति तथा ज्ञानविरोधिनः सिद्धावपि कथमज्ञानसिद्धिरित्यत आह ॥ज्ञानेति॥ अप्रयोजकत्वादिति॥ स्मृत्यभावमात्रेणास्मृतत्ववदित्यादिनोक्तस्येति शेषः। व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि ॥ न्यायामृततरङ्गिण्यां नानुमाऽज्ञानसाधिका ॥

॥ अविद्यानुमानभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

एवमज्ञाने प्रत्यक्षं निरस्यानुमानं निरस्यति ॥यच्चेति ॥॥तस्या इति॥ साक्षिणोऽज्ञानसाधकत्वेन न तद्बाधकत्वमिति भावः। ननु परोक्षप्रमाया अपि स्वविषयावरणप्रमातृगताज्ञाननिवर्तकत्वात् कथं तत्र बाध इत्यत आह ॥तस्या इति॥ न च प्रमातृगताज्ञाननिवर्तकत्वेऽपि विषयगताज्ञानानिवृत्त्या चैतन्याभिव्यक्त्या न विषयापरोक्ष्यमिति वाच्यम्। अपरोक्षवृत्तिस्थलेऽपि तथात्वापत्त्या विषयापरोक्षत्वानापत्तेः। तत्राज्ञानद्वयस्य निवृत्तिः, अत्र तु प्रमातृगताज्ञानस्यैवेत्यत्र विनिगमकाभावात्। वृत्तिसम्बन्धस्योभयत्राप्यविशेषात्। वृत्तेःतन्निष्ठत्वाभावस्य च प्रतिकर्मव्यवस्थाभङ्गे उपपादितत्वाच्च। अहमज्ञ इत्याद्यनुभवादीनां प्रमातृनिष्ठाज्ञानज्ञापकत्वेन विषयनिष्ठाज्ञाने प्रमाणाभावाच्च। भ्रमादेरन्यथैवोपपत्तेश्चोक्तत्वादिति दिक्। तथा च परोक्षवृत्तौ बाध एवेति परोक्षस्थलेऽज्ञाननिवृत्तिर्नेत्यत्र विवरणसम्मतिमाह॥ उक्तं चेति॥॥ अप्रयोजकत्वमिति॥ परोक्षवृत्तेरिवापरोक्षवृत्तेरपि उक्तसाध्याभावेऽपि व्यवहारादिकार्यसम्भवादिति भावः ॥सर्वेति॥ न चाधिष्ठानांशे वारणार्थं विवादपदमिति वाच्यम्। तदंशे हेतोर्व्यभिचारो विशेषणे चाप्रयोजकत्वमिति भावः।

ननु धर्म्यंशे साध्यस्यापि सद्भावान्न व्यभिचार इत्यत आह ॥तन्निवर्त्येति॥ न च भ्रमोपादानत्वयोग्यत्वं लक्षणम्। तच्च तत्राप्यस्तीति नाव्याप्तिरिति वाच्यम्। योग्यतावच्छेदकरूपाभावे योग्यत्वस्याप्यसम्भवात्। योग्यत्वे वा कदाचिदपि तज्जातीये भ्रमाद्यापत्तेः। अन्यथा कस्यापि स्वरूपायोग्यत्वं न स्यात्। ननु कालमादायाज्ञानसम्भवात् न बाधासिद्धी इत्यत आह ॥स्वस्येति॥ न च कालस्य सर्वप्रमाणवेद्यतया कथं प्रत्यक्षत्वमिति वाच्यम्। साक्षिमात्रवेद्यत्वेन सर्वप्रमाणवेद्यत्वाभावात्। कालसामान्यस्य तथात्वेऽपि कालविशेषाणामतीन्द्रियत्वावश्यं भावात्। अन्यथा कदेति प्रश्नायोगात्। प्रश्न्यादौ विवादोऽपि न स्यात्। यदा च कालविशेषाणां स्थलोपाधीनां अतीन्द्रियत्वं तदा सुतरां सूक्ष्माणां क्षणलवादीनां क्षणादीनादायैवाप्रकाशित्वादिकं वक्तव्यम्। स्थूलोपाधेश्चैकत्वेनोक्तदोषानिस्तारात्। रूपादि चाक्षुषादिज्ञानविषयत्वासम्भवाच्च। महत्वसमानाधिकरणोद्भूतरूपवद्द्रव्यस्य चाक्षुषत्वनियमाच्च। अव्यवधानेन नियतोपनायकाभावाच्च। ॥त्वन्मत इति॥ प्रकाशप्रसक्तौ सत्यां तत्प्रतिबन्धकत्वेनावरणस्य कल्पनादिति हि त्वन्मतम्। तथा च कथं जडेऽज्ञानम्? तत्र प्रकाशप्रसक्तेरभावादिति भावः ॥एकेति॥ प्रातिस्विकज्ञानेनाज्ञाननिवृत्तेरभावात्। तन्निवृत्तौ च सद्यो मोक्षः स्यात्॥ अज्ञाननिवृत्तेरेव मोक्षत्वात्। नन्वनेकाज्ञानपक्ष एवेदं साध्यमतो नोक्तदोष इत्यत आह ॥अवच्छिन्नस्येति॥ विशिष्टस्य त्वन्मते जडत्वादिति भावः ॥रूपादीति॥ इदं तु प्रागेवोपपादितम् ॥अयमिति॥ तथा च शाब्दवृत्तौ यथा नावच्छिन्नविषयत्वं केवलघटमात्रविषयत्वं तथा परोक्षवृत्तावपीति भावः। व्यभिचार इत्युपलक्षणम्। अप्रयोजकत्वं चेत्यपि द्रष्टव्यम्। एवं पक्षं दूषयित्वा साध्यमपि दूषयति ॥साध्येऽपीति॥ प्रागभावव्यतिरिक्तेति विशेषणं व्यर्थमित्यर्थः ॥यत इति॥ न च प्रमात्वेन अन्येषां ज्ञाननिवर्त्यत्वेनेति नियमस्यार्थ इति वाच्यम्। अज्ञानेऽपि तेन रूपेण निवर्त्यत्वाभावेनान्येषामिति व्यर्थं स्यात्। न हि प्रमात्वेन ज्ञानमज्ञाननिवर्तकम्। परोक्षप्रमायाः अज्ञाननिवर्तकत्वाभावात्। न चापरोक्षप्रमात्वेन अज्ञानं ज्ञाननिवर्त्यमेवेति वाच्यम्। चरमसाक्षात्कारोत्तरानुवृत्ताज्ञाने तदभावात्। तदा ज्ञाननिवृत्तौ जीवन्मुक्तस्य शरीराद्युपलब्धिर्नस्यात्। किञ्च

(कण्टकोद्धारः)
प्रमात्वेन निवर्तकत्वे घटप्रमया पटाज्ञाननिवृत्तिः स्यात्। न च तत्प्रमात्वेन तदज्ञाननिवृत्तिरिति वाच्यम्। एवं हि तत्प्रमात्वेन तत्प्रागभावनिवृत्तिरिति कथमन्येषां प्रमात्वेन ज्ञाननिवर्त्यत्वं नेति नियमार्थ इति। न च प्रागभावे निवर्त्ये प्रमात्वं निवर्ततावच्छेदकं न प्रवेश्यं, गौरवात्। किन्तु तद्व्यक्तित्वमेवेति वाच्यम्। अज्ञानेऽपि तुल्यत्वात्। तस्मादन्येषां ज्ञानसामान्यनिवर्त्यत्वाभाव एव नियमार्थ इति स्वनिवर्त्यपदेनैव प्रागभावव्यावृत्तिसिद्धेराद्यं विशेषणं व्यर्थमेव। किञ्च द्वितीयविशेषणेन प्रागभावव्यावृत्तिसिद्धेराद्यं व्यर्थम्। न चावरणत्वमस्ति प्रकाश इति व्यवहारविरोधित्वम्। तच्च ज्ञानप्रागभावस्यापीति न तेन तद्व्यावृत्तिरिति वाच्यम्। प्रमाणविषयस्य चितोऽज्ञानादिसाक्षितया प्रकाशमानत्वेन साक्षिज्ञानप्रकाशोऽस्ति साक्षी प्रकाशत इत्यादिव्यवहारे वृत्तिप्रागभावस्य विरोधित्वाभावेनावरणत्वाभावेन तेनैव व्यावृत्तिसिद्धेः। न च घटोऽस्ति घटः प्रकाशत इत्यादिव्यवहारविरोधित्वं प्रागभावस्यास्ति इति वाच्यम्। एवं हि प्रागभावो घटावरणं स्यात् नाज्ञानविषयावरणम्। जडस्याज्ञानविषयत्वानङ्गीकारात्।

किञ्चाज्ञानेऽपि नैतादृशमावरणत्वम्। परोक्षवृत्तौ सत्त्यामज्ञाने विद्यमानेऽपि अस्ति प्रकाशत इति व्यवहारस्यापि जायमानत्वेन तद्विरोधित्वाभावात्। न चेदमावरणत्वं प्रमातृनिष्ठाज्ञानस्यैव। न विषयनिष्ठाज्ञानस्य। तच्च निवृत्तमेवेति वाच्यम्। आवरणत्वशून्यत्वस्याज्ञानस्यापारिभाषिकत्वात्। द्वैविध्यकल्पनस्य बहुशो दूषितत्वाच्चेति दिक्।

॥ अभावेति ॥ न चाखण्डाभावसम्पादकतया सार्थकत्वमिति वाच्यम्। यत् हि अविशिष्टाभावघटिते साध्ये हेतोरप्रयोजकत्वं तत्र विशिष्टाभावसम्पादकतया सार्थकत्वम्। अन्यत्र तु व्यर्थत्वमेव। न च प्रकृते तथा। तथा च कथमखण्डाभावसम्पादकतया सार्थकत्वमिति भावः ॥ जड इति ॥ न च प्रकाशमानत्वेऽप्यस्ति प्रकाशत इति व्यवहारविरोधित्वेनाज्ञानस्यावश्यकत्वमिति वाच्यम्। तादृशव्यवहारे प्रकाशमानत्वस्यैव प्रयोजकतया तत्सत्त्वे व्यवहारावश्यकत्वेनाज्ञानासम्भवात्। चैतन्यमस्ति चैतन्यं प्रकाशत इति व्यवहारस्य सकलसिद्धत्वाच्च ॥ स्वेति ॥ तथा च स्वविषयेति व्यर्थमिति भावः। न च यस्यादृष्टस्य घटज्ञानोत्पादकता पटज्ञानप्रतिबन्धकता च तादृशं स्वोत्पादकादृष्टं विवक्षितम्। तथा च कथमावरणपदेन व्यावृत्तिरिति वाच्यम्। तादृशादृष्टस्य असद्भावे मानाभावात्। सद्भावे वा स्वविषयेत्यानेन तस्यावरणात्। प्रमाणवृत्तिसामान्यस्य पक्षतया स्वपदेन तस्यैव परामर्शेन प्रमाणवृत्तिविषयावरणत्वात्। प्रमाणवृत्तित्वावच्छिन्नविषयत्वावच्छिन्न आवरणत्वस्याज्ञानेऽप्यभावात्। न हि घटाज्ञानं पटावरकम्। न चाज्ञानजातीयं तथेति वाच्यम्। तर्हि यज्जातीयत्वावच्छिन्नमावरणमिति विवक्षयैव तादृशादृष्टावरणे शेषवैयर्थ्यमेव।

किञ्च प्रतिबन्धकादृष्टस्यापि क्वचिज्जनकत्वसम्भवेन तस्यापि प्रमाणवृत्तिविषयत्वा-वचिच्छन्नावरणत्वाभावेनानेनैव तद्व्यावृत्तिसम्भवेऽग्रिमविशेणवैयर्थ्यमेवेति दिक्। ज्ञानमिति यथा नियमस्य नान्योऽर्थस्तथोक्तम् ॥ वृत्तिरिति ॥ न च वृत्तेरप्रकाशत्वेऽपि अज्ञाननिवर्तकत्वमस्तु। अतिप्रसङ्गस्य तत्सन्निकर्षजन्यत्वेन निरासादिति वाच्यम्। तथात्वे हेतोरसिद्धिः। अप्रकाशत्वात्। वृत्त्युपरक्तचैतन्यस्याप्यज्ञानानिवर्तकत्वाच्च।

(कण्टकोद्धारः)

ननु वृत्त्या तत्प्रतिबिम्बितचैतन्याभिव्यक्तं घटाधिष्ठानचैतन्यं भवत्वज्ञाननिवर्तकम्। न चाज्ञानसाधकस्य कथं तन्निवर्तकत्वमिति वाच्यम्। केवलस्य साधकत्वेऽप्यभिव्यक्तस्य निवर्तकत्वसम्भवादिति चेन्न। अभिव्यक्तत्वस्य निवृत्ताज्ञानत्वरूपत्वेनाभिव्यक्तत्वेऽज्ञाननिवृत्तिः अज्ञाननिवृत्तौ चाभिव्यक्ताधिष्ठान चैतन्यमित्यन्योन्याश्रयात्।

ननु वृत्तिस्तत्प्रतिबिम्बितं चैतन्यमेव प्रकाशकमिति मते नेदमनुमानंमित्यत आह ॥ घटाकारेति॥ तस्यातन्त्रत्वे मिथ्यात्वानुमानमप्रयोजकमेवेति भावः ॥ चरमेति॥ न च चरमवृत्तिप्रतिबन्धकादृष्टं स्वरूपेण न चरमसाक्षात्कारेण नश्यति। ततः स्वनिवर्त्यपदेन तद्व्यावृत्तिसिद्धिः। कारणात्मना तु नश्यतीति मिथ्यात्वसिद्धिरिति वाच्यम्। एतादृशकल्पनायां प्रमाणाभावात्। चरमवृत्त्यनन्तरमपि तत्प्रतिबन्धकादृष्टसद्भावे प्रमाणाभावाच्च। उपादानोपादेययोरभेदेन कारणात्मना निवृत्तौ स्वरूपेणापि निवृत्ते रावश्यकत्वाच्च ॥ वृत्तेरिति॥ न चान्तःकरणस्य चिदध्यस्तत्वात् तत्परिणामवृत्त्यादेस्तदाश्रितत्वमिति वाच्यम्। तन्तुपरिणामादेः कार्पासनिष्ठत्वानुभवात्। किञ्च ज्ञानस्य शुद्धचैतन्येऽध्यासः अन्तःकरणस्य चाज्ञानावच्छिन्न इति कथमेकदेशत्वम्। अवच्छिन्नानवच्छिन्नयोर्भेदात्। जीवनिष्ठसंसारादेः शुद्धनिष्ठत्वापातात्। तथा च शुद्धाशुद्धविभागो न स्यादिति भावः ॥ त्वन्मत इति॥

न विषयनिष्ठमिति वाच्यम्। तत्सद्भावे प्रमाणाभावात्। उक्तप्रमाणैश्चावरणरूपस्यैव तस्य सिद्धेश्च ॥ अज्ञातत्त्वस्य चेति॥ न च ज्ञातो घट इत्यादिप्रतीत्यन्यथानुपपत्त्या ज्ञाततावत् अज्ञातो घट इति प्रतीत्यनुपपत्त्याऽज्ञाततापि विषयनिष्ठा स्वीक्रियत इति वाच्यम्। तस्यावरणत्वाभावेन तेनैव परिहारात्। आवरणत्वे वा तेनैवोपपत्त्याऽज्ञानासिद्धिप्रसङ्गाच्च। ज्ञातमित्यादेर्ज्ञानविषयत्वेनैवोपपत्त्या दृष्टान्तासम्प्रतिपत्तेश्च।

नन्वभावो नावरक इति मतेन साध्यद्वये तात्पर्यम्। तथा हि। स्वप्रागभाव व्यतिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकं साध्यम्। स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तर-पूर्वकमित्यपरम्। तथा च न वैयर्थ्यमित्यत आह ॥ किञ्चेति॥ तथा च प्रथमसाध्ये उत्पादकादृष्टेनार्थान्तरम्। द्वितीयतृतीये विशेषणवैयर्थ्यं चेति भावः। न च स्वविषयावरणपूर्वकमित्येव साध्यं क्रियते। तावताप्यज्ञानसिद्धेरप्रत्यूहत्वादिति वाच्यम्। ज्ञानाभावेनैवाप्रकाशिप्रकाशत्वस्य धर्म्यंशे प्रत्यक्षादे वोपपत्त्याऽप्रयोजकत्वे तात्पर्यात्। तावतापि ज्ञाननिवर्त्याज्ञानासिद्धेश्च।

ननु तथात्वे प्रमाप्रागभावप्रतिबन्धकादृष्टाभ्यामर्थान्तरं स्यादित्यत आह ॥ न हीति ॥ ॥ अन्यथेति॥ अविशेषितसाध्यं प्रत्यप्रयोजकत्वाभावेऽपि यदुद्देश्यत्वं तदा वह्नित्वेन विप्रतिपत्तौ प्रमेयवह्नित्वस्यापि साधनापत्तिरित्यर्थः ॥ हेतावपीति॥ न च व्यर्थविशेषणे हेतौ व्याप्तिरेव नेति वाच्यम्। अविनाभावरूपायाः व्याप्तेस्तत्राप्यप्रत्यूहत्वात्। एवं साध्यं दूषयित्वा हेतुं दूषयति ॥ हेतौ चेति ॥ ॥ शब्दसामान्येति॥ न च गोशब्दवाच्यत्वेन पृथिव्याः शृङ्गित्वसाधनं न सम्भवति, अनुकूलतर्काभावात्। प्रकृते च न जानामीति प्रतीत्यनुपपत्तिलक्षणप्रतिकूलतर्कपराहतिरेव बाधिकेति वाच्यम्। तस्याः ज्ञानाभावविषयत्वेनैवोपपत्तेः। अनुपपत्तेः

(कण्टकोद्धारः)

परिहृतत्वात्। पुरुषे व्यभिचारश्च। न च प्रकाशशब्देन सर्वदेशकालयोर्व्यवह्रियमाणत्वं विवक्षितमिति वाच्यम्। निर्जनदेशे वृकजीवाज्ञानपक्षे मुक्तिकाले प्रलयकाले च तादृशव्यवहाराभावेन चासिद्धेः। न चास्तु प्रकाशशब्दवाच्यत्वमेव हेतुः। पुरुषे चाप्रकाशितार्थगोचरेति विशेषणात् व्यभिचारव्युदास इति वाच्यम्। प्रकाशितार्थगोचरत्वाभावस्य तत्राऽपि सत्त्वात्। न चाप्रकाशितत्त्वमर्थविशेषणम्। अर्थश्च गोचरत्वविशेषणमिति वाच्यम्। अर्थेऽप्यप्रकाशितत्वं नाम प्रकाशशब्दवाच्यगोचरत्वाभावः। तत्र किं यत्किञ्चित् प्रकाशशब्दवाच्यगोचरत्वाभावो वा प्रकाशशब्दवाच्यत्वावच्छिन्नगोचरत्वाभावो वा। नाद्यः। प्रकाशितप्रकाशे व्यभिचारात्। न द्वितीयः। प्रकाशशब्दवाच्यपुरुषगोचरत्वाप्रसिद्ध्या तदवच्छिन्नगोचरत्वरूपप्रतियोग्यप्रसिद्ध्या तदभावस्यासिद्धेः। अप्रकाशितत्वाभावश्च पक्षे मूले एव स्पष्टम् प्रतिपादयिष्यते। एतेनाप्रकाशविरोधिप्रकाशत्वादिति विवक्षितमिति परास्तम्। प्रकाशशब्दवाच्याभावविरोधित्वे सति प्रकाशशब्दवाच्यत्वादि। अन्यस्य दृष्टान्तदार्ष्टान्तिकोभयसाधरणत्वाभावात्। तथा च प्रकाशशब्दवाच्ये पुरुषे व्यभिचारः स्पष्ट एवेत्यलं मृतमारणेन। उक्तमर्थं कारिकारूढं करोति ॥एवं चेति॥ एवं विशेष्यासिद्धिमुक्त्वा विशेषणासिद्धिमाह ॥किं चेति॥ ब्रह्मान्यप्रकाशकत्वे तस्य तस्य बाधितत्वेनाबाधितार्थकत्वरूपप्रामाण्यविघात इत्यर्थः। न च प्रकाशितत्त्वं न प्रकाशत इति व्यवहारगोचरत्वम्। तत् चितोऽप्यस्तीति वाच्यम्। प्रकाशमाने न प्रकाशत इति व्यवहारासम्भवात्। अन्यथा घटे प्रकाशमानेऽपि तथात्वापातात्। एवं सम्पूर्णासिद्धिमुक्त्वा व्यभिचारमप्याह ॥ किं चेति ॥॥ व्यभिचारो वा बाधोवेति॥ अनुमितेरपक्षत्वे व्यभिचारः। पक्षत्वे बाध इति व्यवस्थितविकल्पार्थो वा शब्दः। हेतुसत्त्वमुक्त्वा साध्याभावमाह ॥अस्या इति॥

नन्वज्ञानस्य स्वरूपतः साक्षिवेद्यत्वेऽपि तद्गतमनादित्वादिकं न साक्षिवेद्यम्। अन्यथा तत्र विवादो न स्यात्। अतस्तद्विषयाज्ञानमस्त्येवेति वाच्यम्। अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनैयत्येनानुमितावपि तस्याविषयत्वेन तया तज्ज्ञाननिवृत्तिर्नस्यात्। अनादिभावत्वादेरपि जडत्वेन अज्ञानविषयत्वायोगाच्च। त्वन्मते प्रातिभासिका ज्ञाननिष्ठस्य प्रातिभासिकत्वनियमेनानादित्वादेरपि प्रातिभासिकतयाऽज्ञानविषयत्वायोगाच्च। धर्मधर्मिणोरभेदेनानादित्वादेरपि साक्षिविषयत्वापरिहाराच्च। तस्मादज्ञानानुमितौ व्यभिचारः सुस्थः। उपलक्षणं चैतत्। विपर्यये व्यभिचारश्च। न चाप्रकाशितत्वस्याज्ञानविषयत्वरूपस्य प्राक्कालसत्त्वघटिततया विपर्ययविषयेऽभावात् विपर्ययेन हेतुवृत्तिरिति वाच्यम्। प्रकाशशब्दवाच्यगोचरत्वाभावरूपस्याप्रकाशितत्त्वस्य विपर्यय विषयेऽपि सत्त्वात्। अन्यस्य पक्षेऽसिद्धत्वेनासिद्ध्यापत्तेरिति ॥दृष्टान्तेऽपीति॥ न चान्धकारोत्पन्नपटे चान्धकाराव्यवहितोत्पन्नत्वं विवक्षितम्। तच्च द्वितीयप्रभायामिति प्रथमविशेषणं सार्थकमिति वाच्यम्। लाघवादन्धकारसमानकालीनत्वविवक्षया द्वितीयादिवारणेन प्रथमविशेषणानर्थक्यतादवस्थ्यात्। अपदार्थत्वस्योभयत्र तुल्यत्वात्। विशेषणान्तरविवक्षया विशेषणसार्थक्योपपादनस्यानुचितत्वाच्च ॥दृष्टिसृष्टीति॥ न च दृष्टिसृष्टिपक्षे नेदमज्ञानसाधकमिति वाच्यम्। तर्हि तत्पक्षेऽज्ञानासिद्ध्यापातात्। प्रमाणान्तराभावात्। प्रत्यक्षस्य निरासात्। आगमादेश्च निरसिष्यमाणत्वात्। इदानीं सत्प्रतिपक्षमाह ॥अनादित्वे सतीति॥ न च पक्षभेदे कथं सत्प्रतिपक्षत्वम्। अन्यथाऽतिप्रसङ्गादिति वाच्यम्। विरोधित्वमात्रस्यैव सत्प्रतिपक्षत्वे तन्त्रत्वेन पक्षैक्यस्यातथात्वात्। अत एव केवलान्वयिनि सत्प्रतिपक्षावतारः। अन्यथा तत्र

(कण्टकोद्धारः)

सत्प्रतिपक्षाभावेऽसत्प्रतिपक्षोपदर्शकावयवोऽपि तत्र न स्यात्। न चोक्तानुमानानाम् अप्रयोजकत्वेन दुर्बलत्वम्। सिद्धान्त्यनुमानं तु न तथेति वाच्यम्। तत्राप्यप्रयोजकत्वस्य वक्ष्यमाणत्वात्। निरुपाधिकसहचारस्यैव विपक्षबाधकत्वसम्भवाच्च। न चाद्यानुमानमविरोधित्वेनानादिभावत्वस्य निवर्त्त्यनिष्ठत्वेऽप्यनाद्यभावविलक्षणत्वस्य निवर्त्त्यनिष्ठत्वे बाधकाभावादिति वाच्यम्। अभावविलक्षणत्वस्य भावत्वनियतत्वेन वा तस्य च भावत्वरूपत्वेन वा तस्य निवर्त्त्यानिष्ठत्वेनैव तस्यापि निवर्त्त्यनिष्ठत्वाभावसिद्धेः। न च द्वितीयानुमानेऽनादिमात्रवृत्तित्वमुपाधिरिति वाच्यम्। ध्वंसत्वे साध्याव्यापनात्। पक्षमात्रव्यावर्तकविशेषणत्वं न, पक्षेतरत्वाच्च। सिद्धान्त्यभिप्रेतानुमानस्यापि भूतरूपवत्तेजस्त्वेनोपाधिना सोपाधिकत्वाच्च। न च तृतीयचतुर्थयोः सकलनिवर्त्त्यावृत्तित्वमुपाधिः। प्रागभावजन्यप्रागभावान्यतरत्वे साध्याव्यापकत्वात्। न च पञ्चमे सकलानाद्यवृत्तित्वमुपाधिरिति वाच्यम्। तमोऽन्यत्वे साध्याव्यापकत्वात्। न च तस्य प्रागभावनिष्ठत्वेन साध्याधिकरणत्वमेव नेति वाच्यम्। प्रागभावस्यावरणत्वाभावस्य प्रागेवोपपादितत्वात्। अन्यथा तेनैवार्थान्तरतापत्तेः। पक्षमात्रव्यावर्तकविशेषणत्वेन पक्षेतरत्वाच्च। न च षष्टे प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरिति वाच्यम्। शब्दाभासादिना तत्प्रसिद्धिसम्भवात्। अन्यथा सद्वैलक्षण्यज्ञानं तवापि न स्यात्। गौरवेण प्रतियोगिप्रमात्वेन कारणत्वाच्चेति दिक्। अप्रयोजकत्वमप्याह ॥ पूर्वमिति॥ अन्यथा स्मृतत्वादेः पदार्थान्तरतापत्तिरिति भावः। बाधमप्याह ॥ किं चेति॥ नन्वनधिष्ठानत्वेऽपि तज्ज्ञानत्वमस्त्वित्यत आह ॥ त्वन्मते हीति॥ न त्वाध्यासिकसम्बन्धस्य अतन्त्रत्वप्रसङ्गादिति भावः। न च वृत्त्यभिव्यक्तस्याधिष्ठानत्वात् तत्प्रकाशत्वमिति वाच्यम्। अन्योन्याश्रयादिति। अत्र कश्चिद् विवादगोचरापन्नमित्यनेन जन्यसविकल्पकाजन्यचाक्षुषप्रमाणज्ञानम् अन्धकारनिवृत्त्यव्यवहितोत्तर-कालीनचाक्षुषज्ञानं वा विवक्षितम्। अत्र च प्रमाणज्ञानस्य पक्षत्वात्। चाक्षुषेत्यनेन च परोक्षवृत्तेः सविकल्पकाजन्येत्युक्त्या धारावाहिकबुद्धिव्यावृत्तिः। अस्मन्मते तु धारावाहिकबुद्धिरेव नास्ति। एकस्यैव ज्ञानस्य तावत्पर्यन्तमवस्थानसम्भवात्। न तस्य पक्षतापत्त्या बाधः। पराभिमतेश्वराज्ञानादिव्यावृत्तये चाक्षुषप्रमाणज्ञानेति। परमते सर्वस्यापि जन्यज्ञानस्य ईश्वरसविकल्पकजन्यत्वात्। जन्यज्ञानजन्यत्वाच्च। पक्षाप्रसिद्धिवारणाय जन्यसविकल्पकाजन्येति उभयोपादानम्। यथेश्वरानुमाने जन्य विशेषणम्। एवमेव द्वितीयनिरुक्तावपि। एवं च पक्षदूषणानवकाशः। साध्ये च स्वशब्दः समभिव्याहृतपरः। अत्र च स्वप्रागभावपदेन स्वसमानाधिकरणप्रागभावः कथ्यते। स्वविषयावरण इत्यनेन स्वजननायोग्यत्वं स्वनिवर्त्त्येत्यनेन स्वजन्यध्वंसप्रतियोगित्वं स्वदेश गतेत्यनेन स्वाश्रये वर्तमानत्वम्। एवं च पक्षीभूतज्ञानस्य घटपटादिसंयोगजनकत्वसम्भवात्। तत्प्रागभावः स्वनिवर्त्त्य इति। संयोगादिप्रागभावात्मत्व-स्वजनकादृष्टेच्छाप्रागभावपूर्वकत्वेनार्थान्तरतावारणायैतानि विशेषणानि। अज्ञाने चैवं भूतमिति न बाधः। स्वप्रागभावान्यत्वं चाभावान्यत्वादन्यदेवेति न तद्वैयर्थ्यम्।अथवा प्रमाणज्ञानस्य प्रागभाव एव स्वप्रागभावः। स्वविषये संशयाजननयोग्यमेव स्वविषयावरणम्। स्वसत्ताक्षणनियतप्रतियोगिस्वनिवर्त्त्यम्। ततश्च प्रागभावोऽपि परमते विशेषदर्शनतया संशयादिजनक इति। स्वप्रागभावस्वजनकादृष्टान्धकारादिकव्यावृत्तये स्वप्रागभावेत्यादि विशेषणम्। परमते मनःसंयोगपूर्वकत्वेनार्थान्तरतानिवृत्तये स्वनिवर्त्त्येति। अथवा पराभिमतप्रागभावान्यत्वघट ज्ञानसमानविषयत्वज्ञाननिवर्त्त्यत्वज्ञानसमानाश्रयत्वविशिष्टाज्ञानसिध्यर्थानि विशेषणानीति न कस्यापि वैयर्थ्यम्।

(कण्टकोद्धारः)
एकेनापि तेन विनोद्देशासिद्धेः। न चाज्ञानस्य कथं प्रमाणज्ञानसमानाश्रयत्वमिति वाच्यम्। अज्ञानाश्रयघटत्वावच्छिन्नचैतन्ये वाऽन्तःकरणावच्छिन्नत्वमिति तन्निष्ठज्ञानस्यैवाज्ञानसमानाश्रयत्वमिति। न च नीरूपस्य ब्रह्मणः कथं चाक्षुषज्ञानविषयत्वम्? महत्त्वसमानाधिकरणोद्भूतरूपवत एव चाक्षुषत्वादिति वाच्यम्। परमते घटः सन्निति चाक्षुषज्ञाने सत्ताया इव तदुपपत्तेः। सत्तास्थानीयत्वात् ब्रह्मणः। न च सत्तायाः जातित्वात् आत्मनस्तु द्रव्यत्वात् कथं सत्तातुल्यत्वमिति वाच्यम्। ज्ञानानन्दादिरूपत्वेन पराभिप्रेतात्म वैलक्षण्याङ्गीकारात्। तथा च सत्तातुल्यतैवेति। एवं च साध्यविशेषणानां सार्थकत्वेन साध्ये न वैयर्थ्यम्। हेतुरप्यप्रकाशितार्थप्रकाशकत्वम्। न चोक्तदोषः। एतद्विषयावरणसमयवृत्तित्वे सति एतदावरणनिवर्तकत्वम्। न च वर्णिताज्ञानातिरिक्तप्रमाणज्ञाननिवर्त्त्यविषयावरणमस्ति। येन साध्यं विना हेतोरनुपपत्तेर्नाप्रयोजकतापि। स्वप्रागभावस्य स्वानिवर्त्त्यत्वात् न तेनोपपत्तिः। वस्तुतस्तदभाव एव। न चोक्तहेतोरसिद्धिः। ज्ञानेनाज्ञानं निवृत्तमित्यनुभवेन ज्ञानेन तु तदज्ञानमिति स्मृत्या च सिद्धेः। एवं च न कोऽपि दोष इत्याह तन्न। धर्म्यंशे सति कल्पके तथाऽपि बाधात्। न हि तदंशेऽप्यज्ञानं तवाऽपि सम्मतम्। अन्यथा तदंशे भ्रमाभावेन तज्ज्ञाने भ्रमोपादानत्वलक्षणस्याव्याप्तिप्रसङ्गात्। किं च धारावाहिकद्वितीयादिबुद्धौ बाधोऽसिद्धिश्च। न च धारावाहिकबुद्धेर्जन्यसविकल्पकजन्यत्वात् जन्यसविकल्पकाजन्येत्यनेन तद्व्यावृत्तिरिति वाच्यम्। मया विशिष्टज्ञाने विशेषणज्ञानस्य हेतुत्वानङ्गीकारात्। त्वयाऽप्यनङ्गीकाराच्च।

किं च निर्विकल्पकानङ्गीकारेण जन्यज्ञानाजन्यत्वेनैव पूर्णत्वे सविकल्पकेत्यस्य वैयर्थ्याच्च। किंच चाक्षुषघटज्ञानविषये घटे आवरणरूपाज्ञानाभावेन बाधः। जडे प्रकाशप्रसक्त्यभावे न तत्प्रतिबन्धकत्वेनाज्ञानाङ्गीकारात्। न च चाक्षुषघटज्ञानपदेन घटावच्छिन्नचैतन्याज्ञानं विवक्षितमिति वाच्यम्। आश्रयासिद्धेः। अवच्छिन्नस्यापि घटतुल्यत्वेन तत्राप्यज्ञानासम्भवात्। तस्यान्न धर्मिसिद्धिः। साध्येऽप्याद्यविवक्षायां भ्रान्तिसंशयपूर्वकत्वेनार्थान्तरम्। अस्ति च भ्रान्तिसंशययोरुक्तविशेषणवत्ता। तयोः स्वप्रागभावव्यतिरिक्तत्वात्। व्यभिचारेण प्रमाणज्ञानजननायोग्यत्वात्। स्वनिवर्त्त्यत्वात् स्वदेशगत्वाच्च। न च तत्र न स्वनिवर्त्त्यत्वमिति वाच्यम्। अज्ञानेऽपि तदभावप्रसङ्गात्। ज्ञानेनाज्ञानं निवृत्तमित्यनुभवात् तत्र तदङ्गीकारे सम्यग्ज्ञानेन संशयो वा भ्रान्तिर्वा निवृत्तेत्यनुभवेन तत्रापि तदङ्गीकारणीयम्। न च तयोः स्वत एव निवृत्तिरिति वाच्यम्। सकलनिवृत्तकतत्त्वज्ञानसाध्यत्वात्। किं च प्रथमविवक्षया बाधः। अज्ञानस्य वासनोपादानत्वेन स्वजननयोग्यत्वाच्च। द्वितीयविवक्षायामपि ताभ्यामेवार्थान्तरम्। न च द्वितीयपक्षे कथं संशयादिनाऽर्थान्तरम्? तस्य स्वविषये संशयजननयोग्यत्वरूपावरणत्वाभावादिति वाच्यम्। संशयादेस्तत्त्वेन संशयादिकं प्रत्ययोग्यत्वेऽपि धारावाहिकसंशयादिकमादाय पूर्वस्य संशयादेरुत्तरत्र संशयादिकं प्रति धर्मिज्ञानत्वेम विशेषणज्ञानत्वेन तज्जननयोग्यत्वात्।

किं च द्वितीयपक्षे स्वप्रागभावस्य न संशयादिजननयोग्यत्वम्। प्रमाणज्ञानप्रागभावस्य संशयाद्यहेतुत्वात्। अन्यप्रागभावस्यान्यत्राहेतुत्वात्। तथा च तेनैव स्वप्रागभावनिवारणे प्रथमविशेषणे वैयर्थ्यमेव। न च विशेषादर्शनतया संशयादिजननयोग्यतेति वाच्यम्। विशेषादर्शनस्य हेतुत्वे विशेषदर्शनकालेऽपि संशयापत्त्या

(कण्टकोद्धारः)

तत्सामग्र्यभावस्यैव हेतुत्वात्। विशेषदर्शनानन्तरं च न संशयः। कोटिस्मरणाभावात्। किं च प्रथमविवक्षायामपीच्छाभावस्य स्वसमानाधिकरणत्वात्। स्वदेशगतेत्यनेन तद्व्यावृत्तेस्तेनैवार्थान्तरम्। तद्विशेषणवैयर्थ्यं च। न च द्वितीयविवक्षायामपि न स्वदेशगतेत्यनेन तमोवारणम्। प्रमाणजनितघटाकारवृत्तेर्घटनिष्ठत्वेन तमसोऽपि तद्देशगतत्वात्। अज्ञानस्य चैतन्यमात्राश्रयतया वृत्तेस्त्वन्तःकरणावच्छिन्नाश्रयतयाऽवच्छिन्नशुद्धयोर्भेदेन समानाश्रयत्वस्याज्ञानेऽसम्भव एव। अन्यथा विशिष्टनिष्ठसंसारादेरपि शुद्धनिष्ठत्वापत्तेः। ब्रह्मणश्च गुणवत्वादिना द्रव्यत्वमन्यत्रोपपादितमिति न सत्तातुल्यता। तस्य चाक्षुषादिविषयत्वे च औपनिषदत्वभङ्गश्च। अवच्छिन्नस्य कल्पितत्वादेव नाधिष्ठानत्वमित्यादि ज्ञातव्यम्। प्रथमविवक्षायामप्यन्त्यविशेषणं व्यर्थमेव। अन्वयव्यतिरेकयोरभावेनान्यतरकर्मादिनैव संयोगस्योपपत्त्या प्रमाणज्ञानस्य संयोगाजनकत्वेन संयोगप्रागभावस्य स्वनिवर्त्यत्वाभावात्।

किं चोभयत्राभावव्यतिरिक्तेत्यनेनैवोपपत्त्या प्रागिति व्यर्थमेव। न चाखण्डाभावत्वेनोपपत्तिः। यत्र च विशेष्या भावेन न कार्यनिर्वाहः तत्र विशिष्टाभावोपपादनात्। तत्र च वैयर्थ्ये तथा समाधानात्। अन्यथा धूमाभावे साध्ये प्रमेयवह्न्यभावोऽपि हेतुः स्यादिति। किं च पक्षद्वयेऽपि स्वविषयावरणेत्यनेनैव प्रसक्तप्रकाश प्रतिबन्धकत्वरूपावरणत्वमादाय सर्वनिवारणेऽनुपयुक्तकुसृष्टियुक्तिविवक्षया विशेषणान्तर-सार्थक्यकथनायोगात्। अन्यथा प्रमेयत्वे सति धूमवत्वादिति प्रयुक्ते वैयर्थ्येऽभिहिते आरोपितधूमव्यभिचारवारणाय विशेषसार्थक्यम्यमिति स्यात्। तस्मान्न विवक्षाद्वयं युक्तम्। नाप्युद्देशसिद्ध्यर्थमिति तृतीयः प्रकारः। यत्राविशिष्टं साध्यं प्रत्यप्रयोजकता तत्रैवोद्देश्यसिद्ध्यर्थत्वात्। न चेश्वरानुमानप्रतिबन्दी। तत्रादृष्टजनकज्ञानादिनाऽर्थान्तरत्वे प्राप्ते दुष्टप्रागभावेत्यादिविशेषणोपादानात्। न ह्यत्रार्थान्तरता। न वा तैर्विशेषणैस्तत्परिहारः। अन्यथाऽनुपयुक्तप्रमेयत्वादिविशेषणान्यादाय वैयर्थ्ये उद्देश्यसिद्ध्यर्थमिति स्यात्। यत्र च भेदसाधने ब्रह्म स्वसमसत्ताकभेदवदभ्रान्तत्वादित्यनुमानविशेषणोपादानं तत्रार्थान्तरतानिवृत्तिरूप-प्रयोजनमप्यस्तीति दिक्। नाप्युक्तो हेतुर्युक्तः। असिद्धेर्निवर्त्यनिवर्तकयोरेकसमयावृत्तित्वे वा समानाधिकरणत्वे वा निवर्त्यनिवर्तकभावायोगात्।

किं चोक्तावरणत्वस्य प्रागभावेऽपि सत्त्वेन तन्निवर्तकत्वेनैवोपपत्त्याऽप्रयोजकत्वाच्च। न च प्रागभाव एव नास्तीति वाच्यम्। तस्य पुरैव साधितत्वात्। परोक्षवृत्तौ व्यभिचारश्च। न च तत्र तन्निवर्तकतैव नेति वाच्यम्। परोक्षज्ञानेनाज्ञानं निवृत्तमित्यनुभवात्। न च तदपि पक्षतुल्यमिति वाच्यम्। परोक्षस्थलेऽज्ञाननिवृत्त्यनङ्गीकारात्। किं च पक्षे हेतुज्ञानाभावात् कथमनुमानम्? न च ज्ञानेनाज्ञानं निवृत्तमित्यनुभवात् ज्ञानेन तु तदज्ञानमिति स्मृतेश्च तत्सिद्धिरिति वाच्यम्। तत्राज्ञानपदेन ज्ञानप्रागभावस्य भ्रान्त्यादेर्वोक्तेः। ज्ञानविरोधित्वरूपाज्ञानत्वस्य तत्राऽपि सद्भावात्। ज्ञानत्वाधिकरणतया प्रतीयमानस्य कथमज्ञानत्वमिति चेन्न। न हि ज्ञानसामान्यविरोधित्वम् अज्ञानत्वम्। तस्याज्ञानेऽपि भावात्। न हि भ्रान्त्याज्ञाननिवृत्तिर्भ्रान्तेरज्ञानोपादानकत्वे भ्रान्तौ विद्यमानायां तदावश्यकत्वात्। तस्मात् ज्ञानविशेषविरोधित्वेनाज्ञानत्वं वाच्यम्। तच्च भ्रान्तावपि तुल्यम्। न च भ्रान्तिः स्वयमेव निवर्तत इति

(कण्टकोद्धारः)

वाच्यम्। दत्तोत्तरत्वात्। साध्यावैशिष्ट्याच्च। न च साध्यमनेवंरूपमिति कथं तदवैशिष्ट्यमिति वाच्यम्। साध्यं यथा सन्दिग्धं तथा सन्दिग्धमित्यर्थात्। न चाज्ञानसिद्धिः। पूर्वमपि हेतोः सामान्यतो ज्ञानं सम्भवतीति वाच्यम्। अज्ञानसिद्धेः पूर्वं प्रागभावमादायैव हेतुज्ञानेनैवोपपत्त्याऽप्रयोजकत्वम्। आवरणनिवर्तकत्वेनैवोपपत्त्या प्रथमविशेषणवैयर्थ्यं च। एतेनैव प्रकारेण अन्यकुविवक्षान्तरमपि दूषणीयमित्यलं मृतमारणेनेति।

यत्तु सर्गाद्यकालीनं कार्यं जडोपादानं कार्यत्वात् सम्मतवत् इत्यणुव्यतिरिक्तानादिजडोपादानसिद्धावनादित्वे सति जडोपादानत्वं भावत्वं वा ज्ञाननिवर्त्त्यवृत्ति जडवृत्तित्वात्। घटत्वादिवत्। न च भावत्वस्य जीवत्वादिवृत्तित्वेनार्थान्तरत्वम्। ज्ञानत्वादेरपि तस्य ज्ञाननिवर्त्त्यत्वादिति भावरूपाज्ञानसिद्धिरिति। तदतितुच्छम्। दृष्टान्ते साध्यवैकल्यात्। न ह्यज्ञानासिद्धौ घटादेरपि घटत्वासिद्धौ घटादेर्ज्ञाननिवर्त्त्यत्वं सिद्धम्। किं चानादिभावत्वस्यापि नाश्यतावच्छेदकत्वेन तस्य निवर्त्त्यत्वासमानाधिकरणतया निवर्त्त्यसमानाधिकरणत्वबाधः। अन्यथा ब्रह्मत्वं निवर्त्त्यवृत्ति पदार्थवृत्तित्वात् घटत्ववत् इत्यपि स्यात्। न च निवर्त्त्य वृत्तीत्येव साध्यम्। अज्ञानसिद्ध्याऽर्थान्तरत्वात्। ध्वंसत्वे व्यभिचाराच्च। ध्वंसस्यापि निवृत्त्यङ्गीकारेऽज्ञाननिवृत्तेरपि निवृत्तौ मुक्तस्य संसारित्वापत्तेः। न च ध्वंसत्वं न जडवृत्तीति वाच्यम्। ध्वंसस्य चेतनत्वापत्तेः। न च ध्वंसो ब्रह्मरूप एवेति वाच्यम्। साध्यासाध्ययोरैक्यायोगात्।

किं चानादित्वे सति जडोपादानत्वं भावत्वं वा न निवर्त्त्यवृत्त्यनादिभावमात्रं वृत्तित्वात् ब्रह्मत्ववदिति सत्प्रतिपक्षताया भाववृत्तित्वानवच्छिन्नसाध्यव्यापकं सादिवृत्तित्वमुपाधिश्च। निवर्त्त्यवृत्तित्वाभावेऽपि जडवृत्तित्वोपपत्त्याऽप्रयोजकता चेति अलमतिविस्तरेण।

एतेनैव ध्वंसातिरिक्तप्रत्यक्षधर्माजनकं घटादिजन्यज्ञानं वृत्तिजातिमदतिरिक्तप्रत्यक्षनिवर्तकं स्वसामग्रीकाले स्वसमानाधिकरणज्ञानाविषयविषयजन्यज्ञानत्वात् ध्वंसजनकप्रतियोगिप्रत्यक्षवत् ब्रह्मसाक्षात्कारः स्वविषयाज्ञाननिवर्तकः प्राथमिकसाक्षात्कारत्वात् घटादिसाक्षात्कारवदिति निरस्तम्। ज्ञानप्रागभाव-संशयभ्रान्तिनिवर्तकत्वेनार्थान्तरत्वात् अप्रयोजकत्वाच्च। न चाज्ञानातिरिक्तस्य न ज्ञाननिवर्त्त्यत्वमिति वाच्यम्। अनुभवबलेन भ्रान्त्यादेरपि तन्निवर्त्त्यत्वात्। न चाज्ञानाभावे भ्रमाभाव इति वाच्यम्। दोषादिनैव तदुपपत्तेः। न च मोक्षशास्त्रानारम्भप्रसङ्गो बाधकः। भ्रान्त्यादिनिवर्तकत्वेन तदारम्भसम्भवात् इति दिक्।

अथ तत्त्वप्रदीपिकोक्तमनुमानं दूषयति ॥ द्वितीयानुमानेऽपीति॥ न च प्रमापदेनान्तःकरणवृत्तिरेव विवक्षितेति वाच्यम्। धर्म्यंशप्रमाधारावाहिकद्वितीयादिप्रमापरोक्षप्रमासु बाधापरिहारात्। अन्यत्तु प्रथमानुमानदूषणानुसारेण ज्ञेयम् ॥ वृत्तेरिति॥ न चात्मनो वृत्त्यवच्छेदे न वृत्तेस्तद्गतत्वमिति वाच्यम्। अत्र चैत्रशब्देन चैतन्यमात्रग्रहणे विशेषणासामर्थ्यम्। शरीरविशिष्टस्य ग्रहणे च शरीरविशिष्टे प्रमाया अभाव एव। अन्तःकरणविशिष्टस्य ग्रहणे तु विशिष्टनिष्ठया वृत्त्या न विशेष्यमात्रनिष्ठनिवृत्तिः। अन्यनिष्ठेनान्याज्ञानानिवृत्तेः। विशिष्टविशेष्ययोर्भेदादित्यत्र तात्पर्यम्। चैत्रासमवेतत्वस्य चैत्रान्यसमवेतत्वस्य

(कण्टकोद्धारः)

**वोपाधित्वं च। न च चैत्रसुखादौ साध्याव्यापकत्वमिति वाच्यम्। ज्ञानत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात् ॥ चैत्रप्रमेति॥ न चात्र प्रतियोग्यप्रसिद्धया कथमभावसाधनमिति वाच्यम्। शब्दाभासादिना प्रतियोगिज्ञानसम्भवात्। न ह्यावयोर्मते प्रतियोगिप्रमाऽपेक्षिता। अन्यथा सद्वैलक्षण्यज्ञानं न स्यात् ॥ न चेति॥ चैत्रासमवेतत्त्वं ज्ञानत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वमुपाधिः। चैत्रप्रमा चैत्रगतस्यानादेर्निवर्तिका न प्रमात्वात् मैत्रप्रमावत् इत्याभाससाम्यं च ॥ उक्तेति॥ तथा चानुकूलतर्केण हेतुसाध्ययोर्व्याप्यव्यापकभावग्रहे साध्यव्याप्यहेत्वव्यापकत्वादुपाधेः साध्याव्यापकत्वम् अत एव नाभाससाम्यं चेत्यर्थः ॥ चैत्रगतेति॥ न च चैत्रगतप्रमाभावातिरिक्तस्य स्वजन्यव्यवहारप्रागभावस्य निवर्तकतया साधनव्यापकत्वाभावमुपाधिरिति वाच्यम्। अभावाभावोऽतिरिक्त इति मते तदसम्भवात्। येन व्यवहारो नोत्पादितस्तत्र साधनाव्यापकत्वसम्भवात्। न हि सर्वमेव ज्ञानं व्यवहारजनकमिति नियमः। न च तत्रापि निवृत्तिजननयोग्यत्वरूपं निवर्तकत्वमस्त्येवेति वाच्यम्। योग्यतावच्छेदकानिरुक्त्या तदसम्भवात्। निवृत्तिफलोपहितत्वस्यैवोपाधित्वसम्भवाच्च। ननु व्यतिरेकहीनः कथमुपाधिरित्यत आह ॥ व्यतिरेकेति॥ ॥ आभाससाम्यं चेति॥ न चानुकूलतर्कसद्भावान्नाभाससाम्यम्। अनुकूलतर्काभावस्य प्रागेव व्युत्पादितत्वात् ॥ किं चैवमिति॥ विशिष्टव्यतिरेकिण इत्यस्य सुवचत्वादित्यनेनान्वयः ॥ अत एवेति॥ सत्प्रतिपक्षाप्रयोजकत्वादित एवेत्यर्थः ॥ विगीतो भ्रम इति॥ न च त्वन्मते बाध्यजनकत्वस्याप्रसिद्धेः साध्याप्रसिद्धिरिति वाच्यम्। परीत्या प्रसिद्धिसम्भवात्। प्रतियोगिज्ञानमात्रस्याभावप्रतीतिकारणत्वादित्युक्तमेव। न च माया ब्रह्मणोरुभयोरुपादानत्वादविरोध इति वाच्यम्। एतज्जनकबाध्यातिरिक्तमात्रोपादानक इति साध्यकरणात्। ब्रह्मण उपादानत्वासम्भवस्य वक्ष्यमाणत्वाच्च ॥ एतेनेति॥ उपलक्षणमेतत्। सत्प्रतिपक्षतोपाध्यादिकमपि द्रष्टव्यम्। एतेनैव ज्ञानविरोधित्वम् अनादिभावत्वसमानाधिकरणं ज्ञानविरोधिवृत्तित्वात् दृश्यत्ववत्। अनाद्यभावविलक्षणत्वं ज्ञानविरोधिवृत्त्यनाद्यभावविलक्षणमात्रवृत्तित्वात्। अभिधेयत्ववदिति निरस्तम्। ज्ञानविरोधित्वं नानादिभावत्वसमानाधिकरणं ज्ञानविरोधिन्येव वृत्तित्वात्। ज्ञानप्रागभावत्ववदिति प्रथमानुमाने सत्प्रतिपक्षताऽबाध्यवृत्तित्वमुपाधिश्च। द्वितीयानुमाने चानाद्यभावविलक्षणत्वं न ज्ञानविरोधिवृत्त्यनाद्यभावविलक्षण एव वृत्तित्वात् ब्रह्मत्ववदिति सत्प्रतिपक्षता। आत्मगुणज्ञानाभावान्यत्ववृत्तित्वस्योपाधित्वात्। अप्रयोजकत्वानिस्ताराच्च। एवमेवान्यदप्यनुमानं निरसनीयमिति दिक् । ॥ इति अविद्यानुमानभङ्गः ॥**

न्यायामृतप्रकाशः

आद्यानुमाने साध्यहेतुपक्षदृष्टांतान्विविच्य दूषयितुमादौ तावत्त्वन्मते पक्षाप्रसिद्ध इत्याशयेन पक्षं विविच्य दूषयति ॥ यच्चेति॥ ॥ सुखादीति॥ साक्षिरूपसुखादिप्रमाया अपि प्रमाणभूतज्ञानत्वेन पक्षकोटिनिविष्टत्वादिति भावः। तस्य स्वनिवृत्त्यवस्त्वंतरपूर्वकत्वं नास्तीत्याह ॥ तस्या इति ॥ साक्षिणोऽज्ञानसाधकत्वेन तदनिवर्तकत्वादित्यर्थः। उक्तदूषणपरिहाराय पक्षं संकोचयति ॥ वृत्तेरिति॥ साक्षिरूपप्रमाणज्ञानभिन्नाया इत्यर्थः ॥ बाध इति॥ तस्याः स्वविषयेऽज्ञानानिवर्तकत्वात्परोक्षवृत्तौ स्वविषयावरणस्य स्वनिवर्त्यत्वाभावाद्बाध इति

(प्रकाशः)

भावः। परोक्षवृत्तेरपि स्वविषयेऽज्ञाननिवर्त्तकत्वमङ्गीकृत्य बाधपरिहारे बाधकमाह ॥तस्या इति॥ तद्विषयस्य परोक्षवृत्तिविषयस्य ॥संभेदेनेति॥ संबंधेनेत्यर्थः। परोक्षवृत्तेः स्वविषयेऽज्ञानानिवर्त्तकत्वे संमतिमाह ॥उक्तं चेति॥ विषयत्वं नानुमेयादौ सुषुप्तिः व्यावृत्तिः साचाभावो न भवतीति विवरणवाक्यं। तस्यायमर्थः। सुषुप्तिरविद्या तथा च सुषुप्तिव्यावृत्तिरेवाज्ञाननिवृत्तिरेव लोके घटादेर्विषयत्वम् अभावोऽभावरूपा च सा सुषुप्तिव्यावृत्तिरनुमेयादौ परोक्षस्थले परोक्षवृत्त्या न भवतीति उक्तदूषणपरिहाराय पुनः पक्षं संकोचयति ॥अपरोक्षवृत्तेरिति॥ ॥व्यभिचार इति॥ अप्रकाशितार्थप्रकाशकत्वसत्वेपि उक्तरीत्या साध्याभावादित्यर्थः। ननु परोक्षवृत्तिभिन्नत्वे सतीति हेतुविशेषणान्न व्यभिचार इत्यत आह ॥तद्व्यावृत्त्यर्थमिति॥ ॥अप्रयोजकत्वमिति॥ यथा हेतुः परोक्षवृत्तौ विद्यमानोपि साध्यं प्रत्यप्रयोजकः एवं पक्षेप्यप्रयोजकोस्त्वित्यर्थः ॥सदर्थेति॥ सदर्थो विद्यमानार्थः धर्म्यंशः इदमंशरूप इति यावत्। ननु इदमंशवृत्तिनिवर्त्त्याज्ञानस्यापि सत्वान्न बाध इत्यत आह ॥तन्निवर्त्येति॥ नन्विदमंशाज्ञानस्यापि भ्रमोपादानत्वमेवेति नाव्याप्तिरित्यत आह ॥न हीति॥ सदर्थरूपाधिष्ठानाज्ञाने प्रत्युत तज्ज्ञानस्यैव भ्रमहेतुत्वादित्यर्थः। एतद्दूषणपरिहाराय पुनः पक्षं संकोचयति ॥तदन्यस्येति॥ इदमंशापरोक्षवृत्तिभिन्नपरोक्षवृत्तिरूपप्रमाणज्ञानस्येत्यर्थः। बाधमुपपादयति ॥स्वेति॥ तत्रादावज्ञानम् अनन्तरं तन्निवर्तिका प्रथमा प्रमा तन्निवर्तिका च द्वितीयादिप्रमा एवं च सति द्वितीयादिप्रमाया अपि पक्षनिविष्टत्वात् द्वितीयप्रमानिवर्त्या या प्रथमप्रमा तया द्वितीयादिप्रमाया व्यवहितत्वेन प्रथमप्रमानिवर्त्तन एव चरितार्थतया प्रथमप्रमानिवर्त्याज्ञानानिवर्त्तकत्वाद्बाध इत्यर्थः। तत्र दृष्टांतः द्वितीयादीति। तमोनिवर्त्तिका प्रथमप्रभैव न द्वितीयादिप्रमा तद्वदित्यर्थः। ननु नासिद्धिः द्वितीयादिप्रमाणेपि अन्यान्यक्षणलवविशिष्टार्थप्रकाशकत्वेनाप्रकाशितार्थप्रकाशकत्व सद्भावादित्यत आह ॥सूक्ष्मेति॥ यथाऽऽहुः प्रत्यक्षेण सूक्ष्मकालभेदानामनाकलनादिति। एतद्दूषणपरिहाराय पुनरपि पक्षं संकोचयति ॥तदन्यस्येति॥ द्वितीयादिप्रमाभिन्नापरोक्षप्रमारूपज्ञानस्येत्यर्थः ॥अनात्मेति॥ जडेत्यर्थः। बाधमुपपादयति ॥त्वन्मत इति॥ तथा च जडविषयापरोक्षवृत्तेरपि पक्षत्वेन तस्याः स्वनिवर्त्याज्ञानपूर्वकत्वाभावाद्बाध इत्यर्थः। बाधपरिहारं शङ्कते ॥नन्विति॥ तथा च घटाद्यवच्छिन्नचैतन्यावरकमित्यर्थः ॥न बाध इति॥ घटाद्यवच्छिन्नचैतन्ये त्वज्ञानमस्तीति स्वनिवर्त्याज्ञानपूर्वकत्वसद्भावान्न बाध इति भावः ॥तदभावादिति॥ घटोयमित्याद्यपरोक्षप्रमानिवर्त्यत्वमज्ञानस्य नास्ति तथात्वेऽज्ञानस्यैकत्वेन तन्निवृत्तौ सद्योमोक्षापात इति भावः। अपसरणादिपक्षस्य दूषितत्वादिति भावः ॥अस्वप्रकाशत्वेनेति॥ शुद्धचैतन्यस्यैव प्रकाशत्वादिति भावः ॥अयोगाच्चेति॥ तत्प्रतिबंधरूपावरणायोगाच्चेत्यर्थः। तथा च घटावच्छिन्नचैतन्येप्यज्ञानाभावादनात्मवृत्तौ बाधस्तदवस्थ इत्याशयः। घटोयमित्याद्यपरोक्षवृत्तेस्तदवच्छिन्नचैतन्यविषयत्वम् अङ्गीकृत्याज्ञाननिवर्त्तकत्वं न संभवतीत्युक्तम् अधुना घटोयमित्यादिवृत्तेश्चैतन्यविषयकत्वमेव नास्तीत्याह ॥रूपादीति॥ स्वतो रूपादिहीनस्य घटाद्यवच्छिन्नस्य चैतन्यस्य चाक्षुषत्वमस्तु। चन्द्रावच्छेदेन राहोरिवेत्यत उक्तमाकाशादिवदिति। स्वतो रूपादिहीनस्याप्याकाशस्य घटाद्यवच्छेदेनापि चाक्षुषताया अदर्शनादित्यर्थः। राहोस्तु नीलरूपवत्त्वेन न स्वतो नीरूपत्वमिति भावः। यथा घटाद्यनात्मविषयशाब्दज्ञानेन चैतन्यं विषयः तथा तत्समानविषयेऽपरोक्षज्ञानेपीति आत्मविषयापरोक्षवृत्तौ बाधस्तदवस्थ एवेत्याह ॥अयं घट इति॥ तथा चोभयवृत्त्योः साम्ये परोक्षवृत्तिवदपरोक्षवृत्तेरप्यज्ञानानिवर्त्तकत्वाद्बाध

(प्रकाश:)

इति भाव:। एतद्दूषणपरिहाराय पुनरपि पक्षं संकोचयति ॥आत्मेति॥ सा चांततश्चरमवृत्तिरेवेति भाव: ॥व्यभिचार इति॥ त्वन्मते जडावरकाज्ञानाभावेन साध्याभावादित्यर्थ: ॥दृष्टांतस्येति॥ अप्रकाशितार्थप्रकाशिकायां प्रदीपप्रभायाम् आत्मविषयकत्वाभावादित्यर्थ:।

एवं पक्षं दूषयित्वा साध्यं दूषयति ॥साध्येपीति॥ प्रागभावव्यावृत्त्यर्थं स्वप्रागभावव्यतिरिक्तेति विशेषणमिति चेत्तत्राह ॥यत इति॥ प्रागभावस्याभिन्नत्वान्न ज्ञाननिवर्त्यत्वमिति भाव: ॥अभावेति॥ प्रमाणज्ञानं स्वप्रागभावनिवृत्तिरेव न तु तन्निवर्त्तकमिति न प्रमाणज्ञानप्रागभावस्तन्निवर्त्य इत्यर्थ:। नचाभावाभावो भावव्याप्य इति मतानुसारेण प्रतियोग्यतिरिक्तां प्रागभावनिवृत्तिमङ्गीकृत्यैतदुक्तमिति वाच्यम्। तन्मतस्याप्रामाणिकत्वादित्याशयात् ॥शेषेति॥ प्रागित्यस्य वैयर्थ्यादित्यर्थ:। न च प्रागभावस्यापि ध्वंसाद्यभावव्यतिरिक्तत्वेन पुनस्तमादायार्थांतरतेति वाच्यम्। सामान्येन प्रयुक्तपदस्य विशेषार्थपर्यवसानेन दूषणेऽतिप्रसङ्ग इति भाव:। न चाखण्डाभावे न वैयर्थ्यमिति वाच्यम्। तत्वनिर्णयकथायां लघुना निर्देशेन साध्यसिद्धौ संभवंत्यामखण्डाभावान्तर्भावेन साध्यस्यानिर्दिष्टव्यत्वादित्याशयात् ॥द्वितीयं चेति॥ स्वविषयावरणपदमित्यर्थ:। अज्ञानस्य नावरणत्वं तथा हि आवरणं ह्याव्रियमाणेन व्याप्तं तच्चाव्रियमाणं जडं चैतन्यगतविशेषो वा शुद्धचैतन्यं वा नाद्य इत्याह ॥जड इति॥ विषय इत्यर्थ:। आवरणरूपतत्कृत्याभावादिति भाव:। न द्वितीय इत्याह ॥।निर्विशेषेति॥ न तृतीय इत्याह ॥चितश्चेति॥ ॥आवरणत्वेति॥ तथा च तद्विशेषणविशिष्टं साध्यं पक्षे बाधितमिति भाव:। ननु स्वोत्पादकादृष्टव्यावृत्त्यर्थं तद्विशेषणमिति चेत्तत्राह ॥स्वेति॥ ॥शेषेति॥ स्वविषयेति पदेत्यर्थ:। स्वोत्पादकादृष्टव्यावृत्ते: स्वनिवर्त्यपदेनैव सिद्धे: स्वविषयावरणपदं व्यर्थमेवेत्याह ॥स्वोत्पादकेति॥ स्वोत्पादकादृष्टस्याज्ञानभिन्नत्वान्न ज्ञानेन साक्षात्तन्निवर्त्यत्वमित्यर्थ:। वृत्तिश्चिदुपरागार्थेतिमते चितोऽज्ञाननिवर्त्तकत्वेन पक्षीभूताया वृत्तेरावरणनिवर्तकत्वाभावाद्बाध इत्यर्थ:। मतान्तरेपि बाधमुपपादयति ॥घटाकारेति॥ घटाकारतया तत्प्रतिबिंबितचैतन्येन वा घटप्रकाशकस्य घटाधिष्ठानचैतन्यस्यावरणाभिभवरूपाभिव्यक्तेर्जातत्वेन पक्षीभूतस्य घटज्ञानरूपस्य घटाधिष्ठानचैतन्य-स्यावरणनिवर्त्तकत्वं नास्तीत्यर्थ:। ननु वृत्तिप्रतिबिंबितचैतन्यं वा घटप्रकाशकं ज्ञानं पक्षत्वेनाभिसंहितं तच्च घटादिष्ठानचैतन्यस्यावरणं निवर्त्तयतीति न बाध इत्यत आह ॥घटाकारेति॥ मतस्यायोगादित्यन्वय:। तत्र हेतुराध्यासिकेति। त्वन्मते ज्ञाने ज्ञेयस्याध्यस्तत्वेन वृत्तेस्तत्प्रतिबिंबितचैतन्यस्य वा ज्ञानत्वे तत्र घटाध्यासो वाच्य: स न युक्त: त्वन्मते ज्ञानत्वेनाभिमतयोर्मिथ्यात्वेन घटाद्यधिकसत्ताकत्वाभावात्। अतस्तयोर्ज्ञानत्वाभावेन वृत्त्याद्यभिव्यक्तस्य घटादिष्ठानचैतन्यस्यैव ज्ञानत्वे वाच्ये तस्य चावरणभूताज्ञानानि वर्त्तकत्वेन बाध एवेत्यर्थ:। स्वप्रतिबंधकादृष्टं व्यावर्त्तयितुं तद्विशेषणमिति चेत्तत्राह ॥चरमेति॥ ॥तदनिवर्त्यत्व इति॥ पक्षीभूतचरमसाक्षात्काररूपप्रमाणज्ञानानिवर्त्यत्वे ज्ञाननिवर्त्यत्वाभावेन मिथ्यात्वासिद्ध्या तन्निवर्त्यत्वे वाच्ये स्वनिवर्त्यपदेन तद्व्यावृत्त्यसिद्धेश्चेत्यर्थ:। न च चरमसाक्षात्कारप्रतिबंधकादृष्टे सति तदनिवृत्तिरिति प्रथमतन्निवृत्ति: कारणात्मनाऽवस्थितस्य प्रतिबंधकादृष्टस्य ज्ञाननिवर्त्यत्वाच्च मिथ्यात्वमपीति वाच्यम्। तावता ज्ञाननिवर्त्यत्वापरिहारात् ॥चतुर्थं चेति॥ स्वदेशगतविशेषणमित्यर्थ:। प्रमाणज्ञानाज्ञानयो: समानदेशत्वमेव नास्तीत्याह ॥अज्ञानस्येति॥ ॥चिन्मात्रेति॥ मुखमात्रस्थानीयं यज्जीवब्रह्मानुस्यूतं चिन्मात्रं तदाश्रितत्वात्

(प्रकाशः)

''आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवले''ति वचनादित्यर्थः ॥ वृत्तेरित्यादि॥ वृत्त्यादिरूपस्य ज्ञानस्याज्ञानाश्रयचिन्मात्रानाश्रितत्वादित्यर्थः। यत्राज्ञानं वर्तते न तत्र प्रमाणज्ञानमिति भावः। किंच यद्विषयनिवृत्यादतो न तयोःसमानदेशत्वमित्याह ॥त्वन्मत इति॥ ननु विषयगताज्ञातत्वं व्युदसितुमेतद्विशेषणं सार्थकमिति चेत्तत्राह ॥अज्ञातत्वस्येति॥ विषयेऽज्ञातत्वं किं ज्ञानप्रागभावरूपत्वं ज्ञानात्यंताभावरूपत्वं वा। नाद्यः। आद्यविशेषणेनैव तद्व्यावृत्तिसिद्धेः प्रागभावस्य प्रतियोगिसमानदेशत्वेन स्वदेशगतपदेनापि व्यावृत्त्यसिद्धेश्च। नापि द्वितीयः। स्वप्रागभावव्यतिरिक्तेत्यत्र प्राक्पदवैयर्थ्यस्योक्तत्वादभावव्यतिरिक्तपदेनैव तद्व्यावृत्तिसिद्धेरित्यर्थः। आद्येत्येतदुपलक्षणपरं स्वनिवर्त्यपदेनात्यंताभावव्यावृत्तिर्द्रष्टव्येत्याहुः। अन्त्ये त्वाह ॥अविद्येति॥ अविद्यास्वरूपस्यैवासिद्धौ तद्विषयत्वमादायार्थांतरताप्रदानायोगेनैतदनुमानात्प्रागेवाविद्यायाः सिद्धत्वेनानुमानस्याधिगतार्थबोधकत्वेनाप्रामाण्यापत्त्या तत्र किमर्थांतरतापरिहाराय विशेषणदानक्लेशेनेत्यर्थः ॥अन्यदिति॥ स्वप्रागभावव्यतिरिक्तेत्यादिविशेषणमित्यर्थः। ननु प्रागभावादिव्यावृत्त्यर्थं तद्विशेषणमिति चेन्न। स्वविषयावरणपूर्वकमित्यनेन तद्व्यावृत्तिसिद्धेः। तत्कथमित्यत आह ॥न हीति॥ प्रमाप्रागभाव इति स्वप्रागभावव्यतिरिक्तपदव्यावर्त्य इत्यर्थः। प्रमेत्यादिस्वनिवर्त्यपदव्यावर्त्य इत्यर्थः ॥अन्यत्किञ्चिदिति॥ स्वदेशगतपदव्यावर्त्यमित्यर्थः। अज्ञानस्यैवावरणत्वेनाज्ञातत्वस्यावरणत्वाभावादिति भावः। ननु प्रमाप्रागभावादीनामावरणत्वेन तदादायार्थांतरतायाः स्वविषयावरणपूर्वकमित्यनेनावारणात्तदर्थं तद्विशेषणजातं सार्थकमेवेत्यत आह ॥तथात्व इति॥ ॥तेनैवेति॥ आवरणत्वेन त्वदभिमतप्रमाप्रागभावादिनेत्यर्थः ॥अप्रयोजकत्वेति॥ अप्रकाशितार्थप्रकाशकत्वस्य हेतोः प्रागभावादिव्यतिरिक्ताज्ञानाख्यावरणपूर्वकत्वरूपसाध्यं विनापि सत्वमस्त्वित्यप्रयोजकता। न चैतादृशाज्ञानाख्यावरणपूर्वकत्वरूपसाध्याभावेपि हेतूच्छित्तिरेव बाधिकेति वाच्यम्। अज्ञानव्यतिरिक्तं त्वदभिमतं यत्प्रागभावादिरूपमावरणं तेनैव हेतोरुपपत्तेस्तदुच्छित्त्यभावादित्यर्थः। स्वनिवर्त्यविशेषणस्य सार्थक्यमाशङ्क्य निराकरोति ॥न चेति॥ अन्धकारस्य प्रमाणविषयघटाद्यावरणत्वेपि प्रमाणज्ञाननिवर्त्यत्वाभावात्तदादायार्थांतरतेति भावः ॥तस्येति॥ अन्धकारस्येत्यर्थः ॥प्रमामात्रेति॥ अन्धकारे सति तत्रत्यशुक्तिप्रमा वा तत्र रजतभ्रमो वा न भवत्येवेति तस्य प्रमामात्रविषयावरणत्वाभावात्। अत्र च स्वविषयावरणेत्यनेन प्रमामात्रविषयावरणत्वाभिधानान्न तदादायार्थांतरतेत्यर्थः। इदं हि विवरणोक्तमनुमानम्। एतद्व्याख्यानावसरे त्वदीयेन प्रागभावादिव्यतिरिक्तवेदान्तजन्यचरमसाक्षात्काररूपप्रमामात्रविषयावरणानाद्यज्ञान सिद्धिरित्युक्तत्वादिति भावः। अविशेषितं विमतं गुणादिकम्। गुण्यादिनेति शेषः। विमतमभिन्नमित्यभेदमात्रे साध्ये तस्मिन्सत्यभवतस्तदप्रयोज्यत्वादिति न्यायेनाभेदे सत्यपि घटः कलश इति सामानाधिकरण्यादर्शनादप्रयोजकत्वनिरासाय भिन्नाभिन्नमिति विशिष्टधीस्तत्रोद्देश्या दृष्टा। न चैवं प्रकृते प्रागभावव्यतिरिक्तेत्यादिविशेषणं विहाय स्वविषयावरणपूर्वकमित्यविशेषसाध्यकरणेऽप्रयोजकताऽस्ति येनात्रापि विशिष्टधीरुद्देश्येति विशेषणसार्थक्यं स्यादित्यर्थः। अविशेषितसाध्यं प्रति हेतोरप्रयोजकत्वाभावेपि विमतम् उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यमित्यादाविव विशिष्टधिय उद्देश्यत्वान्न व्यापकगतविशेषणानां वैयर्थ्यमित्यङ्गीकारे कुत्रापि व्यापकगतविशेषणवैयर्थ्यं नोद्भाव्येत तथा च पर्वत उष्णस्पर्शापाकजशुक्लभास्वररूपवद्वह्निमान् धूमवत्त्वादित्याद्यपि स्यादित्यतिप्रसङ्ग इत्यर्थः। यथा उद्देश्यप्रतीत्यर्थत्वेन

(प्रकाशः)

व्यापकगतविशेषणानामवैयर्थ्यम् एवं हेतुविशेषणेपि वक्तुं शक्यत्वाद्व्यर्थविशेषणत्वस्यादूषणत्वमेव स्यादित्याह ॥नीलधूमेति॥ एवं साध्यं दूषयित्वा हेतुं दूषयति ॥हेताविति॥ मात्रमित्यस्यैव विवरणं साक्षादिति। तन्मते द्वितीयादिज्ञाने साक्षात् आद्येऽज्ञाननिवृत्तिद्वारा परंपरयेत्यर्थः ॥दृष्टांत इति॥ प्रभायां ज्ञानत्वाभावेन साधनवैकल्यादिति भावः ॥असिद्धेरिति॥ प्रमाणजन्ये प्रमाणरूपे ज्ञाने ज्ञानहेतुत्वाभावरूपा स्वरूपासिद्धिरित्यर्थः ॥इन्द्रियादाविति॥ ज्ञानहेतुत्वे सत्यपि स्वनिवर्त्यवस्त्वंतरपूर्वकत्वाभावात् न हि साक्षादिन्द्रियनिवर्त्यं प्रागभावादिव्यतिरिक्तं वस्त्वंतरमस्ति। अज्ञानस्येन्द्रियनिवर्त्यत्वेपि ज्ञानद्वारैव निवर्त्यत्वं न साक्षात्। साक्षात् स्वनिवर्त्यत्वस्यैवात्र विवक्षितत्वादिति भावः ॥अत एवेति॥ इन्द्रियादेः साक्षाद्वस्तुव्यवहाराहेतुत्वे ज्ञानद्वारा घटादिव्यवहारहेतुत्वे च सत्यपि उक्तसाध्याभावेन इन्द्रियादौ व्यभिचारादेवेत्यर्थः ॥अज्ञानेति॥ तमश्शब्देनाज्ञानविवक्षायां तन्निवर्त्तकत्वस्य दृष्टांते प्रभायामभावात्साधनवैकल्यं स्यात् अन्धकारविवक्षायां तन्निवर्त्तकत्वस्य पक्षेऽसिद्धिः स्यात् उभयानुगतस्यैकस्य तमस्त्वस्याभावादित्यर्थः। अज्ञाननिवर्त्तकत्वविवक्षायां दोषांतरमाह ॥साध्येति॥ अज्ञानस्येदानीमप्यसिद्धत्वेन तद्घटितहेतोरपि संदिग्धत्वादिति भावः। आवरणशब्देनान्धकारविवक्षायां स्वरूपासिद्धिः अज्ञानविवक्षायां साधनवैकल्यं साध्यावैशिष्ट्यं च। उभयानुगतं चैकमावरणत्वं नास्त्येवेत्यर्थः ॥कुद्दालादाविति॥ कुद्दालायाः शलाकादेरपि कुड्याद्यावरणनिवर्त्तकत्वेन अज्ञानपूर्वकत्वाभावाद्व्यभिचार इत्यर्थः ॥साध्येति॥ साध्यवत्तद्घटितहेतोरपि संमुग्धत्वादित्यर्थः ॥न सप्तम इति॥ ज्ञानप्रभयोर्नानुगतमेकप्रकारत्वमस्तीत्यर्थः। प्रकाशशब्दप्रयोगस्तावदस्तीति चेत्तत्राह ॥शब्देति॥ आलोकसंवेदनयोः प्रकाशत्वे वैलक्षण्यमस्तीत्यत्र विवरणसंमतिमाह ॥उक्तं चेति॥ अज्ञानविरोधिनः अज्ञानविरोधित्वात्। ज्ञानप्रकाशकत्वात् ज्ञाननिष्ठप्रकाशकत्वात् अन्यदेव तमोविरोधित्वरूपम् आलोकनिष्ठं प्रकाशकत्वं नामेत्यर्थः। अन्त्यपक्षदूषणं कारिकया सङ्गृह्णाति ॥एवं चेति॥ असिद्धिमप्याह ॥किं चेति॥ ॥अध्यासेति॥ प्रकाशमानस्यैवाधिष्ठानत्वादिति भावः। ननु चिन्मात्रस्य सदा प्रकाशमानत्वेपि तद्गतविशेषस्य सदाप्रकाशमानत्वाभावान्न सिद्धिरित्यत उक्तं प्रमाणस्येति। वेदान्तजन्यचरमवृत्तिरूपस्येत्यर्थः ॥चिदन्येति॥ निष्प्रकारकत्वादिति भावः। प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तेत्यादिरूपायामस्यामेवानुमितौ व्यभिचारं बाधं च वक्तुमाह ॥किंचेति॥ अस्यामेवानुमितौ अप्रकाशितार्थप्रकाशकत्वं नास्त्युतास्तीति विकल्प्याद्ये दोषमाह ॥अप्रकाशितेति॥ विशेषणविशिष्टस्य हेतोरभावे प्रकाशितार्थप्रकाशकत्वमेव स्यात् तथा चानुमितिर्व्यर्था सिद्धसाधनतापत्तेः। विशेष्याभावाद्विशिष्टहेतोरभावे सर्वथा प्रकाशकत्वमेव न स्यात् तथा चाज्ञानसिद्धिरेव न स्यात्। अनुमितेः साध्याप्रकाशकत्वात्। अतोऽनुमितिर्व्यर्था स्यात् अनुमितेः साध्यज्ञप्त्यर्थत्वादिति भावः। द्वितीये दोषमाह ॥तत्प्रकाशकत्वे चेति॥ अनुमितेरप्रकाशितप्रकाशकत्वेचेत्यर्थः। अत्रापि प्रष्टव्यम् इयमनुमितिः पक्षीभूतप्रमाणशब्देन विवक्षिता न वेति। नेति पक्षे पक्षबहिर्भूतत्वादस्यामेवानुमितौ व्यभिचारः स्यात् आद्येऽस्यानुमितेः पक्षान्तर्भावाद्बाधः स्यादित्यर्थः। व्यभिचारं बाधं च साध्याभावोपपादनेनोपपादयति ॥अस्या इति॥ अस्या अनुमितेः स्वविषयभूतं यदज्ञानं तदावरणनिवर्तकत्वं नास्तीत्यर्थः। कुत इत्यत आह ॥न हीति॥ हेतुं दूषयित्वेदानीं दृष्टान्तं दूषयति ॥दृष्टान्तेपीति॥ न च द्वितीयादिप्रभायाम् उभयवैकल्यवारणाय तद्विशेषणमिति वाच्यम्। अन्धकार इत्युक्त्यैव तन्निरासात्। न हि द्वितीयादिप्रभा अन्धकारोत्पन्ना किंत्वाद्यैवेत्यर्थः

(प्रकाशः)

॥ दृष्टिसृष्टीति ॥ आवरणभूतान्धकारस्य दृष्टिसृष्टत्वेन दृष्टिनिवृत्तावेव निवृत्त्यङ्गीकारात्प्रभायां तन्निवर्त्तकत्वानङ्गीकारेण स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्साध्यवैकल्यम्। प्रभाया अपि दृष्टिसृष्टत्वेन दृष्टेरेवार्थप्रकाशकतया प्रभायां तदभावात्साधनवैकल्यं चेत्यर्थः। प्रतिपक्षं चाह ॥ अनादित्वे सतीति॥ प्रमाणज्ञानमित्याद्यनुमानेन ज्ञाननिवर्त्यमज्ञानं साधितं तद्विरोधप्रमाणमेतैरनुमानैः साध्यते अनादिभावत्वे सति ज्ञाननिवर्त्यत्वं लक्षणं तत्रानादिभावस्याज्ञानस्य ज्ञाननिवर्त्यत्वं नास्तीति यदा साध्यते तदेदं स्वनिवर्त्यत्वघटितसाध्यविरोधिभूतं सत् प्रतिपक्षरूपमिति द्रष्टव्यम्। अज्ञानलक्षणान्तर्गतं भावत्वम् अभावनिवृत्तिरेव अज्ञानस्य भावाभावविलक्षणत्वादित्याशयेनाभावविलक्षणत्वं वेति पक्षनिर्देशः कृत इति ध्येयम्। तथा चानादित्वे सति भावत्वम् अभावनिवृत्तिरेव अज्ञानस्य भावाभावविलक्षणत्वादित्याशयेनाभावविलक्षणत्वं वेति पक्षनिर्देशः कृत इति ध्येयम्। तथा चानादित्वे सति भावत्वं न निवर्त्यनिष्ठम् अनादिभावमात्रवृत्तित्वात् आत्मत्ववत् अनादित्वे सत्यभावविलक्षणमात्रवृत्तित्वादात्मत्ववदित्यनुमानद्वयं द्रष्टव्यम्। अनुमानद्वयेपि भावत्वस्य वाऽभावविलक्षणत्वस्य वा ज्ञाननिवर्त्यघटादिनिष्ठत्वेन बाधवारणायानादित्वे सतीत्युक्तम्। अनादित्वमात्रस्य निवर्त्यप्रागभावनिष्ठतया बाधवारणाय भावत्वपदम्। आद्ये हेतौ प्रागभावत्वे व्यभिचारवारणाय भावपदम्। घटत्वे व्यभिचारवारणायानादिपदम्। प्रमेयत्वे व्यभिचारवारणाय मात्रपदम्। द्वितीयहेतावपि वृत्तित्वमात्रं प्रागभावत्वे व्यभिचारीति अतो भावपदम्। प्रमेयत्वे व्यभिचारवारणाय मात्रपदम्। निवर्त्यत्वस्य घटादिनिष्ठतया बाधवारणायानादिपदम्। निवर्त्यत्वस्य प्रागभावनिष्ठतया बाधवारणाय भावपदमिति मन्तव्यम्। घटत्वे व्यभिचारवारणायानादिपदं ॥ निवर्त्येति ॥ वृत्तित्वमात्रम् आत्मत्वे व्यभिचारीति निवर्त्यपदम्। प्रमेयत्ववारणाय मात्रपदम्। स्वविषयावरणत्वघटितसाध्यविरोधिप्रतिपक्षमाह ॥ अनादित्वमिति ॥ अनाद्यावरणं नास्तीत्यनेनानुमानेन सिद्धमिति द्रष्टव्यम्। वृत्तित्वमात्रस्यान्धकारे व्यभिचारित्वादनादिपदम्। प्रमेयत्ववारणाय मात्रपदम्। प्रतिपक्षत्वे विरोधिप्रमेयसाधकत्वमेव तन्त्रं न समानधर्मिकत्वं न वा साध्याभावसाधकत्वं तथात्वे केवलान्वयिन्यसत्प्रतिपक्षत्वाख्यरूपोपपादनं न स्यात् तत्र सत्प्रतिपक्षप्रसक्तेरेवाभावात् शब्दोऽभिधेयो नेति साधयितुमशक्यत्वात् अतः समानधर्मिकत्वादेरतन्त्रत्वमुक्त्वाऽभिधेयत्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगीत्यादिरूपेण सत्प्रतिपक्षप्रसक्तिर्मणिकृतोपपादिता तद्वदिहापीति द्रष्टव्यम्। समानधर्मिकत्वादेरावश्यकत्वे तादृशमपि सत्प्रतिपक्षमाह ॥ प्रमाणज्ञानं वेति ॥ प्रागभावरूपानादिनिवर्त्तकत्वेन बाधवारणायाभावान्येत्युक्तम्। प्रागभावव्यतिरिक्तानादिनिवर्त्तकत्वस्य परेण साधितत्वात्तस्यायं प्रतिपक्ष इति ज्ञातव्यम्। भ्रमस्य स्वप्रागभावव्यतिरिक्तानाद्यनिवर्त्तकत्वात् दृष्टांतत्वमिति ध्येयम्। अप्रयोजकतां चाह ॥ पूर्वमिति ॥ अप्रकाशितार्थस्य प्रकाशः पूर्वं प्रकाशाभावस्य सत्वादेवास्तु न तद्विषयकाप्रकाशशब्दवाच्यभावरूपाज्ञानसद्भावात्। तथाहि यथा अकृतस्य घटादेः कृतिः पूर्वं तद्विषयककृत्यभावादेव नतु घटादिविषयकभावरूपाकृतिसद्भावात्। यथा चास्मृतस्य घटादेः स्मृतिः पूर्वं तद्विषयकस्मृत्यभावादेव नतु घटादिविषयकभावरूपास्मृतिसद्भावात्तथेहापि। अन्यथाऽज्ञानवद्भावरूपाकृत्यस्मृती अप्यङ्गीकार्ये प्रसज्येते इत्यर्थः। किंच स्वविरोधिनिवर्त्तकत्वं चोपाधिरित्याह ॥ किंचेति ॥ ॥ आलोकप्रकाश इति ॥ दृष्टांतीभूतालोकरूपप्रकाश इत्यर्थः। तन्निवर्त्तकः स्वविरोधितमोनिवर्त्तकः। ज्ञानप्रकाशः ज्ञानरूपप्रकाशः ॥ नाज्ञानेति ॥ तथाचोक्तसाध्यवत्यालोके स्वविरोधितमोनिवर्त्तकत्वसद्भावेन

(प्रकाशः)

साध्यव्यापकत्वात् पक्षीभूते प्रमाणज्ञाने उक्तहेतुमति स्वविरोधिनिवर्त्तकत्वरूपोपाध्यभावेन साधनाव्यापकत्वाच्चायमुपाधिरिति भावः। ननु साधनव्यापकोयमुपाधिः ज्ञानस्याज्ञानविरोधित्वेन स्वविरोध्यज्ञाननिवर्त्तकत्वादिति चेत् अत्र प्रष्टव्यम् अज्ञानविरोधिज्ञानं किं घटाधिष्ठानचैतन्यं वृत्तिर्वा तत्प्रबिम्बितचैतन्यं वा नाद्य इत्याह ॥घटादीति॥ अविरोधित्वेन तत्राज्ञानस्य निवृत्तत्वात्सर्वदा सर्वेषां घटप्रकाशापात इत्यर्थः। न द्वितीयतृतीयावित्याह ॥वृत्तेरिति॥ उभयोरपि मिथ्यात्वेन अध्यस्ताधिकतत्वावेदकत्वाभावेनाज्ञानत्वादिति भावः ॥तज्ज्ञानत्वेति॥ घटादिज्ञानत्वाभावादित्यर्थः। अनधिष्ठानत्वेपि तज्ज्ञानत्वमस्त्वित्यत आह ॥त्वन्मत इति॥ ज्ञेयस्याधिष्ठानभूते ज्ञान एवाध्यासाङ्गीकारादिति भावः। एवमाद्यानुमानं सविस्तरं निरस्य चैत्रप्रमापक्षकानुमानमपि निरस्यति ॥द्वितीयेति॥ ॥बाध इति॥ सुखादिप्रमाणामपि चैत्रप्रमात्वेन पक्षत्वात्तासु चैत्रप्रमाप्रागभावव्यतिरिक्तानादिनिवर्त्तकत्वाभावाद्बाध इत्यर्थः। सुखादिविषये भावरूपाज्ञानाभावादिति भावः ॥तदिति॥ चैत्रेत्यर्थः ॥तदतिरिक्तेति॥ चैत्रप्रमातत्प्रागभावातिरिक्तस्यानादेर्वा विशेषणमित्यर्थः ॥वृत्तेरित्यादि॥ मतभेदेनेति ज्ञेयम्। प्रमायाः वृत्त्यादिरूपायाः प्रमायाः ॥आत्मेति॥ वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य चान्तःकरणनिष्ठत्वेनाधिष्ठानचैतन्यस्य च सर्वथाऽवृत्तित्वेनात्मगतत्वाभावादित्यर्थः। तथाच बाध इति भावः। प्रागभावविशेषणत्वे दोषमाह ॥प्रागभावस्येति॥ प्रागभावस्य प्रतियोगिसमानदेशत्वेन वृत्त्यादिरूपप्रमाया आत्मगतत्वाभावेन प्रागभावस्यापि तद्गतत्वाभावाद्बाध एवेत्यर्थः। तदेवोपपादयति ॥मैत्रेति॥ मैत्रप्रमायाश्चैत्रगतः प्रमाप्रागभावातिरिक्तो योनादिश्चैत्रीयाज्ञानाख्यस्तन्निवर्त्तकत्वाभावात्साध्यवैकल्यमित्यर्थः ॥प्रमापदेति॥ चैत्रप्रमाप्रागभावातिरिक्तेति साध्यकरणे समभिव्याहारादेव प्रमाप्रागभावातिरिक्तेति प्राप्तेः प्रमापदमधिकमित्यर्थः। प्रतिरोधो द्विविधः तेनैव हेतुना हेत्वंतरेण चेति। तत्राद्यः प्रकरणसम इत्युच्यते द्वितीयः सत्प्रतिपक्ष इत्युच्यत इति टीकाकारैर्मिथ्यात्वानुमानखंडनटीकायाम् उक्तत्वात्तेनैव हेतुना प्रतिरोधरूपप्रकरणसममाह ॥चैत्रप्रमेति॥ दृष्टान्ते चैत्रीयाज्ञानाख्यानादिनिवर्त्तकत्वाभावेन साध्यं द्रष्टव्यम्। ननु प्रकरणसमानुमानेपि चैत्रासमवेतत्वमुपाधिः। तथा चैत्रप्रमाचैत्रीयप्रमाप्रागभावनिवर्त्तिका न प्रमात्वान्मैत्रप्रमावदित्यनुमानेन चैत्रप्रमाप्रागभावस्यापि निवर्त्यत्वं न स्यादित्याभाससाम्यमित्याशङ्क्य निराकरोति ॥नचेति॥ ॥उक्तेति॥ हेतुभूतं प्रमात्वमङ्गीकृत्य प्रागभावातिरिक्तानाद्यनिवर्त्तकत्वं न स्यादित्यभावानाद्यज्ञानोभय निवर्त्तकत्वरूपं साध्याभाव-मङ्गीकृत्याप्रयोजकताशङ्कायां गौरवापत्तेर्लाघवात्प्रागभावनिवर्त्तकत्वमङ्गीकृत्यानादिनिवर्त्तकत्वाभाव एव साध्य इति लाघवतर्कानुग्रहसद्भावादुपाध्याभाससाम्ययोराभासत्वमेव

''अनुकूलेन तर्केण सनाथे सति साधने।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसंभवः''।

उपाधेरात्मत्वे साध्याव्यापकत्वं च द्रष्टव्यम्। लाघवतर्केणाभावनिवर्त्तकत्वस्य सिद्धत्वात्तद्विरोधेन आभाससाम्यानुमानमाभास एवेति भावः। एवं प्रकरणसमानुमानं समर्थ्योपाधिमप्याह ॥चैत्रगतेति॥ दृष्टांतीकृतायां मैत्रप्रमायां चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्त्तकत्वमस्ति तथा चैत्रगतप्रमाप्रागभावातिरिक्तो योऽभावः

(प्रकाश:)

स्वप्रमाप्रागभावः तन्निवर्त्तकत्वं चास्तीति साध्यव्यापकः। साध्योपाध्योरनाद्यज्ञानाभावघटितत्वेन भेदः। साध्यसमव्याप्तश्च हेतुमत्यां चैत्रप्रमायां चैत्रगतप्रमाप्रागभावातिरिक्ताभावनिवर्त्तकत्वं नास्ति प्रागभावव्यतिरिक्ताभावस्य प्रध्वंसादेरनिवर्त्यत्वात् साधनाव्यापकश्चेति भावः। ननु जन्यपदार्थमात्रे चैत्रगतप्रमाप्रागभावातिरिक्तस्वप्रागभावनिवर्त्तकत्वस्य सत्वेनोपाधिसाध्ययोः सत्वाद्व्यतिरेकसहचारग्रहस्थलाभावेन साध्याभावाविनाभाव्यभावत्वाभावान्नायमुपाधिरित्यत आह ॥व्यतिरेकेति॥ प्रागभावस्यानादित्वेन तत्प्रतियोगिकप्रागभावाभावेन चैत्रप्रमाभावातिरिक्तप्रागभावनिवर्त्तकत्वाभावोस्ति। तत एव चैत्रगतप्रमाप्राग-भावातिरिक्तानादिनिवर्त्तकत्वाभावोप्यस्तीत्यर्थः। आभाससाम्यं चाह ॥चैत्रप्रमेति॥ स्वशब्देन चैत्र प्रमा गाह्या दृष्टान्ते मैत्रप्रमायां चैत्रप्रमाप्रागभावातिरिक्तस्वप्रागभावनिवर्त्तकत्वेन साध्यं द्रष्टव्यम्। तथाचानेनानुमानेन चैत्रप्रमानिवर्त्याभावद्वयसिद्ध्यापत्तिरिति भावः ॥घटइत्यादि॥ अत्रापि स्वशब्देन पक्षीभूतो घटो ग्राह्यः घटः स्वप्रागभावातिरिक्तानादेर्निवर्त्तकः घटत्वाद्घटान्तरवदित्यनुमानेन स्वप्रागभावातिरिक्तं घटनिवर्त्यं किञ्चिदनादि सिद्ध्येत् पक्षीभूतो यो घटस्तत्प्रागभावातिरिक्तस्वप्रागभावरूपानादिनिवर्त्तकत्वेन दृष्टान्ते न साध्यवैकल्यमिति द्रष्टव्यम्। तथा चैत्रेच्छास्वप्रागभावातिरिक्तानादिनिवर्त्तिका इच्छात्वान्मैत्रेच्छावदित्यनुमानेन स्वप्रागभावाति-रिक्तानादिभूतं किंचिदिच्छानिवर्त्यमपि सिध्येत्। द्वेषस्तु नानादिः। दृष्टान्ते पक्षीभूतेन प्रागभावातिरिक्तस्वप्रागभावस्यानादिभूतस्य भावादिति भावः। उपादाननिवर्त्तकत्वेन साध्यं द्रष्टव्यम्। तथा चैत्राप्रमास्वप्रागभावातिरिक्तानादेर्निवर्त्तिका अप्रमात्वान्मैत्राप्रमावदित्यनेन स्वप्रागभावातिरिक्तं किंचिदनादिभूतम् अप्रमानिवर्त्यमपि सिध्येत्। दृष्टान्ते पक्षिभूताप्रमाप्रागभावातिरिक्तस्वप्रागभावरूपानादिनिवर्त्तकत्वात्साध्यं द्रष्टव्यमिति विवेकः। स्वव्याघातं चाह ॥किंचैवमिति॥ एवं विशिष्टव्यतिरेकिणः चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्त्तकत्वरूपसाध्यस्याभावसाधनेपि सुवचत्वादित्यन्वयः ॥चैत्रप्रमेत्यादि॥ अयमर्थः चैत्रनिष्ठत्वे सति चैत्रप्रमाभावव्यतिरिक्तानादिनिवर्त्तकत्वादिकरणत्वं विशिष्टम्। एतदभावो दृष्टान्ते मैत्रप्रमायां चैत्रप्रागभावातिरिक्तो योऽनादिः स्वप्रागभावस्तन्निवर्त्तकत्वाधिकरणत्वरूपे विशेष्ये सत्यपि चैत्रनिष्ठत्वरूपविशेषणाभावोस्ति। पक्षीभूतायां चैत्रप्रमायां चैत्रनिष्ठत्वरूपे विशेषणे सत्यपि चैत्रप्रमाप्रागभावातिरिक्तो योऽनादिर्मैत्रप्रमाप्रागभावस्तन्निवर्त्तकत्वाधिकरणत्वरूपविशेष्याभावोस्तीति विशिष्टाभावोनुगत इति ध्येयम्। नन्वत्र चैत्रावृत्तित्वमुपाधिरित्यत आह ॥नचात्रेति॥ अथमुपाधिः शङ्क्यमानचैत्रावृत्तित्वरूपउपाधिः। धर्मत्वादित्यनन्तरं निषिद्धत्वोपाधिवदिति दृष्टान्तो द्रष्टव्यः। एतदुपाधित्वे सति साध्यव्यापकत्वाधिकरणत्वस्य विशिष्टस्याभावो दृष्टान्ते विशेषणाभावेन पक्षे विशेष्याभावेन द्रष्टव्यः ॥अत एवेति॥ विशिष्टव्यतिरेकिणोऽतिप्रसंजकत्वादेवेत्यर्थः। विगीतो विभ्रमः एतज्जनकबाध्यातिरिक्तोपादानकः इत्याद्याभाससाम्यादेवेत्यर्थ इत्यन्ये ॥तृतीयेति॥ विगीतो विभ्रम एतज्जनकाबाध्यातिरिक्तोपादानकः विभ्रमत्वात्संमतवदित्यनुमानमित्यर्थः। पक्षत्वे पक्षबोधकविभ्रमशब्देनाभिप्रेतत्वे ॥द्वितीयलक्षणभङ्गेति॥ अर्थस्य मन्मतेऽसत्वेन त्वन्मते च सद्विलक्षणत्वेन निरुपादानत्वात् भ्रान्तिरूपज्ञानस्य तु त्वन्मते सद्विलक्षणत्वेन निरुपादानत्वात् मन्मते तु सत्वेनान्तःकरणोपादानकत्वान्नाज्ञानमुपादानमित्युक्तरीत्येत्यर्थः। तेनैव हेतुना प्रतिरोधमाह ॥विगीत इति॥ एतज्जनकाबाध्यातिरिक्तोपादानक इत्यस्य एतज्जनकबाध्योपादानक इति पर्यवसितार्थः। तत्र प्रतिरोध उच्यते

(प्रकाशः)

॥ एतज्जनकेति ॥ एतज्जनकबाध्यातिरिक्तोपादानक इति पाठः। दृष्टान्तीकृतभ्रमोपादानशुक्त्यज्ञाने ज्ञाननिवर्त्यत्वाख्यबाध्यत्वरूपविशेष्यसत्वेपि एतज्जनकत्वरूपविशेषणाभावेन पक्षीभूतजगद्भ्रमजनके चाज्ञाने एतज्जनकत्वरूपविशेषण सत्वेपि बाध्यत्वरूपविशेष्यस्यास्मद्रीत्याऽभावाद्विशिष्टाभावोनुगत इति द्रष्टव्यम्। एतज्जनकबाध्योपादानको नेत्यपि क्वचित्कः पाठः। अत्रापि विशिष्टाभावो द्रष्टव्यः। अप्रयोजकत्वादिदूषणजातेनभावरूपाज्ञानसाधकानि नवीनानुमानान्यपि निरस्तानि भवन्तीत्याह ॥ एतेनेति ॥ प्रमामात्रपक्षीकारे ईश्वरप्रमाया अपि पक्षकोटिनिवेशे तत्र कार्यत्वहेतोः स्वरूपासिद्ध्यापत्तेरनित्यप्रमेत्युक्तम्। वेदान्तजन्या चरमप्रमेत्यर्थः। दृष्टान्ते स्वप्रागभावरूपानादित्वमादाय साध्यं द्रष्टव्यम् ॥ भ्रमोत्तरेति ॥ अयं घट इत्यादिप्रमेत्यर्थः। पक्षीभूतप्रमाप्रागभावातिरिक्तः यः स्वविरोधिभ्रमस्तन्निवर्त्तकत्वं दृष्टान्तेऽस्ति पक्षे तु स्वाभावातिरिक्तस्वविरोध्यज्ञाननिवर्त्तकत्वेन साध्यपर्यवसानं द्रष्टव्यम्। प्रमामात्रपक्षीकारे भ्रमोत्तरचरमप्रमाया अपि प्राप्त्या तस्याश्च स्वविरोधिभ्रमनिवर्त्तकत्वेनार्थांतरतावारणाय भ्रमानुत्तरप्रमेत्युक्तम्। प्रमामात्रस्य दृष्टान्तत्वे तत्र प्रागभावातिरिक्तस्वविरोधिनिवर्त्तकत्वस्य प्रतिवादिनो संमतेः साध्यवैकल्यं स्यादित्यतो भ्रमोत्तरेत्युक्तं तथाच स्वविरोधिभ्रममादाय दृष्टान्तत्वे तत्र प्रागभावातिरिक्तस्वविरोधिनिवर्त्तकत्वस्य प्रतिवादिनो संमतेः साध्यवैकल्यं स्यादित्यतो भ्रमोत्तरेत्युक्तं तथाच स्वविरोधिभ्रममादाय दृष्टान्ते उक्तसाध्यमस्तीति ध्येयम् ॥ स्वेति ॥ स्वशब्देन पक्षीभूतज्ञानाधिकरणं ज्ञानं तस्य यो विषयो ब्रह्म तदावरणं यत्तन्निवर्त्तकं यज्ज्ञानं तन्निष्ठमित्यर्थः। अनेन ज्ञाननिवर्त्यावरणसिद्धिः। तच्चाज्ञानमेवेति भावः ॥ आलोकत्ववदिति ॥ आलोकत्वस्यालोकविषया-त्ररणान्धकारनिवर्त्तकालोकनिष्ठत्वादिति ध्येयम् ॥ अनित्यज्ञानमिति ॥ अनेन भावरूपज्ञानविरोधि-स्वदेशगताज्ञानसिद्धिरिति ज्ञेयम्। ज्ञानमात्रस्य पक्षत्वे नित्येश्वरज्ञाने स्वविरोध्यज्ञानसामानाधिकरण्याभावेन बाधः स्यादतोऽनित्यज्ञानमित्युक्तम्। इच्छामात्रस्य दृष्टान्तत्वे ईश्वरेच्छाया अपि प्राप्त्या तत्र स्वविरोधिद्वेषसामानाधिकरण्याभावेन साध्यवैकल्यापत्तेरनित्येच्छावदित्युक्तम्। स्वविरोधिप्रागभावसमानाधि-करणत्वेनार्थांतरतावारणायाभावत्वानधिकरणेत्युक्तम्। स्वविषयकत्वादित्येवोक्तौ ईश्वरीयज्ञानेच्छयोर्व्यभिचारः स्यादतोऽनित्यत्वे सतीत्युक्तम्। तावत्युक्ते ज्ञानेच्छाप्रयत्नानां सविषयकत्वात्तन्मध्ये ज्ञानस्य पक्षत्वादिच्छाया दृष्टान्तत्वादुर्वरिते प्रयत्ने व्यभिचारः स्यात्। ज्ञानविरोध्यज्ञानवदिच्छाविरोधिद्वेषवत्प्रयत्नविरोधिनोन्यस्याभावेन साध्याभावात्। अतः प्रयत्नान्यत्वे सतीत्युक्तम्। सविषयकत्वपदत्यागे घटादौ व्यभिचारः स्यादित्यादि ध्येयम्। दृष्टान्तेसाध्यमुपपादयति ॥ इच्छाहीति ॥ पक्षे साध्यपर्यवसानं दर्शयति ॥ ज्ञानेति ॥ एतेनेत्युक्तमेव विशदयति ॥ अप्रयोजकत्वादीति ॥ अनुकूलतर्काभावेन कार्यत्वहेतोरुक्तसाध्यं विनाप्युपपत्तेरप्रयोजकत्वस्य आदिपदेन चैत्रप्रमास्वप्रागभावातिरिक्ताभावनिवर्त्तिका प्रमात्वान्मैत्रप्रमावदित्याभाससाम्यस्य चानिस्तारादित्यर्थः।

॥ अविद्यानुमानभङ्गविवरणम् ॥

## २४. श्रुतेरनिर्वाच्याविद्यापरत्वभङ्गः

"अनृतेन हि प्रत्यूढा" इत्यत्रानृतशब्दो दुष्कर्मपरः। परिणामिप्रधानपरो वा। "ऋतं पिबन्ता" वित्यादौ सत्कर्मणि ऋतशब्ददर्शनात्। "ऋतं सत्यं तथा धर्म" इति स्मृतेश्च। "अनृतं परिणामत" इति स्मृतेश्च। अज्ञानाविद्यानीहारादिशब्दा अपि प्रकृतिपराः। न च सा मिथ्या। "तम आसीत्", "गौरनाद्यंतवती नित्या सततविक्रिये"त्यादि श्रुतिभिः सत्यत्वान्नित्यत्वाच्च। न चास्याः श्रुतेः अपूर्वपारमार्थिकसत्त्वपरत्वसम्भवे व्यावहारिकसत्त्वपरत्वं वा असद्वैलक्षण्यपरत्वं वा युक्तम्। मायाशब्दोऽपि क्वचित्प्रकृतिपरः। क्वचिच्च विचित्रेश्वरशक्त्यादिपरः, "त्रिगुणात्मके" त्यादिस्मृतेः। "विश्वमायानिवृत्ति"रित्यादौ निवृत्तिस्तरणमेव। "मायामेतां तरन्ति ते" इति स्मृतेः। न ह्यज्ञानं मायाशब्दार्थः। मायिनो ब्रह्मणोऽज्ञानित्वे सर्वज्ञत्वनिरवद्यत्वादिश्रुतिविरोधात्। मायाशब्दस्य 'मय ज्ञान' इति धातुजत्वाच्च। वेदनिघण्टौ 'माया वयुनं ज्ञानम्' इति पाठाच्च। मायाविशब्दस्य विचित्रशक्तियुक्त इवाज्ञानिन्यप्रयोगाच्च। "योगमायां समादिशद्" इति भागवते, "ऋते मायां विशालाक्षीम्" इति रामायणे च चेतने, 'जलं संस्तभ्य मायया' इति भारते जलस्तम्भनशक्तौ च प्रयोगाच्च। हरिवंशे–

मयश्च शम्बरश्चैव महामायाधरौ तथा ।
पार्जन्यवारुणी माये व्यधत्तां वारिविक्षरे ।। इति ।

पार्जन्यवरुणास्त्रयोर्मायाशब्दप्रयोगाच्च। तत्रैव 'मायामास्थाय युध्यस्वे'ति प्रकृतमायायाम्, 'आस्थाय तामसीं विद्याम्' इति विद्याशब्दप्रयोगाच्च। 'एकस्त्वमेव भगवानिदमात्मशक्त्या मायाख्यया" इति भागवते शक्तिर्मायेति व्याख्यातत्वाच्च। अत एव न मिथ्याभूतं मायाशब्दार्थः, शुक्तिरूप्यादौ तदप्रयोगात्। सत्यमन्त्रौषधादिमत्येव मायाविशब्दप्रयोगाच्च। मायामृगस्यापि मारीचस्य कामरूपित्वेन रामशरवेध्यत्वेन च सत्यत्वात्। देवासुरसङ्ग्रामादौ च मायाशस्त्रादेः छेदाद्यर्थक्रियाकारित्वेन सत्यत्वात्। मिथ्याभूते ऐन्द्रजालिकादौ मायाधीनप्रतीतिकत्वेन मायाशब्दस्यामुख्यत्वात्। न च मायायाः सत्यत्वे ज्ञाननिवर्त्यत्वोक्तिविरोधः। सत्यस्यैव तन्निवर्त्यत्वात्। अत एव

**नाविद्यात्वोक्तिविरोधः, विद्यानिवर्त्यत्वात्। 'दैवी ह्येषा गुणमयी मम माये'त्यादौ गुणमयत्वाद्युक्तिरपि सत्यत्वानुगुणैव। शुक्त्याद्यज्ञाने रूप्यादौ त्रिगुणत्वादर्शनात्। तस्मान्न श्रुतिः सत्यप्रकृतीश्वरशक्त्याद्यतिरिक्तपराभिप्रेतानिर्वाच्याविद्यापरा ।**

**श्रुतेरनिर्वाच्याविद्यापरत्वभङ्गः ।**

## अद्वैतसिद्धिः

एवं श्रुतयश्च। तत्र छान्दोग्ये अष्टमाध्याये– 'तद्यथापि हिरण्यं निधिनिहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन प्रत्यूढा' इति श्रुतिर्ब्रह्मज्ञानप्रतिबन्धकत्वेनानृतं ब्रुवाणा तादृगज्ञाने प्रमाणम्। न च ऋतशब्दस्य 'ऋतं पिबन्ता'वित्यत्र सत्कर्मणि प्रयोगदर्शनाद् 'ऋतं सत्यं तथा धर्म' इति स्मृतेश्च ऋतशब्दस्य सत्कर्मपरत्वादनृतशब्दस्य दुष्कर्मपरत्वमिति वाच्यम्। उत्तरत्र 'य आत्माऽपहतपाप्मे'त्यादिना आत्मनोऽपहतपाप्मत्वप्रतिपादनेन दुष्कर्मप्रत्यूढत्वविरोधात्। सुषुप्तौ कर्ममात्रनाशे दुष्कर्मणोऽप्यभावात्। कारणात्मनाऽवस्थाने चाज्ञानस्यावश्यकत्वात्। कर्मण आवरणत्वानुपपत्तेश्च। ब्रह्मवेदनप्रतिबन्धकतया ह्यनादिब्रह्मावरकं ज्ञाननिवर्त्यं वाच्यम्। तथा च कर्मेव प्रधानमपि नानृतपदाभिधेयम्। तयोर्ज्ञानानिवर्त्यत्वात्। ज्ञाननिवर्त्यत्वे च 'भूयश्चान्ते विश्वमायानिवृत्ति'रित्यादिश्रुतिर्मानम्। न च अत्र निवृत्तिस्तरणमात्रम्। 'मायामेतां तरन्ति ते' इति स्मृतेरिति वाच्यम्। ज्ञानहेतुकतरणस्य निवृत्त्यतिरिक्तस्यासम्भवेन उभयोर्नाशमात्रार्थत्वात्। न च 'तम आसी'दित्यस्य सत्त्वप्रतिपादकस्य बाधकं विना पारमार्थिकसत्त्वपरत्वेन कथमावरणस्यानृतत्वमिति वाच्यम्। 'नासदासीन्नो सदासी'दित्यनेन पारमार्थिकत्वतुच्छत्वयोर्निषेधेन व्यावहारिकसत्त्वपरत्वात्। न च अनेन माया प्रतिपाद्यते, मायाशब्दार्थश्च नाज्ञानम्, मायिनो ब्रह्मणोऽज्ञानित्वे सर्वज्ञत्वनिरवद्यत्वादिश्रुतिविरोधादिति वाच्यम्। उपाधेः प्रतिबिम्बपक्षपातित्वेनेश्वरासार्वज्ञ्याद्यापादनायोगात्। सार्वज्ञ्याद्यैश्वर्यस्य मायानिबन्धनत्वाच्च। न च 'मय ज्ञान' इति धात्वर्थानुसारात् माया कथमज्ञानमिति वाच्यम्। 'एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासीकरोति माया चाविद्या च स्वयमेव भवती'ति श्रुत्या मायाऽविद्ययोरैक्यप्रतिपादनान्माया अज्ञानमेव। घट चेष्टाया'मिति धातुजस्यापि घटशब्दस्य

(अद्वैतसिद्धिः)

चेष्टावाचकत्वाभाववदत्रापि ज्ञानवाचकत्वाभावात्। 'माया प्रज्ञा वयुनमिति' ज्ञानपर्याये निघण्टुकारवचनं च ज्ञानाकारपरिणामित्वादज्ञानस्योपपन्नम्। वृत्तिज्ञानस्याज्ञानाभिन्नत्वाद् अज्ञानस्यैवानिर्वचनीयविचित्रशक्तियोगान् न विचित्रशक्तिमति मायाशब्दप्रयोगानुपपत्तिः। क्वचिन् मणिमन्त्रादौ तत्प्रयोगस्तूपचारात्। न च शुक्तिरूप्यादौ मायाशब्दाप्रयोगात् न मृषार्थोऽयमिति वाच्यम्। वज्रादौ पृथिवीत्वादिव्यवहाराभावेऽपि पृथिवीत्ववद् व्यवहाराभावेऽपि मायात्वानपायाद्। ऐन्द्रजालिकादौ बहुशो मायाशब्दप्रयोगदर्शनाच्च। मायाया अज्ञानान्यत्वे ज्ञाननिवर्त्यत्वविरोधाच्च। नीहारतमःशब्दावप्यस्मिन्मते अज्ञानस्यावारकत्वाद्युज्येते, नान्यमते। अनृतनीहारादिशब्दानां दुष्कर्मपरत्वे श्रुत्यन्तरोक्तजीवेशभेदकत्वोपादानत्वादिविरोधश्च। तस्मा 'दनृतेन प्रत्यूढाः', 'नीहारेण प्रावृताः', 'तम आसीत्', 'मायां तु प्रकृतिं विद्याद्', 'अजामेकां लोहितशुक्लकृष्णाम्', 'अविद्यायामन्तरे वर्तमानाः', 'भूयश्चान्ते विश्वमायानिवृत्ति'रित्याद्याः श्रुतयो वर्णिता अज्ञाने प्रमाणमिति स्थितम् ॥

इत्यद्वैतसिद्धावविद्याप्रतिपादकश्रुत्युपपत्तिः ॥

## न्यायामृततरङ्गिणी

**ननु छान्दोग्ये दशमेऽध्याये दहरप्रकरणे त इमे सत्याः कामा अनृतापिधानास्तेषां सत्यानां सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभतेऽथ ये चास्येह जीवाये च प्रेतायच्चान्यदिच्छन्नलभते सर्वं तदत्रगत्वाविंदतेऽत्रह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापिहिरण्यनिधिनिहितमक्षेत्रज्ञा उपर्युपरिसंचरतो न विंदेयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छंत्य एतं ब्रह्मलोकं न विंदंत्यनृतेन हि प्रत्यूढा इत्यत्र अनृतशब्दवाच्यमिथ्याभूताज्ञानबद्धत्वं चेतनानां प्रतीयत इति श्रुतिरविद्यायां मानमित्यत आह ॥ अनृतेनहीति ॥ ऋतशब्दस्य ऋतं पिबंतौ सुकृतस्य लोक इत्यादौ सत्कर्मपरत्वादनृतशब्दो दुष्कर्मपर इत्याह ॥ ऋतमिति ॥ ऋतशब्दस्य परिणामिपरत्वे प्रमाणमाह ॥ अनृतमिति ॥ ननु उत्तरत्र प्रजापतिवाक्ये य आत्मापहतपाप्मा विजरो विमृत्युरित्यादिनाऽपहतपाप्मत्वोक्तेः कथं तस्य दुष्कर्मपरत्वमिति चेन्न। अपहतपाप्मन्यज्ञानसंबंधस्याप्यभावात्। आविर्भूतस्वरूपापेक्षया तदुक्तौतु दुष्कर्मण्यपि समानं। नन्वविद्यायामनेक आगमः तथाचोक्तं पंचपादिकायां येयं श्रुतिस्मृतीतिहासपुराणेषु नामरूपव्याकृतमविद्या मायाप्रकृतिरग्रहणमव्यक्तं तमःकारणंलयः**

(तरङ्गिणी)

शक्तिर्महासुप्तिर्निद्राक्षरमाकाशमितिच तत्रतत्र बहुधा गीयते चैतन्यस्य स्वत एवावस्थितलक्षणब्रह्मरूपतावभासं प्रतिबध्यजीवत्वापादिकाऽविद्याकर्मपूर्वप्रज्ञासंस्कार चित्रभित्तिः सुषुप्ते प्रकाशाच्छादनविक्षेपसंस्कारमात्ररूपस्थितिरनादिरविद्येति। अत्र अविद्याकर्मपूर्वप्रज्ञेति भ्रांतिकर्मपूर्वानुभवसंस्कारा उच्यंते। विवरणेप्युक्तं। समाने वृक्षे पुरुषो निमग्नोऽनीशयाशोचति मुह्यमान इति स्वभावसिद्धेश्वरस्यानीश्वरत्वं तद्भावाप्रतिपत्तिरेव वस्तुनोनपायात्ततश्चेश्वरभावाप्रतिपत्तेः शोकस्यच निमित्तं मोहं दर्शयति। तथा नतंविदाथयइमाजजानान्यद्युष्माकमंतरं बभूव। नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंति। नीहारं तमोऽज्ञानमित्यनर्थांतरं। तेन प्रावृतत्वमेव जीवानां ब्राह्मापरिज्ञाने जल्प्यत्वाद्यध्यासेच निमित्तं दर्शयति। तथा अविद्यायामंतरे वर्तमानाः नान्यच्छ्रेयो वेदयंते प्रमूढा इति श्रेयो रूपब्रह्मापरिज्ञाने क्रियाकारकाद्यध्यासेच निमित्तभूतामविद्यां दर्शयति। अज्ञानेनावृतं ज्ञानमित्याद्याः स्मृतयश्चेति। मंत्रार्थस्तु माधवीयभाष्ये हे नराः यः विश्वकर्मा इमानि भूतानि जजान उत्पादितवान् तं विश्वकर्माणं न विदाथ नजानीमः तत्र हेतुः युष्माकं अन्यदेवअंतरं व्यवधानं बभूव। तदुच्यते नीहारेण नीहारसदृशेन अज्ञानेन प्रावृताः किंच जल्प्या अहं मनुष्योहं देव इत्याद्यिनृतजल्पनशीलाः असून् प्राणान् तर्पयंति देहपोषकाः उक्थशासः उक्थशब्देन स्तोत्रशस्त्रादिकं लक्ष्यते नानाविधपक्षेषूक्तं प्रउगनिष्कैवल्यादिकं शंसंति। ऐहिकामुष्मिकभोगमात्रपरा इत्यर्थः। तदेतन्निराकरोति ॥अज्ञानेत्यादिना॥ संत्येवोदाहृतवाक्येष्वज्ञानादिशब्दाः। परंतु ते प्रकृतिपरामर्शा इत्यर्थः। ननु मिथ्याभूता प्रकृतिरेवास्माकमविद्येत्यत आह ॥नचेति॥ उदाहृतवाक्येषु प्रकृतिमिथ्यात्वप्रतिपादक-शब्दाभावादित्यर्थः। प्रत्युत वाक्यांतरे प्रकृतेः सत्यत्वमेवोच्यत इत्याह ॥तम इति॥ गौः प्रकृतिः। ननु तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चाते विश्वमायानिवृत्तिरित्यत्र ज्ञाननिवर्त्यत्वेन श्रुताया मायाया मिथ्यात्वसिद्धिरित्यत आह ॥विश्वेति॥ ॥तरणमिति॥ मायायां सत्यामेव तत्कृतपराभवाभाव इत्यर्थः ॥मायिन इति॥ नचोपाधेः प्रतिबिंबपक्षपाति-त्वेनेश्वरासार्वज्ञानापादकत्वमिति वाच्यं। त्वन्मते बिंबातिरिक्तस्य प्रतिबिंबस्याभावेन तत्पक्षपातो न संभवतीति वक्ष्यमाणत्वात् ॥मायाशब्दस्येति॥ चिंतिपूजीत्यत्र च कारादङ्प्रत्ययो व्याख्यातव्यः। ननु एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्याच स्वयमेव भवतीति श्रुत्यामायाविद्य-योरैक्यप्रतिपादनादज्ञानमेव मायेति चेन्न। जीवस्य परब्रह्मबोधतिरोधायिका भगवच्छक्तिरत्र प्रतिपाद्यते न तु त्वदभिमतानिर्वचनीया माया ॥वेदेति॥ न च ज्ञानाकारपरिणामित्वादज्ञानस्यापि ज्ञानत्वमुपपन्नमिति वाच्यम्। उपादानोपादेययोः साम्यदर्शनेन तथापरिणामसिद्धेः

(तरङ्गिणी)

॥ व्याख्यातत्वादिति॥ आत्मशक्त्या मायाख्ययेत्यनेनेत्यर्थः ॥ तदप्रयोगादिति॥ प्रामाणिकानामिति शेषः। तेन न वज्रादौ पृथिवीशब्दाप्रयोगसाम्यं ॥ सत्येति॥ अस्मायामेधास्रजोविनिरिति मत्वर्थे विनुप्रत्ययविधानादित्यर्थः। ननु मंत्रौषधादिनिर्मिते सर्पादौ मिथ्याभूते मायाशब्दप्रयोगान्न तस्य सत्यवाचित्वनियम इत्यत आह ॥ मिथ्याभूत इति॥ गौणत्वहेतुभूतमुख्यसंबंधस्योपपादनं ॥ मायाधीनेति॥ ज्ञाननिवर्त्यत्वोक्तीति॥ नच तरणोक्त्यनुपपत्तिः। तत्रेश्वरीयबंधकशक्तेस्तरणोक्तेः। अत्र तु प्रकृतेर्विनाश इति भेदात् ॥ सत्यस्यैवेति॥ रूप्यादौ ज्ञाननिवर्त्यत्वादर्शनादित्यर्थः। नन्वेकस्य विरुद्धसत्त्वादिगुणवत्त्व-वचनमनिर्वचनीयत्वमावेदयतीत्यत आह ॥ दैवीहीति॥ सत्त्वादीनां परस्परं संभिन्नत्वेन तद्विरोधोसिद्धः। अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपामिति तत्सामानाधिकरण्यश्रुतेरिति भावः। सत्त्वं सत्यत्वं। ननु मायायास्त्वयाप्यंगीकारात्कथं तन्निराकरणमित्यत आह ॥ तस्मादिति॥

व्यासाद्रिसृततर्काबुपूरैः पक्षयुगं युजि ।
न्यायामृततरंगिण्यां पराविद्या ह्यनागमा॥ श्रुतेरनिर्वाच्याविद्यापरत्वभंगः।

## न्यायामृतकण्टकोद्धारः

एवमज्ञानेऽनुमानं निराकृत्य श्रुतिमपि निराकरोति ॥ अनृतेन हीति॥ "तद्यथापि हिरण्यनिधिं पिहितम् अक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेव सर्वाः प्रजारहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दत्यनृतेन हि प्रत्यूढा" इत्यत्रेत्यर्थः। ऋतशब्दस्य सत्कर्मपरत्वे स्मृतिश्रुती प्रमाणमाह ॥ ऋतमिति॥ तथा चानृतशब्दं दुष्कर्मपरो युज्यत इति भावः। अनृतशब्दस्य परिणामिपरत्वे प्रमाणमाह ॥ अनृतमिति॥

"ऋ शताविति धातोस्तु पूर्वावगतवत्सदा ।
स्थिते ब्रह्मर्तमित्युक्तमनृतं परिणामतः ॥" इति स्मृतिर्द्रष्टव्या ।

न च दुष्कर्मप्रत्यूढत्वप्रतिपादने उत्तरत्र 'य आत्मा' इत्यादिनाऽपहतपात्मत्वादि प्रतिपादकेन विरोध इति वाच्यम्। अज्ञानपरत्वेऽपि तद्विरोधात्। न हि सत्यसङ्कल्पस्याज्ञानं सम्भवति ।

किञ्च 'य आत्मे'त्यत्र परमात्मा प्रतिपाद्यते। सत्यसङ्कल्पादितल्लिङ्गात्। "अनृतेन हि प्रत्यूढा" इत्यत्र जीवाः। न विन्दन्तीत्यादितल्लिङ्गात्। तथा च जीवानां दुष्कर्मप्रत्यूढत्वस्य परमात्मनोऽपहतपाप्मत्वादिना न विरोधः न च जीवब्रह्मणोरभेदः। कल्पितभेदस्य त्वयाप्यङ्गीकारात्। तस्यासिद्ध्याऽन्योन्याश्रयाच्च। न च सुषुप्तौ अनृतप्रत्यूढत्वमुच्यते। न च तदा दुष्कर्मकार्यमात्रविनाशादिति वाच्यम्। कार्यमात्रविनाशस्य

(कण्टकोद्धारः)

सुप्तित्वानभ्युपगमात्। सर्वेन्द्रियव्यापारविगममात्रेण सुप्तित्वोपपत्तेश्च। न च ब्रह्मवेदनप्रतिबन्धकतया ब्रह्मज्ञाननिवर्त्यम् आवश्यकं बोध्यम्। न च प्रकृतिदुष्कर्मणी तादृशे तयोर्ज्ञानानिवर्त्यत्वादिति वाच्यम्। ''ज्ञानाग्निः सर्वकर्माणि'' इति स्मृत्या दुष्कर्मणोऽपि ज्ञाननिवर्त्यत्वाभिधानात्। प्रकृतेरपि आवश्यत्वावस्थाविशेषेण निवृत्त्युपपत्तेश्च ॥अज्ञानेति॥ ''अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।'' ''अविद्यायामन्तरे वर्तमानाः'' ''नीहारेण प्रवृता चरन्तीत्यादावित्यर्थः न च प्रकृतिरेवाज्ञानम्। तस्य मिथ्यात्वाङ्गीकारात्। अस्याश्च सत्यत्वादित्याह ॥न चेति॥ नन्वियं श्रुतिरपरमार्थिकसत्वादिपरेत्यत आह ॥न चेति॥ ब्रह्मसत्यत्वश्रुतेरपि तथात्वप्रसङ्ग इति भावः।

ननु श्रुतिपुराणादौ मायाशब्दश्रवणात् तस्य मिथ्याभूतवस्तुवाचित्वात् तेनाज्ञानसिद्धिः स्यात् इत्यत आह ॥मायाशब्दोऽपीति॥ ननु भूयश्चान्ते विश्वमायानिवृत्तिरिति ज्ञाननिवर्त्यत्वश्रवणात्कथं माया प्रकृतिरीश्वरशक्तिर्वेत्यत आह ॥विश्वेति॥

न च ज्ञानहेतुकतरणस्य निवृत्त्यतिरिक्तस्यासम्भवेन तरणशब्देन निवृत्तिरेवेति वाच्यम्। स्वकार्याक्षमत्वापादकत्वेन उत्तेजकेन मणिस्तीर्ण इतिवत् निवृत्त्यभावेऽपि ज्ञानहेतुकतरणोपपत्तेः। निवृत्तिपरत्वेऽपि अवस्थाविशेषेण निवृत्त्यभ्युपगमान्न विरोधः। न च ज्ञानमेव मायाशब्दार्थः किं न स्यादित्यत आह ॥न हीति॥ न चाज्ञानस्य प्रतिबिम्बपक्षपातित्वेन नेश्वरसार्वज्ञ्यादिविरोधित्वमिति वाच्यम्। अस्याज्ञानसिद्ध्युत्तरकल्प्यत्वेनान्योन्याश्रयात्। प्रतिबिम्बोपाधेर्बिम्बस्वत्वादर्शनाच्च। न च सार्वज्ञ्याद्यैश्वर्यं मायानिबन्धनमिति वाच्यम्। ''एष सर्वेश्वर'' इत्याद्युक्त्या ''एष नित्यो महिमा ब्राह्मणस्य'' इति तस्य नित्यत्वोक्त्या मायाधीनत्वासम्भवात्। उपपादयिष्यते चैतत् सगुणवादे ।

॥मायाशब्दस्येति॥ न चैवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावभासे न करोति। माया चाविद्या च स्वयमेव भवतीति श्रुत्या मायाविद्ययोरैक्यप्रतिपादनात्। अज्ञानमेव मायाशब्दार्थः। यथा घटशब्दस्य ''घट चेष्टायाम्'' इति चेष्टार्थकधातुजत्वेऽपि चेष्टावाचकत्वाभाववत् अत्राप्युपपत्तेः। निघण्टुवचनं च ज्ञानाकारपरिणामित्वात् ज्ञानमित्यभिप्रायेणोपपन्नमित्यत आह ॥मायाशब्दस्येति॥ प्रयोगानुसारेण रूढिः कल्प्या। तथा च ज्ञानिनि कदापि मायाविशब्दाप्रयोगात् न मायाशब्दो ज्ञाने रूढः। नापि यौगिकः। विरोधादिति भावः। श्रुतौ चाविद्याशब्दो अस्य विद्येति योगेन ईश्वरविचित्रशक्तिपरत्वेऽपि न किञ्चिदनुपपन्नम्। अवभासेनेत्युक्त्या जीवेशभेदज्ञाने कारणत्वमुक्तम्। तच्च नास्माकं विरोधि। घटदृष्टान्तोपादानं च विषयम्। चेष्टाभाववति घटशब्द इव अज्ञाने मायाशब्दाप्रयोगात्। एवं च निघण्टुवचनं नान्यथा व्याख्येयम् ।

नन्वज्ञानादौ यथा न मायाशब्दप्रयोगः, तथा शक्त्यादावपि न प्रयोग इति कथं शक्तिपरत्वं तस्येत्यत आह ॥योगेति॥ नन्वस्तु मायाशब्दस्य शक्त्यादौ प्रयोगस्तथापि ज्ञानार्थकधातुव्युत्पन्नस्य कथं तत्परत्वमित्यत आह ॥तत्रैवेति॥ तथा च ईश्वरशक्त्यादेर्ज्ञानादिरूपत्वात् तदर्थकस्यापि तस्य तत्परत्वं युक्तमिति भावः ॥एक इति॥ व्याख्यानतोऽपि विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति न्यायेन व्याख्यानस्य

(कण्टकोद्धारः)

**संशयादिनिरासकत्वेन च प्रबलत्वात्। भागवते च शक्तिपरत्वेन व्याख्यातत्वात्। तत्परत्वमेव नान्यपरत्वमिति भावः ॥अत एवेति॥ व्याख्यानस्य बलत्वादेवेत्यर्थः।**

**ननु मिथ्याभूतेऽपि मायाशब्दप्रयोगात् तदपि मायाशब्दार्थ इत्यत आह ॥शक्तिरूपादाविति॥ न च वज्रादौ पृथिवीत्यादिव्यवहाराभावेऽपि पृथिवीत्ववदिहापि मायेति व्यवहाराभावेऽपि मायात्वं स्यादिति वैषम्यात्। न हि वज्रादौ पृथिवीव्यवहारो नास्ति। तथात्वे पार्थिवत्वलोहलेख्यत्वव्याप्तौ वज्रे व्यभिचारकथनमसङ्गतं स्यात्। न चेन्द्रजालिके मिथ्याभूते मायाशब्दप्रयोगोऽस्तीति वाच्यम्। तत्रैन्द्रजालिकप्रदर्शनमन्त्रादावेव मायाशब्दस्य मुख्यत्वेन तज्जन्यज्ञानविषये मायाशब्दस्यौपाचारिकत्वात्। अन्यथोक्तव्याख्यानादिविरोधात्। अत एव वक्ष्यति ॥मिथ्याभूत इति॥ मिथ्याभूतस्य गुणवत्त्वानुपपत्तेः।**

श्रुतेः अनिर्वाच्याविद्यापरत्वभङ्गः।

## न्यायामृतप्रकाशः

नन्वनृतेन हि प्रत्यूढेत्यत्रानृतशब्दवाच्यमिथ्याभूतज्ञानबद्धत्वं चेतनानां प्रतीयत इति श्रुतिरेवाविद्यायां मानमित्यत आह ॥अनृतेनहीति॥ ऋतशब्दस्य ''ऋतं पिबंतौ सुकृतस्य लोक'' इत्यादौ सत्कर्मपरत्वादनृतशब्दो दुष्कर्मपर इत्याह ॥अनृतेति॥ अनृतशब्दस्य परिणामिपरत्वे प्रमाणमाह ॥अनृतमिति॥

''ऋगताविति धातोस्तु पूर्वाविगतवत्सदा।
स्थितेर्ब्रह्मर्त्तमित्युक्तमनृतं परिणामत''

इति स्मृतेरित्यर्थः। तथाचानृतेन प्रकृत्या लिङ्गदेहरूपप्रकृत्या वा प्रत्यूढा बद्धा असन्त एतं ब्रह्मलोकं न विन्दन्तीति पूर्वेण सम्बन्धः। नन्वज्ञानेनावृतं ज्ञानम्, अविद्यायामन्तरेवर्त्तमानाः, नीहारेण प्रावृताः, तम आसीदित्यादौ मिथ्याभूताज्ञानमविद्यादिशब्दवाच्यं श्रूयत इत्यत आह ॥ ॥अज्ञानेत्यादि॥ नन्वस्तु तर्हि मिथ्याभूता प्रकृतिरविद्येत्यत आह ॥नचेति॥ उदाहृतवाक्येषु प्रकृतिमिथ्यात्वप्रतिपादकशब्दाभावादित्यर्थः। प्रत्युत वाक्यान्तरे प्रकृतेः सत्यत्वमेवोच्यत इत्याह ॥तमआसीदिति॥ गौः प्रकृतिः अनाद्यन्तवती आद्यन्तवती न भवतीत्यर्थः। अन्तशून्यत्वोक्त्या ज्ञाननिवर्त्यत्वाभावाख्यमिथ्यात्वाभावस्याभिधानादित्यर्थः। नित्यत्वात् ज्ञाननिवर्त्यत्वशून्यत्वात्सत्यत्वाच्च न सा मिथ्येत्यन्वयः। ननु तम आसीदित्यादिश्रुतीनां व्यावहारिकसत्वपरत्वस्य सद्वैलक्षण्यपरत्वस्य वोपपत्तेर्न पारमार्थिकसत्यत्वपरत्वमित्यत आह ॥नचेति॥ ॥क्वचिदिति॥ मम मायादुरत्ययेत्यादौ शक्त्यादीत्यादिपदेनास्त्रमंत्रौषधादिग्रहणम्। प्रकृत्यादिपरत्वे ज्ञापकमाह ॥त्रिगुणेति॥ ननु ''भूयश्चान्ते विश्वमायानिवृत्ति''रिति ज्ञाननिवर्त्यत्वेन श्रुताया मायाया मिथ्यात्वसिद्धिरित्यत आह ॥विश्वेति॥ यद्यज्ञानं मायाशब्दार्थस्तर्हि ''मायिनं तु महेश्वर''मित्यादौ मायित्वेनोद्दिष्टस्य ब्रह्मणोऽज्ञानित्वप्राप्तेः। अस्त्विति चेत्तत्राह ॥मायिन इति॥ मय ज्ञान इत्यस्मादण्प्रत्यये सति निष्पन्नमायाशब्दस्य ज्ञानवाचित्वान्नाज्ञानं मायाशब्दार्थ इत्याह ॥मायाशब्दस्येति॥ मय ज्ञान इत्यस्मादण्प्रत्यये णित्त्वादुपधावृद्धौ स्त्रियां टापि सवर्णदीर्घे सति

(प्रकाशः)

मायेति रूपं द्रष्टव्यम्। यदि प्रयोगवशान्मायाशब्दस्य विचित्रशक्त्यादिपरत्वं तर्हि तत एवाज्ञानादिपरत्वमस्त्वित्यत आह ॥मायाविशब्दस्येति॥ विचित्रशक्त्यादीत्यत्रादिशब्दोक्तार्थं दर्शयति ॥योगमायामिति॥ चेतने दुर्गायाम् ॥वारिविक्षरे इति॥ क्षर विनाशसंततदानयोरिति धातोः वारीणि विशेषतः क्षरतः दत्त इति वारिविक्षरे इत्यर्थः। तत्रैव हरिवंश एव ॥व्याख्यातत्वादिति॥ आत्मशक्त्या मायाख्ययेत्यनेनेत्यर्थः। अत एवेत्युक्तं विशदयति ॥शुक्तीति॥ मिथ्याभूतेरूप्यादौ रूप्यं मिथ्येति रूप्यं मायेति मायाशब्दाप्रयोगादित्यर्थः। ननु मिथ्याभूतमायोपेते मायाविशब्दप्रयोगो दृश्यत इति वत् चेत्तत्राह ॥सत्येति॥ ननु ''मायामृगं दयितयेप्सित''मित्यादौ मारीचस्य मायामृगत्वमुच्यते तच्च मिथ्याभूतमेवेत्यत आह ॥मायामृगस्यापीति॥ ॥कामेति॥ तथाच मायामृगत्वं न मिथ्याभूतम्। मनोजवः कामरूपमित्युक्तरूपविशिष्टासुरसिद्धिरेवेत्यर्थः ॥रामशरेति॥ ''तेनाहतः शरवरेणे''ति रामशरवेध्यत्वोक्तेस्तस्य च मिथ्याभूतेऽसंभवादित्यर्थः। ननु देवासुरसङ्ग्रामादौ मायाशस्त्रादिकं कथ्यते तच्च मिथ्याभूतमेवेत्यत आह ॥देवासुरेति॥ मायाशस्त्रादेर्मायाशब्दवाच्यमन्त्रादिनिर्मितशस्त्रादेरित्यर्थः। ननु ऐन्द्रजालिकपुरुषेण मन्त्रौषधादिना निर्मिते मिथ्याभूते सर्पादौ मायाशब्दप्रयोगान्नतस्य सत्यत्वमित्यत आह ॥मिथ्याभूत इति॥ ऐन्द्रजालिकादौ मायाशब्दस्यामुख्यत्वाद्गौणत्वादित्यर्थः। गौणत्वे हेतुभूतमुख्यसम्बन्धस्योपपादनं मायाधीनेति। सङ्ग्रामादौ निर्मितस्य सत्यशस्त्रादिप्रतीतेर्मिथ्याभूतैन्द्रजालिकसर्पादिप्रतीतेश्च मायाशब्दोक्तमंत्रौषधाद्यधीनत्वादित्यर्थः ॥ज्ञाननिवर्त्य-त्वोक्तीति॥ ''तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चांते विश्वमायानिवृत्ति''रिति श्रुतावित्यर्थः। यद्यप्यत्र निवृत्तिः स्मरणमेव ''मायामेतान्तरन्ती''तिस्मृतेरित्युक्तत्वादेषाशङ्कैव नोदेति तथापि तत्र मायामेतामिति स्मृतौ ईश्वरीयबन्धकशक्तितरणमेवाभिप्रेतम् अत्र पुनः प्रकृतेर्विनाश एव स च प्रकृतेः सत्यत्वे न संभवति सत्यस्य चानिवृत्तेरित्यर्थः। तथाच तदन्यथानुपपत्त्या मिथ्यात्वं कल्पनीयमित्यर्थः। अर्थापत्तेरन्यथोपपत्तिमाह ॥सत्यस्यैवेति॥ सत्यस्यैव ज्ञाननिवर्त्यत्वं न मिथ्याभूतस्य रूप्यादौ तददर्शनादिति प्राङ्निपुणतरमुपपादितमिति भावः। श्रुत्यादौ मायाया अविद्यात्वोक्त्यन्यथानुपपत्त्यामिथ्यात्वसिद्धिरित्यत आह ॥अत एवेति॥ अतएवेत्युक्तमेव विशदयति ॥विद्येति॥ तच्च सत्यस्यैवास्तीत्यर्थः। ननु ''दैवी ह्येषा गुणमयी मम माये'' त्यादौ एकस्या एव मायायाः परस्परविरुद्धसत्वादिगुणत्रयात्मकत्वोक्त्यार्थादनिर्वचनीयत्वमेवावगम्यते अतो मिथ्यात्वसिद्धिरित्यत आह ॥दैवीहीति॥ सत्तानुगुणा सत्यत्वानुगुणा सत्यत्वानुकूलैव नतु तत्प्रतिकूलेत्यर्थः। सत्वादीनां परस्परं मिश्रत्वेनाविरोधः सिद्ध एव। ''अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपा''मिति तत्सामानाधिकरण्यश्रुतेरिति भावः। प्रत्युत गुणमयीत्युक्तं त्रिगुणात्मकत्वरूपं त्रैगुण्यं मायायाः सत्व एव युक्तं न मिथ्यात्वे कुत इत्यत आह ॥शुक्त्यादीति॥ मिथ्याभूत इति शेषः। ननु भवद्भिरपि मायायाः श्रुतिप्रतिपाद्यत्वाङ्गीकारात्कथं तन्निराकरणमित्यत आह ॥तस्मादिति॥ शक्त्यादीत्यादिपदेन दुर्गामन्त्रौषधादिग्रहणम्। तथाचाने नास्मन्मते श्रुतिः सत्यभूतप्रकृत्यादिपरेत्युक्तं भवति।

॥श्रुतेरनिर्वाच्याविद्यापरत्वभङ्गविवरणम्॥

## २९. अविद्यार्थापत्तिभङ्गः

**भ्रमोपादानत्वेनाविद्याकल्पनं तु द्वितीयलक्षणनिरासेनैव निरस्तम्। किं च शुक्तिरूप्यमुपादानसहितं चेत्, सकर्तृकं भवेत्। न चेशो जीवो वा तस्य कर्तेति युज्यते। नापि निर्विकारस्य ब्रह्मणः श्रौतजगदुपादानत्वनिर्वाहाय तत्कल्पनम्, सत्यस्य त्रिगुणस्य प्रधानस्यैव तदुपादानत्वेन श्रुत्यादिसिद्धत्वाद्, अविद्याया अपि अनादित्वेन निरवयवतया ब्रह्मवदेव विकारायोगाच्च। किं च ब्रह्मण उपादानत्वेऽपि नाविद्या कल्प्या, त्वद्रीत्या ब्रह्मण एव तात्त्विकविकारविरुद्धेनातात्त्विकविकारेण शुक्त्यादिवद् विवर्ताधिष्ठानत्वरूपोपादानत्वोपपत्तेः। अन्यथा अविद्यादेराश्रयसापेक्षस्य तत्त्वतोऽद्वितीयाद् ब्रह्मणोन्यदधिकरणं कल्प्यं स्यात्। न च परिणामित्वेनाविद्याकल्पनम्, असत्यस्य सत्यरूपान्तरापत्तिरूपपरिणाम्यनपेक्षत्वात्। न च कार्यापेक्षितस्वसत्तासमानसत्ताकोपादानत्वेन तत्कल्पनम्, विवर्ताधिष्ठानरूपोपादानेन निवृत्तोपादानाकांक्षस्यापि घटादिदृष्टान्तेनोक्तोपादानकल्पने घटादेः कार्यस्य स्वासमानसत्ताकोपादानानपेक्षत्वेनासमानसत्ताकस्य ब्रह्मणो वियदादावनुपादानत्वापातात्। रूप्ये स्वसमानसत्ताकनिमित्तस्यापि कल्पनापाताच्च। न च जीवस्यानवच्छिन्नब्रह्मानन्दाप्रकाशाय तत्कल्पना, भेदेनैव तदुपपत्तेः। अनवच्छिन्नानन्दस्यापि प्रकाशमानप्रत्यङ्मात्रत्वेनाप्रकाशानुपपत्तेश्च। अविद्यार्थापत्तिभंगः।**

### अद्वैतसिद्धिः

जीवस्यानवच्छिन्नब्रह्मानन्दाप्रकाशान्यथानुपपत्तिश्च तत्र मानम्। न च जीवस्य ब्रह्मभेदेनैव तादृगप्रकाशोपपत्तिः, जीवब्रह्मभेदस्याग्रे निरसिष्यमाणत्वात्। न चानवच्छिन्नानन्दस्यापि प्रकाशमानप्रत्यङ्मात्रत्वेनाप्रकाशमानत्वानुपपत्तिः, शरीरप्रतियोगिकस्यात्मनि स्वरूपभेदस्यात्माकारेण प्रकाशमानत्वेऽपि भेदाकारेणाप्रकाशमानत्ववद्रूपान्तरेण ब्रह्मणः प्रकाशमानत्वेऽपि उक्ताकारेणाविद्यावशादप्रकाशमानत्वोपपत्तेरुक्तत्वात्।

भ्रमस्य सोपादानत्वान्यथानुपपत्तिरपि अविद्यायां प्रमाणम्। न चान्तःकरणमुपादानम्, अन्तःकरणस्य ज्ञानजनने प्रमाणव्यापारसापेक्षत्वेन प्रमाणाविषये शुक्तिरूप्यादौ

(अद्वैतसिद्धिः)

ज्ञानाजनकत्वात्, सादित्वेनानादिभ्रमपरम्परानुपादानत्वाच्च। न च ब्रह्मैवोपादानम्, तस्यापरिणामित्वात्। न च विवर्ताधिष्ठानत्वेन शुक्त्यादेरिवोपादानत्वम्, अविद्यामन्तरेणा-तात्त्विकान्यथाभावलक्षणस्य विवर्तस्यैवासम्भवात्, शुक्त्यादेरधिष्ठानावच्छेदकतया विवर्ताधिष्ठानत्वाभावात्। न च– उपादानापेक्षस्य विवर्तस्य तात्त्विकातिरिक्तोपादान-कल्पनवदविद्यादेराश्रयसापेक्षस्य ब्रह्मातिरिक्तमतात्त्विकमधिकरणं कल्प्यं स्यादिति– वाच्यम्, ब्रह्मण एव विकारित्वे अनित्यत्वादिप्रसक्तिवद् ब्रह्मण एवाधिष्ठानत्वे बाधकाभावेन द्वितीयस्याधिकरणस्याकल्पनात्। न च– असत्यस्य सत्यरूपान्तरापत्तिलक्षणपरिणाम्य-नपेक्षत्वेन परिणामित्वेनापि नाविद्याकल्पनमिति– वाच्यम्, परिणामिसत्तासमानसत्ताकत्व-नियमेनासत्यत्वस्यैवाभावात्। न च– घटादौ स्वसमानसत्ताकोपादानकत्वदर्शनेन प्रपञ्चेऽपि तादृशोपादानकल्पने घटादेः स्वाधिकसत्ताकोपादानानपेक्षत्ववद् वियदादेरपि ब्रह्मानुपादानकत्वं स्यादिति– वाच्यम्, 'तदभिध्यानादेव तु तल्लिङ्गात्स'इत्यनेन न्यायेन घटादेरपि मृदवस्थचैतन्योपादानकतया तादृशोपादानानपेक्षत्वासिद्धेः। अत एव– रूप्येऽपि स्वसमानसत्ताकस्य निमित्तस्यापि कल्पनापत्तिरिति– निरस्तम्, निमित्तमात्रे वा इयं कल्पना? विशेषे वा? नाद्यः, अधिष्ठानरूपनिमित्तस्य सर्वत्राधिकसत्ताकत्वात्। द्वितीये तूत्तरोत्तरभ्रमे पूर्वपूर्वभ्रमस्य निमित्तत्वेनेष्टापत्तेः। न च त्रिगुणात्मकं प्रधानमुपादानमिति वाच्यम्, तस्यासत्यत्वे अविद्यानतिरेकात्। सत्यत्वेऽपि सावयवम्? निरवयवं वा? आद्ये अनादित्वभङ्गः। द्वितीये परिणामित्वायोगो ब्रह्मवत्। न चाविद्यापक्षेऽपि समः पर्यनुयोगः, तस्याः काल्पनिकत्वेन पर्यनुयोगायोगात्। तस्मादर्थापत्तिरविद्यायां प्रमाणम्। इत्यद्वैतसिद्धावविद्यायामर्थापत्तिः।

## न्यायामृततरङ्गिणी

**भ्रमशब्देन ज्ञानं वा अर्थो वा। नाद्य इत्याह ॥द्वितीयेति॥ अंतःकरणस्यैव तदुपादानत्वसंभवादिति भावः। नचांतःकरणस्य प्रमाणसापेक्षस्यैव ज्ञानजनकत्वेन प्रमाणाविषये शुक्तिरूप्यादौ न ज्ञानजनकत्वमिति वाच्यं। शुक्तिविषयप्रमाणसहितेनांतःकरणेन दोषवशाद्रूप्यविशिष्टशुक्तिगोचरपरिणामविशेषजननसंभवात्। द्वितीयं निराकरोति ॥किंचेति॥ सोपादानत्वव्यापकसकर्तृकत्वस्याभावान्न रूप्यं सोपादानमित्यर्थः ॥सत्यस्येति॥ ननु प्रधानस्य सावयवत्वेऽनादित्वभंगः निरवयवत्वे परिणामायोग इत्यत आह ॥अविद्याया इति॥**

(तरङ्गिणी)

अविद्यायामविद्यात्वेनैव सर्वानुपपत्तिपरिहारे सत्ये प्रधाने ईश्वरशक्त्या तदस्त्वित्यर्थः ।। अतात्विकेति।। नचाविद्यामंतरेणातात्विकान्यथाभावलक्षणविवर्त एव न संभवतीति वाच्यं। अविद्यांतरं विनैवातात्विकाविद्यावदविद्यां विनैवातात्विकवियदादिविवर्तसंभवात् ।। अन्यथेति।। उपादानापेक्षस्य वियदादिरूपविवृत्तस्य तात्विकब्रह्मातिरिक्तोपादानकल्पना यामित्यर्थः ।। अन्यदिति।। सद्वितीयमतात्विकमित्यर्थः। ननु वियदादिर्ब्रह्मणो विवर्तोऽविद्यायाः परिणामः तथाच परिणामस्य परिणामिनं विनाऽयोगादविद्याकल्पनमित्यत आह ।। नचेति।। सत्यभूतपरिणामस्यैव स्वोचितपरिणाम्यपेक्षा नत्वसत्यस्य तस्येत्याह ।। असत्यस्येति।। तत्वतोऽसंसारिणः संसारित्ववत् तत्वतोऽपरिणामिनोपि मिथ्याभूतपरिणामित्वे बाधकाभावाद्ब्रह्मण एव परिणामित्वोपपत्तिरित्यपि बोध्यं। ननु घटादौ स्वसमसत्ताकोपादानदर्शनाद्रूप्यादेरपि तथाविधोपादानमविद्या कल्प्यत इत्यत आह ।। नचकार्येति।। ।। कार्यस्येति।। रूप्यस्य घटादेश्चेत्यर्थः ।। अनपेक्षत्वेनेति।। दृष्टत्वादिति शेषः। न च तदभिध्यानादेव तु तल्लिंगात्स इत्यनेन न्यायेन घटादेरपि मृदवस्थचैतन्योपादानकतया तादृशोपादानापेक्षत्वमसिद्धमिति वाच्यं। घटादौ चैतन्योपादानकत्वे मानाभावात्। रूप्यस्य घटादिदृष्टांतेन स्वसमानसत्ताकोपादानकल्पनायां घटादेरिव तत्र स्वसमानसत्ताकनिमित्तकल्पनाप्यापद्यत इत्याह ।। रूप्य इति।। रूप्यस्य स्वसमानसत्ताकनिमित्तकत्वं न स्यात् तथा चाधिष्ठानस्य सादृश्यादेश्चनिमित्तत्वं न स्यादित्यर्थः तेन उत्तरोत्तरभ्रमे पूर्वपूर्वभ्रमस्य निमित्तत्वेनेष्टापत्तिरिति निरस्तं ।। भेदेनेति।। तद्दूषणाभास निरसिष्यमाणत्वादिति भावः। न च ममेव तव मते ब्रह्मणि विशेषोऽस्तीत्याह मात्रशब्देन।

।। अविद्यार्थापत्तिभंगः ।।

## न्यायामृतकण्टकोद्धारः

।। भ्रमोपादानत्वेनेति ।। अन्तःकरणस्यात्मनो वा उपादानत्वसम्भवादिति भावः। न चान्तःकरणस्य ज्ञानजनने प्रमाणसापेक्षत्वनियमेन प्रमाणाविषये शुक्तिरूप्यादौ न ज्ञानजनकत्वमिति वाच्यम्। अन्तःकरणस्य लाघवेन ज्ञापकसापेक्षत्वेनैव ज्ञानजनकत्वसम्भवे प्रमाणसापेक्षत्वकल्पने गौरवात्। भ्रमेऽन्तःकरणानपेक्षणे व्यासक्तस्यापि भ्रमापत्तेश्च। न चान्तःकरणस्य सादित्वात् नानादिभ्रमपरम्परोपादानत्वमिति वाच्यम्। अन्तःकरणसादित्वस्याज्ञानसिध्यधीनत्वेनान्योन्याश्रयात्। धर्मिकल्पनात् इति न्यायेन अन्तःकरणस्यैवा-नादित्वकल्पनौचित्याच्च। अन्तःकरणस्य सादित्वे नित्यं मनोऽनादित्वादित्यादिसयुक्तिकश्रुतिविरोधश्च। भ्रमपरम्पराया अनादित्वासिद्धेश्च। ननु भ्रमो द्विविधः अर्थज्ञानात्मकः। तथा च ज्ञानं प्रत्यन्तःकरणस्योपादानत्वेऽपि शुक्तिरूप्योपादानत्वेनाज्ञानं स्वीकर्तव्यमिति चेन्न। तस्य निरुपादानत्वात्

(कण्टकोद्धारः)

**सोपादानत्वव्यापकसकर्तृकत्वाभावात् इत्याशयेनाह ॥शुक्तिरूप्यमिति॥ उपादानगोचरचिकीर्षादेरभावात् न जीवस्य कर्तृत्वम्। ईश्वरस्य तु तत्प्रतीत्यभावादेव। अन्यथा भ्रान्तत्वापत्तेः। ईश्वरकर्तृकत्वे तस्य व्यावहारिकतापत्तेश्चेति भावः ॥सत्यस्येति॥ ननु प्रधानस्य सावयवत्वेऽनादित्वायोगः। निरवयवत्वे परिणामित्वायोगो ब्रह्मवदिति चेन्न। निरवयवत्वेऽपि सांशत्वेन परिणामित्वोपपत्तेः। न चावयवातिरिक्ता अंशा एव न सन्ति प्रमाणाभावादिति वाच्यम्। तेषामिह पक्षी नेह पक्षीत्यादि प्रतीत्यन्यथानुपपत्त्यादिनाऽन्यत्र साधितत्वात् ॥अविद्याया इति॥ नन्वविद्यायाः काल्पनिकत्वेन तत्रानुपपत्तिर्न दूषणमिति चेत् तर्हि तस्या ब्रह्मरूपत्वं जगदावरकत्वमित्याद्यपि कल्प्यं स्यात्। तत्रानुपपत्तिपरिहारे अविद्यानिरवयवत्वेऽपि तत्परिहार आवश्यक इति भावः॥**

**॥किञ्चेति॥ न चाविद्यामन्तरेणातात्विकान्यथाभावलक्षणस्य विवर्तस्यासम्भव इति वाच्यम्। तस्य दोषेणैवोपपत्तेः। अन्यथाभावोऽन्यथाज्ञानं चेत् दोषान्तःकरणादिनैवोपपन्नम्। अर्थस्य त्वसत्त्वादेव न कारणान्तरापेक्षेति भावः ॥अन्यथेति॥ न च विकारित्वेऽनित्यत्वादिवत् अविद्याश्रयत्वे बाधकाभावात् नाविद्याया अधिकरणान्तरं कल्प्यमिति वाच्यम्। अतात्त्विकविकारेण वास्तवानित्यत्वापादनासम्भवात्, कल्पितानित्यत्वेऽप्यविरोधात् अज्ञानाश्रयत्वेऽपि सार्वज्ञाद्यभाव 'निरनिष्ट' इत्यादिश्रुतिविरोधरूपबाधकसद्भावाच्च ॥असत्यस्येति॥ न च परिणामस्य परिणामिसमसत्त्वनियमेनासत्यत्वमसिद्धमिति वाच्यम्। मिथ्यात्वेन परिणामस्यैवासम्भवात्। मिथ्यात्वादेवासत्यत्वनियमाच्च। सत्यत्वपक्ष एवोक्तनियमाच्च। ॥रूप्य इति॥ न च निमित्तमात्र उक्तनियमकल्पनायां शुक्तिरूप्य एव व्यभिचारो निमित्तविशेषे तत्कल्पनायां इष्टापत्तिः। पूर्वभ्रमस्योत्तरोत्तरभ्रमकारणत्वादिति वाच्यम्। निमित्तमात्रे एतत्कल्पनाया आपाद्यत्वात्। तथा च अधिष्ठानरूपब्रह्मणोऽपि कार्यसमसत्त्वं स्यात्। शुक्तिरूप्याधिष्ठानमपि पक्षसममतो न तत्र व्यभिचारापादनमित्याशयात् ॥भेदेनैवेति॥ तस्या उपपादयिष्यमाणत्वात् इति भावः ॥अनवच्छिन्नेति॥ न च शरीरप्रतियोगिकस्यात्मभेदस्यात्माकारेण प्रकाशमानत्वेऽपि उक्ताकारेणाविद्यावशादप्रकाशमानत्वोपपत्तिरिति वाच्यम्। निर्विशेषे निराकारे चात्मनि रूपद्वयस्य वाकारद्वयस्य वायोगात्। आकारस्य मिथ्यात्वेनाज्ञानस्य तदावरकत्वायोगाच्च। प्राप्ताप्राप्तविषयत्वेनाकारस्यैवावरणविषयत्वात्। तस्मान्नाविद्यायामर्थापत्तिर्मानम्। इति अविद्यायामर्थापत्तिभङ्गः।**

## न्यायामृतप्रकाशः

यदुक्तं मिथ्याभूतस्य भ्रमस्य कादाचित्कत्वेन सोपादानत्वात्तदनुगुणं मिथ्याभूतमुपादानमंगीकार्यं सैवाविद्येति भ्रमोपादानत्वान्यथानुपपत्त्याऽविद्यासिद्धिरिति भावरूपाज्ञानसद्भावेऽर्थापत्तिः प्रमाणमिति तद्दूषयति ॥भ्रमेति॥ अत्र भ्रमपदेन ज्ञानमर्थो वा नाद्य इत्याह ॥द्वितीयेति॥ अंतःकरणस्यैव तदुपादानत्वसंभवेनार्थापत्तेरन्यथोपपत्तिरिति भावः। द्वितीयं निराकरोति ॥किंचेति॥ ॥भवेदिति॥ घटादौ दृष्टत्वादित्यर्थः। सोपादानत्वस्य सकर्तृकत्वव्याप्यत्वात्तदंगीकारे सकर्तृकत्वमप्यंगीकार्यं स्यात् ॐमिति चेत्तत्र प्रष्टव्यं स कर्ता ईश्वरो वा जीवो

(प्रकाशः)

वा। नाद्यः शुक्तिरूप्यं कालत्रयेपि नास्तीति जानत ईश्वरस्य तत्स्रष्टृत्वायोगात्। न द्वितीयः अनुभवविरुद्धत्वादित्याशयेनाह ।। नचेश इति।। भावरूपाज्ञानसाधककार्थापत्त्यंतरमाशंक्य निराकरोति ।। नापीति।। ।। श्रौतेति।। 'यतो वा इमानी'त्यत्र पंचम्या अपादानत्वमर्थः 'अपादाने पंचमी'ति श्रवणात् उपादानत्वमेवास्यापादानत्वमिष्यते एवं श्रुतमुपादानत्वं निरवयवतया निर्विकारस्य न युक्तमिति तन्निर्वाहायाविद्या कल्प्यते तत्संबंधाच्च युक्तमुपादानत्वमित्यर्थः। जगदुपादानत्वान्यथानुपपत्तेरन्यथोपपत्तिमाह ।। सत्यस्येति।। ।। तदिति।। जगदित्यर्थः। तथाच ब्रह्मण उपादानत्वमेवाप्रामाणिकमित्याशयः। यत इति श्रुतपंचम्यर्थस्तु

'अपादानत्वमेवास्य यद्युपादानतेष्यते।
अंगीकृतं तत्पितृवन्नतु विश्वात्मना भव'

इत्यादिनोत्तरप्रस्थानोक्तरीत्या द्रष्टव्यः। ननु प्रधानस्य सावयवत्वेऽनादित्वभंगः निरवयवत्वे परिणामायोग इत्यत आह ।। अविद्याया इति।। यद्धि सावयवं तद्धिकृतं भवति नत्वखंडं अविद्या च ब्रह्मवदेव निरंशाऽतस्तस्यां कल्पितायामपि न ब्रह्मणो जगत्कारणत्वनिर्वाहः उभयोरप्यखंडत्वादिति भावः। ब्रह्मण एव विवर्त्तेत्याद्यन्वयः। अयमर्थः। ब्रह्मण उपादानत्वेपि नाविद्या कल्प्या। न च निर्विकारस्य तदयोगः अतात्विकविकारांगीकारात् तस्य च तात्विकाऽविकाराविरोधित्वात्। अतात्विको विकारः कीदृश इति चेत् शुक्त्यादीनां रजतं प्रतीव विवर्ताधिष्ठानत्वमेवेति नाविद्या तदर्थं कल्प्येति ।। अन्यथेति।। अतात्विकस्यापि तात्विकेन विरोधमंगीकृत्य ब्रह्मणः तात्विकाविकारवत एव उपादानत्वायोगेन तदर्थमुपादानांतरभूताविद्याकल्पन इत्यर्थः ।। अविद्यादेरिति।। आश्रयविषयसापेक्षत्वेन सद्वितीयत्वमविद्या स्वभावः ब्रह्मणश्च द्वितीयासहिष्णुत्वरूपमद्वितीयत्वं स्वभावः। एवं च सद्वितीयत्वस्वभावाविद्याधिकरणत्वं नाद्वितीयस्य ब्रह्मणो युक्तं तथात्वे सद्वितीयत्वस्वभावा-विद्यास्वाधिकरणब्रह्माद्वितीयत्वस्वभावं व्याहन्यात्। स्वेनैव सद्वितीयत्वात् अतोऽविद्याया ब्रह्मातिरिक्तमेवाधिकरणं कल्प्यं स्यात् तथाच तत्र त्वया वक्तव्यं ब्रह्मणोऽद्वितीयत्वं तात्विकं अविद्यायाः सद्वितीयत्वमतात्विकं एवं च तात्विकस्यातात्विकेन विरोधाभावान्नाधिकरणांतरं कल्प्यत इति। एवं प्रकृतेपि विरोधाभावान्नकारणांतरं कल्प्यमित्यर्थः। अन्ये तु अन्यथेत्यस्य उपादानापेक्षस्य तात्विकब्रह्मातिरिक्तोपादानकल्पनायामित्यर्थः। अन्यत् सद्वितीयं अतात्विकमित्यर्थ इत्याहुः। ननु वियदादिर्ब्रह्मणो विवर्तोपि परिणामभूतः परिणामस्य परिणामि विनाऽयोगात् ब्रह्मणश्चापरिणामितयाऽविद्याकल्पनमित्यत आह ।। नचेति ।। ।। सत्येति ।। सत्यरूपांतरापत्तिरूपश्चासौ परिणामश्च सोस्यास्तीति परिणामी तदनपेक्षत्वादित्यर्थः। अविद्यायाः परिणामित्वं तदा स्यात् यदि सत्यजगदाख्यरूपांतरापत्तिरूपः परिणामः स्यात्। नचैवं जगतः सत्यत्वाभावादित्यभिप्रेत्यासत्यस्येत्युक्तं सत्यरूपां तरापत्तिरूपपरिणाम्यनपेक्षत्वादसत्यस्येत्यन्वयः। सत्यभूतपरिणामस्यैव स्वोचितपरिणाम्यपेक्षा नत्वसत्यस्य अतो न परिणामित्वेनाविद्याकल्पनमिति भावः ।। कार्येति ।। कार्यस्य घटादेर्व्यावहारिकस्य स्वसमानसत्ताकोपादानत्वदर्शनात् रूप्यादेरपि मिथ्यात्वेन समानसत्ताकोपादानापेक्षत्वात्तदनुगुणं मिथ्याभूतमुपादानं अविद्याख्यं कल्पनीयमित्यर्थः। रूप्यादेः किमुपादानमिति शंकायां विवर्त्ताधिष्ठानतया ब्रह्मैवोपादानमित्युक्त्या आकांक्षाया निवृत्तत्वात्। नच घटादेः स्वसमानसत्ताकोपादानकत्वदर्शनात् रूप्यादावपि स्वसमानसत्ताकमुपादानं

(प्रकाशः)

कल्पनीयं तच्चाविद्येति वाच्यम्। तर्हि घटादेः स्वसमानसत्ताकोपादानापेक्षत्वदर्शनात् वियदादिकार्यासमसत्ताकस्य ब्रह्मणो वियदादावुपादानत्वं त्वयोच्यमानं न स्यादित्यतिप्रसंग इत्यर्थः। यदि घटादिदृष्टांतेन रूप्यादेः स्वसमानसत्ताकोपादानकत्वं कल्प्यते तर्हि घटादेः स्वसमानसत्ताकनिमित्तकारणकत्वदर्शनेन रूप्यादेरपि स्वसमानसत्ताकनिमित्तकारणत्वापत्त्या प्रातिभासिकं किंचिन्निमित्तकारणमपि कल्प्यं स्यादित्याह ॥ रूप्य इति॥ अर्थापत्त्यंतरमाशंक्य निराकरोति ॥ नचेति॥ जीवस्यापरिच्छिन्नानंदात्मकब्रह्माभिन्नत्वेन सर्वदानंदप्रकाशः स्यात् नचासावस्ति अतस्तदप्रकाशाय तत्प्रतिबंधकतयाऽविद्या कल्प्यत इत्यर्थः। कुतो न चेत्यत आह ॥ भेदेनैवेति॥ स्यादियं कल्पनापि यद्यभेद एव जीवब्रह्मणोः स्यात् नचैवं किंतु भेदस्यैव सत्वेनापरिच्छिन्नानंदब्रह्मात्मकत्वस्यैवाभावेन तत्प्रकाशप्रसक्तेरेवाभावात्। तथाच तदप्रकाशाय तत्कल्पना न युक्तेति भावः। अस्तु वाऽनवच्छिन्नब्रह्मानंदात्मकत्वं तथापि तदप्रकाश एव न युक्तः अपरिच्छिन्नानंदस्यापि सर्वदाप्रकाशमानप्रत्यक्चैतन्य-मात्रत्वेनाप्रकाशानुपपत्तेस्तदर्थमविद्याकल्पनमप्रामाणिकमित्याह ॥ अनवच्छिन्नेति॥

॥ अविद्यार्थापत्तिभंगविवरणम्।

## २६. सामान्येनाविद्याप्रमाणभङ्गः

किं च त्वन्मते अज्ञानस्याप्रामाणिकत्वात्कथं तत्र प्रमाणोक्तिः?

अविद्याया अविद्यात्व इदमेव तु लक्षणम् ।
मानाघातासहिष्णुत्वमसाधारणमिष्यते ॥

इति सुरेश्वरोक्तेः। न चाज्ञानस्य व्यावहारिकत्वात्तत्र तत्प्रमाणोक्तिः, प्रतिभासिकोपादाने प्रातिभासिके अज्ञाने तदुक्त्ययुक्तेः। न हि व्यावहारिकं प्रातिभासिकं प्रत्युपादानम्। न च प्रातिभासिके मानमस्ति। न च साक्षिसिद्धे अज्ञाने प्रमाणैः असद्व्यावृत्तिमात्रं बोध्यत इति वाच्यम्, नित्यनिर्दोषसाक्षिवेद्यत्वे सुतरां प्रामाणिकत्वापातात्। तम आसीदित्यादौ सत्त्वस्यैव बोधनाच्च। उक्तानुमानेषु तदप्रतीतेश्च। न ह्यनुमानं विवक्षापरतन्त्रम्। प्रमाणैरज्ञानस्वरूपाग्रहे तत्रासद्व्यावृत्तेर्दुर्बोधत्वाच्च। न च प्रमाणानि साक्षिवेद्यत्वेनाविद्यां बोधयन्ति, येन भ्रमविषयत्वेनानुव्यवसायबोध्यस्य रूप्यादेरिव प्रामाणिकत्वं न स्यात्। न च प्रमाणानि प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेनाविद्यां

बोधयन्ति, येन तथा बाधगोचरस्य रूप्यादेरिव प्रामाणिकत्वं न स्यात्। ज्ञाननिवर्त्यत्वेन प्रकाशनिवर्त्यान्धकारवदनित्यत्वस्यैव बोधनात्। सामान्येनाविद्याप्रमाणभंगः।

## न्यायामृततरङ्गिणी

॥ प्रमाणैरिति॥ ननु प्रमाणैरज्ञानस्वरूपाग्रहेप्यसद्व्यावृत्तिमात्रं क्वचिद्गृह्यते तदुपनीतासद्व्यावृत्तिविशिष्टाज्ञानं तु साक्षिणा गृह्यत इति चेन्न। यत्र यद्गृहीतं तत्र तद्विशिष्टग्रहे तद्ग्रह उपनायकः। अज्ञानेऽसद्व्यावृत्त्यग्रहे तदुपनयासंभवात्। शुक्तौ रूप्यस्य ज्ञानेच प्रामाण्यं यथा नोपनयस्तथोक्तमन्यत्र। ननु प्रमाणसिद्धस्यापि रूप्यस्य प्रामाणिकत्वाभावादज्ञानस्यापि तदस्त्वित्यत आह ॥ नचप्रमाणानीत्यादि॥ ननु प्रमाणसिद्धमप्यज्ञानं ज्ञाननिवर्त्यत्वाद-प्रामाणिकमित्यत आह ॥ ज्ञानेति॥ ॥ सामान्येनाविद्याप्रमाणभंगः॥

## न्यायामृतकण्टकोद्धारः

एवमविद्यायां विशेषाकारेण प्रमाणानि दूषयित्वा सामान्येनापि दूषयति ॥ किञ्चेति॥ अप्रामाणिकत्वात् सत्त्वेनेति शेषः। प्रमाणोक्तिः। सत्त्वेनेति शेषः। तेनाप्रामाणिकेऽप्यप्रामाणिकत्वबोधनार्थं प्रमाणोक्तेः कथमिदं दूषणं त्वन्मत इत्यसमर्थं चेति निरस्तम्। ॥ मानेति॥ सत्त्वेन प्रमाणविषयत्वमित्यर्थः ॥ तदुक्त्ययुक्तेरिति॥ प्रमाणोक्त्ययुक्तेरित्यर्थः। अन्यथाप्रातिभासिकाज्ञानसिद्धिर्न स्यादितिभावः। ननु प्रातिभासिकमेव मानं तत्रोच्यत इत्यत आह ॥ न चेति॥ ॥ नित्येति॥ उपलक्षणमेतत्। द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इत्यज्ञानस्य सत्त्वस्यैव बोधनप्राप्तेश्चेत्यपि द्रष्टव्यम्। न चासद्व्यावृत्तिस्तटस्थैव बोध्यते नाज्ञाननिष्ठत्वेनेति वाच्यम्। तथा सति यस्य कस्यचिदसद्व्यावृत्तौ अज्ञानस्यासत्त्वशङ्का नापनीयेत। तथा च प्रमाणोक्तिर्व्यर्था स्यादिति भावः ॥ उक्तेति॥ अनुमिते व्यापकतावच्छेदकप्रकारकत्वनियतत्वादिति भावः। न च साक्षी असद्व्यावृत्तिविशिष्टत्वेनाज्ञानं बोधयति। तत्रासद्व्यावृत्युपनायकत्वेन प्रमाणसार्थक्यमिति वाच्यम्। अहमज्ञ इत्यादि प्रतीतौ असद्व्यावृत्तेरभावात्। ननु यथा शुक्तिरूप्यं व्यवसायविषयत्वेन बोध्यते न च तावता तस्य प्रामाणिकत्वम्। तथा प्रकृतेऽपीत्यत आह ॥ न चेति॥ तथा प्रमाणैरनवगाहनादिति भावः। ननु प्रमाणानि अप्रामाणिकत्वेन बोधयन्ति। अतो नाज्ञानस्य प्रामाणिकत्वमित्यत आह ॥ न चेति॥ तथा प्रमाणेभ्यः प्रतीत्यभावादिति भावः। ननु ज्ञाननिवर्त्यत्वेन बोधनान्मिथ्यात्वसिद्धिरित्यत आह ॥ ज्ञाननिवर्त्यत्वेनेति॥ ज्ञाननिवर्त्यत्वस्य पूर्वज्ञानादाविव सत्यत्वेऽप्युपपत्तेरिति भावः।

इति सामान्येनाविद्याप्रमाणभङ्गः।

## न्यायामृतप्रकाशः

अप्रामाणिकत्वादिति। सत्वाभावेन प्रमाणावेद्यत्वादित्यर्थः। संमतिमाह ॥अविद्याया इति॥ किं तदविद्यात्वमित्यत आह ॥मानेति॥ मानानामापपतः प्राप्तिः तदसहिष्णुत्वं प्रमाणाविषयत्वमिति यावत् इदमेवासाधारणं लक्षणमित्यर्थः ॥तदुक्तीति॥ तस्य व्यावहारिकत्वाभावात्तत्र प्रमाणोक्तिरयुक्तेत्यर्थः। ननु तदपि व्यावहारिकमेवास्त्विति चेत्तत्राह ॥नहीति॥ उपादानोपादेययोरेकसत्ताकत्वनियमादिति भावः। ननु व्यावहारिकप्रमाणसिद्धत्वे विषयस्यापि व्यावहारिकसत्तया भाव्यं प्रातिभासिकाज्ञानं प्रातिभासिकप्रमाणगम्यं अतस्तदुक्तिर्युक्तेति चेत्तत्राह ॥नचेति॥ नन्वविद्यायाः प्रामाणिकत्वसत्वाभावे प्रमाणोक्तिर्युक्तेत्यत आह ॥नचेति॥ ॥असद्व्यावृत्तीति॥ तथाच तद्बोधनाय प्रमाणोक्तिर्युक्तेत्यर्थः ॥सुतरामिति॥ दोषशंकाकलंकित-प्रमाणवेद्यत्वरूपप्रामाणिकत्वापेक्षया सुतरामित्यर्थः ॥आपातादिति॥ तथाच मानापातासहिष्णुत्वाख्या-साधारणलक्षणहानिरिति भावः। किंचासद्व्यावृत्तिमात्रं बोध्यत इत्यत्राज्ञानस्य सत्वं न बोध्यते किंतु असद्व्यावृत्तिरेवेत्यभिप्रायः। किंवाऽज्ञानस्वरूपमेव न बोध्यते। किंनाम केवलाऽसद्व्यावृत्तिरेवेति नाद्य इत्याह ॥सत्वस्यैवेति॥ नत्वसद्व्यावृत्तेरित्यर्थः। उक्तानुमानेषु अज्ञानस्वरूपसाधकेषु ॥तदप्रतीतेरिति॥ असद्व्यावृत्त्यप्रतीतेरित्यर्थः। ननूक्तानुमानैरज्ञानस्वरूपेऽसद्व्यावृत्तिर्बोध्यतया विवक्षितेति चेत्तत्राह ॥नहीति॥ अनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वादिति भावः। न द्वितीय इत्याह ॥प्रमाणैरिति॥ असद्व्यावृत्तेः केवलायाः। अभावबोधस्याधिकरणसापेक्षत्वादिति भावः। ननूक्तानुमानप्रमाणैरज्ञानस्वरूपमपि बोध्यत एव न च प्रामाणिकत्वापत्त्या लक्षणविरोधः साक्षिवेद्यमेतदज्ञानमिति अन्यविषयत्वेनैवानुमानैर्बोधनेन साक्षाद्बोधकत्वाभावात् साक्षात्प्रमाणबोध्यत्वस्यैव प्रामाणिकत्वप्रयोजकत्वात् अन्यथा व्यवसायद्वाराऽनुव्यवसायविषयस्यापि रूप्यस्य तदापत्तेरित्याशंक्य निषेधति ॥नचेति॥ ॥साक्षीति॥ इदमज्ञानं साक्षिविषय इति अनुमानैरविषयीकरणादित्यर्थः ॥भ्रमेति॥ इदं रजतमिति ज्ञानवानहमित्येवं भ्रमविषयतयाऽनुव्यवसायबोध्यस्येत्यर्थः ॥न स्यादिति॥ तथाचाज्ञानस्वरूपस्य साक्षादेव प्रमाणविषयत्वेंगीकार्ये प्रामाणिकत्वापत्त्या लक्षणविरोधस्तदवस्थोतस्तत्र प्रमाणोक्तिरयुक्तेत्याशयः। नन्वविद्याया अप्रामाणिकत्वेन सत्वाभावेपि प्रमाणविषयत्वं संभवति अप्रामाणिकत्वे विधिरूपतया प्रमाणविषयत्वं न संभवतीत्येव निषेध्यतया तद्विषयत्वं तु स्यादेव अप्रामाणिकस्यापि रूप्यस्य नेदं रूप्यमिति बाधविषयत्वदर्शनादित्याशंक्याह ॥नचेति॥ तथा निषेधप्रतियोगित्वेन ॥न स्यादिति॥ अतः प्रामाणिकत्वमंगीकार्यं ततश्च लक्षणविरोधापत्त्या प्रमाणोक्तिरयुक्तेत्याशयः। ननु प्रमाणैरुक्तरूपेणाज्ञानस्याबोधनेपि ज्ञाननिवर्त्यत्वेन बोधनादप्रामाणिकत्वेन मिथ्यात्वं दुर्वारं तथाच लक्षणविरोध इत्यत आह ॥ज्ञाननिवर्त्यत्वेनेति॥ ज्ञाननिवर्त्यत्वेनानित्यत्वस्यैव बोधनादित्यन्वयः। नाप्रामाणिकत्वरूपमिथ्यात्वस्येत्येवकारार्थः। तत्र दृष्टांतः प्रकाशेति। नहि प्रकाशनिवर्त्यत्वेनांधकारस्यापि मिथ्यात्वं वाच्यं किंत्वनित्यत्वमेवेत्यर्थः। धीनाश्यत्वे त्वनित्यत्वमेव स्यान्न मृषात्मतेत्युक्तत्वादिति भावः। तथाचाज्ञानस्य प्रामाणिकत्वेंऽगीकार्ये लक्षणविरोधापत्त्याप्रमाणोक्तिरयुक्तेति सिद्धमिति भावः॥

॥सामान्येनाविद्यायां प्रमाणभंगविवरणम्॥

## २७. अविद्याप्रतीतिभङ्गः

**किं चाविद्या किं शुद्धसाक्षिचैतन्येनैव भाति? किं वृत्तिप्रतिबिम्बितेन तेन? नाद्यः, निर्दोषचित्प्रकाश्यत्वेनाज्ञानस्य पारमार्थिकत्वापातात्। मोक्षेऽपि तत्प्रतीत्यापत्तेश्च। तदा सा निवृत्तत्वान्न भातीति चेन्न, प्रतीतिमात्रशरीरस्य प्रतीत्यनुवृत्तौ निवृत्त्ययोगात्। एतेनाज्ञानस्य राहुवत् स्वावृतप्रकाशेनैव स्फुरणमिति निरस्तम्। नान्त्यः, अज्ञानस्य कदाचिदप्रतीत्यापातात्। अन्तःकरणाविद्यावृत्त्योः प्रमाणदोषाभ्यां जन्यतयेहोभयाभावेन वृत्त्ययोगाच्च। वृत्तेरपि वृत्त्यन्तरप्रतिबिंबित-साक्षिवेद्यत्वेऽनवस्थापातेन तदप्रतिबिम्बिततद्वेद्यत्वे मोक्षेऽपि वृत्तिप्रतीत्यापाताच्च। प्रतिबिम्बनोपाधित्वप्रयोजकस्य सत्त्वस्य पारमार्थिकत्वेन प्रातीतिक्या वृत्तेः प्रतीत्यधीनत्वेनान्योन्याश्रयाच्च।**

**अविद्याप्रतीतिभंगः ।**

### अद्वैतसिद्धिः

सा चाविद्या साक्षिवेद्या, न तु शुद्धचित्प्रकाश्या। साक्षी चाविद्यावृत्तिप्रतिबिम्बितचैतन्यम्। तेन निर्दोषचित्प्रकाश्यत्वेनाज्ञानस्य पारमार्थिकत्वापत्तिः, मोक्षेऽपि तत्प्रकाशापत्तिः, न च तदानीमविद्याया निवृत्तत्वात् तत्प्रकाशाभावः, प्रतीतिमात्रशरीरस्य प्रतीत्यवृत्तौ निवृत्त्ययोगादित्यादिदोषानवकाशः। अत एवोच्यते राहुवत् स्वावृतचैतन्यप्रकाश्याऽविद्येति। न चैवं कदाचिदविद्याया अप्रतीत्यापत्तिः, इष्टापत्तेः, समाधौ तथाभ्युपगमात्। न चाविद्यावृत्तेर्दोषजन्यत्वादत्र कथमविद्यावृत्तिः? अविद्याया एव दोषत्वात्। न च वृत्तेरपि वृत्त्यन्तरप्रतिबिम्बितचिद्भास्यत्वे अनवस्था, स्वस्या एव स्वभानोपाधित्वात्।

ननु– प्रमाणागम्यायामविद्यायां प्रमाणोपन्यासवैयर्थ्यम्, न च प्रमाणैरसद्व्यावृत्तिमात्रं बोध्यत इति वाच्यम्, अज्ञानमगृह्णतां तत्रासद्व्यावृत्तिबोधेऽप्यसामर्थ्यादिति– चेन्न, प्रमाणोपनीतासद्व्यावृत्तिविशिष्टाज्ञानं हि साक्षिणा गृह्यते। तथाचासद्व्यावृत्त्युपनयने प्रमाणानां चरितार्थत्वात् न काप्यनुपपत्तिः।

इत्यद्वैतसिद्धावविद्याप्रतीत्युपपत्तिः ॥

## न्यायामृततरङ्गिणी

शुद्धेति ॥ मोक्षकालीनानंदसाक्षिणेत्यर्थः । ननु साक्षी न शुद्धचैतन्यं । किंत्वविद्याप्रतिबिंबितं । तत् तस्य निर्दोषत्वाभावान्न तद्वेद्याज्ञानस्य पारमार्थिकत्वमिति चेन्न । प्रतिबिंबनोपाधिं प्रति सत्त्वं प्रयोजकं । अविद्यासत्त्वं च प्रातीतिकमिति साक्षिरूपाविद्याप्रतीतौ सत्यां तत्सत्त्वसिद्धिः तत्सिद्धौ चाविद्याप्रतिबिंबितचैतन्यरूपसाक्षिलक्षणाविद्या प्रतीतिसिद्धिरित्यन्योन्याश्रयात् शुद्धचैतन्यमेव साक्षीति वाच्यम् । तथाच तद्वेद्याविद्या कथं न पारमार्थिकीति भावः ॥ कदाचिदिति ॥ वृत्त्यभावकाल इत्यर्थः ॥ इहोभयाभावेनेति ॥ अविद्यायाः प्रातिभासिकत्वेनेंद्रिय-सन्निकर्षाभावात्प्रमाणाभावः । स्वस्मिन्स्वस्यादोषत्वात् । अविद्यायामविद्यांतराभावाच्च दोषाभाव इत्यर्थः ॥ ॥ अविद्याप्रतीतिभंगः ॥

## न्यायामृतकण्टकोद्धारः

एवं सामान्यतः प्रमाणवेद्यत्वं निराकृत्य साक्षिवेद्यत्वं निराकरोति ॥ किञ्चेति ॥ ॥ एतेनेति ॥ स्वस्य प्रतीतिमात्ररूपत्वे न प्रतीत्यनुवृत्तावनुवृत्तिनियमेन स्वावृतप्रकाशसम्भवान्मोक्षेऽपि प्रतीतिप्रसङ्गेनेत्यर्थः ॥ अज्ञानस्य चेति ॥ नन्वज्ञानस्य कदाचिदप्रतीतिरिष्टैव समाधावप्रतीयमानत्वादिति चेन्न । तथात्वे तस्य ज्ञातैकसत्त्वाभावप्रसङ्गात् साक्षिवेद्यस्य सुखादिवत् ज्ञातैकसत्त्वनियमात् । ननु सुखादिवदुपपत्तिः यदा प्रतीयते तदाऽस्ति अन्यदा नेति चेन्न । तथात्वेत्वज्ञानस्य सुखादिवत् सादित्वापातात् । न च घटादिवदज्ञानस्य प्रतीत्यभावेऽपि सत्वोपपत्तिरिति वाच्यम् । तस्य प्रातीतिकत्वात् प्रतीत्यभावेऽभावनियमात् । किञ्च वृत्तिर्द्विविधा अन्तः करणवृत्तिरविद्यावृत्तिश्चेति । उभयथापि वृत्तिप्रतिबिम्बित चैतन्यवेद्यता न सम्भवतीत्याह ॥ अन्तःकरणेति ॥ इह अज्ञानविषये । अज्ञानस्य प्रातीतिकत्वेन तत्र प्रमाणप्रवृत्या दोषाभावेन च वृत्तिद्वयस्याप्यसम्भवेन तत्प्रतिबिम्बित चैतन्यवेद्यता न सम्भवतीत्याशयः । न चाज्ञानमेव दोषोऽतो नानुपपत्तिरिति वाच्यम् । तस्य प्रातीतिकत्वेन प्रतीतिसत्त्वेऽज्ञानसत्त्वं तत्सत्त्वे च दोषसद्भावात् प्रतीतिरित्यन्योन्याश्रयात्माश्रयान्यतरप्रसङ्गात् ॥ वृत्तेरिति ॥ न च वृत्तिर्वृत्यन्तरप्रतिबिम्बितसाक्षिवेद्या न । किन्तु स्वप्रतिबिम्बितसाक्षिवेद्यैवातो नानवस्थेति वाच्यम् । वृत्तेरपि प्रातीतिकत्वेनोक्तदोषात् । वृत्तेः स्वविषयप्रकाशान्तर्भावे वृत्तेः स्वप्रकाशत्वापाताच्च । वृत्तिप्रतिबिम्बितस्य जडत्वेन वृत्तिसाध्यत्वेन च आध्यसिकसम्बन्धस्यातन्त्रत्वापाताच्च । तादृशस्य स्वप्रकाशत्वायोगेन ज्ञानान्तरसाध्यत्वेनानवस्थापाताच्च । अन्तःकरणवृत्तितुल्यत्वेन तयैव सर्वोपपत्तौ तदङ्गीकारवैयर्थ्याच्चेति दिक् । किन्त्ववृत्तेर्वृत्तिप्रतिबिम्बितचैतन्यवेद्यत्वाङ्गीकारे वृत्तेः प्रतिबिम्बनोपाधित्वं वक्तव्यम् । प्रतिबिम्बनोपाधित्वे हि सत्त्वं प्रयोजकम् । तत्र च प्रातीतिक्यां वृत्तौ प्रतिबिम्बनोपाधित्वप्रयोजकसत्त्वस्य प्रतीत्यधीनत्वमङ्गीकर्तव्यम् तथाचान्योन्याश्रयः । वृत्तेः प्रतीतौ सत्यां सत्त्वात्प्रतिबिम्बनोपाधित्वम् । प्रतिबिम्बनोपाधिके सति तत्प्रतिबिम्बितचैतन्येन वृत्तिप्रतीतिरित्यन्योन्याश्रय इत्याह ॥ प्रतिबिम्बनेति ॥ ननु

(कण्टकोद्धारः)

**सत्यस्य प्रतीत्यधीनत्वं कुत इत्यत उक्तम् ॥ अपारमार्थिकत्वेनेति ॥ प्रातीतिकत्वेनेत्यर्थः। इति अविद्याप्रतीतिभङ्गः।**

## न्यायामृतप्रकाशः

शुद्धेति। मोक्षककालीनेत्यर्थः। तेन चैतन्येन ॥ मोक्षेपीति॥ अज्ञानप्रकाशिकायाश्रितः सत्वादित्यर्थः। तदा मोक्षावस्थायाम्। सा अविद्या ॥ प्रतीतिमात्रेति॥ अज्ञानस्य प्रातिभासिकत्वादित्यर्थः ॥ प्रतीत्यनुवृत्ताविति॥ शुद्धचैतन्यरूपप्रतीतेर्मोक्षेप्यनुवृत्तत्वादित्यर्थः ॥ एतेनेति॥ अज्ञानस्य शुद्धचैतन्य प्रकाश्यत्वे मोक्षेपि तत्प्रतीतावापादितायां केनचिदुक्तं अज्ञानं स्वावृतेन चैतन्यरूपप्रकाशेनैव स्फुरति न चैतददृष्टचरं राहोः स्वावृतचंद्रप्रकाशेनैव स्फुरणात् अतो मोक्षे स्वस्य निवृत्तत्वेन स्वावृतप्रकाशाभावान्नस्फुरणमिति तदप्यनेनैव निरस्तम्। अज्ञानस्य प्रतीतिमात्रशरीरत्वेन प्रतीत्यनुवृत्तौ तन्निवृत्तेरेवायोगात्। अतो मोक्षेपि तत्प्रतीत्यापत्तिर्दुर्वरित्यर्थः ॥ कदाचिदिति॥ वृत्तिविलंबे सतीत्यर्थः। तथाच वृत्तेः कादाचित्कत्वेन तत्प्रतिबिंबितचैतन्यस्यापि कादाचित्कत्वात् कदाचिद्वृत्तिविलंबे सति अनादितया पूर्वं विद्यमानस्याप्यज्ञानस्याप्रतीत्यापत्त्या ज्ञातैकसत्वहानेरित्यर्थः। किंच वृत्तिप्रतिबिंबितचैतन्ये नाज्ञानभानमंगीकुर्वाणं प्रति प्रष्टव्यं वृत्तिशब्देनांतःकरणवृत्तिर्विवक्षिता अविद्यावृत्तिर्वा। नाद्यः अंतःकरणवृत्तेः प्रमाणजन्यत्वेनेहाप्यविद्यायाः प्रातिभासिकत्वेनेंद्रियसंनिकर्षाभावेन प्रमाणाभावात्। न द्वितीयः अविद्यावृत्तेर्दोषजन्यत्वेनेह स्वस्मिन्स्वस्यादोषत्वेनाविद्यायामविद्यांतराभावात्। अतो वृत्तेरेवायोगेन न वृत्तिप्रतिबिंबितचैतन्येनाविद्याभानमित्याह ॥ अंतःकरणेति॥ किंच न वृत्तिप्रतिबिंबितचैतन्यमज्ञानभासकं वृत्तिस्वरूपे मानाभावात्। ननु तत्प्रतीतिरेव तत्र मानमिति चेत् तत्र वक्तव्यं किं वृत्तिरपि वृत्तिप्रतिबिंबितसाक्षिवेद्या उत तदप्रतिबिंबितसाक्षिवेद्येति। नाद्यः अज्ञानाभासकवृत्तिभासकचैतन्यप्रतिबिंबनोपाधिभूताया अपि वृत्तेर्वृत्तिप्रतिबिंबितसाक्षिवेद्यत्वेऽनवस्था स्यात्। न द्वितीयः। वृत्तिभासकस्य वृत्तिप्रतिबिंबितशुद्धचैतन्यस्य मोक्षेपि सत्वेन तत्रापि वृत्तिप्रतीत्यापातादित्याह ॥ वृत्तेरपीति॥ अज्ञानस्य वृत्तिप्रतिबिंबितसाक्षिचैतन्यवेद्यत्वे दूषणांतरंचाह ॥ प्रतिबिंबितेति॥ अविद्यावृत्तिप्रतिबिंबितसाक्षिवेद्यत्वमेवाज्ञानस्येति त्वन्मतम्। न च तत्र दोषाभावः। स्वस्मिन्स्वस्यैव दोषत्वात् तथाचाविद्यावृत्तेरपि प्रातीतिकत्वेन प्रातीतिक्यां प्रातिभासिक्यां अविद्यायां विषये वर्त्तमाना या वृत्तिस्तस्यामविद्यायामिति यावत् चैतन्यप्रतिबिंबनं वदतातत्प्रतिबिंबनोपाधित्वप्रयोजकं सत्वं वाच्यं असतः शशशृंगादेः प्रतिबिंबनोपाधित्वाभावात् तच्च सत्वमपारमार्थिकमेव प्रातिभासिकमिति यावत् प्रातिभासिकवृत्तौ सत्वस्यापि प्रातिभासिकत्वात् एवं चाविद्यायां चैतन्यप्रतिबिंबनोपाधित्वप्रयोजकसत्वस्याविद्याप्रतीत्यधीनत्वेनान्योन्याश्रयः। साक्षिरूपाविद्याप्रतीतौ सत्यां अविद्यासत्वसिद्धिः तस्याः प्रातिभासिकत्वेन प्रतीतेरेव तत्सत्वरूपत्वात् तत्सिद्धौ च प्रतिबिंबनोपाधिभूतसत्वप्राप्त्या तत्र चैतन्यप्रतिबिंबनसंभवेनाविद्यावृत्तिप्रतिबिंबितचैतन्यरूपसाक्षिलक्षणाविद्याप्रतीतिसिद्धिरिति तथाचाविद्याप्रतीतेरेवायुक्तत्वादविद्याऽप्रामाणिकीत्याशयः ॥ अविद्याप्रतीतिभंगविवरणम्॥

## २८. अज्ञानस्य विवरणोक्तचिन्मात्राश्रितत्वभङ्गः

अविद्याश्रयश्च दुर्वचः। यदत्रोक्तं विवरणे– चिन्मात्रमेवाज्ञानाश्रयः, तदन्यस्याज्ञानकल्पितत्वेन तदाश्रयत्वायोगात्। तदुक्तम्–

आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ।। इति

दर्पणस्य मुखमात्रसम्बन्धेऽपि प्रतिमुखे मालिन्यवत् प्रतिबिम्बे जीवे संसारो न नु बिंबे ब्रह्मणि, उपाधेः प्रतिबिम्बपक्षपातित्वादिति।

अत्र ब्रूमः–

विरोधाद् धर्मिमानेन बाधात् श्रुतिविरोधतः ।
भ्रान्त्यैकाधिकरण्याच्च नाज्ञानं शुद्धचिद्गतम् ।।

तथा हि– एकविषयज्ञानभावरूपाज्ञानयोः तमः प्रकाशयोरिव विरुद्धत्वात्, नाश्रयाश्रयित्वम्। न हि ज्ञानानिवर्त्यमज्ञानं भवति। न च वृत्तिज्ञाननिवर्त्यं तद्, विवरणेऽन्तःकरणपरिणामे ज्ञानत्वोपचारादित्युक्तत्वेनौपचारिकज्ञानविरोधिनो मुख्याज्ञानत्वायोगाद् अज्ञानाविरोधित्वे चैतन्यस्य घटादिवज्ज्ञानत्वायोगाच्च। ज्ञानाज्ञाने हि ज्ञातुरर्थप्रकाशाप्रकाशौ। न च तदविरोधित्वेऽपि व्यवहारादिहेतुत्वात् ज्ञानत्वम्। अज्ञाननिवर्तकस्यैव तद्धेतुत्वानुभवात्। न च विवरणे करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानमित्युक्तत्वेनाज्ञानं ज्ञानकरणविरोध्येव, न तु ज्ञप्तिविरोधीति वाच्यम्, न जानामीति ज्ञप्तिविरोधित्वेनानुभूयमानस्याज्ञानान्तरत्वापातात्। साक्षिवेद्ये सुखादावज्ञानादर्शनाच्च। न च चैतन्याज्ञानयोः सौरप्रकाशदिवाभीतान्धकारयोरिव तत्सत्यत्वमिथ्यात्वाभ्यामविरोधाश्रयाश्रयितेति वाच्यम्, सौरप्रकाशविरुद्धतत्समसत्ताकतमोऽन्तरस्येव चैतन्यप्रकाशविरुद्धतत्समसत्ताकाज्ञानान्तरस्याभावेनातात्त्विकाज्ञानविरोधस्यैव वाच्यत्वात्। अन्यथा तात्त्विकसुखरूपस्यात्मनो व्यावहारिकदुःखरूपता स्यात्।

किं चाहमज्ञ इति धर्मिग्राहकसाक्षिबाधः। न चात्मनि स्थौल्याश्रयदेहैक्याध्यासादहं स्थूल इति वदहंकारे अज्ञानाश्रयचिदैक्याध्यासाद्वा दग्धृत्वायसोरेकाग्निसम्बन्धाद् अयो

दहतीतिवदज्ञानाहंकारयोरेकचि दध्यासाद्वाहमज्ञ इति धीर्भ्रान्तिरिति वाच्यम्, अद्यापि चितोऽज्ञानाश्रयत्वासिद्ध्याऽन्योऽन्याश्रयात्। दोषाजन्यस्याहमज्ञ इति साक्षिज्ञानस्य भ्रान्तित्वायोगाच्च। बाधकाभिमतस्यैव धर्मिग्राहकैतद्बाधितत्वेनैतद्बाधकाभावाच्च। मिथ्यारूप्येदमंशसम्बन्धतदध्यस्ताज्ञानसम्बन्धस्यापि तद्ग्राहकेणैव ग्राह्यत्वाच्च। अज्ञानाश्रयत्वधीबलादेवाहमर्थोऽकल्पितो वाऽविद्यायामनुपपत्तिरलंकारो वाऽस्तु।

किं च "निरनिष्टो निरवद्यः शोकं मोहमत्येति नित्यमुक्तः" – इत्यादिश्रुतिविरोधः। न हि मौढ्यं न दोषः। नापि बन्धकाज्ञानाश्रयो मुक्तः। न च तात्त्विकाविद्यादेरेव निषेधः, त्वन्मते तस्याप्रसक्तेः। जीवेऽपि तदभावेन जीवब्रह्मणोः सावद्यत्वनिरवद्यत्वादिव्यवस्थाश्रुतिविरोधाच्च। मुक्त्यन्वयिनि चिन्मात्रे जीव इव शोकस्य तात्त्विकस्याभावेऽपि मोहवद् व्यावहारिकत्वापाताच्च। न च श्रुतौ मोहशब्दस्तत्कार्यपरः, मुख्यार्थहानेः, तत्कार्यशोकादेः पृथगुक्तेश्च। न चैवं श्रुतिः बिंबस्थानीयब्रह्मपरा। जीवेऽप्यज्ञानाभावेन ज्ञाज्ञावीशानीशावित्यादिश्रुतिषु जीवे अज्ञत्वोक्त्य योगात्। यद्भावो मुक्तिस्तच्चिन्मात्रं सावद्यमन्यन्निरवद्यमित्यस्य विरोधाच्च। न च जीवस्येव शुद्धस्याज्ञत्वे श्रुत्याद्यस्ति।

किं च शुक्त्याद्यज्ञानवत् ज्ञातुरर्थाप्रकाशरूपमिदमप्यज्ञानं स्वकार्येण भ्रान्तिसंसारादिना स्वनिवर्तकेन तत्त्वज्ञानेन स्वसमानयोगक्षेमेण ज्ञानप्रागभावेन च सामानाधिकरण्याय ज्ञात्रात्मनिष्ठम्, न तु ज्ञानमात्राश्रितम्। उक्तं हि विवरणेऽपिजडस्य चाज्ञानाश्रयत्वे भ्रान्तिसम्यग्ज्ञानयोरपि तदाश्रयत्वप्रसंगादिति। चिन्मात्रेऽपि ज्ञातृत्वाध्यासोऽस्तीति चेन्न, तस्याविद्याधीनत्वेनान्योऽन्याश्रयात्। चैतन्ये बुद्धिस्थकर्तृत्वाध्यासेन तत्स्थभोक्तृत्वाध्यासवद् बुद्धिस्थज्ञातृत्वाध्यासेनेतत्स्थाज्ञत्वाध्यासापत्त्या बुद्धेरेवाज्ञानाश्रयत्वापाताच्च, देहादावपि ज्ञातृत्वाध्याससद्भावाच्च। बुद्ध्यवच्छिन्न एव तद्धर्माणां ज्ञातृत्वकर्तृत्वभोक्तृत्वादीनामध्यासेन चिन्मात्रे तदभावाच्च। तेषां चिन्मात्र एवाध्यासे तु ज्ञातृत्वादिमत्येवाज्ञानांगीकारेण जीवाज्ञानमतं स्यात्। न च शुक्त्यज्ञानमपि शुक्त्यवच्छिन्नचैतन्यस्थमेव, अहं जानामीतिवदहं न जानामीति ज्ञातृस्थत्वानुभवात्। न च विशेष्यविशिष्टभावस्यैव तंत्रत्वाद्विशेष्यस्थमज्ञानं विशिष्टे जीवे संसारहेतुर्विशिष्टस्थ

तत्त्वधीविरुद्धं चेति वाच्यम्, विशिष्टे ब्रह्मण्यपि संसारापातात्। देहं प्रति विशेष्याहंकारस्थकर्तृत्वेन देहविशिष्टे भोक्तृत्वापाताच्च। विशेष्यस्थमुक्तेर्विशिष्टस्थ-संसारविरोधापाताच्च। एतेन विशेष्यविशिष्टयोरध्यस्तमैक्यं तन्त्रमिति निरस्तम्। न चोपाधेः प्रतिबिंबपक्षपातित्वस्वाभाव्यात् जीवे संसार इति वाच्यम्, श्रुत्यादिविरोधसाम्ये अर्धजरतीयायोगेन चिन्मात्र एवाज्ञानस्येव संसारस्याप्यंगीकार्यत्वात्, प्रतिबिंबस्य च्छायादिवद्वस्त्वन्तरत्वाच्च। अचाक्षुषस्य चैतन्यस्य गन्धरसादिवत्प्रतिबिंबनानर्हत्वाच्च। प्रतिबिम्बत्वे जीवस्य सादित्वाद्यापाताच्च। सूर्यस्य जल इव मरीचिकाजलेष्वप्रतिफलनेन चिदसमसत्ताकस्याज्ञानस्य चितं प्रत्युपाधित्वायोगाच्च। अस्वच्छद्रव्यस्याज्ञानस्य प्रतिबिंबनोपाधित्वायोगाच्च। अविद्यायाश्चिन्मात्राभिमुख्याभावाच्च। उपाधेरज्ञानस्या-काशाद्यात्मना परिणामे प्रतिबिंबापायापाताच्च। मुखप्रतिमुखानुगतमुखत्वातिरिक्त-मुखमात्रत्वरूपव्यक्त्यन्तरस्यैव जीवब्रह्मानुगतचित्त्वातिरिक्तचिन्मात्ररूपस्याज्ञानाश्रय-त्वयोग्यव्यक्त्यन्तरस्य चाभावाच्च। अनादिभावो न निवर्तत इति सामान्यव्याप्तेरज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्त्यैवोपाधिः प्रतिबिंबक्षपातीति सामान्यव्याप्तेरज्ञानं स्वाश्रय एव भ्रान्त्यादिहेतुरिति विशेषव्याप्त्या बाधाच्च। बन्धस्य चिन्मात्राश्रित-मोक्षासामानाधिकरण्याच्च। न च व्यक्त्यन्तराभावेऽपि जीवाश्रितमेवाज्ञानम्, चिदाश्रयत्वोक्तिस्तु चित्त्वस्याधिकरणतावच्छेदकत्वादिति युक्तम्, अन्योऽन्याश्रया-देर्वक्ष्यमाणत्वात्। ब्रह्मण्यतिप्रसक्तस्य चित्त्वस्याधिकरणतानवच्छेदकत्वाच्च। चिन्मात्र-रूपविशेष्यस्थाज्ञानेन विशिष्टे संसार इति च निरस्तम्।

किं चोपाधेः प्रतिबिम्बपक्षपातित्वं किं तत्र स्वधर्मप्रतिभासकत्वम्? स्वकार्यप्रतिभासकत्वं वा? स्वकार्यनिष्ठधर्मप्रतिभासकत्वं वा? प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वं वा? नाद्यः, मालिन्यादेर्दर्पणादिनिष्ठत्ववत् सुषुप्त्याद्यनुवृत्तस्या-विद्यारूपस्य वाऽविद्यावच्छिन्नत्वरूपस्य वा तत्प्रतिबिम्बितत्वरूपस्य वा सुषुप्त्याद्य-ननुवृत्तस्य कर्तृत्वप्रमातृत्वादिरूपस्य वा संसारस्याज्ञाननिष्ठत्वाभावात्। ज्ञानक्रियासंस्काराणां च त्वन्मते अज्ञानस्थत्वेऽपि नित्यातीन्द्रियाणां तेषामात्मनि कदाप्यप्रतीतेः। "अविद्यास्तमयो मोक्ष, सा संसार उदाहृत" इति त्वन्मतेऽपि अविद्या बन्धिका बन्धो वा, न तु बद्धा। न द्वितीयः, विच्छेदादेरुपाधिकार्यस्य

बिम्बे महाकाशे च दर्शनान्मुखस्थबिम्बत्वादेः ब्रह्मस्थसार्वज्ञ्यादेश्चानौपाधिकत्वापाताच्च। प्रतिमुखगतस्थौल्यादेरुपाधिकार्यत्वेऽपीह जीवगतस्य संसारस्यानादित्वेनाकार्यत्वाच्च। न तृतीयचतुर्थौ दर्पणघटादावदृष्टेः। एवं बुद्धिरूपोपाधेरपि न प्रतिबिम्बपक्षपातित्वम्, तस्या प्रतिबिम्बपक्षपातिजपाकुसुमस्थानीयत्वेन तत्पक्षपात्यादर्शस्थानीयत्वाभावात्।

नन्वस्तु तर्हि चिन्मात्रस्यैवाऽज्ञानं संसारश्च, तदन्यस्य मिथ्यात्वेन मोक्षसमानाधिकरणबन्धायोगात् नित्यमुक्तत्वश्रुतिस्तु बिम्बस्थानीयब्रह्मपरेति चेन्न, घटदर्पणोपाधिकयोः परिच्छिन्नत्वमालिन्ययोरवच्छिन्नाकाशप्रतिबिम्बयोरिवाकाश मात्र-मुखमात्रयोरदर्शनेनावच्छेदपक्षे प्रतिबिम्बपक्षे चास्यायोगात्। बिम्बे ब्रह्मणीव प्रतिबिम्बे जीवेऽपि संसाराभावेन जीवब्रह्मणोः संसारासंसारव्यवस्थाश्रुत्ययोगाच्च। न च तार्किकमते आत्मनि दुःखाश्रयता देहादिनेवेहापि चिन्मात्रे संसाराश्रयता जीवत्वेनावच्छिन्ना तदभिप्राया च श्रुतिरिति वाच्यम्, त्वन्मते आत्मन इवात्रापि चित एवानर्थान्वयेन तद्भावरूपमुक्तेरपुमर्थत्वापातात्। नित्यमुक्तत्वश्रुतेर्निर्विषयत्वापाताच्च, न हि सा कल्पितविशिष्टविषया।

अथ नावच्छेदो नापि प्रतिबिम्बनम्, किं त्वविद्यया ब्रह्मण एव जीवत्वम्।

राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥

इति वार्तिके। कश्चित्तु किल राजपुत्रो व्याधगृहे संवर्धित'' इत्यादिबृहदारण्यकभाष्ये च व्याधवर्धितराजपुत्रदृष्टान्तोक्त्या ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया च मुच्यत इति स्वीकारात्। नित्यमुक्तत्वश्रुतिस्तु तत्रैव तत्त्वतः कदापि संसाराभावाभिप्रायेति चेन्न यादृशः कल्पितोऽप्यनर्थरूपः ज्ञानेनोच्छेत्तव्यो बन्धः सदा तदभावस्यैव तत् श्रुत्यर्थत्वेन कल्पितेनापि संसारेणास्पृष्टचैतन्याभावे नित्यमुक्तत्वश्रुतेर्निर्विषयत्वापातात्। अन्यथा मुक्तौ शोकाभावश्रुतिरपि शोकस्य तात्त्विकनिषेधपरा स्याद्, असर्वज्ञत्वेनानुभवसिद्धात् जीवादन्यस्य चेतनस्याभावेन सार्वज्ञ्यादि-श्रुतेर्निर्विषयत्वापाताच्च। बहुजीववादे ब्रह्मभावरूपमुक्तेरपुमर्थत्वापाताच्च। एकजीववादेऽपि जीवब्रह्मणोः संसारासंसारादिव्यवस्था श्रुतिविरोधाच्च। तयोर्व्यावहारिकभेदस्याप्यभावेन

त्वन्मतेऽपि तत्पराभिः द्वा सुपर्णा, ''य आत्मनि तिष्ठन्ति'' त्यादिश्रुतिभिः।

अन्यश्च परमो राजन् तथान्यः पंचविंशकः।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥

इत्यादिस्मृतिभिः ''शारीरश्चोभयेऽपि हि भेदेनैनमधीयते भेदव्यपदेशाच्चान्य'' इत्यादिसूत्रैः। ''तस्माच्छारीरादन्य एवेश्वरः, आत्मानौ हि ताबुभौ चेतनौ। एकः कर्ता भोक्ता अन्यस्तद्विपरीतोऽपहतपाप्मत्वादिगुण'' इत्यादि त्वद्भाष्यैस्तत्त्वज्ञानसंसरणे चावदातत्वश्यामत्वादिवत् नेतरेतरत्रावतिष्ठेते इत्यादिविवरणादिग्रन्थैश्च विरोधाच्च।

किं च चिन्मात्रस्याज्ञानं स्वाभाविकं चेदानन्दादिवन्न निवर्तते। औपाधिकत्वे पाधिः स एव चेदात्माश्रयः, अन्यश्चेदन्योन्याश्रयश्चक्रकमनवस्था वेति।

अज्ञानस्य विवरणोक्तचिन्मात्राश्रितत्वभंगः॥

## अद्वैतसिद्धिः

अविद्याया आश्रयस्तु शुद्धं ब्रह्मैव। तदुक्तम्–

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥

दर्पणस्य मुखमात्रसंबन्धेऽपि प्रतिमुखे मालिन्यवत् प्रतिबिम्बे जीवे संसारः, न बिम्बे ब्रह्मणि, उपाधेः प्रतिबिम्बपक्षपातित्वात्। ननु कथं चैतन्यमज्ञानाश्रयः? तस्य प्रकाशस्वरूपत्वात्, तयोश्च तमःप्रकाशवद्विरुद्धस्वभावत्वादिति– चेन्न, अज्ञानविरोधि ज्ञानं हि न चैतन्यमात्रम्, किन्तु वृत्तिप्रतिबिम्बितम्, तच्च नाविद्याश्रयः, यच्चाविद्याश्रयः, तच्च नाज्ञानविरोधि। न च तर्हि शुद्धचितोऽज्ञानविरोधित्वाभावे घटादिवदप्रकाशत्वापत्तिः, वृत्त्यवच्छेदेन तस्या एवाज्ञानविरोधित्वात्, स्वतस्तृणतूलादिभासकस्य सौरालोकस्य सूर्यकान्तावच्छेदेन स्वभास्यतृणतूलादिदाहकत्ववत् स्वतोऽविद्यातत्कार्यभासकस्य चैतन्यस्य वृत्त्यवच्छेदेन तद्दाहकत्वात्। ननु अहमज्ञ इति धर्मिग्राहकेण साक्षिणा अहङ्काराश्रितत्वेनाज्ञानस्य ग्रहणाद् बाधः, न च स्थौल्याश्रयदेहैक्याध्यासादहं स्थूल इति वदज्ञानाश्रयचिदैक्याध्यासाद्

(अद्वैतसिद्धिः)

दग्धृत्वायसोरेकाग्निसंबंधादयो दहती'तिवदज्ञानाहङ्कारयोरेकचिदैक्याध्यासाद्वा 'अहमज्ञ' इति धीर्भ्रान्तेति वाच्यम्, चितोऽज्ञानाश्रयत्वासिद्ध्या अन्योन्याश्रयादिति चेन्न, अहंकारस्याविद्याधीनत्वेन तदनाश्रयतया चित एवाज्ञानाश्रयत्वे सिद्धे 'अहमज्ञ' इति प्रतीतेरैक्याध्यासनिबन्धनत्वेनाबाधकत्वात्। न च अविद्याश्रयत्वादेवाहङ्कारोऽकल्पितोऽस्तु, कल्पित एव वा तदाश्रयत्वमस्तु अविद्यायामनुपपत्तेरलङ्कारत्वादिति वाच्यम्, अहमर्थस्य ज्ञाननिवर्त्यत्वेन दृश्यत्वेनाकल्पितत्वायोगात्, चिन्मात्राश्रितत्वं विनातद्गोचरचरम-वृत्त्यनिवर्त्यत्वापातात्, स्वकल्पितस्य स्वाश्रितत्वेन स्वाश्रयत्वायोगात्। न चाविद्यायामनुपपत्तिरलङ्कारः, अनुपपत्तिमात्रं नालङ्कारः, किन्तु सत्त्वादिप्रापकयुक्तावनुपपत्तिः, अन्यथा वादिवचसोऽनवकाशापत्तेः। ननु– 'निरनिष्टो निरवद्यः शोकं मोहमत्येति नित्यमुक्त' इति श्रुतिविरोधात् न शुद्धचितोऽविद्याश्रयत्वम्, न हि मौढ्यं न दोषः, नापि बन्धकाज्ञानाश्रयो मुक्तः, न च तात्त्विकाविद्यादेरेव निषेधः, त्वन्मते तस्याप्रसक्तेः, जीवेऽपि तदभावेन जीवब्रह्मणोः सावद्यत्वनिरवद्यत्वव्यवस्थाश्रुतिविरोध इति चेन्न, अवद्यस्य चिति कार्यकारित्वाभावेन कार्यकरत्वाकर्यकारत्वाभ्यामेव सावद्यत्वनिरवद्यत्वव्यवस्थोपपत्तेः, उपाधेः प्रतिबिम्बपक्षपातित्वात्। न च चिन्मात्रस्याविद्याश्रयत्वे प्रमाणाभावः, जीवाश्रितत्वे च प्रमाणमस्तीति वाच्यम्, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति श्रुतेरेव प्रमाणत्वात्। न च 'ज्ञाज्ञावीशानीशा'विति जीवाज्ञानप्रतिपादकश्रुतिविरोधः, तदाश्रयत्वाभावेऽपि तत्कार्ययोगितया अज्ञत्वव्यपदेशोपपत्तेः। न च ब्रह्मणोऽपि जीवाश्रिताज्ञानविषयत्वेन मायित्वोपपत्तिरिति वाच्यम्, जीवत्वस्याश्रयतावच्छेदकत्वे परस्पराश्रयप्रसङ्गात्।

ननु– शुक्त्याद्यज्ञानवत् ज्ञातुरर्थाप्रकाशरूपमिदमप्यज्ञानं स्वकार्येण भ्रान्त्यादिना स्वनिवर्तकेन तत्त्वज्ञानादिना स्वसमानयोगक्षेमेण ज्ञानप्रागभावेन च सामानाधिकरण्याय ज्ञात्रात्मनिष्ठम्, न तु चैतन्यरूपज्ञानमात्राश्रितमिति चेत्, न, चैतन्यस्यैव ज्ञातृत्वेन ज्ञातुरर्थाप्रकाशरूपत्वस्य सम्यक् ज्ञानाश्रयत्वस्य भ्रान्त्यादिसामानाधिकरण्यस्य चोपपत्तेः। न चैवं ज्ञातृत्वे सत्यविद्याश्रयत्वम्, अविद्यायां च ज्ञातृत्वमित्यन्योन्याश्रय इति वाच्यम्, अविद्याया ज्ञातृत्वानपेक्षत्वेनान्योन्याश्रयाभावात्। न हि सामानाधिकरण्यमस्तीत्येतावतैव तदपेक्षया अनया भवितव्यम्। न च– शरीरेऽपि ज्ञातृत्वाध्याससंभवेन तत्राप्यज्ञानाश्रयत्वापत्तिरिति वाच्यम्, न हि ज्ञातृत्वाध्यासो अज्ञानाश्रयत्वे प्रयोजकः,

(अद्वैतसिद्धिः)

येन तन्मात्रेण तदापद्येत, किंतु प्रसक्तप्रकाशत्वं अज्ञानानाश्रितत्वं च। न चैवं अविद्याश्रयस्य ज्ञातृत्वभोक्तृत्वादिमत्त्वे जीवाश्रिताज्ञानपक्षप्रवेश इति – वाच्यम्, अविद्यावच्छिन्नस्य हि ज्ञातृत्वम्, अविद्या च नाविद्यावच्छेदेन, सामानाधिकरण्यं चावच्छेद्यांशैक्यमादाय। यथोपाधिसंबन्धो मुखमात्र एव, औपाधिकमालिन्यसंबन्धस्तु उपाध्यवच्छिन्ने, बिम्बप्रतिबिम्बयोरैक्यात्, तथा सामानाधिकरण्यमपि। यथा प्रतिबिम्बो न वस्त्वन्तरं, तथा वक्ष्यते। ननु– शुक्त्यज्ञानमपि शुक्त्यवच्छिन्नचैतन्यगतं वाच्यम्, तथा च 'अहं जानामीच्छामी'तिवद् 'अहं न जानामीति ज्ञातृस्थत्वानुभवविरोध इति चेन्न, अज्ञानद्वैविध्यात्। एकं हि शुक्त्यवच्छिन्नचैतन्याश्रितं तद्गतापरोक्षभ्रमजनकं तद्विषयापरोक्षप्रमानाश्यम्, अपरं च परोक्षभ्रमजनकं तद्विषयप्रमामात्रनाश्यम् प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्याश्रितमित्युक्तं प्राक्। तत्र प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्यगताज्ञानविषयकोऽयमनुभवः। तेन प्रमातृनिष्ठत्वविषयतास्य न विरुध्यते। अत एव विषयगताऽज्ञाने विद्यमानेऽपि प्रमातृगताज्ञाननाशेन न जानामीति व्यवहाराभावः।

ननु– उपाधेः प्रतिबिम्बपक्षपातित्वान्न ब्रह्मणः संसारित्वमित्युक्तं, तदयुक्तम्, बिम्बप्रतिबिम्बभावस्यैवासंभवात्। तथा हि– अचाक्षुषस्य चैतन्यस्य गन्धरसादिवत् प्रतिबिम्बनानर्हत्वात्, प्रतिबिम्बत्वे जीवस्य सादित्वापाताच्च, सूर्यस्य सरिज्जल इव मरीचिकाजलेष्वप्रतिफलनेन चिदसमानसत्ताकस्याज्ञानस्य चितं प्रत्युपाधित्वायोगाद्, अस्वच्छस्याज्ञानस्य प्रतिबिम्बनोपाधित्वायोगाच्च, अविद्यायाश्चिन्मात्राभिमुख्यासंभवाच्च, अज्ञानस्याकाशाद्यात्मना परिणामे प्रतिबिम्बापायापाताच्चेति चेन्न, रूपवतः एव प्रतिबिम्ब इत्यस्या व्याप्तेः रूपादौ व्यभिचाराद् यथा भङ्गः, एवमाकाशादौ व्यभिचाराच्चाक्षुषस्यैव प्रतिबिम्ब इत्यस्या अपि व्याप्तेर्भङ्गः। वस्तुतस्तु– श्रुतिबलाच्चितः प्रतिबिम्बे सिद्धे तत्रैव व्यभिचारान्नेयं व्याप्तिः, तथा च रसादिव्यावृत्तं फलैकोन्नेयं प्रतिबिम्बप्रयोजकम्। नापि जीवस्य सादित्वापत्तिः, उपाधिबिम्बसम्बन्धानादित्वेनानादित्वोपपत्तेः। विस्तरस्तु सिद्धान्तबिन्दौ। यत्तूक्तं मरीचिकाजले सूर्यप्रतिबिम्बादर्शनाद् बिम्बसमानसत्ताकत्वं प्रतिबिम्बोद्ग्राहित्वे प्रयोजकमिति। तन्न, अध्यस्तस्य स्फटिकलौहित्यस्य दर्पणे प्रतिबिम्बदर्शनात्। तस्मान्मरीचिकाजलव्यावृत्तं स्वच्छत्वं फलैकोन्नेयं अननुगतमेव प्रतिबिम्बोद्ग्राहित्वे प्रयोजकम्, तच्च प्रकृतेऽप्यस्ति। अत एवाज्ञानस्यास्वच्छत्वान्न प्रतिबिम्बोपाधित्वमिति निरस्तम्।

(अद्वैतसिद्धिः)

यच्चोक्तं– चिन्मात्राभिमुख्याभावादिति, तत्किं सर्वात्मना चिदाभिमुख्याभावाद्वा? आभिमुख्यमात्राभावाद्वा? नाद्यः, चैतन्यवद्विभुत्वपक्षे सर्वात्मनापि संभवात्। न्यूनपरिमाणत्वेऽपि न दोषः, न्यूनपरिमाणस्यापि अधिकपरिमाणाकाशादिप्रतिबिम्बोद्ग्राहित्वदर्शनात्। न द्वितीयः, चैतन्यस्य सर्वतोऽपि प्रसृतत्वेन व्यवधानाभावेन च आभिमुख्यस्य सद्भावात्। न चाकाशाद्यात्मना परिणामे प्रतिबिम्बापायापत्तिः, प्रतिबिम्बप्रयोजकरूपाविरोधिपरिणामस्य प्रतिबिम्बाविरोधित्वेन प्रतिबिम्बानपायात्। न च– मुखप्रतिमुखानुगतमुखत्वातिरिक्तमुखमात्रत्वरूपव्यक्त्यन्तरस्येव जीवब्रह्मानुगतचित्त्वातिरिक्तचिन्मात्रत्वरूपस्याज्ञानाश्रयत्वयोग्यव्यक्त्यन्तर स्याभावान्मुखमात्रसंबंध्यादर्शवच्छिन्मात्रसंबन्ध्यज्ञानमिति कथम् इति वाच्यम्, अपरामृष्टभेदस्य मुखादेर्मात्रार्थत्वेनानुगतधर्म्यतिरेकसंभवात्।

ननु– उपाधिः प्रतिबिम्बपक्षपातीति सामान्यव्याप्तेरज्ञानं स्वाश्रय एव भ्रान्त्यादिहेतुरिति विशेषव्याप्त्या बाध इति चेन्न, विशेषव्याप्तिग्राहकसहचारदर्शनस्य विवादविषयातिरिक्तेऽसंभवेन विशेषव्याप्त्यसंभवात्। न च बन्धस्य चिन्मात्राश्रितमोक्षसामानाधिकरण्यानुपपत्तिः, अवच्छेद्यांशमादाय सामानाधिकरण्यस्योक्तत्वात्।

ननु– उपाधेः प्रतिबिम्बपक्षपातित्वं तत्र स्वधर्मप्रतिभासकत्वं वा? स्वकार्यप्रतिभासकत्वं वा? स्वकार्यनिष्ठधर्मप्रतिभासकत्वं वा? प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वं वा? नाद्यः, सुषुप्त्याद्यनुवृत्तस्याविद्यारूपस्याविद्यावच्छिन्नत्वरूपस्य वा, तत्प्रतिबिम्बितत्वस्य वा, सुषुप्त्यादावननुवृत्तस्य कर्तृत्वप्रमातृत्वादिरूपस्य वा संसारस्याज्ञाननिष्ठत्वाभावात्। ज्ञानक्रियासंस्कारादीनां त्वन्मते अज्ञाननिष्ठत्वेऽपि नित्यातीन्द्रियाणां तेषामात्मनि कदाप्यप्रतीतेः। 'अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।' इति त्वन्मतेऽपि अविद्या बन्धिका बन्धो वा, न तु बद्धा, येन स्वनिष्ठबन्धरूपधर्मसंक्रामकत्वं स्यात्। न द्वितीयः, विच्छेदादेरुपाधिकार्यस्य बिम्बे महाकाशे च दर्शनात्, मुखस्य बिम्बत्वादेर्ब्रह्मस्थसार्वज्ञ्यादेश्चानौपाधिकत्वापाताच्च। नापि तृतीयचतुर्थौ, दर्पणघटादावदृष्टेः। एवं बुद्धिरूपोपाधिरपि न प्रतिबिम्बपक्षपातीति चेन्न, अतिशयेन कार्यकरत्वमेव तत्पक्षपातित्वम्। तथा च विच्छेदादिरूपकार्यकरत्वसाम्येऽपि स्थौल्याद्यवभासरूपकार्यकरत्वेन दर्पणादेः प्रतिबिम्बपक्षपातित्ववत् कर्तृत्वभोक्तृत्वादिसंसाररूपकार्यकरत्वेनाविद्यायामपि प्रतिबिम्बपक्षपातित्वोपपत्तेः।

(अद्वैतसिद्धिः)

यत्तूक्तं मुखादिगतं बिम्बत्वं ब्रह्मगतं सार्वज्ञ्यादिकं चानौपाधिकं स्यादिति। तन्न, उपाधौ बिम्बकार्यकरत्वमेव नेतीति न ब्रूमः, किंतु प्रतिबिम्बे अतिशयेनेति। यदपि बुद्धिरूपोपाधेरपि न प्रबिम्बपक्षपातित्वम्, तस्य प्रतिबिम्बापक्षपातिजपाकुसुमस्थानीयत्वेन तत्पक्षपात्यादर्शस्थानोयत्वाभावादिति। तन्न, स्वनिष्ठस्थौल्यावभासकत्वेनादर्शस्येवास्यापि स्वनिष्ठधर्मावभासकत्वेन तद्वत् पक्ष पातित्वसंभवात्। तस्मादविद्याकृतविच्छेदेन ब्रह्मण्येव नित्यमुक्तत्वसंसारित्वसर्वज्ञत्वकिंचिज्ज्ञत्वादिव्यवस्थोपपत्तिः। एतेन असर्वज्ञत्वादिनानुभव-सिद्धाज्जीवात् अन्यस्य चेतनस्याभावेन सार्वज्ञ्यादिश्रुतिर्निर्विषया स्यात्, एकजीववादे संसार्यसंसारिव्यवस्थाऽयोगाद् 'द्वा सुपर्णा' 'य आत्मनि तिष्ठन् इत्यादिश्रुतिभिः 'अन्यश्च परमो राजन् तथाऽन्यः पञ्चविंशकः।' 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप' इत्यादिस्मृतिभिः 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'भेदव्यपदेशाच्च' इत्यादिसूत्रैः 'तस्माच्छारीरादन्य एवेश्वरः। आत्मानौ तावेतौ चेतनौ, एकः कर्ता भोक्ता अन्यस्तद्विपरीतोऽपहतपाप्मत्वादिगुण' इत्यादिभाष्यैः 'तत्त्वज्ञानसंसरणे चावदातत्वश्या-मत्वादिवत् नेतरेतरत्रावतिष्ठेते' इत्यादिविवरणग्रन्थैश्च विरोध इति निरस्तम्। ननु चिन्मात्रस्याज्ञानं स्वाभाविकम्? औपाधिकं वा? नाद्यः, आत्मवदनिवृत्तिप्रसङ्गात्। नान्त्यः, स्वस्यैवोपाधित्वे आत्माश्रयाद्, एतदपेक्ष्यान्यापेक्षत्वे अन्योन्याश्रयात्, तदन्यान्यापेक्षत्वे चानवस्थानादिति– चेन्न, स्वस्यैवाश्रयत्वोपाधित्वात्। न चात्माश्रयः, भेदस्य स्वभेदकत्ववदुपपत्तेः, स्वाभाविकस्यापि घटरूपस्य तत्प्रागभावस्य च निवृत्तिदर्शनात्।

इत्यद्वैतसिद्धौ अज्ञानस्य चिन्मात्राश्रयत्वोपपत्तिः।

## न्यायामृततरङ्गिणी

**अविद्याश्रयश्चेति। परमत इति शेषः। गोचरः विषयः। ननु चिन्मात्राश्रिताज्ञानेन चिन्मात्रे स्वकार्यसंसारापादने जीव इव बिम्बभूतब्रह्मानुगतचिदंशेपि संसारः स्यादत आह ॥ दर्पणस्येति॥ ॥ विरोधादिति॥ चैतन्यं नाज्ञानाश्रयः तद्विरुद्धत्वात् यथा प्रकाशस्तमस इति सामान्यव्याप्तिः। ननु विरोधाद्घटतदत्यंताभावयोरिव शुद्धचिदज्ञानयोः सामानाधिकरण्यं माभूत्। आश्रयाश्रयिभावस्तु तद्वदेव स्यादेवेति तत्रैव व्यभिचार इत्यत आह ॥एकविषयेति॥ नात्र विरोधस्तदभावरूपत्वं। येनोक्तो व्यभिचारः स्यात्। किंतु तन्निवर्तकत्वमित्यभिसंधाय तदनुगुणं दृष्टांतमाह**

(तरङ्गिणी)

॥ तमःप्रकाशयोरिति॥ ननु चैतन्यस्याज्ञानानिवर्तकत्वादुक्तहेतुरसिद्ध इत्यत आह ॥ नहीति॥ विवक्षितस्याज्ञानत्वसिध्यर्थं चैतन्यस्यावश्यं तन्निवर्तकत्वमास्थेयं। तथाच नासिद्धिरित्यर्थः। ननु अज्ञानस्य चैतन्यानिवर्त्यत्वेपि न तस्याज्ञानत्वाभावः। वृत्तिरूपज्ञाननिवर्त्यत्वेनाप्यज्ञान-लक्षणवत्तयाऽज्ञानत्वोपपत्तेरित्याशंक्य परिहरति ॥ नचेति॥ ॥ विवरण इति॥ आत्मनः स्वप्रकाशत्वं साधयितुं प्रमाणीकृतायामत्रायंपुरुषःस्वयंज्योतिरिति श्रुतौ। ननु ज्योतिःशब्देन प्रकाशगुणाभिधाने तदभिन्नात्मनोपि गुणत्वप्रसंग इति प्रकाशगुणवद्द्रव्यं ज्योतिःशब्देनाभिधातव्यं। तथाच जन्यज्ञानाख्यप्रकाशेनात्मा प्रकाशगुण इति नेयं श्रुतिः स्वप्रकाशत्वे प्रमाणमिति शंकायां, सर्वसाधारणस्य प्रकाशगुणवत्त्वरूपज्योतिष्ट्वस्य व्यावर्तनाय श्रुतौ स्वयमिति विशेषणो-पादानात्स्वयमेव ज्योतिर्नतु ज्योतिष्मानित्यर्थावगमाद्भवति श्रुतिस्तत्र प्रमाणमिति परिहृतायां, ननु कारकांतरानपेक्षया स्वयमेव स्वात्मनि ज्ञानं जनयतीति स्वयमिति विशेषणं किं न स्यादिति पुनः शंकायां, ज्ञानजन्मप्रयुक्तत्वात्कारकापेक्षायास्तदभावेऽपेक्षैव नास्तीति परिहृतायां, ननु विमतं जन्मवत् ज्ञानत्वात् विषयज्ञानवदिति ज्ञानजन्माशंकायां, विषयज्ञानवदित्यत्र ज्ञानशब्देन स्वरूपज्ञानं वा विवक्षितं वृत्तिर्वा आद्ये साध्यवैकल्यं लोके वेदे च स्वरूपज्ञाने जन्मादर्शनात् द्वितीये साधनवैकल्यं ज्ञातुरर्थप्रकाशस्य स्फुरणरूपस्य ज्ञानत्वादिति परिहृतायां, ननु वृत्तावपि ज्ञानशब्दो दृश्यत इति पुनः शंकायां, अंतःकरणपरिणामे ज्ञानत्वोपचारादित्युक्तम्। चैतन्यैक्याध्यासाद्वृत्तौ ज्ञानत्वमुपचर्यते दग्धत्वमिवायःपिंड इत्यर्थः ॥ अज्ञानेति॥ चैतन्यस्य ज्ञानत्वसिध्यर्थमपि तस्याज्ञाननिवर्तकत्वं वाच्यं। अन्यथा विमतं न ज्ञानं अज्ञानाविरोधित्वात् घटवदिति तस्य ज्ञानत्वं न स्यात्। तथाच नासिद्धिरित्यर्थः। उक्तानुमाने व्यवहाराजनकत्वमुपाधिमाशंक्य परिहरति ॥ नचेति॥ साधनव्यापकत्वान्नोपाधिरित्याह ॥ अज्ञानेति॥ असिद्धिमेव पुनराशंक्य निराकरोति ॥ नचेति॥ कथं तर्ह्यज्ञाने ज्ञाननिवर्त्यत्वरूपलक्षणायोग इत्यत उक्तं ॥ ज्ञानकारणविरोध्येवेति॥ ज्ञानाविरोधिनोपि चैतन्यस्य ज्ञानत्वाभावापत्तिं निराकरोति ॥ नतु ज्ञप्तीति॥ करणविरोधित्वेनाननुभूयमानस्य ज्ञप्तिविरोधित्वेनानुभूयमानस्याज्ञानस्य दुरपह्नवत्वादित्याह ॥ नजानामीतीति॥ चैतन्यस्या-ज्ञाननिवर्तकत्वे सुखादौ तन्निवर्तकस्यान्यस्याभावात्तत्राज्ञानानुभवः स्यादित्याह ॥ साक्षिवेद्यइति। ॥ सौरेति॥ दिवा भीतेन यथा सौरप्रकाशे मिथ्याभूतोंधकारः कल्प्यते तथा चैतन्ये मिथ्याभूतमज्ञानं कल्प्यत इत्यर्थः ॥ अज्ञानांतरस्येति॥ तत्सत्त्वे च तदेव सत्यभूतं जगत्कारणमस्तु किं मिथ्याभूतेन तेनेत्यर्थः ॥ अन्योन्याश्रयादिति॥ अहमज्ञ इति धर्मिग्राहकमानबाधाभावेऽज्ञानस्य चैतन्या-श्रितत्वसिद्धिः तत्सिद्धौ चाहमज्ञ इत्यस्यायो दहतीतिवद्गौणत्वेनाप्युपपन्नस्य चैतन्याश्रिता-

(तरङ्गिणी)

ज्ञानकल्पनायामबाधकत्वमित्यर्थः। भ्रांतित्वायोगादित्युपलक्षणं। साक्षात्संबंधविषयत्वाच्चेत्यपि द्रष्टव्यं। ननु दोषाजन्यत्वमसिद्धं बाधकाद्दोषजन्यत्वानुमानादित्यत आह ॥ बाधकाभिमतस्यैवेति॥ नन्वहमज्ञ इति धीर्नाज्ञाने साक्षात्संबंधेनाहंकाराश्रितत्वं विषयीकरोति। अहंकारभिन्नेऽज्ञानस्य साक्षात्संबंधग्राहकमानबाधितत्वादित्यत आह ॥ मिथ्यारूप्येति॥ धर्मिग्राहकेण यत्र यस्य संबंधो गृह्यते तत्रैव तस्य साक्षात्संबंध इति नाहंकारभिन्नेऽज्ञानस्य साक्षात्संबंधसिद्धिरित्यर्थः ॥ अहमर्थ इति॥ आत्मभिन्नत्वेन पराभिमत इति शेषः। तेनाकल्पितस्याज्ञानाश्रयस्यैवात्मत्वादिष्टापत्तिरिति निरस्तं। ननु निरवद्य इत्यादौ निर्दोषत्वमुच्यते। नत्वज्ञानराहित्यं। अतः कथं श्रुतिविरोध इत्यत आह ॥ नहीति॥ मुक्त इत्यनेनाप्यज्ञानराहित्यमुच्यत इत्याह ॥ नापीति॥ ननु परसमयप्राप्तमप्यसत्कारणादिवन्निषिध्यतामित्यत आह ॥ जीवेपीति॥ मोहमत्येतीति श्रुतौ मोहशब्दवाच्यस्याज्ञानस्य निषिद्धत्वान्नचिन्मात्रे तत्संभव इत्याह ॥ मुक्तीति॥ मोहनिषेध-स्यान्यविषयत्वं व्यवस्थाप्य चिन्मात्रे व्यावहारिकमोहांगीकारे समानन्यायतया तथाविधशोकोपि चिन्मात्रे प्रसज्येतेत्यर्थः। ननु शोकस्य निषिद्धत्वान्न तस्य व्यावहारिकस्याप्यंगीकारो युक्तः। मोहमत्येतीत्यत्र न मोहनिषेधः किंतु तत्कार्यनिषेध इति मोहस्यानिषिद्धत्वात्तस्य व्यावहारिकस्यांगीकारो न विरुद्ध इत्याशंक्याह ॥ नचश्रुताविति॥ ॥ बिंबस्थानीयेति॥ विवेचनाज्ञानमंगीकुर्म इति न श्रुतिविरोध इति भावः ॥ जीवेपीति॥ चिन्मात्रस्याज्ञानाश्रयत्वेन निरनिष्टत्वाभावात्तत्श्रुतेर्बिंबस्थानीयब्रह्मपरत्वे तत एव जीवेप्यज्ञानाभावेन जीवेऽज्ञान-प्रतिपादकश्रुतिविरोध इत्यर्थः ॥ ज्ञाऽज्ञाविति॥ जानातीति ज्ञः। ज्ञश्चाज्ञश्च ज्ञाज्ञौ ईशानीशावित्यन्वयः। न च जीवस्याज्ञानाश्रयत्वेपि तत्तत्कार्ययोगितयाऽज्ञत्वव्यपदेशः इति वाच्यम्। जीवेऽज्ञानप्रतिपादकश्रुत्यविरोधे सति चिन्मात्रेऽज्ञानसिद्धिः तत्सिद्धौ च जीवेऽज्ञानप्रतिपादक श्रुतेर्गौणार्थकल्पनमित्यन्योन्याश्रयापत्तेः। ननु चिन्मात्रेऽज्ञानप्रतिपादकश्रुतेः सत्वाज्जीवे तत्प्रतिपादिकायाः श्रुतेर्गौणत्वं कल्प्यते। अतो नान्योन्याश्रय इत्यत आह ॥ न चेति॥ अज्ञानस्य भ्रांतिसामानाधिकरण्यनियमे परेषांसंमतिमाह ॥ उक्तंहीति॥ भ्रांत्यज्ञानयोः सामानाधिकरण्यं शंकते ॥ चिन्मात्रेपीति॥ चिन्मात्रेऽज्ञानसिद्धौ तत्र ज्ञातृत्वाध्याससिद्धिः तत्सिद्धौ च ज्ञानाज्ञानयोर्वैयधिकरण्यरूपबाधकपरिहारसिध्या चिन्मात्रेऽज्ञानसिद्धिरित्यन्योन्याश्रय इत्याह ॥ तस्येति॥ ॥ चैतन्य इति॥ चैतन्ये बुद्धिगतभोक्तृत्वाध्याससिध्यर्थं तत्र बुद्धिगतकर्तृत्वस्याप्यध्यासो यथांगीक्रियते तथा चैतन्ये बुद्धिगतज्ञातृत्वस्याध्याससिध्यर्थं बुद्धिगतमेवाज्ञानमध्यस्यतामिति बुद्धिरेवाज्ञानाश्रयः स्यादित्यर्थः। तदुक्तं विवरणे भोक्तृत्वाध्यासः कर्तृत्वाध्यासमपेक्षते अकर्तुर्भोगाभावादिति। नन्वध्यस्तज्ञातृत्वेन समानाधिकरणमज्ञानमित्यंगीकुर्मः। बुद्धौ तु ज्ञातृत्वं

(तरङ्गिणी)

नाध्यस्तं किंतु स्वत एवेत्यत आह ।। देहादावपीति ।। ।। बुद्ध्यवच्छिन्न इति ।। बुध्यवच्छिन्नचैतन्यस्य ज्ञातृत्वादित्यर्थः ।। तदभावाचेति ।। ज्ञातृत्वाध्यासाभावादित्यर्थः । तथा च अर्थाप्रकाशस्याज्ञानस्य बुद्ध्यवच्छिन्नाध्यस्त ज्ञातृत्वावच्छिन्ने अध्यासः स्यात् न चिन्मात्र इत्यर्थः । चिन्मात्र एवेति ।। नतु बुध्यवच्छिन्ने चिन्मात्रेपीत्येवशब्दार्थः ।। ज्ञातृत्वादिमत्येवेति ।। ज्ञातुरर्थाऽप्रकाशरूपस्याज्ञानस्य शुक्त्याद्यज्ञानवत् ज्ञातृनिष्ठत्वांगीकारादित्यर्थः । ननु नाज्ञानं ज्ञातृनिष्ठं । दृष्टांताभावात् । न च शुक्त्यज्ञानं दृष्टांतः । तस्यापि ज्ञात्रनाश्रितत्वादित्याशंक्य परिहरति ।। नच शुक्तीति ।। ।। अहंजानामीति ।। ननु द्विविधमज्ञानं । एकं शुक्त्यज्ञानं शुक्त्यवच्छिन्नचैतन्याश्रितं तद्गतापरोक्षभ्रमजनकं तद्विषयापरोक्षप्रमानाश्यं । अपरं च परोक्षभ्रमजनकं प्रमामात्रनाश्यं प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्याश्रितं । तत्र प्रमातृत्वप्रयोजकोऽध्यवच्छिन्नचैतन्यगताज्ञाने विद्यमानेपि प्रमातृगताज्ञानविषयकोऽनुभवः । तेन प्रमातनिष्ठत्वं विषयस्य न विरुध्यते । अत एव चैतन्यगताज्ञाने विद्यमानेपि प्रमातृगताज्ञाननाशेन न जानामीति व्यवहाराभाव इति । मैवं । न जानामीत्यनुभवसिद्धप्रमातृगताज्ञानस्यैव शुक्त्यादिगतापरोक्षभ्रमहेतुत्वोपपत्तेस्तदतिरिक्तप्रमातृगताज्ञानसद्भावे मानाभावात् । न हि न जानामीति धीस्तत्र त्वन्मते मानांतरम् । रक्तपटाभावेपि शुक्लपटसत्त्वेन पटोस्तीति बुद्धिवत् प्रमातृगताज्ञानाभावेपि विषयगताज्ञानसत्त्वात् न जानामीति व्यावहारापत्तेश्च संसारतत्वज्ञानाभ्यामज्ञानस्य सामानाधिकरण्यमाशंक्य परिहरति ।। नचविशेष्येति ।। ।। विशिष्ट इति ।। विशिष्टनिष्ठं यत्तत्त्वज्ञानं तेन विशेष्यनिष्ठमज्ञानं निवर्तत इत्यर्थः ।। ब्रह्मण्यपीति ।। संसारहेत्वज्ञानाश्रयस्य चिन्मात्रस्य जीववत् ब्रह्मापेक्षयापि विशेष्यत्वादित्यर्थः । विशेष्यनिष्ठेन कारणेन विशिष्टे कार्यजननेऽतिप्रसंगमाह ।। देहमिति ।। ।। विशेष्यस्थमुक्तेरिति ।। एतच्चोपलक्षणं चैतन्यगतेनाज्ञानाविरोधेन वृत्तिविशिष्टेपि तदविरोधापाताचेति द्रष्टव्यं । विशिष्टे ब्रह्मण्यपि संसारापात इत्यत्र परिहारमाशंक्य परिहरति ।। नचोपाधेरिति ।। चिन्मात्रजीवयोर्विशेष्यविशिष्टभावो नास्तीत्याह ।। प्रतिबिंबस्येति ।। ।। अचाक्षुषस्येति ।। न च रूपंरूपमित्यादिश्रुतिबलात् चितः प्रतिबिंबे सिद्धे तत्रैव व्यभिचारान्नेयं व्याप्तिरिति वाच्यं । उक्तश्रुतेस्त्वदभिमतप्रतिबिंबपरत्वाभावात् । श्रुत्यर्थस्योक्तत्वाच्च ।। प्रतिबिंबत्व इति ।। न चोपाधिबिंबसंबंधानादित्वादनादित्वोपपत्तिरिति वाच्यं । उपाधिसंबंधस्यानादित्वे स्वाभाविकत्वापत्तेः । अनादिभावस्याविनाशाच्च ।। सूर्यस्येति ।। नन्वध्यस्तस्य स्फटिकलौहित्यस्य दर्पणे प्रतिबिंबदर्शनान्नप्रतिफलनीयसमानसत्ताकत्वनियम इति चेन्न । कुसुमयोगेन स्फटिके लौहित्यांतरोत्पत्तेर्न तत्र तस्याध्यस्तत्वमित्यर्थः ।। आभिमुख्येति ।। प्राच्यत्वप्रतीच्यत्वादिरूपमित्यर्थः । एतेन चैतन्याविद्ययोर्व्यापकत्वादाभिमुख्यमस्तीति निरस्तं ।। उपाधेरिति ।।

(तरङ्गिणी)

अपरिच्छिन्नाकाशादिपरिणामार्थं सर्वेषामप्यविद्यांशानां विकृतत्वादित्यर्थः। एतेन प्रतिबिंबप्रयोजकरूपाविरोधिपरिणामस्य प्रतिबिंबाविरोधित्वेन प्रतिबिंबानपाय इति निरस्तं ॥ मुखमात्रेति ॥ दर्पणादिसंबंधात्पूर्वकालीनं मुखं मुखमात्रमित्यर्थः ॥ चिन्मात्रेति ॥ अविद्यासंबंधस्यानादित्वादित्यर्थः। एतेन अपरामृष्टभेदस्य मुखादेर्मात्रार्थत्वेनानुगतधर्मातिरेकसंभव इति निरस्तं। नन्वज्ञानं स्वाश्रय एव भ्रांत्यादि करोतीत्येषा न विशेषव्याप्तिः। विवादविषयाज्ञानातिरिक्तेऽदर्शनादित्यतो दृष्टांतमाह ॥ अनादीति ॥ अज्ञानं ज्ञाननिवर्त्यमिति त्वदुक्तव्याप्तेरप्यज्ञानातिरिक्तेऽदर्शनान्न विशेषव्याप्तित्वं स्यादित्यर्थः ॥ ज्ञानक्रियेति ॥ ज्ञानरूपक्रियाजन्यः संस्कार इत्यर्थः। नन्वविद्यालक्षणोपाधेरपि बंधरूपस्वधर्मप्रतिभासकत्वमस्तीत्याशंक्य निराकरोति ॥ अविद्येति ॥ अविद्याया अबद्धत्वात्तस्या बंधो नास्तीत्यर्थः ॥ विच्छेदादेरिति ॥ उपाधिकार्यस्योभयत्र दर्शनान्न तस्य प्रतिबिंबमात्रपक्षपातित्वमित्यर्थः ॥ मुखस्थेति ॥ उपाधिना स्वकार्यं प्रतिबिंब एवावभास्यत इत्यंगीकारादित्यर्थः ॥ प्रतिमुखेति ॥ तथाच यदुपाधिकार्यविच्छेदादि न तत्प्रतिबिंबमात्रे यच्च प्रतिबिंबमात्रे संसारादि न तदुपाधिकार्यमित्यर्थः ॥ एवमिति ॥ यत्तु स्वनिष्ठस्थौल्याभासकत्वेनादर्शस्येव बुद्धेरपि स्वनिष्ठधर्मावभासकत्वेन तत्पक्षपातित्वसंभवादिति तत्तुच्छं नहि स्फटिको जपाकुसुमस्य प्रतिबिंबः स्वधर्मावभासकत्वमात्रेण प्रतिबिंबपक्षपातित्वोक्तौ तु तस्य बिंबपक्षपातित्वमेव किं नोच्यते। नन्वतिशयेन प्रतिबिंबे कार्यकरत्वमेव तत्पक्षपातित्वं। तथाच विच्छेदादिरूपकार्यस्योभयत्र साम्येपि स्थौल्याद्यवभासरूपकार्यकरत्वेन दर्पणस्येव कर्तृत्वभोक्तृत्वरूपसंसारकरत्वेनाविद्यायाः प्रतिबिंबपक्षपातित्वमिति। मैवम्। बिंबेपि बिंबत्वादेरसाधारण्यस्योपाध्यधीनत्वे बिंबपक्षपातित्वापातात् ॥ अवच्छेदपक्ष इति ॥ अंतःकरणाद्यवच्छिन्नो जीव इति वा अविद्याप्रतिबिंबितो जीव इति वा पक्ष इत्यर्थः ॥ तन्मत इति ॥ तार्किकमते आत्मा दुःखाधारःआधारतावच्छेदकं देहादि इतिवत् अत्रापि चिन्मात्रेऽज्ञानमिति मतेपि इत्यर्थः ॥ नहीति ॥ कल्पितस्याविद्यकत्वेन नित्यमुक्तत्वाभावादित्यर्थः ॥ यादृश इति ॥ कल्पितोपि यादृशोऽनर्थरूपादिरिति योजना ॥ अन्यथेति ॥ संसारवत्यपि नित्यमुक्तत्वश्रुतेरुपपत्तौ शोकवत्यपि शोकाभाव श्रुतेरुपपत्तौ तत् श्रुतिबलात् मुक्तौ शोकनिषेधो न स्यादित्यर्थः ॥ असर्वज्ञत्वादिनेति ॥ ब्रह्मैव स्वाविद्यया संसरतीति पक्षे जीवातिरिक्तस्य बिंबस्थानीयस्य ब्रह्मणोऽभावात् जीवस्यासर्वज्ञत्वेनानुभूयमानत्वात् सर्वज्ञत्वस्यापि कल्पितत्वाकल्पितत्वाभ्यां व्यवस्थाया अप्यसंभवादित्यर्थः ॥ ब्रह्मभावेति ॥ कल्पितेनापि संसारेणास्पष्टस्य चैतन्यस्याभावे संसारिब्रह्मप्रतीतिरेव मुक्तिरित्यापातेनेत्यर्थः। ननु बहुजीववादे मुक्तेस्सत्वेनैतद्दूषणप्राप्तावपि नैकजीववादेऽयंदोष इत्यत आह ॥ एकजीवेति ॥

(तरङ्गिणी)

अस्मिन्पक्षे जीवातिरिक्तचैतन्यस्य कल्पितभेदयुक्तस्याप्यभावादित्यर्थः ॥ तयोरिति॥ अद्वैतवादे व्यावहारिकभेदेन जीवान्यचैतन्यसत्वे द्वा सुपर्णेत्यादि भेदप्रतिपादक श्रुत्यादीनां तद्विषयत्वेनाविरोधःस्यात् त्वन्मते तु व्यावहारिकोपि भेदो नास्तीति भेदश्रुत्यादिविरोध इत्यर्थः ॥ आत्मनीति॥ य आत्मनितिष्ठन्नात्मनोन्तर इत्यादि श्रुतिः आत्मनः सकाशादंतरः भिन्नः ॥ शारीरश्चेति॥ शारीरो जीवोपि नांतर्यामी। उभये काण्वाः माध्यंदिनाश्च। एनम् अंतर्यामिणम्। जीवाद्भेदेन पठंतीति सूत्रार्थः ॥ आत्माश्रय इति॥ ननु भेदस्य स्वभेदकत्ववदज्ञानमेवाज्ञान उपाधिरिति चेन्न। भेदस्य स्वरूपत्वेन भेदकत्वानंगीकारात्।

व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगंयुजि।
न्यायामृततरंगिण्यां न चिन्मात्राश्रयाज्ञता।
॥ अज्ञानस्य विवरणोक्तचिन्मात्राश्रयत्वभंगः ॥

## न्यायामृतकण्टकोद्धारः

किञ्चाविद्याऽस्यात्राज्ञानमिति साश्रयत्वेन सविषयत्वेन च प्रतीयते। साश्रयत्वं सविषयकत्वं चाविद्यात्वव्यापकम्। तथा च व्यापकाभावान्न व्याप्यमविद्यात्वं सम्भवतीत्याशयेनाश्रयमादौ दूषयति ॥ अविद्याश्रयश्चेति॥ तथा च व्यापकानुपलब्धिबाधश्चेति भावः। ननु चिन्मात्राश्रितत्वेऽविद्याकार्यं जीव एव न स्यात्। किन्तु ब्रह्मण्यपि स्यादिसत आह ॥ दर्पणस्येति॥ दर्पणस्थानीयत्वादविद्याया दर्पणवत् प्रतिबिम्बपक्षपतो युज्यत इति भावः। ननु अत्राज्ञानस्य चिन्मात्रश्रयत्वाभावे विरोधादिति हेतुरुक्तः। अतः द्वेधा प्रयोगोऽभिमतः। अज्ञानं चिदाश्रितं न भवति तेन विरुद्धत्वात् यद्येन विरुद्धं तत्तदाश्रितं न भवति। यथा गोत्वमश्वत्वेनेति। चैतन्यं नाज्ञानाश्रयस्तद्विरुद्धत्वात्। सामान्यव्याप्त्या गोत्वमेव दृष्टान्तस्तमो वा दृष्टान्तः। तत्र को विरोधः। न तावत् सहानवस्थितत्वम्। तादृशविरोधवतोऽपि घटात्यन्ताभावस्य घटाश्रितत्वेन व्यभिचारात्। न च भावरूपत्वे सतीति विवक्षितम्। अत एव ज्ञानभावरूपाज्ञानयोरित्युक्तमिति वाच्यम्। घटरूपे व्यभिचारात्। तस्यापि घटेन सह सहानवस्थानरूपविरोधवत्त्वात् घटाश्रितत्वाच्च। न च यज्जातीयत्वावच्छिन्नं येन सहानवस्थितमिति विवक्षितम्। न च रूपजातीयं तथा। मृदि घटरूपयोः सहभावादिति वाच्यम्। एवं चेदसिद्धिः स्यात्। न ह्यज्ञानजातीयं ज्ञानासहवृत्ति भिन्नविषयकयोः सहवृत्तित्वात्। तद्विषयकाज्ञानं तज्ज्ञानासहवृत्तीति यदि तर्हि तद्रूपं तद्घटासहवृत्तीति तुल्यम्। नापि भावाभावरूपो विरोधः। उभयोरपि भावरूपत्वात् नापि वध्यघातुकः। अत एवाह वृत्तिज्ञाननिवर्त्यं तदिति वाच्यम्। तादृशविरोधवतोरपि मूषकमार्जारयोः सति विनाशप्रतिबन्धे आश्रयाश्रयिभावस्यानुभवसिद्धत्वादित्यत आह ॥ एकेति॥ अयमाशयः— वध्यघातक एव विरोधो विवक्षितः। न चोक्तदोषः। सविषयकत्वावच्छिन्नयोः वध्यघातकयोराश्रयाश्रयिभावो

(कण्टकोद्धारः)

नेत्यत्र तात्पर्यात् मूषकमार्जारयोः सविषयकत्वाभावात् न तत्र व्यभिचारः। न च तमः प्रकाशयोरिति दृष्टान्तनुपपत्तिः। तयोरपि सविषयकत्वात् ताभ्यां द्वेषेच्छयोरुपलक्षणाद्वेति न काचिदनुपपत्तिः। न हि सविषयकयोर्विरुद्धयोराश्रयाश्रयिभावो दृष्टचर इति। ॥न चेति॥ तथाच ज्ञानविरोधित्वादज्ञानत्वं युक्तमिति शेषः। मुख्येति। तथा च मुख्यज्ञाननिवर्त्यं मुख्याज्ञानं वक्तव्यमिति शेषः ॥अज्ञानेति॥ न च वृत्त्यवच्छेदेनाज्ञानविरोधित्वात् चैतन्यस्य ज्ञानत्वं यथा भास्करस्य सूर्यकान्ताद्यवच्छेदेन दाहकत्वमिति वाच्यम्। स्वतोऽज्ञानाविरोधित्वे ज्ञानत्वायोगात्। न हि भास्करोऽन्यावच्छेदेन तमोविरोधी। अन्यथा घटस्यापि वृत्त्यवच्छेदेन अज्ञानविरोधित्वात् ज्ञानत्वं स्यात्। वह्निजनकत्वं च तेजोमात्रसाधारणमिति तस्यान्यावच्छेदेनोपपत्तौ न विरोधः। नन्वज्ञानाविरोधित्वेऽपि ज्ञानत्वमस्त्वित्यत आह ॥ज्ञानाज्ञाने हीति॥ अन्यथा प्रकाश-काशयोरनुभवसिद्धो विरोधो न स्यात् इति भावः ॥अज्ञानेति॥ तथाचाज्ञानानिवर्तकत्वे तद्व्यवहारहेतुत्वमपि न स्यादिति भावः। साक्षिवेद्य इति। तत्र ज्ञानकरणाभावादज्ञानं स्यादित्यर्थः ॥सौरेति॥ सौरप्रकाशे हे प्रकाशत्वे तमोविरोधित्वं तन्त्रम्। निर्विशेषितसामान्यायोगादतात्त्विकतमोविरोधित्वाभावेऽपि तात्विकतमोविरोधित्वेन सामान्यमुपपन्नम्। प्रकृते च तात्त्विकाज्ञानविरोधित्वाभावात् अतात्त्विका-ज्ञानविरोधित्वेनैव अज्ञानविरोधित्वं वाच्यम्। निर्विशेषितसामान्यायोगात्। तदभावे च ज्ञानत्वायोगादिति भावः। ॥अन्यथेति॥ तात्विकस्यातात्विकविरोधित्वाभावे इत्यर्थः। किञ्चाज्ञानस्याश्रयादि-विचारोऽज्ञानसिध्युत्तरकालीनः। असिद्धस्य खपुष्पादेराश्रयाद्यविचारात्। तथाच येन प्रमाणेनाज्ञानं सिद्धं तेनाहमर्थाश्रयत्वेनैव सिद्धम्। तस्य च चिन्मात्राश्रयत्वे धर्मिग्राहकप्रमाणविरोधः। नह्यहमज्ञइतिवत् चिदज्ञेति प्रतीतिरस्ति। अत एव नोभयाश्रितत्वेनाप्युपपत्तिरिति आशयेन धर्मिमानेन बाधादित्येतदुपपादयन्नाह ॥किञ्चेति॥ ॥न चेति॥ अत्र प्रथमपक्षेऽहंकाराध्यासानंतरं तत्सिद्धौ तत्राज्ञानाध्यासवदैक्याध्यासादहमज्ञ इति प्रतीतेरध्यासद्वयं मूलम्। द्वितीयेत्वहंकाराध्यासमात्रं मूलमिति लाघवमिति हृदयम् ॥अद्यापीति॥ न चाहंपदार्थस्याविद्याधीनत्वेन तदाश्रयतानुपपत्तेश्चैतन्याश्रयत्वमेवेति तस्याविद्याधीनत्वे प्रमाणाभावात् उक्तप्रतीत्या अविद्याया अहमर्थाधीनत्वात्। किञ्च भ्रान्तेर्दोषजन्यत्वबाधितार्थकत्वं व्यापकम्। तन्निवृत्यापि भ्रान्तित्वनिवृत्तिरित्याशयेनाह ॥दोषेति॥ न चाविद्याप्रतिबिंबितचैतन्यस्य साक्षिरूपत्वात् दोषाजन्यत्वमसिद्धमिति वाच्यम्। अस्य प्रागेवाविद्याप्रतीति भङ्गे दूषितत्वात्। न च बाधाभावोऽसिद्ध इति वाच्यम्। नाहमज्ञ इति प्रत्यक्षस्याभावात् श्रुत्यनुमानयोश्चैतेनैव बाधसम्भवात् अस्य धर्मिग्राहकत्वेन प्रबलत्वात्। श्रुत्यादेश्च सम्यगन्यथा व्याख्याततत्वेनैतद्बाधकत्वायोगाच्च। अज्ञानस्य चिता सह आश्रयाश्रयिभावरूपसम्बन्धवर्णनमयुक्तम्। अज्ञानस्वरूपग्राहकेणैवानुभवेनाज्ञानस्याहंकारेण सहाश्रयाश्रयिभावरूपसंबन्धस्य मिथ्यारूप्यग्राहकेण रूप्येदमंशसंबंधग्रहवत् सिद्धत्वादित्याह ॥मिथ्यारूप्येति॥ ॥अज्ञानेति॥ न चाहमर्थस्य ज्ञाननिवर्त्यत्वेन दृश्यत्वेन चाकल्पितत्वमयुक्तमिति वाच्यम्। अहमर्थस्य मुक्तावपि प्रतीयमानत्वेन ज्ञाननिवर्त्यत्वासम्मतेः। दृश्यत्वस्य चात्मनि सत्त्वेन तत्र व्यभिचाराच्च। यथा चैतत्तथोपपादितं दृश्यत्वभङ्गे। न चानुपपत्तिमात्रं नाहङ्कारोऽपि तु सत्त्वादिप्रापकयुक्तावनुपपत्तिरिति वाच्यम्। नियामकाभावात् निरवयवस्योपादानत्वानुपपत्तेरप्यहंकारत्वाङ्गीकाराच्च ॥नापीति॥ न चाज्ञानं न बन्धकमिति वाच्यम्। अज्ञानस्य स्वाश्रयबन्धकत्वनियमात् ॥जीवेऽपीति॥ न च जीवे अविद्याकार्यसत्त्वेन ब्रह्मणि च तदभावेन

(कण्टकोद्धारः)

सावद्यत्वादिव्यवस्था युक्तेति वाच्यम्। अज्ञानस्य स्वाश्रये स्वकार्यकरत्वनियमेन ब्रह्मणोऽज्ञानाश्रयत्वेन कार्याश्रयत्वस्याप्यावश्यकत्वात् ब्रह्मण्यपि अज्ञानकार्यस्य सार्वज्ञादेरङ्गीकाराच्च। अत एव नोपाधेः प्रतिबिंबपक्षपातित्वमपि। अत एव जीवेशयोः श्रुतौ ज्ञानत्वोक्तिरयुक्ता। उभयोरप्यज्ञानाभावात् तत्कार्यस्योभयत्रापि सत्त्वात्। अज्ञानस्य स्वाश्रये एव कार्यकरत्वनियमेन जीवेशयोरज्ञानाश्रयत्वाभावे तत्कार्याश्रयत्वासम्भवाच्च। अन्यथा चैत्राज्ञानकार्यं शोकादि मैत्रे स्यात्। किञ्चाज्ञानवत्तत्कार्यस्यापि चिन्मात्र एवाङ्गीकारे न किञ्चिद्बाधकमित्याह ॥मुक्त्यन्वयिनीति॥ ॥मुख्यार्थहानेरिति॥ बाधके सत्येव मुख्यार्थस्य त्याज्यत्वात् प्रकृते च तदभावादिति भावः ॥शुद्धस्येति॥ न च मायां तु प्रकृतिं विद्यादिति श्रुतिः शुद्धस्याज्ञेयत्वे प्रमाणमिति वाच्यम्। मायाशब्दस्याज्ञानवाचित्वे प्रमाणाभावात्। तावता महेश्वरस्याज्ञत्वापाताच्च। अविद्यायाश्चिन्मात्राश्रयत्वाङ्गीकारे दूषणान्तरमाह ॥किञ्चेति॥ अज्ञानस्य स्वसमानाधिकरण भ्रान्तिजनकत्वनियमात् स्वसमानाधिकरणप्रमानिवर्त्यत्वनियमाच्चेति भावः। न च चिन्मात्रे भ्रान्त्याद्यङ्गीकारान्नोक्तदोष इति वाच्यम्। तथात्वे चिन्मात्रस्यैव संसारित्वं स्यादिति जीवस्य संसारित्वादिप्रतिपादकश्रुत्यादिविरोधः। किञ्च चित्येव भ्रान्त्याद्यङ्गीकारे चिदज्ञेत्याद्यनुभवः स्यात्। न च तथास्ति। किंत्वहमज्ञ इत्यादि। किञ्च चिन्मात्रस्य संसारित्वे चिन्मात्रं मुक्तं स्यादिति कामना स्यात्। नत्वहमित्याद्याकार एव स्फुटमिति ॥ज्ञातुरज्ञानमिति॥ यद्यज्ञानस्य ज्ञातृसापेक्षत्वं तर्हि चैतन्येऽपि ज्ञातृत्वमस्तीत्यज्ञानमविरुद्धमिति शङ्कते ॥चिन्मात्रेऽपीति॥ ॥तस्येति॥ न च ज्ञातृत्वाध्यासस्याविद्याध्यासाधीनत्वेऽपि नाविद्याध्यासे ज्ञातृत्वाध्यासस्य निमित्तत्वम्। तथाच कथमन्योन्याश्रय इति वाच्यम्। ज्ञातृत्वस्याविद्याश्रयतावच्छेदकत्वेनाविद्याध्यासेऽपि तदध्यासस्यावश्यकतयाऽन्योन्याश्रयापरिहारात् ज्ञातर्येवाविद्येति नियमात्। न चैवं शुक्तिज्ञानात् पूर्वं शुक्त्यज्ञानं न स्यात् अवच्छेदकस्य ज्ञातृत्वस्या भावादिति वाच्यम्। तदापि ज्ञानकर्तृत्वशक्तेः सत्त्वात्। न चैवं प्रकृते। शक्तेरप्यविद्याध्यासाधीनत्वेनान्योन्याश्रयात्। एवं ज्ञातृत्वस्याज्ञानाश्रयतावच्छेदकत्वे यस्य ज्ञातृत्वं मुख्यं तस्यैवाज्ञत्वं मुख्यं स्यादिति बुद्धिरेव ज्ञातृत्वे नाज्ञानाश्रयः स्यादिति दूषणान्तरमाह ॥चैतन्य इति॥ ॥देहादावपीति॥ तथाच तत्राप्यज्ञत्वं स्यादिति शेषः। न च प्रसक्तप्रकाशकत्वमज्ञानानाश्रितत्वम् अज्ञत्वप्रयोजकमङ्गीक्रियते। न च तद्देहादावस्तीति वाच्यम्। चितोप्यविद्याधिष्ठानत्वेन प्रकाशमानत्वेन प्रकाशत्वस्याज्ञानाश्रयत्वविरोधित्वेन चाज्ञत्वप्रयोजकत्वासम्भवात् चितः सर्वाश्रितत्वेनाज्ञानाश्रितत्वाच्च। अन्यथा व्यापकत्वं न स्यादिति। देहादेरप्यज्ञानाश्रितत्वासम्मतेश्च ॥बुद्ध्यवच्छिन्नेति॥ तथाचापसिद्धान्त इति भावः ॥तेषामिति॥ न चाविद्यावच्छिन्ने ज्ञातृत्वाध्यासो न चाविद्यावच्छिन्नेऽविद्याध्यास आत्माश्रयात्। सामानाधिकरण्यं च विशेष्यैक्यादिति वाच्यम्। ज्ञातृत्वस्याविद्याश्रयतावच्छेदकत्वेनान्योन्याश्रयात्। केवलविशिष्टयोर्भिन्नत्वेन सामानाधिकरण्यासम्भवाच्च। अन्यथा जीवनिष्ठसंसारस्य चिन्मात्राश्रयतापत्तौ प्रतिबिम्बिपक्षपातित्वमुपाधेर्न स्यात्। ननु शुक्त्यज्ञानवदिति दृष्टान्तो न युज्यते। तस्यापि मया शुक्त्यवच्छिन्नचैतन्यनिष्ठत्वाङ्गीकारादित्याशङ्क्य निषेधति ॥न चेति॥ ॥अहमिति॥ न चाज्ञानद्वैविध्याङ्गीकारेण समाधानमिति वाच्यम्। प्रमातृनिष्ठातिरिक्तविषयनिष्ठाज्ञानसद्भावे प्रमाणाभावेन तद्वैविध्यानुपपत्तेः। यथा चैतत्तथा बहुशः प्रतिपादितम्। ननु अज्ञानस्य भ्रान्त्यादिसामानाधिकरण्यनियमोऽप्रयोजकः। न चैवं चैत्रनिष्ठाज्ञानेन मैत्रस्य भ्रमप्रसङ्गः।

(कण्टकोद्धारः)

तद्भ्रमस्यान्यतरज्ञाननाश्यत्वप्रसङ्गश्चेति वाच्यम्। विशिष्टविशेष्यभावस्य तन्त्रत्वेनोक्तस्थले द्वयोरपि विशिष्टत्वे-नातिप्रसङ्गाभावादित्याशङ्क्य निषेधति ॥ न चेति ॥ ॥ विशिष्ट इति ॥ तस्यापि जीववच्चितं प्रति विशिष्टत्वादित्यर्थः ॥ देहमिति ॥ यदि विशेष्यनिष्ठेन स्वकार्यं विशिष्टे क्रियते इति सामान्यव्याप्तिः तदेदं दूषणम्। यदि चिन्मात्रनिष्ठाज्ञानेन जीवे कार्यं क्रियते इति व्याप्तिस्तदाऽसिद्धिर्दृष्टान्ताभावादिति ॥ विशेष्यस्येति ॥ ॥ अविशेषादिति भावः ॥ ॥ एतेनेति ॥ चिन्मात्रस्थमुक्तेः विशिष्टनिष्ठसंसारविरोधापातेनेत्यर्थः। ननु विशिष्टे ब्रह्मणि संसारः स्यादित्ययुक्तम्। उपाधेः प्रतिबिम्बपक्षपातित्वेन तत्र संसाराभावोऽपि तु जीव एवेत्यस्योपपत्तेरित्याशङ्क्य निषेधति ॥ न चेति ॥ ॥ श्रुत्यादीति ॥ यथा निरवद्यत्वादिश्रुतिविरोधे विद्यमानेऽपि चित्यज्ञानमङ्गीक्रियते तथा नित्यमुक्तत्वादिश्रुतिविरोधेऽपि चित्येव संसारः स्वीकर्तव्यः। न हि तदंशे श्रुतिविरोधो न दोषः एतदंशे दोषः इत्यत्र विनिगमकमस्ति। न च जीवे संसारस्य प्रतीयमानत्वात् चिति चाप्रतीयमानत्वात् जीवे संसारकल्पनमिति वाच्यम्। तथात्वेऽज्ञानस्यापि तत्रैवाङ्गीकारापत्तेः। न ह्यज्ञानं जीव इव चिति प्रतीयते। एवं चोपाधेः प्रतिबिम्बपक्षपातित्वकल्पनं नेति लाघवमिति हृदयम्। किञ्च बिम्बप्रतिबिम्बयोरैक्ये प्रतिबिम्ब इव बिम्बे संसारप्रसक्तौ प्रतिबिम्बपक्षपातित्ववर्णनमुपयुज्यते। न च तदस्ति। प्रतिबिम्बस्य बिम्बादन्यत्वात्। यथा चैतत्तथोपपादयिष्यते। तथा च प्रतिबिम्बस्योपाधिकार्यत्वात् तत्रैव तत्कार्यमिति वक्तव्यमित्याशयेनाह ॥ प्रतिबिम्बस्येति ॥ किञ्च चैतन्ये प्रतिफलनार्हत्वव्यापकाभावात् न प्रतिफलनार्हत्वमित्याह ॥ अचाक्षुषस्येति ॥ ननु चाक्षुषत्वं न प्रतिबिम्बनार्हत्वे प्रयोजकम्। आकाशे चाक्षुषत्वाभावेऽपि प्रतिबिम्बनस्य दृष्टत्वेन व्यभिचारादिति चेन्न। पञ्चीकरणपक्षे आकाशस्यापि महत्त्वसमानाधिकरणोद्भूतरूपत्वेन चाक्षुषत्वसम्भवेन व्यभिचाराभावात्। आकाशे नीलिमोदेति इति श्रुतेः आकाशे नीलरूपमस्तीति पक्षे दोषा भावाच्च। यद्वाऽऽकाशसम्बन्धिमेघानां शुक्लादिरूपसम्पन्नानां प्रतिबिम्बनं तेषामाकाशाश्रितत्वादाकाशप्रतिबिम्बनाम्। न च श्रुत्या चितः प्रतिबिम्बे सिद्धे तत्रैव व्यभिचारान्नेयं व्याप्तिरिति वाच्यम्। अयोग्यतानिश्चये श्रुत्या चितः प्रतिबिम्बासिद्धेः। अन्यथा श्रुत्या विशिष्टयोरैक्यसिद्धिः स्यात्। न चैवं प्रतिबिम्बश्रुतिरप्रमाणं स्यादिति वाच्यम्। तदधीनत्वे सति तत्सादृश्यार्थकत्वेन प्रामाण्योपपत्तेः। एतेन रसादिव्यावृत्तफलैकोन्नेयं प्रयोजकमित्यपास्तम्। त्वदभिमतफलस्यासिद्धेः ॥ प्रतिबिम्बत्व इति ॥ न चोपाधिबिम्बसंनिधानयोरनादित्वात् न जीवस्य प्रतिबिम्बत्वेऽपि सादित्वमिति वाच्यम्। अज्ञानरूपोपाधेः कल्पितत्वेनानादित्वानुपपत्तेः। अनादित्वे च ब्रह्मवत् कल्पितत्वानुपपत्तेः। बिम्बसन्निधानस्यानादित्वे प्रमाणाभावाच्च। किञ्चाज्ञानस्य प्रतिबिम्बनोपाधित्वप्रयोजकाभावात् न प्रतिबिम्बनोपाधित्वमित्याह ॥ सूर्यस्येति ॥ न चाध्यस्तस्य स्फटिकलौहित्यस्य दर्पणे प्रतिबिम्बदर्शनात् न बिम्बसमसत्ताकत्वमुपाधित्वे प्रयोजकमिति वाच्यम्। बिम्बसत्ताऽन्यूनसत्ताकत्वस्य तत्रापि सत्त्वात् बिम्बसत्तान्यूनसत्ताकत्वस्यैवोपाधित्वविरोधित्वात्। किञ्च मन्मते स्फटिके न लौहित्याध्यासः। किन्तु प्रतिफलनम्। तथाच प्रतिमुखस्येव तस्य सत्यत्वात् बिम्बसत्तासमानसत्ताकत्वं तत्रापीति क्व व्यभिचारः। एतेन मरुमरीचिका व्यावृत्तं स्वच्छत्वं फलैकोन्नेयमिति निरस्तम्। फलस्यैवासिद्धेः। अत एवाह अस्वच्छेति ॥ अविद्याया इति ॥ ननु किं सर्वात्मना चिदाभिमुख्याभावो वा न्यूनपरिमाणत्वं वा व्यवधानं वा? नाद्यः। अविद्याया विभुत्वपक्षे सर्वात्मनापि सम्भवात्। न द्वितीयः न्यूनपरिमाणस्यापि

(कण्टकोद्धारः)

जलस्य प्रतिबिम्बोद्ग्राहकत्वदर्शनात्। न तृतीयः। चैतन्यस्य सर्वतोविप्रसृतत्वेन व्यवधानाभावादिति चेन्न। आभिमुख्यं सम्बन्धविशेषः। स च कार्यैकोन्नेयः। स च सम्बन्धविशेषः स्वाध्यस्ते न सम्भवति। न हि मुखाध्यस्ते दर्पणे मुखाभिमुख्यम्। अत एव मरुमरीचिकाध्यस्ते नाकाशादिप्रतिबिम्ब इति। न च प्रतिबिम्बप्रयोजकरूपाविरोधिपरिणामस्य प्रतिबिम्बाविरोधित्वेन न प्रतिबिम्बापाय इति वाच्यम्। दर्पणादौ रूपान्तर परिणामस्य प्रतिबिम्ब प्रयोजकरूपप्रतिबिम्बविरोधित्वस्य दृष्टत्वेन रूपान्तरपरिणामस्य तदविरोधित्वासिद्धेः। किञ्चाविद्याया एकदेशेन परिणामः सर्वात्मना वा? नाद्यः अज्ञानस्यैकदेशासिद्धेः। न द्वितीयः सर्वात्मना परिणामे प्रतिबिम्बानपाय इत्यस्यानुभवविरुद्धत्वात् ॥ मुखेति॥ न चापरामृष्टभेदस्य मुखादेना त्वेनुगतधर्म्यतिरेकसम्भव इति वाच्यम्। व्यक्त्यभावे चोदिते तत्सत्त्वप्रतिपादनेनास्य व्यधिकरणत्वात् ॥ अनादिभाव इति॥ न च विशेषव्याप्तिग्राहकसहचारदर्शनस्य विवादविषयातिरिक्तेऽदर्शनेन विशेषव्याप्त्यसंभव इति वाच्यम्। अज्ञानं ज्ञाननिवर्त्यमित्यत्रापि तथात्वाप्रसङ्गात् शुक्त्यज्ञानादौ सहचारस्य दृष्टत्वाच्च। उपपादितश्चैतत् पूर्वमेव ॥ बन्धस्येति॥ न चावच्छेद्यैक्यमादाय सामानाधिकरण्योपपत्तिरिति वाच्यम्। अवच्छेद्यभेदस्य प्रागेवोपपादितत्वात् ॥ ब्रह्मणीति॥ अनतिप्रसक्तस्यैवावच्छेदकत्वात्। अन्यथा प्रमेयत्वस्यापि तदापत्तेः। ननु चिन्मात्रस्थमज्ञानं जीवे संसारमापादयिष्यति, न चातिप्रसङ्गः। विशेष्यविशिष्टभावस्य तंत्रत्वादित्यत्र प्रागुक्त युक्तिं स्मारयति ॥ चिदिति॥ ॥ निरस्तमिति॥ ब्रह्मण्यपि संसारापातादित्यादिनेत्यर्थः। एतावता बिम्बप्रतिबिम्बभाव उपाधेः प्रतिबिम्बपक्षपातित्वं च न सम्भवतीत्युक्त्वा इदानीन्तु प्रतिबिम्बपक्षपातित्वं निर्वक्तुमप्यशक्यमित्याह ॥ किञ्चेति॥ अत्र विकल्पद्वयं जपाकुसुमादौ दर्शनानुसारेणा पक्षद्वयं पराभ्युपगमानुसारेण दर्पणाद्युपाधेस्तददर्शनादिति भावः ॥ मालिन्यादेरिति॥ दर्पणादिकं मलिनमित्यादिवत् अज्ञानमज्ञातृ कर्तृ भोक्तृ इत्यादिप्रतीतेरभावादिति भावः ॥ ज्ञानेति॥ ज्ञानजन्यसंस्काराणां क्रियाजन्यसंस्काराणां वेत्यर्थः। तेनातीन्द्रियाणामिति हेतुगर्भं विशेषणमुक्तमिति भावः। ननु मया तथाऽङ्गीक्रियत इत्यत आह ॥ अविद्याया इति॥ तथाङ्गीकारेऽपसिद्धान्तः स्यादिति भावः। मुखस्थेति। उभयत्रोपाधिकार्याभ्युपगमे प्रतिबिम्बपक्षपातित्ववाचो रिक्तत्वं स्यादिति भावः। ननु उभयत्र अविद्याकार्याभ्युपगमे प्रतिबिम्बपक्षपातित्वमविद्याया युज्यते। जीवेऽतिशयेन कार्यकारित्वात् बिम्बे च तदभावात्। अतिशयविवक्षया तत्पक्षपातित्वोक्तिरिति चेन्न। जीवापेक्षयेश्वरे सर्वज्ञत्वसर्वेश्वरत्वसर्वशक्तित्वादीनां बहूनां धर्माणामविद्याकृतत्वे न तदपेक्षयातिशयस्य वक्तुं शक्यत्वात्। नहीश्वरेऽल्पा जीवे बहव इत्यत्र विनिगमकमस्ति। तस्मादतिशय विवक्षयापि न प्रतिबिम्बपक्षपातित्वमिति भावः। न च संसारस्य प्रवाहतोऽनादित्वेऽपि स्वरूपेण जन्यत्वात् उपाधिकृतत्वं भविष्यति इति वाच्यम्। 'सा संसार' इति त्वयाऽविद्याया एव संसारत्वेनाभ्युपगमात् तस्याश्च स्वरूपेणानादित्वात् नाविद्याकृतत्वमित्याशयात्। न च कर्तृत्वभोक्तृत्वादिकमेव संसार इति वाच्यम्। सुषुप्तौ मुक्तत्वापत्तेः। तस्मादविद्याया एव संसारत्वं वाच्यमिति ॥ अदृष्टेरिति॥ तथाचादृष्टकल्पनास्यादिति भावः ॥ एवमिति॥ न च स्वनिष्ठधर्मप्रतिभासकत्वेनादर्शसाम्येन प्रतिबिम्बपक्षपातित्वं बुद्धेरिति वाच्यम्। किमिदमेव प्रतिबिम्बपक्षपातित्वमुतेदमुपचारे निमित्तम्? नाद्यः। अस्याविद्यायामभावात्। जपाकुसुमे सत्त्वाच्च तत्रापि प्रतिबिम्बपक्षपातित्वव्यवहारः स्यात्। न चाविद्यायां भिन्नं तदिति वाच्यम्। नानार्थकल्पने मानाभावात्।

(कण्टकोद्धारः)

न द्वितीयः। इष्टापत्तेः। माणवके सिंहत्वाभाववत् प्रतिबिम्बपक्षपातित्वाभावस्य त्वयैवाभ्युपगमात् ॥ नन्विति॥ तथाचाज्ञानं स्वाश्रय एव कार्यं जनयतीति व्याप्तिबाधादिकं नेति भावः। ननु तर्हि नित्यमुक्तत्वश्रुतिविरोध इत्यत आह ॥ नित्येति॥ चिन्मात्रे सांसार इति बिम्बप्रतिबिम्बपक्षं समाश्रित्योच्यते अवच्छेद्यावच्छेदकभावं वा। नोभयथापीत्याह ॥ घटेति॥ ॥ अस्येति॥ चिन्मात्रे एव संसार इत्यस्येत्यर्थः। ननु मया तृतीयः पक्षोऽङ्गीक्रियते इत्यत आह ॥ बिम्बेति॥ ॥ नचेति॥ तथाच संसाराश्रयतावच्छेदकतया संसारित्वं जीवस्येति युक्तैव श्रुतिव्यवस्थेति भावः। ॥ तन्मत इति॥ उपलक्षणमेतत्। वस्तुतो देहस्य दुःखित्वाभाववत् जीवस्य संसाराभावेन संसारित्वश्रुतेर्न तत्परत्वम्। जीवसिद्धौ तदवच्छेदेन चिन्मात्राश्रयताऽज्ञानरूपसंसारादेः। तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयता चेत्यपि द्रष्टव्यम्। न च बिम्बरूपब्रह्मभाव एव मुक्तिर्नचिन्मात्र भाव इति वाच्यम्। तस्य कल्पितत्वेन तद्भावस्य मोक्षत्वायोगात्। अत एव नित्यमुक्तत्वश्रुतिर्न तत्परेत्याह ॥ नित्येति॥ सुरेश्वरवार्तिकानुसारेण शङ्कते ॥ अथेति॥ ननु ब्रह्मण एव संसाराङ्गीकारे नित्यमुक्तत्वश्रुतिविरोध इत्यत आह ॥ नित्येति॥ ॥ यादृशेति॥ न च तात्विकबन्धाभावपरा नित्यमुक्तत्वश्रुतिः इति वाच्यम्। तस्याभावेनाप्रसक्त्या कल्पितबन्धाभावपरत्वमेव वाच्यम् इत्याशयात्। न चासत्कारणत्ववत् परमतप्रसक्ततात्त्विकबन्धनिषेधपरत्वमस्त्विति वाच्यम्। तत्रेवात्र तद्वैक आहुरित्यादिज्ञापकाभावात् कल्पनायाश्च ब्रह्मण एव जीवत्वसिद्ध्यधीनत्वेनान्योन्याश्रयाच्च ॥ अन्यथेति॥ तात्विकबन्धाभावपरत्व इत्यर्थः ॥ असर्वज्ञत्वादिनेति॥ न च ब्रह्मण एव सर्वज्ञत्वम्। असर्वज्ञत्वेन विरोधात्। न च तात्त्विकातात्त्विक-विषयत्वेनाविरोध इति वाच्यम्। एकस्यापि तात्त्विकत्वानङ्गीकारात्। अङ्गीकारे चापसिद्धान्तात्। एकमेवाद्वितीयमित्यादि श्रुतिविरोधश्च। किञ्चायं पक्षो बहुजीववादे एकजीववादे वा? नाद्य इत्याह ॥ बह्विति॥ न द्वितीय इत्याह ॥ एकेति॥ ॥ तयोरिति॥ जीवेश्वरयोरित्यर्थः ॥ स एव चेदिति॥ न चोपाधेः स्वनिर्वाहकत्वान्नोक्तदोष इति वाच्यम्। स्वनिर्वाहकत्वेन स्वस्मिन् स्वविशिष्टव्यवहारेऽपि स्वस्य स्वोत्पादकत्वं एकस्यैव पौर्वापर्याभावात्। न चाज्ञानमनादिरिति वाच्यम्। कल्पितत्वेन तदयोगस्य प्रागेवोक्तत्वात्। स्वस्यैव स्वाश्रयतावच्छेदकत्वे स्वस्कन्धारोहणे आत्माश्रयतादवस्थ्याच्च ॥ स्पष्टयिष्यते चैतदिति॥ न च स्वाभाविकस्यापि घटरूपतत्प्रागभाववन्निवृत्तिः किं न स्यादिति वाच्यम्। घटरूपस्यानादित्वाभावात्। प्रागभावस्य भावत्वाभावात्। अज्ञानस्य चोभयरूपत्वाङ्गीकारात्। घटरूपस्य च घटेन सहैव निवृत्तेश्च स्वभावमात्रनिबन्धनत्वरूपंस्य स्वाभाविकत्वस्य रूपादावभावाच्च न हि घटरूपं घटमात्रकारणकम्। कपालरूपादेरप्यपेक्षणात्। अज्ञानं चिन्मात्रनिबन्धनम्। अन्यस्याज्ञानकल्पिततत्प्रयोजकतानुपपत्तेः। एवञ्च चिन्मात्रनिबन्धनस्य तत्सत्वे निवृत्युपपत्तेरिति। इति अज्ञानस्य विवरणोक्तचिन्मात्राश्रितत्व भङ्गः।

## न्यायामृतप्रकाशः

अविद्याश्रयश्चेति। परमत इति शेषः। ॥ अत्रेति॥ अज्ञानाश्रयः सुवच इत्याशयेनेत्यर्थः। चिन्मात्रं बिंबप्रतिबिंबभूतजीवब्रह्मानुस्यूतमुखमात्रस्थानीयं चिन्मात्रम्। ननु जीव एवाज्ञानाश्रयः किं न स्यादित्यत आह

(प्रकाशः)

॥ तदन्यस्येति ॥ चिन्मात्रान्यस्य जीवस्याज्ञानकल्पितत्वेनाज्ञानाश्रयत्वायोगात्। तथात्वेऽज्ञानसिद्धौ तत्कल्पितजीवसिद्धिः तत्सिद्धौ चतदाश्रिताज्ञानसिद्धिरित्यन्योन्याश्रय इत्यर्थः। जीवोऽज्ञानाश्रयो नेत्याह ॥ पूर्वेति ॥ तमसोऽज्ञानस्य। पश्चिमः कल्पितो जीवः गोचरः विषयः। ननूभयानुस्यूतचिन्मात्राश्रिताज्ञानस्य कथं प्रतिबिंबे जीव एव संसारापादकत्वं बिंबे तदनुस्यूतचिन्मात्रे वा तत्किं न स्यादित्यत आह ॥ दर्पणस्येति ॥ वक्ष्यमाणदूषणजातमेव कारिकया संगृह्णाति ॥ विरोधादिति ॥ बाधादित्यत्रैव धर्मिमानेनेत्यस्य संबंधः। तत्रादौ विरोधादित्युक्तं हेतुमुपपादयति ॥ एकेति ॥ विरोधस्फोरणायेदं विशेषणम्। चिन्मात्रस्यैवाज्ञानाश्रयत्वं वदता ज्ञानस्यैव तदाश्रयत्वमुक्तं स्यात् चिन्मात्रस्यैव ज्ञानाश्रयत्वात् तथाचैकविषययोर्ज्ञानाज्ञानयोर्विरुद्धत्वान्ना-श्रयाश्रयिभावः संभवति। तथा चाज्ञानं ज्ञानाश्रितं न भवति तद्विरुद्धत्वात् यत् यद्विरुद्धं तत्तदाश्रितं न भवति यथा तमः प्रकाशाश्रितमिति सामान्यव्याप्तिमूलकानुमानमुक्तं भवति। नन्विदमयुक्तं घटतदत्यंताभावयोः परस्परविरुद्धत्वेन घटात्यंताभावे घटविरुद्धत्वे सत्यपि घटाश्रितत्वस्यैव सत्वात् घटात्यंताभावो हि भूतलादाविव घटेप्यस्ति अन्यथा घटे सत्वप्रसंगादित्यत उक्तं ॥ तमःप्रकाशयोरिवेति ॥ नात्रविरोधः परस्परविरहरूपो विवक्षितः किंनाम तमः प्रकाशयोरिव वध्यघातकभावरूप एव। अतो घटतदत्यंताभावयोर्वध्यघातकभावविरोधाभावात् न व्यभिचार इति भावः। ननु वध्यघातकभावरूपविरोधः स्वरूपासिद्धिः चैतन्यरूपस्य ज्ञानस्याज्ञाननिवर्तकत्वानंगीकारादित्यत आह ॥ नहीति ॥ अज्ञानस्य चैतन्यरूपज्ञानानिवर्त्यत्वे तस्याज्ञानत्वमेव न स्यात् ज्ञाननिवर्त्यत्वस्यैवाज्ञानलक्षणत्वादिति भावः। नन्वज्ञानस्य चैतन्यरूपज्ञाननिवर्त्यत्वाभावेपि न तस्याज्ञानत्वाभावः। वृत्तिरूपज्ञाननिवर्त्यत्वेनापि अज्ञानलक्षणवत्तयाऽज्ञानत्वोपपत्तेरित्याशंक्य परिहरति ॥ नचेति ॥ ॥ वृत्तिज्ञानेति ॥ अंतःकरणवृत्तिरूपज्ञानेत्यर्थः ॥ उपचारादिति ॥ ज्ञा अवबोधन इति धातोर्भावव्युत्पत्त्या ज्ञप्तिरूपचैतन्य एव ज्ञानत्वं मुख्यं अंतःकरणवृत्तौ तु ज्ञायते चैतन्यमनयेति करणव्युत्पत्त्या ज्ञानत्वमुपचरितमित्युक्तत्वादौपचारिकवृत्तिज्ञानविरोधिनो मुख्याज्ञानत्वमयुक्तं किंत्वौपचारिकाज्ञानत्वमेव स्यादित्यर्थः। किंच चैतन्यज्ञानत्वसिद्धयर्थमपि तस्याज्ञाननिवर्तकत्वं वाच्यं अन्यथा विमतं चैतन्यं न ज्ञानं अज्ञानाविरोधित्वाद्धटवदित्यनुमानेन तस्य ज्ञानत्वमेव नस्यादित्यत आह ॥ अज्ञानेति ॥ तथाचाज्ञानत्वसिध्यर्थं चैतन्यनिवर्त्यत्वेंगीकार्ये नासिद्धिरित्याशयः। किंच ज्ञानस्याज्ञाननिवर्तकतया अनुभवसिद्धत्वाच्च तयोर्विरोधोंगीकार्य इत्याह ॥ ज्ञानेति ॥ ज्ञातुरर्थप्रकाशात्मकज्ञानस्यार्थाप्रकाशात्मकज्ञाननिवर्तकत्वमनुभवसिद्धमित्यर्थः। ननु चैतन्यं न ज्ञानं अज्ञानाविरोधित्वादित्यत्राप्रयोजकता नचाज्ञानाविरोधित्वे ज्ञानत्वमेव न स्यादिति वाच्यं। हानोपादानादिव्यवहारं हेतुत्वेन तदुपपत्तेरित्याशंक्य निराकरोति ॥ नचेति ॥ ॥ अज्ञानेति ॥ साक्षादिति शेषः ॥ तद्धेतुत्वेति ॥ व्यवहारहेतुत्वेत्यर्थः। तथाच ज्ञानेनाज्ञाननिवृत्त्यनंतरमेव विषये व्यवहारस्यानुभवसिद्धत्वात्। अन्यथा तद्विरोधान्नाप्रयोजकतेति भावः। दूषणांतरदानायासिद्धिमेव पुनराशंक्य निराकरोति ॥ नचेति ॥ बुद्धिरंतःकरणवृत्तिः। कथं तर्ह्यज्ञाने ज्ञाननिवर्त्यत्वलक्षणयोग इत्यत आह ॥ ज्ञानकरणविरोध्येवेति ॥ ॥ नतुज्ञप्तीति ॥ चैतन्यं तु ज्ञप्तिरूपं अतो नाज्ञानस्य तद्विरोधिज्ञाननिवर्त्यत्वसिद्धिरिति भावः। करणविरोधित्वेनाननुभूयमानस्य ज्ञप्तिविरोधित्वेनैवानुभूयमानस्याज्ञानस्य दुरपह्नवत्वान्नासिद्धिरित्याशयेनाह ॥ नजानामीति ॥ ज्ञाधात्वर्थ-भूतज्ञप्तिविरोध एव नञा प्रतीयत इत्यर्थः। तथाच ज्ञानकरणविरोधिन एवाज्ञानत्वे ज्ञप्तिविरोधित्वेनानु-

(प्रकाशः)

भूयमानस्याज्ञानांतरत्वं स्यादित्यर्थः। अज्ञानस्य ज्ञप्तिरूपज्ञानविरोधमनंगीकृत्य चैतन्यस्याज्ञाननिवर्तकत्वानंगीकारे सुखादावज्ञाननिवर्त्तकस्यान्यस्यांतः करणवृत्तिरूपकरणस्याभावात्तत्राज्ञानानुभवः स्यादित्याह ॥साक्षिवेद्य इति॥ तस्माच्चैतन्यस्यैवाज्ञानविरोधित्वेंगीकार्ये नासिद्धिरित्याशयः। यदुक्तं विरुद्धत्वेनाश्रयाश्रयिभावायोग इति तदयुक्तं विरोधस्तदा स्याद्यदि ज्ञानाज्ञानयोस्समसत्ताकत्वं स्यात् नचैवं चैतन्यरूपज्ञानस्य सत्यत्वात् तदाश्रिताज्ञानस्य मिथ्यात्वात् मिथ्याभूतं प्रति सत्यस्याश्रयतायाः सौरप्रकाशदिवाभीतांधकारयोर्दर्शनेन विरोधाभावाद्युक्त एवाश्रयाश्रयिभाव इत्याशंक्य निराकरोति ॥नचेति॥ दिवाभीतः पेचकः। दिवाभीतः सौरालोकेंधकारमारोपयति सचांधकारो मिथ्याभूतः सत्यभूतसौरप्रकाशाश्रित इत्यर्थः। यदि दृष्टांते श्रद्धा तर्हि सौरप्रकाशस्य मिथ्याभूतदिवाभीतांधकारेण विरोधाभावेपि लोकसिद्धविरोधघटनाय सौरप्रकाशसमसत्ताकं तद्विरुद्धांधकाररूपं तमोंतरमेवास्तीति मिथ्याभूतेनांधकारेणाविरोधः कल्प्यते एवमिहापि यदि चैतन्यप्रकाशविरुद्धं तत्समसत्ताकं अज्ञानांतरं स्यात्तदाऽतात्विकाज्ञानेनाविरोधः कल्प्यः स्यान्नचैवमस्ति चैतन्यप्रकाशविरुद्धतत्सम-सत्ताकाज्ञानांतराभावात्। अतो लोकानुभवसिद्धविरोधघटनायातात्विकाज्ञानेनैव विरोधे वाच्ये विरुद्धत्वान्नाश्रयाश्रयिभावो युक्त इत्युक्तं युक्तमेवेत्याह ॥सौरेत्यादिना॥ ॥अज्ञानांतरस्येति॥ तत्सत्यत्वे तदेव सत्यभूतमज्ञानं जगत्कारणमस्तु किं मिथ्याभूतत्कल्पनयेति भावः ॥अन्यथेति॥ भिन्नसत्ताकयोरविरोध-मङ्गीकृत्याश्रयाश्रयिभावागीकार इत्यर्थः। आत्मनश्चैतन्यस्याधर्मिमानेन बाधादिति द्वितीयहेतुमुपपादयति ॥किंचेति॥ ॥साक्षिबाधइति॥ अहमर्थाश्रयत्वेन ग्राहकसाक्षिणाबाधान्नाज्ञानं शुद्धचिद्गतमित्यर्थः। धर्मिग्राहकमानस्याप्रमाणस्य भ्रांतित्वान्नतद्बाधः शुद्धचिदज्ञानवादस्य। तथाहि आत्मनि स्थौल्याभावेपि वस्तुतः स्थौल्याश्रयेण देहेनैक्यस्यात्मन्यध्यासाख्यनिमित्तसद्भावमंगीकृत्याहं स्थूल इति प्रतीतेर्भ्रमत्वमंगीकार्यं एवं वस्तुतोहंकारस्याज्ञानाश्रयत्वाभावेपि वास्तवतदाश्रयचिदैक्यस्याहंकारेऽध्यासादहमज्ञ इति प्रतीतिर्भ्रमरूपैव। यथा वा वस्तुतः केवलायसो दाहकत्वाभावेपि दग्धृत्वस्यायसश्चैकाग्निसंबंधेन निमित्तेन अयो दहतीति प्रतीतेर्भ्रांतित्वं तद्वत् अहमर्थस्यापि वस्तुतोऽज्ञानाश्रयत्वाभावेपि अज्ञानाहंकारयोरेकचिदध्यस्तत्वान्निमित्ताद्वा अहमज्ञ इति प्रतीतेर्भ्रांतित्वमेवातो न तद्बाध इत्याशंक्य निराकरोति ॥नचेति॥ ॥असिद्धचेति॥ अहमज्ञ इति धर्मिग्राहकमानाभावे अज्ञानस्य चैतन्याश्रितत्वसिद्धिः तत्सिद्धौ चाहमज्ञ इत्यस्यायो दहतीतिवत् गौणत्वेनाप्युपपन्नस्य चैतन्याश्रिताज्ञानकल्पनायामसाधकत्वसिद्धिरित्यर्थः। किंचाहमज्ञ इत्यज्ञानग्राहकमानस्य साक्षिरूपत्वान्न भ्रांतित्वं युक्तं भ्रांतेर्दोषजन्यत्वनियमात् नित्यज्ञानस्य साक्षिणस्तदभावेन भ्रांतित्वायोगादित्याह ॥दोषेति॥ तथाचाहमज्ञ इति साक्षिरूपं ज्ञानं न भ्रांतिः दोषाजन्यत्वाद्व्यतिरेकेण संमतभ्रमवदित्यनुमानमुक्तं भवति। ननु अहमर्थाश्रितत्वेनाज्ञानग्राहकसाक्षिरूपज्ञानं दोषजन्यं बाधयुक्तत्वादित्येवं बाधकेन दोषजन्यत्वस्या-प्यनुमानात्स्वरूपासिद्धो हेतुरित्यत आह ॥बाधकेति॥ वस्तुतः साक्षिज्ञाने बाधकाभावाद्बाधकाभिमतस्येत्युक्तम्। बाधकज्ञानं हि अज्ञानरूपे धर्मिणि अहमर्थानाश्रितत्वग्राहीति वक्तव्यं तत्र धर्मिज्ञानाभावे तदनुत्पत्तेर्धर्मिज्ञानेन भाव्यं धर्मिग्राहकं च प्रमाणमहमज्ञ इति साक्षिरूपमेव। तेन चाहमाश्रितत्वेनैवाज्ञानं सिद्धमित्येवं बाधकत्वेन त्वदभिमतस्यैव धर्मिग्राहकैतत्प्रमाणबाधितत्वेन धर्मिग्राहकस्यैतस्याहमज्ञ इति प्रमाणस्य बाधकाभावेन दोषजन्यत्वानुमानायोगादभ्रांतित्वबाधकस्य दोषाजन्यत्वस्य स्वरूपासिद्ध्यभावादित्यर्थः। नन्वहमज्ञ इति धीर्नाज्ञाने

(प्रकाशः)

साक्षात्संबंधेनाहंकाराश्रितत्वं विषयीकरोति कुत एतदिति चेत् अहंकारभिन्नचैतन्य एवाज्ञानस्य साक्षात्संबंधग्राहकमानबाधितत्वादतो न विरोध इत्यत आह ॥मिथ्यारूप्येति॥ यत्र यतस्संबंधो गृह्यते स एव तत्र साक्षात्संबंध इति नाहंकारभिन्ने चैतन्येऽज्ञानस्य साक्षात्संबंधसिद्धिरिति न तद्ग्राहकमानबाध इत्याहुः। अत्र मिथ्यारूप्येति अध्यस्ताज्ञानेति च पदास्वारस्यम्। वस्तुतस्तु दग्धृत्वायसोरेकाग्निसंबंधादयो दहतीतिवदत्रापि अज्ञानाहंकारयोरेकचिदध्यासादहमज्ञ इति प्रतीतिर्भ्रांतिरित्युक्तमित्याह ॥ मिथ्येति ॥ दृष्टांते संभवति अयो दहतीति प्रतीत्यपेक्षया पूर्वं दग्धृत्वायसोरेकाग्निसंबंधरूपनिमित्तस्य सिद्धत्वात्। नचैवं प्रकृते संभवति यथा इदं रजतमिति ज्ञाने इदमंशः प्रतीयते तथा रूप्येदमंशसंबंधोपि प्रतीयते इदमंशः पूर्वसिद्ध एवात्र प्रतीयते नतु रूप्येदमंशसंबंधः पूर्वसिद्धः रूप्यस्य मिथ्यात्वेन एतज्ज्ञानात्पूर्वं संबंधस्याऽसत्वात् अतो मिथ्याभूत रूप्यग्राहकेणेदंरजतमिति ज्ञानेनैव संबंधः प्रतीयते एवमहमज्ञ इति भ्रांतिनिमित्तभूतो योऽहंकाराज्ञानयो रेकचित्संबंधः सः अहमज्ञ इति प्रतीत्यपेक्षया पूर्वं न सिद्धिः। रूप्येदमंशसंबंधवत्कल्पितत्वात् अतोहमज्ञ इति प्रतीत्यैव सिद्ध इति वाच्यं अहमर्थस्याहंकारचिदुभयसंवलनरूपत्वात् तत्र चाज्ञानसंबंधस्य चानयैव भ्रांत्या प्रतीतेः अतोऽज्ञानाहंकारयोरेकचित्संबंधस्यानयैव प्रतीत्या कल्पितत्वान्न तन्निमित्तत्वमित्यर्थः। नन्वहमज्ञ इति प्रत्यक्षेणाहंकारस्याज्ञानाश्रयत्वप्रतीतेस्तद्विरोध इत्युक्तम्। अहंकारस्याज्ञानकल्पितस्याज्ञानाश्रयत्वेऽन्योन्याश्रयादित्यत आह ॥अज्ञानेति॥ अकल्पितोऽज्ञानाकल्पितः तथाच नान्योन्याश्रय इति भावः। अस्तु वाऽज्ञानकल्पितः तथापि नान्योन्याश्रयः अविद्यायां दौर्घट्यस्य भूषणत्वादित्याह ॥अविद्यायामिति॥ श्रुतिविरोधत इत्युक्तहेतुमुपपादयति ॥ किंचेति॥ मौर्ख्यं मूर्खत्वम्। ननु "निरवद्य" इत्यादौ निर्दोषत्वमेवोच्यते नत्वज्ञानराहित्यं अतः कथं श्रुतिविरोध इत्यत आह ॥नहीति॥ मोहं भ्रांतिं श्रुतिविरोधः चिद्रूपस्य ब्रह्मणोऽज्ञानाश्रयत्वाभावप्रतिपादकश्रुतिविरोध इत्यर्थः। येन तद्राहित्यमत्र नोच्यत इति शंका स्यात्। अतो निरवद्य इत्यनेनैव मौढ्यापरपर्यायाज्ञत्वरूपदोषाभावोप्युक्त एवेति भावः। किंच नित्यमुक्त इत्यनेनापि अज्ञानराहित्यमुच्यते तत्कथमिति चेत् बंधकीभूताज्ञानाश्रयस्य नित्यमुक्तत्वायो गादेवेत्याह ॥नापीति॥ ॥ निषेध इति॥ मया त्वज्ञानरूपमवद्यमतात्विकमेव ब्रह्म चैतन्यस्यांगीक्रियते अतो न श्रुतिविरोध इत्यर्थः ॥तस्येति॥ तात्विकावद्यस्येत्यर्थः। ततश्चाप्रसक्तप्रतिपत्तिदोष इति भावः ॥जीवेपीति॥ ब्रह्मवज्जीवेपि तात्विकाविद्यादेरभावात् कुत इति चेत् मिथ्यात्वांगीकारात्। अतो जीवब्रह्मणोस्तात्विकावद्याभावेन साम्यादिति भावः। मोहशब्दोनाज्ञानप इत्यंगीकृत्य निरवद्यपदेनैवाज्ञानं निषिद्धमित्युक्तम्। वस्तुतस्तु मोहशब्देनैवाज्ञानस्य निषिद्धत्वान्न चिन्मात्रे तत्संभवः। न च पारमार्थिकमोहनिषेधपरा श्रुतिः व्यावहारिको मोहस्त्वस्त्येवेति चेत्तत्राह ॥मुक्तीति॥ मोक्षकालीनेत्यर्थः। मोहवच्छोकादिकमकपि जीव इव व्यावहारिकं चिन्मात्रेप्यंगीकार्यं श्रुतौ शोकनिषेधस्य पारमार्थिकशोकादिनिषेधपरत्वसंभवादिति भावः ॥तत्कार्येति॥ अज्ञानकार्यशोकादिपर एव न त्वज्ञानपरः। तथा च न श्रुतौ तन्निषेधलाभ सति न श्रुतिविरोध इत्याशयः ॥मुख्यार्थेति॥ अज्ञानरूपमोहशब्दमुख्यार्थेत्यर्थः ॥पृथगिति॥ तथाच पुनरुक्तिरिति भावः। इयं श्रुतिः अज्ञानाभावप्रतिपादिका श्रुतिः। नतु चिन्मात्रपरेत्यर्थः। तथा चानुस्यूतचिन्मात्रेऽज्ञानांगीकारे न श्रुतिविरोध इत्याशयः ॥ जीवेपीति॥ बिंबितब्रह्मणीत्यर्थः। ननु चिन्मात्रे ज्ञानप्रतिपादकश्रुतेः जीवेऽज्ञानप्रतिपादिकाया ज्ञाज्ञावित्यादिश्रुतेर्गौणार्थत्वं कल्प्यत इत्यत आह ॥नचेति॥

(प्रकाशः)

येन जीवाज्ञत्वश्रुतिर्गौणी स्यादिति भावः। जीवस्येति व्यतिरेकदृष्टांतः। भ्रांत्यैकाधिकरण्याच्चेत्युक्तहेतुमुपपादयति ॥ किंच शुक्तीत्यादिना ॥ यथा शुक्त्यज्ञानं स्वकार्यभ्रांतिस्वनिवर्तकज्ञानज्ञानप्रागभावसमानाधिकरणं एवमेवेदमप्यज्ञानं ज्ञात्रात्मनिष्ठं जीवनिष्ठमेव वक्तव्यं नतु ज्ञानमात्राश्रितम् ॥ उक्तंहीति ॥ अज्ञान-भ्रांतिसम्यग्ज्ञानानामेकाश्रयत्वमित्यर्थः। ननु भ्रांत्यज्ञानयोर्ज्ञात्रात्मनिष्ठत्वेन सामानाधिकरण्यमेव। नच ज्ञानरूपस्य चैतन्यस्य ज्ञातृत्वायोग इति वाच्यम्। बुद्धिगतज्ञातृत्वाध्यासस्य चिन्मात्रे सत्वादित्याशंकते ॥ चिन्मात्रेपीति ॥ ॥ तस्येति ॥ ज्ञातृत्वाध्यासस्याविद्याकार्यत्वादित्यर्थः ॥ अन्योन्येति ॥ चिन्मात्रेऽज्ञानसिद्धौ तत्कार्य-ज्ञातृत्वाध्याससिद्धिः तत्सिद्धौ च ज्ञानाज्ञानयोर्वैयधिकरण्यरूपबाधकपरिहारसिद्ध्या चिन्मात्रेऽज्ञान-सिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥ चैतन्य इति ॥ कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यनियमाच्चैतन्ये बुद्धिगतभोक्तृत्वाध्यास-सिध्यर्थं तत्र बुद्धिगतकर्त्तृत्वस्याप्यध्यासो यथांगीक्रियते तथा ज्ञातृत्वाज्ञानाश्रयत्वयोरपि ऐकाधिकरण्यनियमाच्चैतन्ये बुद्धिगतज्ञातृत्वस्याध्याससिद्ध्यर्थं बुद्धिगतमेवाज्ञानमध्यस्यतामिति बुद्धिरेवाज्ञानाश्रयः स्यादित्यर्थः। यथोक्तं विवरणे अकर्त्तुर्भोगाभावात् भोक्तृत्वाध्यासः कर्त्तृत्वाध्यासमपेक्षत इति ॥ देहादाविति ॥ तथा च तत्राप्यज्ञानाध्यासः स्यादिति भावः। किंच चिन्मात्रे ज्ञातृत्वाध्यासोस्तीत्येतदयुक्तमित्याह ॥ बुद्ध्यवच्छिन्नएवेति ॥ जीव एवेत्यर्थः। बुद्ध्यवच्छिन्नचैतन्यस्य ज्ञातृत्वादिति भावः। धर्माणां बुद्धिधर्माणाम्। तयोस्संबंधसद्भावादित्यर्थः। तदभावाज्ज्ञातृत्वाध्यासाभावात्। ननु बुद्धिधर्माणां ज्ञातृत्वादीनां न तदवच्छिन्नचैतन्येऽध्यासः किंतु चैतन्यमात्र एव अतो युक्तं तस्य ज्ञातृत्वमित्यत आह ॥ तेषामिति ॥ ॥ जीवेति ॥ आरोपितज्ञातृत्वादिमतः चैतन्यस्यैव त्वन्मते जीवत्वेन तत्राज्ञानांगीकारे जीवाज्ञानमतापत्त्या उभयानुस्यूतचिन्मात्राश्रितत्वमतं त्यक्तं स्यात्तथाचापसिद्धांत इति भावः। नन्वज्ञानं न ज्ञातृनिष्ठं शुक्त्यज्ञानस्य शुक्त्यवच्छिन्नचैतन्यगतत्वेन ज्ञातृनिष्ठत्वाभावादित्याशंक्य निराकरोति ॥ नचेति ॥ कुतो न चेत्यत उक्तं ॥ अहमिति ॥ यथा ज्ञानेच्छयोर्ज्ञातृस्थत्वमनुभूयते एवं न शुक्तिं जानामीति ज्ञातृस्थत्वस्यैवानुभवादित्यर्थः। संसारतत्वज्ञानाभ्यामज्ञानस्य सामानाधिकरण्य-दर्शनाच्चैतन्येऽज्ञानांगीकारे संसारतत्वज्ञाने अपि चैतन्ये स्यातामित्येतदयुक्तं विशेष्यभूतचिन्मात्रस्थमप्यज्ञानं विशिष्टे जीव एव संसारहेतुः तथा विशिष्टो जीवो यस्तस्य या तत्वधीस्तद्विरुद्धं च भवति। न चान्यगताज्ञानस्यान्यत्र संसारहेतुत्वे घटादावपि तद्धेतुत्वापत्तिरित्यतिप्रसंग इति वाच्यम्। विशेष्यविशिष्टभावस्य नियामकत्वादित्याशंक्य निराकरोति ॥ नचेति ॥ विशिष्टे ब्रह्मण्यपीति। बिंबभूत इत्यर्थः। विशिष्टविशेष्यभावरूपस्य संसारनियामकस्य बिंबे ब्रह्मण्यपि सत्वादिति भावः। विशेष्यनिष्ठेन कारणेन विशिष्टे कार्यजननेऽतिप्रसंगमाह ॥ देहंप्रतीति ॥ अहंकारादिसंनिधानयुतो हि देहः तथा च देहं प्रति विशेष्यो योऽहंकारस्तस्मिन्कर्त्तृत्वस्य त्वयांगीकारात् अहंकारविशिष्टे देहेपि तत्कार्यं भोक्तृत्वं स्यात् अकर्त्तुर्भोगाभावेन भोक्तृत्वे कर्त्तृत्वस्य प्रयोजकत्वात्। अहंकारदेहयोर्विशेषणविशेष्यभावस्य नियामकस्य सत्वादित्यर्थः। देहविशिष्टे देहरूपे विशिष्ट इत्यर्थः। विशेष्यस्थाज्ञानस्य विशिष्टे संसारापादकत्वे चिन्मात्रे नित्यमुक्तत्वसद्भावात्तस्य विशिष्टे संसारविरोधित्वमपि स्यात् त्वदुक्तनियामकस्य सत्वादित्यति प्रसंग इत्याह ॥ विशेष्यस्थेति ॥ ॥ एतेनेति ॥ विशेष्यस्थमप्यज्ञानं विशिष्टजीव एव संसारहेतुः। न चातिप्रसंगः। विशेष्यविशिष्टयोरध्यस्तैक्यस्य तंत्रस्य सत्वादिति यत्तदप्येतेनैव निरस्तम्। विशेषणविशिष्टयोरध्यस्तैक्यरूपस्य संसारप्राप्तिनियामकस्य विशिष्टे बिंबभूते ब्रह्मण्यसंसारापातादित्यर्थः।

(प्रकाशः)

चैतन्यमात्रसंबंधिनोप्यज्ञानस्य विशिष्टे ब्रह्मणि बिंबे न संसारापादकत्वं किंतु जीव एव उपाधेः प्रतिबिंबपक्षपातित्वस्वाभाव्यादित्याशंक्य निराकरोति ॥नचेति॥ किमुपाधेः प्रतिबिंबपक्षपातित्वस्वाभाव्यकल्पनया चिन्मात्र एव संसारोंगीक्रियतां। ननु तर्हि चैतन्यस्य नित्यमुक्तत्व श्रुतिविरोध इति चेन्न चिन्मात्रेऽज्ञानांगीकारेपि यः सर्वज्ञ इत्यादिश्रुतिविरोधसाम्यात् ततश्चार्धजरतीयप्रक्रियानुपपत्तिरित्याह ॥श्रुत्यादीति॥ तथा चोपाधेः प्रतिबिंबपक्षपातित्वं न संभवतीति भावः। इतोपि न संभवतीत्याह ॥प्रतिबिंबस्येति॥ स्यादेवं यदि चिन्मात्रजीवयोर्विशेष्यविशिष्टभावः स्यात् तर्ह्येवास्मान्नियामकादुपाधेः प्रतिबिंबे जीव एव संसारापादकत्वं स्यात्। न चैवं। जीवेशयोरत्यंतभेदेन प्रतिबिंबस्य जीवस्य च्छायादिवद्वस्त्वंतरत्वात् पृथक्पदार्थत्वात् विशिष्टविशेष्यभाव एवायुक्तः तथा चोपाधेः प्रतिबिंबपक्षपातित्वमयुक्तम्। किंच चैतन्यस्य प्रतिबिंबनं तदैव युक्तं स्यात् यदि तच्चाक्षुषं स्यात् न चैवं अचाक्षुषत्वात् अचाक्षुषस्य गंधरसादेः प्रतिबिंबनादर्शनात् चाक्षुषस्यैव मुखादेर्लोहितरूपस्य चादर्शे स्फटिके प्रतिबिंबनदर्शनादित्याह ॥अचाक्षुषस्येति॥ नन्वचाक्षुषस्याप्याकाशस्य जले प्रतिबिंबनं दृष्टमिति चेन्न। तत्र प्रभामंडलस्यैव प्रतिबिंबनादित्युक्तत्वात् ॥प्रतिबिंबत्व इति॥ प्रतिबिंबस्योपाधिपरिणामत्वादिति भावः। अस्मद्रीत्येदं दूषणम्। अज्ञानस्य प्रतिबिंबनोपाधित्वं च न संभवतीत्याह ॥सूर्यस्येति॥ लोके यत्प्रतिफलति तत्समानसत्ताकस्यैवोपाधित्वं. दृष्टं सूर्यप्रतिफलनोपाधेर्जलस्य सूर्यसमसत्ताकत्वदर्शनात्। ननु न दर्शनमात्रं प्रयोजकमिति चेन्न मरुमरीचिकाजलेषु प्रातिभासिकेषु सूर्यसमसत्ताकत्वाभावेन तत्र प्रतिफलनाभावात् एवं प्रकृतेऽज्ञानस्य चिदसमसत्ताकत्वेन चितं प्रत्युपाधित्वायोगादित्यर्थः। प्रतिबिंबनोपाधित्वप्रयोजकस्य स्वच्छद्रव्यत्वस्याज्ञानेऽभावेनाज्ञानं न प्रतिबिंबनोपाधिरित्याह ॥अस्वच्छेति॥ अन्यथा पाषाणादावपि प्रतिफलनप्रसंगादितिभावः ॥चिन्मात्रेति॥ दर्पणाद्युपाधेर्बिंबाभिमुख्यदर्शनादिह चैतन्याविद्ययोरुभयोरपि सर्वगतत्वेनापरिच्छिन्नतयाऽविद्यायाश्चिन्मात्रं प्रति प्राच्यत्वरूपस्य चितश्चाविद्यां प्रति प्रतीचीनत्वरूपस्य चाभिमुख्यस्याभावाच्च न प्रातीतिकबिंबनोपाधित्वमविद्याया इत्यर्थः ॥उपाधेरिति॥ जलाद्युपाधेर्नाशेन कर्दमात्मना परिणामे तत्रत्यप्रतिबिंबापायो दृष्टः एवं जीवरूपप्रतिबिंबात्मना परिणतस्याज्ञानस्यापरिच्छिन्नाकाशादिपरिणामार्थं सर्वेषामप्यविद्यांशानां विकृतत्वादाकाशाद्यात्मनाऽविद्यापरिणामे जीवाख्यप्रतिबिंबापायापत्त्या न प्रतिबिंब-पक्षपातितावचनं युक्तमित्यर्थः। किं चादावुपाधिर्मुखमात्रं संबद्ध्य प्रतिबिंबं संपाद्य तत्पक्षपाती भवतीति वक्तव्यम्। मुखप्रतिमुखानुगतं मुखत्वसामान्यं तार्किकरीत्यास्ति तदतिरिक्तं मुखमात्रं व्यक्त्यंतरमुपाधियोग्यं अप्रामाणिकमेवं प्रकृतेपीत्याह ॥मुखेति॥ दर्पणादिसंबंधात्पूर्वकालीनं मुखमात्रं ॥स्वाश्रय एवेति॥ अज्ञानं उपाधिविशेषभूतं चिन्मात्र एवेत्यर्थः ॥बंधस्येति॥ सुखदुःखादिरूपबंधस्येत्यर्थः। बंधमोक्षयोः सामानाधिकरण्यनियमात् मोक्षस्य चिन्मात्रगतत्वेनाज्ञानकार्यसुखदुःखादिरूपबंधस्यापि चिन्मात्राश्रितत्वापत्त्या न प्रतिबिंबपक्षपातित्वमुपाधेरित्यर्थः ॥व्यक्त्यंतरेति॥ जीवब्रह्मानुस्यूतचिन्मात्ररूपव्यक्त्यंतरेत्यर्थः। ननु चिदाश्रितत्वोक्तिविरोध इत्यत आह ॥चिदिति॥ ॥चित्त्वस्येति॥ जीवेऽज्ञानाधिकरणत्वसद्भावेपि तत्राज्ञानाधिकरणतावच्छेदकं न जीवत्वं किंतु चित्त्वमेव एवं च चित्त्वावच्छेदेनैव जीवेऽज्ञानमस्तीत्यभिप्रेत्याज्ञानस्य चिदाश्रितत्वोक्तिरित्यर्थः। यथाकथंचिच्चित्त्वावच्छेदेनापि जीव एवाज्ञानमंगीकृतं तथा चाज्ञानकल्पित-त्वेनाज्ञानसिद्ध्युत्तरकालीनत्वादज्ञानाश्रयत्वायोगः तथात्वेऽन्योन्याश्रयादिकं स्यादिति वक्ष्यत इत्याह

(प्रकाशः)

।। अन्योन्येति ।। ।। ब्रह्मणीति ।। बिंब इत्यर्थः। अज्ञानाधिकरणता यत्र नास्ति तत्रापि चित्त्वस्य सत्वेनाधिकवृत्तित्वान्न चित्त्वमज्ञानाधिकरणतावच्छेदकं एवं च चित्त्वावच्छेदेन जीव इव ब्रह्मण्यपि संसारापात इतिभावः। ननु न ब्रह्मण्यपि संसारापातः विशेष्यभूतचिन्मात्राश्रिताज्ञानेन विशिष्टे जीव एव संसारांगीकारात् विशेष्यविशिष्टभावस्य नियामकस्य सत्त्वादित्यत आह ।। चिन्मात्रेति ।। देहं प्रति विशेष्याहंकारस्थकर्तृत्वेन देहविशिष्टे भोक्तृत्वापाताच्चेत्यतिप्रसंगेन निरस्तमित्याहुः। जीवाश्रितमज्ञानमिति पक्षदूषणावसरे चिन्मात्रस्थाज्ञानेन विशिष्टे संसार इति शंकाया एवानुदयादिति यत्किंचिदेतत्। वस्तुतस्तु यदुक्तं बंधस्य चिन्मात्राश्रित-मोक्षसामानाधिकरण्यनियमादिति तदयुक्तं मोक्षस्य चिन्मात्राश्रितत्वेपि तदाश्रिताज्ञानेन दुःखादिरूपो बंधो जीवेंगीक्रियते विशेष्यविशिष्टभावस्य नियामकत्वादित्येतदप्येतेनैव निरस्तं ब्रह्मणि बिंबेपि संसारापातात् त्वदीयनियामकस्य सत्वात् तस्मादुपाधेः प्रतिबिंबपक्षपातितानियमोऽयुक्त एवेत्याशयेनाह ।। चिन्मात्रेति ।। ।। प्रतिबिंबं प्रतीति ।। जीवं प्रति प्रतिबिंबे प्रतीयमानानां सुषुप्त्याद्यनुगतानां तदनुवृत्तानां च धर्माणां प्रतिमुखगतमालिन्यादेर्दर्पणादिनिष्ठत्ववदज्ञाननिष्ठत्वाभावादित्याह ।। मालिन्यादेरित्यादिना ।। अविद्यादित्रयं जीवनिष्ठम्। अविद्यायां त्वात्माश्रयान्नयुक्तमिति भावः। किं चोपाधावज्ञाने प्रतीयमानानां च धर्माणां न जीवनिष्ठत्वमित्याह ।। ज्ञानेति ।। ज्ञानं च क्रिया च ज्ञानक्रिये तदुभयजन्यसंस्काराणामित्यर्थः। सर्ववस्तूनामपि वासनाः संत्येवेत्यावयोर्मतं अत एवाविद्यासंस्कारात्प्रवृत्तिरित्यादित्वदीयो व्यवहारः। अस्मन्मतेपि ''वासनाः सर्ववस्तूना''मिति भगवत्पादोक्तेः। क्रियाजन्यः संस्कारोप्यस्त्येव न ज्ञानजन्य एवेति नियमः इयांस्तु विशेषः। ते संस्कारास्तव मतेऽविद्यानिष्ठाः अस्मन्मते तु अनादिमनोनिष्ठा इति। यथोक्तं ''अनादिमनोगता'' इति। अन्ये त्विमं सिद्धांतमजानानाः ज्ञानरूपा या क्रिया धात्वर्थरूपा तज्जन्यसंस्काराणां भावनारूपसंस्काराणामिति व्याचक्षते। अप्रतीतौ निमित्तं नित्यातींद्रियाणामिति। आत्मनि प्रतिबिंबे जीवे। नन्वज्ञानस्य जीवे यावत्स्वनिष्ठधर्मप्रतिभासकत्वाभावेपि स्वनिष्ठो यो भावरूपोधर्मस्तत्प्रतिभासकत्वं जीवेस्तीति तत्राह ।। अविद्येति ।। बंधिका बंधकारणीभूता। भावव्युत्पत्त्या बंधो नतु कर्मव्युत्पत्त्या बद्धचेत्यर्थः। तथा चाविद्याया बंधकारणीभूताया अस्तमयो मोक्षः साऽविद्या संसारः बंध इत्युच्यत इत्यर्थो द्रष्टव्यः ।। विच्छेदादेरिति ।। जीवब्रह्मणोरज्ञानोपाधिना बिंबप्रतिबिंबभाव इति केषांचित्पक्षः। घटाद्युपाधिना महाकाशस्य घटावच्छिन्नाकाशस्य च विच्छेदो भवति न बिंबप्रतिबिंबभावः एवं जीवेश्वरयोरज्ञानोपाधिना विच्छेदमात्रं जायत इत्यन्येषां पक्षः। तत्र घटाद्युपाधिकार्यभूतो यो विच्छेदो विभागः स महाकाशैकदेशे घटावच्छिन्ने प्रतिबिंबस्थानीय एव नास्ति किं नाम बिंबस्थानीये महाकाशेप्यस्ति विच्छेदस्य द्विष्ठत्वात् अत आदिपदेन बिंबप्रतिबिंबभावग्रहणं ततश्चोपाधिकार्यप्रतिभासो न प्रतिबिंब एव किं नाम बिंबे च बिंबत्वादेः सर्वज्ञत्वादेश्चोपाधिभूताज्ञानकार्यत्वात्। अत उपाधिकार्यस्योभयत्रापि दर्शनात् नोपाधेः प्रतिबिंबपक्षपातित्वमिति भावः। उपाधिना स्वकार्यं प्रतिबिंब एवावभास्यत इत्यंगीकारे बाधकमाह ।। मुखेति ।। उभयानुस्यूतमुखमात्रस्याबिंबनात् आदिपदेन प्रतिबिंबनस्येत्यर्थः ।। ब्रह्मेति ।। बिंबभूतेत्यर्थः ।। अनौपाधिकत्वेति ।। उपाधिकार्यत्वानंगीकारेण स्वाभाविकत्वोपपादनादित्यर्थः। ननु दर्पणाद्युपाधेः प्रतिबिंबस्थौल्यादिरूपकार्यप्रतिभासकत्वं दृष्टमिति चेन्न। प्रकृते तत्साम्याभावादित्याह ।। प्रतिमुखेति ।। तथाच यदुपाधिकार्यं विच्छेदादि न तत्प्रतिबिंबमात्रे यश्च प्रतिबिंबमात्रगतः संसारस्तस्यानादित्वेन नोपाधिकार्यत्वं

(प्रकाशः)

तथात्वे संसारस्य सादित्वापातादिति भावः ॥दर्पणघटादाविति॥ प्रतिबिंबत्वोपाधौ विच्छेदोपाधौ वा दर्पणे विच्छेदमात्रोपाधिभूते घटादौ च स्वकार्यं यन्मालिन्यविच्छेदादिरूपं तन्निष्ठो यो धर्मस्तत्प्रतिभासकं नास्ति। बिंबभूते घटाकाशे च दर्पणाद्युपाधिना स्वकार्यनिष्ठधर्माप्रतिभासनेपीत्यर्थः। अज्ञानवद्बुद्धिरप्युपाधिः सोपाधिभूताबुद्धिश्चिन्मात्रसंबंधिनी सती बिंबप्रतिबिंबभावं संपाद्य प्रतिबिंबपक्षपातिनी भवतीति केषांचिन्मतं तद्दूषयति ॥एवमिति॥ तन्मते उपाधिर्द्विविधः प्रतिबिंबपक्षपाती तदपक्षपातीचेति। तत्राद्यो दर्पणाद्युपाधिः द्वितीयस्तु जपाकुसुमादिः स्फटिके लौहित्यं प्रदर्शयति तत्र स्फटिको न जपाकुसुमप्रतिबिंबः एवं बुद्धिरूपोपाधिर्न प्रतिबिंबपक्षपातीति त्वदाचार्यैः स्वीकृतत्वेन तव तद्विरोधादित्याशयेनाह ॥तस्येति॥ यथोक्तं प्रतिमुखपक्ष्यादर्शः प्रतिबिंबपक्षयातिनी बुद्धिरिति। तदन्यस्य जीवस्य। मोक्षेति हेतुगर्भं। मोक्षसमानाधिकरण एव हि बंधः मोक्षश्चचिन्मात्रान्वयी मिथ्याभूते तदभावात् अतो बंधोपि चिन्मात्रान्वयीत्यर्थः। ननु चिन्मात्रस्य संसारांगीकारे नित्यमुक्तत्वश्रुतिविरोध इत्यत आह ॥नित्येति॥ बिंबं मुखं ॥घटेति॥ अवच्छेदपक्षे घटोपाधिकं यत्परिच्छिन्नत्वं तत् अवच्छिन्नाकाश एव दृष्टं नाकाशमात्रे महाकाश इति यावत्। तथा बिंबप्रतिबिंबभावपक्षे दर्पणोपाधिकं मालिन्यं प्रतिबिंब एव नानुस्यूतमुखमात्रे एवमज्ञानरूपोपाधिकृतः संसारः प्रतिबिंब एव युक्तो नानुस्यूतचिन्मात्र इत्यर्थः ॥अभावेनेति॥ चिन्मात्र एव संसारांगीकारादिति भावः ।तार्किकमत इति॥ यथा तार्किकमते व्याप्तोप्यात्मा न घटाद्यवच्छिन्नो दुःखाद्याधारः किंतु देहावच्छिन्न एव तत्र दुःखाद्याधारतावच्छेदकं देहादिरिति यावत् एवं चिन्मात्रेऽज्ञानमिति मतेपि अपरिच्छिन्ने चिन्मात्रे संसाराश्रयता जीवे नावच्छिद्यते संसाराश्रयतावच्छेदकं जीवत्वमेव न ब्रह्मत्वमित्याशयेन जीवे संसारश्रुतिर्ब्रह्मणि चासंसार श्रुतिरुपपद्यत इत्यर्थः ॥त्वन्मत इति॥ यथा तार्किकमते दुःखाद्यधिकरणतावच्छेदकं देहादिरिति दुःखादिकं न देहादौ किंतु तदवच्छिन्न एव एवं जीवत्वावच्छेदेन चिन्मात्रे दुःखान्वयोक्तौ संसाराद्यनर्थो न जीवे किंतु तदवच्छिन्नचैतन्य एवेति चित एवान्वयेन स्वरूपस्यैव दूषितत्वात्तद्भावरूपाया मुक्तेरपुरुषार्थत्वं स्यादित्यर्थः। ननु न नित्यमुक्तत्वश्रुतेर्निर्विषयत्वम्। बिंबस्थानीयब्रह्मपरत्वस्योक्तत्वादिति चेत्तत्राह ॥नहीति॥ बिंबभूतब्रह्माख्यो यः कल्पितो विशिष्टः शबलः तद्विषया न भवति। यथात्वे तस्य कल्पितत्वेन ज्ञाननिवर्त्यत्वनियमात्तन्नाशे निर्विषयत्वापत्तिर्दुर्वारेत्यर्थः ॥नापीति॥ बिंबप्रतिबिंबानुस्यूतं चिन्मात्रमित्यादिप्रक्रिया नांगीकृतेत्यर्थः। पक्षद्वयानंगीकारे कः पक्षोंगीकृत इति पृच्छति ॥किंत्विति॥ उत्तरमाह ॥अविद्ययेति॥ ॥राजसूनोरिति॥ व्याधगेहे संवर्धितस्य कस्यचिद्राजसूनोः त्वं राजसूनुरसि न व्याध इति केनचिदाप्तेनोक्ते पश्चात्तद्वाक्येनाहं राजसूनुरस्मीति स्वरूपस्य स्मृतिप्राप्तौ अनुभवे सतीति यावत् व्याधभावो निवर्त्तते एवमज्ञस्य जीवभावेनाज्ञत्वं प्राप्तस्य ब्रह्मणस्तत्वमस्यादिवाक्यतः स्वस्वरूपज्ञाने जाते जीवभावो निवर्तत इति सुरेश्वरीयबृहदारण्यकवार्त्तिकार्थः। भाष्यं शांकरीयम्। ननु ब्रह्मण एव जीवत्वे संसारास्पृष्टचैतन्याभावप्राप्त्या नित्यमुक्तत्वश्रुतिविरोध इत्यत आह ॥नहीति॥ ॥तत्रैवेति॥ जीवभावं प्राप्त एव ब्रह्मणि संसारः कदापि नास्ति किंत्वाविद्यक एवेत्यभिप्रायेत्यर्थः। कल्पितोपि यादृशोऽनर्थ रूप इत्यन्वयः ॥सदेति॥ सर्वदा तादृशबंधाभावस्यैव नित्यमुक्तत्वश्रुत्यर्थत्वादिति भावः ॥अन्यथेति॥ संसारवत्यपि नित्यमुक्तत्वश्रुतेरुपपत्तौ तन्यायेन शोकाभावश्रुतेरपि शोकवत्येव तात्विकशोकाभावप्रतिपादन-परत्वेनोपपत्तेर्नतत्श्रुतिबलान्मुक्तौ शोकाभावश्रुतिरित्यर्थः। ननु जीवादन्यस्य चेतनस्याभावेपि न

(प्रकाशः)

सार्वज्ञश्रुतेर्निर्विषयत्वं जीवविषयकत्वस्यैवोपपत्तेरित्यत उक्तमसर्वज्ञत्वेनानुभवसिद्धत्वादिति। तथाच ब्रह्मैव स्वाविद्यया संसरतीति पक्षे जीवातिरिक्तस्य बिंबस्थानीयस्य ब्रह्मणोभावाज्जीवस्य चासर्वज्ञत्वेनानुभूयमानत्वात् सर्वज्ञत्वस्येवासर्वज्ञत्वस्यापि कल्पितत्वाकल्पितत्वाभ्यामपि व्यवस्थाया असंभवादित्यर्थः ॥ब्रह्मभावेति॥ कल्पितेनापि संसारेणास्पृष्टचैतन्यस्याभावेपि संसारिप्राप्तिरेव मुक्तिरित्यापातेनेत्यर्थः। ननु बहुजीववादेपि बद्धमुक्तव्यवस्थायाः सत्वेन तत्रैतद्दूषणप्राप्तावपि नैकजीववादेऽयं दोष इत्यत आह ॥एकजीवेति॥ ब्रह्मैव स्वाविद्यया एकजीवभावं प्राप्तं यदा तदा तस्मिन्पक्षे जीवातिरिक्तचैतन्यस्यैवाभावादित्यर्थः ॥तयोरिति॥ जीवब्रह्मणोरित्यर्थः ।एकजीववाद इति वर्तते। अद्वैतवादेपि व्यावहारिकभेदेन जीवान्यचैतन्यस्य सत्वे द्वासुपर्णेत्यादिभेदप्रतिपादक श्रुत्यादीनां तद्विषयत्वेनाविरोधः स्यादित्यर्थः। त्वन्मतेपि व्यावहारिकोपि भेदो नास्तीति भेदश्रुत्यादिविरोधः स्यादित्यर्थः ॥ नेतरेतत्रेति॥ बिंबप्रतिबिंबयोरभेदेपि बिंबेऽवदातत्वं प्रतिमुखे श्यामत्वं तु मुख इत्येवं अन्योन्यस्मिन्नावतिष्ठेते किं नामावदातत्वं मुखे श्यामत्वं प्रतिमुख इत्येवं नियते एव व्यावहारिकभेदात् एवं तत्वज्ञानसंसारावपि नियतावेवेत्यर्थः।

''उपाधिभेदाद्धटत इति चेत्स स्वभावतः।
अज्ञानतो वा द्वैतस्य सत्यता स्वत एव चेत्।
अनवस्थितिरज्ञानहेतौ वान्योन्यसिद्धिता।
चक्रकापत्तिरथवे'' इति

उपाधिखंडन वाक्यं हृदि निधायाह ॥किंचेति॥ ॥ननिवर्त्तेतेति॥ स्वाभाविकत्वेन सत्यत्वप्राप्त्या सत्यस्य चानिवृत्तिरिति तेनांगीकृतत्वादित्यर्थः ॥औपाधिकत्वे॥ अज्ञानस्येति शेषः। अज्ञानस्योपाधिकल्पितत्व इत्यर्थः।

॥अज्ञानस्यविवरणोक्तचिन्मात्राश्रितत्वभंगविवरणम्॥

## २९. सर्वज्ञस्याज्ञानाश्रयत्वभङ्गः

**किं च त्वन्मते शुद्धब्रह्मणश्चिन्मात्रत्वेऽपि श्रुत्यादौ तस्य सर्वज्ञत्वात् कथमज्ञानम्।**

**सर्वं हि यो विजानीते तस्य कुत्रापि नाज्ञता ।**
**न हि यो यद्विजानीते स तत्राज्ञानवान् भवेत् ॥**

**सविशेषमेव ब्रह्म सर्वज्ञमिति चेन्न, तुरीयं तत्सर्वदृक्सदे'ति शुद्धे तत् श्रुतेः। एतेन सर्वज्ञत्वं भ्रान्त्या प्रमाणतो वा स्वरूपज्ञप्त्या वा त्रेधाप्यविद्यासिद्धिः, भ्रान्तेः प्रमातृत्वादेश्चाविद्यामूलत्वात्। असंगस्वरूपज्ञप्तेश्चाविद्यां विना विषयासंगतेः। उक्तं हि–**

स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम् ।
तच्चोभयं विना विद्यासम्बन्धं नैव सिद्ध्यति ॥

इति निरस्तम्, अविद्यारहिते तुरीयेऽपि सार्वज्ञ्यश्रुतेः। एकाश्रयैकविषयकज्ञानाज्ञानयोर्विरोधस्यानुद्धाराच्च। स्वरूपज्ञप्तेः स्वतः सर्वकालाद्यसम्बन्धे असत्त्वापातेन स्वतः सर्वसम्बन्धाभावे असर्वगतत्वापातेन चाविद्ययेव स्वत एवान्येनापि सम्बन्धोपपत्तेश्च। असंगश्रुतेस्तु गतिरुक्ता। एतेन ब्रह्मणो ज्ञातृत्वमुपेत्याज्ञानं वदन्तो निरस्ताः। तदुक्तम्– अज्ञाताऽखिलसंवेत्तुर्घटते न कुतश्चनेति॥

सर्वज्ञस्याज्ञानाश्रयत्वभंगः।

## अद्वैतसिद्धिः

ननु– शुद्धब्रह्मणः चिन्मात्रस्याज्ञानाश्रयत्वे सार्वज्ञ्यविरोधः। न च विशिष्ट एव सार्वज्ञ्यम्, 'तुरीयं सर्वदृक्सदा' इति शुद्धस्यैव सर्वज्ञत्वोक्तेरिति चेन्न, सर्वदृक्पदेन सर्वेषां दृग्भूतं चैतन्यमित्युच्यते, न तु सर्वज्ञं तुरीयम्, तस्माद्विशिष्ट एव सार्वज्ञ्यम्। तच्चाविद्यां विना न संभवतीत्यविद्यासिद्धिः। तथा हि– सर्वज्ञो हि प्रमाणतः, स्वरूपज्ञप्त्या वा। तत्र प्रमाणस्य भ्रान्तेश्चाविद्यामूलत्वाद्, असङ्गस्वरूपज्ञप्तेश्चाविद्यां विना विषयासङ्गतेः। तदुक्तम्–

स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम् ।
तच्चोभयं विनाऽविद्यासंबन्धं नैव सिध्यति ॥ इति ।

न च– स्वरूपज्ञप्तेः स्वतः कालाद्यसंबन्धेऽसत्त्वापातेन स्वतः संबन्धाभावेऽसर्वगतत्वापातेन चाविद्ययेव स्वत एवान्येन संबन्धो वक्तव्य इति वाच्यम्, अविद्यासंबन्धस्याप्याविद्यकत्वेनाविद्ययेवेति दृष्टान्तानुपपत्तेः। स्वतः परतो वा कालादिसंबन्धेन सर्वसंबन्धेन चासद्वैलक्षण्यसर्वगतत्वयोरुपपत्तेर्न तयोरर्थे स्वतः कालसंबन्धसर्वसंबन्धापेक्षा। असङ्गत्वश्रुतिरपि स्वतः सङ्गाभावविषयत्वेनोपपद्यते। अत एव 'अज्ञाताऽखिलसंवेत्तुर्घटते न कुतश्चने'ति– निरस्तम्। तस्माच्चिन्मात्राश्रितैवाविद्या। इत्यज्ञानवादे सर्वज्ञस्याविद्याश्रयत्वोपपत्तिः।

## न्यायामृततरङ्गिणी

ननु बिंबभूतं ब्रह्म सर्वज्ञं तच्च नाज्ञानाश्रय इत्यत आह ॥ सविशेषमेवेति॥ ॥ तुरीयमिति॥ जाग्रदाद्यवस्थातीतं शुद्धं तुरीयमित्यर्थः। नतु सर्वदृक्पदेन सर्वेषां दृग्भूतं चैतन्यमुच्यते। न तु सर्ववेत्ता। सर्वपदवैयर्थ्यात्। तुरीयं प्रति सर्वस्याभावाच्च। ॥ सर्वज्ञस्याज्ञानाश्रयत्वभंगः॥

## न्यायामृतकण्टकोद्धारः

शुद्धं ब्रह्म चिन्मात्रादन्यत् चिन्मात्रमेव वा? नाद्यः चिदन्यस्य कल्पितत्वेन शुद्धत्वानुपपत्तेः। न द्वितीय इत्याह ॥ किञ्चेति॥ ननु सर्वज्ञत्वेऽप्यज्ञानं किं न स्यादित्यत आह ॥ सर्वं हीति॥ ॥ तुरीयमिति॥ ॥ उपलक्षणमेतत्। यथा विशेष्यनिष्ठमज्ञानं विशिष्टजीवनिष्ठतत्वज्ञानविरोधि तथा सविशेषब्रह्मनिष्ठतत्त्वज्ञानेनापि विरुध्येताविशेषात्। अन्यथा जीवनिष्ठतत्त्वज्ञाननाश्यं न स्यात्। विशेष्यविशिष्टभावस्य नियामकत्वान्नातिप्रसङ्ग इत्यपि द्रष्टव्यम्। न च सर्वदृक्शब्देन सर्वेषां दृग्युतमिति प्रतिपाद्यते न सार्वज्ञ्यमिति वाच्यम्। सर्वदृक्पदस्य सर्वज्ञादिपदपर्यायत्वेन प्रसिद्धेः। सर्वमध्ये स्वस्यापि पतितत्वेन तद्दृक्त्वाभावात्। न हि स्वविषया दृक् स्वयमेव। क्रियायाः स्वविषयत्वस्य विरुद्धत्वात्। यः सर्वज्ञ इत्यादावप्येवमेवार्थापत्या प्रमाणसत्वं न स्यात्। न चात्र बाधकादर्थान्तरम्। सार्वज्ञादेरौपाधिकं सार्वज्ञादेराविद्यकत्वे चिन्मात्र एव तदङ्गीकारौचित्याच्च अविद्यायाः स्वाश्रय एव स्वकार्यकरत्वादिति दिक्। एतेन सर्वज्ञत्वाज्ञत्वयोर्विरोधेन तुरीयेऽपि श्रवणेन चेत्यर्थः। ॥ स्वरूपज्ञप्तेरिति॥ न च स्वतः कालादिसम्बन्धाभावेऽपि परतः कालादिसम्बन्धमात्रेणासत्त्वादिपरिहारोपपत्तिरिति वाच्यम्। यथाकथञ्चित् कालादिसम्बन्धस्य खपुष्पादि साधारणत्वात्। औपाधिककालादिसम्बन्धेनासत्त्वाभावादिके अङ्गीक्रियमाणे सत्त्वाभावव्यापकत्वादेरौपाधिकत्वेन वास्तवासत्त्वाद्यापाताच्च साक्षात् कालादिसत्वस्यैवासत्त्वाद्यभावादि प्रयोजकत्वाच्च। न चापरिच्छिन्नत्वमात्रेण व्यापकत्वमिति वाच्यम्। त्रिविधपरिच्छेदशून्यत्वरूपापरिच्छिन्नत्वस्यासत्साधारणत्वात् न चाविद्ययेति दृष्टान्तो न युज्यते। अविद्यासम्बन्धस्याविद्यकत्वेन स्वतः सम्बन्धाभावादिति वाच्यम्। आत्माश्रयान्योन्याश्रयादेरपरिहारात्॥ असंगत्व श्रुतेस्त्विति॥ पुण्यपापलेपाभावोपपत्तय इत्यर्थः। उक्तार्थे आचार्यसम्मतिमाह ॥ तदुक्तमिति॥ अत्र संवेत्तुरिति ताच्छीलिकतृन्प्रत्ययेन ज्ञानादेरनौपाधिकत्वमुच्यत इति भावः। इति सर्वज्ञस्याज्ञानाश्रयत्वभङ्गः।

## न्यायामृतप्रकाशः

सर्वज्ञत्वात् ''यस्सर्वज्ञ'' इत्यादौ सर्वज्ञत्वेन प्रतिपादितत्वादित्यर्थः। ननु मया ज्ञानरूपत्वाङ्गीकारान्नसर्वज्ञातृत्वरूपं सार्वज्ञमंगीकृतमित्यत उक्तं चिन्मात्रत्वेपीति। त्वया तथांगीकारेपि श्रुत्याद्यनुसारेण सार्वज्ञमंगीकार्यमिति भावः। ''अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चने''ति भगवत्पादीयोक्तिं, तथा ''ननु सर्वज्ञस्याज्ञानं न घटत इत्यत्र नान्वयदृष्टांतः परमात्मानं विनाऽन्यस्य सर्वज्ञस्याभावात् नापि व्यतिरेकदृष्टांतः

(प्रकाशः)

अज्ञानाश्रयस्यान्यस्य परेणानभ्युपगमात्तत्कथमेतदिति। मैवम्। यो यत्र ज्ञानवान्नासौ तत्राज्ञानवानिति सामान्यव्याप्तेरविरोधादि''ति टीकाकारीयोपपादनं च हृदि निधाय संगृह्णाति ॥सर्वंहीति॥ ननु बिंबभूतं ब्रह्मसर्वज्ञं तच्च नाज्ञानाश्रय इत्याशंकते ॥सविशेषमेवेति॥ विशिष्टं शबलमित्यर्थः ॥तुरीयमिति॥ जाग्रदाद्यवस्थातीतं शुद्धं तुरीयमिति तदर्थः ॥तत् श्रुतेरिति॥ सार्वज्ञश्रुतेरित्यर्थः ॥भ्रांत्येति॥ सर्वविषयकं भ्रमरूपमेवेति तदर्थः। सर्वविषयकज्ञानस्य भ्रांतिरूपत्वे प्रमाणतः सर्वज्ञत्वे वाऽविद्यासिद्धिमुपपादयति ॥असंगेति॥ प्रमाणतः स्वरूपप्रज्ञया वा सर्वज्ञत्वमविद्यासंबंधसाक्षेपमित्यत्र संमतिमाह ॥उक्तंहीति॥ एवं च ब्रह्म नाज्ञानाश्रयः सर्वज्ञत्वादित्यनुमाने विरुद्धता स्यात् सर्वज्ञत्वस्याज्ञानसापेक्षत्वादित्युक्तं भवति ॥तुरीयेपीति॥ तथाच तत्र श्रुतं सार्वज्ञं नाविद्यासापेक्षमित्यर्थः। सर्वज्ञत्वमंगीकृत्याविद्यांगीकारे विरोधश्चेत्याह ॥एकाश्रयेति॥ किंच विकल्पितपक्षत्रयमध्ये स्वभावसिद्धप्रज्ञयैव सार्वज्ञमित्यंगीकुर्मः। नचासंगाया ज्ञप्तेर्नविषयेण स्वतः संबंध इत्यविद्यासिद्धिरिति वाच्यम्। असंगाया अपि स्वरूपज्ञप्तेः स्वतस्तावत्कालसंबंधोस्तीत्यंगीकार्यं अन्यथाऽसत्वापत्तेः तथा स्वतः सर्वदेशसंबंधोप्यंगीकार्यः अन्यथा सर्वगतत्वाभावापत्तेः तद्वद्विषयैरपि स्वत एव संबंधोपपत्तेः। यथा वा असंगाया अपि स्वरूपज्ञप्तेरविद्ययैव संबंधोंगीकृतः नह्यविद्यासंबंधघटकाविद्यांतरमस्ति। स्वनिर्वाहकत्वकल्पनं तु स्वरूपसिध्युत्तरकालीनं तस्यैवेदानीं संदिह्यमानत्वात् अतस्तद्वदन्येनापि संबंधोपपत्तेर्न सर्वज्ञत्वस्याज्ञानापेक्षेति न विरुद्धत्वमित्याशयेनाह ॥स्वरूपज्ञप्तेरिति॥ ननु तर्ह्यसंगत्वश्रुतिविरोध इत्यत आह ॥असंगत्वेति॥ ॥उक्तेति॥ तत्कृतलेपाभावपरतयेत्यर्थः। ज्ञातृत्वं सर्वज्ञत्वं ॥निरस्ता इति॥ सर्वं हि यो विजानाति इत्यनुमानविरोधादित्यर्थः। इदं सर्वं भगवत्पादोक्तस्योपपादनं नोत्प्रेक्षितमिति ज्ञापयति ॥तदुक्तमिति॥ ॥सर्वज्ञस्याज्ञानाश्रयत्वभंगविवरणम्॥

## ३०. परोक्तब्रह्ममायावित्वभंगः

**एतेन मा भूद् ब्रह्मण्यविद्या, माया तु स्यात्। तस्या लीलोपकरणत्वेनादोषत्वादिति निरस्तम्। तथा हि– सा किमज्ञानविशेषः? किं वा देवासुरसंग्रामादौ देवादेःबाह्यसाधनमनपेक्ष्यैव वन्हिजलादिविचित्रसत्यवस्तुसर्जनशक्तिवच्छक्तिविशेषः? यद्वा ऐन्द्रजालिकस्येवाविद्यमानप्रदर्शनशक्तिः? नाद्यः, उक्तरीत्या सामान्याभावे विशेषायोगात्। अज्ञानस्य लीलोपकरणत्वादर्शनाच्च, तस्मिन्मायाशब्दाप्रयोगाच्च। न ह्यैंद्रजालिकोऽपि कस्यचिदज्ञानेनेंद्रजालं दर्शयति, किं तु मणिमंत्रादिनैव। न द्वितीयः, इष्टापत्तेः। न तृतीयः, व्यामोहनीयजीवादर्शने व्यामोहनायोगात्। कल्पिततद्दर्शनस्य च भ्रान्तिं विनाऽयोगात्। कल्पितत्वेन तद्दर्शने च तद्व्यामोहनायोगात्। तस्यापि द्वितीयचन्द्रदर्शनस्येवाविद्यां विनायोगाच्च। किं च तस्याः शक्तेः सत्त्वे अद्वैतहानिः, जीवकल्पितत्वे तद्व्यामोहकत्वायोगः, ब्रह्मकल्पितत्वे तस्याज्ञानावश्यंभावः। परोक्त-ब्रह्ममायित्वभंगः।**

## न्यायामृततरङ्गिणी

व्यामोहनीयेति। व्यामोहक्रियायाः कर्मकारकापेक्षत्वात्परस्मिन्नन्यथाबुद्धिजननरूपव्यामोहनस्यच व्यामोहनीयदर्शनापेक्षत्वाच्चेति भावः ॥कल्पितेति॥ भ्रांतेश्च मायांविनाऽयोगात्तस्याश्चाद्याप्यसिद्धेरित्यर्थः ॥तस्यापीति॥ कल्पितत्वेन रूपेण व्यामोहनीयदर्शनस्येत्यर्थः ॥जीवेति॥ मायायाः मायाविनं प्रत्यव्यामोहकत्वात्। ॥परोक्तब्रह्ममायावित्वभंगः॥

## न्यायामृतकण्टकोद्धारः

एतेन सर्वप्रत्ययस्याज्ञानविरोधोपपादनेनेत्यर्थः। तस्मिन् अज्ञाने इत्यर्थः। एतदेवोपपादयति ॥नहीति॥ ॥व्यामोहनीयेति॥ ऐन्द्रजालिकव्यामोहनीयदर्शन एव व्यामोहनस्य दृष्टत्वादिति भावः। ननु कल्पिता एव दृश्यन्ते इत्यत आह ॥कल्पितेति॥ भ्रान्तेश्चाज्ञानसापेक्षत्वादिति भावः। ननु कल्पितमकल्पितत्वेन पश्यतः भ्रान्तिरावश्यकी। न कल्पितं कल्पितत्वेनेत्यत आह ॥कल्पितत्वेनेति॥ न हि कश्चिदैन्द्रजालिकः स्तम्भादिकं पुरुषत्वेन कल्पयित्वा व्यामोहको दृष्ट इति भावः। ननु वृक्षादेः सत्त्वादिवत् कल्पितत्वेन निश्चयेऽपि दर्शनं स्यादित्यत आह ॥तस्यापीति॥ अज्ञानं च सर्वज्ञत्वेन प्रागेव दूषितमिति भावः। इति परोक्तब्रह्ममायावित्वभङ्गः।

## न्यायामृतप्रकाशः

ननु सर्वज्ञस्य मायापि न संभवतीति चेत्तत्राह ॥तस्या इति॥ ॥लीलोपकरणत्वेन॥ लीलासाधनत्वेन। आवरकत्वाभावादित्यर्थः। अदोषत्वात् सार्वज्ञाद्यविघातित्वादित्यर्थः ॥अविद्यमानप्रदर्शनशक्तिरिति॥ अविद्यमानप्रदर्शनेन परव्यामोहनशक्तिरित्यर्थः ॥सामान्येति॥ अज्ञानस्वरूपस्यैवाभाव इत्यर्थः। तस्मिन् लीलोपकरणे वस्तुनीत्यर्थः। माया नाज्ञानविशेष एव। ऐंद्रजालिकः पुमान् मायया सर्पादिकं प्रदर्शयतीति तावद्व्यवहारोस्ति स न स्यात् कुत इत्यत आह ॥नहीति॥ कस्यचिद्वस्तुनः। व्यामोहक ईश्वरो व्यामोहनीयं पश्यति न वा आद्येपि व्यामोहनीयजीवस्याकल्पितत्वाभावेन कल्पितत्वे वाच्ये तान्कल्पितान् जीवान् किं स्वरूपेण पश्यति कल्पितत्वेन वा। व्यामोहनीयं न पश्यतीति पक्षेत्वाह ॥व्यामोहनीयेति॥ व्यामोहनक्रियायाः कर्मकारकापेक्षत्वात् परस्मिन्नन्यथाबुद्धिजननरूपव्यामोहनस्य व्यामोहनीयदर्शनापेक्षत्वादित्यर्थः। आद्येपि प्रथमपक्षे आह ॥कल्पितेति॥ कल्पितानां दर्शनस्य भ्रांतिं विनाऽयोगात् भ्रांतिरंगीकार्या तस्याश्चाविद्याकार्यत्वादविद्याप्यंगीकार्या स्यात् तथाच मा भूद्ब्रह्मण्यविद्येत्युक्तत्वेन स्ववचनविरोधापातादिति भावः। आद्ये द्वितीयपक्षे त्वाह ॥कल्पितत्वेनेति॥ ॥तद्व्यामोहनेति॥ एते मत्कल्पिता इति जानन्नेव पुनस्तद्व्यामोहने प्रवर्तत इत्येतददृष्टचरम्। नहि स्वाप्नः पुरुषः कल्पित इति जाग्रदवस्थायां जानन् पुनस्तद्व्यामोहनाय प्रवर्तते नवा रज्जौ सर्पः कल्पित इति जानन् तद्बाधनायोद्यतदंडो दृश्यत इति भावः। व्यामोहनाय कल्पितत्वेन दर्शनांगीकारेपि पुनरविद्यांगीकारप्राप्त्या माभूद्ब्रह्मणीति स्ववचनविरोध एवेत्याशयेनाह ॥तस्यापीति॥ अंगुल्यवष्टंभादिना कल्पित

(प्रकाशः)
एव द्वितीयश्चंद्रो भासत इत्येवं कल्पितत्वेन द्वितीयचंद्रदर्शनमपि अविद्यामूलकमेव सोपाधिकभ्रमत्वेन भ्रमस्याज्ञानकार्यताया अंगीकार्यत्वात् तथेहापीत्यर्थः ॥तस्याःशक्तेरिति॥ अविद्यमानप्रदर्शनेन परव्यामोहनशक्तेरित्यर्थः। सा शक्तिः किं सती कल्पिता वा आद्ये आह ॥सत्वइति॥ द्वितीयेपि किं जीवकल्पिता उत ब्रह्मकल्पिता नाद्य इत्याह ॥जीवेति॥ ॥तदिति॥ कल्पितत्वे जीवव्यामोहकत्वेत्यर्थः। ऐंद्रजालिकपुरुषकल्पितमायायाः स्वाश्रयमायाविव्यामोहकत्वादर्शनादत्रापि तस्याः शक्तेर्जीवव्यामोहकत्वस्यैवायोगादिति भावः। न द्वितीय इत्याह ॥ब्रह्मेति॥ ॥तस्येति॥ कल्पनाया अज्ञानकार्यत्वात् ब्रह्मकल्पितत्वांगीकारे तस्याज्ञानप्राप्त्या पुनः स्ववचनविरोध एवेति भावः ॥परोक्तब्रह्ममायित्वभंगविवरणम्॥

## ३१. अज्ञानस्य वाचस्पत्युक्तजीवाश्रितत्वभङ्गः

यच्चोक्तं वाचस्पतिना जीवाश्रिताविद्येति। तन्न, जीवशब्देन चिन्मात्रलक्षणायामुक्तदोषात्। अविद्यया वा आविद्यकबुद्ध्यादिना वाऽवच्छिन्नस्य तत्प्रतिबिंबितस्य वा कल्पितभेदस्योक्तावन्योन्याश्रयात्। न च बीजांकुरन्यायेनासौ न दोषः, तद्वदिह व्यक्तिभेदाभावात्। सन्तानिव्यतिरेकेण च तत्र सन्तानयोरन्योन्यापेक्षाभावात्। न च यथा निरंशेऽप्याकाशे घटस्तटस्थ एव तदुपलक्ष्यैकदेशं संपाद्य तेन सम्बध्यते, तद्वदविद्यापि तटस्थैव चिन्मात्रमुपलक्ष्यैकदेशरूपजीवं संपाद्यत त्रावतिष्ठत इति नेतरेतराश्रयः।

स्वेनैव कल्पिते देशे व्योम्नि यद्वद् घटादिकम् ।
तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः ॥

इत्युक्तेरिति वाच्यम्। निराश्रयाविद्यायोगेन जीवसिद्धिस्तत्सिद्धौ तदुपलक्षितजीवसिद्धिरित्यन्योन्याश्रयात्। त्वन्मते गगनस्याप्यनित्यद्रव्यत्वेन स्वत एवांशसम्भवाच्च। न च जीवाविद्ययोरनादित्वेनोत्पत्तिज्ञप्तिप्रतिबन्धादयमदोषः, यतः

अविद्याजीवयोर्यत्र व्यपेक्षा तन्निरोधकः ।
अन्योन्यसंश्रयो नो चेदन्योन्याधीनताहतिः ॥

अज्ञानजीवयोर्हि कुत्रापि विषयेऽन्योन्यापेक्षा न चेदन्योन्याधीनताव्याहतिः। न हि सर्वथा तदनपेक्षं तदधीनम्। अथानादित्वेऽपि द्रव्यत्वगुणत्वादिजातिव्यंजकयोरिव

प्रयुक्त्यादावपेक्षा, तर्ह्यन्योन्याश्रयस्तस्यैव प्रतिबन्धकः। द्रव्यत्वादौ व्यंग्यमेव व्यंजकप्रयुक्तं न तु व्यंजकं व्यंग्यप्रयुक्तम्। इह तु जीवब्रह्मविभागस्याविद्यकत्वादविद्यायाश्च जीवाश्रितत्वात् जीवत्वाज्ञाने अन्योन्यप्रयुक्ते इति प्रयुक्तेरेव प्रतिबन्धः। एवं च–

यद्युत्पत्तिज्ञप्तिमात्रप्रतिबन्धेन दोषता ।
तर्हि स्याच्चैत्रमैत्रादेरन्योन्यारोहणादिकम् ॥

न च प्रमेयत्वाभिधेयत्वादावन्योन्यवृत्तिवदिहान्योन्यापेक्षा प्रमिता। अन्यथाऽन्योन्याश्रयादिः क्वापि दोषो न स्यात्। जीवत्वप्रयोजकमज्ञानान्तरं चेत्, चक्रकमनवस्था वा। न चेयं परम्परा सिद्धविषया, अहमज्ञ इति प्रतीतेः सत्यभेदेनैवोपपत्तेः। किं च जीवेश्वरयोर्जीवेश्वराभ्यां कल्पितत्वे आत्माश्रयात्। ईश्वर (ब्रह्म) जीवकल्पितत्वेऽन्योन्याश्रयात्। तत्कल्पकस्य शुद्धस्य ब्रह्मणो ज्ञानमावश्यकम्। न चाविद्याया दौर्घट्यं भूषणम्, तत्र लक्षणप्रमाणाद्युक्त्ययोगात्। अविद्याया निराश्रयत्वनिर्विषयत्वात्मस्वरूपत्वाद्यापाताच्च। प्रतीत्यनुसारेणाश्रयाद्यंगीकारे च घटमहं न जनामीति प्रतीत्याहमर्थाश्रितत्वजडविषयत्वादिप्रसंगाच्च। अनादित्वादिनाऽनुपपत्तिपरिहारायोगाच्च। उत्तरास्फुरणे प्रकृतिसंवृत्यादेर्दौर्घट्यं भूषणमिति सुवचत्वेन सांख्यबौद्धादिमतनिरासायोगाच्च। उक्तं च–

दुर्घटत्वे भूषणं चेत्स्यादविद्यात्वमात्मनः ।
अन्धंतमोऽप्यलंकारो नित्यदुःखं शिरोमणिः ॥ इति ।

एतेन

प्रश्नविश्रान्ति (हेतु) भूमित्वाच्चोद्यन्तमसि नोचितम् ।
न बुद्धिमन्तः पृच्छन्ति न जानामीति वादिनम् ॥

इति निरस्तम्। न ह्यज्ञं प्रत्यप्रश्नोऽज्ञानस्य दौर्घट्यात्, ज्ञानमेवाज्ञानमित्याद्युक्तावपि विरोधाद्यनुद्भावनापातात्। किं तु ज्ञातुरेव वक्तृत्वात्।

अज्ञानस्य वाचस्पत्युक्तजीवाश्रितत्वभंगः।

## अद्वैतसिद्धिः

वाचस्पतिमिश्रैस्तु जीवाश्रितैवाऽविद्या निगद्यते। ननु– जीवाश्रिताऽविद्या तत्प्रतिबिम्बतचैतन्यं वा, तदवच्छिन्नचैतन्यं वा, तत्कल्पितभेदं वा जीवः, तथा चान्योन्याश्रय– इति चेन्न, किमयमन्योऽन्याश्रय उत्पत्तौ ? ज्ञप्तौ ? स्थितौ वा ? नाद्यः, अनादित्वादुभयोः। न द्वितीयः, अज्ञानस्य चिद्भास्यत्वेऽपि चितेः स्वप्रकाशत्वेन तदभास्यत्वात्। न तृतीयः। स किं परस्पराश्रितत्वेन वा, परस्परसापेक्षस्थितिकत्वेन वा स्यात्। तन्न, उभयस्याप्यसिद्धेः, अज्ञानस्य चिदाश्रयत्वे चिदधीनस्थितिकत्वेऽपि चिति अविद्याश्रितत्वतदधीनस्थितिकत्वयोरभावात्। न चैवमन्योन्याधीनताक्षतिः, सामानकालीनयोरप्यवच्छेद्यावच्छेदकभावमात्रेण तदुपपत्तेः, घटतदवच्छिन्नाकाशयोरिव प्रमाणप्रमेययोरिव च। तदुक्तम्–

स्वेनैव कल्पिते देशे व्योम्नि यद्वद् घटादिकम् ।
तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः ॥ इति ।

एतेन– यद्युत्पत्तिज्ञप्तिमात्रप्रतिबन्धकत्वेनान्योऽन्यापेक्षताया अदोषत्वम्, तदा चैत्रमैत्रादेरन्योन्यारोहणाद्यापत्तिरिति निरस्तम्, परस्परमाश्रयाश्रयिभावस्यानङ्गीकारात्। न चेश्वरजीवयोरीश्वरजीवकल्पितत्वे आत्माश्रयः, जीवेशकल्पितत्वे चान्योन्याश्रयः, न च शुद्धा चित् कल्पिका, तस्या अज्ञानाभावादिति– वाच्यम्, जीवाश्रिताया अविद्याया एव जीवेशकल्पकत्वेनैतद्विकल्पानवकाशात्। तस्माज्जीवाश्रयत्वेऽप्यदोषः। इत्यद्वैतसिद्धौ अज्ञानस्य जीवाश्रयत्वोपपत्तिः ॥

## न्यायामृततरङ्गिणी

**संतानीति। तत्तद्बीजांकुरव्यक्तयः संतानिरूपाः। बीजांकुरपरंपरा संतानः ॥ निराश्रयेति॥ घटाकाशसिद्धिं विनापि घटसिद्धिवज्जीवसिद्धिं विनाऽज्ञानसिद्धेरभावादित्यर्थः ॥ स्वत इति॥ घटादिसंबंधं विनापि। जीवस्त्वज्ञानसंबंधं विना न सिद्ध इति भावः ॥ प्रमेयत्वेति॥ प्रमितस्य अभिहितस्यैव तत्तदभावाधिकरणत्वात्। अन्यथा व्याहतिः स्यादित्यर्थः ॥ सिद्धेति॥ अन्यथासिद्धेत्यर्थः। ॥ तत्कल्पकस्येति॥ तथाच शुद्धाश्रितमज्ञानमिति स्यादित्यर्थः। नन्वज्ञानाधीनोपि जीवोहमज्ञ इति प्रतीतिबलादेवाज्ञानाश्रय इत्यंगीक्रियत इत्यत आह ॥ प्रतीतीति ॥**

(तरङ्गिणी)

ज्ञानमेवाज्ञानमितीति।। अज्ञानविषयप्रश्नाभावे दौर्घट्यं हेतुश्चेत्तर्ह्यज्ञानविषयकविरोधानुद्भावनेपि दौर्घट्यं हेतुरिति तत्र विरोधोद्भावनमपि न स्यादित्यर्थः ।।वक्तृत्वादिति।। वक्तुरेव प्रष्टव्यत्वादिति शेषः। ।।अज्ञानस्यवाचस्पत्युक्तजीवाश्रितत्वभंगः।।

## न्यायामृतकण्टकोद्धारः

ननु नात्मान्यस्याविद्याश्रयत्वम्। जीव एव तदाश्रयो भविष्यति। तथाचाहमज्ञ इत्यादिप्रतीतिरपि सङ्गच्छते। अहंपदार्थस्य जीवत्वादिति वाचस्पतिमिश्रमतं दूषयति ।।यच्चेति।। ।।तन्नेति।। सर्वज्ञत्वादिविरोधाद्युक्तदोषादित्यर्थः। ननु जीवशब्देन चिन्मात्रं नोच्यतेऽतो नोक्तदोष इत्यत आह ।।अविद्ययेति।। अवच्छेदप्रतिबिम्बरूपपक्षद्वयानुसारेण व्यवस्थितविकल्पार्थो वाशब्दः ।।तद्वदिति।। तत्र व्यक्तिभेदादन्योन्याश्रयपरिहारो न तथा प्रकृते इत्यर्थः। ननु तत्रापि बीजाङ्कुरसन्तानद्वित्वाद्व्यक्तिद्वित्वमेवेत्यत आह ।।सन्तानीति।। तथा च यत्रापेक्षा तत्र व्यक्तिभेदोऽस्त्येवेति भावः। उपलक्षणमेतत्। सन्तानि व्यतिरेकेण सन्तानाभावाच्चेत्यपि द्रष्टव्यम् ।।निराश्रयेति।। अविद्यात्वस्य साश्रयत्वव्याप्यत्वादिति भावः। उपलक्षणमेतत्। घटदृष्टान्तोऽप्यसम्प्रतिपन्न एव। आकाशे स्वाभाविकविशेषाभावे घटस्य तदेकदेशसम्पादकत्वाभावस्यान्यत्रोपपादितत्वादित्यपि द्रष्टव्यम् ।।त्वन्मत इति।। तथाच घट इति दृष्टान्तः स्वासिद्ध इति भावः ।।यत इति।। चिदविद्ययोर्न परस्परसापेक्षत्वमिति कथमितरेतराश्रयत्वमिति वाच्यम्। भ्रान्तोऽसि। न ह्यस्माभिरविद्यायाश्चिन्मात्राश्रयत्वपक्षेऽन्योन्याश्रयादिकमुच्यते किन्तु जीवाश्रितपक्षे जीवश्च न चिन्मात्रम्। तथात्वे तत्पक्षोक्तदोषात्। विशिष्टचैतन्यं जीव इति तु पक्षे कथं न परस्परसापेक्षत्वम्। नन्वेवं तर्हि द्रव्यत्वगुणवत्त्वादावप्यन्योन्याश्रयः स्यादित्यत आह ।।द्रव्यत्वादाविति।। तत्र परस्परसापेक्षत्वाभावान्नान्योन्याश्रय इत्यर्थः। ननूत्पत्तिज्ञप्तिप्रतिबन्धकत्वेनैवान्योन्याश्रयोऽतो नान्यप्रतिबन्धकत्वेनेत्यत आह ।।यदीति।। ।।चक्रकेति।। तदप्यज्ञानं अज्ञानत्वात् साश्रयम् तदाश्रयजीवत्वप्रयोजकमज्ञानान्तरं चेदनवस्था इदमेव चेच्चक्रकमित्यर्थः ।।न चेति।। बीजाङ्कुरपरम्परावदिति भावः ।।अहमिति।। तथाचाप्रामाणिकपरम्पराकल्पनमेवेति भावः ।।किञ्चेति।। न च जीवाश्रिताविद्यैव जीवेश्वरकल्पिकेति वाच्यम्। अन्योन्याश्रयादेरुक्तत्वात् ।।शुद्धस्येति।। सर्वज्ञत्वेन ज्ञानासम्भवादिति भावः। नन्वहमविद्येत्यप्रतीतेरविद्याया आत्मत्वं न स्वीक्रियत इत्यत आह ।।प्रतीतिरिति।। तर्ह्यविद्यायाश्चिन्मात्राश्रयत्वादिकमपि न स्वीकर्तव्यम्। तथा प्रतीत्यभावादिति भावः। एतेन अविद्याया निर्विषयत्वाद्यापातेनेत्यर्थः। न जानामीति वादिनं प्रति न पृच्छतीत्ययुक्तम्। किमज्ञानविषये प्रश्नादि न युज्यत इति वा ज्ञानप्रतिपादनानभिज्ञं प्रति इति वा। आद्यं प्रतिषेधति ।।नहीति।। अज्ञानस्य दौर्घट्यात् अज्ञमज्ञानंप्रति तद्विषये प्रश्नो न हीत्यर्थः। तत्र हेतुमाह ।।ज्ञानमेवेति।। द्वितीयमुत्थाप्य प्रतिक्षिपति ।।किन्त्विति।। न ह्यस्माभिरज्ञानिनं प्रति प्रश्नः क्रियते। किन्तु ज्ञातारं प्रत्येव। वक्तृत्वेन ज्ञातृत्वात्। तदेव कथमित्यत आह ।।ज्ञातुरेवेति।। वक्तृत्वं चाज्ञानविषये लक्षणाद्यभिधानेनेति भावः। इति अज्ञानस्य वाचस्पत्युक्तजीवाश्रितत्वभङ्गः।

## न्यायामृतप्रकाशः

जीवशब्देन चिन्मात्रं विवक्षितं भेदविशिष्टो वा नाद्य इत्याह ॥जीवशब्देनेति॥ ॥उक्तदोषादिति॥ श्रुत्यादौ तस्य सर्वज्ञत्वेन प्रतीतत्वादिति भावः। न द्वितीय इत्याह ॥अविद्ययेत्यादिना॥ कल्पितभेदस्य कल्पितभेदविशिष्टस्य ॥अन्योन्येति॥ अविद्यासिद्धौ तदवच्छिन्नतया तत्प्रतिबिंबिततया वा कल्पितभेदस्य जीवस्य सिद्धिस्तत्सिद्धौ च तदाश्रिततयाऽविद्यासिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥तद्वदिहेति॥ तत्र व्यक्तिभेदान्नान्योन्याश्रयः। अत्र त्वज्ञानव्यक्तेर्जीवव्यक्तेश्चैकत्वादन्योन्याश्रयः स्यादेवेत्यर्थः। ननु बीजांकुरादिस्थलेपि न व्यक्तिभेदः तत्तद्बीजव्यक्तयस्तत्तदंकुरव्यक्तयश्च संताननिरूपकाः बीजपरंपरा अंकुरपरंपरा च संतानः तथा च संतानिव्यक्तिभेदादन्योन्याश्रयाभावेपि संतानद्वयविवक्षयान्योन्याश्रयोस्त्येवेत्यत आह ॥संतानीति॥ नह्येवं प्रकृत इति भावः। आकाशे महाकाशे। महाकाशमुपलक्ष्यकाकवद्व्यावर्तयित्वा ॥तेनेति॥ पाश्चात्यः घटावच्छिन्नाकाश इत्युच्यत इत्यर्थः। तत्र संमतिमाह ॥स्वेनेति॥ महाव्योम्नि स्वेन कल्पिते देशे एकदेशे घटादिकं संबद्धं। ननु जीवसिद्धावविद्यासिद्धिरिति नांगीकृतमित्यत उक्तं निराश्रयेति। घटाकाशसिद्धिं विनापि घटासिद्धिवत् जीवसिद्धिं विनाऽविद्यासिद्धेरभावादित्यर्थः। दृष्टांतोप्यसंप्रतिपन्न इत्याह ॥त्वन्मत इति॥ अनित्यद्रव्यं च भावत्वे सत्यात्मसंभूतत्वेन सिद्धमिति ध्येयम्। तथा च निरंशेप्याकाश इत्युक्तमसदिति भावः। स्वतः घटादिसंबंधं विना। जीवस्त्वज्ञानसंबंधं विना न सिद्ध इति भावः। अयं अन्योन्याश्रयः। कारिकां व्याचष्टे ॥अज्ञानेति॥ ॥न हीति॥ किंचिदुपकाराभावे तदधीनताया एव मृषात्वादिति भावः ॥द्रव्यत्वेति॥ द्रव्यत्वस्य जातित्वेनानादित्वेपि गुणवत्वरूपव्यंजकप्रयुक्तमित्युच्यते तार्किकमते एवं जीवत्वमज्ञानप्रयुक्तमित्यर्थः। तस्यैव प्रयुक्त्यादेरेव। किं च विषमोयं दृष्टांत इत्याह ॥द्रव्यत्वादाविति॥ ॥न त्विति॥ यद्यपि गुणवत्त्वमपि द्रव्यत्वाधीनमेव तथापि द्रव्यत्वस्य जातिरूपत्वेनाखंडत्वात्तत्र व्यंजकं गुणवत्त्वं गुणवत्त्वस्योपाधित्वेन तत्राखंडजातेरभावात्तद्व्यंजकं द्रव्यत्वमिति तार्किकसिद्धांत इत्यवधेयम्। तथा च तत्र नान्योन्यप्रयुक्तत्वमिति भावः। नन्वेवं प्रकृतेपि जीवत्वमेवाज्ञानप्रयुक्तं नाज्ञानं जीवत्वप्रयुक्तमिति नान्योन्याश्रय इत्यत आह ॥इह त्विति॥ विभागस्येति॥ विच्छेदपक्षाभिप्रायेणेदं। अविद्या आदौ निरंशचैतन्यं संबध्य विभागं संपाद्य जीवत्वं संपादयतीत्यंगीकारात् ॥अन्योन्यारोहणादिकमिति॥ एकदैवेति शेषः। अन्यथा कालभेदेनेष्टापत्तिः स्यादिति ध्येयम्। ननु प्रमेयत्वाभिधेयत्वयोरन्योन्यवृत्तित्वेपि नान्योन्याश्रय एवमिहापीत्यत आह ॥न चेति॥ न हीत्यर्थः। येनादोषः स्यादिति भावः ॥अन्यथेति॥ अन्योन्यापेक्षाया अप्रमितत्वेप्यदोषत्वांगीकार इत्यर्थः। अन्योन्याश्रयपरिहाराय जीवत्वप्रयोजकमज्ञानं जीवाश्रिताज्ञानकल्पितं चेच्चक्रकम्। अज्ञानसिद्धौ जीवसिद्धिस्तत्सिद्धौ तदाश्रिताज्ञानसिद्धिः तत्सिद्धौ चाज्ञानसिद्धिरिति। अज्ञानांतरकल्पने त्वनवस्थेत्यर्थः। अनवस्थापरिहारमाशंक्य निराकरोति ॥न चेति॥ ॥सिद्धविषयेति॥ अनन्यथासिद्धवस्तुविषयेत्यर्थः। ननु ब्रह्माभिन्ने जीवेऽहमज्ञ इत्यनन्यथासिद्धाज्ञानप्रतीत्यन्यथानुपपत्तेरियं परंपरांगीकार्येति तत्राह ॥अहमज्ञ इतीति॥ किं चाज्ञानस्य न जीवाश्रितत्वं युक्तमित्याशयेनाह ॥किं चेति॥ ॥जीवेश्वराभ्यामिति॥ जीवस्य जीवेन ईश्वरस्य चेश्वरेण कल्पितत्व इत्यर्थः ॥ब्रह्मजीवेति॥ जीवेश्वरयोरिति वर्तते। जीवस्य ब्रह्मकल्पितत्वे ब्रह्मणो जीवकल्पितत्व इत्यर्थः ॥तत्कल्पकस्येति॥ कल्पनाया अज्ञानकार्यत्वादिति भावः। दौर्घट्यं अन्योन्याश्रयादिदूषणजातेन दुर्घटत्वम्। तत्रेत्यतः पूर्वं तथात्व इति शेषः। तत्र दुर्घटाविद्यायाम् ॥अयोगादिति॥ तथात्वे सुघटत्वापत्त्या दुर्घटत्वाभावादिति भावः

(प्रकाशः)

॥ निराश्रयत्वेति ॥ दौर्घट्यस्य भूषणत्वादिति भावः ॥ प्रतीतीति ॥ अस्यास्मिन्नज्ञानमिति प्रतीत्यनुसारेणाश्रय-विषयाद्यंगीकारे इत्यर्थः ॥ अहमर्थेति ॥ तथा च जीवाश्रितत्वं त्याज्यं अहमर्थाश्रितत्वानुभवादिति भावः ॥ जडेति ॥ आवरणकृत्याभावेन जडविषयकाज्ञानानंगीकारवादोपि त्याज्यः। घटं न जानामीत्यनुभवादित्यर्थः। अविद्याया दुर्घटत्वस्य भूषणत्वांगीकारे दूषणांतरमाह ॥ अनादित्वेति ॥ अविद्याया अविद्यातिरिक्त-कल्पितत्वांगीकारेऽन्योन्याश्रयानवस्थादिदोषेणानुपपन्नत्वेऽभिहितेऽनादित्वान्न दोष इत्येवं तत्रानुपपत्तिपरिहारः क्रियमाणोनुपपन्नः स्यात् अनुपपत्त्यादौ दौर्घट्यस्य भूषणत्वात् अनुपपत्तिपरिहारे च सुघटत्वापातादिति भावः ॥ प्रकृतीत्यादि ॥ अयमर्थः– सांख्येन सदेव सोम्येत्यादिवाक्ये प्रकृतिरेव जगदुदयादिकारणत्वेन प्रतिपाद्येत्यभिहिते "ईक्षतेर्नाशब्द"मिति त्वया दूषिते सति सांख्यस्योत्तरापरिस्फूर्तौ अस्मान्प्रति त्वद्वत् त्वां प्रति तेनापि प्रकृतेर्दौर्घट्यं भूषणमिति सुवचत्वेन तव तन्मतनिरासायोगात्। तथा बौद्धेनापि संवृतेरेव जगत्कारणत्वेऽभिहिते त्वद्दूषणेन संवृतावनुपपन्नायां सत्यां तस्योत्तरास्फूर्तौ दौर्घट्यं भूषणमित्युक्त्वा सोपि कृती स्यात्। अतस्तव तन्निरासायोगादिति। विश्रांति रुपशमः। तमसि अज्ञानविषये। तदेव विशदयति ॥ नेति ॥ तथा चाज्ञानविषयकप्रश्नाभावे अज्ञानदौर्घट्यमेव हेतुरिति भावः। एतेनेत्युक्तमेव विशदयति ॥ न हीति ॥ अज्ञमज्ञानवंतं प्रति अप्रश्नः अज्ञानस्य दुर्घटत्वान्न भवति किंतु ज्ञातुरेव तद्धकृत्वात् वक्तुरेव प्रष्टव्यत्वात्। अज्ञस्य च ज्ञातृत्वाभावेन वक्तृत्वायोगादेव न तं प्रतिप्रश्न इत्यर्थः। ननु अज्ञानस्य दुर्घटत्वेन प्रश्नाभावे किं बाधकमित्यत आह ॥ ज्ञानमिति ॥ ज्ञानाज्ञानयोरभेदे केनचिदुक्ते ज्ञानाज्ञानयोः कथमभेदो, विरोधादिति तं प्रति विरोधोद्भावनं न स्यात्। दुर्घटत्वेनाज्ञानस्य प्रश्नाविषयत्वादिति भावः। ननु तर्ह्यज्ञं प्रत्यप्रश्नोऽज्ञानस्य दौर्घट्यान्न भवतीति चेत्तर्हि किं निमित्त इति पृच्छति ॥ किंत्विति ॥ उत्तरमाह ॥ ज्ञातुरेवेति ॥ वक्तुरेव च प्रष्टव्यत्वादज्ञस्य च ज्ञातृत्वाभावेनावक्तृत्वान्न तं प्रत्यप्रश्न इति भावः। अज्ञानस्य वाचस्पत्युक्तजीवाश्रितत्वभंगविवरणम्।

## ३२. अविद्याविषयभङ्गः

अविद्याविषयोऽपि दुर्वचः। यदत्रोक्तं विवरणे– अज्ञानस्य चिन्मात्रमेव विषयः। तस्याकल्पितत्वेनान्योऽन्याश्रयादिदोषाभावात्। स्वप्रकाशत्वेन प्रसक्तप्रकाशे तस्मिन्ना-वरणकृत्यसम्भवाच्च। न त्वन्यत्, तस्याज्ञानकल्पितत्वात्। जडत्वेन स्वयमेव प्रकाशहीने आवरणकृत्याभावाच्चेति। अत्र ब्रूमः– चिन्मात्रेऽप्यावरणकृत्यं न तावत्सिद्धप्रकाश-लोपोऽसिद्धप्रकाशानुत्पत्तिर्वा, स्वरूपप्रकाशस्य नित्यसिद्धत्वात्। तदन्यस्य च स्वप्रकाशे तस्मिन्ननपेक्षितत्वात्। नापि सतोऽपि प्रकाशस्य विषयासम्बन्धः, ज्ञानस्य विषयसम्बन्धस्वभावत्वात्। स्वयं ज्ञानरूपत्वेन त्वन्मते सम्बन्धानपेक्षणाच्च। नापि प्राकट्याख्यकार्यप्रतिबन्धः, त्वन्मतेऽपि चैतन्यातिरिक्तस्य तस्याभावात्। नापि नास्ति

न प्रकाशत इत्यादिव्यवहारः, व्यवहारो ह्यभिज्ञा? अभिलपनं वा? नाद्यः, नास्तीत्यादिभ्रान्तेरावरणसाध्यत्वेनावरणत्वायोगात्। अत एव नान्त्यः, तस्योक्तभ्रान्तिसाध्यत्वेन भ्रान्तिहेत्वावरणत्वायोगात्। सुषुप्तौ व्यवहाराभावेनानावरणापाताच्च। नाप्यस्ति प्रकाशत इत्यादिव्यवहाराभावः, व्यवहारस्याभिज्ञात्वे स्वरूपाभिज्ञाया इदानीम् अपि सत्त्वाद् वृत्तेश्च मोक्षेप्यसत्त्वात्। अभिलपनत्वे मोक्षेऽप्यावरणापातात्, नापि नास्तीत्यादिव्यवहारयोग्यत्वमस्तीत्यादिव्यवहारायोग्यत्वं वा, तयोरप्यारोपितत्वेनावरणं विनाऽयोगात्। अद्वितीयत्वादिविशिष्टे तथा व्यवहारेऽपि अवस्थात्रयेप्वसन्दिग्धाविपर्यस्तत्वेन प्रकाशमानात्मरूपे अध्यासाधिष्ठाने सुखादिज्ञानरूपे च चिन्मात्रे तदभावेन तत्कल्प्ययोर्योग्यत्वायोग्यत्वयोरभावाच्च। तयोरप्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वविरुद्धत्वेनेदानीमप्यभावाच्च। न चाज्ञानावच्छिन्नत्वेनापरोक्षव्यवहारयोग्यत्वं स्वरूपेण तु तदयोग्यत्वमित्यविरोधः, स्वरूपस्यास्वप्रकाशत्वापातात्। नित्यातीन्द्रियस्याप्यज्ञानावच्छेदेनापरोक्षव्यवहारयोग्यत्वेन स्वप्रकाशत्वापातात्। इच्छाद्यवच्छिन्नप्रकाश इवाज्ञानावच्छिन्नप्रकाशेऽपि विशेष्यस्यापि प्रकाशेनेच्छादिवदेवाज्ञानस्याप्यावरणत्वायोगाच्च। सुखादेरज्ञानावच्छिन्नचित्प्रकाश्यत्वे सुखादिकं न प्रकाशत इत्यनुभवापातेन सुखादिकं प्रकाशत इत्यनुभवार्थं चितोऽज्ञानानवच्छेदेन प्रकाशस्यांगीकार्यत्वाच्च।

एतेनाज्ञानाविशेषितापरोक्षव्यवहारायोग्यत्वमावरणकृत्यमित्यपि निरस्तम्। न चोक्तयोग्यत्वायोग्यत्वरूपयोः प्रकाशाप्रकाशयोः सत्यत्वमिथ्यात्वाभ्यां विरोध इति वाच्यम्, सुखादिस्फुरणं न प्रकाशत इत्यननुभवेन सुखादिसाक्षिणि चैतन्ये आरोपितस्याप्यप्रकाशस्याभावात्। वह्नाववह्नित्वारोपेऽपि वह्निकार्यस्येवाप्रकाशारोपेऽपि प्रकाशकार्यभ्रान्त्याद्यभावस्यापाताच्च। सतः शुक्तित्वस्यारोपितेनाशुक्तित्वेनाविरोधेऽपि सतः अधिष्ठानप्रकाशस्यारोपान्तरेणेवाप्रकाशारोपेणापि विरोधाच्च। अन्यथा तन्नि वृत्तिर्न स्यात्। न चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यतात्यन्ताभावानधिकरणत्वं स्वप्रकाशत्वमुक्तयोग्यताप्रागभावश्चावरणमित्यविरोधः, स्वरूपप्रकाशप्रयुक्तयोग्यताया अनादित्वात्। इदानीं योग्यतारूपप्रकाशस्य प्रागभावः मोक्षे तु ध्वंस इति मोक्षेऽप्यप्रकाशापाताच्च। भवति हि दीपात्पूर्वमिव पश्चादप्यप्रकाशः। एवं च—

स्वप्रभत्वेनापरोक्षव्यवहारार्हे आत्मनि ।
तद्योग्यत्वाभावरूपमविद्यावरणं कथम् ॥

किं च दीपावरकघटादिवच्चैतन्यावरकाविद्या चैतन्यस्यान्यसम्बन्धं प्रतिबध्नातु, अन्यं च प्रति चैतन्यमाच्छादयतु, न तु चैतन्यं प्रत्येव, चैतन्ये उक्तयोग्यतारूपप्रकाश-विरोधिनी। न हि दीपो घटावृतोऽपि स्वयं न प्रकाशते, तमःसम्बन्धापातात्। ननु कल्पितभेदं जीवचैतन्यं प्रति शुद्धचैतन्यमाच्छादयतीति चेन्न, आवरणं विना भेदकल्पनायोगात्। यो मोक्षे भावी चिन्मात्रस्यैव चिन्मात्रं प्रति प्रकाशः, तदभावस्यैवेदानीमज्ञानेन साधनीयत्वाच्च। न च दीपप्रकाशः आवृतोऽपि स्वविषयत्वात् प्रकाशते, ब्रह्मप्रकाशस्तु न तथेति न प्रकाशत इति वाच्यम्, मोक्षेऽप्यप्रकाशापातात्। अज्ञानवैयर्थ्याच्च। अथ मतं साक्षिणि प्रकाशमानेऽप्यज्ञानं युक्तम्। तस्य तत्स्फोरकत्वेन तदविरोधित्वाद्। दृश्यते हि त्वदुक्तमर्थं न जानामीति प्रकाशमान एवाज्ञानम्। अज्ञानावच्छेदकस्य विषयस्याज्ञाने तदवच्छिन्नाज्ञानज्ञानायोगात्। न च सामान्येन ज्ञातेऽपि विशेषेणाज्ञानमिति वाच्यम्, सामान्यस्य ज्ञातत्वादेवाज्ञानानवच्छेदकतया तदवच्छेदकस्य विशेषस्यैव ज्ञातव्यत्वात्। अविद्यानिवृत्तिस्त्वात्ममात्रविषयकाद् वृत्ति-विशेषादेव। एकविषयत्वेऽपि वृत्तिचितोरज्ञानविरोधित्वाविरोधित्वे घटविषयकयोः सौरालोकज्ञानयोः सौरचाक्षुषप्रकाशयोर्वा तमोविरोधित्वाविरोधित्ववत् शंखे श्वैत्य-प्रत्यक्षानुमित्योः पीतत्वभ्रमविरोधित्वाविरोधित्ववच्च युक्ते। एवं च प्रकाशमाने आवरणकृत्याभावेऽप्यज्ञानमविरुद्धमिति मम सिद्धान्तरहस्यमिति।

अत्रोच्यते त्वयाप्यनवच्छिन्नब्रह्मानन्दाप्रकाशार्थमेवाज्ञानस्य कल्पितत्वेन कथं प्रकाशमाने अज्ञानम्? अपि च त्वदुक्तोऽर्थो न प्रकाशत इत्यनुभवादस्तु तत्र भासमाने अज्ञानम्। न चेह सुखादिस्फुरणं न प्रकाशत इत्यनुभवोऽस्ति, येन भासमाने तत्स्यात्। किं च न तत्रापि भासमाने अज्ञानं गुहास्थं तमश्छन्नमितिवत् त्वदुक्तं न जानामीत्यनावृतसामान्यावच्छेदेनैवाज्ञानानुभवात्। न हि परचित्तस्थमज्ञानं त्वयापि बुभुक्षापिपासादिप्रातिस्विकरूपेणानूद्यते। एवं च तद्विशेषसंशयं प्रति तत्सामान्यनिश्चय इव तद्विशेषावच्छिन्नाज्ञानं प्रति तत्सामान्यज्ञानमेव हेतुः, तथा

दर्शनात्। न हि विशेषे ज्ञाते तदज्ञानधीर्दृष्टा। अवच्छेदकज्ञानस्यावच्छिन्नज्ञानहेतुतापि हि दर्शनादेव कल्प्या। सामान्यविशेषभाव एव च नियामक इति नातिप्रसंगः। युक्तं च द्वेषस्येष्टत्वेऽपि द्विष्टस्येष्टत्वाभाववद् ईश्वरस्यास्मदादिभ्रान्तिविषयविषयकज्ञानाभावेऽपि भ्रान्तेर्ज्ञानवद् (भ्रान्तिविषयकज्ञानव) दस्मदादीनां सर्वाज्ञानेऽपि ईश्वरसार्वज्ञ्यज्ञानवच्चाज्ञातज्ञानाभावेऽप्यज्ञानज्ञानम्। अन्यथा

मोहभानार्थमज्ञानभानं यदि च कल्प्यते ।
अज्ञाते मोहहानिश्च तदर्थं किं न कल्प्यते ॥

तथा हि– संयोगाद्यवच्छेदकस्य घटादेरज्ञानावच्छदेकतया ज्ञानेऽपि घटाद्यज्ञाननिवृत्तिं विनाऽवच्छिन्नसंयोगादिज्ञानादर्शनेन प्रकृतेऽपि विषयावच्छिन्नाज्ञानज्ञानार्थं तदवच्छेदकविषयावरकाज्ञाननिवृत्तेरपि वक्तव्यत्वेनाज्ञानाविरोधिज्ञानवदज्ञानाविरोधिन्यज्ञाननिवृत्तिरपि स्वीकार्या स्यात्। अथ यथाऽन्यत्रावच्छिन्नसत्त्वस्यावच्छेदकसत्त्वसापेक्षत्वेऽप्यारोपितावच्छिन्नाभावसत्त्वस्य नारोपितसत्त्वसापेक्षत्वं विरोधात्। तथा विषयावच्छिन्नाज्ञानज्ञानस्य न विषयाज्ञाननिवृत्तिसापेक्षत्वं विरोधादिति चेत्, तर्हि तत एव तस्य न विषयज्ञानसापेक्षत्वमपि। किं चाज्ञानस्य ज्ञानान्तरविरोधित्वेपि साक्ष्यविरोधवत् (धित्ववत्) अन्यत्रावच्छेदकज्ञानाभावस्यावच्छिन्नज्ञानविरोधित्वेऽपि अज्ञानावच्छेदकज्ञानाभावस्यावच्छिन्नज्ञानाविरोधः किं न स्यात्? अज्ञानस्य विषयविशेषावच्छेदसिद्धिस्तु तमस इव विशेषज्ञानानन्तरमेतावन्तं कालममुमर्थमित्थं नाज्ञासिषमित्यनुभवान्तरादिति ज्ञेयम्।

यच्चोक्तं साक्षी अज्ञानस्फोरकत्वात्तदविरोधी, वृत्तिरेव तु विरोधिनीति। तन्न, वृत्तिश्चैतन्यस्य विषयोपरागार्थेति मते तस्या अज्ञानानिवर्तकत्वाद् अज्ञानस्यस्वविरोधिज्ञानाभावव्यापकत्वेन मोक्षेऽप्यज्ञानापाताच्च। न जानामीत्यज्ञानस्य ज्ञानसामान्यविरोधित्वानुभवाच्च। न जानामीति ज्ञप्तिविरोधित्वस्यैवानुभवाच्च। त्वत्पक्षे च चैतन्यस्यैव ज्ञप्तित्वात्। चैतन्याज्ञानयोरविरोधे ज्ञानत्वाज्ञानत्वायोगस्योक्तत्वाच्च। वृत्तेरप्यर्थप्रकाशकत्वं विना जातिविशेषेणैवाज्ञानतत्कार्यनिवर्तकत्वे इच्छादिनिवर्त्यद्वेषादिवत् सत्त्वापत्त्या शुक्त्यादिज्ञानवदर्थप्रकाशत्वेन तन्निवर्तके वक्तव्ये चैतन्यस्यापि तत्त्वेन

तन्निवर्तकत्वावश्यंभावाच्च। त्वन्मते नित्यातीन्द्रिये परोक्षवृत्तौ सत्यामपि अज्ञानानिवृत्त्या सुखादावपरोक्षवृत्त्यभावेऽपि स्फुरणमात्रे ज्ञानादर्शनेन चान्वयव्यतिरेकाभ्यां स्फुरणस्यैवाज्ञानविरोधित्वाच्च। स्वसत्तायामप्रकाशविरोधित्वेनात्मनः स्वप्रकाशत्व-साधनायोगाच्च। वृत्तिचितोर्वैषम्योक्तिश्चायुक्ता। वृत्तिवत्साक्षिणोऽपि समानविषयका-ज्ञानविरोधित्वानुभवात्। अनुभूयते ह्यज्ञानविषयकानुमित्यादिरूपवृत्तिवदज्ञान विषयक-साक्षिणोप्यज्ञानविषयकाज्ञानविरोधित्वम् साक्षिवच्चाज्ञानविषयकवृत्तेरप्यज्ञान विषय-विषयकाज्ञानाविरोधित्वं च। अन्यथा साक्षिवेद्ये चैत्रेच्छासुखदुःखादौ मैत्रस्येव चैत्रस्याप्यज्ञानं स्यात्। एवं च–

साक्षी स्वविषयेऽज्ञानविरोधी न भवेद्यदि ।
तद्वेद्ये सुखदुःखादावज्ञानं केन वार्यते ॥

इच्छादौ सदा प्रकाशादज्ञानप्रसक्तिरेव नेति चेत्, तर्ह्यात्मन्यपि तत एव तदप्रसक्तिः स्यात्। न च साक्षिवेद्यत्वं तदप्रसक्तौ तन्त्रम्, आत्मा तु न तद्वेद्यः किंतु चिद्रूपत्वात्प्रकाशत एवेति युक्तम्। प्रकाशरूपे दीपे अन्धकारस्ये-वात्मन्यप्यज्ञानाप्रसक्तेर्न्याय्यत्वात्। अन्यथा घटादिरालोकमिवात्मापि स्वव्यवहारे ज्ञानान्तरमपेक्षेत। न च सुखाद्यपि वृत्तिप्रतिबिंबितसाक्षिणैव वेद्यम्, न तु केवलेनेति केवलो नाज्ञानविरोधीति वाच्यम्। असतः साधकत्वभंगे केवलसाक्षिवेद्यत्वोपपादनात्। अन्तःकरणवृत्तेरिन्द्रियादिव्यापारमविद्यावृत्तेश्च दोषं विनायोगाच्च। अन्यथाऽऽत्मापि वृत्तिप्रतिबिंबितेनैव स्वेन (तेन) सदा प्रकाशते, न तु केवलेनेति स्यात्। एतेन सौरालोकज्ञानादिप्रतिबंदी निरस्ता।

एतेनैव सर्वं ज्ञाततयाऽज्ञाततया वा साक्षिविषय इति निरस्तम्। अन्धकारावृतवद् ज्ञानाभावावच्छेदकविषयवच्चाज्ञानावच्छेदकस्याप्यप्रकाशेन साक्षिवेद्यतायोगात्। अस्तु वा वृत्तिरेवाज्ञानविरोधिनी, तथाप्यात्मविषया सेदानीमप्यस्तीति कथं तत्राज्ञानम्? विवरणे जीवाकाराहंवृत्तिपरिणतान्तःकरणेन च जीवोऽभिव्यज्यते, अन्यथा सुषुप्तेरित्युक्तेः। अयं घट इत्याद्यपरोक्षवृत्तेरपि त्वन्मते घटावच्छिन्नचिद्विषयत्वाच्च। अन्यथा घटावरकाज्ञानाभावेनायं घट इति वृत्तेरज्ञानाभिभावकत्वं न स्यात्। न च

विशिष्टचैतन्यरूपजीवविषया वा घटावच्छिन्नचैतन्यविषया वा वृत्तिरज्ञानविषयी भूतचिदविषया वा, तदज्ञानाविरोधिनी वेति युक्तम्। दण्डी चैत्र इति वृत्त्या चैत्राज्ञानानभिभवापातात्। आकाशस्यैव च घटावच्छिन्नस्य घटाकाशत्वे घटाकाशे दृष्टे आकाशगतमहत्त्वाद्यदर्शनेऽपि आकाशमात्रं दृष्टमेव। आकाशांशस्य घटाकाशत्वे तु घटाकाशदर्शनेऽपि महाकाशादर्शनं युक्तम्। न च श्रवणादिजन्या वृत्तिरज्ञानविरोधिनीति युक्तम्। भ्रमकालीनापरोक्षज्ञानानधिकविषयज्ञानेन कारणान्तर-जन्येनाप्यविद्यानिवृत्तावतिप्रसंगात्। अनधिकविषयत्वे श्रवणादिवैयर्थ्याच्च। सत्यत्वा-पाताच्च। तस्मान्नात्ममात्रमज्ञानस्य विषयः।

नापि देहादिभेदो वा भोक्तृत्वाद्यभावो वा ब्रह्माभेदो वा द्वितीयमात्राभावो वा तद्विशिष्टात्मा वा तद्विषयः, तेषामात्ममात्रत्वे उक्तदोषात्। भिन्नत्वे सत्वेऽद्वैतहानेः। आविद्यकत्वेऽन्योन्याश्रयादेः। न च ब्रह्माभेदादेः प्रकाशमानात्ममात्रत्वेऽपि कल्पितेन भेदेनाज्ञातत्वम्। अधिष्ठानावरणं विना भेदकल्पनायोगादित्युक्तत्वात्। न च मिथ्याभूतेनापि भेदाभावेन द्वितीयाभावेन वोपलक्षित आत्मा अज्ञानविषयः, तस्य समानविषयज्ञाननिवर्त्यत्वेन वेदान्तानामप्युपलक्षणरूपप्रकारयुक्तात्मपरत्वेनाखंडार्थ-त्वह्नानेः। अकाके काकवदितिवाक्यवदप्रामाण्यापाताच्च। प्रकाशमानस्या-त्मनोऽज्ञानविषयत्वे अप्रकाशमानस्य द्वितीयाद्यभावस्योपलक्षणत्वेन तदविषयत्वे च दृष्टहाना (दृष्टक) दिकल्पनापाताच्च। तस्मादात्मनः प्रकाशमानत्वादन्यस्य चाविद्य-कत्वान्नाविद्याविषयत्वम्। तदुक्तम्—

> निर्विशेषे स्वयंभाते किमज्ञानावृतं भवेत् ।
> मिथ्याविशेषोऽप्यज्ञानसिद्धिमेव ह्यपेक्षते ॥ इति ।

किं च न्यूनयाऽविद्ययाऽविषयसम्बन्धिन्या कथमधिकब्रह्मावरणम्? न्यूनाप्यंगुलिरविषय-सम्बन्धित्वादधिकसूर्याच्छादिका। तस्मादनिर्वाच्याविद्याया दुर्निरूपत्वादहंकारादिकं न तत्कार्यम्।

अविद्याविषयभंगः।

## अद्वैतसिद्धिः

अविद्याया विषयोऽपि सुवचः। तथा हि– चिन्मात्रमेवाविद्याविषयः, तस्याकल्पितत्वेनान्योऽन्याश्रयादिदोषाप्रसक्तेः, स्वप्रकाशत्वेन प्रसक्तप्रकाशे तस्मिन् आवरणकृत्यसंभवाच्च, नान्यत्, तस्याज्ञानकल्पितत्वाद्, अप्रसक्तप्रकाशत्वेनावरणकृत्याभावाच्च। ननु– किमावरणकृत्यं (१) सिद्धप्रकाशलोपो वा? (२) असिद्धप्रकाशानुत्पत्तिर्वा? (३) सतः प्रकाशस्य विषयासंबन्धो वा (४) प्राकाट्याख्यकार्यप्रतिबंधो वा? (५) नास्ति न प्रकाशत इति व्यावहारो वा? (६) अस्ति प्रकाशत इति व्यवहाराभावो वा? (७) नास्तीत्यादिव्यवहारयोग्यत्वं वा? (८) अस्तीत्यादिव्यवहारायोग्यत्वं वा? नाद्यद्वितीयौ, स्वरूपप्रकाशस्य नित्यसिद्धत्वेन तल्लोपानुत्पत्त्योरसंभवात्, तदन्यस्य च स्वप्रकाशे तस्मिन्ननपेक्षितत्वात्। न तृतीयः, ज्ञानस्य विषयसम्बन्धैकस्वभावत्वात्, स्वयंज्ञानरूपत्वेन त्वन्मते संबन्धानपेक्षणाच्च। नापि चतुर्थः, त्वन्मते चैतन्यातिरिक्तस्य तस्याभावात्। नापि पञ्चमः, सुषुप्तौ व्यवहाराभावेनानावरणापातात्। नापि षष्ठः, व्यवहारस्याभिज्ञात्वे स्वरूपाभिज्ञाया इदानीमपि सत्त्वाद्, वृत्तेश्च मोक्षेऽप्यसत्त्वात्। अभिलपनरूपत्वे मोक्षेऽप्यावरणप्रसङ्गात्। नापि सप्तमाष्टमौ, तयोरप्यारोपितत्वेनावरणं विनायोगादिति– चेन्न। नास्ति न प्रकाशत इति व्यवहार एवाभिज्ञादिसाधारणः, अस्ति प्रकाशत इत्येतद्व्यवहाराभावो वा आवरणकृत्यम्। आवरणं च तद्योग्यता अज्ञानसंबन्धरूपा सुषुप्त्यादिसाधारणी आब्रह्मज्ञानमवतिष्ठते। तेन सुषुप्तिकाले नानावरणम्, मोक्षकाले च नावरणम्।

यदुक्तमस्याप्यारोपितत्वेनावरणसापेक्षत्वमिति। तन्न, अज्ञानसंबन्धरूपस्यावरणस्यानादित्वेन चित्प्रकाश्यत्वेन च उत्पत्तौ ज्ञप्तौ स्थितौ वा स्वानपेक्षणात्। ननु– अद्वितीयत्वादिविशिष्टे तथा व्यवहारेऽपि अवस्थात्रयेऽप्यसन्दिग्धाविपर्यस्तत्वेन प्रकाशमानात्मरूपे अध्यासाधिष्ठाने सुखादिज्ञानरूपे चिन्मात्रे तदभावेन तत्कल्प्ययोर्योग्यत्वायोग्यत्वयोरभाव इति– चेन्न, शुद्धरूपायाश्चितः प्रकाशमानत्वेऽपि तस्या एव परिपूर्णाद्याकारेणाप्रकाशमानत्वात्, तदर्थं तस्या एवावरणकल्पनात्, परिपूर्णाद्याकारस्य मोक्षदशानुवृत्तत्वेन शुद्धचिन्मात्रत्वात्। न च– निर्विभागचितः कथमेवं घटत इति वाच्यम्, आवरणमहिम्नैव परिपूर्णं ब्रह्म नास्ति न प्रकाशत इति व्यवहारः, अस्ति प्रकाशत इति व्यवहारप्रतिबन्धश्च, अध्यासाधिष्ठानत्वादिना प्रकाशमानता चाविरुद्धेति॥

(अद्वैतसिद्धिः)

अत एव– अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वविरुद्धे योग्यत्वायोग्यत्वे कथमिदानीमपि ब्रह्मणि स्याताम्? न च– अज्ञानादिमत्त्वेनापरोक्षव्यवहारयोग्यत्वं स्वरूपेण च तदयोग्यत्वमित्यविरोध इति– वाच्यम्, स्वरूपस्याप्रकाशत्वादिति– निरस्तम्, परिपूर्णाद्याकारेण इदानीं व्यवहाराभावेऽपि अपरोक्षव्यवहारयोग्यत्वानपायात्। न चैवं – सुखादेरज्ञानावच्छिन्नचित्प्रकाश्यत्वे 'सुखादिकं न प्रकाशत' इत्यनुभवापातेन सुखादिकं प्रकाशत इत्यनुभवार्थं चितोऽज्ञानानवच्छेदेन प्रकाशोऽङ्गीकरणीय इति– वाच्यम्, इष्टापत्तेः, अनुक्तोपालम्भनत्वात्। न ह्यज्ञानावच्छेदेन चित् प्रकाशत इति ब्रूमः। अत एव च– नित्यातीन्द्रियेऽप्यज्ञानावच्छेदकतया अपरोक्षव्यवहारेण तत्रापि स्वप्रकाशापत्तिरिति– निरस्तम्, अज्ञानानवच्छेदेन तादृशस्य व्यवहारस्योक्तेः।

ननु– प्रदीपावारकघटादिवच्चैतन्यावारकाविद्या चैतन्यस्यान्यसंबन्धं प्रतिबघ्नातु अन्यं प्रति चैतन्यमाच्छादयतु, न तु चैतन्यं प्रत्येव चैतन्ये उक्तयोग्यत्वरूपप्रकाशविरोधिनी सा, न हि दीपो घटावृतोऽपि स्वयं न प्रकाशते, तमःसंबन्धापातात्। न च– कल्पितभेदं जीवचैतन्यं प्रति शुद्धचैतन्यमाच्छादयतीति– वाच्यम्, आवरणं विना भेदकल्पनस्यैवायोगात्। यो मोक्षे भावी चिन्मात्रस्यैव चिन्मात्रं प्रति प्रकाशः, तदभावस्यैवेदानीमज्ञानेन साधनीयत्वाच्चेति– चेन्न, कल्पितभेदं जीवं प्रति शुद्धचैतन्यस्यावृतत्वात्। न च– भेदकल्पनस्यावरणोत्तरकालीनत्वादिदमयुक्तमिति– वाच्यम्, भेदावरणयोरुभयोरप्यनादित्वेन परस्परानन्तर्याभावात्। यच्चोक्तं– यो मोक्षे भावी चैतन्यं प्रति प्रकाशः, तदभाव इदानीमज्ञानसाध्य– इति। तन्न, मोक्षे जन्यस्य चैतनप्रकाशस्याभावात्, कल्पितभेदापगमे शुद्धचैतन्यं प्रत्येव प्रकाशस्य जीवं प्रत्यपि संभवात्।

यच्चोक्तं– प्रकाशस्वरूपे चैतन्ये कथमज्ञानम्? न ह्यालोके तमः– इति। तन्न, अज्ञानतमसोर्विरोधितायामनुभवसिद्धविशेषात्। तथा हि– 'त्वदुक्तमर्थं न जानामी'ति प्रकाशमाने वस्तुनि अज्ञानस्यानुभवात् स्वरूपचैतन्यं साक्षी वा नाज्ञानविरोधि, तमसस्तु आलोके सत्यननुभवाद्, आलोकमात्रं तद्विरोधि। वस्तुतस्तु– अवतमसे विषयप्रकाशकालोकसहभावदर्शनेन तमस्यपि नालोकमात्रं विरोधि। न च– 'त्वदुक्तार्थो न प्रकाशत' इत्यनुभवादस्तु तत्र भासमाने अज्ञानम्, सुखादिस्फुरणे भासमाने न प्रकाशत इत्यननुभवात् कथं तत्राज्ञानमिति– वाच्यम्, सुखादिस्फुरणं न प्रकाशत इत्यनुभवाभावेऽपि अनवच्छिन्नाकारेण

(अद्वैतसिद्धिः)

न प्रकाशत इत्यनुभवाद्, आवरकाज्ञानस्य तत्राप्यावश्यकत्वात्। यदपि– 'त्वदुक्तमर्थं न जानामी'त्यत्र भासमाने नाज्ञानम्, किंतु गुहास्थं तमश्छन्नमितिवत् त्वदुक्तं न जानामीत्यनावृतसामान्यावच्छेदेनैव विशेषाज्ञानमनुभूयते, न हि परिचित्तस्थमज्ञानं प्रातिस्विकरूपेणानूद्यते, एवं च तद्विशेषसंशयं प्रति तत्सामान्यनिश्चय इव तद्विशेषावच्छिन्नाज्ञानज्ञानं प्रति तत्सामान्यज्ञानमेव हेतुः, तथा दर्शनात्, न हि विशेषे ज्ञाते तदज्ञानधीर्दृष्टा, अवच्छेदकज्ञानस्य ह्यवच्छिन्नज्ञानहेतुतापि दर्शनादेव कल्प्या, न चातिप्रसङ्गः, सामान्यविशेषभावस्यैव नियामकत्वाद्– इति। तन्न, अज्ञानं हि विशेषावच्छिन्नतया भासते? सामान्यावच्छिन्नतया वा? आद्ये विशेषे भासमानत्वमागतमेव। न हि विशेषमभासयन्विशेषाज्ञानमित्यवभासयति। तथा च सामान्यनिश्चयजनितोऽपि संशयो विशेषमवगाहते यथा, तथा सामान्यज्ञानजनितोऽप्यज्ञानप्रत्ययो विशेषं विषयीकरिष्यतीति कुतो भासमाने नाज्ञानमिति। न द्वितीयः, सामान्यज्ञानेन तदवच्छिन्नतयैव गृहीतस्याज्ञानस्य विशेषसंबन्धित्वे मानाभावेन भासमाने सामान्य एवाज्ञानमवगतम्। वस्तुतः प्रतीतिप्रमाणकत्वात्। तथा च परचित्तस्थं यथा अनूद्यते, तथा ज्ञानं तथैवाज्ञानं चेति सिद्धम्।

ननु– यथा द्वेषस्येष्टत्वेऽपि द्विष्टस्य नेष्टत्वम्, ईश्वरस्य भ्रान्तिज्ञत्वेऽपि न भ्रमविषयज्ञत्वम्, अस्मदादीनामीश्वरसार्वज्ञ्यज्ञानेऽपि न सर्वज्ञत्वम्, एवमज्ञातज्ञानाभावेऽपि अज्ञानज्ञानमिति– चेन्न, दृष्टान्तासंप्रतिपत्तेः। तथा हि– इच्छा तावज्ज्ञानसमानविषया, ज्ञानं चावच्छेदकतया द्विष्टमपि विषयीकरोतीति इच्छाया अप्यवच्छेदकतया तद्विषयत्वात्। न हीच्छा ष्टतावच्छेदकाविषया भवति। एतावानेव विशेषः– किंचित् साध्यतया विषयीकरोति, किंचित् अवच्छेदकतया। ईश्वरोऽपि भ्रमविषयमगृहीत्वा भ्रमं न गृह्णाति। भ्रमो हि भ्रमत्वेन ग्राह्यः। भ्रमत्वं च रजताभाववति रजतख्यातित्वं वा, असत्ख्यातित्वं वा, अनिर्वचनीयख्यातित्वं वा। तस्मिन् गृह्यमाणे सर्वथा विषयग्रहः। इयांस्तु विशेषः। यद् भ्रान्तः स्वातन्त्र्येण गृह्णाति, ईश्वरस्तु तज्ज्ञानावच्छेदकतयेति, ईश्वरसार्वज्ञ्यज्ञानमस्माकं तु सर्वज्ञपदेन। तत्र सर्वपदप्रतिपाद्यं जानन्नेवास्मदादिस्तत्र ज्ञानसंबंधं गृह्णातीति ईदृशं सार्वज्ञ्यमिष्टमेव। विशेषस्त्वीश्वरस्य न कुत्राप्यज्ञानम्, अस्मादृशां तु विशेषेष्वज्ञानमिति कृत्वा। एवं च ज्ञात एव विशेषे अज्ञानज्ञानमिति। न च– घटादेरज्ञानावच्छेदकतया भानेऽपि घटाद्यज्ञाननिवृत्तिं विना तदवच्छिन्नसंयोगादिज्ञानादर्शनेन प्रकृतेऽपि विषयावच्छिन्नाज्ञानज्ञानार्थं तदवच्छेदक-

(अद्वैतसिद्धिः)

विषयाज्ञाननिवृत्तेरपि वक्तव्यत्वेनाज्ञानाविरोधिज्ञानवद् अज्ञानाविरोधिनी अज्ञाननिवृत्तिरपि स्वीकार्या स्यादिति वाच्यम्, संयोगादिसत्त्वस्यावच्छेदकघटादिसत्त्वसापेक्षत्वेऽपि यथा अभावे न स्वाधिकरणीयप्रतियोगिरूपावच्छेदकसत्त्वापेक्षा, विरोधात्, तथा अज्ञानज्ञानस्यापि न स्वविषयाज्ञाननिवृत्त्यपेक्षा, विरोधात्। न चैवं– तद्विषयकज्ञानापेक्षापि मास्तु, विरोधस्य समानत्वाद् अविरोधकल्पनाबीजस्य ज्ञान इवाज्ञाननिवृत्तावपि समानत्वात्, तथा च विषये अज्ञात एवाज्ञानं ज्ञायते, विषयविशेषावच्छिन्नबुद्धिस्तु तमसीव विशेषज्ञानानन्तरं 'एतावत्कालममुमर्थं नाज्ञासिषमित्येवंरूपा जायत इति– वाच्यम्, हन्तैवमभावस्वभावविरोधि-प्रतियोगिज्ञाननिरपेक्षज्ञानविषयत्वमभाववैलक्षण्यसाधकमज्ञाने उपपादितमायुष्मता। किञ्च यद्यज्ञानं स्वकाले विषयावच्छिन्नतया न भासयेत्, तदा तु 'त्वदुक्तमर्थं न जानामी'ति विषयावच्छिन्नाज्ञानस्य वर्तमानार्थप्रत्ययो विरुद्ध्येत। तस्मात् विषयाज्ञानसाधकत्वात् साक्षिरूपविषयप्रकाशोऽपि नाज्ञानविरोधी, किंतु प्रमाणवृत्तिः। एकविषयत्वेऽपि प्रमाणवृत्तितदतिरिक्तवृत्त्योरज्ञानविरोधित्वाविरोधित्वे घटविषयकयोः सौरालोकज्ञानयोः सौरचाक्षुषप्रकाशयोर्वा तमोविरोधित्वाविरोधित्ववदुपपद्येते। न च– वृत्तिश्चैतन्यस्य विषयोपरागार्थेति मते अस्या अज्ञाननिवर्तकत्वाभावाद् इदमयुक्तमिति– वाच्यम्, अज्ञाननिवर्तकत्वेन निवृत्तिप्रयोजकत्वस्यैव उक्तत्वात्। तच्च संबन्धसंपादनद्वाराऽस्मिन्पक्षेऽपि अस्त्येव। न च– अज्ञानस्य स्वविरोधिज्ञानाभावव्यापकत्वेन मोक्षेऽप्यज्ञानापात इति– वाच्यम्। मोक्षदशायामज्ञाननिवृत्तिश्रवणेन स्वविरोधिज्ञानप्रागभावमात्रव्यापकत्वात्। न च– कथं प्रमाणवृत्तिमात्रविरोधित्वे अज्ञानमात्र विरोधित्वेनैव न जानामीत्याकारेण प्रत्ययः? इति– वाच्यम्, घटादिमात्रविरोधिनो घटाभावादेः भावसामान्यविरोधित्वेनाभावत्वेन प्रतीतिवत् ज्ञानविशेषविरोधिनोऽप्यज्ञानस्य ज्ञानसामान्यविरोधित्वेन प्रतीतिसंभवात्। न ह्यभावपदादिनाभावप्रतीतौ घटाभावो न भासते। अथ सा विरोधिता तत्र विशेषमात्रपर्यवसन्ना, समं प्रकृतेऽपि, अन्यत्राभिनिवेशात्। न च– 'न जानामी'ति ज्ञप्तिविरोधित्वस्यैवानुभवात् कथं वृत्तिविरोधित्वम्? त्वन्मते चैतन्यस्यैव ज्ञप्तित्वात्, चैतन्यज्ञानयोरविरोधे ज्ञानत्वाज्ञानत्वायोगादिति– वाच्यम्। मन्मते वृत्तिप्रतिबिम्बितचैतन्यं जानामीति व्यवहारविषयः। तथा च न जानामीत्यनेन वृत्तिचितोरुभयोरप्यज्ञानबिरोधित्वं विषयीक्रियते। एवं च न चैतन्येऽज्ञानविरोधित्वम्, नापि वृत्तौ, वृत्त्युपारूढचित एवार्थप्रकाशकत्वेन तथात्वात्।

(अद्वैतसिद्धिः)

ननु– वृत्तेरप्यर्थप्रकाशकत्वं विना जातिविशेषेणैवाज्ञानतत्कार्यनिवर्तकत्वे इच्छादि-निवर्त्यद्वेषादिवत् सत्त्वापत्त्या शुक्त्यादिज्ञानवदर्थप्रकाशकत्वेन तन्निवर्तकत्वे वक्तव्ये चैतन्यस्यापि तत्सत्त्वेन तन्निवर्तकत्वावश्यम्भावेन तन्निवृत्त्यापातः, नित्यातीन्द्रिये परोक्षवृत्तौ सत्यामप्य-ज्ञानानिवृत्त्या सुखादावपरोक्षवृत्त्यभावेऽपि स्फुरणमात्रेणाज्ञानादर्शनेन चान्वयव्यतिरेकाभ्यां स्फुरणस्यैवाज्ञानविरोधित्वाद्– इति चेन्न, प्रमाणवृत्त्युपारूढप्रकाशत्वेन निवर्तकत्वं ब्रूमः, न तु जातिविशेषेण, प्रकाशत्वमात्रेण वा। अतो नेच्छादिनिवर्त्यद्वेषादिवदेतन्निवर्त्यानां मत्त्वापत्तिः, न वा चैतन्यमात्रस्य निवर्तकत्वापत्तिः। अत एव– शाब्दादिवृत्तौ सत्यामपि ानानिवृत्त्या सुखादौ प्रमाणवृत्त्यभावे स्फुरणमात्रेणाज्ञानादर्शनेनान्वयव्यतिरेकाभ्यां रणस्यैवाज्ञानादौ विरोधित्वमिति– निरस्तम्, परोक्षवृत्तेर्विषयपर्यन्तत्वाभावेन न .वषयगताज्ञाननिवर्तकत्वम्, सुखादौ च ज्ञातैकसत्त्वादज्ञाननिवृत्तिं विनैवाज्ञानादर्शनम्। अतोऽन्वयव्यतिरेकयोरन्यथासिद्ध्या स्फुरणमात्रं नाज्ञानविरोधि। न चात्मनोऽज्ञानाश्रयविषयत्वे स्वसत्तायामप्रकाशाविधुरत्वेन स्वप्रकाशत्वसाधनायोगः, परिपूर्णत्वादिना अप्रकाशविधुरत्वा-भावेऽप्यध्यासाधिष्ठानत्वादिना प्रकाशमानतयाऽप्रकाशविधुरत्वसंभवात्।

न च– वृत्तिचितोर्वैषम्योक्तिरयुक्ता, वृत्तिवत्साक्षिणोऽपि समानविषयतया अज्ञान-विरोधित्वानुभवाद्, अन्यथा साक्षिवेद्ये चैत्रेच्छासुखादौ मैत्रस्येव चैत्रस्याप्यज्ञानं स्यात्, चेन्मैत्रस्याप्यज्ञानं न स्यादिति– वाच्यम्, साक्षिणि यदज्ञानविरोधित्वमनुभूयते ाज्ञाननिवर्तकत्वनिबन्धनम्, किंतु स्वविषय इच्छादौ यावत्सत्त्वं प्रकाशादज्ञाना-प्रसक्तिनिबन्धनम्। वृत्तेश्च स्वविषये प्रसक्ताज्ञाननिवृत्तिनिबन्धनमेवेत्युभयोर्वैषम्योक्तिर्युक्तैव। अज्ञानाप्रसक्तेरेव चैत्रेच्छादौ चैत्रस्य नाज्ञानव्यवहारः, मैत्रस्य तु प्रमात्रज्ञानादेव तद्व्यवहारः। न च– तर्ह्यात्मन्यपि तत एव तदप्रसक्तिरिति– वाच्यम्, दत्तोत्तरत्वात्। किं च साक्षिवेद्यत्वं तदप्रसक्तौ तन्त्रम्, आत्मा तु न तद्वेद्यः, चिद्रूपत्वात् प्रकाश एवेति। न च– तर्हि सुतरामज्ञानानुपपत्तिः तेजसीव तमसः, अन्यथा घटादिरालोकमिवात्मापि स्वव्यवहारे ज्ञानान्तरमपेक्षेतेति– वाच्यम्, अज्ञानावृतत्वाद् घटवदज्ञाननिवर्तकान्तरापेक्षा चेत्तर्हीष्टापत्तिः, वृत्तेरेवापेक्षणात्, प्रकाशान्तरापेक्षायां जडत्वस्योपाधित्वात् प्रकाशत्वेऽप्यज्ञानाविरोधि-त्वस्योपपादितत्वात्। अत एव सर्वं वस्तु ज्ञाततयाज्ञाततया च साक्षिचैतन्यस्य विषयः, ज्ञानाज्ञानयोः स्वविषयावच्छिन्नयोरेव भानात्। एतेन– अन्धकारावृतवत् ज्ञानाभावावच्छेदक-

(अद्वैतसिद्धिः)

विषयवच्चाज्ञानावृतस्याप्यप्रकाशेन साक्षिवेद्यत्वायोग इति निरस्तम्; विषयावच्छेदेनानुभव-विरोधात्।

ननु– वृत्तेरज्ञानविरोधित्वेऽप्यात्मविषया वृत्तिरिदानीमप्यस्त्येवेति कथं तत्राज्ञानम्? किं च त्वन्मते घटाद्यपरोक्षवृत्तेरपि घटाद्यवच्छिन्नचिद्विषयत्वेन सुतरां चित्यज्ञानासंभवः। न च– विशिष्टचैतन्यरूपजीवविषया वा घटावच्छिन्नचैतन्यविषया वा वृत्तिरज्ञानविषयीभूत-केवलचिदविषयत्वादज्ञानविरोधिनी न स्यादिति– वाच्यम्, 'दण्डी चैत्र' इति वृत्त्या चैत्राज्ञानानभिभवापातात्। घटाकाशज्ञाने महाकाशाज्ञानस्य महत्त्वाज्ञाने पर्यवसानम्। अत एवाकाशो ज्ञात इति प्रतीतिः। न च श्रवणादिजन्यैव वृत्तिरज्ञानविरोधिनी, भ्रमकालीनापरोक्षज्ञानानधिकविषयज्ञानेन कारणान्तरजन्येनापि अज्ञानानिवृत्तावतिप्रसङ्गाद्, अनधिकविषयत्वे श्रवणादिवैयर्थ्यात्, सत्यत्वापाताच्चेति– चेन्न, यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मते अज्ञानविशेषः एकज्ञानपक्षे अवस्थाविशेषः शक्तिविशेषो वा अविद्यागतो विशिष्टगोचरवृत्त्या निवर्तत एव। प्रपञ्चनिदानभूतं तत्त्वमस्यादिवाक्यजन्याखण्डार्थगोचर-वृत्तिनिवर्त्यमज्ञानं परमवशिष्यते, भेदभ्रमस्यानुभूयमानत्वात्। यथा अयमिति ज्ञानात्तत्राज्ञाने निवृत्तेऽपि सोऽयमित्यभेदगोचरवृत्तिनिवर्त्याज्ञानमवशिष्यते। तथा च विषयकृतविशेषाभावेऽपि कारणविशेषजन्यत्वेन विशेषेण निवर्तकत्वे श्रवणवैयर्थ्यं सत्यतापत्तिश्च निरस्ता, अन्यथा सोऽयमित्यत्राप्यगतेः। किं च जीवविषया वृत्तिरविद्यावृत्तिः, न तु प्रमाणवृत्तिः, तत एवाज्ञानविरोधित्वात्। तदुक्तं विवरणे– 'जीवाकाराहंवृत्तिपरिणतान्तःकरणेन जीवोभिव्यज्य इति। अस्यार्थः– जीवाकाराहंत्वप्रकारिकाविद्यावृत्तिः, तया परिणतान्तकरणेनान्तःकर परिणामभूतज्ञानरूपवृत्तिसंसर्गेण जीवोऽभिव्यज्यत इति।

न च– 'घटोऽय'मिति ज्ञानेन चरमवृत्तिनिवर्त्याज्ञानमपि निवर्ततामिति– वाच्य तदवच्छिन्नाज्ञातत्वप्रयोजकाज्ञानविशेषादेव तदवच्छिन्नज्ञाननिवर्त्यत्वस्य फलबलेन स्वीकारा अवतमस इव विषयप्रकाशकालोकस्य सर्वतमोऽनिवर्तकत्वेऽपि किंचित्तमोनिवर्तकत्वम् तस्मात्सिद्धमाश्रयत्वविषयत्वभागिनी शुद्धचिदिति।

एतेन– देहादिभेदो वा अभोक्तृत्वाद्यभेदो वा ब्रह्माभेदो वा अद्वितीयमात्राभेदो वा तद्विशिष्टात्मा वा न तद्विषयः, तेषामात्ममात्रत्वे उक्तदोषाद्, भिन्नत्वे अद्वैतक्षतेः, आविद्यकत्वे

(अद्वैतसिद्धिः)

अन्योन्याश्रयादिति अनुक्तोपालम्भनम्– अपास्तम्। ब्रह्माभेदादेरात्ममात्रतापक्षे तस्याज्ञानविषयत्वमेव, दोषस्य परिहृतत्वात्। यत्तु प्रसङ्गादुक्तम्– द्वितीयाभावोपलक्षितात्मनोऽज्ञानविषयत्वे तादृश स्यैव चरमवृत्तिविषयवत्त्वं वाच्यम्, तथा च वेदान्तानामप्युपलक्षणरूपप्रकारयुक्तोक्तात्मपरत्वे अखण्डार्थताहानिः, अकाके काकवदित्यस्येवास्याप्यप्रामाण्यापत्तिः, उपलक्षणस्य मिथ्यात्वाद्– इति। तत्राखण्डार्थवादे वक्ष्यामः।

न च– न्यूनाप्यङ्गुलिरधिकमाच्छादयति, अविषयसंबन्धिनी कथमधिकमाच्छादयेदिति– वाच्यम्, दत्तोत्तरत्वात्। तस्मादविद्या स्वरूपत आश्रयतो विषयतश्च सुनिरूपा।

इत्यद्वैतसिद्धावविद्याया विषयोपपत्तिः।

## न्यायामृततरङ्गिणी

आवरणकृत्येति। करणव्युत्पत्त्या आवरणमज्ञानं। तत्कृत्यमावृतिः। एवमग्रेपि। विषयासंबंध इत्यत्र विषयशब्देन घटादिकं वा चैतन्यरूपं वा। आद्य आह ॥विज्ञानस्येति॥ विज्ञानस्य विषयसंबंधाभावे स्वरूपहानिः स्यादित्यर्थः। द्वितीय आह ॥स्वयमिति॥ चैतन्यस्य स्वयमेव स्वज्ञानरूपत्वेन स्वसंबंधानपेक्षणादित्यर्थः ॥आवरणसाध्यत्वेनेति॥ अत्रावरणशब्दो भावसाधनः। तेनावरणशब्देनावृतिलक्षणमावरणकार्यं लभ्यते। तेन आवरणकृत्यनिरूपणे इदमसंगतमिति निरस्तं ॥आवरणत्वेति॥ आवृतित्वेत्यर्थः ॥उक्तेति॥ आवृतिसाध्यभ्रांतिसाध्यः शब्दप्रयोग इत्यर्थः ॥सुषुप्ताविति॥ उक्तव्यवहारस्यावरणकृत्यस्य सुप्तावभावात्तत्सिद्धिर्न स्यादित्यर्थः। ननु अस्ति प्रकाशत इत्यादिव्यवहाराभाव आवरणकृत्यं। सच सुषुप्तावप्यस्तीत्याशंक्य निराकरोति ॥नाप्यस्ति प्रकाशत इत्यादीति॥ व्यवहारोऽभिज्ञा वाऽभिलपनं वा। आद्येपि स्वरूपाभिज्ञा वा वृत्तिर्वा। नाद्य इत्याह ॥व्यवहारस्येति॥ तथा चेदानीमप्यावरणं न सिध्येदिति भावः। नेतर इत्याह ॥वृत्तेरिति॥ तथाच मोक्षेप्यावरणं सिध्येदिति भावः। द्वितीयं दूषयति ॥अभिलपनत्व इति॥ आवरणकार्यस्याभिलपनरूपव्यवहाराभावस्य मोक्षेपि सत्त्वादिति भावः ॥तयोरिति॥ उक्तयोर्योग्यत्वायोग्यत्वयोः ॥आवरणमिति॥ आवरणमावृतिः। आवरणकृत्यमिति यावत्। आरोपितस्य रजतादेः शुक्त्याद्यावरणं विनाऽदर्शनादत्रापि तदपेक्षायामात्माश्रयः स्यादिति भावः। ननूक्तयोग्यताया अज्ञानसंबंधरूपाया अनादित्वेन चित्प्रकाश्यत्वेनोत्पत्तौ ज्ञप्तौ स्थितौ च स्वानपेक्षणान्नात्माश्रय इति चेन्न। उक्तयोग्यताया आवरणानपेक्षणे तदधीनताया

(तरङ्गिणी)

अयोगस्योक्तत्वात्। अन्यथानादित्वेनाज्ञानं विनैव जीवब्रह्मविभागापन्नो जीवो ब्रह्म वा अज्ञानस्य विषयः स्यादिति चिन्मात्रमज्ञानविषय इति नादरणीयं स्यात् ॥अद्वितीयत्वादीति॥ तथाच यत्राद्वितीयत्वादिविशिष्टे संशयादिकमावरणं कल्पकमस्ति तत्र त्वया नावरणं कल्प्यते। यत्र चिन्मात्रे आवरणं कल्प्यते तत्र च संशयादिकमावरणकल्पकं नास्तीत्यर्थः ॥इदानीमपीति॥ उक्तयोग्यत्वादिरूपस्यावरणस्य मोक्षकाले यथाऽभावस्तथेदानीमपि तदभावोस्तीतीदानीमप्यावरणमेव न स्यादित्यर्थः ॥स्वरूपस्येति॥ अज्ञानावच्छिन्नस्य स्वप्रकाशत्वापाताच्चेत्यपि द्रष्टव्यं ॥इच्छाद्यवच्छिन्नेति॥ ननु शुद्धायाश्रितः प्रकाशमानत्वेपि तस्या एव परिपूर्णाद्याकारेणाप्रकाशमानत्वात्तदर्थं तस्या एवावरणकल्पनं परिपूर्णाद्याकारस्य मोक्षदशानुवृत्तत्वेन शुद्धचिन्मात्रत्वादिति चेन्नैवम्। निर्विभागचिति प्रकाशमानाप्रकाशमानाकाराभावात्। नचावरणमहिम्नैव परिपूर्णाद्याकाराप्रकाशोऽध्यासाधिष्ठानादिना प्रकाशमानता चाविरुद्धेति वाच्यम्। आवरणस्यासिद्धत्वेनान्योन्याश्रयात् ॥सुखादेरिति॥ तथाच व्यवहारयोग्यत्वरूपस्वप्रकाशत्वेन व्यवहारायोग्यत्वरूपमावरणं विरुद्धम्। अविरोधहेतोः प्रकारभेदस्याभावादित्यर्थः ॥एतेनेति॥ स्वप्रकाशत्वेन सह व्यवहारायोग्यत्वस्य विरुद्धत्वेनेत्यर्थः ॥आवरणकृत्यमिति॥ आवरणरूपं कृत्यमित्यर्थः ॥नचोक्तेति॥ स्वप्रकाशत्वं सत्यमावरणं मिथ्येति न विरोध इत्यर्थः ॥सुखादीति॥ शुक्तावियं न शुक्तिरित्यनुभवस्य शुक्त्यारोपसाधकस्यैव स्फुरणरूपे प्रकाशेऽप्रकाशारोपसाधकस्य स्फुरणं न प्रकाशत इत्यनुभवस्याभावेनेत्यर्थः। आरोपितेनावरणेन वस्तुसदावरणकार्यं न संभवतीत्याह ॥वह्नाविति॥ विरोधादपि प्रकाशे आरोपितोप्यप्रकाशो न संभवतीत्याह ॥सत इति॥ आरोपितानारोपितयोर्विरोधाभावेप्यनारोपिताधिष्ठानप्रकाशस्य सर्वेणाप्यारोपितेन विरोध इत्यर्थः ॥अन्यथेति॥ अधिष्ठानप्रकाशेपि यद्यारोपस्तर्ह्यारोपनिवर्तकांतराभावात्तन्निवृत्तिर्न स्यादित्यर्थः ॥इत्यविरोध इति॥ तदत्यन्ताभावाधिकरणस्यैव तत्प्रागभावाधिकरणत्वादित्यर्थः॥ स्वरूपेति॥ तथा च न तत्प्रागभावमादायाविरोध इत्यर्थः॥ इदानीमिति॥ प्रकाशात्यन्ताभावानधिकरणे प्रकाशप्रागभावस्याप्रकाशोपपादकत्वेन ध्वंसस्यापि तदुपपादकत्वं स्यादित्यर्थः। ॥भवति हीति॥ प्रागभाववद्ध्वंसस्यापि योग्यतया विरोधाभावादिति भावः ॥अर्हे योग्ये॥ ॥किंचेति॥ चैतन्यं आवृताभिमतकालेपि स्वयं प्रकाशते प्रकाशत्वात् दीपवत् प्रकाशरूपेच नावरणमिति भावः ॥आवरणं विनेति॥ अव्रियमाणसिद्धावावरणसिद्धिः तत्सिद्धौच तत्कल्पितभेदं जीवचैतन्यं प्रति चिन्मात्रस्याव्रियमाणस्य सिद्धिरित्यन्योन्याश्रय इत्यर्थः। भेदावरणयोरनादित्वेपि परस्परापेक्षायामन्योन्याश्रय एवेत्युक्तत्वाच्च ॥यो मोक्षइति॥ तथाच जीवचैतन्यं प्रति चिन्मात्रावरणमप्रयोजकमिति भावः ॥नच दीपेति॥ तथाचोक्तानुमाने स्वविषयत्वमुपाधिरित्यर्थः

(तरङ्गिणी)

॥ मोक्षेपीति ॥ अप्रकाशं प्रत्यावरणसत्त्वस्याप्रयोजकतया तत्प्रयोजकस्य स्वविषयत्वस्य मोक्षेऽपि सत्त्वादित्यर्थः। अत एवाह ॥ अज्ञानेति ॥ प्रकाशमान एवाज्ञानमित्यत्र हेतुमाह ॥ अज्ञानावच्छेदकस्येति ॥ अज्ञाने ज्ञानाभावे ॥ सामान्यस्येति ॥ तथाच सामान्येन ज्ञानमप्रयोजकमिति भावः ॥ तदवच्छेदकस्येति ॥ तथाच विशेषे प्रकाशमान एवाज्ञानं दृश्यत इति भावः। ननु चैतन्यस्याज्ञानाविरोधित्वेन तन्निवृत्तिर्न स्यादित्यत आह ॥ अविद्येति ॥ सजातीययोः प्रकाशकत्वे तदभावे च दृष्टांतमाह ॥ सौरचाक्षुषेति ॥ ॥ आवरणेति ॥ आवरणस्य कृत्यमित्यर्थः ॥ त्वयापीति ॥ अनवच्छिन्नानंदश्च प्रकाशमानस्वरूपमात्रमेवेति न तदप्रकाशार्थतावारणस्येति भावः ॥ अपिचेति ॥ प्रकाशमानेप्यज्ञानस्यानुभवबलात् कचित्स्वीकारेपि न सर्वत्र तथा। तत्कल्पकस्यानुभवस्याभावात्। अतो न त्वदुक्तो दृष्टांत इत्यर्थः। दृष्टांतेपि न प्रकाशमानेऽज्ञानमित्याह ॥ किंचेति ॥ ॥ अज्ञानेति ॥ विशेषाज्ञानेत्यर्थः ॥ नहीति ॥ विशेषरूपेण प्रकाशमान एवाज्ञानमिति वदता त्वयापि परचित्तगतोऽज्ञातोर्थो बुभुक्षापिपासादिवत्तद्विशेषरूपेण न ह्यनूद्यत इत्यर्थः। नन्वज्ञानज्ञानस्याज्ञानावच्छेदकविशेषाविषयत्वेपि तदवच्छेदकविशेषस्याज्ञाने कथं तदवच्छिन्नाज्ञानज्ञानमुत्पद्येतेत्यत आह ॥ एवंचेति ॥ विशेषावच्छिन्नाज्ञानज्ञानं प्रति विशेषज्ञानमेव हेतुः किं न स्यादित्यत आह ॥ नहीति ॥ ननु विशेषाज्ञानं प्रति सामान्यस्यानवच्छेदकतया कथं विशेषावच्छिन्नाज्ञानज्ञानं प्रति सामान्यज्ञानं हेतुः स्यादित्यत आह ॥ अवच्छेदकज्ञानस्येति ॥ अज्ञानज्ञानं प्रत्यज्ञानानवच्छेदकस्य सामान्यस्यैव ज्ञानं हेतुर्दर्शनबलादेवेत्यर्थः। नन्वज्ञानानवच्छेदकत्वाविशेषात्सामान्यस्येवान्यस्यापि ज्ञानं विशेषाज्ञानज्ञाने हेतुः स्यादित्यत आह सामान्येति ॥ यस्य विशेषरूपेणाज्ञानं तस्यैव सामान्यरूपेण ज्ञानं विशेषाज्ञानज्ञानहेतुरित्यर्थः। नवच्छेदकाविषयकस्याप्यवच्छिन्नविषयत्वमित्यत्र दृष्टांतमाह ॥ युक्तंचेति ॥ ॥ द्वेषस्येति ॥ स्वातंत्र्येणेति शेषः ॥ द्विष्टस्येति ॥ अत्रापि स्वातंत्र्येणेति शेषः। येन रूपेण द्वेषस्येच्छाविषयत्वं तेन रूपेण न द्विष्टस्येच्छाविषयत्वमित्यर्थः। एतेन इच्छा तावत् ज्ञानसमानविषया। ज्ञानं चावच्छेदकतया द्विष्टमपि विषयीकरोतीतीच्छापि द्विष्टविषया भवत्येवेति नायं दृष्टांत इति निरस्तं। स्ववृत्तित्वसाध्यत्वादिना द्वेषस्येव द्विष्टस्येच्छाविषयत्वाभावात्। अन्यथा इच्छाद्वेषयोरेकत्र सांकर्ये तयोर्विरोधो न स्यात् ॥ ईश्वरस्येति ॥ सत्त्वेनेति शेषः। तेन ईश्वरोपि भ्रमविषयमगृहीत्वा भ्रमं गृह्णातीति निरस्तं ॥ अस्मदादीनामिति ॥ विशेषरूपेणेति शेषः। तेन सर्वपदादिना सर्वज्ञानमस्माकमप्यस्तीति निरस्तं। ननु घटसंयोगज्ञानं प्रति न घटाज्ञाननिवृत्तिर्हेतुः। तस्याः घटसंयोगावच्छेदकघटज्ञानेनान्यथासिद्धत्वादित्यत आह ॥ अज्ञानावच्छेदकतयाज्ञानेपीति ॥ किंचेति ॥ अज्ञानावच्छेदकविशेषविषयाज्ञानस्य यथा तद्विषयकज्ञानेन न विरोधः तथा तद्विषयक-

(तरङ्गिणी)

ज्ञानाभावस्यापि नाज्ञानज्ञानेन विरोध इत्यर्थः। नन्वज्ञानं विशेषावच्छिन्नतया भासते वा सामान्यावच्छिन्नतया वा। आद्ये विशेषे भासमानत्वमागतमेव। नहि विशेषमनवभासयन्विशेषाज्ञानमवभासयति। द्वितीये तु सामान्यज्ञानेन तदवच्छिन्नतयैव गृहीतस्याज्ञानस्य विशेषसंबंधित्वे मानाभावेन भासमाने सामान्य एवाज्ञानमागतमित्याशंक्य द्वितीयपक्षमंगीचिकीर्षुस्तत्र दोषं परिहरिष्यन्नाह ॥ अज्ञानविषयविशेषावच्छेदसिद्धिस्त्विति॥ यथा तमसाऽऽव्रियमाणो विशेषस्तमःकाले तमोविषयत्वेनाज्ञातेपि तमोनिवृत्त्यनंतरं तया ज्ञायते तद्वदित्यर्थः। तथाच सामान्यरूपेणाज्ञानस्य विशेषसंबंधित्वे एतावंतं कालममुमर्थमित्थं नाज्ञासिषमित्यनुभवस्यैव मानत्वमिति भावः। ननु यद्यज्ञानं स्वकाले विषयावच्छिन्नतया न भासते तदा त्वदुक्तमर्थं न जानामीति विषयावच्छिन्नाज्ञानस्य वर्तमानप्रत्ययो विरुध्येतेति चेन्न। स्थूलकालमादाय तथोपपत्तेः। अन्यथा त्वदुक्तमर्थं न जानामीत्यनुभवेन वर्तमानकालासंबंध्यज्ञानं सिध्येत् ॥ वृत्तिरिति॥ चैतन्यस्याप्यज्ञानानिवर्तकत्वे तदनिवृत्तिरेव स्यादिति भावः। नन्वज्ञाननिवर्तकमित्यनेन तन्निवृत्तिप्रयोजकं विवक्षितम्। तच्च संबंधसंपादनद्वारास्मिन्पक्षे वृत्तिज्ञानस्याप्यस्तीति चेन्न। तथासति चैतन्यमेवाज्ञाननिवर्तकमित्यापातात् ॥ अज्ञानस्येति॥ न च मोक्षदशायामज्ञाननिवृत्तिश्रवणेन तस्य स्वविरोधिज्ञानप्रागभावमात्रव्यापकत्वमिति वाच्यम्। तच्छ्रवणस्य चैतन्येऽज्ञानविरोधित्वेनाप्युपपत्त्या सामान्यव्यापकत्वत्यागेन तस्या विशेषपरत्वकल्पनायोगात् ॥ ज्ञानसामान्येति॥ ननु घटादिमात्रविरोधिनो घटाभावादेर्भावसामान्यविरोधित्वेनाभावत्वेन प्रतीतिवत् ज्ञानविशेषविरोधिनोप्यज्ञानस्य ज्ञानसामान्यविरोधित्वेन प्रतीतिरुपपन्नैव। न ह्यभावपदादिनाऽभावप्रतीतौ घटाभावो न भासत इति चेन्मैवम्। तत्र पटादिविरोधिप्रतीतिवदत्रापि चैतन्यविरोधिप्रतीतेरवश्यवाच्यत्वात्। न ह्यभावपदादिना घटाभावमात्रधीः। तत्र घटाभावपटाभावादीनामनेकत्ववदिहाज्ञानानेकत्वाभावेनैकस्यैवोभयविरोधित्वस्य वाच्यत्वाच्च। ननु ज्ञानसामान्यविरोधित्वानुभवेनापि वृत्तिविरोधित्वमेव पर्यवस्यति। न तु ज्ञप्तिविरोधित्वमपि। तयोरेकज्ञानत्वाभावादित्यत आह ॥ ज्ञप्तीति॥ ज्ञाधातोर्जप्तिविधानादित्यर्थः। ननु जानातेर्ज्ञप्त्यर्थत्वेपि वृत्तेरेव ज्ञप्तित्वात्तद्विरोधित्वमेवाज्ञानस्येत्यत आह ॥ त्वत्पक्ष इति॥ ननु वृत्तिप्रतिबिंबितचैतन्यमेव जानामीति व्यवहारविषयः। तथा च न जानामीत्यनेन वृत्तिचितोरुभयोरप्यज्ञानविरोधित्वं विषयीक्रियत इत्यत आह ॥ चैतन्यस्येति॥ दृश्यस्य दृश्यध्यासानुसारेण शुद्धचित एव दृक्त्वात्तस्या एव जानात्यर्थत्वादित्यर्थः। ननु चितो ज्ञप्तित्वेपि नाज्ञानविरोधित्वं। न जानामीत्यनुभवस्तु वृत्त्यारूढचिदचिदभिप्रायेणेत्यत आह ॥ चैतन्येति॥ मुख्यं ज्ञानत्वमज्ञानत्वं वा न स्यादित्यर्थः ॥ तत्त्वेनेति॥ अज्ञाननिवर्तकतौपयिकार्थ-

(तरङ्गिणी)

प्रकाशकत्वेनेत्यर्थः। यत्तु प्रमाणवृत्त्युपारूढप्रकाशत्वेनाज्ञाननिवर्तकत्वं ब्रूमः। न तु जातिविशेषेण वा प्रकाशत्वमात्रेण वा। अतो नेच्छादिनिवर्त्यद्वेषादिवदेतन्निवर्त्यानां सत्त्वापत्तिरिति। तन्न। अत्र प्रकाशस्यैव तन्निवर्तकत्वे शेषवैयर्थ्यात्। व्यभिचारमप्याह ॥ त्वन्मत इति ॥ ॥ स्फुरणस्यैवेति ॥ प्रकाशरूपस्येत्यर्थः। ननु परोक्षवृत्तेर्विषयपर्यंतत्वाभावेन न विषयगताज्ञाननिवर्तकत्वं। सुखादौ च ज्ञातैकसत्त्वादज्ञाननिवृत्तिं विनैवाज्ञानादर्शनमतोन्वयव्यतिरेकावन्यथासिद्धाविति चेन्न। एत एव परोक्षवृत्तेः स्वविषये व्यवहारजनकत्वमपि न स्यात्। सुखादावज्ञानविरोधिनं विना तस्य ज्ञातैकसत्त्वानुपपत्तेः। नन्वस्तु प्रकाशकत्वेनैवाज्ञानविरोधित्वम्। चैतन्यं तु .न प्रकाश इति नाज्ञानविरोधीत्यत आह ॥स्वेति॥ न च परिपूर्णत्वादिना प्रकाशविधुरत्वाभावेपि अध्यासाधिष्ठानत्वादिना प्रकाशमानतयाऽप्रकाशविधुरत्वसंभव इति वाच्यम्। निर्विशेषे तदसंभवस्योक्तत्वात् ॥ वृत्तीति ॥ सौरालोकज्ञानयोरित्यादिनेत्यर्थः। ननु साक्षिणोऽज्ञानसाधकत्वेन तदविरुद्धत्वमित्यत आह ॥अनुभूयते हीति॥ अज्ञानविषयकानुमित्यादेरज्ञानसाधकत्वेपि यथाऽज्ञानविरोधित्वं तथा चैतन्यस्यापि तद्विरोधित्वं युक्तमित्यर्थः ॥ अन्यथेति ॥ साक्षिणोऽज्ञाना-विरोधित्वेऽन्यस्य तद्विरोधिनोऽभावाच्चैत्रेच्छादौ मैत्रस्येव चैत्रस्याप्यज्ञत्वं स्यात्। नो चेन्मैत्रस्याप्यज्ञानं न स्यादित्यर्थः। ननु साक्षिविषये सुखादावज्ञानाप्रसक्तिरेवेति न तत्र तद्द्वारापेक्षा। वृत्तिस्तु विषये प्रसक्ताज्ञाननिवृत्तिकेति वैषम्यं तयोरित्याशंकते ॥ इच्छादाविति ॥ ॥ अन्यथेति ॥ आत्मनोऽज्ञानाविरोधित्वे तस्य जडत्वापत्त्या घटादिसाम्यमित्यर्थः। एतेन प्रकाशांतरापेक्षायां जडत्वमुपाधिरिति निरस्तम्। चैतन्यरूपप्रकाशस्य कुत्राप्यज्ञानविरोधित्वादर्शनात्। प्रकाशमानेपि ास्मिन्नज्ञानमविरुद्धमिति शंकां निराकरोति ॥ नचेति ॥ साक्षिवेद्ये सुखादावज्ञाननिवारणं च ृत्त्यैवेति भावः ॥ अंतःकरणेति ॥ तथाच परिशेषेण केवलसाक्षिवेद्यत्वमेव सुखादीनामिति तत एव सुखादावज्ञाननिवारणमित्यर्थः ॥ अन्यथेति ॥ स्वसत्तायामप्रकाशबुद्धिविधुरेपि सुखादौ वृत्त्यपेक्षायामित्यर्थः ॥ एतेनेति ॥ सौरालोकचाक्षुषप्रकाशयोरिव वृत्तिचितोर्वैलक्षण्याभावेनेत्यर्थः ॥ एतेनैवेति ॥ साक्षिणोऽज्ञानविरोधित्वेनेत्यर्थः ॥ वृत्तिरेवेति ॥ प्रमाणवृत्तिरित्यर्थः ॥ विवरण इति ॥ अविद्योपाधिकं सर्वगतं जीवचैतन्यं विषयप्रकाशकमिति पक्षे प्रतिकर्मव्यवस्था युक्ता अंतःकरणोपाधिकत्वाज्जीवः परिच्छिन्नो न सर्वमवभासयतीति जीवस्य परिच्छिन्नत्वपक्षेपि प्रतिकर्मव्यवस्थायामुक्तायां ननु अहंकारावच्छिन्नचैतन्यस्य विषयचैतन्यसंबंधाद्विषयभानासंभव इत्याशंकायां जीवावच्छेदनिमित्तांतःकरणपरिणामसंसर्गकृताभिव्यक्तित्वाद्विषयावच्छिन्नचैतन्यस्य जीवचैतन्यता च न विरुध्यते। विषयप्रमातृचैतन्ययोरेकांतःकरणपरिणामसंबंधादभेदेन स्फुरणं ततो विषयप्रकाश उपपद्यत इति परिहृतायां ननु प्रत्यग्ब्रह्मणोरप्येकांतःकरणसंबंधाद्ब्रह्मणोपि

(तरङ्गिणी)

प्रत्यक्त्वेन स्फुरणं स्यादिति पुनः शंकायां किं ब्रह्माकारपरिणतांतःकरणसंसर्गात्तत्स्फुरणमुतांतःकरणमात्रसंसर्गात्। नाद्यः। ब्रह्माकारपरिणतांतःकरणसंसर्गाभावान्न नित्यवद्ब्रह्मणः प्रकाशप्रसंगः। न द्वितीयः। न ह्यंतःकरणस्वरूपमात्रसंसर्गिणोभिव्यक्तिरंगीकृता। तद्गतधर्मादीनामपि प्रसंगादिति परिहृतायां नन्वंतःकरणमात्रसंसर्गात्प्रत्यग्व्यक्तिवद्ब्रह्मव्यक्तिरपि किं न स्यादिति पुनः शंकायां अंतःकरणमात्रसंसर्गात्प्रत्यग्व्यक्तिर्नास्त्येव तथा च दृष्टांतासिद्धिरित्युच्यते विवरणवाक्ये जीवाकारवृत्तिरित्यत्रेत्यवगंतव्यं ॥जीवाकारेति॥ जीवविषया अहंप्रकारिका या वृत्तिस्तदात्मना परिणतं यदंतःकरणं अहमाकारांतःकरणपरिणामभूतज्ञानरूपया वृत्त्या जीवविषयिण्या जीवोभिव्यज्यते व्यवहारविषयो भवतीत्यर्थः। न चेयमविद्यावृत्तिरिति वाच्यम्। दोषाजन्यत्वात्। अंतरविषयत्वेनांतःकरणवृत्तेर्बहिरिंद्रियद्वारानपेक्षणात् ॥अन्यथेति॥ अहंकारवृत्त्यभावदशायां सुषुप्तेः सत्त्वादित्यर्थः। नन्विंद्रियवृत्तिरेवाज्ञानविरोधिनीत्यत आह ॥अयं घट इतीति॥ ॥विशिष्टेति॥ विशेष्याद्विशिष्टस्य भिन्नत्वादित्यर्थः ॥दंडीति॥ तस्यास्तदविषयत्वापात इत्यपि बोध्यं ॥आकाशांशस्येति॥ अंशांशिनोर्भेदादित्यर्थः ॥अतिप्रसंगादिति॥ अपीतसाक्षात्कारस्य पीतभ्रमानिवर्तकत्वं किं तु तच्छ्रवणादिजन्यपीतसाक्षात्कारस्यैव तथात्वमित्यादि स्यादित्यर्थः ॥सत्यत्वेति॥ श्रवणादिजन्यवृत्तेरनधिकविषयाया अप्यविद्यानिवर्तकत्वेनेच्छादिनिवर्त्यद्वेषादिवदज्ञानस्य सत्यत्वं स्यादित्यर्थः। एतेनाविद्यागतोऽवस्थाविशेषो वा शक्तिविशेषो वा घटादिज्ञानेन निवर्तते प्रपंचनिदानभूतमज्ञानं तु श्रवणादिजन्यतत्वमस्यादिवाक्यजन्याखंडार्थगोचरवृत्त्या निवर्तत इति निरस्तं। यत्तु यदवच्छिन्नाज्ञातृत्वप्रयोजकाज्ञानविशेषस्तदवच्छिन्नज्ञाननिवर्त्य इति तन्न। यावंति ज्ञानानि तावंत्यज्ञानानीत्यत्र निरस्तत्वात्। ॥काकवदिति॥ ॥वाक्यवदिति॥ वेदांतानामित्यनुषंगः ॥प्रकाशमानस्येति॥ प्रकाशमाने आत्मन्यज्ञानमनुचितं अप्रकाशमाने द्वितीयाभावे तु तदुचितमित्यर्थः ॥निर्विशेष इति॥ चिन्मात्रस्य स्वयं प्रकाशत्वात्तत्र सत्यभूतधर्मस्याभावान्मिथ्याभूतधर्मस्याज्ञानसिद्ध्युत्तरकालीनत्वादज्ञानावृतं किमपि न संभवतीत्यर्थः ॥न्यूनापीति॥ अंगुलिश्चक्षुरादिसंबंधिन्यावरणं तदपेक्षया न न्यूनेत्यर्थः। वक्ष्यमाणाक्षेपार्थमाह ॥तस्मादिति॥

व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगंयुजि।
न्यायामृततरंगिण्यामविद्याविषयो न चित्॥

॥अविद्याविषयभंगः॥

## न्यायामृतकण्टकोद्धारः

यथा साश्रयत्वमज्ञानत्वव्यापकं तथा सविषयत्वमप्यज्ञानत्वव्यापकम्। ततश्च सविषयत्वानुपपत्तौ नाज्ञानं परमते सम्भवतीत्याशयेनाह ॥अविद्येति॥ जगदुपादाने सविषयत्वाभावात् अज्ञानत्वानुपपत्तिरिति भावः। यद्वा अविद्याविषयत्वेन त्वदभिमतो विषयश्च प्रयोजकाभावादविषय एवेति न तद्विषयत्वेनाविद्या-स्वीकरणमित्याशयः। अन्यत् = चिदन्यदित्यर्थः ॥जडत्वेनेति॥ ननु जडस्याप्यालोकस्य स्वप्रकाशत्वदर्शनात् कथं जडत्वेन स्वप्रकाशत्वाभावः साध्यत इति चेन्न। विवक्षितस्यावेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वस्य स्वप्रकाशत्वस्यालोकेप्यभावात्। न च तादृशस्वप्रकाशत्वं चित्यप्यसिद्धमिति वाच्यम्। स्वप्रकाशवादे तस्य सिद्धेर्वक्ष्यमाणत्वात्। लोपः किं नाशो वा तिरोधानं वा? उभयत्र दूषणमाह ॥स्वरूपेति॥ नित्यत्वात् ध्वंसाप्रतियोगित्वान्नाशो न सम्भवति। सिद्धत्वात् सर्वदाभिव्यक्तत्वाच्च तिरोधानमपि न सम्भवति। अन्यथाऽविद्यादेः प्रकाशो न स्यादिति योज्यम् ॥असिद्धेति॥ द्वितीये दूषणमाह ॥तदन्यस्येति॥ न चावरणनिवृत्यर्थं तदन्यस्यापेक्षेति वाच्यम्। तस्यैवासंभवादित्युच्यमानत्वात्। अन्यथाऽन्योन्याश्रयात्। स्वप्रकाश इति हेतुगर्भविशेषणम्। तथाच तेनैव व्यवहाराद्युपपत्तेः न तदर्थमपि तस्यापेक्षेति भावः ॥ज्ञानस्येति॥ तथाच विषयासम्बन्धे स्वभावप्रच्युतिरेव स्यादिति भावः। न च दीपस्य कुड्यादिनेव ज्ञानस्यापि तथाभावः किं न स्यादिति वाच्यम्। सर्वथा विषयासम्बद्धस्य ज्ञानस्यादर्शनात्। किञ्चिद्विषयासम्बद्धस्यान्यथैवोपपत्तेश्च। दीपादावपि किञ्चिद्विषयसम्बन्धसत्त्वाच्च। किञ्च किं स्वान्यविषयासम्बन्धो वा? स्वरूपविषयासम्बन्धो वा? नोभयथाप्यावरणापेक्षेत्याह ॥स्वयमिति॥ विषयासम्बन्धिन एव ज्ञानत्वाङ्गीकारेणेत्यर्थः। अत एवाह ॥त्वन्मत इति॥ ॥त्वन्मतेऽपीति॥ ज्ञाततताया अनङ्गीकारात् चैतन्यस्य च सर्वदा सत्त्वादिति भावः। व्यवहारः किमावरणमावरणकृत्यम्? आद्ये व्यवहारं विकल्प्य दूषयति ॥व्यवहारो हीति॥ ॥भ्रान्तेरिति॥ विषयबाधात् भ्रान्तित्वमिति भावः। अत एवेति परामृष्टं हेतुमाह ॥तस्येति॥ आवरणत्वे दोषमाह ॥सुषुप्ताविति॥ कार्येण कारणमनुमेयम्। तथा च सुषुप्तौ कार्याभावेन आवरणरूपे कारणे प्रमाणाभावात् तदभाव इत्यर्थः। व्यवहारोसावावरणमावरणकृत्यं वोभयथापि दोषमाह ॥व्यवहारस्येति॥ तथा चेदानीमप्यावरणतत्कृत्य-योरभावापातादित्यर्थः ॥वृत्तेश्चेति॥ तथाच मोक्षेपि तयोरापातादिति भावः। इदमपि किमवरणमावरणकृत्यं वा? आद्य आह ॥तयोरिति॥ तथाचात्माश्रयादिरिति भावः। न द्वितीयः योग्यतावच्छेदकाभावेन योग्यत्वस्यासम्भवात्। न च तदवच्छेदकं चित्त्वम्। मोक्षेऽपि आवरणकृत्यापातात्। नाप्यज्ञानविषयत्वमन्योन्या-श्रयापातात्। ननु नास्ति न प्रकाशते इति व्यवहारोऽस्ति प्रकाशते इति व्यवहाराभावो वावरणकृत्यम्। तद्योग्यतारूपाज्ञानसम्बन्ध आवरणम्। न च योग्यताया आवरणसाध्यत्वेनान्योन्याश्रयादिकमिति वाच्यम्। अज्ञानसम्बन्धरूपस्य तस्यानादित्वेन चित्प्रकाश्यत्वेनावरणानपेक्षत्वादिति चेन्न। कल्पितस्य दोषजन्यप्रतीति-मात्रशरीरस्याज्ञानसम्बन्धस्यानादित्वायोगात्। दोषाजन्यचिन्मात्ररूपप्रतीतिरूपत्वे च मोक्षेऽपि तदापातात्। किञ्चाभिज्ञादिसाधारणव्यवहारस्य चित्स्वरूपवृत्त्यन्यतरत्वपक्षोक्तदोषो दुर्वारः। द्वितीयेऽपि च व्यवहाराभावस्य प्रागभावरूपत्वे आवरणासाध्यत्वम्। तस्यानादित्वात्। तत्परिपालनस्यावरणसाध्यत्वे मोक्षे व्यवहारोत्पादः स्वीकर्तव्यः। अत्यन्ताभावत्वे तु स एव दोषः। ध्वंसस्त्वसम्भव्येवावरणस्यानादित्वेन तादृशव्यवहारानुत्पादे तद्ध्वंसासम्भवात्। किञ्चोभयविधकृत्येऽप्यसम्भव एव दोष इत्याह ॥अद्वितीयत्वादीति॥ तद्व्यवहारेऽपी-

(कण्टकोद्धारः)

त्युपलक्षणम्। अस्ति प्रकाशते इति व्यवहाराभावेऽपीत्यपि द्रष्टव्यम्। तदभावेन = नास्ति न प्रकाशते इति व्यवहारास्ति प्रकाशते इति व्यवहाराभावयोरभावेन। न च यत्र विशिष्टे उक्तरूपमावणकृत्यं तदेव विषयोऽस्त्विति वाच्यम्। विशिष्टस्याज्ञानकल्पिततत्वेन तद्विषयतयाऽज्ञानसिद्धौ अन्योन्याश्रयात्। विशिष्टस्य जडत्वेन घटादितुल्यत्वाच्च। न च चिन्मात्रस्य चित्त्वेन स्फुरणेऽपि पूर्णत्वाद्याकारेणास्फुरणात् उभयविधमावरणकृत्यमस्तीति वाच्यम्। पूर्णत्वाद्याकारस्य चिन्मात्रत्वे तत्स्फुरणस्यावश्यकत्वात् तदतिरिक्तत्वे चावरणविषयत्वायोगात् चिन्मात्रमपि पूर्णत्वं तत्स्फुरणेऽपि न स्फुरतीति स्वव्याहतमुन्मत्तप्रलपितमित्युपेक्ष्यम्। अत एवोक्तयोरावरणकृत्ययोः स्वप्रकाशत्वेन विरोधसमाधानमपास्तम्। पूर्णत्वाद्याकारेणास्फुरणमादाय तत्समाधानम् तच्च न सम्भवति। प्रकारान्तरेण च तत्समाधानं मूल एव दूष्यते ॥तयोरिति॥ व्यवहारयोग्यत्वांशमादाय उक्तयोरावरणकृत्ययोर्विरोध इत्यर्थः। न च स्वप्रकाशत्वलक्षणेऽपि व्यवहारयोग्यत्वं नाम नास्ति न प्रकाशते इति व्यवहारयोग्यत्वमतो न तयोर्विरोध इति वाच्यम्। तथात्वे नरविषाणादेरपि स्वप्रकाशत्वापत्तेः। तादृशस्वप्रकाशत्वेन जडत्वासिद्धेश्च। ननु स्वरूपेण व्यवहारयोग्यत्वतदयोग्यत्वयोर्विरोधो न तथा मयाङ्गीक्रियत इत्याशङ्क्य निषेधति ॥न चेति॥ ॥स्वरूपस्येति॥ स्वरूपस्यापरोक्ष-व्यवहारयोग्यत्वाभावादिति भावः। ननु मयाऽज्ञानावच्छेदेनैव स्वप्रकाशत्वमङ्गीक्रियते। न स्वरूपेणेत्यत आह ॥नित्यातीन्द्रियेति॥ सर्वस्य वस्तुनः ज्ञाततया साक्षिविषयत्वाङ्गीकारादिति भावः। न च धर्मादिकं स्वरूपसिध्यर्थं प्रमाणान्तरमपेक्षते। न चैतन्यमिति विशेष इति वाच्यम्। तथात्वे स्वरूपस्यासिद्धिप्रसंगात्। न हि स्वरूपं स्वेनैव सिध्यति। क्रियायाः स्वविषयत्वानङ्गीकारात्। प्रमाणान्तरापेक्षा तु त्वयैव दूषितेति भावः ॥इच्छाद्यवच्छिन्नेति॥ न चाज्ञानं स्वरूपमात्रव्यवहारप्रतिबन्धकत्वेन सिद्धम्। नत्वेवमिच्छादिकमिति वाच्यम्। उभयत्राप्यवच्छिन्नव्यवहारेऽज्ञानस्येवेच्छादेरपि स्वरूपमात्रव्यवहारप्रतिबन्धकतापातात्। अज्ञानस्य विषयाभावे-नावरणत्वासिध्याऽन्योन्याश्रयाच्च ॥सुखादेरिति॥ नन्वनुक्तोपालम्भोऽयम्। न ह्यस्माभिरज्ञानावच्छेदेनैव चैतन्यं प्रकाशत इत्यङ्गीक्रियते। किन्तु स्वरूपेणापि। तेन सर्वस्योपपत्तिः। तर्हि कथमावरणकृत्यमिति चेन्न। पूर्णत्वाद्याकारेण प्रकाशानङ्गीकारादिति चेन्मैवम्। पूर्णत्वादेरपि चिन्मात्रत्वेन चिन्मात्रप्रकाशे पूर्णत्व-प्रकाशावश्यंभावेनावरणकृत्याभावापत्तेः। स्वरूपेणाप्रकाशे उक्तदोषस्यापरिहार्यत्वात् ।एतेनेति॥ सुखादिकं न प्रकाशत इति व्यवहारप्रसङ्गेनेत्यर्थः। अत्र द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति अज्ञान-विशेषितव्यवहारयोग्यत्वमित्युक्तं स्यात्। तथाच पूर्वोक्तदोष एवेत्यर्थः ॥सुखादीति॥ आरोपस्याप्यनुभवबलादेव कल्प्यत्वादिति भावः ॥सतोऽधिष्ठानप्रकाशस्येति॥ शुक्तित्वेन भासमानशुक्तौ अशुक्तित्वारोपाभाववत् अधिष्ठानप्रकाशस्य प्रकाशत्वेन स्फुरणान्नाप्रकाशारोप इत्यर्थः। न चाधिष्ठानस्य प्रकाशत्वेन स्फुरणं नेति वाच्यम्। अधिष्ठानचितः स्वप्रकाशत्वेन तादृशस्फुरणस्यावश्यकत्वात्। अज्ञानादिकं प्रकाशते इत्यनुभवाच्च। अन्यथाविद्यादिप्रकाशानुपपत्तेरिति ॥अन्यथेति॥ प्रकाशत्वेन प्रकाशमानेऽपि प्रकाशे यद्यप्रकाशारोप इत्यर्थः ॥न चेति॥ न चात्यन्ताभावानधिकरणत्वमत्यन्ताभावाभावत्त्वम्। अत्यन्ताभावाभावश्च प्रागभाव एवेति स्वप्रकाशत्वमेवावरणकृत्यं स्यादिति वाच्यम्। अत्यन्ताभावाभावस्य प्रतियोग्यात्मकत्वेन प्रागभावत्वमात्रत्वाभावात् सामान्यविशेषरूपत्वेन भिन्नत्वात्। ननु योग्यताया अज्ञानकल्पिततत्वेन नानादित्वमित्यत आह ॥इदानीमिति॥

(कण्टकोद्धारः)

न च योग्यतप्रागभाव एवाप्रकाशत्वप्रयोजक इति न मोक्षेऽप्यप्रकाश इति वाच्यम्। सामान्येबाधकाभावात् घटादावपि प्रागभावाभावेन प्रकाशत्वापाताच्च। उक्तमर्थं कारिकया सङ्गृह्णाति ॥एवञ्चेति॥ न चापरोक्षव्यवहारार्हत्वस्यैव स्वप्रभत्वेन कथं हेतुहेतुमद्भाव इति वाच्यम्। अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वस्यैव स्वप्रभत्वेनोपहितभेदात्। अन्यथा घटादेरपि स्वप्रभत्वापत्तेः। किञ्चाविद्या चैतन्यं प्रत्येव चैतन्यप्रकाशस्यावरणमन्यं प्रति वा? न द्वितीयः। अन्यस्य चेतनस्याभावात्। नाद्य इत्याह ॥किञ्चेति॥ एवं कल्पनेऽदृष्टकल्पना स्यादिति भावः ॥तमस्सम्बन्धेति। न चावतमसे प्रकाशसम्बन्धो दृष्ट एवेति वाच्यम्। तस्य प्रकाश-प्रतिबन्धकत्वाभावात्। प्रकाशप्रतिबन्धकान्धकारस्य तमश्शब्देन विवक्षणात्। न हि प्रकाशे प्रकाश-प्रतिबंधकसम्बन्धो विरोधात्। ननु चान्यं प्रत्येव चैतन्यप्रकाशप्रतिबन्धोविरोधात् न चोक्तमन्याभावादिति वाच्यम्। पारमार्थिकान्याभावेऽपि कल्पितभेदान्यसम्भवादिति शङ्कते ॥नचेति॥ ॥आवरणमिति॥ न च कल्पितस्य भेदस्यानादित्वान्नावरणापेक्षेति वाच्यम्। तथात्वे जीवब्रह्मविभागस्याविद्याधीनत्वोक्तिविरोधात्। कल्पितभेदस्य दोषजन्यप्रतीतिमात्रशरीरत्वेनानादित्वायोगाच्च। ॥यो मोक्ष इति॥ न च मोक्षे जन्यप्रकाशाभावात् कल्पितभेदाभावे चैतन्यं प्रतीव जीवं प्रत्यपि प्रकाशसम्भवान्नोक्तदोष इति वाच्यम्। न ह्यस्माभिर्जन्यत्वाभिप्रायेण भावीत्युक्तम्। किन्तु अभिव्यक्तौ यादृशः प्रकाश इत्यभिप्रायेण। तथाच जन्यप्रकाशाभावाभिधानं व्यधिकरणम्। कल्पितभेदेन च वास्तवाभेदकार्यप्रतिबन्धात् तादृशः प्रकाश इदानीमपि स्यात्। अन्यथा वह्नौ नायं वह्निरिति भेदकल्पनायां वह्नेर्दाहकत्वं न स्यात्। भेदकल्पनाया आवरणं विनाऽयोगेनान्योन्याश्रयाच्च। ननु मोक्षेऽनवच्छिन्नब्रह्मानन्दः प्रकाशते। तदभावः आवरणेन साध्यते इति चेन्न। अनवच्छिन्नब्रह्मानन्दस्य चिन्मात्रत्वे तत्प्रकाशे तदप्रकाशायोगात्। तदतिरिक्तत्वे तस्य जडत्वेन मोक्षे तत्स्थित्ययोगात् ॥न चेति॥ दीपरूपे प्रकाशे स्वविषयत्वं स्वप्रकाशत्वम्। ब्रह्मरूपे प्रकाशे तु अवेद्यत्वं स्वप्रकाशत्वमिति दीपविलक्षणत्वात् न दीपदृष्टान्तेन ब्रह्मप्रकाशः स्वीकर्तुं शक्य इति भावः ॥मोक्ष इति॥ स्वप्रकाशत्वस्य ब्रह्मस्वरूपलक्षणत्वादिति भावः।॥अज्ञानेति॥ त्वया ह्यानन्दाप्रकाशायाविद्या स्वीक्रियते। स चावेद्यत्वादेवोपपन्न इति नाविद्याकल्पनमिति भावः। नन्वस्तु प्रकाशमान एवाज्ञानम्। न चालोके तमस्सम्बन्धादर्शनात् कथमेतदिति वाच्यम्। अज्ञानतमसोर्विरोधितायामनुभवसिद्धविशेषात्। तथाहि। अज्ञानं हि त्वदुक्तमर्थं न जानामीति प्रकाशमाने वस्तुनि अनुभूयते इति वृत्तिविरोधि। न साक्षिरूपज्ञानविरोधीति कल्प्यते। तमस्त्वालोके सति नानुभूयत इत्यालोकमात्रविरोधीति॥ वस्तुतस्त्ववतमस आलोकसम्बन्धदर्शनेन तमोऽपि नालोकमात्रविरोधीति शङ्कते ॥अथ मतमिति॥ तत्स्फोरकत्वेन = तत्साधकत्वेनेत्यर्थः। अविरोधमेवोपपादयति ॥दृश्यते हीति॥ नन्वप्रकाशमानेऽप्यर्थेऽज्ञानप्रतीतिरस्तु। तथाच ज्ञानमात्रमेवाज्ञानविरोधीत्यत आह ॥अज्ञानेति॥ ससम्बन्धिक-पदार्थज्ञाने सम्बन्धितावच्छेदकप्रकारकज्ञानस्य कारणत्वादिति भावः। नन्वज्ञानस्यैवं ज्ञानविरोधित्वाभावे ज्ञानान्निवृत्तिर्न स्यात्। तथाच मोक्षार्थं श्रवणादौ प्रवृत्तिर्न स्यात् इत्यत आह ॥अविद्येति॥ ॥विशेषादेवेति॥ श्रवणादिसाध्यादित्यर्थः। ननु वृत्तिचितोरेकविषयत्वविशेषः कथं चितोऽविरोधित्वे वृत्तेस्तद्विरोधित्वमित्यत आह ॥एकविषयत्वेऽपीति॥ न च दृष्टान्तमात्रं न साधकमतिप्रसङ्गात् इति वाच्यम्। आत्मा वा अर इत्यादिश्रुतिबलात् श्रवणादिसाध्यज्ञानस्यैव तद्विरोधित्वकल्पनात्। ज्ञानमात्रस्यैव तद्विरोधित्वे तु

(कण्टकोद्धारः)

श्रवणादिविधिवैयर्थ्यापत्तेः ॥त्वयेति॥ तथाचाज्ञानाङ्गीकारवैयर्थ्यम्। अनवच्छिन्नानन्दाप्रकाशस्य तत्कृत्यस्याभावात्। तथा चापसिद्धान्त इति भावः ॥अपि चेति॥ ननु चित्त्वाकारेण न प्रकाशत इत्यनुभवाभावेऽपि अनवच्छिन्नत्वाकारेण न प्रकाशत इत्यनुभवोऽस्त्येवेति तत्प्रयोजकतया तत्राप्यावरणमावश्यकमिति चेन्न। अनवच्छिन्नत्वादेश्चिन्मात्रत्वेन तदप्रकाशायोगात्। तदतिरिक्तत्वे च कल्पितत्वेन मोक्षे तदभावात्। अनवच्छिन्नत्वाकारस्यापि स्वप्रकाशत्वेनावेद्यतयाऽप्रकाशोपपत्तौ तत्प्रयोजकतयाऽविद्यास्वीकारवैयर्थ्याच्च। ननु प्रकाशमाने कथमज्ञानमङ्गीक्रियते ज्ञानाज्ञानयोरेकत्र विरोधादज्ञानाविरोधिनो ज्ञानत्वानुपपत्तेश्चेति चेन्न। अभ्युपगमवादेनोक्तत्वात्। अत एव अस्तु वेत्युक्तम्। अत एवाह ॥किञ्चेति॥ न च ज्ञानं विशेषावच्छिन्नतयाऽवभासते सामान्यावच्छिन्नतया? आद्ये विशेषे भासमानत्वमागतमेव। न हि विशेषमभासयद्विशेषाज्ञानमित्यवभासनं सम्भवति। तथाच कथं भासमाने नाज्ञानम्। न द्वितीयः। सामान्यावच्छेदेन भासमानस्य विशेषसम्बन्धित्वे प्रमाणाभावेन सामान्यविषयतया भासमान एवाज्ञानापातादिति चेन्मैवम्। अस्त्वाद्यः। न चैवं भासमानेऽज्ञानापातः। येन रूपेणाज्ञान विषयता विशेषस्य न तेन रूपेणाज्ञानज्ञाने भानम्। न च*निरूपकतावच्छेदकरूपेणैव निरूप्यज्ञाने निरूपकभानमिति वाच्यम्। अस्य नियमस्य प्रागेव दूषितत्वात्। कल्पनाया अनुभवानुसारित्वात्। तथा ह्यनुभवस्त्वदुक्तं न जानामीति। अत एवाह ॥न हि परचित्तस्थमज्ञातमित्यादि॥ तथाच न भासमाने अज्ञानापातः। द्वितीयेऽपि न दोषः। सामान्यावच्छेदेनानुभूयमानस्य विशेषविषयत्वात्। न चान्यावच्छिन्नत्वेनानुभूयमानस्यान्यविषयत्वेऽतिप्रसङ्ग इति वाच्यम्। सामान्यविशेषभावस्य नियामकत्वात्। न चाज्ञानाविषयस्य नाज्ञानावच्छेदकतयाऽज्ञानज्ञाने भानमिति वाच्यम्। अज्ञानाविषयस्यैवानुभवबलेनाज्ञानावच्छेदकतया भानाभ्युपगमात्। अनुभवश्च प्रागेव दर्शित इति अन्यथा भासमानेऽप्यङ्गीकारे अज्ञानादेर्निवृत्तिरेव न स्यात्। न चाज्ञानादेर्ज्ञानविशेषविरोधित्वम्। न जानामीति ज्ञानसामान्यविरोधित्वेनैव प्रतीयमानत्वात्। विस्तृतं चैतत् प्रागेवेत्यलमतिविस्तरेण।

अज्ञातं बुभुक्षापिपासादीति विशेषणविशेष्यभावेनान्वयः। ननु विशेषणज्ञानस्य विशिष्टज्ञाने कारणत्वात् कथं विशेषाज्ञाने तद्विशिष्टाज्ञानज्ञानमित्यत आह ॥एवञ्चेति॥ अत्र प्रमाणमाह ॥तथेति॥ ननु विशेषज्ञानमेव कुतो न हेतुरित्यत आह ॥नहीति॥ नन्ववच्छेदकविशेषज्ञानस्यावच्छेदकज्ञाने कारणत्वानुरोधेन ज्ञातेऽप्यज्ञानधीः स्वीकर्तव्येत्यत आह ॥अवच्छेदकेति॥ तथा कार्यकारणभावस्य सिद्धेरिति भावः। नन्वेवं घटज्ञानस्यापि पटावच्छिन्नाज्ञानहेतुता स्यादित्यतिप्रसङ्ग इत्यत आह ॥सामान्येति॥ ननु ससम्बन्धिकपदार्थज्ञाने विशेषप्रकारकमेव सम्बन्धिज्ञानं कारणत्वेन क्लृप्तमिति तदभावे कथं तदित्यत आह ॥किञ्चेति॥ यद्वा ससम्बन्धिकस्य ज्ञातत्वे सम्बन्धिनोऽपि तत्त्वमावश्यकमित्याशङ्क्य ससम्बन्धिकस्य यद्भवति तत्सम्बन्धिनोऽपीति विशेषव्याप्त्या वा ससम्बन्धिकस्य ज्ञातत्वे सम्बन्धिनोऽपि ज्ञातत्वमिति विशेषव्याप्त्या वा? नोभयथापि व्यभिचारादित्याह ॥किञ्चेति॥ न च द्वेषस्येष्टत्वेऽपि द्विष्टस्येष्टत्वाभाववदिति न युक्तम्। इष्टत्वं हि इच्छाविषयत्वम्। द्विष्टस्यापि इच्छाविषयतावच्छेदकतया तद्विषयत्वावश्यम्भावादिति वाच्यम्। इच्छाविषयतावच्छेदके इष्टत्वव्यवहाराभावेनेच्छाविशेष्यत्वस्यैवेष्टत्वात्। अन्यथा शत्राविष्टत्वव्यवहारः सुखत्वस्यापि निरुपाधीच्छाविषयतावच्छेदकत्वेन पुरुषार्थत्वं दण्डत्वस्यापि कारणतावच्छेदकत्वेन कारणत्वमित्याद्यापद्येत। तथा चावच्छेदके नेष्टत्वम्।

(कण्टकोद्धारः)

न चेश्वरस्यापि भ्रान्तिविषयज्ञानमावश्यकम्। भ्रमो हि भ्रमत्वेन प्रतिपत्तव्यः। अन्यथा विशेषज्ञानाभावप्रसङ्गात्। भ्रमत्वं च तदभाववति तद्ज्ञानत्वम्। एवञ्च भ्रमत्वं जानता भ्रान्तिविषयस्य ज्ञेयत्वात् कथं भ्रान्तिविषयज्ञानाभावेऽपि भ्रान्तिज्ञानवदित्युक्तमिति वाच्यम्। यथार्थज्ञानभिन्ननिश्चयत्वस्यासद्विषयकत्वस्य वा भ्रमत्वात्। तदभाववति तत्प्रकारकत्वस्य भ्रमत्वेऽपि न शुक्तौ तत्प्रकारसत्त्वम् भ्रान्ताविव विषयः। अन्यथा तस्य भ्रान्तत्वप्रसङ्गात्। न च सर्वत्वेन सर्वस्य ज्ञातत्वात् कथं सर्वाज्ञानेऽपि सर्वज्ञानज्ञानमुक्तमिति वाच्यम्। न हि वयं सर्वथा सर्वज्ञानं नास्तीति ब्रूमः। किं नाम? सामान्यतो ज्ञानेऽपि तत्तद्धर्मिगतासाधारणधर्मप्रकारकं नास्तीति। तथा च यथा तत्र विशेषाज्ञानेऽपि सामान्यज्ञानेन सर्वज्ञानज्ञानं तथात्रापीति न कुत्रापि ज्ञात एव सम्बन्धिनि ससम्बन्धिकज्ञानम्। तथाचोक्तस्थले व्यभिचारादुक्तनियमोऽसिद्ध इति भावः ॥ अन्यथेति॥ यद्युक्तरीत्याज्ञानप्रतीत्यन्यथासिद्धावपि अज्ञानज्ञानार्थमज्ञातज्ञानमङ्गीक्रियते तदेत्यर्थः। नन्ववच्छेदके ज्ञानं विनाऽवच्छिन्नज्ञानं न दृष्टमवच्छेदके मोहहानेश्चानवच्छिन्नज्ञाने कारणत्वमित्यतस्तदुपपादयति ॥ तथाहीति॥ तथाचान्वयव्यतिरेकाभ्यामवच्छेदके मोहहानेरप्यवच्छिन्नज्ञाने कारणत्वमिति भावः। वैषम्यं शङ्कते ॥ तर्हीति॥ विरोधस्य तच्छान्तिकल्पनस्य समानत्वात् अर्धजरतीयानुपपत्तेरिति भावः ॥ किञ्चेति॥ कल्पनाया अविशेषादिति भावः। नन्वेवमज्ञानस्य विषयविशेषसिद्धिः कथमित्यत आह ॥ अज्ञानस्येति॥ न चैवमभावस्य भावविरोधिप्रतियोगिज्ञाननिरपेक्षज्ञानविषयत्वमभाववैलक्षण्यं वृत्यैवाज्ञान उपपादितमिति वाच्यम्। अस्याभावेऽपि सत्त्वेन तद्वैलक्षण्याभावात्। अभावविशेषस्य तादृशत्वकल्पने लाघवाच्च। न चैवमज्ञानस्य विषयावच्छिन्नतयाऽननुभवे तस्य त्वदुक्तमर्थं न जानामीति वर्तमानार्थप्रत्ययो विरुध्यत इति वाच्यम्। वर्तमानसामीप्ये वर्तमानवद्वेति वर्तमानप्रत्ययोपपत्तेः। तथाचाज्ञात एवावच्छेदके ज्ञानज्ञानं युक्तमिति युक्तमुक्तं न चाज्ञाननिवर्तकत्वेनाज्ञाननिवृत्तिप्रयोजकत्वमुक्तम्। तच्च सम्बन्धसम्पादनद्वाराऽस्मिन् पक्षेऽप्यस्तीति वाच्यम्। एवं ह्येतन्मते साक्षिण एवाज्ञाननिवर्तकत्वेन वृत्तिरेवाज्ञानविरोधिनी न साक्षीत्यस्यायोगात्। ननु वृत्युपारूढः साक्षी तद्विरोधी न केवला वृत्तिरिति तदभिप्राय इति चेन्न। केवलवृत्तिविषये धर्मादौ केवलसाक्षिविषये सुखादौ न जानामीति प्रतीतिः स्यात्। वृत्युपारूढस्यैवाज्ञानविरोधित्वे दूषणान्तरमाह ॥ अज्ञानस्येति॥ विशेषणाभावायत्तविशिष्टाभावस्य तदानीमपि सुलभत्वादिति भावः। ॥ न जानामीत्यज्ञानस्येति॥ न च घटादिमात्रविरोधिनो घटाभावादेर्भावसामान्यविरोधित्वेनाभावत्वेन प्रतीतिवदज्ञानविशेषविरोधिनोऽप्यज्ञानस्य ज्ञानसामान्यविरोधित्वेन प्रतीतिर्युक्तेति वाच्यम्। अभावपदस्य रूढत्वेन दृष्टान्तासम्मतेः। अभावस्य भावसामान्यविरोधित्वासम्भवेनाभावस्य च तत्त्वासम्भवाच्च। नञर्थोल्लिखितधीविषयत्वस्याखण्डस्य वा अभावत्वात्। न चाज्ञानपदमपि रूढमेवेति वाच्यम्। योगेनैवोपपत्तौ रूढिकल्पनायां मानाभावात्। अभावपदादपि भावसामान्यविरोधित्वस्याप्रतीतेश्च ॥ न जानामीति ज्ञप्तिविरोधित्वस्येति॥ न च मन्मते वृत्तिप्रतिबिम्बतचैतन्यं जानामीति व्यवहारविषयः। तथाच न जानामीत्यनेन वृत्तिचितोरुभयोरपि अज्ञानविरोधित्वं विषयीक्रियते। एवञ्च न चैतन्येऽज्ञानविरोधित्वम्। नापि वृत्तौ। वृत्युपारूढचित एवार्थप्रकाशकत्वेन तथात्वादिति वाच्यम्। तथात्वे हि वृत्तिरेवाज्ञानविरोधिनीति स्वोक्तिविरोधापातात्। सुखं जानाम्यज्ञानं जानामीति व्यवहारो न स्यात्। सुखादेर्वृत्युपारूढचिदविषयत्वात्। प्रत्येकविरोधेनैव व्यवहारोपपत्तौ विशिष्टविरोधित्वकल्पने गौरवाच्च।

विशिष्टस्यैव प्रकाशकत्वे मोक्षे आनन्दाप्रकाशापाताच्च। ज्ञाधातोर्ज्ञप्तिमात्र एव शक्तत्वाच्च। अन्यथा नैयायिकादीनां तथा व्यवहाराभावापातात्। ॥ चैतन्येति॥ परस्परविरोधिनोरेव तत्त्वादिति भावः।

न च वृत्युपारूढचित्त्वेन निवर्तकत्वमतो नेच्छादिनिवर्त्यद्वेषादिवत् तन्निवर्त्यानां सत्त्वं न वा चैतन्यमात्रस्य तन्निवर्तकत्वमिति वाच्यम्। दीपादौ अर्थप्रकाशकत्वेनैव निवर्तकत्वस्य दृष्टत्वेनोक्तरूपेण निवर्तकत्वस्यादृष्टत्वेन दृष्टादृष्टकल्पनापातात्। उक्तरूपापेक्षयाऽर्थप्रकाशकत्वस्यैव लघुत्वाच्च। परोक्षस्थले वृत्युपारूढचित्त्वाभावेन न जानामीति व्यवहारापाताच्च ॥ त्वन्मत इति॥ न च परोक्षवृत्तेर्विषयपर्यन्तत्वाभावेन न विषयगताज्ञाननिवर्तकत्वं सुखादेर्ज्ञातैकसत्त्वादेवाज्ञानादर्शनमित्यन्वयव्यतिरेकयोरन्यथासिद्धिरिति वाच्यम्। परोक्षवृत्तेर्विषयाकारत्वरूप-विषयपर्यन्तत्वाभावे ततस्तद्व्यवहारो न स्यात्। साक्षिस्फुरणस्य चाज्ञानविरोधित्वाभावे ज्ञायमानसुखादौ अज्ञानावश्यंभावापातादिति नान्वयव्यतिरेकयोरन्यथासिद्धिः। तथाच स्फुरणस्यैवाज्ञानविरोधित्वमिति भावः ॥ स्वसत्तायामिति॥ न च पूर्णत्वादिनाऽप्रकाशविधुरत्वाभावेऽपि अध्यासाधिष्ठानतयाऽप्रकाशविधुरत्वसम्भवात् तेन स्वप्रकाशत्वसाधनमिति वाच्यम्। पूर्णत्वस्य चिन्मात्रत्वे तेन रूपेणापि प्रकाशेनाप्रकाशासम्भवः। तदतिरिक्तत्वेतु नाज्ञानविषयत्वम्। चैतन्यातिरिक्तत्वेन जडत्वात् ॥ वृत्तिचितोरिति॥ ननु साक्षिणि यदज्ञानविरोधित्वमनुभूयते तन्नाज्ञाननिवर्तकत्वनिबन्धनम्। किन्तु स्वविषये इच्छादौ यावत्सत्त्वं प्रकाशादज्ञानाप्रसक्तिनिबन्धनम्। वृत्तेश्च स्वविषये प्रसक्ताज्ञाननिवृत्तिनिबन्धनमेवेत्युभयोर्वैषम्योक्तिर्युक्तैवेति चेन्न। त्वया प्रकाशमानेऽप्यज्ञानस्वीकारेणेच्छादेः प्रकाशेऽपि अज्ञानप्रसक्तिसम्भवेन प्रसक्ताज्ञाननिवृत्तिनिबन्धनस्येवा-ज्ञानविरोधित्वस्योभयत्र वक्तव्यत्वे वैषम्यासम्भवात्। तन्निवर्तकत्वापेक्षया तत्प्रसक्त्यभावसम्पादकस्याति-विरोधित्वाच्च। उभयथापि विरोधित्वे साक्षिणोऽपि विरोधित्वानपायाच्च ॥ अन्यथेति॥ यदि साक्षिणो नाज्ञानविरोधित्वं तदेत्यर्थः। न च चैत्रस्य स्वेच्छादौ अज्ञानाप्रसक्तेरेव नाज्ञानव्यवहारः मैत्रस्य तु प्रमात्रज्ञानादिति वाच्यम्। प्रसक्त्यभावेऽपि साक्षिप्रकाशविरोधस्यैव तन्त्रत्वात्। अन्यथा प्रसक्त्यनिवारणात्। प्रमात्रज्ञानाति-रिक्ताज्ञानस्य प्रागेव दूषितत्वाच्च। उक्तमर्थं कारिकया सङ्गृह्णाति। एवञ्चेति ॥ तर्हीति॥ तथाचात्मविषय-मात्माश्रितमज्ञानमिति गतम् अन्यथा इच्छादावपि तथा स्यादिति भावः ॥ प्रकाशरूप इति॥ एतच्चोपलक्षणम्। इच्छां जानामीतिवत् आत्मानं जानामीति साक्षिवेद्यत्वस्यानुभवेनेच्छादाविवात्मन्यपि अज्ञानप्रसक्तिरयुक्तैव। न च स्वविषयत्वं विरुद्धमिति वाच्यम्। अध्ययनविधिवदुपपत्तेरिति भावः ॥ अन्यथेति॥ यदि प्रकाशरूपेप्यज्ञानप्रसक्तिरित्यर्थः। न चेष्टापत्तिः वृत्तेरपेक्षणात् प्रकाशान्तरापेक्षायां जडत्वस्य तन्त्रत्वादिति वाच्यम्। अज्ञाननिवृत्यर्थं वृत्यपेक्षत्वे जडत्वस्यैव तन्त्रत्वेनात्मनस्तदपेक्षायोगात्। प्रकाशमानेऽज्ञानं च प्रागेव दूषितम्। ॥ न चेति॥ तथाच न सुखादावज्ञानम्। वृत्तिप्रतिबिम्बितसाक्षिवेद्यत्वात्। साक्षिणि तु सम्भवत्यज्ञानम्। केवलसाक्षिवेद्यत्वादिति भावः ॥ असतः साधकत्व इति॥ अनवस्थादिनेत्यर्थः ॥ अन्यथेति॥ तथाचात्मापि नाज्ञानविषयः स्यादिति भावः ॥ एतेनेति॥ साक्षिणोऽप्यज्ञानविरोधित्वानुभवादिनेत्यर्थः। एतेनैवेति ॥ उक्तादेवेत्यर्थः॥ न च ज्ञानाज्ञानयोः स्वविषयावच्छिन्नयोरेवानुभवात् कथमेतदिति वाच्यम्। अवच्छेदकाप्रकाशेऽपि अवच्छिन्नप्रकाशस्योपपादितत्वात्। अत एव तथैव दृष्टान्त उक्तोऽन्धकारावृतवदिति॥ अभ्युपगमवादेनाह ॥ अस्त्वन्येति॥ नन्वयं घट इत्यादिवृत्तेः घटादिविषयत्वेन कथमात्मविषयत्वमित्यत आह

(कण्टकोद्धारः)

॥ विवरण इति तथा चाहंवृत्तिरात्मविषयैवेति तथाऽऽत्माज्ञाननिवृत्तिः स्यादेवेति भावः। ननु प्रमाणजन्यात्मविषयिणी वृत्तिरज्ञानविरोधिनी। अहं वृत्तिस्त्वविद्यावृत्तिः। न चासौ प्रमाणजन्येति कथं तथा अज्ञाननिवृत्तिरापाद्यते इत्यत आह ॥ घट इतीति॥ ॥ अन्यथेति॥ घटमात्रविषयत्वे इत्यर्थः। नन्वयं घट इत्यादिवृत्त्या यावन्ति ज्ञानानि तावन्ति तावन्त्यज्ञानानीति मते अज्ञानविशेषस्य निवृत्तिः। एकाज्ञानपक्षे तु अवस्थाविशेषस्य प्रपञ्च निदानं मूलाज्ञानमखण्डार्थनिष्ठवेदान्तजन्यवृत्त्यैव निवर्तते। फलबलेन तथा कल्पनादिति चेन्न। अस्याः प्रक्रियाया अप्रामाणिकत्वेन प्रेक्षावद्भिरनुपादेयत्वात्। ज्ञानस्य समानाधिकरण-समानविषयकाज्ञानविवर्तकत्वस्वभावत्वेनास्यानिवृत्तिरस्य निवृत्तिरिति विनिगन्तुमशक्यत्वाच्च। तादृशाज्ञाना-विरोधित्वे चैकस्याप्यनिवृत्तिप्रसङ्गात्। यावन्तीति पक्षे एकनिवृत्तावप्यपरप्रतिबन्धेन सदाऽप्रकाशापाताच्च। अवस्थाविशेषस्याज्ञानत्वे यावन्तीति मतप्रवेशः। अन्यथा ज्ञानान्निवृत्त्ययोगः। फलस्य तु भेदस्य सत्यत्वेनैवोपपत्तेश्च। विस्तृतं चैतदिति दिक् ॥ अनात्मेति॥ चिन्मात्राविषयेत्यर्थः। ननु यथा घटाकाशज्ञानेऽपि महाकाशाज्ञानं तथाऽवच्छिन्नाज्ञानेऽपि चैतन्यज्ञानमित्यतो घटावच्छिन्न आकाशः आकाश एव वा आकाशांशो वा? आद्य आह ॥ आकाशस्यैव चेति॥ तथा च तत्र नाकाशादर्शनमनुभवविरोधात्। अन्त्येत्विष्टापत्तिमाह ॥ आकाशांशस्येति॥ ॥ अतिप्रसङ्गादिति॥ इदमिति ज्ञानेनापि नेदं रजतमिति भ्रमनिवृत्तिप्रसङ्ग इत्यर्थः ॥ श्रवणादीति॥ तस्य प्रागपि सत्त्वादिति भावः ॥ सत्यत्वेति॥ भ्रमकालीनापरोक्षज्ञानाधिकविषयज्ञाननिवर्त्यस्यैव मिथ्यात्वादिति भावः ॥ उक्तेति॥ प्रकाशमानेऽज्ञानासम्भवादित्युक्तदोषादित्यर्थः। निर्विषयत्वप्रतिपादनमुपसंहरति ॥ तस्मादिति॥ उक्तेर्थे स्वाचार्यसम्मतिमाह ॥ तदुक्तमिति॥ वक्ष्यमाणोपोद्घाताय चरमप्रकृतमुपसंहरति ॥ तस्मादिति॥ इति अविद्याविषयभङ्गः।

## न्यायामृतप्रकाशः

चिन्मात्रमेवेति। ''आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवले''त्युक्तेरिति भावः। ननु तस्याज्ञान-कल्पितत्वेनान्योन्याश्रयान्नाज्ञानाश्रयत्वमिति शंकाभासं निराकरोति ॥ तस्येति॥ नन्वज्ञानस्यावरणत्वेनावरण-भूताज्ञानकृत्यस्य चिन्मात्रेऽभावेन किमर्थमज्ञानस्य तद्विषयत्वमंगीकार्यमित्यत आह ॥ स्वप्रकाशेति॥ ॥ आवरणकृत्येति॥ आव्रियतेऽनेनेति करणव्युत्पत्त्याऽज्ञानमावरणशब्देन ग्राह्यम्। तत्कृत्यं आवृतिः। तथा चाज्ञानरूपावरणस्य यत्कृत्यं प्राप्तप्रकाशप्रतिबंधरूपावृतिस्तत्सद्भावादित्यर्थः। ननु जीवो जडं वाऽज्ञानविषयः किं न स्यादित्यत आह ॥ न त्वन्यदिति॥ तथा चाज्ञानसिद्धौ तत्कल्पितजीवसिद्धिः तत्सिद्धौ च तद्विषयकाज्ञानसिद्धिरित्यन्योन्याश्रयः स्यादिति भावः। जडविषयकाज्ञानानंगीकार एव हेत्वंतरमाह ॥ जडत्वेनेति॥ अप्रकाशस्वरूपत्वेनेत्यर्थः ॥ आवरणकृत्येति॥ अज्ञानरूपावरणस्य यत्कृत्यं प्राप्तप्रकाशप्रतिबंधरूपा-वृतिस्तदभावाच्चेत्यर्थः। सिद्धांतं प्रतिजानीते ॥ अत्र ब्रूम इति॥ आवरणकृत्यं आवरणस्य कृत्यं आवृतिरिति यावत्। आवरणकृत्यरूपावृतिः किं सिद्धप्रकाशलोपरूपा वा असिद्धप्रकाशानुत्पत्तिर्वा नोभयमपीत्याह ॥ न तावदिति॥ अंधकारेण क्रियमाणा आवृतिः आलोकरूपो यस्सिद्धो घटप्रकाशस्तल्लोपरूपा, असिद्ध उत्तरत्र जायमानो यः प्रकाशस्तदनुत्पत्तिरूपा च दृष्टास्तीति ज्ञातव्यम्। कुतो नोभयमपीत्यत आह ॥ स्वरूपेति॥

(प्रकाशः)

नित्यसिद्धत्वान्न सिद्धप्रकाशलोपो युक्तः नित्यसिद्धत्वादेवासिद्धप्रकाश एव नास्तीत्युक्तरूपावृतिद्वयं चिन्मात्रे न संभवतीत्यर्थः। एतदन्यदेव किंचिदावृतिशब्दार्थ इति तत्राह ॥एतदन्यस्येति॥ सिद्धप्रकाशलोपासिद्धप्रकाशानुत्पत्तिव्यतिरिक्तस्येत्यर्थः। नन्वज्ञानेन क्रियमाणावृतिर्नाम सतोपि ब्रह्मरूपप्रकाशस्य विषयासंबंध एवेत्याशंक्य निराकरोति ॥नापीति॥ विषयासंबंध इत्यत्र विषयशब्देन घटादिकं वा चैतन्यरूपं वा? आद्ये आह ॥ज्ञानस्येति॥ तथा च ज्ञानस्य विषयसंबंधाभावे विषयसंबंधस्वभावत्वरूपज्ञानस्वरूपस्यैव हानिः स्यादित्यर्थः। यथोक्तं "विषयवर्जितः प्रकाश एव न भवति। घटवदिति"। द्वितीये त्वाह ॥स्वयमिति॥ ज्ञानातिरिक्तविषयसद्भावे हि तस्य विषयसंबंधापेक्षा। न चैवं चैतन्यस्य। स्वयमेव ज्ञानिरूपत्वेन स्वसंबंधानपेक्षत्वादित्यर्थः। अतस्सतोपि प्रकाशस्य घटादिचैतन्यरूपविषयासंबंधरूपा आवृतिरप्ययुक्तेति भावः ॥नापीति॥ अज्ञाने सति प्राकट्यापरपर्यायज्ञाततारूपज्ञानकार्यं न जायते। अतो ज्ञाततारूपज्ञानकार्यप्रतिबंध एव अज्ञानसाध्या आवृतिरित्यर्थः ॥चैतन्येति॥ अभिव्यक्तचित्संबंध एव त्वन्मते ज्ञातता। एवं च चैतन्यातिरिक्तस्य प्राकट्यस्याभावाच्चैतन्यस्य सदा स्वप्रकाशत्वेन ज्ञाततया एव सत्वान्न तदाख्यकार्यप्रतिबंधरूपा आवृतिर्युक्तेत्यर्थः ॥नास्तीति॥ यथा नास्तीत्यादिव्यवहार एवाज्ञानसाध्या आवृतिर्घटादौ दृष्टा एवं चैतन्यं नास्तीत्यादिव्यवहार एव चैतन्येप्यज्ञानसाध्या आवृतिरित्यर्थः। अभिज्ञा ज्ञानम् ॥आवरणसाध्यत्वेनेति॥ आवरणशब्दो भावसाधनः। तथा चावृतिसाध्यत्वेनेत्यर्थः। अयमभिप्रायः। प्रकाशमाने ब्रह्मणि नास्तीत्यादिज्ञानं भ्रांतिरेव। तथा च लोकेऽधिष्ठानावृत्यनंतरं भ्रांतिर्दृष्टा। प्रकृते च ब्रह्मण्यज्ञानावृते सति पश्चात्तत्र नास्तीत्यादिभ्रांतिर्वाच्या। ततश्च भ्रांतेरावृतिसाध्यत्वेन आवृतित्वायोगादिति। अत एवेत्युक्तं विशदयति ॥तस्येति॥ ॥आवरणत्वेति॥ आवृतित्वेत्यर्थः। तथा च प्रकाशमाने ब्रह्मणि नास्तीत्यादिव्यवहारस्याज्ञानकार्यावृतिसाध्यभ्रांतिसाध्यत्वेन भ्रांतिहेतुभूतावृतित्वायोगादिति भावः ॥सुषुप्ताविति॥ त्वन्मते सुषुप्तावपि चैतन्यमावृतमित्यंगीकृतम्। तथा चात्र सुषुप्तौ नास्तीत्यादिव्यवहाराभावेनावृत्यभावापाताच्चेत्यर्थः ॥नापीति॥ चैतन्यमस्तीत्यादिव्यवहाराभावरूपावृतिश्च सुषुप्तावप्यस्तीत्यर्थः। अत्रापि व्यवहारशब्देनाऽभिज्ञा वाभिलपनं वा। आद्येपि स्वरूपाभिज्ञा वा वृत्तिरूपा वा। नाद्य इत्याह ॥व्यवहारस्येति॥ अभिज्ञात्वे स्वरूपाभिज्ञात्वे ॥इदानीमपीति॥ चैतन्यमस्ति प्रकाशत इत्यादिस्वरूपज्ञानस्येदानीमपि सत्वेन तदभावरूपा आवृतिरिदानीमपि न स्यादित्यर्थः। नेतर इत्याह ॥वृत्तेश्चेति॥ तथा चास्तीत्याद्यंतःकरणवृत्त्यभावस्याविद्यानिवृत्तिरूपमोक्षे सत्वादज्ञानावृत्त्यापातादित्यर्थः। आवरणकृत्यभूतामावृतिं प्रकारांतरेणाशंक्य निराकरोति ॥नापीति॥ ॥तयोरपीति॥ योग्यत्वायोग्यत्वधर्मयोर्वास्तवयोर्ब्रह्मण्यभावेनारोपितत्वमेव वाच्यम्। आरोपश्चावृतिसाध्यः। तथाचैतादृशधर्मद्वयस्यारोपितत्वेनारोपस्यावरणमावृतिं विनाऽयोगेन तयोरावृतित्वायोगादित्यर्थः। यत्राद्वितीयत्वादिविशिष्टे संशयादिकमावरणकल्पकमस्ति तत्र त्वया नावरणं कल्प्यते। यत्र तु चिन्मात्रे आवरणं कल्प्यते तत्र च संशयादिकमावरणकल्पकं नास्तीत्याह ॥अद्वितीयत्वादीति॥ अस्त्यत्र संप्रदायः। सर्वेषां मते योग्यत्वं फलोपधानेनैव मंतव्यम्। एवं च प्रकृते नास्तीत्याद्यपरोक्षव्यवहारेण फलोपधानेन नास्तीत्याद्यपरोक्षव्यवहारयोग्यत्वं कल्पनीयम्। अत्राद्वितीयत्वादिविशिष्टे योग्यत्वरूपावृतिकल्पकोक्तफलोपधानव्यवहारेपि तत्कल्प्ययोग्यत्वायोग्यत्वादिरूपावृतिर्न कल्प्यत इत्यर्थः ॥अवस्थेति॥ जाग्रदादीत्यर्थः ॥तदभावेनेति॥ योग्यत्वायोग्यत्वरूपावृतिकल्पकोक्तफलोपधान-

(प्रकाशः)

रूपव्यवहाराभावेनेत्यर्थः। तथात्वे अधिष्ठानत्वादिकमेव न स्यादित्यर्थः। तत्कल्प्ययोः = उक्तफलोपधानरूपव्यवहारकल्प्ययोः। उक्तायोग्यत्वादिरूपावृतेर्मोक्षकाले यथाऽभावस्तथेदानीमपि तदभावोंगीकार्य एव। अन्यथेदानीमपि नास्तीत्यादिव्यवहारयोग्यत्वास्तीत्यादिव्यवहारायोग्यत्वरूपावृत्यंगीकारे इदानीमपि त्वया ब्रह्मणः अस्ति प्रकाशत इत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वस्यांगीकृतत्वेन तद्विरोधः स्यादित्याह ॥ तयोरपीति॥ योग्यत्वायोग्यत्वरूपावृत्योरित्यर्थः ॥ विरुद्धत्वेनेति॥ अयोग्यत्वरूपावृतेरभावरूपतया स्वप्रकाशत्वेन विरोधः योग्यत्वरूपावृतेस्तु तदभावव्याप्यतया स्वप्रकाशत्वेन विरोध इति द्रष्टव्यम्। ननु स्वप्रकाशत्वलक्षणेन अस्तीत्यादिव्यवहारायोग्यत्वरूपांवृत्यंगीकारे न विरोधः। अज्ञानावच्छेदकत्वं यदास्ति ब्रह्मणस्तदाऽज्ञानावच्छेदेनास्तीत्याद्यपरोक्षव्यवहारयोग्यत्वरूपं स्वप्रकाशत्वमस्ति। स्वरूपापेक्षया तु अस्तीत्यादिव्यवहारायोग्यत्वरूपावृतिरस्तीत्यंगीकारादित्याशंक्य निराकरोति ॥न चेति॥ ॥अज्ञानावच्छिन्नत्वेनेति॥ अज्ञानमवच्छिन्नं यस्यावच्छेदकस्य तदज्ञानावच्छिन्नम्। तत्वेन अज्ञानावच्छेदकत्वेनेत्यर्थः। यद्वाऽज्ञानावच्छिन्नत्वेनाऽज्ञानावच्छेदेनेत्यर्थः। अत एवोत्तरत्र अज्ञानावच्छेदेनेत्येव व्यवहारः ॥स्वरूपस्येति॥ यत्स्वरूपे योग्यत्वरूपावृतिरंगीकृता तस्यास्वप्रकाशत्वापातात् प्रत्युताज्ञानावच्छेदकत्वविशिष्ट एव तदापातादित्यर्थः। किं च ब्रह्मणोऽज्ञानावच्छेदकत्वमंगीकृत्य तदवच्छेदेनापरोक्षव्यवहारयोग्यत्वेन स्वप्रकाशत्वांगीकारे नित्यातींद्रियस्यापि स्वप्रकाशत्वापातात् तस्य नित्यातींद्रियत्वेनैव स्वरूपेणास्तीत्याद्यपरोक्षव्यवहारायोग्यत्वेपि धर्मादिकं न जानामीति तद्विषयकाज्ञानस्य साक्षिरूपत्वेनापरोक्षतया तदवच्छेदकतया तस्याप्यपरोक्षव्यवहारयोग्यत्वादित्याह ॥नित्यातींद्रियस्यापीति॥

एवमज्ञानकृत्यभूतावृत्यभावमुक्त्वाऽज्ञानस्यावरणत्वकथनमप्ययुक्तमित्याह ॥इच्छादीति॥ अयं भावः। लोके तदेवावरकं यत्स्वाववच्छिन्नप्रकाशविरोधि यथा नेत्रपटलादि। यथा इष्टमितीच्छावच्छिन्नवस्तुप्रकाशविरोधित्वं इच्छायां नास्ति। विशेष्यस्य प्रकाशमानत्वात्। अत इच्छाया नावरकत्वमित्यंगीकृतम्। एवमज्ञानावच्छिन्नस्य प्रकाशे विशेष्यस्यापि ब्रह्मणः प्रकाशान्न तदज्ञानं स्वावच्छिन्नप्रकाशविरोधीति न तदावरकम्। अन्यथा इच्छाया अप्यावरकत्वापातादिति। किंच सुखादीनां चिन्मात्रप्रकाश्यत्वं तावदंगीकृतम्। अन्यथा तत्राज्ञानप्रसंगात्। सुखादिप्रकाशकं च चिन्मात्रं अज्ञानावच्छिन्नमेव जातम्। तथा च सुखादिप्रकाशरूपस्य ब्रह्मणोऽज्ञानावच्छिन्नत्वादिदानीं सुखादिप्रकाशो नास्तीत्युक्तं स्यात्। तथाच सुखादिकं न प्रकाशत इत्यनुभवः स्यात्। न चैवमस्ति। अतः सुखादिकं प्रकाशत इत्यनुभवार्थं सुखादिप्रकाशरूपस्य ब्रह्मणोऽज्ञानावच्छेदेन प्रकाशोंगीकार्यः। तथा चाज्ञानावच्छेदेन ब्रह्मणोपरोक्षव्यवहारयोग्यत्वमिति विरोधपरिहारायोगेन व्यवहारयोग्यत्वरूपस्वप्रकाशत्वमपि व्यवहारायोग्यत्वरूपावृतिविरुद्धमेवेत्याह ॥सुखादेरिति॥ ॥एतेनेति॥ अपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वेन सह व्यवहारायोग्यत्वस्य विरुद्धत्वेनेत्यर्थः। अपरोक्षव्यवहारायोग्यत्वमात्रस्यैवावृतित्वे ब्रह्मणोप्यज्ञानावच्छेदेनापरोक्षव्यवहारयोग्यत्वेनेदानीमावृत्यभावापातात्। अतोऽज्ञानाविशेषितेति व्यवहारो विशेषितः। तथा च स्वरूपमात्रेणापरोक्षव्यवहारायोग्यत्वमेवावरणस्यावरकस्याज्ञानस्य कृत्यं आवृतिरित्यर्थः।

(प्रकाशः)

नन्वावृतेर्न स्वप्रकाशत्वेन विरोधः। अस्तीत्याद्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वस्य सत्यत्वात्। अपरोक्षव्यवहारायोग्यत्वरूपाप्रकाशस्यावृत्याख्यस्यारोपितत्वेन मिथ्यात्वात्। नह्यारोपितरूपेण वास्तवनीरूपत्वस्य विरोधोस्तीत्याशंक्य निराकरोति ॥न चोक्तेति॥ अस्तीत्यपरोक्षव्यवहारः उक्तशब्दार्थः। अप्रकाशः आवृतिः ॥सुखादीति॥ सुखादिप्रकाशरूपे साक्षिचैतन्येऽप्रकाशारोपोपि न संभवति येन सत्यत्वारोपितत्वाभ्यां विरोधपरिहारः स्यात्। कुत इति चेदुच्यते। ज्ञानमेव हि प्रमेयसाधकम्। तथा च यथा शुक्तावशुक्त्यारोपो भवति। कुतः ? इयं न शुक्तिरित्यनुभवादित्युच्यते। एवं सुखादिस्फुरणरूपे चैतन्येऽप्रकाशारोपांगीकारे तत्साधकस्य सुखादिस्फुरणं न प्रकाशत इत्यनुभवस्यापातात्। न चैवमारोपसाधकोनुभवोस्तीत्यर्थः। किं चारोपितेन व्यवहारायोग्यत्वरूपाप्रकाशाख्यावरणेन तत्कार्यव्यवहाराद्यभावो न संभवति। वह्नौ गुंजापुंजारोपेपि तस्य स्पर्शे सति वह्निकार्यमेव दाहादिकं दृश्यते। न गुंजापुंजकार्यम्। तथा प्रकृते प्रकाशरूपे ब्रह्मणि अयोग्यत्वरूपाप्रकाशारोपेपि प्रकाशकार्यं यत् आवरणनिवृत्तिद्वारा नास्तीत्यादिभ्रांत्याद्यभावरूपं तदेव स्यादित्याह ॥वह्नाविति॥ किं च सामान्यत आरोपितानारोपितयोर्विरोधो नास्ति। वास्तवशुक्तित्वमिथ्याशुक्तित्वयोर्विरोधाभावदर्शनात् वास्तवत्वेन सतोऽधिष्ठानप्रकाशस्य तु तदधिष्ठानकभ्रममात्रेण विरोधोस्ति। शुक्तित्वेन रूपेण सम्यक् शुक्तिप्रकाशे सति तदधिष्ठानकभ्रममात्राभावदर्शनात्। अतोऽधिष्ठानत्वेन प्रकाशमानेऽप्रकाशारोप एव न संभवतीति सत्यत्वमिथ्यात्वाभ्यामविरोधकल्पनमयुक्तमित्याह ॥सत इति॥ ॥अन्यथेति॥ अधिष्ठानप्रकाशेपि यद्यारोपोंगीक्रियते तर्ह्यारोपनिवर्तकांतराभावात् तन्निवृत्तिरेव न स्यादित्यर्थः। ननु स्वप्रकाशत्वावरणयोरेकत्र सामानाधिकरण्याभावेन सहानवस्थानरूपो विरोधो वाच्यः। न चासौ संभवति। तथाहि– "अपरोक्षव्यवहारयोग्यत्वम् अपरोक्षव्यवहारायोग्यता भावः। अयोग्यताभावश्च योग्यतात्यन्ताभावानधिकरणत्वम्। आवरणं च उक्तयोग्यताभावः। अभावश्चात्र प्रागभावो विवक्षितः।" (इति अत्र पाठेन भाव्यमिति भाति) तथा हि अपरोक्षव्यवहारयोग्यत्वं अयोग्यत्वं योग्यताभावः अभावश्च प्रागभावानधिकरणत्वं अपरोक्षव्यवहारा-योग्यत्वं चावरणम् अयोग्यत्वं योग्यताभावः अभावश्च प्रागभावो विवक्षितः तदत्यंताभावानधिकरणत्व तत्प्रागभावयोश्च न विरोधः। एकस्मिन्नेव मृत्पिंडे घटात्यंताभावानधिकरणत्व तत्प्रागभावयोश्च सहावस्थानदर्शनात्। एवं च तदत्यंताभावानधिकरणस्यैव तत्प्रागभावाधिकरणत्वनियमात् अपरोक्षव्यवहारयोग्यतात्यंताभावानधिकरणत्वरूपस्वप्रकाशत्वस्य अपरोक्षव्यवहारयोग्यतारूपप्रकाशप्रागभाव-रूपावरणस्य च ब्रह्मणि समावेशसंभवात्को विरोध इत्याशंक्य निराकरोति ॥न चेति॥ अपरोक्षव्यवहारयोग्यत्वस्य स्वरूपप्रयुक्तस्यानादित्वेन तत्प्रागभावायोगादावरणस्यापरोक्षव्यवहारयोग्यताप्रागभावरूपतामंगीकृत्याविरोधकथन-मयुक्तमित्याह ॥स्वरूपेति॥ बलात्कारेचाह ॥इदानीमिति॥ योग्यतात्यंताभावानधिकरणत्वेन स्वप्रकाशे ब्रह्मणि योग्यताप्रागभावमादायाप्रकाशरूपावरणोक्तौ वयमपि वदामः सामान्यतोपरोक्षव्यवहारयोग्यताभाव एवावरणम् अभावश्च ध्वंसोपि विवक्षितः एवं चापरोक्षव्यवहारायोग्यताध्वंसस्याप्यावरणत्वात्तस्य च निरुक्तस्वप्रकाशत्वेना-विरोधात्। घटात्यंताभावानधिकरणस्यैव मृत्पिंडस्य घटप्रागभावाधिकरणत्ववत् तद्ध्वंसाधिकरणत्वदर्शनात्। तथा

(प्रकाश:)

चेदानीं योग्यतारूपप्रकाशप्रागभावेनाप्रकाशरूपावरणसद्भाव:। मोक्षे तु योग्यताध्वंसमादाय तदाप्यप्रकाश: स्यात्। आवरणं स्यादिति यावदित्यर्थ:। ननु प्रागभावदशायामेवाप्रकाशव्यवहारो न तु तद्ध्वंसदशायामित्यत आह ॥भवति हीति॥ पूर्वं दीपप्रागभावदशायाम्। पश्चात् दीपध्वंसदशायाम्। संगृह्णाति ॥एवं चेति॥ स्वप्रभत्वेन स्वप्रकाशत्वेन। व्यवहारार्हे व्यवहारयोग्ये। अविद्यावरणं अविद्याकृत्यरूपा आवृति:। चैतन्यं आवृताभिमतकालेपि प्रकाशते स्वप्रकाशत्वाद्दीपवत्। तथा च प्रकाशरूपचैतन्यस्यावृतत्वकथनं व्यर्थमित्याशयेनाह ॥किंचेति॥ ॥दीपेति॥ यथा दीपावरकं घटादि दीपस्य घटादिविषयांतरसंबंधप्रतिबंधकं अन्यं प्रति दीपकर्मकज्ञानजननप्रतिबंधकमेव दृष्टं न तु दीपं प्रत्येव दीपगतप्रकाशस्यापि प्रतिबंधकम्। घटावृतस्यापि दीपस्य घटांत:प्रकाशमानत्वात्। अन्यथा घटस्य दीपस्वरूपप्रकाशं प्रत्यपि प्रतिबंधकत्वमंगीकृत्य घटावृतोपि दीपो न प्रकाशत इत्यंगीकारे दीपस्वरूपेपि तमस्संबंधापत्ते:। एवं प्रकृतेपीति न प्रकाशरूपचैतन्यस्वरूपे आवरणमिति भाव:। ननु घटादेर्दीपं प्रत्येव दीपप्रकाशविरोधित्वाभावेपि अन्यं प्रति तत्प्रकाशविरोधित्वं तावदस्त्येव। एवमज्ञानस्य चैतन्यं प्रत्येव चैतन्यप्रकाशविरोधित्वाभावेपि जीवचैतन्यं प्रति शुद्धचैतन्याच्छादकत्वं युक्तम्। न च तयोश्चैतन्ययोरभेदात्स्वं प्रत्येव च स्वाच्छादकत्वं प्राप्तं तच्चायुक्तमिति वाच्यं तयो: कल्पितभेदसद्भावेनोपपत्तेरित्याशयेन शंकते ॥नन्विति॥ ॥आवरणं विनेति॥ आवृतिं विनेत्यर्थ:। चैतन्यस्याव्रियमाणत्वे सिद्धे आवरणसिद्धि: तत्सिद्धौ च तत्कल्पितभेदं जीवचैतन्यं प्रति चिन्मात्रस्याव्रियमाणत्वसिद्धिरित्यन्योन्याश्रय इत्यर्थ:। किंच श्रवणादिसाध्यतत्वसाक्षात्कारेण यो मोक्षे भावी चिन्मात्रस्यैव चिन्मात्रं प्रति प्रकाश: परमपुरुषार्थरूपस्तदभाव एव संसारदशायां आवरकाज्ञानेन साधनीयो न तु कल्पितभेदं जीवं प्रति तदप्रकाश:। न हि मुक्तौ जीवचैतन्यं प्रति शुद्धचैतन्यप्रकाशोस्ति तस्योपहितस्य तत्वज्ञाननिवर्त्यत्वेनोक्तपुरुषार्थभाक्त्वाभावादित्याह ॥यो मोक्ष इति॥ चैतन्यमावृताभिमतकालेपि प्रकाशते स्वप्रकाशत्वाद्दीपवदित्यनुमाने स्वविषयकत्वमुपाधिरित्याशंक्य निराकराति ॥न चेति॥ ॥न तथेति॥ कर्तृकर्मविरोधादिति भाव: ।चैतन्ये स्वविषयकत्वानंगीकारे मोक्षे चैतन्यप्रकाश एव न स्यात्। चिन्मात्रेण स्वेनैव हि प्रकाशो वाच्य:। स चायुक्त: कर्तृकर्मविरोधात्। किंच स्वप्रकाशत्वेन स्वविषयकप्रकाशप्रसक्तौ सत्यां तत्प्रतिबंधकत्वेनाज्ञानरूपमावरणं कल्प्यते। चैतन्यस्य स्वविषयकत्वानंगीकारे स्वप्रकाशत्वप्रयुक्त-प्रकाशप्रसक्तेरेव वक्तुमशक्यत्वेनावरकाज्ञानकल्पनावैयर्थ्यात्। अत: स्वविषयकत्वे चैतन्यस्यांगीकार्ये साधनव्याप-कत्वान्नायमुपाधिरित्याह ॥मोक्षेपीत्यादिना॥ ननूक्तरीत्याऽवरणकृत्यासंभवेनाज्ञानासंभवो न युक्त:। तस्या न जानामीति साक्षिसिद्धत्वात्। न च प्रकाशमाने चैतन्येऽज्ञानायोग इति वाच्यं। तस्य तत्स्फोरकत्वेन तदविरोधित्वात्। न च प्रकाशमानेऽज्ञानमदृष्टचरमिति वाच्यं। त्वदुक्तमर्थं न जानामीति प्रकाशमान एवार्थेऽज्ञानदर्शनात्। कथमिति चेदत्र हि अज्ञानावच्छेदकस्यार्थस्यज्ञानाभावे तदवच्छिन्नाज्ञानज्ञानायोगात् अर्थावच्छिन्नाज्ञानज्ञाने वाच्येऽर्थस्यापि तदवच्छेदकतयज्ञानेपि तत्रार्थेऽज्ञानमनुभूयत एव। न चाज्ञानावच्छेदकस्याज्ञानेपि तदवच्छिन्नाज्ञानज्ञानं संभवत्येव। कथमिति चेत् सामान्येनार्थत्वादिना ज्ञातेर्थे विशेषेणाज्ञानमंगीक्रियते। तथा

(प्रकाशः)

च येन रूपेणार्थः प्रकाशते तेनैव रूपेण तद्विषयकाज्ञानानंगीकारात्। तथा च प्रकाशमाने कथमज्ञानमिति वाच्यम्। सामान्यतोर्थस्य ज्ञानानंगीकारे तदवच्छिन्नाज्ञानज्ञानायोगात् सामान्यतोर्थस्य ज्ञानेंगीकार्ये सामान्यस्य ज्ञातत्वादेव ज्ञानानवच्छेदकत्वेनाज्ञानावच्छेदकस्याप्यर्थे सामान्यस्य विशेषत एव ज्ञानमङ्गीकार्यम्। न च विशेषस्यापि ज्ञातत्वादेव नाज्ञानावच्छेदकत्वं विरोधादिति वाच्यं। विशेषज्ञानस्य साक्षिरूपतांगीकारात्। तस्य चाज्ञानाविरोधित्वात् अतः प्रकाशमान एवार्थगते विशेषेऽज्ञानस्य दर्शनेन प्रकृतेपि प्रकाशमान एव चैतन्येऽज्ञानमंगीकार्यं चैतन्यस्याज्ञानाविरोधित्वात्। न च चैतन्यस्य अज्ञानाविरोधित्वेऽज्ञाननिवृत्तिरेव न स्यात् निवर्तकांतराभावादिति वाच्यं। अविद्यानिवृत्तेरात्ममात्रविषयकनिष्प्रकारकचरमवृत्त्याख्यवृत्तिविशेषादेवोपपत्तेः। ननु वृत्तिचितोरुभयोरपि आत्ममात्रविषयकत्वाविशेषात् वृत्तेरेवाज्ञानविरोधित्वं न चैतन्यस्येति विशेषः कथं एकविषयकत्वाविशेषेपि एकस्य विरोधित्वं अपरस्याविरोधित्वमित्यस्य विशेषस्य लोकेऽदर्शनादिति चेन्न। सौरालोकस्यायं घट इति ज्ञानस्य च घटविषयकत्वाविशेषेपि सौरालोकस्यैवांधकारनिवर्तकत्वं न घटज्ञानस्य घटज्ञाने सत्यप्यंधकारानिवृत्तेः। यथा वा सौरप्रकाशस्य बहिर्निःसृतचक्षुःकिरणरूपचाक्षुषप्रकाशस्य च घटविषयकत्वाविशेषेपि सौरप्रकाशस्यैवांधकारनिवर्तकत्वं न चाक्षुषप्रकाशस्य चाक्षुषप्रकाशे सत्यपि रात्रा वंधकारानिवृत्तेर्दृष्टत्वात्। नन्वेकविषयकज्ञानयोर्विरोधित्वाविरोधित्वे न दृष्टे इत्युच्यते सौरालोकस्तु न ज्ञानं अतश्च दृष्टांतो न युक्त इति चेन्न। शंखगतश्वैत्यविषयकप्रत्यक्षस्य पैत्यभ्रमविरोधित्वेपि श्वैत्यानुमितेस्तद-दर्शनादेकविषयकत्वेपि वृत्तिचितोरज्ञानविरोधाविरोधोपपत्तेः। तथा च प्रकाशमाने चैतन्ये आवरणकृत्याभावेपि अनुभवसिद्धत्वात्तत्राज्ञानमविरुद्धमित्यस्मत्सिद्धांतरहस्यमित्याशंकते ॥अथ मतमित्यादिना रहस्यमित्यंतेन॥ सिद्धांताभिधानं प्रतिजानीते॥ अत्रोच्यत इति॥ जीवस्य ब्रह्माभिन्नत्वेनापरिच्छिन्नानंदस्येदानीमपि प्रकाशप्रसक्तौ सत्यां तदप्रकाशार्थमेव त्वयाऽज्ञानस्य कल्पितत्वात् प्रकाशमानेधित्वेन कल्प्यमानमज्ञानं कथं प्रकाशमाने युक्तं स्यात्। तथाच प्रकाशमानेऽज्ञानमिति त्वद्वचनमेवायुक्तमित्याह॥ त्वयापीति॥ ननु त्वदुक्तमर्थं न जानामीत्यत्र भासमान एव विशेषेऽज्ञानं दृष्टमिति चेत्तत्राह ॥अपि चेति॥ सुखादिस्फुरणं चैतन्यमित्यर्थः। भासमाने चैतन्ये तद्विषये। तत् अज्ञानं। त्वदुक्तमर्थं न जानामीत्यत्र भासमान एवाज्ञानमस्त्वित्यंगीकृत्योक्तं वस्तुतस्तु न तत्रापि भासमान एवार्थेऽज्ञानमित्याह ॥किं चेति॥ तत्रापि त्वदुक्तमर्थं न जानामीत्यत्रापि ॥गुहास्थमिति॥ यथा हि गुहास्थं वस्तु तमसाच्छन्नमित्युक्ते गुहास्थं घटादिकं गुहास्थत्वेनैव रूपेण सामान्यतः प्रतीयते एवं च गुहास्थत्वेन रूपेण सामान्यतः प्रतीत एव घटादौ विशेषे तमश्छन्नत्वमनुभूयते एवं त्वदुक्तमर्थं न जानामीत्यत्रापि अनावृतं अज्ञानानावृततया सदा प्रतीयमानं यदर्थत्वादिकं सामान्यं तदवच्छेदेनैव विशेषाज्ञानमनुभूयते। एवं च तद्विशेषाज्ञानज्ञाने तत्सामान्यज्ञानस्यैव हेतुत्वेन तस्य च सामान्याकारस्य प्रतीयमानत्वान्न तत्राज्ञानं किं तु विशेष एव। तथा च यद्भासते न तत्राज्ञानं। यत्राज्ञानं सोर्थो न प्रकाशत इति न भासमानेऽज्ञानमिति भावः। अज्ञानानुभवात् विशेषाज्ञानानुभवादित्यर्थः। विशेषाकारेण प्रकाशमान एवाज्ञानमिति वदतो बाधकमाह ॥न हीति॥ अज्ञानं अज्ञानावच्छेदकीभूतं वस्तु ॥बुभुक्षेत्यादि॥

(प्रकाशः)

बुभुक्षापिपासाद्यवच्छिन्नतत्तत्प्रातिस्विकरूपेणेत्यर्थः। त्वदुक्तमर्थं न जानामीत्यत्र विशेषरूपेण प्रकाशमान एवाज्ञानमिति वदतैवमनुवदितव्यं परबुभुक्षापिपासाविषयोऽर्थो य इममर्थमहं न जानामीति। अज्ञानावच्छेदकतया बुभुक्षापिपासाविषयतद्विशेषरूपार्थानुवादः स्यात् न चैवं परचित्तस्थबुभुक्षाविषयार्थविशेषादेर्ज्ञातुमशक्यत्वादिति भावः। ननु तवच्छेदकविशेषस्याज्ञाने कथं तदवच्छिन्नाज्ञानज्ञानमुपपद्येतेत्यत आह ॥ एवं चेति॥ ॥ तद्विशेषेति॥ यथा ऊर्ध्वपदार्थविशेषभूतस्थाण्वादिसंशये ऊर्ध्वपदार्थसामान्यनिश्चयस्यैव हेतुत्वं न विशेषनिश्चयस्यापि तथात्वे तत्संशयस्यैवानुपपत्तेरित्यर्थः ॥ दर्शनादिति॥ विशेषे तमश्छन्नत्वज्ञानं प्रति गुहास्थत्वादिसामान्याकारेण ज्ञानस्य हेतुत्वदर्शनादित्यर्थः। ननु विशेषावच्छिन्नाज्ञानज्ञानं प्रति विशेषज्ञानमेव हेतुः किं न स्यादित्यत आह ॥ न हीति॥ ननु विशेषाज्ञानं प्रति विशेषस्यैवावच्छेदकत्वे सामान्यस्यानवच्छेदकतया कथं विशेषावच्छिन्नाज्ञानज्ञानं ति सामान्यज्ञानं हेतुः स्यादित्यत आह ॥ अवच्छेदकेति॥ अवच्छेदकज्ञानस्यावच्छिन्नज्ञानहेतुत्वं दंडी देवदत्त त्यादौ दृष्टत्वादेव कल्पनीयं प्रकृते त्वज्ञानज्ञानं प्रति अज्ञानानवच्छेदकस्यापि सामान्यस्य हेतुत्वं कल्पनीयं संशयस्थले दर्शनबलादेवेत्यर्थः। नन्वज्ञानानवच्छेदकत्वाविशेषात्सामान्यस्येवान्यस्यापि पदार्थस्य ज्ञानं विशेषाज्ञानज्ञाने हेतुः स्यादित्यतिप्रसंग इति चेत्तत्राह ॥ सामान्येति॥ यस्य पदार्थस्य विशेषरूपेणाज्ञानं तस्यैव सामान्यरूपेण ज्ञानं विशेषाज्ञानज्ञाने हेतुरिति नियामकसद्भावान्नातिप्रसंग इत्यर्थः। अज्ञानविषयीभूतस्य विशेषाकारस्य ज्ञानाभावेपि तद्विषयकाज्ञानस्य ज्ञानं संभवतीति दर्शनादित्युक्तं। न केवलमेतावत् किंतु युक्तं चेत्याह ॥ युक्तं चेति॥ अज्ञानज्ञानमिति संबंधः ॥ द्वेषस्येति॥ चैत्रविषयको द्वेषो मैत्रस्य इष्टः इच्छाविषयो भवति तथापि यो द्विष्टो द्वेष्यश्च तस्य मैत्रकर्तृकेच्छाविषयत्वाभावात् इष्टत्वद्विष्टत्वयोः परस्परं विरोधादित्यर्थः ॥ अस्मदादीनामिति॥ अस्मदादिभ्रांतिविषयभूतरजतज्ञानवत्त्वे ईश्वरस्यापि भ्रांत्यापत्तेरिति भावः ॥ सर्वेति॥ ईश्वरज्ञानविषयीभूतसर्वस्य विशेषाकारेण ज्ञानाभावेपीत्यर्थः। तेन सर्वपदादिना सर्वज्ञानमस्माकमप्यस्तीति निरस्तं ॥ ईश्वरेति॥ ईश्वरः सर्वज्ञ इति ज्ञानस्यास्माकमपि सत्वादित्यर्थः ॥ अज्ञातेति॥ अज्ञानविषयीभूतविशेषस्येत्यर्थः ॥ अज्ञानस्येति॥ विशेषविषयकेत्यर्थः। तथा च यथेच्छविषयो यो द्वेषस्तद्विषयभूतस्य चैत्रस्य इच्छाविषयत्वरूपेष्टत्वाभावेपि तद्विषयकद्वेषस्येच्छाविषयत्वरूपमिष्टत्वमस्ति, यथा चेश्वरस्यास्मदादिभ्रमरूप-ज्ञानविषयस्य रजतादेर्ज्ञानाभावेपि भ्रमरूपज्ञानविषयकज्ञानं, यथा वास्मदादेः सर्वविषयकज्ञानस्य विशेषाकारेणाभावेपि ईश्वरः सर्वज्ञ इति ईश्वरीयसार्वज्ञज्ञानं एवमज्ञानविषयस्यापि विशेषाकारस्य ज्ञानाभावेप्यज्ञानज्ञानं युक्तमिति समुदायार्थः।

॥ अन्यथेति॥ अज्ञानज्ञानार्थं ज्ञानावच्छेदकीभूतविशेषस्यापि ज्ञातव्यत्व इत्यर्थः। मोहभानार्थं अज्ञानप्रतीत्यर्थं अज्ञातभानं अज्ञानावच्छेदकीभूतविशेषज्ञानं। अज्ञाते अज्ञानावच्छेदकीभूतविशेषे। मोहहानिः अज्ञानहानिः। तदर्थं मोहभानार्थं। विशेषज्ञानानिवृत्तौ विशेषज्ञानाभावेन तदवच्छिन्नाज्ञानज्ञानायोगादिति भावः। कारिकां व्याचष्टे ॥ तथा हीत्यादिना॥ अयमर्थः। अज्ञानज्ञानार्थं यदि तदवच्छेदकीभूतविशेषाकारज्ञानं कल्प्यते तच्च

(प्रकाशः)

ज्ञानं साक्षिरूपमिति अज्ञानाविरोधिज्ञानं कल्प्यते तर्ह्यज्ञानाविरोधिनी काचिदज्ञाननिवृत्तिरपि कल्प्या स्यात्। तथा हि। घटपटयोः संयोग इत्यत्र घटावच्छिन्नसंयोगज्ञाने संबंधितावच्छेदकसंबंधिज्ञानस्य कारणत्वात्। ननु घटादिकं न जानामीति अज्ञानावच्छेदकतया यथा कथंचिद्घटज्ञानमस्तीति चेत् तादृशेन घटज्ञानेन घटाज्ञाननिवृत्तेः। घटाद्यज्ञानानिवृत्तौ च घटादिज्ञानाभावप्राप्त्या तदवच्छिन्नसंयोगज्ञानायोगात्। एवमज्ञानज्ञानार्थं विशेषज्ञानाङ्गीकारे विशेषाज्ञाननिवृत्तिरप्यङ्गीकार्या। तदज्ञानानिवृत्तौ विशेषज्ञानाभाव प्राप्त्या तदवच्छिन्नाज्ञानज्ञानायोगात्। अतोऽज्ञानभानार्थं अज्ञानावच्छेदकीभूतविशेषाज्ञाननिवृत्तिरप्यंगीकार्या। ननु तर्हि विशेषाज्ञाननिवृत्त्यंगीकारे विशेषाज्ञानायोगो विरोधादिति चेन्न। अज्ञानाविरोधिज्ञानवत् अज्ञानाविरोधिनी अज्ञाननिवृत्तिरप्यंगीकार्या स्यादित्यतिप्रसंग इति। ननु विषयावच्छिन्नाज्ञानज्ञानस्य न विषयाज्ञाननिवृत्तिसापेक्षत्वं विरोधात्। ननु घटाद्यवच्छिन्नसंयोगादिज्ञाने दर्शनादिति चेन्न। नह्येकत्र दृष्टं सर्वत्राप्यंगीकर्तुं शक्यते। तथा हि लोके दंडावच्छिन्नदेवदत्तसत्त्वस्यावच्छेदकदंडसत्त्वसापेक्षत्वदर्शनेप्यारोपितघटावच्छिन्नाभावसत्त्वं नावच्छेदकी भूतारोपित-घटसापेक्षं विरोधात् आरोपितघटसत्त्वाभावात्। एवं प्रकृतेपीत्याशंकते ॥ अथेति ॥ ॥ तर्हीति ॥ एवं तर्हि त्वदुक्तमर्थं न जानामीत्यत्रापि विशेषविषयकाज्ञानेपि न तदवच्छेदकविषयज्ञानसापेक्षत्वं विरोधादेव। न हि विशेषतो ज्ञाने तदज्ञानधीर्दृष्टेति भावः ॥ ज्ञानांतरेति ॥ वृत्तिरूपज्ञानेत्यर्थः। अन्यत्र संयोगादिस्थले ॥ अवच्छिन्नज्ञानविरोधित्वेपीति ॥ अवच्छेदकज्ञानाभावेऽवच्छिन्नज्ञानाभावादिति भावः ॥ अज्ञानावच्छेदक-ज्ञानाभावस्येति ॥ अज्ञानावच्छेदकीभूतविशेषज्ञानाभावस्येत्यर्थः ॥ अवच्छिन्नज्ञानेति ॥ विशेषावच्छिन्ना-ज्ञानज्ञानेत्यर्थः। तथाचावच्छेदकीभूतविशेषज्ञानाभावेपि सामान्यतो ज्ञानमात्रेण विशेषावच्छिन्नाज्ञानज्ञानसंवात्। न ह्येकत्र दृष्टमेवान्यत्रांगीकार्यमिति नियमस्तथात्वे वृत्तिवत्साक्षिणोपि अज्ञानविरोधित्वं स्यादिति भावः। ननु सामान्यत एव ज्ञाने सति विशेषज्ञानाभावेपि तदवच्छिन्नाज्ञानज्ञानांगीकारेऽज्ञानविषयतयाऽवच्छेदकीभूतो विशेष एतादृश इति विशेषसिद्धिरेव न स्यात्। ज्ञायमानाज्ञानावच्छेदकतया एतज्ज्ञानेनैव तत्सिद्धेर्वाच्यत्वात्। तस्याश्च त्वायानंगीकारादित्याशंकमानं मंदं प्रत्याह ॥ अज्ञानस्येति ॥ अज्ञानविषयीभूतो यो विशेषस्तद्रूपावच्छेदकसिद्धिस्तु अनुभवांतरादित्यर्थः ॥ तमस इवेति ॥ यथा तमसा आव्रियमाणो विशेषस्तत्काले तमोविषयत्वेनाज्ञायमानोपि तमोनिवृत्त्यनंतरं पदार्थविशेषज्ञानानंतरं पदार्थः पूर्वं तमसाऽऽवृतोऽभूदिति ज्ञानांतरेण तमोविषयविशेषसिद्धिर्भवति एवमिहापि वृत्त्याऽज्ञाननिवृत्त्यनंतरं अज्ञानविषयविशेषज्ञानानंतरं अमुमर्थमेवं नाज्ञासिषमिति ज्ञानांतरादज्ञानविषयविशेषसिद्धिर्भवतीत्यर्थः। चैतन्यस्य अज्ञानानावृतचैतन्यस्य ॥ तस्या इति ॥ एतन्मते आवरणभूताज्ञानस्यैवाभावेन वृत्तेरज्ञानविरोधित्वोक्त्ययोगादिति भावः ॥ अज्ञानस्येति ॥ तथा च स्वविरोधिवृत्तिज्ञानाभावो यदा तदाऽज्ञानमिति स्वविरोधिज्ञानाभावं प्रति अज्ञानस्य व्यापकत्वान्मोक्षे च व्यापकीभूताज्ञानाभावाद्व्याप्यस्य ज्ञानाभावस्याभावापत्त्या वृत्तिज्ञानापातादित्यर्थः ॥ विरोधित्वेति ॥ ज्ञाधात्वर्थभूतचैतन्यवृत्तिरूपज्ञानसामान्यविरोध एवानुभवेन प्रतीयते न तु वृत्तिज्ञानविरोध एव। तथा च चैतन्यस्यापि वृत्तिवदज्ञानविरोधित्वं स्यादित्यर्थः ॥ ज्ञप्तीति ॥ ज्ञाधातोर्जदिशविधानात् ज्ञाधात्वर्थभूतज्ञप्तिरेव भावव्युत्पत्त्या प्रतीयते तद्विरोधित्वं च नञर्थ इत्यर्थः। ननु ज्ञप्तिविरोधित्वानुभवेपि तच्चैतन्यविरोधित्वालाभ इत्यत आह ॥ त्वदिति ॥ ॥ चैतन्येति ॥ चैतन्याख्यज्ञप्तिरूपमुख्यज्ञानाविरोधित्वादज्ञानं मुख्याज्ञानमेव न स्यात्

(प्रकाशः)

चैतन्यं वा मुख्यज्ञानं न स्यात् अमुख्यज्ञानरूपवृत्तिविरोधित्वादमुख्याज्ञानमेवस्यादित्युक्तत्वादित्यर्थः। इतोपि चैतन्यस्याज्ञाननिवर्तकत्वं वाच्यं निवर्तकतावच्छेदकसद्भावादित्याह ॥वृत्तेरिति॥ अर्थप्रकाशकत्वं ज्ञानत्वम्। जातिविशेषो वृत्तित्वम् ॥तत्कार्येति॥ भ्रांतीत्यर्थः ॥सत्यत्वेति॥ ज्ञानत्वेन ज्ञाननिवर्त्यत्वाप्राप्त्या अज्ञानतत्कार्ययोर्मिथ्यात्वालाभादित्यर्थः। अर्थप्रकाशकत्वेन ज्ञानत्वेन। तत्वेन निवर्तकतावच्छेदकीभूत-ज्ञानत्वयुक्तत्वेन ॥तन्निवर्त्तकत्वेति॥ अज्ञाननिवर्त्तकत्वेत्यर्थः। किंचान्वयव्यतिरेकाभ्यां चैतन्यस्फुरणस्यैवाज्ञान-विरोधित्वं। तथा हि चैतन्यस्फुरणाभावे नाज्ञाननिवृऽत्तिः नित्यातींद्रियेदर्शनात्। तथापि चैतन्यस्फुरणेनाज्ञाननिवृत्तौ अभिव्यक्तचित्संबंधप्राप्त्या धर्मादेरापरोक्ष्यापत्तेः। ननु तत्राज्ञाननिवृत्त्यभावः स्फुरणाभावप्रयुक्त एव। कुतः वृत्त्यभावप्रयुक्तः किं न स्यादित्यतो वृत्तेरप्रयोजकत्वं वक्तुमुक्तं परोक्षवृत्तौ सत्यामपीति। तथा चैतन्यस्फुरणे सति अज्ञानाभाव इत्यस्ति सुखादौ दर्शनात्। ननु तत्राज्ञानाभावोऽपरोक्षवृत्तिप्रयुक्त एव किं न स्यादित्यत उक्तमपरोक्षवृत्त्यभावेपीति। किं च चैतन्यस्फुरणस्याज्ञानविरोधित्वानंगीकारे आत्मा स्वप्रकाशो भवितुमर्हति स्वसत्तादशायामप्रकाशवैधुर्यात् दीपवदिति स्वप्रकाशत्वसाधनमयुक्तं स्यात्। तस्याज्ञानाविरोधित्वांगीकारेण स्वसत्तायामप्रकाशसंभवेन हेतोः स्वरूपसिद्ध्यापत्तेरित्याशयेनाह ॥स्वसत्तायामिति॥ वैषम्योक्तिश्चेति॥ सौरालोकज्ञानादिदृष्टांतेनेत्यर्थः ॥अनुभवादिति॥ सुखादिविषय इत्यर्थः। ननु साक्षिणोऽज्ञानसाधकत्वान्न तद्विरोधित्वमिति चेत्तत्राह ॥अनुभूयते हीति॥ अज्ञानसाधकत्वेनाज्ञानविषयकयाऽनुमिति रूपवृत्त्याऽज्ञानज्ञाने सति नाज्ञानविषयकाज्ञानमनुभूयते एवं चाज्ञानविषयकानुमितिवृत्तेर्यथाऽज्ञानविषयकाज्ञानविरोधित्वं एवं साक्षिणोप्यज्ञानसाधकत्वेनाज्ञानविषकाज्ञानविरोधित्वमेवास्ति साक्षिसिद्धाज्ञानेऽज्ञानं नास्तीति यावत्। सति चैवं वृत्तिसाक्षिणोरज्ञानविरोधित्वसाम्यान्न तयोर्वैषम्यमित्यर्थः। किंच साक्षिवद्वृत्तेरप्यज्ञानाविरोधित्वाच्च साम्यमित्याह ॥साक्षिवच्चेति॥ यथा त्वया साक्षिविषयाज्ञानविषयभूतो यो विशेषस्तद्विषयकं यदज्ञानं साक्षिसिद्धमेव तदविरोधित्वमेव साक्षिणः स्वीकृतं तस्याज्ञानसाधकत्वांगीकारात् एवमज्ञानसाधकानुमिति रूपवृत्तेरपि अनुमितिविषयाज्ञानविषयो यः पदार्थः तद्विषयकं यदज्ञानं अनुमितिविषयभूतमेवाज्ञानं तदविरोधित्वमेवास्ति अनुमितेरज्ञानसाधकत्वांगीकारात्। अतोपि साम्यमित्यर्थः। अन्यथा साक्षिणोऽज्ञानाविरोधित्वे। दुःखादौ अज्ञानापत्त्येति. शेषः ॥मैत्रस्येवेति॥ मैत्रस्य यथाऽज्ञानमस्ति तथेत्यर्थः। सुखादिविषये साक्ष्यन्यस्याज्ञानविरोधिनोऽभावात् साक्षिणश्च तदविरोधित्वात्। चैत्रस्येव मैत्रस्याप्यज्ञत्वं स्यात् नो चेन्मैत्रस्याप्यज्ञानं न स्यादित्यर्थः। संगृह्णाति ॥एवंचेति॥ साक्षिणः स्वविषयविषयकाज्ञानविरोधित्वाभावे सुखादावज्ञानं केन वार्यते तत्र वृत्तेरभावादिति भावः। ननु साक्षिविषये सुखादौ अज्ञानप्रसक्तिरेव नास्तीति न तद्वारकापेक्षा। वृत्तिस्तु स्वविषये प्रसक्ताज्ञाननिवर्तिकेति तयोर्वैषम्यमित्याशंकते ॥इच्छादाविति॥ विषये ॥सदेति॥ ज्ञातैकसत्वादिति भावः। आत्मनि विषये। तत एव स्वप्रकाशत्वादेव तदप्रसक्तिः स्यात् अज्ञानाप्रसक्तिः स्यात्। तथा च वेदांतजन्यचरमवृत्तेरात्माज्ञाननिवर्तकत्वं त्वयोच्यमानं न स्यादिति भावः। तथाचात्मा नाज्ञानप्रसक्तिमान् सदा प्रकाशमानत्वादिच्छादिवदित्यनुमानं द्रष्टव्यम्। अत्र साक्षिवेद्यत्वमुपाधिरित्याशंक्य निराकरोति ॥न चेति॥ न सदा प्रकाशस्तंत्रमित्यर्थः। इच्छादौ साध्यव्यापकत्वात्। साधनाव्यापकत्वमाह ॥आत्मा त्विति॥ तस्य साक्षिरूपत्वेन तद्वेद्यत्वं नास्ति कर्तृकर्मविरोधादिति भावः। तर्हि तस्याप्रामाणिकत्वं

(प्रकाशः)

न मंतव्यमित्याह ॥ किं त्विति॥ स्वप्रकाशत्वेन तत्सिद्धिरिति भावः। तथा च आत्माऽज्ञानप्रसक्तिमान् साक्षिवेद्यत्वात् घटवदिति प्रतिपक्ष उक्तो भवति। प्रतिपक्षानुमानेऽप्रकाशरूपत्वमुपाधिरित्याशयेनाह ॥ प्रकाशरूप इति॥ तथा चैतदुपाधिविपर्ययेण साध्याभावसाधने स्थापनानुमानमेव पर्यवसितमिति ध्येयं ॥ अन्यथेति॥ वृत्तिचितोर्वैषम्यायात्मनोऽज्ञानविरोधित्वानंगीकार इत्यर्थः ॥ घटादिरिति॥ यथा घटादेः स्वयमज्ञानाविरोधित्वात् स्वव्यवहारे स्वातिरिक्तालोकापेक्षास्त्येवं चितोप्यज्ञानाविरोधित्वात्तत्राज्ञानप्राप्त्या स्वस्वरूपव्यवहारो न स्यात् तदर्थं स्वातिरिक्तसंविदंतरापेक्षा स्यात् इदं तु सिद्धांतरहस्यविरुद्धम्। स्वरूपप्रकाशेनैव तद्व्यवहारांगीकारात् अन्यथा दृश्यत्वलक्षणस्यातिव्याप्तिप्रसंगादिति भावः। ननु वृत्तिचितोर्वैषम्यमेव। न च साक्षिणोपि सुखादिविषयाज्ञानविरोधित्वात्साम्यमिति वाच्यं। सुखादेः केवलचिद्वेद्यत्वाभावात् वृत्तिप्रतिबिंबितसाक्षिवेद्यत्वांगीकारात् तथा च सुखादिविषये वृत्तिसहितस्यैव साक्षिणोऽज्ञानविरोधित्वात्। अस्माभिः केवलशुद्धचैतन्यस्यैवाज्ञानाविरोधित्वस्योच्यमानत्वेन केवलात्मविषयकाज्ञानांगीकारे न दोष इत्याशंक्य निराकरोति ॥ न चेति॥ तर्हि शुद्धचैतन्यव्यवहारे संविदंतरापेक्षा स्यादिति दूषणे सत्येव दूषणांतरमाह ॥ असत इति॥ सुखादेर्वृत्तिप्रतिबिंबितसाक्षिवेद्यत्वे सुखाद्युत्पत्यनंतरं तद्ग्रहणाय वृत्तिविलंबेन विलंबापत्त्या कदाचित्संशयादिः स्यात् तथा च ज्ञातैकसत्वहानिप्रसंगात् अतः केवलचिद्वेद्यत्वं वाच्यमित्युपपादनस्य कृतत्वादित्यवधेयम्। ततश्च शुद्धचित एव दुःखादिविषये अज्ञानविरोधित्वप्राप्त्या न वृत्तिचितोर्वैषम्यमिति भावः। किंच सुखादेर्नांतःकरणवृत्तिप्रतितिंबितसाक्षिवेद्यत्वं। तस्या इंद्रियव्यापाररूपप्रमाणजन्यत्वादांतरसुखादौ च तदप्रवृत्तेः। नापि सुखादेरविद्यावृत्तिप्रतिबिंबितसाक्षिवेद्यत्वं अविद्यावृत्तेर्दोषजन्यत्वनियमात्साक्षिणश्च निर्दोषत्वात्। अतः परिशेषात्केवलचिद्वेद्यत्वमेव वाच्यमित्याह ॥ अंतःकरणेति॥ ॥ अन्यथेति॥ स्वसत्तायामप्रकाशविधुरेपि सुखादौ वृत्त्यपेक्षायामित्यर्थः ॥ स्यादिति॥ तथा च स्वव्यवहारे स्वातिरिक्तज्ञानांतरापेक्षा स्यादिति भावः ॥ प्रतिबंदी निरस्तेति॥ सौरालोकज्ञानयोस्तमोविरुद्धत्वाविरुद्धत्ववत् वृत्तिचितोरज्ञानविरोधित्वाविरोधित्वे युक्ते इत्युक्ता प्रतिबंदी। सौरालोकज्ञानयोरिव वृत्तिचितोरज्ञाननिवर्तनवैलक्षण्याभावेन सौरालोकज्ञानादिसाम्याभावात्। साम्ये हि प्रतिबंदी ग्रहणमिति भावः। यदुक्तं दृश्यते हि त्वदुक्तमर्थं न जानामीति प्रकाशमान एवाज्ञानं अज्ञानावच्छेदकविषयस्याज्ञाने तदवच्छिन्नाज्ञानज्ञानायोगात् अतोऽज्ञानावच्छेदकीभूतो विषयः साक्षिणा भासत इत्यंगीकार्यं ततश्च प्रकाशमान एवाज्ञानसिद्धिरिति तद्दूषयति ॥ एतेनेति॥ ज्ञाततया ज्ञानावच्छेदकत्वेन विशेषित एव साक्षिविषयः अज्ञाततयाऽज्ञानावच्छेदकतया विशेषित एव साक्षिविषयः। तदेव विवृणोति ॥ अंधकारेति॥ यथा गुहास्थं तमश्छन्नमित्यत्र विशेषतो गुहास्थपदार्थाप्रकाशेपि गुहास्थत्वेन सामान्यतस्तदुपस्थितौ तत्र यथा तमश्छन्नत्वज्ञानमित्यर्थः। ज्ञानावच्छेदकीभूतोविषयोपि साक्षिणा विशेषतो न भासत इत्येवं दृष्टांतेनाह ॥ ज्ञानेति॥ ज्ञानावच्छिन्नाभावज्ञानं तावत् त्वयांगीकृतं पदार्थज्ञानाभावोप्यस्तीत्यादौ। एवं च तत्र यथाज्ञानावच्छेदकीभूतविषयस्य विशेषतोऽप्रकाशेपि सामान्यतस्तुदुपस्थितौ सत्यामेव पदार्थज्ञानाभावज्ञानं भवति एवं सामान्यतोऽवच्छेदकज्ञाने सत्येव तदवच्छिन्नाज्ञानज्ञानमनुभूयते अतोऽज्ञानावच्छेदकतया विशेषाकारस्य साक्षिवेद्यत्वाभावात्प्रकाशमान एवाज्ञानमित्युक्तमसदिति भावः ॥ सेदानीमिति॥ सत्यज्ञानादिरूपवेदांतवाक्यरूपजन्यायाः श्रवणादिरूपवृत्तेरिदानीं साक्षात्कारात्पूर्वमपि सत्त्वेनाज्ञाननिवृत्त्यापत्त्या मोक्षापातेन संसारोपलंभो

(प्रकाशः)

न स्यादित्यर्थः ॥ तत्रेति॥ आत्मशब्दवाच्ये चैतन्य इत्यर्थः। वृत्तिव्यावृत्तेः सत्त्वादिति भावः। आत्मविषया वृत्तिरिदानीमप्यस्तीत्यत्र विवरणसंमतिमाह ॥ विवरण इति॥ ॥ जीवाकारेत्यादि॥ जीवविषयकाहंत्वप्रकाशका वृत्तिस्तदात्मना परिणतं यदंतःकरणं तेन जीवो व्यज्यते अहमाकारांतःकरणपरिणामरूपज्ञानरूपया वृत्त्या जीवविषयिण्या जीवोऽभिव्यज्यते जीव इति व्यवहारविषयो भवतीत्यर्थः ॥ अन्यथेति॥ अहमाकारवृत्त्यभावदशायां सुषुप्तेरित्यर्थः। तथा च जीवस्यैवात्मत्वात्तद्विषयिणी वृत्तिः प्रत्यहमस्तीत्यर्थः। ननु जीवस्य विशिष्टत्वान्न चैतन्यविषयापरोक्षवृत्तिरस्तीति चेत्तत्राह ॥ अयं घट इतीति॥ तथात्वे चैतन्यविषयिण्यपि वृत्तिरिदानीमप्यस्तीति तथाऽज्ञाननिवृत्तौ मोक्षापात इति भावः ॥ अन्यथेति॥ अयं घट इति वृत्तेर्घटावच्छिन्नचिद्विषयत्वाभावमंगीकृत्येदानीं चैतन्यविषयकवृत्त्यभावांगीकार इत्यर्थः ॥ घटावरकेति॥ यदि घटावरकमज्ञानं स्यात्तदा घटविषयिण्या वृत्त्या घटाज्ञाननिवृत्तिः स्यात् न चैवं घटादेरप्रकाशस्वरूपत्वेन आवरणकृत्याभावेन जडावरकाज्ञानांगीकारात्। अतो घटावच्छिन्न एव घटाज्ञानमंगीकार्यं तथा चायं घट इति वृत्तेर्घटावच्छिन्नचिद्विषयकत्वाभावे समानविषयकाज्ञानाभिभावकस्यान्यस्याभावेन घटादिव्यवहाराभावापत्त्या घटावच्छिन्नचिद्विषयत्वमवश्यमङ्गीकार्यमित्यर्थः। आत्मविषयिणी वृत्तिरिदानीमप्यस्तीत्युपपादनाय अहमिति। जीवविषया वृत्तिर्घटावच्छिन्नचैतन्यविषया च वृत्तिरिदानीमस्तीत्युक्तं किं ततः अज्ञानविरोधिन्याश्चैतन्यवृत्तेः सत्त्वादज्ञाननिवृत्तिः स्यात् ततश्च सद्यो मोक्षः स्यादिति चेन्न। विशिष्टचैतन्यरूपविशेष्यविषयकत्वाभावात् चिन्मात्रविषयकाज्ञानविरोधित्वाभावाद्वा न तयाऽज्ञाननिवृत्तिरित्याशंक्य निराकरोति ॥ न चेति॥ विशिष्टवृत्तेर्विशेष्याविषयकत्वे विशेष्यविषयकाज्ञानानिवर्तकत्वांगीकारेऽतिप्रसंगमाह ॥ दंडी चैत्र इति॥ तथा च दंडी चैत्र इति ज्ञानानंतरं अयं चैत्रो न वा अन्य एवेति संशयविपर्ययौ स्यातामिति भावः। विशिष्टदर्शने विशेष्यं दृष्टमित्यत्रोदाहरणमाह ॥ आकाशस्यैव चेति॥ महाकाशस्यैवेत्यर्थः। घटावच्छिन्नाकाशस्यैव घटाकाशत्वे त्वित्यन्वयः। घटावच्छिन्नो महाकाश एव घटाकाश इत्युच्यत इति मते घटावच्छिन्ने आकाशे विशिष्टे दृष्टे विशेष्यभूतं यदाकाशमात्रं महाकाशरूपं तद्दृष्टमेव। ननु आकाशमात्रदर्शनेपि तद्गतमहत्त्वादि न दृश्यत इति चेत् मा दर्शि आकाशमात्रदर्शनं तावदस्त्येवेत्यर्थः। ननु यदा महाकाश एव घटावच्छिन्नो भवति तदा तस्मिन् दृष्टे तद्दृष्टं भवति यदा तु महाकाशांश एव घटावच्छिन्नाकाश इत्युच्यते तदाशांशिनोर्भेदात् घटावच्छिन्नाकाशदर्शनेपि महाकाशादर्शनं युक्तमिति चेत्सत्यं एवं त्वया नांगीकृतमस्तीत्याह ॥ आकाशांशस्येति॥ त्वया तु नैवमंगीकृतमिति वाक्यशेषः ॥ श्रवणादीति॥ इदानींतनात्मवृत्तिस्तु न श्रवणादिजन्येति नाज्ञानविरोधिनी। श्रवणादिजन्या च वृत्तिश्चरमवृत्तिरेवेति भावः ॥ भ्रमकालीनेति॥ जगद्भ्रमकालीनं यदपरोक्षज्ञानं सन्घट इत्यादिसाक्षात्काररूपं तदपेक्षया नधिकविषयकं भ्रमप्रतीतसदर्थमात्रविषयकं तेन समानविषयकं यच्चरमवृत्तिरूपं तेनेत्यर्थः ॥ कारणांतरेति॥ भ्रमकालीनचैतन्यापरोक्षज्ञानमिंद्रियजन्यं, चरमज्ञानं च वेदांतजन्यमिति कारणकृतमेव वैषम्यं न विषयकृतमस्तीत्यर्थः ॥ अतिप्रसंगादिति॥ विषयकृतवैषम्यरहितस्यापि कारणातरजन्यत्वमात्रेणाविद्यानिवर्तकत्वेऽपीतसाक्षात्कारस्यापि न पीतभ्रमनिवर्तकत्वं किं तु श्रवणादिजन्यपीतसाक्षात्कारस्यैव तथात्वमस्त्विति अतिप्रसंग इत्यर्थः। तत्र वक्तव्यं तयोर्विषयकृतविशेषाभावेन कारणांतरजन्यत्वमात्रमप्रयोजकमिति। तत्प्रकृतेपि समानमिति भावः। चरमवृत्तेर्भ्रमकालीनापरोक्षज्ञानानधिकविषयत्वे दूषणांतरमाह ॥ अनधिकेति॥ श्रवणादिजन्यवृत्तेश्चरमवृत्त्यनधिकविषयाया

(प्रकाशः)

अविद्यानिवर्तकत्वे देवताश्रवणजन्यसाक्षात्कारनिवर्त्यदुरितवदिच्छानिवर्त्य द्वेषवच्छाज्ञानस्य सत्यत्वं स्यादित्याह ॥सत्यत्वेति॥ आत्ममात्रं चैतन्यमात्रम्। एतावत्पर्यंतं ''निर्विशेषे स्वयंभाते किमज्ञानावृतं भवे''दित्यनुव्याख्यानांशमुपपाद्य ''मिथ्याविशेषोप्यज्ञानसिद्धिमेव ह्यपेक्षत'' इत्यंशमुपपादयितुं मिथ्याविशेषानाशंक्य निराकरोति ॥नापीति॥ देहेंद्रियादिभिरात्मनो भेदादिकमज्ञानावृतं सदिदानीं न भासते प्रत्युतेदानीं आत्मनि देहाद्यभेदो भोक्तृत्वकर्तृत्वादिकं ब्रह्मभेदः द्वितीयं च भासत इत्यर्थः ॥तद्विशिष्टेति॥ देहादिभेदभोक्तृत्वाद्यभावविशिष्ट आत्मैवाज्ञानविषयः। तथा चाज्ञानावृतः सन् तथा न भासते। प्रत्युत देहाद्यैक्यभोक्तृत्वादिविशिष्टतयैव भासत इत्यर्थः। देहादिभेदादीनां आत्ममात्रत्वं वा विवक्षितं तद्भिन्नत्वं वा नाद्य इत्याह ॥तेषामिति॥ देहभेदादीनामित्यर्थः ॥उक्तदोषादिति॥ चैतन्यमात्रत्वे आवरणकृत्याभावादिरूपदोषस्योक्तत्वादित्यर्थः। द्वितीये किं तेषां सत्वं विवक्षितं उताविद्याकल्पितत्वं? नाद्य इत्याह ॥भिन्नत्वे सत्व इति॥ द्वितीयं निराह ॥आविद्यकत्व इति॥ तेषामाविद्यकत्वे सिद्धे तदावरकाज्ञानसिद्धिः तत्सिद्धौ च तेषामविद्याकल्पितत्वसिद्धिरित्यन्योन्याश्रयः। अज्ञानव्यक्त्यंतरांगीकारे चक्रकादिरित्यर्थः। तेषां ब्रह्माभेदादीनां प्रकाशमानात्ममात्रत्वमंगीकृत्य कल्पितभेदमादायाज्ञानविषयत्वमुपपाद्यत इत्याशंक्य निराकरोति ॥न चेति॥ प्रकाशमाने आत्मनि भेदकल्पनैवायुक्ता। कल्पनाया अधिष्ठानावृत्तिं विनाऽयोगेनाधिष्ठानचैतन्यस्य सदा प्रकाशमानत्वेनाधिष्ठानावरणायोगेन भेदभ्रांतिरूपकल्पनाऽयोगादित्याह ॥अधिष्ठानेति॥ ननु देहभेदादिविशिष्टस्यात्मनो नाज्ञानविषयत्वं किंतु तदुपलक्षित एवात्माऽज्ञानविषयः। तथा च चैतन्यमात्रविषयकत्वपक्षोक्तदोषाभाव इत्याशंक्य निराकरोति ॥न चेति॥ कुतो नेत्यत आह ॥तस्येति॥ ननु वेदांतानां भेदाभावोपलक्षणरूपप्रकारयुक्तात्मपरत्वं कुतः येनाखंडार्थत्वहानिरित्यत आह ॥तस्येत्यादिना॥ अज्ञानस्य भेदाभावोपलक्षितात्मविषयकत्वेन तद्विषयकज्ञाननिवर्त्यताया एव वक्तव्यत्वात्। तथाचोपलक्षणरूप-प्रकारपरत्वेनाखंडार्थताहानिः स्यादेवेत्यर्थः ॥अकाक इति॥ उपलक्षणीभूतस्य प्रत्याय्यव्यावृत्तिसमये सत्त्वाभावादकाके गृहे काकवदिति वाक्यं यथाऽप्रमाणमेवं उपलक्षणीभूतभेदाभावादेर्मिथ्यात्वेन ब्रह्मण्य-भावात्तद्बोधकवेदांतानामप्रामाण्यं स्यात्। काकोपस्थाप्योत्तृणत्ववदीश्वरे तदभावादिति भावः ॥प्रकाशमानस्येति॥ लोके ज्ञानविषयस्य प्रकाशमानत्वं दृष्टं त्वया तु अप्रकाशमानस्यैव द्वितीयाभावस्योपलक्षणत्वेन तटस्थतया ज्ञानविषयत्वस्वीकारादद्दृष्टकल्पनेत्यर्थः। भंगार्थमुपसंहरति ॥तस्मादिति॥ आत्मनश्चिन्मात्रस्य ॥अन्यस्येति॥ देहेभेदादिरूपस्यात्मभिन्नस्य मिथ्याविशेषस्येत्यर्थः। तत्रानुव्याख्यानं संवादयति ॥तदुक्तमिति॥ किंच विषयान्यूनपरिमाणस्यैव विषयाच्छादकत्वं दृष्टमतो विषयसंबंध्यावरणत्वेन त्वयोच्यमानायाः परिच्छिन्नाया अविद्यायाः कथमपरिच्छिन्नब्रह्मावरणत्वमित्याह ॥किं चेति॥ ननु न्यूनाया अंगुलेः स्वाधिकसूर्याच्छादकत्वदर्शनात्प्रकृते न्यूनाप्यविद्या स्वाधिकब्रह्मावरणं भविष्यतीत्यत आह ॥न्यूनापीति॥ अंगुलेः पुरुषसंबंधिचक्षुराद्यावरणत्वेन विषयसंबंध्यावरणत्वाभावादित्यर्थः। एवमविद्यानिराकरणप्रसंगमुपसंहरन्नेवोत्तर-ग्रंथमुपक्षिपति ॥तस्मादिति॥ ॥न तत्कार्यमिति॥ अविद्याकार्यं न भवतीत्यर्थः।

॥अविद्याविषयभंगविवरणम्॥

## ३३. अहमर्थस्यानात्मत्वभङ्गः

यदप्युच्यते अहमर्थो नात्मा पश्चात्परामर्शान्यथानुपपत्त्या सुषुप्तौ स्वतः प्रकाशमानस्यात्मनः सद्भावेऽप्यनेवंविधस्याहमर्थस्याभावाद्, "अथातोऽहंकारादेशः अथात आत्मादेश" इति श्रुतौ पृथगुपदेशाच्च, "महाभूतान्यहंकार" इति स्मृतावहं-कारस्य क्षेत्रज्ञात्पार्थक्येन क्षेत्रत्वोक्तेश्च। तस्मादहमनुभवामीत्यात्मानुबन्ध्यनुभवस्याहं कर्तेत्यनात्मानुबन्धिकर्तृत्वादेश्चाश्रयोऽहंकारः, चिदचित्संबलनात्मकत्वादध्यस्तः। यदि च सुषुप्तावहमर्थः प्रकाशेत, तर्हि स्मर्येत ह्यस्तन इवाहंकारः, अनुभूते स्मरण-नियमाभावेऽपि स्मर्यमाणात्ममात्रत्वादिति।

तत्र न तावत् स्वप्रकाशत्वास्वप्रकाशत्वाभ्यां सुषुप्तावात्माहमर्थयोः प्रकाशाप्रकाशौ। अहमर्थः स्वप्रकाशात्मान्य इत्यस्याद्याप्यसिद्ध्याऽन्योन्याश्रयात्। नापि परामार्शा-परामर्शाभ्याम्, अहमस्वाप्सं न किंचिदहमवेदिषमित्यहमर्थस्यैव परामर्शात्।

अहमर्थे परामर्शो न चेत् स कथमात्मनि ।
अहंज्ञानान्नान्य आत्मपरामर्शो हि दृश्यते ॥

अस्वाप्समित्यत्रापि उत्तमपुरुषप्रयोगयोग्याहमर्थस्यैव स्फुरणात्। उक्तं च विवरणेऽपि "अन्तःकरणा विशिष्ट एवात्मनि प्रत्यभिज्ञानं ब्रूमो, न निष्कलंके, तस्य मोक्षावस्थायिनः शास्त्रैकसमाधिगम्यत्वा"दिति। यदि चेदमर्थव्यावृत्तोऽहमर्थो न परामृश्येत, तर्ह्येतावन्तं कालं सुप्तोऽहं वाऽन्यो वेति संशयादि स्यात्, न त्वहमेवेति निश्चयः। ननु परामृश्यमानात्मन एवं प्रत्यक्त्वात्तथा निश्चय इति चेत्, प्रत्यक्त्वं न तावत् चिन्निर्भास्यप्रतिद्वन्द्वि चित्त्वं अन्यत्वप्रतिद्वन्द्वि स्वत्वं वा चिदस्वपीदिति वा स्वयमस्वपीदिति वा परामर्शापातेनाहमिति परामर्शायोगात्। घटादिः स्वस्माद् भिन्नो नेत्यादिप्रतीत्यात्मनीव घटादावपि स्वत्वस्य सत्त्वाच्च। नापि युष्मदर्थरूप-पराग्व्यावृत्तत्वम्, अहमर्थस्यैव तद्व्यावृत्तेः। न हि त्वन्मते आत्मनः पराग्व्यावृत्तिः। विवरणे "आत्मनः सर्वात्मकत्वान्न पराग्व्यावृत्तिरहमुपरागादेव व्यावृत्त्यवभास" इत्युक्तेः। तस्मादहमर्थत्वमेव प्रत्यक्त्वं वाच्यमिति घट्टकुटीप्रभातवृत्तान्तः। ननु नाहमंशे परामर्शः किं तु परामृश्यमान आत्मा इदानीं जातेनान्तःकरणेनावच्छेदादहंत्वं

प्राप्तस्तथानुभूयत इति चेन्न, न किंचिदहमवेदिषमित्यादावज्ञानाद्यंशेऽप्यपरामर्शत्वापातात्। न ह्यज्ञानादिकं निराश्रयमन्याश्रयं वा परामृश्यते, किं त्वहमर्थाश्रयमेव। एतावन्तं कालमहं स्वप्नं पश्यन्नासं जाग्रदासमित्यत्रैवाहमस्वाप्समित्यत्राप्यहमंशे परामर्शत्वानुभवाच्च। अन्यथा यः पूर्वं दुःखी सोऽधुना सुखी जात इतिवद् यः पूर्वं मदन्यः सुप्तः सोऽधुनाऽहं जात इति धीः स्यात्।

नन्वहंकारे परामृश्यमानात्मैक्यारोपात्तज्ज्ञाने परामर्शत्वाभिमान इति चेन्न, अपरामर्शे परामर्शत्वारोपादर्शनात्। सिद्धेऽहमर्थस्यात्मान्यत्वे परामृश्यमानात्मैक्यारोपः, सिद्धे च तस्मिन्सुषुप्तावप्रकाशेनाहमर्थस्यात्मान्यत्वमितीतरेतराश्रयाच्च। अहमित्यतोऽन्य आत्मपरामर्शो नेत्युक्तत्वेन दृष्टहानाददृष्टकल्पनापाताच्च। एतेन सुषुप्तावहमर्थप्रकाशे स्मर्येत ह्यस्तन इवाहंकार इति निरस्तम्। अहंशब्दोल्लेखिपरामर्शापादने सुषुप्तौ तदुल्लेख्यनुभवाभावादेव तदभावोपपत्तेः। तावन्मात्रेण च ह्यस्तनवैषम्यात्। अहमर्थविशेष्यकस्याहंत्वप्रकारकस्य वा परामर्शस्यापादने इष्टापत्तेः। स्मर्यते हि एतावंतं कालं सुखमहमस्वाप्समिति सुषुप्तिकालीनसुखावच्छिन्नोऽहमर्थः। अन्यथा स्यर्येत ह्यस्तन इवात्मेति चोद्यं निरुत्तरं स्यात्। ननु तथाप्येतावंतं कालमहमित्यभिमन्यमान आसमिति परामर्शः स्यादिति चेत्, कर्णे स्पृष्टः कटिं चालयसि। अहमर्थप्रकाशेन तदभिमानपराशापादनस्य व्यधिकरणत्वात्। अन्यथा तवाप्यात्मेत्यभिमन्यमान आसमिति परामर्शः स्यात्। तस्मात्सुषुप्तावहमर्थः प्रकाशत एव। न किंचिदवेदिषमित्यज्ञानपरामर्शस्य त्वात्माद्यज्ञानादन्यदिवाहमर्थाज्ञानादन्यदेवाज्ञानं विषयः, अन्यथा विरोधात्। या तु न विजानात्ययमहमस्मीति सुषुप्तिविषया श्रुतिः, सापि नात्मानं न परांश्चेति सुषुप्तावात्माज्ञानश्रुतिवद्विशेषाज्ञानपरा।

किं च सौषुप्तिकाज्ञानादिस्मर्तृत्वं किमनहमर्थस्य अविद्यावच्छिन्नचैतन्यास्य? अन्तःकरणावच्छिन्नस्याहमर्थस्य वा? नाद्यः, योऽहमकार्षं सोऽहं सौषुप्तिकाज्ञानादि स्मरामीत्यबाधितानुभवात्। अन्त्ये त्वहमर्थस्यैव तदनुभवितृत्वं वाच्यम्। स्मृतिसंस्कारानुभवानामेकाधिकरणानामेव कार्यकारणाभावात्। योऽहमन्वभूवं सोऽहं स्मरामीति प्रत्यभिज्ञानाच्चेति सुषुप्तावप्यहमर्थसिद्धिः। यद्यपि चैत्रमैत्रादिसाधारणं

चैतन्यमेकं जीवत्वोपाध्यविद्यैक्यात् जीवश्चैकः, तथापि तयोरस्मर्तृत्वात् स्मर्तुश्चाहमर्थस्याविद्यावच्छिन्नानुभवितृचैतन्यादन्यत्वेन नानुभवितृस्मर्त्रोरैक्यम्। यद्यप्यविद्या चैतन्यं प्रत्यवच्छेदिका, अन्तःकरणं तु अविद्यावच्छिन्नचतन्यं प्रत्येवावच्छेदकं, न तु स्वातंत्र्येण। तथाप्यविद्यान्तःकरणरूपोपाधिभेदे शुद्धचैतन्याविद्यावच्छिन्नचैतन्यरूपोपधेयभेदे च सति मठाकाशतत्स्थघटाकाशयोरिव सुतरामुपहितभेदेन प्रत्यभिज्ञानविरोधो दुस्तरः। किं च सुषुप्तावहमर्थाभावेऽहं निर्दुःखः स्यामितीच्छया सुषुप्तौ प्रवृत्त्ययोगः। योऽहं सुषुप्तः सोऽहं जागर्मीतिप्रत्यभिज्ञाबाधश्च। योऽहं पूर्वेद्युरकार्षं सोहमद्य करोमीति प्रत्यभिज्ञानानुपपत्तिश्च, अहंकारव्यक्तिभेदात्। कृतहानाकृताभ्यागमप्रसंगश्च, कर्तुर्भोक्तुश्चाहमर्थस्य भिन्नत्वाद्, अभिन्ने चैतन्ये कर्तृत्वाद्यभावात्। कर्तृत्वाद्यारोपस्य च देहादावपि सत्त्वात्। अहं करोमीत्येव प्रतीत्याहमर्थान्यात्मनि कर्तृत्वारोपस्याप्यभावाच्च। किं च अहंकार एव क्रियाशक्त्या प्राणः, विज्ञानशक्त्या मन इति गीयत इति त्वन्मतम्। तथा च सुषुप्तावहंकारविलये प्राणकार्यश्वासादि न स्यात्। ननु– प्राणस्याहंकाराद् भेदपक्षेऽहंकारस्य लयो युक्तः। अभेदपक्षेऽपि प्राणांशं विहायाविशिष्टांशस्यैव लयः कल्प्यत इति चेत्, न, प्राणस्याहमर्थत्वाभावे कर्तृत्वस्य प्राणोपाधिकत्वेनाहं कर्तेति बुद्ध्ययोगात्। अहमर्थत्वे सुषुप्तावहमुल्लेखापातात्। किं च न सुषुप्तावन्तःकरणस्य लयः ''अथ हैतत्पुरुषः स्वपिती''त्यारभ्य ''गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मन'' इत्यादिश्रुतौ मनआदीनामुपरमस्यैवोक्तेः। ''अथात आत्मादेश'' इति श्रुतौ चात्मनस्त्वन्मते स एवाधस्तादि'' त्युपदिष्टेन भूम्नेवाहंकारेणाप्यैक्येऽपि पृथगुपदेशो युक्तः।

ननु– भूमात्मनोर्भिन्नत्वेन प्रत्यक्षसिद्धयोः पृथगुपदेशे ऐक्यार्थः, द्वयोः सार्वात्म्यायोगात्। अहंकारस्य त्वात्मैकत्वेन प्रत्यक्षसिद्धस्य पृथगुपदेशो भेदार्थ इति चेन्न, अहमर्थादन्यस्यात्मनः भूमाख्यब्रह्मभिन्नत्वेन प्रत्यक्षासिद्धत्वात्तयोरुपदेशो भेदार्थः। अहमर्थस्य तु ब्रह्मभिन्नत्वेन प्रत्यक्षसिद्धत्वात्तयोरुपदेश ऐक्यार्थ इति वैपरीत्यापत्तेः। त्वत्पक्षे श्रुत्युक्तानां भूमाहंकारात्मनां बिंबप्रतिबिंबमुखस्थानीयाविद्योपाधिकब्रह्मजीवचिन्मात्रत्वसम्भवेनाहंकारस्य जीवात्पार्थक्यासिद्धेश्च। ''स एवेदं सर्वम्'' आत्मैवेदं सर्व ''मित्युपसंहाराणां स एवाधस्तादहमेवाधस्तादात्मैवाधस्ता'' दित्युपक्रमैः सर्वं

समाप्नोषि ततोऽसि सर्व इत्यादिस्मृतिभिश्च सर्वगतत्वपरत्वेन सार्वात्म्योपदेशाभावाच्च। सर्वगतत्वस्य चानेकेषु सम्भवात्। भूमात्मोपदेशाभ्यामेव ब्रह्मात्मैक्यसिद्ध्या मध्येऽहंकारोपदेशवैयर्थ्याच्च। ननु परोक्षस्य ब्रह्मण आपरोक्ष्याय स्थूलारुन्धती-न्यायेनाहंकारैक्योक्तिरिति चेन्न, त्वत्पक्षे प्रत्यगर्थरूपस्यात्मन एवापरोक्षैकरसत्वेन तदैक्योक्त्यैवापरोक्षसिद्ध्या अहंकारे अविद्यमान– सार्वात्म्योक्त्ययोगात्। आत्मन आपरोक्ष्याभावे चात्मब्रह्मभेदस्य प्रत्यक्षत्वोक्त्ययोगात्। अपरोक्षाहंकारैक्योपदेश-लब्धापरोक्ष्यस्य परोक्षात्मैक्योपदेशेन हान्यापाताच्च। श्रुत्यर्थस्तु–

भूमा नारायणाख्यः स्यात्स एवाहंकृतिः स्मृतः ।
जीवस्थस्त्वनिरुद्धो यः सोऽहंकार इतीरितः ॥

अणुरूपोऽपि भगवान्वासुदेवः परो बिभुः।
आत्मेत्युक्तः स च व्यापी

इत्यादि छान्दोग्यभाष्योदाहृतस्मृत्याऽवगन्तव्यः। मोक्षधर्मे च–

अनिरुद्धो हि लोकेषु महानात्मा परात्परः ।
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ॥
सोऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः ॥ इति ।

सूत्रं च– सैव हि सत्यादय इति। अन्यथाऽहंकारस्य व्याप्त्युक्त्ययोगात्। अहंकारश्चाहंकर्तव्यं चेति श्रुतौ महाभूतान्यहंकार इति स्मृतौ च महत्तत्वकार्यं मनआदिकारणं वैकारिकादिभेदेन त्रिविधं च तत्त्वमुच्यते, न त्वहमर्थः,

महत्तत्वाद्विकुर्वाणाद्भगवद्वीर्यचोदितात् ।
क्रियाशक्तिरहंकारस्त्रिविधः समपद्यत ॥
वैकारिकस्तैजसश्च तामसश्चेत्यतो भवः ।
मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥

इत्यादिस्मृतेः। अन्यथा संविद्वाचिनो बुद्धिशब्दस्य बुद्धिरव्यक्तमेव चेति क्षेत्रे प्रयोगात्

संविदपि क्षेत्रं स्यात्। अहंकारशब्दस्य दंभाहंकारसंयुक्ता इत्यादौ देहेऽहंबुद्धौ गर्वे च प्रयोगेण गर्वोऽभिमानोऽहंकार इत्यभिधानेन चाहमर्थवाचित्वनियमाभावाच्च। अहमर्थेऽहंशब्दप्रयोगेऽप्यहंकारशब्दाप्रयोगाच्च। आत्मवाचिनोऽहंशब्दस्य दकारान्तास्मच्छब्दजत्वेनाहंकारतत्त्ववाचिनश्च मकारान्ताव्ययत्वेन भेदस्य स्पष्टत्वाच्च। अहमर्थे आत्मानात्मधर्मदर्शनं त्वसिद्धं कर्तृत्वादेरात्मधर्मत्वस्य वक्ष्यमाणत्वात्। अन्तःकरणधर्मत्वेऽपि गौरोऽहमित्यादौ देहस्येवाहं कर्तेत्यत्राप्यन्तःकरणस्याहमर्थानन्तर्भावेऽपि धर्ममात्रारोपसम्भवाच्च। या तु परकीयाहमर्थे अयमितिधीः सा अहमर्थस्यैव, प्रतिसम्बन्धिभेदेनेदमर्थत्वात्, न त्वहमर्थे, अनात्मांशसद्भावात्। अन्यथा परात्मन्ययमितिधीर्न स्यात्। न च ज्ञानानन्दरूप आत्माहं जानाम्यहं सुखीत्यहमर्थाद् भेदेन भातीति युक्तम्, अहमर्थाश्रितत्वेन प्रतीयमानयोरनयोरात्मत्वायोगात्। अस्याः प्रतीतेर्भ्रान्तित्वे च विरोधात्। न चात्मा सर्वात्मकः, अहमर्थस्त्विदमर्थव्यावृत्त इति वाच्यम्, सर्वात्मकेऽहमर्थे आत्मनीवेदमर्थव्यावृत्तिधियो भ्रान्तित्वोपपत्तेः। यत्त्वहमर्थोऽनात्मा, अहंप्रत्ययविषयत्वाच्छरीरवदिति। तन्न, त्वन्मतेऽअहमर्थान्तर्गताधिष्ठानभूतचितोऽपि तत्प्रत्ययविषयत्वात्।

किं च त्वयाऽऽत्मनो गौरोहमित्यनात्मारोपाधिष्ठानत्वं, मा न भूवं भूयासमित्यादिना परमप्रेमास्पदत्वमहमर्थस्य स्वसत्तायां प्रकाशव्यतिरेकवैधुर्येणात्मनः स्वप्रकाशत्वं चोक्तम्, तत्सर्वमहमर्थस्यानात्मत्वे न युक्तम्। न च प्रेमास्पदात्मैक्यारोपादहमर्थे तद्धीः, अन्योन्याश्रयात्। अहमर्थप्रेम्णोऽन्यस्यात्मप्रेम्णोऽननुभावाच्च। अहिते हितबुद्ध्या प्रेमोत्पत्तावपि अप्रेमास्पदे तदास्पदतारोपस्यादर्शनाच्च। वाचस्पतिना–

समारोप्यस्य रूपेण विषयो रूपवान् भवेत् ।
विषयस्य तु रूपेण समारोप्यं न रूपवत् ॥

इत्युक्तत्वेनाध्यस्तान्तःकरणगताप्रेमास्पदत्वस्यैवात्मनि प्रतीत्यापत्तेश्च। त्वद्रीत्या सुखानुभवरूपस्यात्मनः अहं सुखमनुभवामीत्यहमर्थाद् भेदेनैव प्रतीतेश्च। किं च मोक्षे अहमर्थाभावे आत्मनाशो मोक्ष इति बाह्यमतापत्तिः, प्रेमास्पदस्याहमर्थस्य

च त्वन्मतेऽपि नाशात्। तदन्यस्य शून्यादेस्तन्मतेऽप्यनाशात्। अपि चैवहं मुक्तः स्यामितीच्छा न स्यात्।

नन्वात्मन एव मुक्तिरिष्यते अहङ्कारे तु तदभेदारोपान्मुक्तः स्यामितीच्छा यथा शरीरस्यैव पुष्टीच्छायामप्यात्मनि तदैक्यारोपादहं पुष्टः स्यामितीच्छा यथा आत्मन एव सुखेच्छायामपि तदैक्यारोपाच्छरीरं सुखि स्यादितीच्छेति चेन्न, अन्योऽन्योश्रयस्योक्तेः। तत्र माममृतं कृधि "ज्योतिरहं विरजा विपाप्मा भूयास" मित्यादिश्रुतिविरोधाच्च। तत्र शरीरं पुष्टं स्यादित्यपीच्छावद् अहं सुखी स्यामित्यपीच्छावच्चेह चिन्मात्रं मुक्तं स्यादितीच्छायाः कदाप्यदर्शनेन मुक्तेरनिष्टत्वापाताच्च। यः कश्चिदात्मा मुक्तः स्यादितीच्छया च न मुमुक्षुप्रवृत्तिः। ममात्मा मुक्तः स्यादितीच्छा त्वहमर्थस्यैव मुक्तीच्छा। न च स्वतः पुरुषार्थ इच्छा नियंतुं शक्या बौद्धतार्किकादिनियमितेच्छया आत्मनाशसुखनाशादेरपि पुमर्थत्वापातात्। किं चाहमर्थोऽन्तःकरणगर्भितश्चेन्मम मन इति धीर्न स्यात् तदवच्छिन्नस्य पुनः तदनन्वयात्। किं चैवं मनः स्फुरति मनोऽस्तीति ज्ञानादहमिति ज्ञानस्य वैषम्यानुभवो न स्यात् चिदचित्संवलनविपयत्वाविशेषात्। किं च सर्वाऽपि भ्रान्तिर्द्व्यंशविषया अन्यथा निरधिष्ठानभ्रमापातात्। न चाहमिति बुद्धेर्द्व्यंशत्वमनुभूयते। यदि कल्प्यते तदाऽऽत्मेति बुद्धेरपि द्व्यंशत्वं कल्प्यताम्। ननु रूप्यं स्फुरति रूप्यमस्तीत्यत्रेवाहं स्फुराम्यहमस्मीति द्व्यंशता भाति। रूप्यभ्रमे त्विदमंशावच्छिन्नं स्फुरणमधिष्ठानमितीदं रूप्यमितिधीः, इह तु स्फुरणमात्रमधिष्ठानमिति स्फुरामीत्येव धीरिति चेन्न। त्वन्मते भ्रमज्ञानस्याप्यध्यस्तत्वेनाधिष्ठानत्वायोगात्। अहमिच्छामीतिवदहं स्फुरामीत्यहमर्थाद् भिन्नत्वेन भासमानस्य स्फुरणस्य तदैक्यारोपाधिष्ठानत्वायोगाच्च। बाधकेन बाधिष्यमाणस्याध्यस्तधर्मत्वेन भासमानस्य चास्तित्वस्याधिष्ठानत्वायोगाच्च। त्वदभिप्रेतस्याहमित्यत्रैवांशद्वयमित्यस्यासिद्धेश्च। तस्मान्नाहमर्थस्यानात्मत्वे मानम्। आत्मत्वे तु प्रत्यक्षं तावत्।

अनुमानानि च– अहमर्थः मोक्षान्वयी, तत्साधनकृत्याश्रयत्वात्, सम्मतवत्। 'अहमर्थोऽनर्थनिवृत्याश्रयः, अनर्थाश्रयत्वात्, सम्मतवत्।' न चासिद्धिः, अहमज्ञः

अहं दुःखमनुभवामीत्यबाधितानुभवात्। अनात्मत्वं नाहमर्थनिष्ठं, अनात्ममात्रवृत्तित्वात् घटत्ववदित्यादीनि। श्रुतयश्च– कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामिति, स प्राणमसृजत हन्ताहमिमास्तिस्रो देवता इत्यादौ जगत्कारणे सति प्राणमनस्सृष्टेः प्रागेवाहंत्वोक्तेः। तदात्मानमेवावेदहं ब्रह्मास्मीत्यत्र चावधारणेन शुद्धात्मनोऽहंत्वोक्तेः। अनवद्यस्य ब्रह्मणोऽहमुल्लेखोक्तेः।

अहमित्येव यो वेद्यः स जीव इति कीर्तितः ।
स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः ॥

इति श्रुतौ मोक्षान्वयोक्तेश्च। स्मृतयश्च 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति' इति स्वप्रपन्नमायानिरसनशक्तस्येश्वरस्याहमुल्लेखोक्तेः। अहं कृत्स्नस्य जगतः प्रभवः प्रलस्तथा इत्यत्राहमर्थस्य मन आदिसर्वकारणत्वोक्तेः। न चैव न भविष्यामः सर्वे वयमतः परमित्यत्रानिवृत्युक्तेः। वेदैश्च सर्वैरहमेव वेद्यः इत्यत्र सर्ववेदवेद्यत्वोक्तेः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यत्र मुक्तप्राप्यत्वोक्तेः। 'अहमात्मा गुडाकेश' इत्यादावात्मत्वाद्युक्तेः। एवं चाहं ब्रह्मास्मि तद्योऽहं सोऽसावित्यादौ परेणापि लक्षणा नाश्रयणीया। तस्मात्–

अज्ञोऽहमित्याद्यध्यक्षात् तदात्मानमिति श्रुतेः ।
अहमात्मेति च स्मृत्याऽहंत्वं शुद्धात्मनः स्थितम् ॥
अहमर्थस्यानात्मत्वभंगः ॥

## अद्वैतसिद्धिः

ततश्चाहंकारादिसृष्टिः। ननु– अहमर्थ आत्मैव, तस्य कथमविद्यातः सृष्टिः? न च– सुषुप्तौ स्वयं प्रकाशमानस्यात्मनः संभवेऽप्यनेवंविधस्याहमर्थस्याभावः, यदि च सुषुप्तावहमर्थः प्रकाशेत, तर्हि स्मर्येत ह्यस्तन इवाहंकारः, अनुभूते स्मरणनियमाभावेऽपि स्मर्यमाणात्ममात्रत्वादिति– वाच्यम्, हेतोरसिद्धेः, तर्के इष्टापत्तेः। न ह्यद्यापि स्वप्रकाशात्मान्यत्वमहमर्थे सिद्धमस्ति। आत्मान्यत्वेनाप्रकाशत्वसाधने तेन च तदन्यत्वसाधने

(अद्वैतसिद्धिः)

अन्योन्याश्रयः। न चाहमर्थस्यापरामर्शः, सुखमहमस्वाप्सं न किंचिदवेदिषमिति तस्यैव परामर्शादिति– चेन्न, अहंकारस्तावदिच्छादिविशिष्टतयैव गृह्यत इत्यावयोः समम् । सुषुप्तौ च नेच्छादय इति कथं तदाऽहमर्थानुभवः ? न च– इच्छादिगुणविशिष्ट एवाहमर्थो गृह्यत इत्यत्र न नः संप्रतिपत्तिरिति– वाच्यम्, गुणिग्रहणस्य गुणग्रहणव्याप्तत्वाद्, अन्यथा रूपादिहीनोऽपि घटः प्रथेत। न च– रूपादिरहितानां तेषामसत्त्वं तत्र बीजमिति– वाच्यम्, पूर्वरूपनाशाग्रिमरूपानुत्पत्तिक्षणाद्यक्षणादौ तद्विनापि सत्त्वात्। एवं च गुणग्रहणे कथं गुणिग्रहणम्? तथा च निर्गुण एवात्मा गृह्यत इति स्वीकर्तव्यम्। अनुभवाभावे च न तस्य जागरे परामर्शः। तथा चाज्ञानाश्रयत्वेन सुषुप्तावनुभयमानादात्मनोऽहंकारो भिन्नः। एवमेवात्मान्यत्वे सिद्धे अस्वप्रकाशत्वसाधने नान्योन्याश्रयः। न च तर्हि 'अहमस्वाप्स'मित्यहमर्थस्य परामर्शानुप्रवेशानुपपत्तिः, तदंशे परामर्शत्वासिद्धेः। एवं सत्यपि यथाऽज्ञानांशे तस्य परामर्शत्वं, तथोपपादितमधस्तात्। यद्यप्यहमस्वाप्समित्यादिज्ञानान्नान्य आत्मपरामर्शः, तथाप्यहमर्थस्य सुषुप्तिकालाननुभूतत्वेन तत्काले अज्ञानाश्रयत्वेन चानुभूतात्मन्येव परामर्शत्वपर्यवसानम्। अत एव चिदस्वपीत् स्वयमस्वपीदिति परामर्शाकारतापत्तिर्निरस्ता, तत्कालानुभूतान्तःकरणसंसर्गेण अहमित्याकारोपपत्तेः। यत्तूक्तं विवरणे– 'अन्तःकरणविशिष्ट एवात्मनि प्रत्यभिज्ञानं ब्रूमः, न निष्कलङ्कचैतन्ये, तस्य मोक्षावस्थायिनः शास्त्रैकसमधिगम्यत्वाद्' इति। तदत्र न विरोधाय, मोक्षावस्थायिनः शास्त्रैकसमधिगम्यत्वादिति हेतूक्त्या न निष्कलङ्क इति उपाधिमात्रविरहिणि प्रत्यभिज्ञाननिषेधेन चान्तःकरणपदस्य उपाधिमात्रपरत्वात्। तथा च सुषुप्तावप्यज्ञानोपहित एवात्मा गृह्यते। किं चान्तःकरणविशिष्टे प्रत्यभिज्ञाननिषेधो नाभिज्ञानषेधोऽपीति न विरोधः, सुषुप्तावभिज्ञाया एवोक्तत्वात्। न च यद्यहमर्थो न परामृश्येत, तर्हि एतावन्तं कालं सुप्तोऽहमन्यो वेति' संशयः स्यात्, न त्वहमेवेति निश्चय इति वाच्यम्, सुषुप्तिकालानुभूतात्मैक्याध्यासादिति गृहाण। यथ पूर्वदिनानुभूतदेवदत्तादभिन्नतयानुभूते चैत्रे सोऽयं न वेति न संशयः, किंतु स एवेि निश्चयः। किञ्च निश्चये सति संशयाभावनियमः, न तु निश्चयाभावे संशयनियमः। तदुक्तम् 'आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्यारोपः' इति। न च– एतावन् कालमहं स्वप्नं पश्यन्नासं जाग्रदासमित्यत्रैवाहमस्वाप्समित्यत्रापि अहमंशे परामर्शत्वानुभवा कथं तत्रापरामर्शत्वमिति– वाच्यम्, परामृश्यमानात्मैक्यारोपात्तद्धानांशे परामर्शत्वाभिमानात

(अद्वैतसिद्धिः)

न च– अपरामर्शे परामर्शत्वारोपो न दृष्ट इति– वाच्यम्, तद्भिन्ने तत्त्वेनानुभूयमाने परामर्शत्वारोपदर्शनात्।

अत एव– अहमर्थस्यात्मान्यत्वे यः पूर्वं दुःखी, सोऽधुना सुखी जात इतिवद् पूर्वं मदन्यः सुषुप्तः सोऽधुना अहं जात इति धीः स्यादिति– निरस्तम्, यथा खेत्वेन प्राक् ज्ञानं, तथा मदन्यत्वेन प्राक् ज्ञानाभावात्। सुषुप्तावहमर्थाप्रकाशवत् न्यत्वस्याप्यप्रकाश एव। एवं च प्रागसत्त्वाग्रहणात् पूर्वकालगृहीतेनाभिन्नतया गृह्यमाणत्वाच्च नाहङ्कारे जन्मप्रत्ययः विवेकिनां चैतादृग्बुद्ध्याविष्टापत्तेः। न च– सिद्धे अहमर्थस्यात्मान्यत्वे परामृश्यमानात्मैक्यारोपः, सिद्धे च तस्मिन् सुप्तावप्रकाशेनाहमर्थस्यात्मान्यत्व-सिद्धिरित्यन्योन्याश्रय इति– वाच्यम्, आत्मान्यत्वसिद्धेः प्रागेवाहमर्थापरामर्शस्य साधनाद्, अहमस्वाप्समित्यस्यैवात्मपरामर्शत्वाङ्गीकारेण न दृष्टहानादृष्टकल्पनापत्तिः। अत एव च सुषुप्तावहमर्थप्रकाशे ह्यस्तन इव स्मर्येतेत्यत्र नेष्टापत्त्यवकाशः। किं च 'एतावन्तं कालमहमित्यभिमन्यमान आस'मिति परामर्शः स्यात्। न च– अहमर्थप्रकाशे तदभिमानापादनं कर्णस्पर्शे कटिचालनमिति– वाच्यम्, तवैव हि तत्। अहमर्थमात्रसापेक्षतया तदभिमानप्रकाशयोरुभयोः समव्याप्ततया परस्परप्रकाशेन परस्परपरामर्शापादनस्याव्यधि-करणत्वात्। न च तवापि 'आत्मेत्यभिमन्यमान आस'मिति परामर्शापत्तिः, अहंकारस्य तत्र तन्त्रतया तदभावे तदापादयितुमशक्यत्वात्। यत्तु– सुषुप्तावहमर्थो भासत एव। 'न किंचिदहमवेदिष'मिति अज्ञानपरामर्शस्यात्माद्यज्ञानादन्यदिवाहमर्थाज्ञानादन्यदेवाज्ञानं विषयः, अन्यथा विरोधाद्– इति। तदज्ञानविजृम्भितम्, न हि साक्षिवेदनमज्ञानविरोधि। सुषुप्तौ च यथाहमर्थानवभासः तथोक्तम्। न विजानात्ययमहमस्तीति श्रुतिरपि तदानींतनाहमर्थाज्ञाने प्रमाणम्। न चेयं श्रुतिर्नात्मानं न परांश्चेति सुषुप्तावात्माज्ञानश्रुतिवद्विशेषाज्ञानपरा, 'अहरहर्ब्रह्म गच्छन्ति सति संपद्य न विदु'रित्यात्मवेदनबोधकश्रुतिविरोधेन विशेषाज्ञानपरत्वं युक्तम्। न च प्रकृते तथा, विरोधाभावात्।

यत्तु– अहमर्थस्तावत् स्मर्ता। स चाविद्यावच्छिन्नचैतन्यं वा ? अन्तःकरणावच्छिन्नचैतन्यं वा ? आद्ये योऽहमकार्षं सोऽहं सौषुप्तिकाज्ञानादि स्मरामीत्यनुभवविरोधः। अन्त्ये त्वहमर्थस्यैव तदनुभवितृत्वं वाच्यम्, स्मृतिसंस्कारानुभवानामेकाश्रयाणामेव कार्यकारणभावाद्, योऽहमन्वभूवं सोऽहं स्मरामी'ति प्रत्यभिज्ञानाच्च इति। तत्र, दत्तोत्तरत्वात्। उक्तं

(अद्वैतसिद्धिः)

ह्यविद्यावच्छिन्नचैतन्यमनुभवितृ, तदेव चान्तःकरणावच्छेदेनानुभूयमानं स्मर्त्रीति न तयोर्वैरूप्यम्। न च– अविद्यावच्छिन्नचितोऽपि नैक्यमस्ति, अन्तःकरणरूपोपाधिभेदेन भेदादिति– वाच्यम्, अविद्यावच्छिन्न एवान्तःकरणावच्छेदात्। न च– तथाप्यविद्यान्तःकरणरूपोपाधिभेदेन मठाकाशतदन्तःस्थघटाकाशयोरिव उपहितभेदः स्यादिति वाच्यम्, दृष्टान्तासंप्रतिपत्तेः। तयोरेवोपाध्योः परस्परमुपहितभेदकत्वम्, यौ परस्परानुपहितमुपधत्तः। अन्यथा कम्ब्वच्छिन्नग्रीवावच्छिन्नाकाशादन्य एव घटाकाशः स्यात्। न चैवं सुषुप्तावहमर्थाभावे अहं निर्दुःखः स्यामितीच्छया सुषुप्त्यर्थं प्रवृत्त्ययोगः, 'कृशोऽहं स्थूलो भवामी'तिवत् प्रवृत्त्युपपत्तेः। न च– तत्र कार्श्यादिनिष्कृष्टस्य शरीरस्यैव स्थौल्याधिकरणतया विवेकिनामुद्देश्यत्वमिति– वाच्यम्, प्रकृतेऽप्यन्तःकरणादिनिष्कृष्टस्यैव तदुद्देशविषयत्वात्।

ननु– 'योऽहं सुप्तः सोहं जागर्मि' 'योऽहं पूर्वेद्युरकार्षं सोऽहमद्य करोमी'ति प्रत्यभिज्ञानुपपत्तिः, अहमर्थस्य भेदात्। कृतहानाकृताभ्यागमप्रसङ्गश्च, कर्तुर्भोक्तुश्चाहमर्थस्य भिन्नत्वाद्, अभिन्ने चैतन्ये कर्तृत्वाद्यभावात्, तदारोपस्याप्यभावाद्, देहादावतिप्रसङ्गाच्चेति– चेन्न, सुषुप्तौ कारणात्मना स्थितस्यैव उत्पत्त्यङ्गीकारेण सर्वोपपत्तेः। न च– 'अथ हैतत्पुरुषः स्वपिती'त्यारभ्य 'गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मन' इत्यादिश्रुतौ मनआदीनामेवोपरमोक्तेर्नाहंकारोपरम इति– वाच्यम्, मनस उपरमे तेनैवाहंकारोपरमस्यापि प्राप्तेः। अहंकारो हि अनुभवामीत्यात्मानुबन्ध्यनुभवस्याहं कर्तेत्यचिदनुबन्धिकर्तृत्वादेश्चाश्रयः चिदचित्संवलनात्मकत्वादध्यस्तः। तस्य चाचितोऽन्तःकरणस्योपरमे उपरतिः। 'अथातोऽहंकारादेशः अथात आत्मादेश' इति श्रुतिरपि पृथगुपदेशेन पार्थक्ये प्रमाणम्।

ननु– आत्मनस्त्वन्मते 'स एवाधस्ता'दित्युपदिष्टेन भूम्नेवाहंकारेणाप्यैक्येऽपि पृथगुपदेशो युक्तः। न च– भूमात्मनोर्भिन्नत्वेन प्रत्यक्षसिद्धयोः पृथगुपदेश ऐक्यार्थः, द्वयोः सार्वात्म्यायोगाद्, अहंकारस्य तु आत्मैकत्वेन प्रत्यक्षसिद्धस्य पृथगुपदेशो भेदार्थ इति– वाच्यम्, अहमर्थादन्यस्यात्मनो भूमाख्यब्रह्मभिन्नत्वेन प्रत्यक्षासिद्धत्वात्तयोरप्युपदेशो भेदार्थः, अहमर्थस्य तु ब्रह्मभिन्नत्वेन प्रत्यक्षसिद्धत्वात् तयोरुपदेश ऐक्यार्थ एव किं न स्यात्– इति चेन्न, अहंकाराद् भिन्नात्मनो भूमरूपब्रह्मभिन्नत्वस्य प्रत्यक्षासिद्धत्वेऽपि तदभिन्नत्वस्यापि तदसिद्धतया उभयोः सार्वात्म्योपदेशानुपपत्तिसहकारेणास्याः श्रुतेस्तयोरभेदपरत्वमुचितम्, प्रकृते चाभेदपरत्वे विरोधः, जडाजडयोरैक्यायोगात्। न च– त्वन्मते भूमाहंकारात्मनां

(अद्वैतसिद्धिः)

बिम्बप्रतिबिम्बमुखस्थानीयाविद्योपाधिकब्रह्मजीवचिन्मात्रत्वसंभवेनाहंकारस्य जीवात् पार्थक्यासिद्धिरिति– वाच्यम्, 'यत्र नान्यत् पश्यति' 'स एवाधस्ता'दित्यादिना भूमस्वरूपोक्त्यनन्तरं यत्रेत्यधिकरणाधिकर्तव्यनिर्देशात्स इति पारोक्ष्यनिर्देशाच्च द्रष्टजीवादन्यत्वप्रसक्तौ तद्वारणार्थं 'अथातोऽहंकारादेश इत्यहंकारेण भूम्नि निर्दिष्टे अहंकारस्य देहादिसंघाते अविवेकिप्रयोगदर्शनात् तदभेदप्रसक्तौ निष्कृष्टाहंकारकेवलात्मस्वरूपमादाय 'अथात आत्मादेश' इति द्रष्टृभेद उच्यत इत्येतादृशार्थपरत्वेन बिम्बप्रतिबिम्बकल्पनाया अत्रासंभवात्। संभवे वा अविद्योपाधिकजीवस्याहंकारत्वोक्तिः स्थूलारुन्धतीन्यायेन। अत एव– 'स एवेदं सर्वम्' 'अहमेवेदं सर्वम्' 'आत्मैवेदं सर्व' मित्याद्युपसंहाराणां 'स एवाधस्तादहमेवाधस्तादात्मैवाधस्ता'दित्युपक्रमैः 'सर्वं समाप्नोषि ततोऽसि सर्व' इत्यादिस्मृतिभिश्च सर्वगतत्वपरत्वेन न सार्वात्म्यपरत्वम्, येनाहंपदस्य निष्कृष्टाहंकारचैतन्यपरत्वं स्यात्। सर्वगतत्वं चानेकेष्वपि संभवत्येव। भूमात्मोपदेशाभ्यामेव ब्रह्मात्मैक्यसिद्ध्या मध्ये अहंकारोपदेशवैयर्थ्यं चेति– निरस्तम्। 'स भगवः कस्मिन् प्रतिष्ठित' इति प्रश्नानन्तरं किं क्वचिदधिष्ठानत्वमात्रं पृष्टं? परमार्थतः क्वचिदधिष्ठितत्वं वा? आद्ये स्वे महिम्नीत्युक्त्वा द्वितीये भूमातिरिक्तमेव नास्तीत्येतदर्थपर– 'अन्यो ह्यन्यस्मिन् प्रतिष्ठित' इति पूर्ववाक्यानुसारेण 'स एवाधस्ता'दित्यादेरपि सार्वात्म्यपरत्वे निश्चिते एकत्रैव वाक्ये उपक्रमादिकल्पनेनार्थान्तराकल्पनात्, कल्प्यमानस्य च प्रकृतार्थानुपपादकत्वात्, सर्वगता जातिरिति पक्षे व्यापकजातेरिव भूम्नोऽपि अन्याधिष्ठितत्वसंभवात्, 'सर्वं समाप्नोषी'त्यादिस्मृतेः सार्वात्म्यपरत्वस्य उपपादितत्वात्। नापि मध्ये अहंकारोपदेशवैयर्थ्यम्, ब्रह्मण आपरोक्ष्याय अहंकारैक्योक्तेः। न च– त्वन्मते प्रत्यगर्थरूपस्यात्मन एवापरोक्षैकरसत्वेन तदैक्योक्त्यैवापरोक्ष्यसिद्ध्या अहंकारे अविद्यमानसार्वात्म्योक्त्ययोग इति– वाच्यम्, आत्मसंबन्धेनैवाहंकारोऽप्यपरोक्ष इत्यात्मैक्यादेवापरोक्ष्यं यद्यपि सिद्धं, तथाप्यहंकारे आपरोक्ष्यस्य सुप्रसिद्धत्वादहंकारोक्तिर्नायुक्ता। यत्तु–

'भूमा नारायणाख्यः स्यात् स एवाहंकृतिः स्मृतः।
जीवस्थस्त्वनिरुद्धो यः सोऽहंकार इतीरितः।
अणुरूपोऽपि भगवान् वासुदेवः परो विभुः।
आत्मेत्युक्तः स च व्यापी'

इत्यादिस्मृत्या श्रुतेः सार्वात्म्यं नार्थः, किं तु सर्वगतत्वम्– इति। तन्न, श्रुतिविरोधेन

(अद्वैतसिद्धिः)

स्मृतेरेव सार्वात्म्यपरत्वम्, न तु स्मृत्या श्रुतेरन्यथा नयनम्। न च– मोक्षधर्मे–

अनिरुद्धो हि लोकेषु महानात्मा परात्परः ।
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ॥
सोऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः ।

इत्यनेन 'सैव हि सत्यादय' इति सूत्रेण चाहंकारस्यात्मत्वम्, अन्यथा व्याप्त्युक्तिरयुक्ता स्यादिति– वाच्यम्, 'अहंकारश्चाहंकर्तव्यं चे'ति श्रुतेः 'महाभूतान्यहंकार' इति स्मृतेः अहंकारस्य व्यापकत्वासंभवाद् 'अहं मनुरभवमित्यादाविवाहम्पदस्य निष्कृष्टाहंकार-चैतन्यपरत्वात्। ननु– अनयोः श्रुतिस्मृत्योर्महत्तत्त्वकार्यं मनआदीनां कारणं वैकारिकादिभेदेन त्रिविधमहंकारादिपदवाच्यं विषयः, न त्वहमर्थः, तथा च स्मृतिः–

महत्तत्वाद्विकुर्वाणाद्भगवद्वीर्यचोदितात् ।
क्रियाशक्तिरहंकारस्त्रिविधः समपद्यत ॥

इत्यादेरविरुद्धार्थमादायोपपत्तेः। विरुद्धार्थत्वकल्पनायां 'बुद्धिरव्यक्तमेव चे'त्यत्र क्षेत्रे प्रत्युक्तबुद्धिशब्देन संविद उक्तौ संविदोऽपि क्षेत्रत्वापत्तिः। न च– बुद्धिशब्दस्य नानार्थत्वम्, न त्वहंकारस्यात्मातिरिक्तार्थकत्वमिति– वाच्यम्, 'दम्भाहंकारसंयुक्ता' इत्यादौ देहे अहंबुद्धौ गर्वे च प्रयोगेण 'गर्वोऽभिमानोऽहंकार' इत्यभिधानेन चाहमर्थवाचित्वनियमाभावात्, तथा चात्मवाच्यहंशब्दोऽस्मच्छब्दसिद्धः, अहंकारशब्दोऽनात्मवाची। तत्पर्यायस्त्वहंशब्दो मान्ता-व्ययमिति– चेन्न, मान्तदान्तत्वभेदेनार्थभेदकल्पनमयुक्तम्। सर्वेषामेव तेषां 'अह'मिति प्रतीयमानाहंकारविषयत्वमेव, पर्यायतयैव प्रयोगदर्शनात्। अहंकारातिरिक्तात्मनि प्रयोगस्तु लक्षणया, मान्तदान्तत्वेनानिर्धारिताहंशब्दस्याहंकारे प्रयोगदर्शनस्य नियामकत्वात्। यथा–

अनिरुद्धो हि लोकेषु महानात्मा परात्परः ।
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ॥ इति ।
सोऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः ।

इत्यत्र लक्षणयाऽहंकारशब्दः आत्मनीति। यत्तु अहमर्थे आत्मानात्मधर्मदर्शनमसिद्धम्, कर्तृत्वादेरात्मधर्मत्वाद्– इति। तत्र कर्तृत्वादेरनात्मधर्मत्वं यथा तथा वक्ष्यामः। ननु–

(अद्वैतसिद्धिः)

अनात्मधर्मत्वेऽपि कर्तृत्वादेस्तदाश्रयस्याभानेऽपि कर्तृत्वादिकमात्मनि भासताम्, 'गौरोऽह'मित्यत्र शरीरगतगौरत्वमिवेति चेन्न, दृष्टान्तासंप्रतिपत्तेः, तत्रापि देहत्वेनाभानेऽपि गौरत्वमनुष्यत्वादिना तत्प्रतीतेः।

अनुमानं च – अहमर्थः, अनात्मा, अहंप्रत्ययविषयत्वात्, शरीरवत्। न चाहमर्थान्तर्गताधिष्ठानभूतचितोऽपि तत्प्रत्ययविषयत्वात् तत्र व्यभिचारः, येन रूपेणाहम्प्रत्ययविषयता, तेन रूपेण तस्याप्यनात्मत्वात् स्वरूपेणाहम्प्रत्ययविषयत्वाभावान्न व्यभिचारः। अहमर्थः, आत्मान्यः, अहंशब्दाभिधेयत्वात्, अहंकारशब्दाभिधेयवत्। न चात्रासिद्धिः, पर्यायताया दर्शितत्वात्। न च– त्वयाप्यात्मनो गौरोऽहमित्यनात्मारोपाधिष्ठानत्वं, मा न भूवं भूयासमित्यादिना परमप्रेमास्पदत्वं, अहमर्थस्य स्वसत्तायां प्रकाशाव्यभिचारेणात्मनः स्वप्रकाशत्वं चोक्तम्, तत्सर्वमहमर्थस्यानात्मत्वे न युक्तं स्यादिति– वाच्यम्, इदम इवाधिष्ठानावच्छेदकत्वेनाधिष्ठानत्वोक्तेः। परमप्रेमास्पदत्वमहमर्थे आत्मैक्यारोपात्। न चैवमन्योन्याश्रयः, सुषुप्तिकालीनप्रकाशाप्रकाशाभ्यां वैधर्म्येण भेदसाधनात्। न चाहमर्थप्रेम्णोऽन्यस्य प्रेम्णोऽननुभवः, परामर्शसिद्धसुषुप्तिकालीनतादृशप्रेमानुभवस्य सत्त्वात्। न च अहिते हितबुद्ध्या प्रेमोत्पत्तिदर्शनेऽपि अप्रेमास्पदे प्रमास्पदतारोपो न दृष्ट इति– वाच्यम्, अहमर्थे आत्मैक्यारोपनिबन्धनं प्रेमास्पदत्वम्, न तु स्वाभाविकमिति ब्रूमः, न तु प्रेमास्पदत्वारोपम्। अहमर्थात्मनोर्भेदेऽपि अहमर्थस्य प्रकाशाव्यभिचारः स्वप्रकाशात्मसंबन्धं विना न घटत इति सोऽपि तत्र प्रमाणमिति नायुक्तिलेशोऽपि। न च–

समारोप्यस्य रूपेण विषयो रूपवान् भवेत् ।
विषयस्य तु रूपेण समारोप्यं न रूपवत् ॥

इति वाचस्पत्युक्तेरन्तःकरणगताप्रेमास्पदत्वस्यैवात्मनि प्रतीत्यापत्तिरिति– वाच्यम्, किमधिष्ठानगतधर्मस्यारोप्येऽभानमापाद्यते? आरोप्यगतधर्मस्याधिष्ठाने भानं वा? नाद्यः, यद्धर्मवत्तया ज्ञायमाने अधिष्ठाने आरोप्यनिवृत्तिस्तस्यैवारोप्येऽभाननियमेन प्रकृते तदभावात्। न द्वितीयः, अधिष्ठानगतधर्मप्रतीत्यविरोधिनः आरोप्यगतस्याधिष्ठाने भानेऽपि प्रकृते अविरोधात्। आत्मैक्याध्यासकाल एव प्रेमास्पदत्वसंभवेनारोप्येऽपि अप्रेमास्पदत्वाप्रतीतेः कुतो

(अद्वैतसिद्धिः)

विषये तत्प्रतीतिः ? यथा इदमिति रजताध्यासकाल एव रजते अनिदन्त्वाप्रतीतिः। यत्तु– कैश्चित् परिह्रियते– सुखानुभवरूपस्यात्मनो अहमर्थात् भेदेनैव सुखमनुभवामीत्यादौ प्रतीतिः– इति, तन्न, वैषयिकसुखानुभवस्यात्मान्यत्वात्। न च– मोक्षे अहमर्थाभावेनात्मनाशो मोक्ष इति बाह्यमतापत्तिः, प्रेमास्पदस्याहमर्थस्य त्वन्मतेऽपि नाशात्, तदन्यस्य शून्यस्य तन्मतेऽप्यनाशादिति– वाच्यम्; औपाधिकप्रेमास्पदनाशेन बाह्यमतप्रवेशापत्तौ शरीरनाशेऽपि तदापत्तेः। एतावताहमर्थस्य मुक्त्यनन्वयेऽपि 'माममृतं कृधि' 'ज्योतिरहं विरजा विपाप्मा भूयासमिति श्रुतिरपि चैतन्यगतमेवामृतत्वं विषयीकरोति, 'अहं पुष्टः स्या'मितीच्छेव स्वसमयविद्यमानशरीरवृत्तिपुष्टिम्। न च– 'शरीरं पुष्टं स्या'दिति शरीरमात्रे पुष्टीच्छावद् 'आत्ममात्रं मुक्तं स्या'दितीच्छाया अदर्शनेन मुक्तेरनिष्टत्वापत्तिरिति– वाच्यम्; इच्छासमये अन्तःकरणाध्याससंभवेन यद्यपि नात्ममात्रगतमुक्तीच्छा, तथापि विशिष्टगतमुक्तीच्छाया एव विवक्षितविवेकेन विशेष्यमात्रगतमुक्तिविषयत्वपर्यवसानात् तस्यामिष्टत्वोपपत्तेः। न चाहमर्थस्यान्तःकरणग्रन्थित्वे 'मम मन इति धीर्न स्यात्; चिदचिद्ग्रन्थिरहंकारः, अचिन्मात्रमन्तःकरणम् इति भेदेन षष्ठ्युपपत्तेः। न चैवं– 'मनः स्फुरति मनोऽस्ती' त्यादिज्ञानादहमिति ज्ञानस्य वैषम्यानुभवो न स्यात्, चिदचित्संबलनविषयत्वाविशेषादिति– वाच्यम्, संवलनं हि न संबन्धमात्रम्, किन्तु तादात्म्येन प्रतिभासः। स च तत्र नास्तीति विशेषात्।

ननु– सर्वापि भ्रान्तिर्द्व्यंशविषया; अन्यथा निरधिष्ठानकभ्रमापत्तेः, न च 'अह'मिति बुद्धेः द्व्यंशत्वमनुभूयते। कल्प्यते चेत्, आत्मेति बुद्धेरपि द्व्यंशत्वं कल्प्यतामिति– चेन्न, किमिदं द्व्यंशविषयत्वम् ? अधिष्ठानारोप्यविषयत्वं चेत्तर्हीष्टापत्तिः, अहमर्थमिथ्यात्वस्यैव द्वितीयांशविषयत्वे प्रमाणत्वात्। आत्मेत्यत्र तु द्व्यंशविषयत्वे नैवं प्रमाणमस्ति, येन तथा कल्प्यते। न च द्व्यंशविषयत्वं भिन्नभिन्नप्रकारावच्छिन्नाधिष्ठानारोप्यविषयत्वम्, रजतत्वसंसर्गारोपनिबन्धनेदंरजतमिति प्रतीतौ व्यभिचारात्। न हि रजतत्वेऽपि तत्र कश्चन प्रकारो भासते, रजतादेस्तत्र प्रकारत्वकल्पने मानाभावात्, तत्कल्पनां विनैवोपपत्तेः, तथा कल्पनायामतिप्रसङ्गादप्रयोजकत्वाच्च। यद्वा– अत्रापि 'अहं स्फुरामि' 'अहमस्मी'ति द्व्यंशता भात्येव 'रूप्यं स्फुरति' 'रूप्यमस्तीत्यत्रेव। इयांस्तु विशेषः– यत्तत्र इदंत्वावच्छिन्नस्फुरणमधिष्ठानमिति इदं रूप्यमिति धीः, इह तु स्फुरणमात्रमधिष्ठानमिति

(अद्वैतसिद्धिः)

स्फुरामीत्येव बुद्धिः। न च भ्रमस्याप्यध्यस्तत्वेनाधिष्ठानत्वायोगः, भ्रान्तोऽसि, स्फुरणं चैतन्यं ब्रूमः, न त्वविद्यावृत्त्यादिकम्। एवं च न प्रत्यक्षमहमर्थस्यात्मत्वे प्रमाणम्।

नाप्यनुमानम्। तथा हि– अहमर्थो, मोक्षान्वयी, तत्साधनकृत्याश्रयत्वात्, संमतवद्– इत्यत्र विशेषव्याप्तौ दृष्टान्ताभावः। न हि कृत्याश्रये मोक्षान्वयित्वं क्वचित् संप्रतिपन्नमस्ति। सामान्यव्याप्तेः स्वर्गसाधनकृत्याश्रये ऋत्विजि स्वर्गानन्वयेन व्यभिचारात्। अहमर्थः, अनर्थनिवृत्त्याश्रयः, अनर्थाश्रयत्वात्, संमतवदित्यत्र शरीरे व्यभिचारः। न च तत्रानर्थाश्रयत्वमसिद्धम्, 'अहमज्ञ' इति प्रतीत्या अहमीव 'स्थूलोऽहमज्ञ' इति प्रतीत्या शरीरेऽपि तत्सत्त्वाद्, अन्यथा असिद्धिप्रसङ्गात्। अनात्मत्वं, नाहमर्थवृत्ति, अनात्ममात्रवृत्तित्वाद्, घटत्ववदित्यत्र कृत्याश्रयावृत्तित्वमुपाधिः। नापि 'कस्मिन्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' 'स प्राणमसृजत हन्ताहमिमास्तिस्रो देवता' इत्यादौ जगत्कारणे सति प्राणमनःसृष्टेः पूर्वमहंत्वोक्तेः, 'तदात्मानमेवावेद् अहं ब्रह्मास्मीत्यवधारणेन शुद्धात्मनोऽहन्त्वोक्तेः, अनवद्यस्य ब्रह्मणोऽहमुल्लेखोक्तेः, 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः। स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः॥' इत्यादौ मोक्षान्वयोक्तेश्चैताः श्रुतयः प्रमाणम्, विशिष्टवाचकस्यैवाहम्पदस्य लक्षणया निष्कृष्टाहंकारचैतन्ये प्रयोगात्। लक्षणाबीजभूताऽनुपपत्तिरुक्ता। एतेन– 'मामेव ये प्रपद्यन्ते' इत्यादिस्मृतयोऽपि– व्याख्याताः। अत एव 'तद्योऽहं सोऽसा' वित्यादावपि लक्षणाऽऽश्रयणीया, विशिष्टवाचकत्वेन क्लृप्तस्य विशेष्ये लक्षणाया आवश्यकत्वात्।

॥ इत्यद्वैतसिद्धावहमर्थस्यानात्मत्वोपपत्तिः ॥

## न्यायामृततरङ्गिणी

**अहमर्थो नात्मा आत्मनि प्रकाशमानेप्यप्रकाशमानत्वादित्यत्र विशेषणासिद्धिमाह ॥ पश्चादित्यादिना ॥ विशेष्यासिद्धिमाह ॥ अनेवंविधस्येति ॥ अप्रकाशमानस्य। अथात इत्यादिच्छांदोग्ये भूमप्रकरणे यत्र नान्यत्पश्यति नान्यच्छ्रणोति नान्यद्विजानाति स भूमेत्यादिनोक्तभूमानं स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतस्स उत्तरतः स एवेदं सर्वमिति सर्वात्मकत्वेनोक्त्वा अथातोऽहंकारादेश एवाहमेवाधस्तादहमुपरिष्टादित्यादिनाहंकारं च सर्वात्मकत्वेन निरूप्य अथात आत्मादेश एवात्मैवाधस्तादात्मैवोपरिष्टादि-**

(तरङ्गिणी)

त्यादिनाहंकारोपदेशादात्मन उपदेशांतरादहंकारो नात्मेत्यर्थः ॥ आत्मानुबंधीति ॥ आत्मत्वनियतः । अनात्मानुबंधी अनात्मत्वव्याप्यत्वान्नियतः ॥ चिदचिदिति ॥ शुद्धचिद्रूपत्वाभावादित्यर्थः । विशेष्यासिद्धिं परिहरति ॥ यदि चेति ॥ ॥ ह्यस्तन इति ॥ यथा पूर्वदिनेहमित्यनुभूतोहमर्थोद्य स्मर्यते तथा सुषुप्तावहमर्थोनुभूतश्चेत्सुप्तोत्थितेन स्मर्येतेत्यर्थः ॥ आत्मेति ॥ आत्मनाननति-भिन्नत्वादित्यर्थः । आत्माहमर्थयोरभेदवादिनं प्रत्यात्मनः प्रकाशे सत्यहमर्थस्याप्रकाश इत्येतदसिद्ध-मित्यभिसंधायाह ॥ तत्रेति ॥ ॥ अहमर्थ इति ॥ अहमर्थस्याप्रकाशमानात्मान्यत्वेन सुषुप्तौ न प्रकाशसिद्धिः तत्सिद्धौ च तथाविधात्मभिन्नत्वसिद्धिरित्यर्थः ॥ अहमर्थ इति ॥ सुप्तोत्थित-मात्रस्यात्मपरामर्शोहमर्थगोचरः आत्मपरामर्शत्वात् यथा संप्रतिपन्न इत्यन्वयव्यतिरेक-व्याप्तिकमनुमानमित्यर्थः । हेतौ व्यभिचारं परिहरति ॥ अस्वाप्समितीति ॥ अभिज्ञाभिलपनयोः समानार्थत्वादित्यर्थः ॥ अंतःकरणेति ॥ स्वयंप्रकाशस्य ज्ञानांतरागम्यत्वात्तद्विनाशप्रयुक्त-संस्काराभावात्स्वरूपस्य चाविनाशादविनाशिनः संस्काराभावान्नात्मनि प्रत्यभिज्ञा संभवतीत्या-शंक्योक्तं विवरणे अंतःकरणविशिष्ट इत्यादीत्यवगंतव्यं। निष्कलंके निष्कलंकात्मस्वरूपमात्रे। ननु विवरणवाक्यस्य निरुपाधिकात्मपरामर्शनिषेधे तात्पर्यं। न त्वहंकारविशिष्टतद्विधान इति चेन्न। अंतःकरणस्यान्वहं विनाशात्तद्विशिष्टस्यापि विनाशित्वमिति न प्रत्यभिज्ञाविषयत्वमिति शंकोत्तररूपेण संसारावस्थायामंतःकरणविशिष्टरूपानपायादित्युत्तरविवरणवाक्येन विरोधात्। ननु निश्चये सति संशयाभावनियमेपि निश्चयाभावे संशयनियमोसिद्ध इत्यत आह ॥ न त्विति ॥ कदाचिदपि तादृशसंशयः स्यादित्यर्थः। ननु परामृश्यमानात्मनि प्रत्यक्त्वनिश्चयान्न तत्र तद्विरुद्धपराक्त्वरूपान्यत्वसंशय इति शंकते। ॥ नन्विति ॥ प्रत्यक्त्वनिश्चय एवाहंत्वनिश्चय इति वक्तुमाह ॥ प्रत्यक्त्वमिति ॥ ॥ निर्भास्येति ॥ निर्भास्यं दृश्यं पराक् तत्प्रतिकूलं चित्त्वं प्रत्यक्त्वमित्यर्थः ॥ अन्यत्वेति ॥ अन्यत्वं पराक्त्वं तद्विरुद्धं स्वत्वं प्रत्यक्त्वमित्यर्थः। आद्य आह ॥ चिदिति ॥ द्वितीय आह ॥ स्वयमिति ॥ द्वितीये दोषांतरमाह ॥ घटादिरिति ॥ घटादिरपि प्रत्यगर्थः स्यादित्यर्थः ॥ विवरण इति ॥ अहंकारस्य पराक्त्वसापेक्षत्वादात्मनश्चानपेक्षत्वान्न तयोरभेद इत्युक्ते तर्ह्यात्मनोपि पराग्व्यावृत्त्या सापेक्षत्वान्नात्मत्वं स्यादिति शंकायां विवरणे उक्तमात्मन इति। सर्वात्मकत्वात्। पूर्णत्वात् ॥ घट्टकुटीति ॥ केचिद्वणिजः शुल्कमदित्संतः शुल्कग्रहणस्थलं वंचयित्वाऽन्येन पथा जिगमिषंतो विस्मृतमार्गाः यत्र घट्टे शुल्कग्राहिणां कुटी स्थिता तत्रैव प्रभाते आगताः। सोयं घट्टकुटीप्रभातवृत्तांतः ॥ नन्विति ॥ आत्मांशे परामर्शोऽहमर्थे त्वनुभव इत्यर्थः ॥ न किंचिदिति ॥ अज्ञानांशे परामर्शस्तु तवापि संमतः। अत एव न किंचिदवेदिषमित्यादावित्युक्तं। ननु सुषुप्तावज्ञानस्य सत्त्वात्तदनुभवेन तस्य परामर्शो

(तरङ्गिणी)

युज्यते अहमर्थस्य तु तदाऽसत्त्वान्न तस्य जाग्रति परामर्श इत्यत आह ।।न हीति।। अज्ञानस्याहमर्थाश्रितस्यैव परामर्शात्तथैव सुषुप्तावनुभवो वाच्य इति तदाप्यहमर्थसत्त्वसिद्धिरित्यर्थः ।।एतावंतमिति।। स्वप्नावस्थायामहमर्थस्य सत्त्वात्स्वप्नादुत्थितस्य स्वप्नं पश्यन्नासमित्यहमर्थ-विषयः परामर्शो भवति। तस्मिंश्च परामर्शे स्वप्नं पश्यन्नासमिति परामर्शवानस्मीत्यादि-नाऽहमर्थविषयपरामर्शत्वमनुभूयते यथा यथा वा जाग्रत्यनुभूतार्थेहमर्थविषयपरामर्शे जाग्रदंतरकालीने जाग्रदासमिति परामर्शवानस्मीत्यनेन परामर्शत्वमनुभूयते। तथाऽस्वाप्स-मित्यत्राप्यस्वाप्समिति परामर्शवानस्मीत्यनुभवेनाहमर्थविषयकज्ञाने परामर्शत्वमनुभूयत इत्यर्थः ।।अन्यथेति।। अहमर्थे परामर्शाभावे ।।यः पूर्वमिति।। ननु दुःखित्वेन प्राक् ज्ञानवन्मदन्यत्वेन प्राक् ज्ञानाभावात्कथमेवं परामर्श आपाद्यते। सुषुप्तौ चाहमर्थोप्रकाश एव न तु प्रागसत्वग्रहणं। अतः कथं तत्र जन्मप्रत्ययोपीति चेन्नैवं। अस्वाप्समिति स्वापक्रियाकर्तृत्वेनाहमर्थपरामर्शो न स्यादित्यत्र तात्पर्यात्। यत्तु प्रागसत्त्वाग्रहणान्न जन्मप्रत्यय इति तन्न। प्राक्सत्त्वाग्रहणमात्रेण जन्मप्रत्ययोपपत्तेः। अहमर्थेपरामर्शत्वानुभवादित्यत्रान्यथासिद्धिं शंकते ।। नन्विति ।। पुरोवर्तिरजत-योरैक्यारोपात्तज्ज्ञानयोस्तदारोपदर्शनेप्यनुभवपरामर्शयोः परामर्शत्वारोपादर्शनादित्याह ।।अपरामर्श इति।। ।।सिद्ध इति।। अहमर्थस्यैव परामृश्यमानत्वेन तयोरैक्यारोपः संभवतीत्यर्थः ।।सिद्धे चेति।। परामृश्यमानात्मैक्यारोपे सिद्धे तन्निबंधनोऽहमर्थानुभवेपि परामर्शत्वाभिमान इति तस्यापरामृश्यमानत्वसिद्धौ सुषुप्तावप्रकाशमानत्वेन प्रकाशमानात्मान्यत्वसिद्धिरितीतरेतराश्रयत्व-मित्यर्थः। एतेन स्वापकर्त्रैक्यारोपादहमर्थेऽस्वाप्समिति तत्कर्तृत्वारोपः पूर्वकालगृहीतेनाभिन्नतया गृह्यमाणत्वाच्च नाहंकारे जन्मप्रत्यय इति निरस्तं। स्वापकर्तुरात्मनः पूर्वकालवर्तिनश्च तस्यैवाहमर्थत्वेन तदैक्यारोपासंभवात्। अन्यथाऽन्योन्याश्रयात्। आत्मपरामर्शस्याहमर्थांशा-परामर्शत्वे दोषांतरमाह ।।अहमितीति।। अहमंशे परामर्शादन्य आत्मपरामर्शो नास्तीत्युक्तं त्वया पुनरहमर्थे परामर्शत्वरहितस्यैवात्मपरामर्शत्वमुक्तमतो दृष्टहानादीत्यर्थः। एतेनास्वाप्स-मित्यस्यैवात्मपरामर्शत्वांगीकारान्न दृष्टहानादीति निरस्तं। अस्वाप्समित्यस्य तव मतेऽहमर्थांशे परामर्शत्वाभावात् ।।एतेनेति।। अहमर्थे परामर्शत्वोपपादनेनेत्यर्थः। सुप्तोत्थितस्यात्मपरामर्शो यद्यहमर्थपरामर्शः स्यादहंशब्दोल्लेखी स्यात् यथा ह्यस्तनाहमर्थपरामर्श इत्यत्राहंशब्दोल्लेख्यनु-भवजन्यत्वमुपाधिरित्याह ।। अहंशब्देति।। अन्यथेति ।। ह्यस्तनवैषम्यमात्रेणाहमर्थे परामर्शत्वाभावे आत्मांशेपि परामर्शत्वं न स्यादित्यर्थः।। ।।निरुत्तरमिति।। अस्मदुक्तादन्यदुत्तरं नास्तीत्यर्थः ।। तथापीति।। आत्मपरामर्शस्याहमर्थपरामर्शत्वेऽहंशब्दोल्लेखाभावपीत्यर्थः ।।अहमर्थप्रकाशेनेति।। तदभिमानाप्रकाशसहितेनेत्यर्थः। एतेन अहमर्थमात्रसापेक्षतया तदभिमानप्रकाशयोरुभयोः

(तरङ्गिणी)

समव्याप्ततयाऽभिमानपरामर्शापादनं व्यधिकरणमिति निरस्तम्। अभिमानप्रकाशयोः समव्याप्तत्वेप्यभिमानपरामर्शप्रयोजकस्य सुषुप्तावभिमानप्रकाशस्याभावात्। न चाहमर्थप्रकाश एवाभिमानप्रकाश इति वाच्यम्। तथात्वे इष्टापत्तेः ॥ अन्यथेति॥ अहमर्थप्रकाशमात्रेण तदभिमानपरामर्शापादने आत्मप्रकाशमात्रेण तदभिमानपरामर्शोपि स्यादित्यर्थः। न चाहंकारस्य तादृशपरामर्शप्रयोजकतया तदभावे तदापादनासंभव इति वाच्यं। तर्हि मां प्रति तदापादनस्येष्टत्वात्। ननु सुषुप्तावहमर्थप्रकाशे न किंचिदहमवेदिषमित्यहमर्थावच्छिन्नाज्ञानपरामर्शो न स्यात्। प्रकाशमाने तादृशज्ञानविरोधादित्यत आह ॥ न किंचिदहमिति॥ न किंचिदहमवेदिषमिति परामृश्यमानज्ञानं प्रति यथाऽऽत्मा नावच्छेदकः प्रकाशमानत्वात्तथाहमर्थोपि। अज्ञानं त्वात्माहमर्थाश्रयं तदन्यविषयमात्माद्यज्ञानादन्यदेव परामृश्यत इत्यर्थः। ननु दृष्टांतासंप्रतिपत्तिः साक्षिणि प्रकाशमान एवाज्ञानस्य मयांगीकृतत्वादित्यत आह ॥ अन्यथेति॥ साक्षिणोप्यज्ञानविरोधित्वस्योपपादितत्वादित्यर्थः। ननु छांदोग्ये आत्मज्ञानार्थिनमिंद्रं प्रति प्रजापतिना सुप्ते पुरुषे आत्मत्वेन निर्दिष्टे नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति इंद्रेणाहमर्थाद्यज्ञानेन दूष्यत इत्यत आह ॥ या त्विति॥ श्रुतावात्माज्ञानस्याप्युक्तत्वात्सावश्यं संकोचनीयेत्याह ॥ सापीति॥ नात्मानं न परांश्चैव न सत्यं नापि चानृतं। प्राज्ञः किंचन संवेत्ति तुर्यं तत्सर्वदृक् सदेति यथा आत्मविशेषाज्ञानपरा तथाहमर्थविशेषाज्ञानपरोक्तश्रुतिरित्यर्थः। न चाहरहर्ब्रह्म गच्छंति सति संपद्य न विदुरित्यात्मवेदनबोधकश्रुतिविरोधेन नात्मानमित्यस्य विशेषाज्ञानपरत्वं युक्तं उक्तश्रुतेस्तु न श्रुत्यंतरविरोध इति वाच्यम्। अहरहरित्यादेरात्मवेदनबोधकत्वाभावात्। प्रत्युत न विदुरित्यनेन स्वस्वरूपाज्ञानस्यैव प्रतीतेः। नात्मानमित्यादिनैवाहरहः श्रुतिबाधसंभवाच्च। अंतःकरणावच्छिन्नस्याज्ञानादिस्मर्तृत्वानुरोधेन तस्यैव तदनुभवितृत्वमित्यर्थापत्त्या सुषुप्तावहमर्थसिद्धिरित्याह ॥ किं चेत्यादिना॥ अहमर्थस्यानुभवितृत्वे प्रत्यक्षं प्रमाणमप्याह ॥ योहमिति॥ स्मर्त्रनुभवित्रोर्भेदे प्रत्यभिज्ञानविरोध इति भावेन तयोर्भेदाभावमाशंक्य भेदमुपपादयति ॥ यद्यपीति॥ ॥ तथापीति॥ चैतन्यजीवयोः स्मर्त्रनुभवित्रनुगमेपीत्यर्थः ॥ तयोरिति॥ चैतन्यजीवयोः। ननु कौंतेयस्यैव राधेयत्ववदविद्योपहितस्यानुभवितुरेवांतःकरणोपहितस्य स्मर्तृत्वान्न तयोर्भेद इत्याशंक्य परिहरति ॥ यद्यप्यविद्येति॥ ननूपाधिभेदेनोपधेयभेदस्तत्रैव यत्र परस्परानुपहित उपाधी उपधत्तः। अन्यथा कंब्ववच्छिन्नग्रीवावच्छिन्नाकाशादन्य एव घटाकाशः स्यात्। मैवम्। उपाधिभेदादुपधेयभेदस्यावश्यकत्वात्। अन्यथा साक्षिण एवांतःकरणतद्वृत्तिघटाद्यवच्छिन्न इति साक्ष्येव प्रमाता प्रमाणं फलं प्रमेयं च स्यादिति सर्वसंकरः स्यात्। कंब्वाद्यवच्छिन्नादन्यस्यैव घटाकाशत्वात्।

(तरङ्गिणी)

अंतःकरणरूपोपाधिसंबंधं विनैतदुपधेयस्याविद्योपधेयस्य च भेदोस्तीत्याह ॥शुद्धचैतन्यस्येति॥ अत एवोपधेयभेदे च सतीति चकारः ॥अहं निर्दुःखः स्यामिति॥ न च कृशोहं स्थूलो भवामीतिवत्प्रवृत्त्युपपत्तिरिति वाच्यं। तत्र कार्श्यादिविशिष्टस्य शरीरस्यैव स्थौल्याधिकरणतया विवेकिनामुद्देश्यत्वात्। तत्र शरीरं स्थूलं स्यादितिवच्चिन्मात्रं निर्दुःखं स्यादितीच्छायाः प्रकृतेऽभावात् ॥योहं सुप्त इति॥ तव मतेऽहमर्थस्यासुप्तत्वादित्यर्थः। अहमर्थव्यक्त्यैक्यप्रत्यभिज्ञाबाधमप्याह ॥पूर्वेद्युरिति॥ अहंकारेति॥ अहंकारव्यक्तेः पूर्वेद्युर्विद्यमानायाः सुषुप्तौ विनाशादित्यर्थः। ननु सुषुप्तौ कारणात्मनावस्थितस्याहमर्थस्य जागरे उत्पत्त्यंगीकारे न प्रत्यभिज्ञाविरोधादीति चेन्न। कारणात्मनावस्थितस्याकर्तृत्वात्। कर्तृभूतपरिणामविशेषस्य च विनाशादित्यभिसंधायोक्तं व्यक्तिभेदादिति। ननु कर्तृभोक्त्रोश्चैतन्यानुगमान्न कृतहान्यादीत्यत आह ॥अभिन्न इति॥ ननु चैतन्ये कर्तृत्वाद्यभावेप्यारोपितेन कर्तृत्वादिना तयोरभेद इत्याशंक्य परिहरति ॥कर्तृत्वाद्यारोपस्येति॥ स्थूलः करोमीति केवले चैतन्ये आरोपितकर्तृत्वाप्रतीतेरहं करोमीत्येव तदारोपो वाच्यः। तथा च कर्तृत्वस्य मुख्यः प्रत्ययोऽन्यो नास्तीत्येव मुख्य इति न तदारोप इत्यर्थः ॥अहंकारलय इति॥ प्राणस्यापि लयापत्त्येति शेषः ॥भेदपक्ष इति॥ अभिमंतृत्वेन प्राणनादिधर्मित्वेन तयोर्भेदादित्यर्थः। तदुक्तं विवरणे। नाहंकारमात्रत्वं प्राणस्योच्यते किं तु प्राणस्य पृथक्सतः पंचधा व्यापारहेतोः कारणीभूतस्याहंकारस्य क्रियाशक्तिरस्ति मनोधीनतादर्शनात्प्राणवृत्तेरिति ॥अभेदपक्षेपीति॥ प्राणांशं प्राणशक्तिं। तदुक्तं विवरणे। प्राणलक्षणक्रियाशक्त्यंशं वा विहाय विज्ञानशक्त्यंशस्य लयः कल्प्यतां। सांशत्वादंतःकरणस्येति। आद्यपक्षे दोषमाह ॥प्राणस्येति॥ द्वितीये शक्तितद्वतोर्भेदे स एव दोषः। अभेदे त्वाह ॥अहमर्थत्व इति॥ प्राणस्य सत्त्वात् सुप्तावहमर्थस्यापि सत्त्वापत्त्या तदुल्लेखः स्यादित्यर्थः ॥किं चेति॥ य एष विज्ञानमयः पुरुषस्तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाय एषोंतर्हृदय आकाशस्तस्मिंच्छेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुरित्यादौ वागादीनामुपरम एवोक्तो गृहीतमिति श्रवणात्। न तुलय इत्यर्थः। यस्तु मनआदीनामुपरमस्यैवोक्तेरित्यनेन मूलवाक्येन अथ हैतत्पुरुष इति श्रुतिर्मन आदीनामुपरमपरतया व्याख्याता नाहमर्थस्येति बुद्ध्या आक्षिपति मनउपरमे तेनैवाहंकारोपरमस्यापि प्राप्तेरिति सोबोधात्। न हि श्रुतावहंकारस्यानुक्तिं ब्रूमः किं तु लयस्य मनस आहंकारिकत्वेनानहंकारत्वाच्च ॥अहंकारेणैक्येपीति॥ अनेकेषां सर्वात्मनोपदेशानुपपत्तेरिति भावः। ननु नोपदेशानुपपत्तिः। अन्यथाप्युपपत्तेरिति शंकते ॥नन्विति॥ ॥भिन्नत्वेनेति॥ व्यर्थस्य किंचिदिष्टज्ञापकत्वादिति भावः। ननु भेदोपदेशस्य व्यर्थस्यापि कथं भूमात्मनोरभेदज्ञापकत्वमित्यत

(तरङ्गिणी)

आह ॥ द्वयोरिति ॥ तन्मात्रवृत्तिधर्मबोधनमुखेन तन्मात्रत्वमवगम्यत इति भावः ॥ अहंकारस्य त्विति ॥ अहंकारे सार्वात्म्योपदेशस्तु तदधिष्ठानात्मसंबंधेनोपचारादिति भावः ॥ अहमर्थादिति ॥ अहमर्थान्यात्मनि सार्वात्म्योपदेशस्त्वहमर्थवदुपचारादिति भावः। एतेन अहंकारभिन्नात्मनो भूमरूपब्रह्मभिन्नत्वेन प्रत्यक्षासिद्धत्वेपि तदभिन्नस्यापि तदसिद्धतयोभयोः सार्वात्म्योपदेशानुपपत्तिसहकारेणास्याः श्रुतेस्तयोरभेदपरत्वमिति निरस्तम्। अहंकारभिन्नात्मभूम्नोरभेदस्य प्रत्यक्षासिद्धत्वेपि तयोर्भेदस्यापि तदसिद्धतया तद्बोधनेन वाक्यस्यार्थवत्त्वात्। सार्वज्ञं त्वहमर्थवदुपपत्स्यते ॥ ऐक्यार्थ इति ॥ अहमर्थस्य जडत्वान्न तदैक्यायोग इत्यत आह ॥ त्वत्पक्ष इति ॥ चिदैक्योपदेशसामर्थ्यादेवाहमर्थस्य कर्तृत्वाद्याश्रयस्याप्यजडत्वसिद्धेरिति भावः ॥ स एवेदमित्यादि ॥ तथा च नानेकेषां सार्वात्म्यानुपपत्त्या तदभेदासिद्धिरिति भावः। ननु स भगवः कस्मिन्प्रतिष्ठित इति प्रश्नानंतरं किं क्वचिदधिष्ठानत्वमात्रं पृष्टं परमार्थतः क्वचिदधिष्ठितत्वं वा। आद्ये स्वे महिम्नीत्युक्त्वा द्वितीये भूमातिरिक्तमेव नास्तीत्येतदर्थपरान्योह्यस्मिन्प्रतिष्ठित इति पूर्ववाक्यानुसारेण स एवाधस्तादित्यादेरपि सार्वात्म्यपरत्वे निश्चिते एकवाक्ये उपक्रमादिकल्पना न युक्तेति चेत्। मैवं। यतस्स भगवः कस्मिन् प्रतिष्ठित इति पृष्टे स्वे महिम्नीत्युत्तरिते महिमशब्देन गवाश्वादिकं चेत् तन्मया महिमत्वेन नोक्तमिति यदि वा न महिम्नीत्यनेनोक्ते तत्र हेत्वाकांक्षायां ब्रवीमीति होवाच अन्यो ह्यन्यस्मिन् प्रतिष्ठितः अन्योल्पज्ञः अन्यस्मिन् प्रतिष्ठितः भूमापरिपूर्णः अतो नान्यस्मिन् प्रतिष्ठित इत्युक्ते तर्हि कथं स्वे महिम्नि प्रतिष्ठित इत्युच्यत इत्याकांक्षायां भूम्न आधारभूतः स्वमहिम्नोच्यते स एवाधस्तादित्यादिना। तत्र कः प्रसंगः सार्वात्म्यस्य। ननु भूम्नस्स इति परोक्षनिर्देशात्परोक्षत्वप्राप्तौ तद्वारणायापरोक्षाहंकारैक्यमथातोहंकारादेश इत्यनेनाभिधायनिष्कृष्टाहंकारकेवलात्मस्वरूपैक्यं बोध्यते अथात आत्मादेश इत्यनेनेति नाहंकारवाक्यवैयर्थ्यमिति शंकते ॥ नन्विति ॥ ब्रह्मणः भूमरूपस्य ॥ आपरोक्ष्यायेति ॥ अपरोक्षद्रष्टृभेदायेत्यर्थः ॥ अहंकारेति ॥ अहंकारस्यापरोक्षत्वात् भूम्नस्तदभेदोक्त्याऽपरोक्षत्वसिद्धिः। अन्यथा परोक्षापरोक्षयोरैक्यानुपपत्तेरित्यर्थः ॥ त्वत्पक्ष इति ॥ त्वन्मतेऽपरोक्षात्मसंबंधादेवाहंकारेप्यापरोक्ष्यमिति मुख्यापरोक्षात्माभेदोपदेशेनैव भूम्नोप्यापरोक्ष्यस्यापि सिद्धिरित्यर्थः ॥ लब्धापरोक्ष्यस्येति ॥ भूमाख्यब्रह्मण इति शेषः। ननु तव मते ब्रह्मभिन्नाहंकारस्य कथं सर्वव्यापित्वमपीत्यतः श्रुत्यर्थमाह ॥ श्रुत्यर्थस्त्विति ॥ स एवाहंकृतिः स्मृत इत्यतः परं अकार्योहमिति ह्येष ततोहंकार उच्यते। जीवस्थ इत्यादिपाठः। स च व्यापीत्येतदनंतरं न च भेदो हरौ क्वचिदिति पाठः। यत्तु श्रुतिविरोधेन स्मृतेरेवान्यथा नयनमिति तन्न। उक्तरीत्याऽनुपपन्नायाः श्रुतेः स्मृत्या व्याख्याततत्वात्। नतु स्मृतिविरोधेन सान्यथा

(तरङ्गिणी)

नीयते ॥सैव हीति॥ एष तु वा अतिवदति यः सत्येनातिवदतीत्यादौ सत्यत्वे च विजिज्ञासितव्यमित्यादिनोक्ताः सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहंकारात्मांताः सत्यादयः सर्वे परदेवतारूपा इत्यर्थः ॥अन्यथेति॥ अहंकारस्याब्रह्मत्व इत्यर्थः। नन्वहंकारस्य ब्रह्मत्वे प्रश्नोपनिषदि यथा सोम्य वयांसि वासो वृक्षं संप्रतिष्ठंते एवं हवैतत्सर्वं पर आत्मनि संप्रतिष्ठते पृथिवी च पृथिवीमात्रा चेत्यारभ्य अहंकारश्चाहंकर्तव्यं चेत्यादिनाहंकारस्य पृथिव्यादिवत् परमात्माश्रितत्वं प्रतीयमानं विरुध्यत इत्यत आह ॥अहंकारश्चेति॥ ॥नत्वहमर्थ इति॥ जीवो जीवस्थोऽनिरुद्धश्चेत्यर्थः ॥अतो भव इति॥ एतस्मात्त्रिविधाहंकारान्मनःप्रभृतीनां भव उत्पत्तिरित्यर्थः। नन्वेवमहंकारशब्दो नानार्थः स्यादित्यत आह ॥संविद्वाचिन इति॥ स्मार्तप्रयोगाद्बुद्धिशब्दवन्नानार्थत्वं न दोष इत्यर्थः। प्रयोगबाहुल्यमेवाह ॥अहंकारशब्दस्येति॥ देहेहंबुद्धाविति॥ देहविषयकाहंबुद्धावित्यर्थः ॥अहमर्थ इति॥ शब्दभेदान्न नानार्थत्वमित्यर्थः। शब्दभेदमेव साधयति ॥आत्मेति॥ तस्मात् अथातोहंकारादेश इति श्रुतौ न जडोहंशब्देनोच्यते। किं तु जीवस्थोनिरुद्धः। अहंकारश्चाहंकर्तव्यं चेत्यादिश्रुतिस्मृत्योस्त्वहंकारशब्देन न जीव उच्यते किं तु त्रिविधोहंकार इति न श्रुतिस्मृती आत्मभिन्नाहमर्थे प्रमाणमिति ॥अहमर्थ इति॥ तथा च चिदचित्संवलनममानकमित्यर्थः ॥अंतःकरणेति॥ सर्वांशावच्छेदेनाहमर्थे न कर्तृत्वादिकमित्यर्थः। ननु गौरोहमित्यादावपि देहत्वेनाभानेपि गौरत्वमनुष्यत्वादिना त्प्रतीतेर्दृष्टांतासंप्रतिपत्तिरिति चेन्न। यत्र सामग्रीवशात्सुरभि जलमितिवद्गौरोहमिति धर्ममात्रारोपस्तस्यैव दृष्टांतत्वात्। न हि सर्वत्राभेदारोपसामग्रीनियमः। नन्वहमर्थस्य प्रत्यङ्मात्रत्वे परकीयघटे घटशब्दवत्परकीयेऽहमर्थेहंशब्दः प्रयुज्येतेत्यत आह ॥या त्विति॥ संबंधिभेदेनाहंशब्दवाच्यस्यापीदं शब्दाभावे बाधकमाह ॥अन्यथेति॥ एतच्चोपलक्षणं परकीयाहमर्थेऽचित्संबंधेनेदंशब्दत्वे स्वकीयाहमर्थोपीदंशब्दः स्यादिति च बोध्यं। अहमर्थस्यानात्मत्वे प्रत्यक्षमाशंक्य निराकरोति ॥न चेति॥ ॥अस्या इति॥ चिदचित्संवलनमपि न सिध्येदित्यर्थः ॥त्वन्मत इति॥ आत्मन्येव व्यभिचार इत्यर्थः। नन्वधिष्ठानचितो येन रूपेणाहंप्रत्ययविषयत्वं तेन रूपेणानात्मत्वमपि। स्वरूपेण त्वात्मत्वेपि तेन रूपेणाहंप्रत्ययविषयत्वस्याप्यभावान्न व्यभिचार इति चेन्न। चिदंशं विना स्वरूपेणाहंप्रत्ययविषयत्वस्य पक्षेप्यभावात् ॥गौरोहमितीति॥ अहमर्थस्यैव गौरभ्रमाधिष्ठानत्वप्रेमास्पदत्वप्रतीतेरित्यर्थः ॥अन्योन्येति॥ माहं न भूवं भूयासमित्यहमर्थप्रेमास्पद-निबंधनैवात्मनः प्रेमास्पदत्वसिद्धिः तत्सिद्धौ चाहमर्थे तदारोप इत्यर्थः। ननु नाहमर्थद्वारात्मनि प्रेमसिद्धिः किं तु स्वत एवेति नान्योन्याश्रय इत्यत आह ॥अहमर्थेति॥ न च सुषुप्तिकालीनात्मप्रेमैव तादृश इति वाच्यम्। तदाप्यहमर्थप्रेमातिरिक्तात्मप्रेम्णोऽभावात्। अन्योन्याश्रयाच्च ॥अहित इति॥

(तरङ्गिणी)

ननु न प्रेमास्पदत्वारोपं ब्रूमः किं तु प्रेमास्पदात्मैक्यारोपादहमर्थे प्रेमास्पदत्वं न तु तत्स्वाभाविकमितीति चेन्न। अहमर्थमनंतर्भाव्यात्मनि प्रेमादर्शनादित्युक्तत्वात्। अन्यस्यान्यात्मनावभासस्यैवारोपत्वाच्च ॥ समारोप्यस्येति॥ आरोप्यसर्पादेर्भीषणत्वादिना रूपेण विषयो रज्ज्वादी रूपवान् भीषणत्वादियुक्तो भवति विषयस्य रज्ज्वादिरूपेणाभिगम्यत्वादिना समारोप्यं सर्पादिरूपवदभिगम्यं न भवतीत्यर्थः। ननु सर्पगतानिदंत्वादिवदंतःकरणगताप्रेमास्पदत्वस्यापि नात्मन्यारोप इति चेन्न। अधिष्ठानत्वौपयिकतत्सामान्यधर्माविरुद्धानां समारोप्यगतानां विषये आरोपदर्शनात्। न हीदंत्वादिवत्प्रेमास्पदत्वमप्यहमर्थारोपहेतुः। येन तद्विरुद्धानिदंत्ववदप्रेमास्पदत्वस्याप्यारोपो न स्यात्। यत्त्वधिष्ठानगतधर्मप्रतीत्यविरोधिन आरोप्यगतस्याधिष्ठाने भानमिति तन्न। अन्योन्याश्रयात्। यत्त्वात्मैक्याध्यासकाल एव प्रेमास्पदत्वसंभवेनारोप्येप्यप्रेमास्पदत्वाप्रतीतेः कुतो विषये तत्प्रतीतिरिति तन्न। वैपरीत्यस्यैवोचितत्वात्। अहमर्थे प्रेमास्पदत्वारोपहेतुमात्मैक्यारोपं दूषयति ॥ त्वद्रीत्येति॥ आत्मनोहमर्थोद्भेदप्रतीतेर्न तत्र तस्यारोप इत्यर्थः। क्वचित्त्वहमनुभवामीति सुखानुभवाद्भेदेनैव प्रतीतेश्चेति पाठः। तत्र सुखस्यानुभवो यस्मिन्नित्यहमर्थ एव विवक्षितः। न चायं वैषयिकसुखानुभवः स चानात्मेति वाच्यं। त्वन्मते विषयसंबंधेनापि स्वरूपसुखमेवाभिव्यज्यत इत्युक्तेः। अहं स्फुरामीत्यत्र भेदप्रतीतेश्च ॥ मोक्ष इति॥ न चौपाधिकप्रेमास्पदनाशेपि न बाह्यमतापत्तिः। अन्यथा शरीरनाशेपि तदापत्तिः स्यादिति वाच्यं। स्वाभाविकप्रेमास्पदस्यान्यस्याननुभवेनाहमर्थस्यैव स्वाभाविकप्रेमास्पदत्वात् ॥ अहं मुक्त इति॥ अहमर्थस्य मुक्त्यनन्वयादित्यर्थः ॥ अन्योन्येति॥ आत्माहमर्थयोर्भेदाधीनारोपसिद्धावुक्तेच्छाया अबाधकत्वं तदबाधकत्वे च भेदसिद्धिरित्यर्थः। ॥ तत्र मामिति॥ यत्रानंदाश्च मोदाश्च मुदः प्रमुद आसते। कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीत्यादिश्रुतौ मदर्थस्यैवामृतत्वप्रार्थनश्रवणान्न तत्र तदारोप इत्यर्थः ॥ अनिष्टत्वेति॥ इच्छाविषयत्वाभावापातादित्यर्थः। आत्मन्यहमर्थमनंतर्भाव्येच्छा नास्तीत्याह ॥ यः कश्चिदिति॥ ॥ ममेति॥ चिन्मात्रस्य ममात्मत्वाभावादित्यर्थः। नन्वहं मुक्तः स्यामितीच्छा नास्त्येव। किं तु मुच्यतामित्यादिरूपेत्यत आह ॥ न च स्वत इति॥ ॥ ममेति॥ ममेत्यत्र मनः प्रवेशादित्यर्थः। ननु दंडिनो दंड इतिवदुपलक्षणत्वमस्त्वित्यत आह ॥ तदवच्छिन्नस्येति॥ तद्विशिष्टस्येत्यर्थः। उत्सर्गप्राप्तविशेषणत्वे बाधकाभावेनोपलक्षणत्वायोगात् ॥ चिदचिदिति॥ न च संबलनं न संबंधमात्रं किं तु तादात्म्येन प्रतिभास इति वाच्यं। त्वन्मते स्फुरणादावपि तदारोपात् ॥ व्यंशविषयेति॥ भिन्नभिन्नप्रकारावच्छिन्नाधिष्ठानारोप्यविषयेत्यर्थः। तेन नेष्टापत्तिः। न च रजतत्वसंसर्गारोपनिबंधनेनेदंरजतमिति प्रतीतौ व्यभिचार इति वाच्यं। रजतादेरेव तत्र प्रकारत्वात्। नन्वहमिति

(तरङ्गिणी)

बुद्धेर्भ्रमत्वानुरोधेन व्यंशत्वमपि तत्र कल्प्यत इत्यत आह ॥यदीति॥ ॥त्वन्मत इति॥ नन्वविद्यापवृत्तिरूपभ्रमज्ञानस्याध्यस्तत्वेपि चैतन्यरूपस्फुरणस्य न तथात्वमिति चेन्न। चैतन्यमात्रस्याहंज्ञानत्वे सुषुप्त्यादावपि प्रतीतिमात्रशरीराहमनुवृत्त्यापातेनाविद्यावृत्त्यवच्छिन्नचित एवाहंज्ञानस्य त्वया वाच्यत्वात्। तस्य चाध्यस्तत्वादिति भावः। रूप्यमस्तीत्यादौ न सत्ता रूप्याधिष्ठानमित्याह ॥बाधकेनेति॥ तथा च दृष्टांतासंप्रतिपत्तिरिति भावः ॥प्रत्यक्षमिति॥ अहमनुभवामीत्यादिकं ॥तत्साधनेति॥ अपरिक्रीतसंबंधिकृतिर्विवक्षिता। तेन विशेषव्याप्तौ दृष्टांताभावः सामान्यव्याप्तौ तु स्वर्गसाधनकृत्याश्रये ऋत्विजि व्यभिचार इति निरस्तं। नन्वविद्यादिरूपस्यानर्थस्य चिन्मात्राश्रितत्वेनासिद्धिरित्यत आह ॥न चेति॥ ॥अहमज्ञ इति॥ अहमर्थाश्रितत्वेनैवाज्ञानप्रतीतेरित्यर्थः। ननु स्थूलोहं न जानामीति शरीरस्याप्यज्ञानाश्रयत्वात्तत्र व्यभिचार इत्यत उक्तमबाधितेति। शरीरमनंतर्भाव्याहमज्ञ इत्येव प्रतीतेः शरीरस्य तदाश्रयत्वं बाधितमिति भावः ॥अनात्मत्वमिति॥ न च कृत्याश्रयावृत्तित्वमुपाधिः। त्वन्मते मुक्तौ साध्याव्याप्तेः। अहं करोमीत्यहमर्थांतर्गताधिष्ठानचितोपि कृत्याश्रयत्वात्तत्र मुक्तेर्वृत्तेः ॥कस्मिन्न्वहमिति॥ प्रश्नोपनिषदि कस्मिन्न्वहमित्यादिप्रतिष्ठास्यामीत्यनंतरं स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीमिंद्रियं मनोन्नमन्नाद्वीर्यमित्यत्र प्राणमनःसृष्टेः पूर्वमहंत्वोक्तिः। तथा छांदोग्येपि हंताहमिमास्तिस्रो देवता इत्यादौ तेजोबन्नादिस्वरूपेण त्रिवृतं कुर्वति सच्छब्दनिर्दिष्टे ब्रह्मणि अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्माꣳसं योणिष्ठस्तन्मन आपः पीतास्त्रेधा विधीयंत इत्यादौ योणिष्ठः स प्राण इत्यादिनोक्तमनःप्राणसृष्टेः पूर्वमहंत्वोक्तिरित्यर्थः ॥तदात्मानमिति॥ बृहदारण्यके ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीत्यत्रावधारणब्रह्मशब्दाभ्यां शुद्धत्वानवद्यत्व-प्रतीतिरित्यर्थः ॥मोक्षेति॥ बंधान्वयोपि द्रष्टव्यः। न च श्रुतिस्मृत्योर्विशिष्टवाचकाहंपदस्य लक्षणया निष्कृष्टाहंकारचैतन्यपरत्वमिति वाच्यं। तद्बीजस्यानुपपत्तेरभावात्। अन्योन्याश्रयत्वोक्तेश्च। अहमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्सेति अहं मनुरभवं सूर्यश्चेति त्वद्रीत्या वामदेवस्य सर्वात्मकत्वविज्ञानप्रतिपादकं चोदाहर्तव्यं ॥एवं चेति॥ अहमर्थस्यैवात्मत्वादित्यर्थः। कर्तृत्वादिविशिष्टस्य कथमैक्यमिति चेन्न। नह्यहंशब्देन कर्तृत्वविशिष्टात्मोच्यत इति ब्रूमः। किं त्वात्मत्वविशिष्ट आत्मा। स तु वस्तुतः कर्तृत्वाश्रय इत्यन्यदेतत्। तर्ह्येतावताहंशब्दे लक्षणा कर्तृत्वादेर्मिथ्यात्वेनाप्यैक्यस्योपपत्तेः ॥अज्ञोहमिति॥ अज्ञानाश्रयत्वेनाभिमते चिन्मात्रे प्रत्यक्षेण तदात्मानमित्यादि श्रुत्याऽनवद्यस्य शुद्धस्य चाहंत्वप्रतीतेरित्यर्थः।

(तरङ्गिणी)

व्यासाद्रिसृततर्काबुपूरैः पक्षयुगंयजि।
न्यायामृततरंगिण्यां नानात्मास्मत्पदास्पदम्।
॥ अहमर्थस्यानात्मत्वभंगः ॥

## न्यायामृतकण्टकोद्धारः

नन्वथाप्यविद्या स्वीकर्तव्या। अन्यथाऽहङ्कारादिकार्यानुपपत्तेः। तथाच कार्यान्यथानुपपत्तिरेवाविद्यायां प्रमाणम्। प्रामाणिके चार्थे प्रमाणमेव विषयादि कल्पयिष्यतीत्यतोऽहमिति प्रतीयमानो नाज्ञानकार्यं किन्त्वात्मैवेति प्रतिपादयितुं परमतमनुवदति ॥ यदपीति॥ तथाच स्वप्रकाशत्वास्वप्रकाशत्वाभ्यामात्माहमर्थयोर्नैक्यमिति भावः। श्रुत्यापि तयोर्भेदमुपपादयति ॥ अथात इति॥ ऐक्ये पृथगुपदेशानुपपत्तेः पौनरुक्त्यादिति भावः। स्मृत्याप्येतमर्थं साधयति ॥ महाभूतानीति॥ नन्वहमर्थस्यात्मस्वरूपाद्भेदे आत्मसम्बन्ध्यनुभवाश्रयत्वप्रतीतिः कथमित्यतस्तदुपपादयन्नुपसंहरति ॥ तस्मादिति॥ न चात्मवत् सुप्तावप्यहमर्थस्य प्रतीयमानत्वा-दस्वप्रकाशत्वमसिद्धमित्यत आह ॥ यदि चेति॥ अनुभवकार्यस्मरणाभावेनानुभवस्याप्यसिद्धिरिति भावः। नन्वेवं तर्हि उदासीनानुभवासिद्धिरित्यत आह ॥ अनुभूत इति ॥ ॥ अहमर्थ इति॥ नन्वहमर्थस्य स्वप्रकाशात्मान्यत्वसिद्धिः सुषुप्तौ प्रकाशानुपपत्त्यैव। तदनुपपत्तिश्चनात्मान्यत्वेन येनान्योन्याश्रयः स्यात्। किन्तु प्रकारान्तरेण। तथाहि। अहमर्थस्तावदिच्छाविशिष्टो गृह्यते। गुणिग्रहणस्य गुणग्रहणव्याप्तत्वात्। अन्यथा रूपादिहीनोऽपि घटः प्रथेत। तथाचेच्छाभावेन सुषुप्तौ नाहमर्थग्रहणम्। तथाचाप्रकाशमानस्य प्रकाशमानाद्भेदसिद्धिरिति चेन्न। इच्छाविशिष्टाहमर्थग्रहणस्य ममासिद्धेः। न चोक्तगुणिग्रहणं गुणव्याप्तमिति वाच्यम्। व्याप्तेरसिद्धेः। किञ्च किं गुणिग्रहणं यावद्गुणग्रहणव्याप्तम् किं वा यत्किञ्चिद्गुणग्रहणव्याप्तमिति? नाद्योऽसम्भवात्। न हि घटादिप्रकाशे यावद्गुणप्रकाशः। न द्वितीयः। संख्यादिगुणप्रकाशस्य प्रकृतेऽपि सम्भवात्। सुखमस्वाप्समिति सुखप्रकाशस्य तदानीमपि सत्त्वाच्च। अन्यथा उक्तव्याप्त्या एकात्मापि न प्रकाशेत। न चात्मा निर्गुण एवेति वाच्यम्। वास्तवगुणवत्त्वस्याहंकारेऽप्यभावाद्। कल्पितगुणवत्त्वस्यात्मन्यपि सुवचत्वात्। घटादिदृष्टान्तश्च विषमः। चाक्षुषत्वादौ महत्त्वसमानाधिकरणोद्भूतरूपत्वादेरिव गुणिग्रहणे गुणवत्त्वादेरप्रयोजकत्वात्। तथाच सुषुप्तौ प्रकाशान्यथानुपपत्त्या न स्वप्रकाशान्यत्वसिद्धिः। एवञ्च कथं नान्योन्याश्रयः। ॥ अप्रकाशत्वेन तदन्यत्वं तदन्यत्वेनाप्रकाश इति ॥ अहमस्वाप्समिति॥ न च परामर्शस्य चिन्मात्र एव पर्यवसानमिति वाच्यम्। अनुपपत्तेरभावात्। अन्यथातिप्रसङ्गात्। नन्वयं परामर्शोऽहमर्थविषयक इति मया नाङ्गीक्रियते इति तत्राह ॥ अहमर्थ इति॥ ननु परामर्शो नाहमस्वाप्समित्येवंरूपोऽपि तु अस्वाप्समित्येव तद्रूपमतः कथमहमर्थपरामर्श इत्यत अस्वाप्समित्येतावत एव परामर्शत्वमङ्गीकृत्यापि तस्याप्य-

(कण्टकोद्धारः)

हमर्थविषयत्वमनिवार्यमित्याह ॥ अस्वाप्समित्यत्रापीति ॥ अहमर्थविषयत्वानङ्गीकारे उत्तमपुरुषप्रयोगो न स्यादित्याह ॥ अस्वाप्समितीति ॥ परामर्शस्याहमर्थविषयत्वे विवरणसम्मतिमाह ॥ उक्तञ्चेति ॥ न चान्तःकरणपदस्योपाधिमात्रपरत्वं शास्त्रैकसमधिगम्यत्वादिति हेतूक्त्या न निष्कलङ्क इति उपाधिमात्रविरहिणि प्रत्यभिज्ञाननिषेधाच्चेति वाच्यम्। तथात्वे सुप्तावपि चिन्मात्रस्य भानाभावापत्तेः। न चाहमर्थांशे न परामर्शत्वम्। अज्ञानांशेऽपि तदभावापत्तेः। न चान्तःकरणविशिष्टे प्रत्यभिज्ञानिषेधो नाभिज्ञानिषेधः। सुप्तौ त्वभिज्ञैवेति वाच्यम्। प्रत्यभिज्ञाभावे अभिज्ञाया अप्यभावापत्तेः। कार्याभावे कारणसत्त्वस्यानवश्यकत्वात् ॥ यदि चेति ॥ ननु सुषुप्तिकालानुभूतात्मैक्याध्यासान्न संशयः। किन्त्वहमेवेति निश्चयो यथा पूर्वदिनानुभूतदेवदत्ताभिन्नतयाऽनुभूते चैत्रे सोऽयं न वेति न संशयः। किन्तु स एवेति निश्चय इति चेन्न। अनुभूताननुभूतयोर्विरुद्धधर्माधिकरणत्वेनैक्याध्यासासम्भवात्। अहमर्थाभेदेनैव संशयाद्यभावोपपत्तौ ऐक्याध्यासेन तदुपपादनस्यायुक्तत्वात्। अन्यथा स्थायिपदार्थोन्मज्जनापत्तेः। प्रत्यभिज्ञाया अप्यैक्याध्यसेनापि सम्भवात्। न चात्र नाहमिति बाधकमस्ति। अन्योन्याश्रयाच्च! तस्मात् संशयादिकं दुर्वचम्। नन्वहमेवेति निश्चये प्रत्यक्त्वं भासते। तच्चात्मनिष्ठमेवेति तथा निश्चयो भविष्यतीति शङ्कते ॥ नन्विति ॥ ॥ चिदिति ॥ अत्र उभयत्र चित्त्वं स्वत्वं वा प्रत्यक्त्वमभिमतम्। चिन्निर्भास्यप्रतिद्वन्द्वि इत्यनेन चित्त्वमेव व्याख्यातम्। तथा अन्यत्वप्रतिद्वन्द्वीत्यनेन स्वत्वम्। एवञ्च चिदित्यादि संगच्छत इति द्रष्टव्यम्। यदा स्वत्वमत्यक्तं तन्नात्ममात्रनिष्ठमित्याह ॥ नापीति ॥ ॥ अहमर्थस्यैवेति ॥ परागर्थव्यावृत्तत्वं नाम तदभेदेनाप्रतीयमानत्वम्। आत्मा तु घटः सन्निति परागर्थसम्भेदेनैव प्रतीयत इति तादृशं प्रत्यक्त्वमहमर्थनिष्ठमेवेति भावः ॥ तस्मादिति ॥ तथा च नाहमर्थभेद आत्मनीति भावः। ॥ प्रतिबन्द्या समाधत्ते ॥ न किञ्चिदिति ॥ अविशेषादिति भावः। नन्वज्ञानपरामर्शेऽहमर्थो नैव विषय इत्यत आह ॥ न हीति ॥ तथा चाज्ञानपरामर्शान्यथानुपपत्तिरेवाहमर्थपरामर्शे प्रमाणमिति भावः। अहमर्थपरामर्शेऽनुभवोऽपि प्रमाणमित्याह ॥ एतावन्तमिति ॥ ॥ अन्यथेति ॥ अहमर्थस्य परामर्शत्वाभावे इत्यर्थः। न च यथा दुःखित्वेन प्राक्ज्ञानं तथा मदन्यत्वेन प्राक् ज्ञानाभावान्न तथा परामर्श इति वाच्यम्। तथापि यः सुप्तः सोऽधुना अहं जात इति परामर्शस्य वज्रलेपत्वापत्तेः। अहमिदानीं सुखी जात इतिवत् घटाद्यन्यत्वादिवत् मदन्यत्वग्रहणस्याप्यवश्यकत्वाच्च। अन्यथा कदाचित् घटान्यत्वादौ सन्देहः स्यात् ॥ अपरामर्श इति ॥ न च परामर्शभिन्ने तत्त्वेनाग्रहदशायां परामर्शत्वारोपोऽस्तु। घटभिन्ने घटत्वारोपदर्शनादिति वाच्यम्। अज्ञानांशे परामर्शत्वानुभवेन तद्भिन्नत्वस्यैवायोगात्। अज्ञाने ज्ञानत्वारोपस्य अविषये विषयत्वारोपस्य काप्यदर्शनाच्च। अत एवानुव्यवसायस्य तदंशे यथार्थत्वनियमः सिद्ध इति। न चात्मान्यसिद्धेः प्रागेवाहमर्थापरामर्शः साध्यत इति वाच्यम्। आत्मान्यत्वातिरिक्तस्य तत्साधनोपायस्य दूषितत्वात् ॥ अहमित्यतोऽन्य इति ॥ न चास्यैव परामर्शत्वेनाभ्युपगमात् नायं दोष इति वाच्यम्। तथात्वेऽहमर्थांशेऽपि तदापत्तेः ॥ एतेनेति ॥ सुप्तावहमर्थप्रकाशोपपादनेनेत्यर्थः। इष्टापत्तिमेवाह ॥ स्मर्यते हीति ॥ ॥ अन्यथेति ॥

(कण्टकोद्धारः)

यद्युक्तः परिहारः स्मर्यते इत्यस्य न भवेदित्यर्थः ॥करणत्वादिति॥ न चाहमर्थमात्रसापेक्षतया तदभिमानप्रकाशयोरुभयोः समव्याप्ततया परस्परप्रकाशेन परस्परपरामर्शापादनेन व्यधिकरणत्वमिति वाच्यम्। अहमर्थस्यात्ममात्रत्ववादिनं प्रति अहमर्थमात्रसापेक्षत्वसमव्याप्त्योरसिद्धेः ॥अन्यथेति॥ यद्यर्थप्रकाशेन तदभिमान आपाद्येतेत्यर्थः। न चाभिमानपरामर्शोऽहंकारस्य तन्त्रतया सुप्तौ चाहमर्थाभावेन तादृशपरामर्शाभाव इति वाच्यम्। अहमर्थस्यात्ममात्रत्ववादिनः सुप्तौ तदभवासिद्धेः ॥तस्मादिति॥ सुप्तावहमर्थप्रकाशे स्मर्येतेति बाधकाभावादेवेत्यर्थः। ननु सुप्तावहमर्थप्रकाशे न किञ्चिदहमवेदिषमिति परामर्शानुपपत्तिः। तत्र सर्वविषयकाज्ञानप्रतीतेरित्यत आह ॥न किञ्चिदिति॥ आत्मान्यविषयत्वेन सङ्कोचे अहमर्थान्यत्वेनापि सङ्कोचनीयम्। अविशेषादिति भावः ॥विरोधादिति॥ न च साक्षिरूपज्ञानं नाज्ञानविरोधीति न परामर्शस्य संकोच इति वाच्यम्। तर्ह्यहमर्थोऽपि साक्षिणैव भासत इत्यङ्गीकारेण तस्य प्रकाशेऽप्यज्ञानविषयतोपपत्तेः साक्षिणोऽप्यज्ञानविरोधस्योपपादितत्वाच्च। ननु सुप्तावहमर्थप्रकाशे न विजानाम्ययमहमस्मीति श्रुतिविरोधः तत्र सुप्तावहमर्थप्रकाशस्योक्तत्वादित्यत आह ॥या त्विति॥ न चात्मावेदनश्रुतिः विशेषाज्ञानविषयेति युक्तमहरहर्ब्रह्म गच्छन्ति सति सम्पद्येत्यादि श्रुत्यनुसारात्। न च तथा प्रकृते श्रुतिरस्तीति वाच्यम्। तदात्मानमेवावेदहं ब्रह्मास्मीति श्रुतिसद्भावात् अहमर्थस्यात्मानन्यत्वेन तद्वेदनश्रुतेरेवाहमर्थवेदनश्रुतित्वोपपत्तेश्च ॥किञ्चेति॥ न चात्राप्यविद्यावच्छिन्नाहमर्थावच्छिन्नयोरभेदात् स्मर्त्रनुभवित्रोरैक्यमुक्तमेवेति वाच्यम्। उपहितानुपहितयोर्भेदस्य त्वयापि वाच्यत्वात्। अन्यथा चिद्गतमुक्तेर्विशिष्टनिष्ठत्वं विशिष्टगतसंसारस्य चिन्मात्रनिष्ठत्वे बन्धमोक्षयोः समानकालीनत्वापत्तेः। तथाचाहमर्थस्यैवानुभवितृत्वमिति सुप्तावहमर्थसिद्धिरिति भावः। ननु जीवचैतन्यस्य सर्वसाधारणत्वात् तदुपाधेश्चाविद्यायाश्चैकत्वात् अनुभवितृस्मत्रोरैक्यं भविष्यतीत्यत आह ॥यद्यपीति॥ ॥तयोरिति॥ चैतन्यजीवत्वोपाध्योरित्यर्थः ॥स्मर्तुरिति॥ बन्धमोक्षयोः समकालत्वापत्येत्यर्थः। नन्वन्तःकरणस्याविद्यावच्छिन्नचैतन्यं प्रत्येवावच्छेदकत्वात् स्वातन्त्र्येण तदभावात् नाविद्यावच्छिन्नान्तःकरणावच्छिन्नयोर्भेद इति न प्रत्यभिज्ञाविरोध इत्यत आह ॥यद्यपीति॥ न च दृष्टान्तासम्प्रतिपत्तिः। तयोरेवोपाध्योः उपहितभेदकत्वं यौ परस्परानुपहितमुपधत्त अन्यथा कम्बवच्छिन्नग्रीवावच्छिन्नादन्य एव घटाकाशः स्यादिति वाच्यम्। विशेष्यविशिष्टयोर्भेदनियमेन परस्परानुपहितत्वस्याप्रयोजकत्वात्। अन्यथा शुद्धविशिष्टयोरप्यभेदापत्तौ शुद्धस्य मिथ्यात्वं विशिष्टस्य वा सत्यत्वं स्यात्। प्रकृतेऽप्यविद्यावच्छिन्नस्य विशेष्यत्वात् अन्तःकरणावच्छिन्नस्य विशिष्टत्वात्। तथाच कथं न प्रत्यभिज्ञाविरोध इति ॥किञ्चेति॥ न च कृशोऽहं स्थूलो भवामीतिवत् प्रवृत्त्युपपत्तिरिति वाच्यम्। तत्र देहस्थौल्यार्थमेव प्रवृत्तेः। अहंपदार्थे स्थौल्याद्युपचारात् तथा प्रयोगोपपत्तेः। न च प्रकृतेऽपि चैतन्यसुखार्थमेव प्रवृत्तिः, चैतन्येऽहंत्वोपचारात् तथा प्रयोग इति वाच्यम्। देह एव कार्श्यादि नाहंपदार्थे इतिवत् चैतन्य एव सुखं नाहंपदार्थ इति बाधकाभावात्। बाधकाप्रवृत्तावप्युपचारकल्पने इदं रजतमित्यत्रापि तत्कल्पनापत्तेरिति।

(कण्टकोद्धारः)

नन्वभिन्नं चैतन्यमेव प्रत्यभिज्ञाविषयो नाहमर्थ इत्यत आह ॥ अभिन्न इति॥ तथापि प्रत्यभिज्ञानुपपत्तिरेवेति भावः। उपलक्षणमेतत्। उत्तमपुरुषप्रयोगानुपपत्तिश्चेति द्रष्टव्यम्। ननु वास्तवकर्तृत्वाभावेऽपि तदारोपस्य सम्भवात् प्रत्यभिज्ञोपपत्तिरित्यत आह ॥ कर्तृत्वेति॥ तथा च तस्यापि प्रत्यभिज्ञाविषयत्वं स्यादिति भावः ॥ किञ्चेति॥ यदा मनआदीनामुपरम एवोक्ते न विनाशः तदाऽहंकारस्य न विनाश इति कैमुत्येन सिद्धिरिति भावः। न चोपरमशब्देन विनाश एव विवक्षित इति वाच्यम्। स्वव्यापाररहिते वस्तुनि उपरमशब्दप्रयोगेन विनाशे तस्याशक्तत्वात्, तथाप्यहंकारनाशानुक्तेश्च। न च मनस उपरम उक्ते अहंकारस्यापि स उक्त एवेति वाच्यम्। अहंमनसोर्भेदात्। अन्यथा मनोनिर्गमे पिबन्नास्तैवेति श्रुतौ अहमर्थावस्थानोक्त्यसम्भवापातात्। न ह्यहमर्थाभावेऽशनपानादिसम्भवः। सुप्तावप्यहंकारकार्यप्राणावस्थानस्य प्रत्यक्षसिद्धत्वाच्चेति दिक्।

नन्वात्माहमर्थयोरैक्ये श्रुतौ अथात आत्मादेशः अथातोऽहंकारादेश इति पृथगुपदेशो न स्यात्। तथाच तदन्यथानुपपत्या तयोर्भेद इत्यत आह ॥ अथात इति॥ तथाच पृथगुपदेशस्य व्यभिचारितया न भेदसाधकत्वमिति भावः। भूमात्मनोः प्रथगुपदेशो न भेदसाधनक्षमः तस्यान्यथासिद्धत्वात्। आत्माहमर्थयोस्तु नान्यथासिद्ध इत्याशङ्कते ॥ नन्विति॥ दृष्टान्ते पृथगुपदेशस्यैक्यसाधकत्वे द्वयोर्भिन्नत्वेन प्रत्यक्षसिद्धत्वं प्रयोजकम् ? उभयोः सार्वात्म्यायोगो वा ? नाद्य इत्याह ॥ अहमर्थादन्यस्येति॥ ननु अहंकारात् भिन्नात्मनो भूम्ना भिन्नत्वेन प्रत्यक्षासिद्धत्वेऽपि तदभिन्नतयाप्यसिद्धत्वात् पृथगुपदेशस्य द्वयोः सार्वात्म्यानुपपत्तिसहकारेणाभेदसाधकत्वमस्त्विति द्वितीय एवास्त्विति चेन्न। तर्ह्यहमर्थस्यापि तत एवाभेदसाधकत्वं स्यात्। पृथगुपदेशस्य द्वयोः सार्वात्म्यानुपपत्तेरविशेषात्। न च तत्र जडाजडयोरभेदानुपपत्याऽनुपपत्तेः क्षीणशक्तित्वमिति वाच्यम्। अहमर्थजडत्वस्याद्याप्यसिद्धेः। सुप्तावप्रकाशत्वादेः प्रागेव दूषितत्वात् ॥ त्वत्पक्ष इति॥ ननु 'यत्र नान्यत् पश्यति' 'स एवाधस्तादित्यादिना भूमस्वरूपोक्त्यनन्तरं यत्रेत्याद्यधिकरणाधिकर्तव्यनिर्देशात् स इति परोक्षनिर्देशाच्च द्रष्टुर्जीवादन्यत्वप्रसक्तौ तद्वारणार्थमथातोऽहंकारादेश इत्यहंकारेण भूम्नि निर्दिष्टेऽहंकारस्य देहादिसंघातेऽविवेकप्रयोगदर्शनात् तदभेदप्रसक्तौ निष्कृष्टाहङ्कारकेवलात्मरूपमादाय अथात आत्मादेश इति द्रष्टृभेद उच्यत इत्यर्थपरत्वेन बिंबादिपरत्वमिति चेन्न। त्वन्मते शुद्धस्याद्रष्टृत्वेन द्रष्टृभेदसिद्ध्यर्थमथात आत्मादेश इत्यादेर्वैयर्थ्यापातात्। द्रष्टृभेदे निर्विशेषत्वानुपपत्तेश्च। न चाभेदस्य कल्पितत्वान्न निर्विशेषत्वविरोध इति वाच्यम्। तर्हि वास्तवभेदप्राप्तेः। नहि वस्तुतो भिन्नेऽभेदप्रसक्तिं सम्पाद्य तन्निवृत्त्यर्थं पुनरन्याभेदोपदेश इति सम्भवति। तथात्वे उन्मत्तवाक्यत्वापत्तेः। अथात आत्मादेश इत्यनेनैव द्रष्टृभेदसिद्धौ अहंकारेण निर्देशवैयर्थ्याच्च। न च बिम्बादिपरत्वेऽपि स्थूलारुन्धतीन्यायेनाहङ्कारोपदेश इति वाच्यम्। तथापि भूमोपदेशानन्तरमहमर्थोपदेशानुपपत्तेः। न ह्यरुन्धत्युपदेशार्थं काञ्चित् सूक्ष्मां तारकामुपदिश्य स्थूलामुपदिशति। तस्मायत्किञ्चिदेतत्। किञ्चानेकेषां सार्वात्म्यायोगात् तयोरुपदेशोऽभेदार्थ इति ते मतम्। न च तद्युक्तमत्र सार्वात्म्योपदेशाभावात् किन्तु सर्वगतत्वस्यैवेत्याह ॥ स एवेदमिति॥ नचेदं वाक्यं स भगवः कस्मिन्

(कण्टकोद्धारः)

प्रतिष्ठित इत्यादिवाक्यानुसारेण भूमातिरिक्तं किमपि नास्तीत्येतदर्थपरम्। तद्वाक्ये भूम्न अधिकरणे पृष्टे परमार्थतः स्वयमधिकरणमित्याद्युक्तेरिति वाच्यम्। स भगव इत्यादिवाक्ये ब्रह्मणः स्वाधारत्वेन स्वातन्त्र्यमन्यस्य ब्रह्माधारत्वेन पारतन्त्र्यमेवोच्यते। न तु भूमातिरिक्तवस्त्वभवोऽपदार्थत्वात् अवाक्यार्थत्वाच्च। तथा च न तदनुसारेणेदं वाक्यं सार्वात्म्यपरम्। किन्तु ब्रह्मणः सर्वनियमनार्थं सर्वगतत्वपरमेवेति। ननु सार्वात्म्यवत् सर्वगतत्वमप्यनेकेष्वपि संभवतीति तदन्यथानुपपत्या तदभेदसिद्धिरित्यत आह ॥सर्वगतत्वस्य चेति॥ किञ्च ब्रह्मात्माभेदसिध्यर्थं हि सर्वोपदेश इति ते मतम्। तस्य चाहंकारोपदेशं विनैव सिद्धेरहंकारोपदेशवैयर्थ्यमित्याह ॥भूमेति॥ आत्मन इति॥ न चात्मन अपरोक्षत्वेऽपि अहंकारे तत्सुप्रसिद्धमिति तदुपदेश इति वाच्यम्। अपरोक्षैकरसेऽप्रसिद्धं तत्सम्बन्धेनापरोक्षेतत्सुप्रसिद्धमित्यस्यायोगात्। अन्यथाऽत्मनोऽपरोक्षैकरसतासिद्धेरिति। ननु श्रुतेरुक्तार्थपरत्वाभावेऽर्थान्तराभावेनाप्रामाण्यप्रसङ्ग इत्यत आह ॥श्रुत्यर्थस्त्विति॥ तथा च स्मृत्यैव श्रुतेर्व्याख्यातत्वात् अर्थान्तरसम्भवेन नाप्रामण्यम्। न च श्रुत्या स्मृतेर्बाधः श्रुतेर्बलवत्वादिति वाच्यम्। स्मृतेर्व्याख्यानरूपत्वेन निर्णीतार्थत्वात्। श्रुतेश्च व्याख्येयत्वेन संदिग्धार्थत्वात् स्मृत्यनुसारेणैव श्रुतेर्व्याख्येयत्वात्। अन्यथा अपि स्मर्यते इत्यादिसूत्रैः स्मृत्यनुसारेण श्रुत्यर्थप्रतिपादनानुपपत्तेः। मोक्षधर्मवचनाचाहङ्कारशब्दोऽहमर्थवाचीत्याह ॥मोक्षधर्मे चेति॥ न चात्रलक्षणयाऽहंकारशब्दः आत्मपर इत्युच्यते इति वाच्यम्। प्रोक्त इत्यनेन शक्तेरेव प्रतिपादनात्। अहंकारशब्दस्यात्मपरत्वानंगीकारे सूत्रविरोधोऽपीत्याह ॥सूत्रं चेति॥ न च सैव हि सत्यादय इत्यत्रादिशब्द अहंकारान्यपर इति वाच्यम्। संकोचे बाधकाभावात्। अन्यथा भूमान्यपर इत्यपि स्यात्। अहंकारशब्दस्यात्मपरत्वानंगीकारे बाधकमप्याह ॥अन्यथेति॥ नचात्र व्यास्युक्तिरौपचारिकीति वाच्यम्। भूमादावपि तथाभावप्रसङ्गात्। ननु अहंकारशब्दस्यात्मवाचित्वे अहंकारश्चेत्यादिश्रुतिस्मृतिविरोधः। तत्राहंकारस्यात्मनः पार्थक्येन क्षेत्रत्वस्योक्तत्वादित्यत आह ॥अहङ्कारश्चेति॥ अहंकारशब्दस्य नानार्थत्वान्न कोऽपि विरोधः। न चैवं नानार्थत्वकल्पनायां कल्पनागौरवमिति वाच्यम्। अक्षादिपदवत् प्रामाणिकत्वात्। अस्तु वा अहंकारशब्दस्य तत्त्ववाचित्वम्। प्रकृतश्रुतौ व्यास्युक्तिबाधकात् लक्षणयाऽनिरुद्धपरत्वे बाधकाभावात्। नन्वहंकाराख्यं तत्वमस्तीत्यत्र किं प्रमाणमित्यत आह ॥महत्तत्त्वादिति॥ नन्वहमर्थपरस्याहंकारशब्दस्य क्षेत्रे प्रयोगात् अहमर्थस्य क्षेत्रत्वमित्यत आह ॥अन्यथेति॥ नन्वहंकारशब्दोऽहमर्थत्वनियतो न बुद्धिशब्दस्तथेत्यत आह ॥अहंकारशब्दस्येति॥ तथा च व्यभिचारात् नाहंकारशब्दस्याहमर्थत्वनियम इति भावः। किञ्चाहङ्कारशब्दस्याहमर्थे प्रयोगे सति तदर्थत्वमिति शङ्कनीयम्। तदेव नास्तीत्याह ॥अहमर्थ इति॥ नन्वहमर्थेऽहंशब्दप्रयोगात् अहंशब्दाहंकारशब्दयोश्च पर्यायत्वात् अहंकारशब्दोऽपि तत्र प्रयुक्त एवेत्यत आह ॥आत्मवाचिन इति॥ अहंकारशब्दपर्यायोऽहंशब्दो मकारान्तमव्ययम्। तच्चात्मनि कदापि न प्रयुज्यते। आत्मवाच्यहंशब्दस्तु दकारान्तास्मच्छब्दजः। स त्वहंकारे कदापि न प्रयुज्यत इति तयोरर्थभेद आवश्यकः। तथाचाहंशब्दप्रयोगात् नाहंकारशब्दप्रयोग इति भावः। ननु त्रयाणामपि

(कण्टकोद्धारः)

पर्यायत्वमेवाऽहमिति प्रतीयमानाहंकारविषयत्वादिति चेन्न। अहमिति प्रतीतेरहंकारविषयत्वासिद्धेः। त्रयाणामहंकारविषयत्वस्य सुतरामसिद्धेश्च। अन्यथाऽहंकारे मामित्यादिप्रयोगापत्तेश्च। तथा च मान्तदान्तत्वभेदेनार्थभेदकल्पनमेव युक्तमन्यथा सांकर्यप्रसंगादिति भावः। नन्वहमर्थेऽचिद्धर्मस्य कर्तृत्वादेः प्रतीयमानत्वात् अचिदंशोऽपि स्वीकर्तव्य एव। तथा चागतमहमर्थे चिदचित्संवलनात्मकत्वम्। आत्मा तु चिन्मात्रमिति तस्मात्तस्य भेदसिद्धिरित्यत आह ॥ अहमर्थ इति ॥ ननु कथमसिद्धिः कर्तृत्वादेरचिद्धर्मस्यात्मनि प्रतीयमानत्वात्। अहं कर्तेति हि सर्वेषां प्रतीतिरित्यत आह ॥ कर्तृत्वादेरिति ॥ ननु भोक्तृत्वादीनां भोगाद्युपाधिकत्वात् भोगादेश्चान्तःकरणपरिणामत्वेन तद्धर्मत्वमावश्यकमित्यत आह ॥ अन्तःकरणधर्मत्व इति ॥ [illegible] च तदंशाभावे तद्धर्मप्रतीतिरसिद्धैवेति वाच्यम्। संसर्गारोपपक्षे शुक्त्यादावपि रजतत्वादिधर्मप्रतीत्या [illegible]जतांशस्वीकारापत्तेः। तथा च गौरोहमित्यादिसर्वे प्रत्यया यथार्थाः प्रसज्येरन्निति भावः। नन्वहमर्थे इदमंशाभावे परकीयाहमर्थे इदमिति प्रतीतिर्न स्यात्। तस्या अचिदंशनियतत्वादित्यत आह ॥ यत्त्विति ॥ ॥ अन्येति ॥ यद्यमिति बुध्याऽनात्मांशसद्भावस्तदेत्यर्थः। नन्वहमर्थाश्रितत्वेन प्रतीयमानत्वादात्मनो नाहमर्थत्वमित्याशंक्य निषेधति ॥ न चेति ॥ ॥ अहमर्थाश्रितत्वेनेति ॥ अस्यां प्रतीतौ वैषयिकयोर्ज्ञानसुखयोरेव प्रतीत्या तयोरात्मत्वाभावादिति भावः ॥ विरोधादिति ॥ भ्रान्तेर्विषयाभावनियतत्वेन तया भेदसाधने नित्यत्व-साधनकृतकत्ववत् विरुद्धमिति भावः। ननु तथापि विरुद्धधर्माधिकरणत्वात् नाहमर्थात्मनोरैक्यमित्याशंक्य निषेधति ॥ न चेति ॥ ॥ अहमर्थ इति ॥ तथाचासिद्धिरिति भावः ॥ त्वन्मत इति ॥ न च चितोऽपि येन रूपेणाहमिति प्रतीतिविषयत्वं तेन रूपेणानात्मत्वमिष्टमेवेति नानैकान्तिकतेति वाच्यम्। हेतौ साध्ये वा तेन रूपेणेत्यस्याप्रवेशात्। अहमर्थस्यापि तेन रूपेणानात्मत्वेऽपि स्वरूपेणात्मत्वोपपत्तेः। चैतन्यमनात्मा अहमिति प्रत्ययविषयत्वात् शरीरवदित्यपि प्रयोगात् आभाससाम्यं च। बाधादिकं चोभयत्रापि तुल्यमिति। नन्वहमर्थः आत्मान्यः अहंशब्दाभिधेयत्वात् अहंकारशब्दाभिधेयत्वाच्छरीरादिवदित्यादिनाऽहमर्थस्या-त्मान्यत्वसिद्धिरिति चेन्न। ब्रह्मण्यपि तदात्मानमेवावेदित्यादिप्रयोगेण हेतुसत्त्वेनानैकान्त्यात्। तत्र लक्षणयैव प्रयोगान्न हेतुसत्त्वमिति यदि तदा प्रकृतेऽपि तथा प्रयोगसंभवादसिद्धिः। अहमर्थाज्ञानान्यात्मज्ञानाभावेनाहमिति ज्ञानविषयत्वस्यात्मत्वनियतत्वेन बाधापाताच्च। नात्मेति प्रतीतिविषयत्वस्योपाधित्वाच्च। द्वितीयहेतुश्च स्वरूपासिद्धः। पर्यायताया निरस्तत्वादप्रयोजकत्वाच्च। नानार्थन्यायेनोभयोरप्युभयशब्दवाच्यत्वसंभवाच्च ॥ किञ्चेति ॥ नचेदमानात्मनोऽधिष्ठानावच्छेदकत्वेनाधिष्ठानत्वोक्तिरिति वाच्यम्। दृष्टान्तासम्प्रतिपत्तेः। अहमर्थस्यात्मान्यत्वसिध्यनन्तरमेवाधिष्ठानावच्छेदकत्वस्य कल्पनीयत्वेनान्योन्याश्रयाच्च। त्वन्मते प्रपञ्चारोपेऽपि ब्रह्मणोऽधिष्ठानावच्छेदकत्वापाताच्च ॥ अन्योन्याश्रयादिति ॥ सिद्धे अहमर्थात्मनोर्भेदे तदैक्यारोपसिद्धिः। तत्सिद्धौ च भेदसिद्धिरिति। न च प्रकाशाव्यभिचारः स्वप्रकाशात्मसम्बन्धं विना न सम्भवतीति अहंकारस्य स्वसत्तायां प्रकाशावैधुर्येण स्वप्रकाशत्वसाधनं युक्तमेवेति वाच्यम्। अस्याप्यात्माहमर्थयोर्भेदसाध्यत्वेनान्योन्याश्रयात्।

(कण्टकोद्धारः)

प्रकारान्तरेण भेदसिद्धेर्निरस्तत्वात्। तथाचात्मनः स्वप्रकाशत्वादिसिद्धयेऽहमर्थत्वमवश्यमभ्युपेयमिति भावः ॥वाचस्पतिनेति॥ न चाधिष्ठानगतेदन्तावत् आत्मगतप्रेमास्पदत्वस्याहमर्थे भानमविरुद्धमिति वाच्यम्। सत्यस्थलेपीदं रजतमिति प्रतीत्येदन्तायाः साधारणत्वात्। वाचस्पतिवचनस्य तु अधिष्ठानगतासाधारणधर्मस्य नाध्यस्ते भानमध्यस्तगतासाधारणस्य तु अधिष्ठाने भानमित्येवंपरत्वेनारोप्यगतस्यैव निरुपाधिकपरम-प्रेमास्पदत्वाभावस्य प्रतीतिः स्यादित्यापादनाददोष इति भावः ॥अहमिति॥ तथाच नात्मैक्याध्यासेन तद्गतपरमप्रेमास्पदत्वानुभव इति शेषः। न चायमनुभवो वैषयिकसुखविषय इति वाच्यम्। इतोतिरिक्तस्याजन्यसुखानुभवस्याभावात् विषयैरपि नित्यं सुखमभिव्यज्यत इत्युक्तत्वेन त्वन्मते जन्यसुखस्याभावाच्च। ॥किञ्चेति॥ न च सोपाधिकप्रेमास्पदनाशेन बाह्यमतप्रवेशः। तथात्वे शरीरनाशेनापि तदापत्तेरिति वाच्यम्। अहमर्थातिरिक्तस्य निरुपाधिकप्रेमास्पदस्याननुभवात् अहमर्थ एव निरुपाधिकप्रेमास्पदताया दर्शितत्वाच्च। तथा चाहमर्थनाशे कथं न बाह्यमतप्रवेशापत्तिरिति। नन्वहमर्थनाशेपि चिन्मात्रस्यानाशान्न बौद्धमतप्रवेश इति चेन्न। तत्तुल्यस्य तन्मतेऽपि सत्त्वादित्याह ॥तदन्यस्येति॥ निर्विशेषत्वेन चिन्मात्रस्य शून्यतुल्यत्वादिति भावः ॥एवमिति॥ चिन्मात्रस्यैव मुक्तिरहमर्थस्य तु नाश एवेत्यङ्गीकार इत्यर्थः। किन्तु चिन्मात्रं मुक्तं स्यादिति इच्छा स्यादिति शेषः। चिन्मात्रस्यैव मुक्त्यन्वयेऽपि मुक्तः स्यामितीच्छोपपद्यत इति शङ्कते ॥नन्विति॥ अत्रैवानुरूपदृष्टान्तद्वयमाह ॥यथेति ॥॥अन्योन्येति॥ आत्माहमर्थयोर्भेदसिद्धौ तथा कल्पनम्। तत्कल्पने च तयोर्भेदसिद्धिरित्यन्योन्याश्रय इत्यर्थः। ॥तत्रेति॥ न च श्रुतिरपि शुद्धचैतन्यगतममृतत्वं विषयीकरोति नाहमर्थनिष्ठमिति वाच्यम्। अहमर्थवाच्यस्मच्छब्दप्रयोगानुपपत्तेः। न च लक्षणया चिन्मात्रपरोऽस्मच्छब्द इति वाच्यम्। मुख्यार्थबाधकस्यात्मान्यत्वस्यासिध्याऽन्योन्याश्रयात्। एवमेव लक्षणश्रयणेऽतिप्रसङ्गाच्च।

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमुपपादयन् मुक्तेरनिष्टत्वमप्याह ॥तत्रेति॥ न चेच्छासमयेऽन्तःकरणाध्याससम्भवेन तथेच्छाया अभावेऽपि विवक्षितविवेकेन विशेष्यगतमुक्तिविषयत्वमेव कल्पनीयमिति वाच्यम्। अन्योन्याश्रयत्वस्योक्तत्वात्। अहमर्थस्याद्याप्यात्मभेदासिध्या अन्तःकरणाध्यासकल्पनासंभवात्। ननु प्रकृतेऽप्यात्मा मुक्तः स्यादिति विपरीतेच्छा अस्तीत्यत आह ॥यः कश्चिदिति॥ तथात्वे यः कश्चित् तृप्तः स्यादितीच्छया भोजनादौ प्रवृत्तिः स्यादिति भावः। ननु ममात्मा मुक्तः स्यादितीच्छया प्रवृत्तौ अङ्गीक्रियमाणायां नातिप्रसङ्ग इत्यत आह ॥ममेति॥ मामात्मा तृप्तः स्यादितीच्छावदिति भावः। ननु सेच्छा नाहमर्थं विषयीकरोति। किन्त्वात्ममात्रगतत्वमित्यत आह ॥नचेति॥ तथा चातिप्रसंगः स्यादिति भावः ॥किञ्चैवमिति॥ न च संवलनं न सम्बन्धमात्रम्। किन्तु तादात्म्यम्। अहमिति प्रतिभासे चिदचितोस्तादात्म्यं विषयः। मनः स्फुरतीत्यत्र तु न तद्विषय इति विशेष इति वाच्यम्। इदं रजतमित्यत्रेव मनः स्फुरति प्रकाशते इत्यत्रापि सामानाधिकरण्येन तादात्म्यभानस्यावश्यकत्वात्। अन्यथा इदं रजतमित्ययं

(कण्टकोद्धार:)

तादात्म्यारोपो न स्यात्। तथाच विशेषापादनं युक्तमेवेति ॥यदि कल्प्यत इति॥ न चाहमर्थस्य मिथ्यात्वान्यथानुपपत्तिप्रमाणादहमित्यत्र द्व्यंशता कल्प्यते। आत्मेत्यत्रतु कल्पकं न प्रमाणमिति न द्व्यंशताकल्पनमिति वाच्यम्। अन्योन्याश्रयात्। अहमर्थमिथ्यात्वस्याद्याप्यसिद्धत्वात्। न चात्मान्यत्वेन मिथ्यात्वम्। तस्याप्यसिद्धत्वात्। किञ्च विषयत्वं भिन्नभिन्नप्रकारावच्छिन्नाधिष्ठानारोप्यविषयत्वम्। न च तदहमिति प्रतिभासेऽस्ति। न च तादृशद्व्यंशविषयत्वस्य रजतमिदमिति संसर्गारोपे व्यभिचारः। न च तत्रापि रजतप्रकारावच्छिन्नत्वमेव रजतत्वांश इति वाच्यम्। तत्र मानाभावादिति वाच्यम्। रजतत्वं स्मृतमारोपणीयम्। न च स्मृतिर्निष्प्रकारिका। न वा तदन्यः प्रकारोऽनुभूयत इति रजतावच्छिन्नमेव रजतत्वमारोप्यमिति क्व संसर्गारोपे व्यभिचारः ॥त्वन्मत इति॥ न च स्फुरामीत्यत्राविद्यावृत्तिर्न विषयः। किन्तु स्फुरणं चैतन्यम्। तस्य चानध्यस्तत्वादधिष्ठानत्वं भविष्यतीति वाच्यम्। एवं हि रजतं स्फुरतीति प्रतीत्या रजतस्यापि स्फुरणरूपचैतन्यमेवाधिष्ठानं स्यात्। तथाच इदमर्थासंनिकर्षेऽपि अहमितिवत् रजतमिति प्रतीतिः स्यादिति विज्ञानवादप्रवेशः। न च तत्र स्फुरतीति वृत्तेरेवोल्लेखो न चैतन्यस्येति वाच्यम्। तर्हि प्रकृतेऽपि स्फुरामीति भ्रमस्यैवोल्लेख इति गृहाण। तथा च भ्रमस्याध्यस्तत्वात् कथमधिष्ठानत्वम्। किञ्च स्फुरणस्याधिष्ठानत्वे स्फुरणमहमिति प्रतीतिः स्यात्। न तु स्फुरामीति। किञ्च देवदत्तो गच्छतीतिवत् अहमर्थस्फुरणयोराश्रयाश्रयिभावेन प्रतीत्या भेदप्रतीतेर्नाधिष्ठानाध्यस्तभाव इत्याह ॥अहमिच्छामीतीति॥ ननु तथाप्यस्तित्वमेवाधिष्ठानं भविष्यति। तस्यानध्यस्तत्वेनाधिष्ठानत्वसम्भवात् इत्यत आह ॥बाधकेनेति॥ तथाच बाध्यत्वेन तस्याप्यध्यस्तत्वमवश्यमुपेयमिति भावः। अस्तु वाऽन्यत्र यथा तथा अहमित्यत्र तु न सर्वथा द्व्यंशत्वमित्याह ॥त्वदभिप्रेतस्येति॥ कल्पनं तु प्रागेव प्रमाणाभावेन दूषितमिति भावः। तथाचाहमर्थस्यात्मभिन्नत्वे न किमपि प्रमाणमित्युपसंहरति ॥तस्मादिति॥ नन्वहमर्थस्यात्मत्वेऽपि प्रमाणाभावात्। कथमात्मत्वमित्यत आह ॥आत्मत्वे त्विति॥ अहम् इत्यादिकं योहं सुप्तः सोहं सुप्तः सोऽहं करोमीत्यादिकञ्च। अत्र यावती अनुपपत्तिः सा सर्वापि परिहृतैवेति।

अनुमानमप्याह ॥अहमर्थ इति॥ नन्वत्र विशेषव्याप्तिर्वा सामान्यव्याप्तिर्वा? नाद्यो दृष्टान्ताभावात्। न द्वितीयः स्वर्गसाधनकृत्याश्रये ऋत्विजि व्यभिचारात् इति चेन्न। स्वर्गेतरफलानपेक्षत्वे सति इति विशेषणान्नर्त्विजि व्यभिचारः। तस्य स्वर्गेतरदक्षिणाद्यपेक्षत्वात्। तथा च सामान्यव्याप्तौ न दोषः ॥अहमर्थ इति॥ न च शरीरे व्यभिचारः। तत्रानर्थाश्रयत्वहेतोरभावात्। न ह्यहं कर्ता भोक्तेत्यादिवत् शरीरं कर्तृ भोक्तृ इत्याद्यनुभवोऽस्ति। तथा च न व्यभिचारः। अहमर्थस्य च तदाश्रयत्वमुभयसिद्धं प्रतीतिसिद्धं चेति। अत एवाह ॥अहमज्ञ इति ॥॥अनात्मत्वमिति॥ न च कृत्याश्रयावृत्तित्वमुपाधिः। कृत्यादय आत्मगुणा इति पक्षे तस्य सत्त्वेन साधनव्यापकत्वात् अनुकूलतर्काभावेन साध्याव्यापकत्वाच्च। कृत्यादयोऽन्तःकरणधर्मा इति पक्षे तु अन्तःकरणादौ साध्याव्यापकत्वाच्च मम मन इति प्रतीत्याऽन्तःकरणस्याहमर्थाद्भेदेनाहमर्थस्यान्तःकरणत्वानाश्रयत्वात् ॥श्रुतयश्चेति॥ अहमर्थस्यात्मत्वे प्रमाणमिति शेषः। न च

(कण्टकोद्धारः)

**सर्वत्राहंशब्दो लक्षणया निष्कृष्टचैतन्यपर इति वाच्यम्। लक्षणाबीजमुख्यार्थानुपपत्तेरभावात्। एवमेव लक्षणास्वीकारेऽतिप्रसङ्गाच्च। तदेवमहमर्थात्मनोरभेदात् नाहंकारादिकार्यानुपपत्याऽविद्या स्वीकरणीयेति मत्वोपसंहरन् उक्तमर्थं कारिकारूढं करोति ॥ तस्मादिति॥ इति अहमर्थस्यानात्मत्वभङ्गः॥**

## न्यायामृतप्रकाशः

अहमर्थो नात्मा तस्मिन्प्रकाशमानेप्यप्रकाशमानत्वादित्यनुमाने विशेषणासिद्धिं परिहरति ॥ पश्चादिति॥ परामर्शः स्मरणम्। हेतौ विशेष्यभागं दर्शयति ॥ अनेवंविधस्येति॥ अप्रकाशमानस्येत्यर्थः। अनुमानानुग्राहिकां श्रुतिं चाह ॥ अथात इति॥ छांदोग्ये भूमप्रकरणे ''यत्र नान्यत्पश्यती''त्याद्युक्त्वा ''स एवाधस्तादि''त्यादिना भूमानं सर्वात्मकत्वेनोक्त्वा ''अथातोहंकारादेशः अहमेवाधस्तादि'' त्यादिना अहंकारं च निरूप्य ''अथात आत्मादेशः आत्मैवाधस्तादि''त्यादिनाऽहंकारादात्मनः पार्थक्येनोपदेशाच्चाहमर्थो नात्मा अन्यथा तदनुपपत्तेरित्यर्थः। क्षेत्रज्ञात् जीवात् ''क्षेत्रज्ञ आत्मा पुरुष'' इत्यभिधानात्। अहंकारस्य चिदचित्संवलनात्मकत्वमुपपादयति ॥ तस्मादिति॥ तत्र चित्संवलनोपपादनायाह ॥ अहमिति॥ ॥ आत्मानुबंधीति॥ तथाचात्मानुबंध्यनुभवाश्रयत्वस्याहंकारे प्रतीयमानत्वादहमर्थे चिद्भागोऽस्तीत्यर्थः अचित्संवलनोपपादनायाह॥ अनात्मानुबन्धीति॥ अनात्मत्वनियतं यत् कर्तृत्वं तस्याप्यत्र प्रतीयमानत्वात् अचित्संवलनमस्तीत्यर्थः। ॥ अध्यस्त इति॥ अनुभवितृत्वाद्याश्रयस्य शुद्धचिद्रूपत्वकेवलाचिद्रूपत्वयोरभावात् उभयसंवलनात्मकस्य तु सत्यत्वायोगादध्यस्त इत्यर्थः। उक्तहेतौ विशेष्यासिद्धिं परिहरति ॥ यदि चेति॥ ॥ ह्यस्तन इवेति॥ पूर्वदिनानुभूताहमर्थ इवेत्यर्थः। यथा पूर्वदिनेऽहमित्यनुभूतोऽहमर्थोऽद्य स्मर्यते तथा सुषुप्तौ अहमर्थोऽनुभूतश्चेत्सुप्तोत्थितेन स्मर्येतेत्याशयः। नन्वहमस्वाप्समिति स्मर्यत इति चेत् तदंशेऽनुभवरूपताया वक्ष्यमाणत्वात्। अनुभूते स्मरणनियमाभावात्सुषुप्तावहमर्थानुभवेपि इदानीं स्मरणाभावो युक्त इत्यत आह ॥ अनुभूत इति॥ ॥ स्मर्यमाणेति॥ स्मर्यमाणात्ममात्रत्वांगीकारात्। स्मर्यमाणात्मानतिभिन्नत्वांगीकारात् तथा च स्मरणमावश्यकमेव। न स्मर्यते च। अतोऽप्रकाशरूपविशेष्यस्य नासिद्धिरित्यर्थः। इति यदप्युच्यत इत्यन्वयः। आत्माहमर्थयोरभेदवादिनं प्रति आत्मनः प्रकाशे सति अहमर्थस्याप्रकाश इत्येतदसिद्धमित्यभिसंधायाह ॥ तत्रेति॥ आत्मनः स्वप्रकाशत्वात्प्रकाशः अहमर्थस्यान्यप्रकाशत्वादप्रकाश इत्यर्थः ॥ अद्यापीति॥ अहमर्थस्य प्रकाशमानात्मान्यत्वसिद्धौ सुषुप्तावप्रकाशसिद्धिः तत्सिद्धौ च तथाविधात्मभिन्नत्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥ नापीति॥ आत्मनः परामर्शात्सुषुप्तौ प्रकाशः अहमर्थस्यापरामर्शात्सुषुप्तावप्रकाश इत्यर्थः। आत्मपरामर्श एवासिद्ध इत्याह ॥ अहमिति॥ अवेदिषमित्यत्राहमर्थस्यैवोत्तमपुरुषविषयत्वादित्यर्थः ॥ परामर्शादिति॥ तथा च न तस्य परामृश्यमानात्मान्यत्वमित्यर्थः। नन्वयमात्मन एव परामर्शो न त्वहमर्थस्येत्याशंक्य तत्र दूषणं कारिकयैव संगृह्णाति ॥ अहमर्थ इति॥ आत्मविषये स परामर्शः कथमित्यर्थः। नन्वहंज्ञानादन्यत्वमेवात्मपरामर्शस्य अस्वाप्समित्यत्राहमर्थाप्रतीतेः। येन तद्विषयत्वं स्यादित्यत आह ॥ अस्वाप्समित्यत्रापीति॥ अभिज्ञाभिलपनयोः समानार्थत्वाज्ज्ञानप्रसंगे प्रयोगोदाहरणं नासंगतमिति ज्ञेयम्। अहमर्थस्यैव परामर्शविषयत्वमित्येतद्विवरणकारस्यापि

(प्रकाशः)

संमतमित्याह ॥उक्तं चेति॥ प्रत्यभिज्ञानं स्मरणरूपपरामर्शः ॥शास्त्रेति॥ तथा च तस्यास्मिन्परामर्शे भानमयुक्तमित्यर्थः। एवमहमर्थस्यैव परामर्शविषयत्वमुपपाद्य विपक्षे बाधकमप्याह ॥यदि चेति॥ इदमर्थः परागर्थः। तद्व्यावृत्तः प्रत्यग्रूपः। प्रत्यक्त्वमेवाहमर्थत्वं न ततो भिन्नं तथा च यदि परागर्थव्यावृत्तः प्रत्यगर्थरूपोऽहमर्थो न परामृश्यते तर्ह्येतावंतं कालं सुप्तोऽहं वा = प्रत्यगर्थो वेत्यर्थः। अन्यः = परागर्थो वेति संदेहः स्यात् नत्वहमेवेति निश्चयः अन्यत्वाख्येदमर्थरूपपरागर्थव्यावृत्तेः सुप्तावभानात्। पुरुषत्वव्यावृत्त्यप्रतीतिदशायां पुरोवृत्तिनि तत्कोटिकसंशयदर्शनात्। नह्येवं भवति संशयः कस्यचित्। अतः सुप्ताविदमर्थव्यावृत्तं प्रत्यक्त्वरूपमहमर्थत्वमेव प्रतीयत इत्यंगीकार्यं। ततश्च तस्यैव परामर्शविषयत्वसिद्धिरिति भावः। ननु अहमर्थो न परामृश्यते किंत्वात्मैकः स एव च प्रत्यगर्थः तथा च परामृश्यमानात्मनि प्रत्यक्त्वनिश्चयान्न तद्विरुद्धापराक्त्वरूपान्यत्वकोटिकसंशय इति शंकते ॥नन्विति॥ अहमर्थत्वमेव प्रत्यक्त्वं तथा च प्रत्यक्त्वनिश्चय एवाहंत्वनिश्चय इति वक्तुं प्रत्यक्त्वं विकल्प्य दूषयति ॥प्रत्यक्त्वमिति॥ ॥चिन्निर्भास्येति॥ चिज्ज्ञानं तेन निर्भास्यं दृश्यपराग्भूतं जडं तत्प्रतिद्वंद्वि तत्प्रतिकूलं यत् चित्त्वं तदेव प्रत्यक्त्वमित्यर्थः। अन्यत्वं पराक्त्वं तद्विरुद्धं यत्स्वत्वं तदेव प्रत्यक्त्वमित्यर्थः। आद्य आह ॥चिदिति॥ अहमर्थभिन्नपरागर्थविरोधि-चित्त्वरूपप्रत्यगर्थपरामर्शांगीकारे चिदस्वपीदिति परामर्शः स्यादित्यर्थः। द्वितीय आह ॥स्वयमिति॥ अहमर्थभिन्नपरागर्थभूतान्यत्वविरोधिस्वत्वरूपप्रत्यगर्थपरामर्शांगीकारे स्वयमस्वपीदिति परामर्शः स्यादित्यर्थः। किंच स्वत्वरूपप्रत्यक्त्वस्य घटादावतिव्याप्तिश्च स्यात् न च तत्र स्वत्वाभाव इति वाच्यम्। घटादिः स्वस्माद्भिन्नो नेत्यादिप्रतीत्या स्वत्वस्य प्रतीयमानत्वात् अन्यथा स्वस्मादित्यप्रयोगात् अतो घटादिरपि प्रत्यगर्थः स्यादित्याह ॥घटादिरिति॥ युष्मदर्थेति॥ पराग्व्यावृत्तत्वमेव प्रत्यक्त्वं। पराक्त्वनिर्वचनाय युष्मदर्थेत्युक्तम्। नेदमहमर्थव्यावृत्तमित्याह ॥अहमर्थस्यैवेति॥ ॥तदिति॥ युष्मदर्थरूपपराग्विरुद्धत्वादित्यर्थः। किंच युष्मदर्थभूतपराग्व्यावृत्तत्वरूपप्रत्यक्त्वस्यात्मन्यसंभवः अनावृतात्मचैतन्यस्य व्याप्तत्वेन युष्मदर्थत्वरूपपराक्त्वस्यैव सत्त्वेन तद्व्यावृत्तेरभावादित्याशयेनाह ॥न हीति॥ आत्मनो युष्मदर्थत्वं विवरणेप्युक्तमस्तीत्याह ॥विवरण इति॥ सर्वात्मकत्वात् अपरिच्छिन्नत्वात्। तर्हि युष्मदर्थव्यावृत्त्यवभासः कथमित्यत उक्तम् ॥अहमुपरागादिति॥ देहांतरवस्थितत्वेनायुष्मदर्थाहंकाराभेदारोपादेवेत्यर्थः। ॥घट्टकुटीति॥ केचिद्वणिजः शुल्कमदित्संतः शुल्कग्रहणस्थलं वंचयित्वाऽन्येन पथा जिगमिषंतो विस्मृतमार्गाः यत्र घट्टे शुल्कग्राहिणी कुटी स्थिता तत्रैव प्रभाते समागताः सोयं घट्टकुटीप्रभातवृत्तांतः। तथा च प्रकृतेऽहमर्थस्य परामर्शविषयत्वं सिद्धमित्यवधेयम्। तथा च सुषुप्तावप्रकाशमानत्वमसिद्धमिति भावः। ननु नाहमर्थस्य परामर्शविषयत्वं किंत्वाऽऽत्मन एवेत्याशंकते ॥नन्विति॥ ॥नाहमंश इति॥ आत्मांशे परामर्शः अहमर्थे त्वनुभव इत्यर्थः। नन्वहमस्वाप्समित्यहंत्वाश्रय एव परामृश्यते नात्मा तस्याहंत्वानाश्रयत्वादित्यत आह ॥इदानीमिति॥ जाग्रद्दशायामित्यर्थः। सुप्तावहंकाराभावेनेदानीं तस्योत्पन्नत्वादित्यवधेयम्। अवच्छेदात् संबंधात्। तथा अहत्वेन अनुभूयते ज्ञायते। तथा च नृसिंहाकारमिदं ज्ञानमिति भावः ॥न किंचिदिति॥ अविद्यायाः सुप्तौ सद्भावात्तदंशे परामर्शरूपत्वं तवापि संमतं। तन्न स्यादिति भावः। कुत इत्यत आह ॥न हीति॥ ॥अन्येति॥ अहमर्थान्येत्यर्थः ॥परामृश्यत इति॥ येन सुप्तावपि तथानुभवः सिध्येदिति भावः ॥अहमर्थेति॥ तथा च न किंचिदवेदिषमित्यहमर्थाश्रितत्वेनैवाज्ञानस्य

(प्रकाशः)

परामृश्यमानत्वात्सुप्तावपि तथैवानुभवो वाच्यः। स तु न संभवति तदा त्वयाऽहमर्थानंगीकारात्। तथा चाहमर्थांश इवाज्ञानांशेप्यनुभवापत्त्या सुप्तावविद्या न सिध्येदिति सुप्तावपि परामर्शानुसारेणाहमर्थाश्रितत्वेनैवानुभवे वाच्ये तदाप्यहमर्थसिद्ध्याऽस्मदिष्टसिद्धिरिति भावः। नाहमंशे परामर्श इत्येतदसदित्याह ।।एतावंतमिति।। यथा स्वप्नावस्थायामहमर्थसद्भावात्स्वप्नादुत्थितस्य स्वप्नं पश्यन्नहमासमित्यहमर्थविषयः परामर्शो भवति तस्मिंश्च परामर्शे स्वप्नं पश्यन्नासमिति परामर्शवानस्मीत्यनुव्यवसायेनाहमर्थविषयकपरामर्शत्वमनुभूयते, यथा वा जाग्रदवस्थायां अहमर्थसद्भावाज्जाग्रदहमासमिति जाग्रदनुभूताहमर्थविषयकः परामर्शः जाग्रदंतरकाले भवति तस्मिंश्च परामर्शे जाग्रदहमासमिति परामर्शवानस्मीत्यनुव्यवसायेनाहमर्थविषयकज्ञाने परामर्शत्वमनुभूयते तथाऽहमस्वाप्समिति परामर्शवानस्मीत्यनुव्यवसायेनाहमर्थविषयकज्ञाने परामर्शत्वमनुभूयतेऽतो नाहमंशे परामर्श इत्युक्तमसदिति भावः ।।अन्यथेति।। अहमंशे परामर्शत्वमनंगीकृत्यानुभवत्वांगीकार इत्यर्थः ।।मदन्य इति।। मदित्यहमर्थ उच्यते अहमर्थान्य इत्यर्थः। अहमर्थे परामर्शत्वानुभवादित्युक्तमसदित्याशंकते ।।नन्विति।। परामृश्यमानो य आत्मा तदैक्यारोपात् तज्ज्ञानेऽनुभवरूपे परामर्शत्वस्य स्मृतित्वस्य अभिमान आरोप इत्यर्थः ।।अपरामर्श इति।। अनुभव इत्यर्थः ।।परमर्शत्वेति।। स्मृतित्वेत्यर्थः। पुरोवृत्तिन्यारोपो युक्तः अनुभवे स्मृतित्वारोपस्य कुत्राप्यदर्शनात् तथात्वेऽनुव्यवसायस्य प्रमात्वनियमभंगापातादित्याशयः ।।सिद्ध इति।। अहमर्थस्य परामृश्यमानात्मत्वे तु वास्तवैक्यस्यैव प्राप्त्या न तयोरैक्यारोपः संभवतीति भावः ।।सिद्धे चेति।। परामृश्यमानात्मैक्यारोपे सिद्धे तन्निबंधनाहमर्थानुभवेपि परामर्शत्वाभिमान इति तस्यापरामृश्यमानत्वसिद्धौ च सुषुप्तावप्रकाशमानत्वेन प्रकाशमानात्मान्यत्वसिद्धिरित्यर्थः। अहंज्ञानस्यैवात्मपरामर्शरूपत्वानंगीकारे दृष्टहानादिकमित्याह ।।अहमितीति।। दृष्टशब्दोऽनुभवसिद्धत्वपरः। अहमर्थस्यैवात्मत्वेनाऽहमर्थज्ञानस्यैवात्मपरामर्शत्वस्यानुभवसिद्धस्य हानं अहमित्यतोऽन्य आत्मपरामर्श इत्यनुभवासिद्धस्य कल्पनमित्यर्थः। अहंकारः स्मर्येतेत्यत्र अहं शब्दोल्लेखिपरामर्शः स्यादित्यापाद्यते उताहमर्थविशेष्यकाहंत्वप्रकारकपरामर्शः स्यादिति। नाद्य इत्याह ।।अहंशब्देति।। ।।तदुल्लेखीति।। अहंशब्दोल्लेखि नाम सविकल्पकं नास्तीत्यर्थः ।।तदभावेति।। स्मृतेः समानविषयकानुभवजन्यत्वादिति भावः। नन्वेतावता सुप्तावहमर्थप्रकाशोंगीकृतः। तर्हि ह्यस्तनेपि जाग्रदवस्थायामहमर्थानुभवसद्भावात् ह्यस्तनसुषुप्तिवैषम्यं न स्यादित्यत आह ।।तावन्मात्रेणेति।। ह्यस्तनेऽहंशब्दोल्लेखिनामसविकल्पकमस्ति। सुषुप्तौ तन्नास्तीत्येतावन्मात्रेणैव वैषम्यमित्यर्थः। द्वितीये त्विष्टापत्तिरित्याह ।।अहमर्थेति।। इष्टापत्तिमेवोपपादयति ।।स्मर्यते हीति।। अहमर्थः अहंत्वप्रकारक इति शेषः। ह्यस्तनवैषम्यमात्रेणाहमर्थे परामर्शत्वाभावे आत्मांशेपि परामर्शत्वं न स्यात्। यदि सुषुप्तावात्मा प्रकाशेत तर्हि स्मर्येत ह्यस्तन इवात्मेति चोद्यमस्मदुक्तोत्तरान्योत्तरशून्यं स्यादित्याह ।।अन्यथेति।। ह्यस्तन आत्मेवेति संबंधः। तत्रात्मशब्दोल्लेखिपरामर्शापादने सुषुप्तौ तदुल्लेख्यनुभवाभावादेव तदभावोपपत्तेः। आत्मविशेष्यकपरामर्शापादने अस्वाप्समिति तत्परामर्शसद्भावेनेष्टापत्तिरित्येवोत्तरं वाच्यं तदस्माकमपि समानमित्यर्थः ।।ननु तथापीति।। यदि सुषुप्तौ अहमर्थः प्रकाशेत तर्हि एतावंतं कालमहमित्यभिमन्यमान आसमिति परामर्शः स्यादित्यापाद्यत इत्याशंकते ।।नन्विति।। ।।अहमर्थेति।। अहमर्थप्रकाशेंगीक्रियमाणे तदभिमानपरामर्शापादनस्य व्यधिकरणत्वात्। नह्यस्माभिः सुषुप्तावहमर्थाभिमानप्रकाश उक्त इति भावः ।।अन्यथेति।। अहमर्थप्रकाशेन

(प्रकाशः)

तदभिमानपरामर्शापादने आत्मप्रकाशमात्रेणात्मेत्यभिमन्यमान आसमित्यभिमानपरामर्शः स्यादित्यापादयितुं शक्यत्वात्। तत्र व्यधिकरणत्वान्नैवमापादनं युक्तमित्युत्तरमिति वाच्यं तन्ममापि तुल्यमिति भावः। ननु सुषुप्तावहमर्थप्रकाशे न किंचिदहमवेदिषमिति अर्थावच्छिन्नाज्ञानपरामर्शस्तावदनुभूयते स न स्यात् प्रकाशमानेऽहमर्थेऽज्ञानविरोधादिति चेत् तर्ह्यात्मनोपि सुषुप्तौ प्रकाशेन किंचिदहमवेदिषमिति परामर्शो न स्यात्। तस्याप्यज्ञानावच्छेदकत्वप्राप्त्या प्रकाशमाने आत्मनि अज्ञानायोगात्। आत्मान्यविषयकमेवाज्ञानमिति चेत् तर्ह्यत्राप्यहमर्थान्यविषयकमेवाज्ञानमस्तु तथा चाहमर्थविषयकाज्ञानादन्यदेव घटादिप्रपंचविषयकमेवाज्ञानं सुषुप्तावनुभूतं सत्स्मर्यते इत्याह ॥न किंचिदिति॥ ननु आत्माज्ञानादन्यदिवेति दृष्टांत अयुक्तः प्रकाशमान एवात्मन्यज्ञानांगीकारात् साक्षिणोऽज्ञानाविरोधित्वादित्यत आह ॥अन्यथेति॥ प्रकाशमानेऽज्ञानस्य विरुद्धत्वादित्यर्थः। साक्षिणोप्यज्ञानविरोधित्वमुपपादितमिति भावः ॥अयमिति॥ अयं पुमान् सुप्तोऽहमस्मीति स्वात्मानं न विजानातीति श्रुत्या सुप्तावहमर्थाज्ञानाभिधानादित्यर्थः। नात्मानमिति श्रुतेः सुषुप्तावात्मज्ञानमपि न स्यादित्युक्ते तत्र त्वया वाच्यं ऐषा श्रुतिरात्मनिष्ठविशेषाज्ञानपरेति तदेतदत्रापि समम्। अहमर्थनिष्ठविशेषाज्ञानपरा न विजानातीति श्रुतिरित्यपि सुवचत्वादित्यर्थः। अंतःकरणावच्छिन्नस्य स्मर्तृत्वानुरोधेन तस्यैव तदनुभवितृत्वात्स्मर्तृत्वानुभवितृत्वयोरैकाधिकरण्यनियमादित्यर्थापत्त्याऽहमर्थसिद्धिरित्याह ॥ किं चेति ॥ अनहमर्थस्य अहमर्थभिन्नस्य ॥अविद्येति॥ साक्षिचैतन्यस्येत्यर्थः। कुतो नाद्य इति चेत् अहमर्थस्यैव स्मर्तृतायाः प्रत्यक्षसिद्धत्वादित्याह ॥योहमिति॥ नन्वंतः करणावच्छिन्नस्याहमर्थस्य स्मर्तृत्वेऽनुभवितृत्वमपि तस्यैव कुत इति चेत्तत्राह ॥स्मृतीति॥ स्मर्तृत्वानुभवितृत्वयोरहमर्थनिष्ठत्वं प्रत्यभिज्ञाप्रत्यक्षसिद्धं चेत्याह ॥योहमन्वभूवमिति॥ ननु न प्रत्यभिज्ञाविरोधः अनुभवितृचैतन्यस्य सर्वदा सर्वगतत्वात्। तथा च योहमित्यनुभवितुश्चैतन्यस्यैव स्मर्तृत्वमंगीकृतं तस्य पूर्वदिनानुभवितृतया द्वितीयदिने स्मर्तृतया चैत्रादिदेहस्थितत्वात्। तथाविद्यारूपोपाधेः चैतन्यसंबंध्यजीवत्वसंपादकस्यैकत्वेन तदवच्छिन्नो जीवश्चैक एव। तथा च तस्यैवानुभवितृत्वं स्मर्तृत्वं चेति तयोरैकाधिकरण्यप्राप्त्या न प्रत्यभिज्ञाविरोध इत्याशंक्य निराकरोति ॥यद्यपीति॥ तयो श्चैतन्यजीवयोः। अविद्यावच्छिन्नादनुभवितृजीवादननुभवितृचैतन्यमात्राच्चेत्यर्थः। तथा च प्रत्यभिज्ञाविरोधस्तदवस्थ एवेति भावः। ननु पुनरनुभवितृस्मर्त्रोरैक्यमेव। तथा हि अविद्या शुद्धचैतन्यं अवच्छिद्य जीवत्वं संपादयति स एवानुभविता अंतःकरणं चाविद्यावच्छिन्नं जीवं संबंध्य स्मर्तृत्वं संपादयति। यथा हि महाकाशसंबंधी मठोपाधिर्मठावच्छिन्नाकाशं करोति। मठांतर्गतो घटोपाधिर्मठाकाशसंबंधी सन् घटाकाशं करोति। तथा चानुभवितुरविद्यावच्छिन्न-जीवस्यैवांतःकरणावच्छिन्नाहमर्थत्वेन स्मर्तृत्वात्तयोरैकाधिकरण्येन न प्रत्यभिज्ञाविरोध इत्याशंक्य निराकरोति ॥यद्यपीति॥ अविद्यावच्छिन्नचैतन्यं जीवमित्यर्थः। तर्हि सुतरां अनुभवितृस्मर्त्रोर्भेदसिद्धिः अविद्यांतःकरणोपाधिभेदात् ताभ्यामुपधेययोः शुद्धचैतन्याविद्यावच्छिन्नयोश्च भेदात्। यथा हि मठावच्छिन्नाकाशतदंतस्थघटावच्छिन्नाकाशयोर्भेदः उपाध्योर्मठघटयोर्भेदात् तदुपाधेययोः शुद्धमहाकाशमठाकाश-योर्भेदात् एवमिहाप्यनुभवितुरविद्यावच्छिन्नचैतन्यात्स्मर्तुरंतःकरणावच्छिन्नस्य भिन्नत्वेन प्रत्यभिज्ञाविरोधस्तरितुमशक्य इत्याह ॥तथापीति॥ ॥प्रवृत्त्ययोग इति॥ प्रत्युताहमर्थस्य सुषुप्तौ नाशादिति भावः ॥योहमिति॥ त्वन्मतेऽहमर्थस्यासुप्तत्वादिति भावः ॥प्रत्यभिज्ञेति॥ सुप्तिजागरयोरहमर्थैक्यावगाहि प्रत्यभिज्ञेत्यर्थः

(प्रकाशः)

॥ प्रत्यभिज्ञानेति ॥ त्वन्मतेऽहमर्थस्यैव कर्तृत्वात्कर्तृत्वाधिकरणयोः पूर्वतनाद्यतनयोरहमर्थयोरैक्यावगाहि-प्रत्यभिज्ञेत्यर्थः। कथं तदनुपपत्तिरित्यत आह ॥ अहंकारेति ॥ पूर्वतनाहमर्थनाशेन पुनरद्यतनाहमर्थोत्पत्त्यंगीकारेण पूर्वतनाद्यतनाहंकारव्यक्त्योर्भेदादित्यर्थः ॥ कर्तुरिति ॥ कर्तृत्वभोक्तृत्वयोरुभयोरपि त्वन्मतेऽहमर्थनिष्ठत्वेन पूर्वतनकर्तुरिदानीं तत्फलभोक्तुश्चाहमर्थस्य भिन्नत्वात्पूर्वतनाहमर्थस्य कृतहानिः अद्यतनाहमर्थस्य कर्माभावेपि भोगप्रसंग इत्यर्थः। ननु कर्तृभोक्त्रोश्चैतन्यानुगमेनाभेदोपपत्तेर्न कृतहानादीत्यत आह ॥ अभिन्न इति ॥ ननु चैतन्ये वास्तवकर्तृत्वाद्यभावेपि आरोपितं कर्तृत्वमस्तीति तादृशकर्तृत्वोपेतचैतन्यानुगमेनाभेदसद्भावान्न कृतहानादीत्यत आह ॥ कर्तृत्वादिति ॥ स्थूलः करोतीति प्रतीतेरित्यर्थः। तथा चारोपितकर्तृत्वस्याति-प्रसंगेनाप्रयोजकत्वेन न तेन व्यावहारिककर्तृभोक्तृभेदप्रमानिर्वाहः। गुंजापुंजे वह्नित्वारोपेणारोपि-तदाहकर्तृत्वसद्भावात्तेनापि वास्तवस्फोटादिरूपकार्यापत्तिरिति भावः ॥ अहमिति ॥ अहमर्थान्यस्मिन् चैतन्ये कर्तृत्वारोपो न युक्तः। तथा हि– चैतन्यं कर्त्रिति कदाप्यारोपादर्शनात् अहं करोमीत्येव तदारोपो वाच्यः। आरोपश्च प्रधानपूर्वक इति मुख्यकर्तृत्वप्रत्ययोन्यत्र वक्तव्यः। स चैतदन्यो नास्तीति अयमेव मुख्यप्रत्यय इति न तदारोप इति भावः। अहंकारविलये क्रियाशक्तेरपि नाशेन प्राणस्यापि प्रविलयापत्त्येति शेषः ॥ नन्विति ॥ प्राणस्याहंकाराद्भेद इत्येकं मतं अभेद इत्यपरं मतमिति मतद्वयसत्वादेवमुक्तिः ॥ तल्लयेयुक्त इति ॥ तथा च तल्लयेपि प्राणकार्यश्वासाद्युपपत्तिरिति भावः। प्राणस्याहंकारभेदपक्षे आह ॥ प्राणस्येति ॥ ॥ प्राणेति ॥ चेष्टनेत्यर्थः। अहमर्थे चेष्टाभावेन क्रियाकर्तृत्वाभावादिति भावः। अभेदपक्षे त्वाह ॥ अहमर्थत्वेति ॥ प्राणस्येति वर्तते। स्वान्यथानुपपत्त्या सुषुप्तौ प्राणस्य सत्वात्तदभिन्नाहमर्थस्यापि सत्वापत्त्या तदुल्लेखः स्यादित्यर्थः। स्वरूपतः सत्वेपि तदुल्लेखः किमर्थः? न हि यावदस्ति तावतोल्लेखितव्यमित्यस्ति नियम इत्यस्वरसादाह ॥ किं चेति ॥ ॥ न सुषुप्ताविति ॥ न स्वरूपेण नाशः किं तूपरम एवेत्यर्थः। गृहीतं स्वव्यापारादुपरतम् ॥ उपरमस्यैवेति ॥ तथा च मनो गृहीतमिति सतोंतःकरणस्योपरम एवोक्तो न तु लय इत्यर्थः "अथातोऽहंकारादेशः अथातआत्मादेश" इति श्रुतौ पृथगुक्तत्वाचाहंकारात्मनोर्भेद इत्युक्तमयुक्तं। तथात्वे आत्मनोपि भूम्नो भेदेनोपदेशान्यथानुपपत्त्या आत्मापि भूम्नो भिन्नः स्यात्। तस्माद्भेदोपदेशेपि यथा भूमात्मनोरैक्यमेवांगीकृतं द्वयोः श्रुत्युक्तसार्वात्म्यानुपपत्तेः एवमात्माहंकारयोर्भेदोपदेशे सत्यपि ऐक्यमेवास्तु। तथा च भेदोपदेशोऽप्रयोजक इत्याह ॥ अथात इति ॥ ननु नोपदेशानुपपत्तिः ऐक्यार्थत्वेनान्यथासिद्धत्वादिति शंकते ॥ नन्विति ॥ भूमात्मनोः परमात्मजीवात्मनोः ॥ प्रत्यक्षसिद्धयोरिति ॥ अन्योन्याभावप्रत्यक्षेऽधिकरणप्रत्यक्षस्य तंत्रत्वादत्र च जीवस्य प्रत्यक्षसिद्धत्वात्तद्भेदोपि प्रत्यक्षसिद्ध एवेति भावः ॥ पृथगिति ॥ "अप्राप्ते शास्त्रमर्थवदि"ति न्यायेन प्रत्यक्षसिद्धभेदोपदेशस्य व्यर्थत्वात् व्यर्थं सत् किंचिदिष्टं ज्ञापयतीति न्यायेन ऐक्यार्थ इत्यर्थः। ननु भेदोपदेशस्य व्यर्थस्यापि कथं भूमात्मनोरभेदज्ञापकमित्यत आह ॥ द्वयोरिति ॥ द्वयोः "स एवेदं सर्व"मित्याद्युक्तसार्वात्म्यस्य च श्रुतावुच्यमानत्वादिति भावः ॥ पृथगिति ॥ पूर्वन्यायेनेति भावः। अहंकारे सार्वात्म्योपदेशस्तु तदारोपाधिष्ठानात्मसंबंधेनोपचरित इति ज्ञातव्यम्। आत्मनो जीवस्याहमित्यनुभवव्यतिरेकेणात्मनि प्रत्यक्षाप्रवृत्तेरित्यर्थः। उपदेशः पृथगुपदेशः ॥ भेदार्थ इति ॥ तथा च भूमात्मनोर्भेदप्रतिपादकत्वोपपत्त्या त्वदिष्टव्याघात इति भावः ॥ ब्रह्मेति ॥ भूमशब्दोक्तेत्यर्थः ॥ तयोरिति ॥ अहंकारभूम्नोः पृथगुपदेश इत्यर्थः

(प्रकाशः)

॥ऐक्यार्थ इति॥ उक्तन्यायादित्यर्थः। तथा च भूमाहंकारयोरप्यैकप्रतिपादकत्वोपपत्त्या तवात्यंतानिष्टप्राप्तिरिति भावः ॥भूमेत्यादि॥ अविद्याशब्देन मायापि ग्राह्या। तथा च भूम्नो बिंबस्थानीयमायोपाधिकब्रह्मत्वात् अहंकारस्य प्रतिबिंबस्थानीयाविद्योपाधिकजीवत्वात् आत्मनश्च मुखमात्रस्थानीयब्रह्मजीवानुस्यूतचिन्मात्रत्वेन तत्प्रतिपादकत्वांगीकारेण त्वदभिप्रेतचिदचित्संवलनात्मकाहंकारप्रतिपादनप्रसक्तेरेवाभावेन तत् श्रुतिबलादहमर्थस्य जीवात्मैक्यासिद्धिरित्यर्थः। द्वयोः सर्वात्म्यानुपपत्तेः पृथगुपदेश ऐक्यार्थ इत्युक्तं दूषयति ॥ स एवेति॥ उपसंहाराणां भूमाहंकारात्मप्रकरणेषु श्रुतानामित्यर्थः ॥उपक्रमैरिति॥ भूमप्रभृतीनामाधाराधेयभावेन सर्वगतत्वप्रतिपादकोपक्रमैः सर्वगतत्वपरत्वेन व्याख्येयत्वादित्यर्थः। उपक्रमस्यासंजातविरोधित्वेन प्रबलत्वात्तदनुरोधेनोपसंहाराणां नेयत्वादिति भावः। ननु भवत्पक्षेपि कथमनेकेषां सर्वगतत्वमित्यत आह ॥सर्वगतत्वस्य चेति॥ तार्किकादिमते गगनादीनामनेकेषामपि सर्वगतत्वांगीकारादिति भावः ॥भूमेति॥ जीवब्रह्मणोरभेदप्रतिपादनायास्य प्रकरणस्य त्वन्मते आरब्धत्वादिति भावः ॥स्थूलारुंधतीन्यायेनेति॥ यथाऽरुंधतीं दर्शयितुं तत्समीपस्था प्रत्यक्षसिद्धा स्थूलतारका इयमरुंधतीत्यभेदेनादावुपदिश्यते अनंतरं तस्यां बुद्धौ प्रसृतायां पश्चान्नेयमरुंधती किं तु तत्समीपस्थेति प्रदर्श्यते एवं प्रत्यक्षसिद्धाहंकारैक्यमपि द्वारत्वेनोपदिश्यत इत्यर्थः। ऐक्योक्तिः सार्वात्म्योपदेशेनेति शेषः। आत्मन एव जीवस्यैव ॥तदैक्येति॥ भूमशब्दोक्तब्रह्मण इति शेषः ॥सिद्धचेति॥ ततश्च न द्वारापेक्षेति भावः। अरुंधत्यास्तु शैघ्र्येण प्रत्यक्षसिद्धत्वाभावात्तत्र द्वारापेक्षेति वैषम्यं ज्ञातव्यम्। नन्वात्मन आपरोक्ष्याभावादपरोक्षाहंकारो द्वारत्वेनोपदिश्यत इति चेत्तत्राह ॥उक्तीति॥ ॥आत्मन इति॥ भूमात्मनोर्भिन्नत्वेन प्रत्यक्षसिद्धयोः पृथगुपदेश ऐक्यार्थ इत्यनेनेत्यर्थः। अन्योन्याभावप्रत्यक्षत्वे तंत्रस्याधिकरणप्रत्यक्षत्वस्यालाभादिति भावः। आत्मनो जीवस्यापरोक्ष्याभावे दूषणांतरमाह ॥अपरोक्षेति॥ द्वारभूतेत्यर्थः ॥आपरोक्ष्यस्येति॥ भूमाख्यब्रह्मण इति शेषः ॥उपदेशेनेति॥ लब्धेन परोक्षत्वेनेत्यर्थः ॥हानीति॥ बाधः सत्प्रतिपक्षो वा स्यात् उभयथापि त्वदिष्टासिद्धिरिति भावः। ननु भवन्मतेपि कथं ब्रह्मभिन्नाहंकारस्य सर्वव्यापित्वं संजाघटीतीत्यत आह ॥श्रुत्यर्थस्त्विति॥ तथा चाहंशब्दोऽनिरुद्धपर इति भावः ॥सैव हीति॥ सत्याद्या अहमात्मांताः सा परदेवतैव तत्स्वरूपभूता एवेत्यर्थः। प्रत्युत प्रसिद्धाहंकारपक्ष एवेयं श्रुतिरनुपपन्नेत्याह ॥अन्यथेति॥ ननु षट्प्रश्नोपनिषदि अहंकारश्चेत्यादिनाहमर्थस्य पृथिव्यादिवत्परमात्माश्रितत्वं प्रतीयते तत् अहमर्थापरपर्यायाहंकारस्यानिरुद्धत्वे विरुद्धमित्यत आह ॥अहंकारश्चेति॥ न त्वहमर्थः अस्मदभिप्रेतो जीवस्थोऽनिरुद्धः। अहंकारस्य महत्तत्वकार्यादित्वे प्रमाणमाह ॥महत्तत्वादिति॥ अतो भवः = एतस्मात् त्रिविधाहंकारात् मनः प्रभृतीनां भव उत्पत्तिरित्यर्थः। अस्मदुक्तार्थमनंगीकृत्य महाभूतान्यहंकारो बुद्धिरव्यक्तमेव चेति स्मृतौ अहंकारस्य क्षेत्रज्ञाज्जीवात्पार्थक्येन क्षेत्रत्वोक्त्या नाहमर्थो जीव इत्यंगीकारे संविद्रूपचैतन्यवाचिनो बुद्धिशब्दस्य बुद्धिरव्यक्तमेव चेति क्षेत्रमध्ये पाठात् संविदोपि क्षेत्रत्वापत्तिः। अतः तत्र बुद्धिशब्दो नानार्थक इत्यंगीकार्यम्। तदहंकारशब्देपि सममित्याह ॥अन्यथेति॥ अहंकारशब्दस्य नानार्थत्वमेव दर्शयति ॥अहंकारशब्दस्येति॥ देहेऽहंबुद्धाविति॥ देहविषये याहंबुद्धिस्तत्रेत्यर्थः ॥अहमर्थेति॥ त्वदभिमतांतःकरणरूपाहमर्थेत्यर्थः ॥अहंशब्देति॥ कारशब्दरहितकेवलाहंशब्देत्यर्थः ॥दकारांतेति॥ अस्मदः त्वाहौ सावित्यहादेशे सति निष्पन्नत्वादित्यर्थः। तस्मादहमनुभवामीत्यादिनाहमर्थेनुभवितृत्वकर्तृत्वरूपात्मानात्म-

(प्रकाशः)

धर्मदर्शनाच्चिदचित्संवलनसिद्धिरित्युक्तं दूषयति ॥अहमर्थ इति॥ वक्ष्यमाणत्वात्॥ उत्तरभंगस्यादावेवेति शेषः। अस्तु वांतःकरणधर्मत्वं कर्तृत्वादेः तथाप्यहंकर्तेत्यत्रांतःकरणस्य अहमर्थभूतजीवस्वरूपानंतर्भावेन ततो भिन्नत्वेपि अंतःकरणगतकर्तृत्वाख्यधर्ममात्रारोपेणैवाहं कर्तेति प्रतीतिरस्तु। न धर्म्यैक्यं। यथा विदेहनिष्ठगौरत्वादेरात्मन्यारोपेपि न देहस्यात्मस्वरूपांतर्भावस्तद्वदित्याह ॥अंतःकरणधर्मत्वेपीति॥ ननु सर्वत्राहमर्थस्य जीवाख्यप्रत्यङ्गात्रत्वे परकीये घटे घटशब्दवत् परकीयेऽहमर्थेऽहंशब्दस्य प्रत्ययप्रयोगौ स्यातां नत्वयमिति धीः प्रयोगो वा। अस्ति चायमिति धीः प्रयोगश्च। तेन ज्ञायतेऽहमर्थेनात्मांशोस्तीति तत्राह ॥या त्विति॥ सत्यं सोपि वस्तुतोऽहमर्थ एव। तथापि स्वदेहापेक्षया तदीयदेहाख्यप्रतिसंबंधिभेदेन इदमर्थत्वात् परागर्थत्वात् अयमिति धीरित्यर्थः ॥अयमिति॥ अनात्मांशाभावादित्यर्थः। अहमर्थस्यात्मभिन्नत्वे प्रत्यक्षमांशंक्य निराकरोति ॥न चेति॥ जानामि ज्ञानवानित्यर्थः। अहमर्थस्य ज्ञानसुखरूपात्माभिन्नत्वे तद्वत्त्वमहमर्थे प्रतीयमानमयुक्तं स्यात्। तेन ज्ञायते नाहमर्थः सुखादिरूपात्मेतीति भावः ॥अनयोरिति॥ प्रकृतज्ञानानंदरूप आत्मा अहमर्थाद्भेदेन भातीत्येतदित्युक्तं भवति। ननु ज्ञानसुखयोरहमर्थाश्रितत्वेन प्रतीतिर्भ्रांतिरिति चेत्तत्राह ॥अस्या इति॥ ॥विरोधादिति॥ अहं जानाम्यहं सुखीति प्रतीत्यैवाहमर्थभेदेनात्मा भातीत्युच्यते। इदानीं तस्या भ्रांतित्वांगीकारे त्वदभिमतप्रमेयासिद्ध्या विरोधादित्यर्थः ॥सर्वात्मक इति॥ अविद्यानावृतजीवचैतन्यस्यापरिच्छिन्नत्वेन सर्वगतत्वेन प्रत्यक् पराक् च भवति अहमर्थस्त्विदमर्थव्यावृत्तः परागर्थव्यावृत्तः प्रत्यगर्थ एवेति यावत्। तथा च नात्माहमर्थयोरैक्यमिति भावः ॥सर्वात्मक इति॥ यथा आत्मनः सर्वात्मकत्वेन इदमर्थव्यावृत्तिधियः प्रत्यक्त्वमात्रधियो भ्रांतित्वमुच्यते तथाहंकारस्यापि अहमेवेदं सर्वमिति सर्वात्मकत्वेन प्रतीतेऽहमर्थेपि इदमर्थव्यावृत्तिधियः प्रत्यक्त्वमात्रधियो भ्रांतित्वोपपत्तेरित्यर्थः। चिदचित्संवलनात्मकाहमर्थांतर्गतेऽचिद्भागारोपाधिष्ठानभूते आत्मचैतन्यभागेऽहंप्रत्ययविषये व्यभिचार इत्याह ॥त्वन्मत इति॥ ॥किं चेति॥ आत्मानात्मनोरन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य सर्वे प्रमातृत्वभोक्तृत्वादिव्यवहाराः प्रवर्तन्त इति भाष्ये इतरेतराध्यासं प्रतिपाद्य तत्रात्मन्यनात्मारोपोपपादनाय गौरोहमित्याद्युदाहृतं। तत् अहमर्थस्यात्मभिन्नत्वेऽयुक्तं स्यात्। अत्र गौरदेहैक्याध्यासोहमर्थ एव प्राप्तो नात्मनीत्यर्थः ॥मा न भूवमिति॥ माहं न भूवं अपि तु भूयासमित्यर्थः। परमप्रेमास्पदत्वमात्मन उपपादयितुं इयं प्रतीतिरुदाहृता। अनया चाहमर्थस्यैव प्रेमास्पदत्वमनुमीयते। अतोहमर्थस्यानात्मत्वे इदमयुक्तं स्यादित्यर्थः ॥अहमर्थेति॥ आत्मा स्वप्रकाशः स्वसत्तायां प्रकाशव्यतिरेकवैधुर्यात् – अप्रकाशरहितत्वादिति यावत् – इत्यनेनात्मनः स्वप्रकाशत्वं साधितं। तत्र च हेतोः स्वरूपासिद्धिपरिहाराय आत्मनः प्रकाशव्यतिरेकवैधुर्योपपादनाय अहमिति सदा प्रकाशोपपादनं कृतं इदमप्यहमर्थस्यानात्मत्वेऽयुक्तं स्यात्। अहमर्थसंबंधिप्रकाशव्यतिरेकवैधुर्येणात्मनः स्वप्रकाशत्वसाधनस्याप्ययुक्तत्वादित्यर्थः। आत्मनः प्रेमास्पदत्वोपपादनाय मा न भूवमित्यहमर्थस्य प्रेमास्पदत्वोक्तिरयुक्तेति यदुक्तं तदयुक्तं परमप्रेमास्पदीभूतात्मैक्यारोपादहमर्थे परमप्रेमास्पदत्वधिय उपपत्तेरित्याशंक्य निराकरोति ॥न चेति॥ ॥अन्योन्याश्रयादिति॥ आत्मनः प्रेमास्पदत्वे सिद्धे तदैक्यारोपादहमर्थस्य प्रेमास्पदत्वारोपसिद्धिः तत्सिद्धौ चात्मनः प्रेमास्पदत्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः। नन्वात्मनः प्रेमास्पदत्वसिद्धिर्नाहमर्थस्य प्रेमास्पदत्वारोपसिद्ध्यधीना। अतो नान्योन्याश्रय इत्यत आह ॥अहमर्थेति॥ तथा चाहमर्थप्रेम्णो योऽनुभवस्तद्व्यतिरिक्तात्मप्रेमानुभवाभावादात्मप्रेमास्पदत्वमहमर्थप्रेमास्पदत्वाधीन-

(प्रकाशः)

मित्यन्योन्याश्रय इत्यर्थ इत्याहुः। संप्रदायस्तु अहमर्थे प्रेमास्पदत्वारोपसिद्धौ प्रकारांतरेणात्मप्रेमास्पदत्वोपपादनासंभवात्तन्निबंधनात्मप्रेमास्पदत्वसिद्धिरित्यन्योन्याश्रयत्वोपपादनं पूर्वमेव कर्तव्यम्। इतोप्यहमर्थे प्रेमास्पदत्वधीर्न भ्रांतिरित्याह ॥अहमर्थैति॥ अहमर्थप्रेम्णोनुभवस्य वक्तुमशक्यत्वादतो मा न भूवमित्ययमेवात्मप्रेमानुभव इति वाच्यं। तथा च प्रधानाभावादस्यैवानुभवस्यानारोपत्वसिद्धिरित्यर्थः। किं च वस्तुतोऽप्रेमास्पदेऽहमर्थे प्रेमास्पदत्वारोपो न युक्तः। इच्छारोपः साक्षिरूपो वाच्यः। स न युक्तः। तथात्वे साक्षिणो भ्रमत्वापत्तेः। नन्वनिष्टसाधने सर्पादौ मालात्वभ्रमेण इदमिष्टसाधनं मालात्वादितीष्टसाधनताभ्रमानंतरं इष्टसाधनताया अभावेपि इदं मे स्यादितीच्छानुभूयत इति चेत्तत्राह॥ अहित इति॥ अनिष्टसाधने इष्टसाधनताबुध्या प्रेमोत्पत्तौ सत्यामेव वस्तुतः प्रेम्णः सत्वात्प्रेमानुभवो भवति। अहिते प्रेमोत्पत्तिश्च भवति। परं तु प्रेमाभावे प्रेमज्ञानं तु न भवत्येवेत्याशयः। आत्मरूपाधिष्ठानगतप्रेमास्पदत्वस्य आरोप्येंगीकारे वाचस्पतिग्रंथविरोधोत आरोप्यांतःकरणगताप्रेमास्पदत्वस्यैवात्मनि प्रतीत्यापत्तिरित्याह ॥वाचस्पतिनेति॥ अयं श्लोकः कल्पतरौ व्याख्यातः। समारोप्यस्य सपदिर्भीषणत्वादिरूपेण धर्मेण विषयोधिष्ठानभूतो रज्वादिर्भीषणत्वादियुक्तो भवति विषयस्य रज्वादेरूपेण पुरतो गम्यमानत्वादिना समारोप्यं सर्पादिरूपवत् अभिगम्यमानं न भवतीत्यर्थः। अहमर्थे प्रेमास्पदत्वारोपहेतुं आत्मैक्यारोपं दूषयति ॥त्वद्धीत्येति॥ सुखविषयकानुभवरूपस्य सुखमनुभवामि सुखानुभववानस्मि। अहमर्थाद्भेदेनेत्येव पाठः। सुखानुभवादिति पाठस्तु चिंत्यः। तथा चात्मनोहमर्थाद्भेदेन प्रतीतेर्न तत्र तस्यारोप इत्यर्थः। बाह्यमतापत्तिः वेदबाह्यो यो बौद्धः तन्मतापत्तिः। ननु प्रेमास्पदरूपात्मभूतवस्तुनाशांगीकारात्तन्मतस्य निंद्यत्वं न मन्मतस्येत्यतः प्रेमास्पदवस्तुनाशस्त्वन्मतेऽप्यविशिष्ट इत्याह ॥प्रेमास्पदस्येति॥ वास्तवं नाहंकारस्य प्रेमास्पदत्वं। किं तु आत्मैक्यारोपादहमर्थे तद्धीरित्येतद्दूषितमिति भावः। ननु मोक्षे प्रेमास्पदाहंकारनाशेपि तदन्यस्य ब्रह्मणोऽविनाशात्तद्भावस्य पुरुषार्थत्वमिति चेत्तर्हि समं शून्यवादेपीत्याह ॥तदन्यस्येति॥ आत्मान्यस्येत्यर्थः। तद्भाव एव तन्मते पुरुषार्थ इति साम्यमिति भावः। एवं = अहमर्थस्य आत्मान्यत्वे ॥न स्यादिति॥ अहमर्थस्य मुक्त्यनन्वयादित्यर्थः ॥तदभेदेति॥ मुक्तावप्यात्माभेदेत्यर्थः। तर्ह्यहं मुक्तः स्यामितीच्छा कथमित्यत आह ॥अहंकारे त्विति॥ ॥तदैक्येति॥ पुष्टत्वाश्रयशरीरैक्यारोपादित्यर्थः ॥तदैक्येति॥ सुख्यात्मैक्येत्यर्थः ॥अन्योन्येति॥ आत्माहमर्थयोर्भेदादीनामारोपसिद्धौ उक्तेच्छाया अबाधकत्वसिद्धिः तदबाधकत्वसिद्धौ भेदसिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥तत्र मामिति॥ तथा च मां अहमिति अहमर्थस्यैवामृतत्वप्रार्थनश्रवणादात्मन एव मुक्तिरिष्यत इत्युक्तमसदिति भावः ॥तत्रेति॥ ऐक्यारोपादहं पुष्टः स्यामितीच्छायामपि कदाचिच्छरीरं पुष्टं स्यादिति मुख्येच्छा भवति। तथा ऐक्यारोपादेव शरीरं सुखि स्यादितीच्छायामपि कदाचिदहं सुखी स्यामीतीच्छा भवति। तद्वत् मुक्त्यन्वय्यात्माभेदारोपेणाहं मुक्तः स्यामितीच्छायामपि कदाचिद्वा चिन्मात्रं मुक्तं स्यादितीच्छा प्रसज्येत। नह्येवं कदाचित्कस्यचिदिच्छा दृष्टा। अतो मुक्तेरनिष्टत्वापातात् आत्मसंबंधितयेच्छाविषयत्वाभावापातादित्यर्थः। ननु कश्चिदात्मा मुक्तः स्यादित्यात्मसंबंधितया मुक्तेरिच्छाविषयत्वं संभवतीति चेत्तत्राह ॥कश्चिदात्मेति॥ कस्यचिदात्मनो मुक्तीच्छया मुमुक्षोः स्वस्य न प्रवृत्तिर्युक्तेत्यर्थः। न ह्यन्यस्य स्वर्गेच्छया स्वस्य यागे प्रवृत्तिर्दृष्टेति भावः। ननु ममात्मा मुक्तः स्यादित्यात्मनो मुक्तीच्छा संभवतीति चेत्तत्राह ॥ममेति॥ ॥अहमर्थस्यैवेति॥ तदतिरिक्तस्य चिन्मात्रस्य

(प्रकाशः)

ममात्मेत्यहमर्थ वाचिशब्दाविषयत्वादिति भावः। नन्वहं मुक्तः स्यामितीच्छा नास्त्येव किं तु चिन्मुच्यतामित्यादिरूपैव। एवमिच्छयैव मुमुक्षुप्रवृत्तिरिति मया हि नियम्यते इति चेत्तत्राह ॥न चेति॥ कुतो न नियंतुं शक्येत्यत आह ॥बौद्धेति॥ तथात्वे आत्मनाशो भूयादिति बौद्धकल्पितमुक्तीच्छया आत्मनाशस्य पुरुषार्थत्वापातात्। तथा एकविंशतिसुखध्वंसो भूयादिति तार्किककल्पितमुक्तीच्छया सुखनाशस्यापि पुरुषार्थत्वापात इत्यर्थः। अहमर्थस्य चिदचित्संवलनात्मकत्वे बाधकांतरं चाह ॥किं चेति॥ वस्तुगत्याऽहमर्थोस्मिन्मते आत्मैव। तत्र त्वयांतःकरणरूपाचिद्भागांगीकार इत्यर्थः ॥मम मन इति॥ ममेति प्रतीयमानेऽहमर्थे मनसः प्रविष्टत्वात् मम मन इति प्रतीतिर्न स्यात्। न हि दंडिनो दंड इति प्रतीतिः संभवतीत्यर्थः। एतदेवाह ॥तदवच्छिन्नस्येति॥ तद्विशिष्टस्येत्यर्थः। तथात्वे अवच्छेदककोटौ स्वस्यैव प्रवेशापत्त्या आत्माश्रयः स्यादिति भावः। कुत इत्यत आह ॥चिदचिदिति॥ मनः स्फुरतीत्यत्र मनसोऽचित्त्वात् स्फुरणस्य चित्त्वाच्चिदचित्संवलनसद्भावादहमर्थेपि तत्संवलनस्य त्वयैवांगीकारात्तयोर्ज्ञानियोश्चिदचित्संवलनविषयकत्वाविशेषाद्वैषम्यमनुभूयमानं न स्यादित्यर्थः ॥द्व्यंशेति॥ अधिष्ठानारोप्यरूपांशद्वयेत्यर्थः। ननु आरोप्यविषयकत्वमेवावश्यकं किमधिष्ठानविषयकत्वेनेत्यत आह ॥अन्यथेति॥ ततः किं प्रकृत इत्यत आह ॥न चेति॥ अधिष्ठानभूतचिदंशो नानुभूयत इत्याशयः। नन्वहमिति बुद्धेर्भ्रमत्वान्यथानुपपत्त्यैवाननुभूतमपि द्व्यंशत्वं कल्प्यत इत्यत आह ॥यदीति॥ तथा चात्मस्वरूपेपि चिदचित्संवलनापातेन तद्बुद्धेरपि भ्रमत्वापात इत्याशयः। नन्वत्रापि द्व्यंशत्वमनुभूयत एव। अहं स्फुरामि अहमस्मीत्यत्र स्फुरणसदर्थयोश्चैतन्यस्वरूपत्वेनाधिष्ठानांशत्वात्। यथा हि रूप्यं स्फुरति रूप्यमस्तीत्यत्र स्फुरणसदर्थयोरधिष्ठानत्वं दृष्टं तद्वत्। ननु तर्हि तत्र यथा इदं रूप्यमिति धीर्भवति तथाहमिदमिति धीः स्यात् न तु स्फुरामीति धीरिति चेन्न। तत्र रूप्यं प्रति शुद्धं स्फुरणं सदर्थश्च नाधिष्ठानं किंत्विदमंशावच्छिन्नमेव तत्रत्येदं रूप्यमिति धीर्भवति अत्र तु शुद्धचिदाख्यस्फुरणस्यैवाधिष्ठानत्वादहं स्फुरामीत्येव धीर्भवतीति शंकते ॥नन्विति॥ ॥त्वन्मत इति॥ अविद्यावृत्तिरूपभ्रमरूपज्ञानस्वरूपस्याप्यध्यस्तत्वेनारोप्याधिकसत्ताकत्वाभावान्नाधिष्ठानत्वमिति भावः। नन्वविद्यावृत्तिरूपभ्रमरूपज्ञानस्याध्यस्तत्वेपि चैतन्यरूपस्फुरणस्य अहंज्ञानरूपस्य न तथात्वं अतो युक्तमधिष्ठानत्वमिति चेन्न। चैतन्यमात्रस्याहंज्ञानत्वे सुषुप्त्यादावप्यहमनुवृत्त्यापातेनाविद्यावृत्त्यवच्छिन्न चित एवाहंज्ञानत्वेन त्वया वाच्यत्वात्तस्य चाध्यस्तत्वेनानधिष्ठानत्वादिति भावः। लोकेऽधिष्ठानमारोप्यसंभिन्नत्वेन प्रतीयमानं दृष्टं न तु तद्भिन्नत्वेन। प्रकृतेऽहं स्फुरामीत्यस्य स्फुरणवानहमित्यर्थकत्वेनाश्रयाश्रयिभावप्रतीत्याऽहमर्थाद्भेदेनैव स्फुरणं भासते अहमिच्छामीत्यत्र यथा इच्छावत्त्वं प्रतीयते तद्वत्। अतः स्फुरणं नाहमर्थारोपाधिष्ठानं अन्यथेच्छाया अप्यहमर्थारोपाधिष्ठानत्वं स्यादित्याशयेनाह ॥अहमिच्छामीतिवदिति॥ रूप्यमस्तीत्यत्रेवाहमस्मीत्यत्रापि सदर्थोधिष्ठानत्वेन प्रतीयत इत्युक्तं तत्र दृष्टांत एवासंप्रतिपन्न इत्याह ॥बाधकेनेति॥ नेदं रूप्यं सदिति बाधकप्रत्ययेनेत्यर्थः। किं चाहमिति प्रतीतावेव चिद्रूपाधिष्ठानारोप्यांशद्वयमस्तीति त्वदभिप्रेतं तत्र प्राप्तं किंत्वहं स्फुरामीति ज्ञान एव द्व्यंशत्वं अतोऽहमिति ज्ञानस्य द्व्यंशत्वोपपादनायाहं स्फुरामीत्यादौ द्व्यंशत्वोपपादनमसंगतमित्याह ॥त्वदभिप्रेतस्येति॥ किं तर्ह्यहमर्थस्यात्मत्वे प्रमाणमित्यत आह ॥आत्मत्वे त्विति॥ प्रत्यक्षं अहमज्ञ इत्यादिकं ॥तत्साधनेति॥ यो यत्फलसाधनकृत्याश्रयः स तत्फलसंबंधवान् यथा स्वर्गसाधनकृत्याश्रयो यजमानः स्वर्गफलान्वयीत्यर्थः। ननु पुत्रः पूतः स्यादिति पुत्रगतपूतत्वरूपफलोद्देशेन

(प्रकाश:)
पिता जातेष्टिकरणे प्रवर्तते तत्र पुत्रसंबंधिपूतत्वरूपफलसाधनीभूतकृत्याश्रये पितरि पूतत्वरूपफलसंबंधाभावेन व्यभिचार: स्यादिति चेन्न। उत्तरभंगे वक्ष्यमाणरीत्या पुत्रगतं पूतत्वं न जातेष्टिफलं किं तु पूतपुत्रकत्वं। तच्च पितृगतमेवेति व्यभिचारशंकाया एवाभावात्। इममर्थमजानाना: केचित् स्वसंबंधिफलसाधनकृत्याश्रयत्वं हेत्वर्थो विवक्षितोऽतो न पितरि व्यभिचार इत्याहु:। स्वर्गसाधनहोमादि कृत्याश्रये ऋत्विजि स्वर्गान्वयशून्ये व्यभिचार: स्यादिति चेन्न। अपरिक्रीतसंबंधिकृत्याश्रयत्वादित्यर्थ:। अपरिक्रीत: प्रधानो यजमान:। ऋत्विजस्तु द्रव्यदानेन यजमानपरिक्रीतत्वान्न व्यभिचार इत्यवधेयम्। अनर्थेत्यादिना मोक्ष एव नामांतरेण निर्दिष्ट: ॥संमतवदिति॥ अत्र यो यदाश्रय: स तन्निवृत्त्याश्रय: यथा घटाश्रय: कपाल: तन्निवृत्त्याश्रय इति द्रष्टव्यम्। अनर्थाश्रयत्वहेतोरसिद्धिमाशंक्य निराकरोति ॥ न चेति ॥ ॥ अहमज्ञ इत्यादि ॥ अज्ञानवैषयिकसुखादेरेवानर्थत्वादिति भाव:। प्रमेयत्वादौ व्यभिचारवारणाय मात्रपदम्। सति सच्छब्दवाच्ये ब्रह्मणि ॥प्रागिति॥ अहमर्थनाशवत्त्वेन त्वत्संमते प्रलयकालेपीत्यर्थ:। त्वन्मते तु चिदचिद्रूपमनस्संवलनात्मकाहमर्थस्य मनआदिसृष्ट्युत्तरकालीनत्वादिति भाव: ॥शुद्धेति॥ तथाच नाहमर्थस्यात्मभिन्नत्वमिति भाव: ॥अनवद्यस्येति॥ त्वन्मतेऽहमर्थसंबंधस्यैव मुख्यावद्यत्वेन निरवद्यस्य ब्रह्मणोऽहमित्यवेदिति श्रुत्युक्ताहमुल्लेखायोगादिति भाव:। ॥मोक्षान्वयेति॥ बंधान्वयोपि द्रष्टव्य:। अहमर्थस्य मायाकल्पितस्य मिथ्यात्वेनात्मभिन्नत्वे बाधकमाह ॥मामेवेत्यादि॥ स्वप्रपन्नमायानिरसनसमर्थस्य मायिकाहमर्थसंबंधो न युक्त इति भाव:। अस्मदुक्तरीत्याऽहमर्थस्यात्मत्वांगीकारे तद्योहं सोसावित्यादौ विशिष्टयोरैक्यायोगात् पदद्वयस्य भागत्यागेन चैतन्यमात्रस्य लक्षणाजघन्यवृत्तिराश्रीयते। इत: परं सा नाश्रयणीया। अहमर्थस्यास्मदुक्तरीत्यात्मत्वेन एकस्यायंशब्दस्य मुख्यार्थत्वे संभवति पदद्वयस्य लक्षणाश्रयणं न त्वया कार्यमित्याह ॥एवंचेति॥ नन्वथापि कर्तृत्वादिविशिष्टस्यैवात्मशब्दार्थत्वात्तद-भेदायोगेनाहमर्थस्यैवात्मत्वेपि तत्पदे लक्षणा मया कार्यैवेति चेन्न। ''तदात्मानमेवावेदहं ब्रह्मास्मीति शुद्धचैतन्यस्यैवाहंत्वोक्तेर्न लक्षणा कार्येति भाव:। उत्तरत्र कारिकायामेतत्सूचनार्थमेव तदात्मानमिति श्रुतेरिति शुद्धचैतन्यस्यैवाहंत्वप्रतिपादिका श्रुति: संगृहीतेति द्रष्टव्यम्। संगृह्णाति ॥तस्मादिति॥ ॥अहमात्मेतीति॥ ''अहमात्मा गुडाकेशे''त्यादिस्मृतेरित्यर्थ: ॥अहमर्थस्यानात्मत्वभंगविवरणम्॥

## ३४. कर्तृत्वाध्यासभङ्गः

यच्चोच्यते जपाकुसुमस्थं लौहित्यं स्फटिक इव मनस्स्थं कर्तृत्वमात्मन्यध्यस्तम्, न तु तात्त्विकम् आत्मनो निर्विकारत्वात्, सुषुप्तौ बुद्ध्यभावेनाकर्तृत्वदर्शनात्, श्रुत्यादिविरोधाच्चेति। तत्र ब्रूमः–

प्रत्येकं स्फटिके पुष्पे भवेद्रक्तत्वबुद्धिवत्।
चिति बुद्धौ च कर्तृत्वसाक्षात्कारः कदाचन ॥

भवितव्यं हि बुद्धिस्थस्य कर्तृत्वस्यात्मन्यारोपे रक्तं कुसुममितिवत् कदाचिन्मनः कर्त्रीति प्रत्यक्षप्रमया, रक्तः स्फटिक इतिवत्कदाचिच्चैतन्यं कर्त्रीति भ्रमेण च। न हि बुद्धिस्थं कर्तृत्वमप्रत्यक्षम्। ननु मनश्चैतन्यात्मनाऽध्यस्तं कुसुमं तु न स्फटिकात्मनेति वैषम्यमिति चेन्न, अधिष्ठानात्मनाऽनध्यस्तं जपाकुसुमादिस्थानीयमुपाधिं विना भीषणत्वादियुक्तसर्पस्य रज्ज्वात्मनेव कर्तृत्वादियुक्तबुद्धेः चिदात्मनाऽध्यासे रज्जौ भीषणत्वान्तरस्येवात्मनि कर्तृत्वान्तरस्यानध्यासेन तदध्यासस्य सोपाधिकत्वायोगात्। मनो न स्फुरणम्, किं तु स्फुरतीति तयोर्भेदधीदशायामपि प्रत्येकं कदापि कर्तृत्वाप्रतीतेश्च। इदं सर्पयोः शरीरात्मनोश्चाभेदग्रहणदशायामप्ययं भीषणः सर्पो भीषणः अहं गौरः शरीरं गौरमितिवत् मनश्चितोरभेदग्रहदशायामपि स्फुरणं कर्तृ, मनः कर्त्रीति धीप्रसंगाच्च। न चोपाधेरधिष्ठानात्मनाऽध्यासेऽप्युपाधेस्तद्धर्मस्य वाऽधिष्ठान-समसत्ताकत्वं वाऽध्यस्यमानादधिकसत्ताकत्वं वा सोपाधिकत्वे तन्त्रमिति वाच्यम्, आद्ये त्वन्मते बुद्धेस्तत्कर्तृत्वस्य च चित्समसत्ताकत्वाभावेन सोपाधिकत्वायोगात्। द्वितीये बुद्धिगतकर्तृत्वस्य पारमार्थिकताया वा आत्मस्थकर्तृत्वस्य प्रातिभासिकताया वा प्रसंगात्। उभयत्रापि नीरे क्षीरत्वाध्यासस्यापि सोपाधिकत्वापाताच्च। एतेन कर्तृत्वं बुद्धिगतमहमर्थेऽहमर्थगतं वाऽऽत्मन्यध्यस्यते। ततश्चैतन्यं कर्त्रीति मनः कर्त्रीति च प्रतीत्यभावो युक्त इति निरस्तम्। आद्ये आत्मन्यारोपितस्याप्यनर्थाभावेन बुद्धेरेवाहमर्थस्यैव वा बन्धमोक्षापातात्। द्वितीयेऽहमर्थस्थेनानध्यस्तकर्तृत्वेनैवाहं कर्तेति प्रतीत्युपपत्त्या आत्मनि तदध्यासासिद्धेः। किं च मनसः कर्तृत्वेऽपि करणत्व-प्रसिद्धिविरोधः।

अपि च कर्ता शास्त्रार्थवत्त्वादित्यधिकरणे त्वयापि सांख्यरीत्या बुद्धेः कर्तृत्वे प्राप्ते जीवस्येति सिद्धान्तितत्वेन तद्विरोधः। बुद्ध्यात्मनोरविवेकस्य सांख्यमतेऽपि सत्त्वात्। किं च–

बन्धस्य तदपायेन कृतेस्तत्फलभाक्तया ।<br>सामानाधिकरण्याच्च न बुद्धेः कतृता मता ॥

तथा हि– कर्तृत्वभोक्तृत्वाद्यनर्थरूपो बन्धो बुद्धिगतश्चेत् ततो मोक्षोऽपि तद्गतः

स्याद्, बन्धमोक्षयोः सामानाधिकरण्यात्। अज्ञानमपि हि दुःखादिभोगद्वारैवानर्थः। न च बुद्धिगतं सत्यं भोक्तृत्वादिकं नानर्थः, किं तु तदुपाधिकं मिथ्या भोक्तृत्वादिकमिति वाच्यम्, एतत्कल्पनायाः कर्तृत्वाध्याससिद्ध्यधीनत्वेनान्योन्याश्रयात्। मोक्षस्य सत्यस्यैव पुरुषार्थत्ववद् भोक्तृत्वादिरूपबन्धस्यापि सत्यस्यैवानर्थत्वाच्च। तदुक्तं वार्तिके बौद्धं प्रति--

न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित्प्रवर्तते ।
यादृच्छिकत्वात्स्वप्नस्य तूष्णीमास्येत पण्डितैः ॥ (श्लो.वा.पृ. २२०)

इति। स्थूलः करोमि स्थूलोऽहं भुंज इत्यादिप्रतीत्या देहस्याप्यनर्थान्वयापाताच्च। नापि बुद्ध्युपाधिकमात्मस्थं भोक्तृत्वादिकमनर्थः, न तु देहस्थमिति वाच्यम्, अनर्थाश्रयस्यात्मनोऽनर्थकोटित्वायोगात्। भ्रमकालेऽहं भोक्तेति प्रमाकाले तु बुद्धिर्भोक्त्रीत्येव प्रतीत्या शुद्धात्मनि कदापि तदप्रतीतेश्च। अपि च मनसः श्रवणादिकर्तृत्वे तत्फलं मोक्षोऽपि तस्यैव स्यात्। 'शास्त्रफलं प्रयोक्तरी'ति न्यायेन यस्मिन् साधनकृतिः, तस्यैव फलभाक्त्वात्। अन्यथा कृतहानाकृताभ्यागमापातात्। जातेष्टावपि पित्रर्थपुत्रगतं पूतत्वादिकं तदनुष्ठातुः पितुरेव फलम्, तेन तदुद्देशात्। न चात्रात्मान्तःकरणार्थः येनात्मगतो मोक्षो मनस उद्देश्यः स्यात्। आर्त्विज्यादेरपि दक्षिणैव कलम्।

नन्वारोपितमेव वा आत्मारोपितमेव वा कर्तृत्वं फलान्वये तन्त्रमिति चेन्न, निरस्तत्वात्। सत्यकर्तृत्ववत्या बुद्धेः सांसारिकफलभोक्तृत्वापाताच्च। न चोभयं तन्त्रम्, अननुगमात्। अपि च कृतिकर्मत्वकरणत्वादीनां मनसि श्रुतेः बुद्ध्यभावेऽपि कर्तृत्वश्रुतेर्बुद्धेर्न कर्तृता। श्रूयते हि 'तन्मनोऽकुरुते'त्यादौ मनसः कृतिकर्मत्वम्। तथा 'शृण्वन्तः श्रोत्रेण विद्वांसो मनसे'त्यादिश्रुतौ 'शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नर' इत्यादिस्मृतौ च करणत्वम्। तथा 'मन उदक्रामत् मीलित इवाश्नन् पिबन्नास्तैवे'त्यादौ मनस उत्क्रमणेऽप्यात्मनः कर्तृत्वम्। तथा 'एतं प्राणमयमात्मानमुपसंक्रम्य' 'एतं मनोमयमात्मानमुपसंक्रम्य' 'इमांल्लोकान् कामान्नी कामरूप्यनुसंचरन्नि'त्यादौ त्वद्रीत्या प्राणाद्यतिक्रमणेऽपि संचरणादिकर्तृत्वम्। तथा 'परं ज्योतिरु पसंपद्य स्वेनरूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाण'

इत्यादौ स्वरूपाविर्भावरूपपरममुक्तावपि कर्तृत्वम्। अपि च-

अहं करोमीत्यध्यक्षात् फलभाक्त्वादिलिंगतः ।
कर्ताऽऽत्मेत्यादिवाक्याच्च स्थितं कर्तृत्वमात्मनः ॥

न चाहं करोमीत्यादिप्रत्यक्षेण; (१) विमत आत्मा मोक्षसाधनविषयकृतिमान्, तत्फलान्वयित्वात्, सम्मतवत्। (२) अज्ञानं ज्ञानसमानाधिकरणम्, ज्ञाननिवर्त्यत्वात्, ज्ञानप्रागभाववत्। (३) दुःखादिभोगः मोक्षसमानाधिकरणः, बन्धत्वात्सम्मतवदित्याद्यनुमानैः, 'कर्ता विज्ञानात्मा यो वेदेदं जिघ्राणीति स आत्मा, आनन्दभुक् तथा प्राज्ञ' इत्यादिश्रुतिभिश्च सिद्धे आत्मनः कर्तृत्वादौ बाधकमस्ति। न च श्रुतिरनुवादः। अहमर्थान्यात्मस्थकर्तृत्वस्य 'नामरूपे व्याकरोत् स हि सर्वस्य कर्ते'त्यादि श्रुत्युक्तेश्वरस्थकर्तृत्वस्य च प्रत्यक्षेणाप्राप्तेः। न च निर्धर्मकत्वं बाधकम्। निर्धर्मकत्वरूपधर्मभावाभावाभ्यां व्याघातात्। ज्ञानत्ववत्, सौषुप्तिकाज्ञानादिसाक्षित्ववत्, बुद्धिं प्रति बुद्ध्यविशिष्टस्य ज्ञातृत्ववच्च सत्यस्यासत्यस्य वा ज्ञातृत्वादेरप्यात्मन्येव सम्भवाच्च। नापि निष्क्रियत्वं बाधकम्। क्रियाया धात्वर्थत्वे आत्मन्यप्यस्त्यादिधात्वर्थसत्तादेः सत्त्वेनासिद्धेः। परिस्पन्दत्वे ज्ञानादीनामपरिस्पंदत्वेनाप्रयोजकत्वात्। नाऽपि निर्विकारत्वं बाधकम्। आकाशस्य संयोगाद्याश्रयत्व इवात्मनोऽज्ञानतद्ध्वंसाद्याश्रयत्व इव च ज्ञानरूपगुणाश्रयत्वेऽपि द्रव्यान्तरत्वापत्तिरूपविकारानापातात्। न च सुषुप्तौ मनसोऽभावे कर्तृत्वाद्यदर्शनं बाधकम्, तदाऽप्युच्छ्वासादिकर्तृत्वदर्शनात्। सुप्तो भूर्भूरित्येव प्रश्वसितीत्यादि श्रुतेश्च। देहादिवन्मनसो निमित्तत्वेनापि तदुपपत्तेश्च। नापि श्रुतिर्बाधिका। 'विज्ञानं यज्ञं तनुत' इति श्रुतेः 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति, शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुत' इत्यादिवाक्यशेषेण ब्रह्मपरत्वात्। 'कामः संकल्प' इत्यारभ्य 'एतत्सर्वं मन एवे'तिश्रुतेः 'मनसा वा अग्रे संकल्पयती'त्यादिश्रुत्या मनःकरणकत्वपरत्वात्। 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण' इति श्रुतेरात्मनो भोक्तृत्वे देहादिवन्मनसः सहकारितेत्येवंपरत्वात्। 'ध्यायतीव लेलायतीवे'त्यादिश्रुताविवशब्दस्य परतन्त्रप्रभौ प्रभुरिवेतिवत् जीवस्थकर्तृत्वस्येश्वरतन्त्रत्वपरत्वात्। 'अहंकारविमूढात्मा कर्ताहमिति मन्यत' इति स्मृतेरपि जीवे

**स्वातंत्र्यनिषेधकत्वात्।**

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥**

**इत्यादि वाक्यशेषात्। अन्यथोक्तश्रुत्यादिविरोधात्।**

**न च कर्तृत्वस्य क्लेशसम्बन्धान्न श्रुतिस्तत्परा। दर्शपूर्णमासादावप्यतात्पर्यापातात्। लीलादेरुच्छ्वासादेश्चाकरण एव क्लेशदशनाच्च। यदा वै करोत्यथ निस्तिष्ठतीति श्रुत्यैव कर्तृत्वस्य फलसम्बन्धोक्तेश्चेति। कर्तृत्वाध्यासभंगः ॥**

## अद्वैतसिद्धिः

ननु– कर्तृत्वं यद्यनात्मधर्मः स्यात्, कथमात्मनि भासेत? न च– जपाकुसुमस्थं लौहित्यं स्फटिक इवान्तःकरणगतं कर्तृत्वमात्मन्यध्यस्तं, न तु तात्त्विकम्, निर्विकारत्वश्रुतिविरोधात्, सुषुप्तौ बुद्ध्यभावेऽकर्तृत्वदर्शनाच्चेति– वाच्यम्, एवं हि 'रक्तं कुसुम'मितिवत् कदाचिद् मनः कर्त्रीति प्रत्यक्षप्रमा 'लोहितः स्फटिक' इतिवत् चैतन्यं कर्त्रीति भ्रमश्च स्यादिति चेन्न, कर्तृत्वविशिष्टान्तःकरणस्य चैतन्यात्मनाध्यासेन न तथा प्रतीतिः, कुसुमस्य तु स्फटिकात्मना नाध्यास इति वैषम्यात्। न च – अधिष्ठानात्मनाऽनध्यस्तजपाकुसुमस्थानीयमुपाधिं विना भीषणत्वादियुक्तसर्पस्य रज्ज्वात्मनेव कर्तृत्वादियुक्तबुद्धेश्चिदात्मनाध्यासे रज्जौ भीषणत्वान्तरस्येवात्मनि कर्तृत्वान्तरस्यानध्यासेन सोपाधिकत्वं न स्यादिति– वाच्यम्, आत्मनि कर्तृत्वान्तरस्यैवाध्यासात्। न च तर्हि कर्तृत्वद्वयस्य विविच्य प्रतीतिः स्यात्, आत्मान्तःकरणयोरैक्याध्यासात्। रज्जुसर्पादौ अध्यस्यमानक्रूरत्वादिविशिष्टसर्पापेक्षया अधिकसत्ताकस्य सर्पान्तरस्य संभवेन नायमुपाधिः, अतो निरुपाधिकत्वम्। अत्र त्वध्यस्यमानान्तःकरणापेक्षया कर्तृत्वादिधर्मविशिष्टमन्यदधिकसत्ताकं नास्त्येवेति अन्तःकरणमत्रोपाधिरिति न सोपाधिकत्वानुपपत्तिः। न च– एवमपि मनो न स्फुरणम्, किंतु स्फुरतीति तयोर्भेदधीदशायां प्रत्येकं 'रक्तं कुसुमं' 'स्फटिको रक्तः' इतिवत् 'मनः कर्तृ' 'चैतन्यं कर्त्रि'ति प्रतीत्यापत्तिरिति– वाच्यम्, तादात्म्यारोपविरोधिभेदग्रहस्यैव तत्प्रयोजकत्वात्, प्रकृते च तदभावात्। यत्त्वभेदग्रहदशायामपि

(अद्वैतसिद्धिः)
'अयं भीषणः सर्पो भीषणः, अहं गौरः शरीरं गौरमि'तिवत् 'मनः कर्तृ' 'चैतन्यं कर्त्रि'ति प्रतीतिः स्यादिति, तन्न, तादात्म्यग्रहस्यैव प्रतिबन्धकस्य सत्त्वेन दृष्टान्तस्यैवासंप्रतिपत्तेः।

यदपि सोपाधिकत्वे तन्त्रत्वेनाधिष्ठानसमसत्ताकत्वमुपाधेः तद्धर्मस्य वा, अध्यस्यमानापेक्षयाधिकसत्ताकत्वं वा तयोरिति पक्षद्वयमुद्भाव्य प्रकृते तद्द्वयं न संभवतीति दूषणाभिधानम्, तदनुक्तोपालम्भनम्, यदन्वयव्यतिरेकानुविधायितया यत्प्रतीयते तदपेक्षया अधिकसत्ताकतद्धर्माश्रयान्तराभावस्यैव सोपाधिकत्वे तन्त्रत्वात्। न चैवं क्षीरसंपृक्त-नीरैक्याध्यासनिबन्धनक्षीरधर्मप्रतीतिः सोपाधिकी स्यात्, तस्याः सोपाधिकत्वे इष्टापत्तेः। ननु– बुद्धिगतं कर्तृत्वं किमहमर्थे, अहमर्थगतं वात्मनि अध्यस्यते। आद्ये आरोपितस्याप्यनर्थस्यात्मन्यभावे तस्य बन्धमोक्षानधिकरणत्वापत्तिः, द्वितीये अनध्यासेनैव 'अहं कर्ते'ति प्रतीत्युपपत्तौ किमध्यासेनेति चेन्न, अहंकारस्तु चिदचिद्ग्रन्थिरूपतया द्व्यंशः। तत्राचिदंशे बुद्धौ कर्तृत्वसत्त्वेऽपि तद्विशिष्टाया बुद्धेश्चित्यैक्याध्यासं विना 'अहं कर्ते'ति प्रतीतेरयोगेनाध्यासस्यावश्यकत्वात्। एतेन– आरोपितकर्तृत्वस्याप्यभावे आत्मनो बन्धमोक्षानधिकरणत्वं स्यादिति– निरस्तम्।

न च 'कर्ता शास्त्रार्थवत्त्वादि'त्यधिकरणे त्वयाऽपि साङ्ख्यरीत्या बुद्धेः कर्तृत्वे प्राप्ते, जीवस्यैवेति सिद्धान्तितत्वेन विरोधः। न चाविवेकनिबन्धनं जीवनिष्ठत्वम्, अविवेकस्य साङ्ख्यमतेऽपि सत्त्वादिति– वाच्यम्, बुद्धेरेव कर्तृत्वम्, भोक्तृत्वं चैतन्यस्येति पूर्वपक्षं कृत्वा कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यनियमेन भोक्तृत्ववत् कर्तृत्वमप्यङ्गीकर्तव्यमित्युक्तम्, न तु बुद्धेः अकर्तृत्वं आत्मनो वा स्वाभाविकं कर्तृत्वंमिति। 'यथा च तक्षोभयथा' इत्युत्तराधिकरणे पूर्वाधिकरणोक्तस्यात्मकर्तृत्वस्य स्वाभाविकत्वपूर्वपक्षे औपाधिकत्वस्य स्थापितत्वात्। अतो न तदधिकरणविरोधः।

यदपि बुद्धेः कर्तृत्वे करणत्वं कथमिति? तदप्ययुक्तम्, अन्यत्र कर्त्र्या एव बुद्धेरुपलब्धिं प्रति करणत्वोपपत्तेः। न च कर्तृत्वाद्यनर्थरूपबन्धस्य बुद्धिगतत्वेन मोक्षस्यापि तदन्वयापत्तिः, अनर्थतन्निवृत्त्योरैकाधिकरण्यनियमादिति– वाच्यम्, कर्तृत्वादेश्चेतनगततयैवानर्थतया बुद्धे-रनर्थानाश्रयत्वात्। न च चैतन्यगतस्यानर्थत्वे चैतन्यस्याप्यनर्थकोटौ निवेशापत्तिः,

(अद्वैतसिद्धिः)

आत्मसबन्धित्वेनैवानर्थस्य हेयत्वेनात्मनोऽपि हेयत्वं सर्वमतेऽपि स्यात्। आरोपितत्व-पुरस्कारेणानर्थत्वाभावात् नान्योन्याश्रयः। न च– शुद्धात्मनः कदापि नानर्थाश्रयत्वेन प्रतीतिः, भ्रमकाले अहं भोक्ता प्रमाकाले बुद्धिर्भोक्त्रीति प्रतीतेरिति– वाच्यम्, शुद्धस्य भोक्तृत्वाद्यनर्थानाश्रयत्वेऽपि उपहितस्य शुद्धात्स्वाभाविकभेदाभावेन बन्धमोक्षसामानाधि-करण्योपपत्तेः। एतेन– बुद्धिः श्रवणादिकर्त्रीति तस्या एव फलं मोक्षोऽपि स्यादिति वाच्यम्, 'शास्त्रफलं प्रयोक्तरी'ति न्यायाद्, अन्यथाऽतिप्रसङ्गादिति– निरस्तम्, जातेष्टिपितृयज्ञयोर्व्यभिचारात्। न च पूतपुत्रकत्वं स्वर्गभागिपितृकत्वं वा कर्तृगतमेव फलम्, तस्य फलत्वेनाश्रवणात्। न च तादृक्पुत्रकत्वं फलेन सम्बन्धः, न तु फलमिति– वाच्यम्, एवं हि संयुक्तसमवायादिना पित्रन्यस्यापि तत्फलं स्यात्, अशास्त्रीयत्वाविशेषात्। न च– पित्रर्थपुत्रगतं पूतत्वादिकं तदनुष्ठातुः पितुरेव फलम्, तेन तदुद्देशात्, न चेहात्मा अन्तःकरणार्थः येनात्मगतो मोक्षः तस्योद्देश्यः स्यादिति– वाच्यम्, आत्मा यद्यपि नान्तःकरणार्थः, अहमर्थगततया तथापि फलस्योद्देश्यत्वानुभवाद् अहमर्थस्य चात्मानात्मरूपत्वेनात्मन्यपि फले उद्देश्यगतत्वानपायात्। यद्वा– आरोपितानारोपितसाधारणं कर्तृत्वमेव फलभाक्त्वे प्रयोजकम्, तच्चात्मन्यस्त्येव। न च शरीरेऽप्यारोपितकर्तृत्वेन फलभाक्त्वापत्तिः, फलपर्यन्तमसत्त्वेन फलभाक्त्वासंभवात्। न हि कर्तुः फलभाक्त्वनियमं ब्रूमः, किंतु फलभाजः कर्तृत्वनियमम्, अजनितफलकर्मकर्तरि व्यभिचारात्, अप्रयोजकत्वाच्च।

ननु– मनसः कर्तृत्वं न घटते, कृतिकर्मत्वस्य करणत्वस्य च तद्विरोधिनः श्रुत्यादिसिद्धत्वाद्, बुद्ध्यभावेऽपि कर्तृत्वस्य श्रूयमाणत्वाच्च। तथा हि– 'तन्मनोऽकुरुते' त्यादौ मनसः कृतिकर्मत्वम्, 'शृण्वन्तः श्रोत्रेण विद्वांसो मनसे'त्यादिश्रुतौ 'शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नर' इत्यादिस्मृतौ च करणत्वम्, 'मन उदक्रामन्मीलित इवाश्नन् पिबन्नास्तैवे'त्यादिश्रुतौ मनउत्क्रमणेऽप्यात्मनः कर्तृत्वम्, तथा 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाण' इत्यादौ स्वरूपाविर्भावरूपपरममुक्तावपि कर्तृत्वं 'कर्ता विज्ञानात्मा यो वेदेदं जिघ्राणीति स आत्मा' 'आनन्दभुक्त्या प्राज्ञ' इत्यादिश्रुतितश्च कर्तृत्वम्, तथा च बुद्धिर्न कर्त्रीति– चेन्न, 'विज्ञानं यज्ञं तनुते' इत्यादिश्रुत्या मनसः कर्तृत्वेन स्वकृतिकर्मत्वविरोधेऽपि तत्रेश्वरकृतिकर्मत्वस्य उपलब्धिं प्रति करणत्वस्य चाविरोधाद्, ईश्वरे अविद्यावृत्तिरूपज्ञानेच्छावत् तद्रूपकृतिसंभवात्।

(अद्वैतसिद्धिः)

न च– विज्ञानपदं ब्रह्मपरम्, 'विज्ञानं ब्रह्म चेद्वेद, तस्माच्चेन्न प्रमाद्यति, शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते।' इत्यादिवाक्यशेषादिति– वाच्यम्, वाक्यशेषोक्तमुमुक्षुज्ञेयशुद्धब्रह्मणो यज्ञकर्तृत्वासंभवेन कर्तृत्वेन प्रतिपाद्यमाने विज्ञाने ततोऽर्थान्तरत्वनिश्चयाद्, 'अन्नं ब्रह्मेत्युपास्त' इत्येतद्वाक्यसमानयोगक्षेमत्वाच्च। 'तत्रैवं सति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वात् न स पश्यती'त्यादि स्मृतेः 'प्रकृतेः क्रियमाणानी' त्यादिस्मृतेश्च। न चात्मनि स्वातन्त्र्येण कर्तृत्वनिषेधबोधकत्वमनयोः, सामान्यतो निषेधे बाधकाभावात्। अत एव 'ध्यायतीव लेलायतीवे'त्यादाविवशब्दः। न चेवशब्दः परतन्त्रप्रभौ प्रभुरिवेतिवत् जीवकर्तृत्वे परतन्त्रतामात्रपरः, तद्वदत्र बाधकाभावात्। न च – बुद्ध्यभावेऽपि आत्मनः कर्तृत्वश्रवणाद् बुद्धेः कर्तृत्वासंभव इति– वाच्यम्; बुद्धेः कर्तृत्वे जनकत्वमात्रे वा सर्वथा तस्या जीवनिष्ठत्वेनाभिमतायां कृतावपेक्षणीयत्वेन तदभावे कर्तृत्वबोधकस्य तवापि मते उपचरितार्थत्वात्, निर्धर्मकत्वनिर्विकारत्वनिष्क्रियत्वादिबोधकश्रुतिविरोधाच्च। न च– निर्धर्मकत्वरूपधर्मभावाभावाभ्यां व्याघातात् ज्ञानत्वसाक्षित्वादिवत् सत्यस्यासत्यस्य वा ज्ञातृत्वादेरप्यात्मन्येव संभवाच्च निर्धर्मकत्वश्रुतिर्न श्रूयमाणार्थपरेति– वाच्यम्, निर्धर्मकत्वस्य धर्माभावरूपस्य ब्रह्मस्वरूपानतिरेकेण धर्मत्वाभावेन व्याहत्यभावात्। यत्त्वसत्यस्य सत्यस्य वा ज्ञातृत्वस्यात्मन्यपि संभव इत्युक्तं। तदिष्टमेव। न ह्यारोपितमपि कर्तृत्वमात्मनि प्रतिषेधामः। न च– निर्विकारत्वं द्रव्यान्तररूपतया परिणामाभावपरम्, न तु विशेषाकाराभावपरम्, तच्चात्मनः कर्तृत्वादिसत्त्वेऽप्यविरुद्धमिति– वाच्यम्, द्रव्यान्तररूपतया परिणामनिषेधकमपीदं वाक्यं निर्धर्मकश्रुत्यनुसारेण विशेषाकारमात्रस्यैव निषेधपरम्, सामान्यनिषेधेनैव विशेषनिषेधप्राप्तेः। नापि– निष्क्रियत्वे क्रिया परिस्पन्दो वा? धात्वर्थो वा? आद्ये इष्टापत्तिः, द्वितीये आत्मन्यपि अस्त्यादिधात्वर्थरूपसत्तादेः सत्त्वेनासिद्धिरिति वाच्यम्, ब्रह्मण एव सद्रूपत्वेन तत्र सत्तादेरप्यभावात्, क्रियापदस्य कृतिपरत्वाच्च। अत एव मनसोऽभावे सुषुप्तौ कर्तृत्वाद्यदर्शनम्। न च– तदापि श्वासादिकर्तृत्वं दृश्यत एव, सुषुप्तौ 'भूर्भूरित्येव प्रश्वसिती'ति श्रुतेरिति– वाच्यम्, 'न तु द्वितीयमस्ती'त्यादि श्रुत्या तं प्रति श्वासस्यैवाभावेन तत्कर्तृत्वस्य सुतरामसंभवात्। यद्वा– क्रियाशक्तिप्राधान्येन प्राणात्मकस्यान्तःकरणस्य तदापि सत्त्वेन तदुपाधिककर्तृत्वस्य तदापि सत्त्वात्। तथा च श्रुतिरन्यपरा। दर्शनं च

(अद्वैतसिद्धिः)

द्रष्ट्रविद्याकल्पितश्वासादिविषयम्। इदं च दृष्टिसृष्टिवाद एव समर्थितम्। 'कामः संकल्पः' इत्यारभ्य 'ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे'त्यन्ता श्रुतिरपि मनसः कर्तृत्वपरा, न तु मनसो निमित्तत्वपरा। न च– 'मनसा वा अग्रे संकल्पयती'त्यादिश्रुत्या 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण' इत्यादि श्रुत्या च मनसः करणत्वमिति वाच्यम्, मनोव्यतिरिक्तस्य संकल्पानाश्रयत्वेन 'मनसा वा' इति श्रुतेरुपचरितार्थत्वात्।

नापि (१) आत्मा मोक्षसाधनविषयकृतिमान्, तत्फलान्वयित्वात्, संमतवत्, (२) अज्ञानं ज्ञानसमानाधिकरणम्, ज्ञाननिवर्त्यत्वात् ज्ञानप्रागभाववत्, (३) दुखादिभोगः मोक्षसमानाधिकरणः बन्धत्वात्, संमतवदित्याद्यनुमानैरात्मनः कर्तृत्व सिद्धिरिति– वाच्यम्, आद्यानुमाने आरोपितानारोपितसाधारणकृतिमत्त्वं वा साध्यम्? अनारोपितकृतिमत्त्वं वा? आद्ये इष्टापत्तिः। द्वितीये जातेष्टिपितृयज्ञजन्यफलान्वयिनि व्यभिचारः। द्वितीयानुमानेऽपि आरोपितानारोपितसाधारणज्ञानाधिकरणवृत्तित्वं वा? अनारोपितज्ञानाधिकरणवृत्तित्वं वा? अत्राप्याद्ये इष्टापत्तिः। द्वितीये अनादिभावभिन्नत्वस्योपाधित्वम्। तृतीयानुमाने आरोपितानारोपितसाधारणसंबन्धेन मोक्षसामानाधिकरण्ये इष्टापत्तिः। अनारोपितसंबन्धेन सामानाधिकरण्ये साध्याप्रसिद्धिः। तस्मात् सिद्धं मनसः कर्तृत्वमात्मन्यारोप्यत इति॥

इत्यद्वैतसिद्धौ कर्तृत्वाध्यासोपपत्तिः॥

## न्यायामृततरङ्गिणी

**नन्वहमर्थस्यात्मत्वे तस्मिन्नकर्तरि कर्तृत्वं प्रतीयेत, कर्त्रंतरस्याभावेन तदुपाधिककर्तृत्वस्याप्यभावात्। अतः कर्तृत्वादिमदंतःकरणस्य चिदात्मतयाध्यास इति चिदचित्संबलनसिद्धिरित्यादि मतमुत्थापयति ॥ यच्चोच्यत इत्यादिना॥ आत्मनि कर्तृत्वाध्यासो निरुपाधिको वा? सोपाधिको वा? आद्ये सोपाधिकत्वोक्तिविरोधः। द्वितीये कुसुमस्फटिकयो रक्तत्वद्वयप्रतीतिवत् मनश्चितोः कर्तृत्वद्वयप्रतीतिः स्यादिति दूषयति ॥ तत्र ब्रूम इत्यादिना॥ नन्वध्यस्यमानरक्तत्वातिरिक्तरक्तत्वाश्रयस्य कुसुमस्य भिन्नस्य सत्त्वात् रक्तद्वयप्रतीतिः। इह त्वध्यस्यमानकर्तृत्वातिरिक्तकर्तृत्वाश्रयस्यांतःकरणस्याभावेन न कर्तृत्वद्वयप्रतीतिरिति शंकते ॥ ननु मन इति॥ सोपाधिके भ्रमे हि जपाकुसुमादिरुपाधिर्न स्फटिकाद्यात्मनाध्यस्यते। किं तु**

(तरङ्गिणी)

तत्र तद्गतधर्मसदृशं धर्मांतरं। निरुपाधिके तु भीषणत्वादियुतं सर्पादिकं रज्ज्वात्मनारोप्यते। न तु सर्पगतभीषणत्वातिरिक्तं भीषणत्वं। अत्र तु कर्तृत्वादिमदंतःकरणमेव चिदात्मतयाध्यस्यते। न तु कर्तृत्वांतरमिति सर्वाध्याससदृशोऽयं निरुपाधिक एव स्यादिति परिहरति ॥ अधिष्ठानेति॥ ॥ कर्तृत्वांतरस्येति॥ न चात्राप्यात्मनि कर्तृत्वांतरमध्यस्यत इति वाच्यं। तर्हि कर्तृत्वद्वयस्यापि विविच्य प्रतीतिः स्यात्। न चात्मांतःकरणयोरैक्याध्यासान्न तथा प्रतीतिरिति वाच्यं। कर्तृत्वादिमदंतःकरणस्य चिदात्मतयाध्यासेनैव चिदात्मनि कर्तृत्वप्रतीतिसंभवेन कर्तृत्वांतरारोपकल्पनायुक्तेः। न च रज्जुसर्पादावध्यस्यमानक्रूरत्वादिविशिष्टसर्पापेक्षयाधिकसत्ताकसर्पांतरस्य संभवेन नायमुपाधिरतो निरुपाधिकत्वं। अत्र त्वध्यस्यमानांतःकरणापेक्षया कर्तृत्वादिधर्मविशिष्टमन्यदधिकसत्ताकं नास्त्येवेत्यंतःकरणमत्रोपाधिरिति वाच्यम्। कर्तृत्वांतरारोपाभावे सोपाधिकत्वानुपपत्तेः। तदारोपे तु कर्तृत्वद्वयप्रतीतेर्दुर्वारत्वादित्युक्तत्वात्। ननु चिन्मनसोर्भेदाग्रहान्न कर्तृत्वद्वयप्रतीतिरित्यत आह ॥ मन इति॥ ननु तादात्म्यारोपविरोधिभेदग्रहस्य प्रतिबंधकत्वं। अयं तु न तथेति चेन्न। सोपाधिके तादात्म्यारोपस्यादर्शनेनास्यापि तद्विरोधित्वात्। अन्यथान्योन्याश्रयात्। ननु चिन्मनसोरभेदग्रहस्य प्रतिबंधकत्वान्न तद्द्वयप्रतीतिरित्यत आह ॥ इदंसर्पयोरिति॥ ननु मनसश्चिदात्मनाध्यासेपि सोपाधिकारोप एवायं, तत्प्रयोजकस्यात्र सत्त्वादित्याशंक्य निराकरोति ॥ न चेति॥ ॥ अध्यस्यमानेति॥ उपाधेस्तद्धर्मस्य चेत्यनुषङ्गः॥ ॥ द्वितीय इति॥ आत्मनि कर्तृत्वस्य व्यावहारिकत्वे बुद्धौ तत्पारमार्थिकं, बुद्धौ तस्य व्यावहारिकत्वे आत्मनि तत्प्रातिभासिकं स्यादित्यर्थः। यत्तु यदन्वयव्यतिरेकानुविधायितया यत्प्रतीयते तदपेक्षयाधिकसत्ताकतद्धर्माश्रयांतराभाव एव सोपाधिकत्वे तंत्रमिति, तन्न। स्फटिके रक्तारोपेऽसंभवात् ॥ उभयत्रेति॥ न चेष्टापत्तिः। उपाधेः पृथगदर्शनेन तत्र सोपाधिकत्वाव्यवहारात् ॥ बुद्धिगतमिति॥ केवलबुद्धिगतं कर्तृत्वं चिदचित्संबलनरूपेऽहमर्थे आरोप्यते तद्गतं वा शुद्धात्मनीत्यर्थः। द्वितीयेऽहमर्थचैतन्ययोः कर्तृत्वे प्रतीयेतामिति दोषे सत्येव दोषांतरमाह ॥ द्वितीय इति॥ नन्वहमर्थश्चिदचित्संबलनरूपत्वात् द्व्यंशः। तत्राचिदंशो बुद्धौ कर्तृत्वसत्त्वेपि तद्विशिष्टाया बुद्धेश्चित्यैक्याध्यासं विहायाहं करोमीति प्रतीत्ययोगेन तदध्यास आवश्यक इति चेन्न। अस्मिन्पक्षे बुद्धिगतकर्तृत्वस्यात्मन्यध्यस्तत्वांगीकारेणोक्तपक्षद्वयबहिर्भावात्। तच्च कर्तृत्वद्वयप्रतीत्यापत्त्या निरस्तं। करणत्वस्यौपचारिकत्वं निरस्यति ॥ प्रसिद्धीति॥ न चान्यत्र कर्त्रुपलब्धिं प्रति करणत्वाविरोध इति वाच्यं। उपलब्धुरात्मनोऽतर्बहिः करणत्वेनैव मनश्चक्षुरादीनां प्रसिद्धेः ॥ अपिचेति॥ ननु कर्ता शास्त्रार्थवत्त्वादित्यधिकरणे बुद्धेरेव कर्तृत्वं। भोक्तृत्वं तु चैतन्यस्येति

(तरङ्गिणी)

पूर्वपक्षे तयोः सामानाधिकरण्यनियमेन चैतन्यस्य भोक्तृत्ववत् कर्तृत्वमप्यंगीकार्यमित्युक्तं। न तु बुद्धेरकर्तृत्वमात्मनो वा स्वाभाविककर्तृत्वमिति। यथा च तक्षोभयथेत्युत्तराधिकरणे पूर्वाधिकरणोक्तस्यात्मकर्तृत्वस्य स्वाभाविकत्वं पूर्वपक्षय्यौपाधिकत्वस्य स्थापितत्वादिति चेन्न। कर्तृत्वभोकृत्वनियमोऽसिद्ध इति वाच्यं। बाधकाभावे तस्य तन्नियम इति वक्ष्यमाणत्वात्। ननु बुद्ध्यात्मनोरविवेकनिबंधनं जीवनिष्ठं कर्तृत्वमिति तत्र सिद्धांतितमतो न तद्विरोध इत्यत आह ॥बुद्धीति॥ फलभोक्ता फलभोक्तृत्वम्। नन्वज्ञानरूपानर्थस्यात्मगतत्वान्मोक्षसामानाधिकरण्यमित्यत आह ॥अज्ञानमपीति॥ दुःखादेरेवानर्थत्वात्तस्य च कर्तृत्वाधीनभोक्तृत्वनियंत्रितत्वान्न बंधमोक्षयोः सामानाधिकरण्यमित्यर्थः ॥एतदिति॥ कल्पितोऽनर्थोऽस्तीत्यस्येत्यर्थः। एतेनारोपितत्वपुरस्कारेणानर्थत्वाभावान्नान्योन्याश्रय इति निरस्तं। ननु मोक्षस्यापि कल्पितस्यैव पुरुषार्थत्वमिति मंदाशंकां वार्तिकसंमत्या परिहरति ॥तदुक्तमिति॥ आरोपितस्य कर्तृत्वादेरनर्थत्वे देहेपि तत्स्यादित्याह ॥स्थूल इति॥ ॥आत्मस्थमिति॥ तथा च देहस्थभोक्तृत्वं नानर्थ इति भावः ॥अनर्थकोटित्वेति॥ देहादिगतस्य कर्तृत्वादेरनर्थत्वं वारयितुमात्मनो विशेषणत्वादित्यर्थः। उपलक्षणत्वे तु देहादिगतस्याप्यनर्थत्वापत्तिरिति बोध्यम्। यत्तूक्तमात्मसंबंधित्वेनैवानर्थस्य हेयत्वादात्मनोऽपि हेयत्वं सर्वमतेऽपि स्यादिति तत्त्वतिमन्दम्। अनर्थस्य स्वत एव हेयस्य निवृत्तिरात्मसंबंधितया सुखवदिष्यते। इह त्वारोपितकर्तृत्वादेर्देहात्मनोर्वृत्तेः देहगतं तद्व्यावर्तयितुमात्मविशेषणमिति तस्यानर्थकोटौ निवेशः स्यादेव। शुद्धात्मनि कदापि कर्तृत्वाद्यप्रतीतेर्न तत्र तद्भ्रम इत्यत आह ॥भ्रमेति॥ न च शुद्धस्य भोक्तृत्वाद्यनर्थानाश्रयत्वेऽप्युपहितस्य शुद्धात्स्वाभाविकभेदाभावेन बंधमोक्षसामानाधिकरण्योपपत्तिरिति वाच्यं। उपहितानुपहितयोर्भेदात्। अन्यथा दृश्यत्वस्योपहितवृत्तित्वेन शुद्धवृत्तितापत्तेः ॥शास्त्रफलमिति॥ तृतीयेऽभिहितं शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात्। शास्त्रफलं कर्मप्रयोक्तरि यजमाने तस्मात्स्वयमेव यजमानः परिक्रयद्वारा वांगप्रधानेषु कर्ता स्यादिति सूत्रार्थः। ननु शास्त्रफलं प्रयोक्तरीति न नियमः जातेष्टिपितृयज्ञादौ व्यभिचारात्। न च पूतपुत्रकत्वं स्वर्गभागिपितृत्वादिकं वा कर्तृगतमेव फलमिति वाच्यं। तस्य फलत्वेनाश्रवणात्। न च तादृक्पुत्रकत्वं फलेन संबंधः, न तु फलमिति वाच्यं। एवं हि संयुक्तसमवायादिना पित्रन्यस्यापि तत्फलं स्यादशास्त्रीयत्वाविशेषादिति शंकां परिहरति ॥जातेष्टावपीति॥ ॥पित्रर्थेति॥ न च तस्य फलत्वेनाश्रवणम्। यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नादो भवतीति पुत्रगतपूतत्वस्य फलत्वेन श्रुतस्य पित्रोद्देशात्तस्योद्देश्यत्वोपपादनाय पित्रर्थेत्युक्तम्। यथा ग्रामपश्वादेः स्वासमवायिनोऽपि स्वस्य सुखसाधनतयोद्देश्यत्वेन

(तरङ्गिणी)

स्वसमवेतफलत्वं तथा पुत्रगतपूतत्वस्यापि स्वनिष्ठफलत्वम्। अंतःकरणस्य तु नात्मगतो मोक्ष उद्देश्य इत्याह ॥न चेति॥ नन्वारोपानारोपसाधारणं कर्तृत्वमेव फलभोक्तृत्वेप्रयोजकम्। तच्चात्मन्यस्त्येव। न च शरीरेऽप्यारोपितकर्तृत्वेन फलभाक्त्वापत्तिः। फलपर्यंतमसत्त्वेन फलभाक्त्वासंभवात्। मैवम्। तस्य फलभाक्त्वान्यथानुपपत्त्यैव सूक्ष्मरूपेणावस्थितस्य पुनरुपचयो वा अदृष्टद्वारा फलपर्यंतसत्त्वं वा कल्पनीयम्। न कर्तुः फलवत्त्वनियमः। किं तु फलभाजः कर्तृत्वनियमः। अजनितफलकर्तरि व्यभिचारादिति। मैवम्। अपवादाभावे सति कर्तुः फलवत्त्वनियमात्। अन्यथा बहुयजमानकाग्निष्टोमादौ कस्यचित्फलाभावशंकया कदाप्यनेकेषां प्रवृत्तिर्न स्यात्। अत एव न व्यभिचारोऽपि। ननु यागकर्तृणामृत्विजां स्वर्गफलाभावाद्व्यभिचार इत्यत आह ॥आर्त्विज्यादेरपीति॥ आर्त्विज्यस्य न स्वर्गः फलं परिक्रमेण तेषां यागकर्तृत्वात्। किं तु दक्षिणेत्यर्थः ॥नन्विति॥ बंधमोक्षसामानाधिकरण्याय पूर्वशंकितं कृतिफलयोः सामानाधिकरण्यायेहोच्यत इति भेदः ॥निरस्तत्वादिति॥ आद्ये देहादेरपि फलभाक्त्वप्रसंगः। द्वितीये कर्तृत्वाध्यासे सिद्धे आरोपितस्यापि कर्तृत्वस्य फलान्वयप्रयोजकत्वं, तस्मिन् सति कृतिफलयोः सामानाधिकरण्याव्यभिचारात्कर्तृत्वाध्याससिद्धिरित्यन्योन्याश्रयप्रसंग इत्यर्थः। उभयत्र दोषमाह ॥सत्येति॥ ॥उभयमिति॥ क्वचित्प्रमा क्वचिद्भ्रम इत्यर्थः। कर्तृत्वं मुख्यत आत्मनिष्ठं, मुख्यतोऽन्यानिष्ठत्वे सति निष्ठत्वात्, संमतवदित्यभिसंहितानुमाने विशेषणासिद्धिं परिहरति ॥अपि चेत्यादिना॥ ॥श्रूयते हीति॥ नैवेह किंचनाग्र आसीदित्यारभ्य तन्मनोकुरुतात्मन्वी स्यामित्यत्र कृतिकर्मत्वं। तथा प्राणंतः प्राणेन वदंतो वाचा पश्यंतश्चक्षुषा शृण्वंतः श्रोत्रेण विद्वांसो मनसैवमजीविष्मेति श्रुतौ करणत्वं। तथा मन उदक्राम दित्यत्र तथा मनो होच्चक्रामतत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वांसो मनसा प्राणंतः प्राणेन वदंतो वाचेत्यादौ मनस उत्क्रमणेऽप्यात्मनः कर्तृत्वम्। आत्मनः कर्तृत्वसाधकं विशिष्याह ॥अहंकरोमीत्यादि॥ ॥न चाहमिति॥ न चेत्यस्य बाधकमस्तीत्यनेन संबंधः ॥मोक्षेति॥ फलान्वयित्वं प्रत्यनारोपितकृतेरेव प्रयोजकतया नारोपितकृतिमादाय सिद्धसाधनादि ॥फलेति॥ न च जातेष्टिफलान्वयिनि पुत्रे व्यभिचारः। तत्फलस्य पुत्रपूतत्वादेः पुत्रासमवेतत्वात् ॥ज्ञानेति॥ स्वसत्ताकज्ञानसमानाधिकरणमित्यर्थः। तेनारोपितज्ञानसामानाधिकरण्यमादाय न सिद्धसाधनादि। न चानादिभावभिन्नत्वमुपाधिः। सत्तादौ साध्याव्याप्तेः ॥मोक्षेति॥ मोक्षसत्तया मोक्षः समानाधिकरण इत्यर्थः। तेनारोपितादि-साधारणसामानाधिकरण्यसाधने इष्टापत्तिः। अनारोपितसंबंधेन तत्साधने साध्याप्रसिद्धिरिति निरस्तम् ॥कर्तेति॥ प्रश्नोपनिषदि बोद्धा कर्ता विज्ञानात्मा पुरुष इति। छांदोग्ये अथ

(तरङ्गिणी)

यो वेदेदं जिघ्राणीति स आत्मा गंधाय घ्राणं। मांडूक्ये विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक्। आनंदभुक्तथा प्राज्ञस्त्रिधा भोगं निबोधतेत्यादिभिः ॥ अहमर्थेति ॥ अहं करोमीति प्रत्यक्षस्याहमर्थान्यात्मनि कर्तृत्वबोधकत्वे तदेव तत्र प्रमाणम्। श्रुतिस्तु तद्दार्ढ्यार्था। तदबोधकत्वे तु श्रुतेर्नानुवादकत्वम्। ईश्वरकर्तृत्वस्य प्रत्यक्षेण सर्वथाऽप्राप्तेर्नानुवादकत्वमित्यर्थः ॥ स हीति ॥ बृहदारण्यके न तत्र रथा न रथयोगा इत्यारभ्य स हि सर्वस्य कर्तेति पाठः। तत्रैव यस्यानुवित्त इति मंत्रे स ह विश्वकृत्स हि सर्वस्य कर्तेतिपाठः ॥ निर्धर्मकत्वेति ॥ न च निर्धर्मकत्वं धर्माभावरूपं ब्रह्मस्वरूपमेव न तु धर्म इति वाच्यं। कर्तृत्वेऽपि तुल्यत्वात् ॥ सत्यस्येति ॥ तात्विकस्य व्यावहारिकस्य चेत्यर्थः। एतेनारोपितकर्तृत्वस्यात्मन्यपि संभवादिष्टापादनमिदमिति निरस्तं ॥ आत्मन्यपीति ॥ अस्ति ब्रह्मेति श्रुतेः। न च सद्रूपं ब्रह्म न तु तत्र सत्तास्तीति वाच्यं। कर्तृत्वशून्यस्यापि कर्तृरूपत्वाविरोधात्। अस्ति ब्रह्मेति सत्ताश्रयत्वस्यैव श्रुतत्वाच्च ॥ सुप्त इति ॥ देवाः परमात्मानं भूरित्युपासां चक्रुः। तस्मात् तत एव एतर्हि इदानीमपि सुप्तः पुरुषः भूर्भूरित्येव प्रश्वसिति श्वासं करोतीति श्रुत्यर्थः। तथा च सामान्यतः क्रियाऽभावोऽसिद्धो विशेषतस्तु तदभावोऽन्यथासिद्ध इत्याह ॥ देहादिति ॥ मनोव्यतिरेकेण क्रियादर्शनं तस्यास्तन्निमित्तकत्वं गमयति न तु तत्कर्तृकत्वमित्यर्थः। ननु विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपिचेति श्रुतौ विज्ञानपदोदितबुद्धेर्यज्ञादिकर्तृत्वश्रवणमेवात्मनः कर्तृत्वबाधकमित्याशंक्य निराकरोति ॥ नापीति ॥ नात्र विज्ञानशब्दाद्बुद्धिः किं तु ब्रह्मेत्यर्थः। मनसेति तृतीयया मनसः करणत्वस्य, संकल्पयति व्याहरतीत्यात्मनः कर्तृत्वस्य चावगमादित्यर्थः। एतच्चोपलक्षणम्। अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपसृष्टो मनसा विजानातीत्यत्रैव श्रुतौ तृतीयानिर्देशान्मनसः करणत्वं कर्तृलकारनिर्देशादात्मनः कर्तृत्वं चावगम्यत इत्यपि बोध्यम्। आत्मेंद्रियमनोयुक्तमिति श्रुतौ मनोयुक्तस्यैव भोक्तृत्वं न केवलस्येति शंकां वारयति ॥ आत्मेति ॥ आत्मानं रथिनं विद्धि शरीरं रथमेवतु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रह मेव तु। इंद्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति काठकश्रुतौ देहादिसाधारणमनःसहकारेणात्मनो भोक्तृत्वमुच्यते। अन्यथा देहादेरपि भोक्तृत्वापत्तेरित्यर्थः ॥ ध्यायतीवेति ॥ ज्योतिर्ब्राह्मणे कतम आत्मेति योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यंतर्ज्योतिः समानः सन्नुभौ लोकावनुसंचरति ध्यायतीवेत्यादिश्रुतिः।

॥ कर्तृत्वाध्यासभंगः ॥

## न्यायामृतकण्टकोद्धारः

॥ निर्विकारत्वादिति॥ निर्विकारोऽक्षर इत्यादि श्रुतेरिति भावः। कर्तृत्वभ्रमो रजतादिभ्रमवत् निरुपाधिकः किं न स्यादित्यत आह॥ सुषुप्ताविति॥ उपाध्यन्वयव्यतिरेकानुविधानात् सोपाधिकत्वमिति भावः॥ श्रुतिविरोधाच्चेति॥ निष्कलं निष्क्रियमित्यादेरिति भावः। भ्रमो हि भवन् निरुपाधिको न भवतीति तेनाङ्गीकृतम्। अतः सोपाधिकत्वे दूषिते कर्तृत्वज्ञानं प्रमैवेति सेत्स्यतीत्याशयेन सोपाधिकत्वं दूषयति॥ प्रत्येकमिति॥ ननु मनसोऽप्रत्यक्षत्वात् तत्स्थं कर्तृत्वं कथं प्रत्यक्षं स्यादित्यत आह॥ नहीति॥ मनसः साक्षिवेद्यत्वेन प्रत्यक्षत्वादिति भावः। ॥ अधिष्ठानात्मनेति॥ न चात्मनि कर्तृत्वान्तरमेवाध्यस्यत इति वाच्यम्। तर्हि विविच्य कर्तृत्वद्वयप्रतीतिः स्यात्। न चान्तःकरणैक्याध्यासान्न विविच्य प्रतीतिरिति वाच्यम्। तर्हि निरुपाधिकत्वापातात्। न च यत्रारोप्यादधिकसत्तमारोप्यसजातीयं तिष्ठति तत्र निरुपाधिकत्वम्। प्रकृते तु न तथेति न निरुपाधिकत्वमिति वाच्यम्। एवं हि सोपाधिकत्वेन प्रसिद्धस्य लोहितः स्फटिक इत्यादि भ्रमस्य निरुपाधिकत्वं स्यात्। तत्रारोप्यादधिकसत्ताकस्य लोहितत्वान्तरस्य विद्यमानत्वात्। तस्मादधिष्ठानसमसत्ताकमारोप्यजातीयं ज्ञात्वा तत्संनिधानात् यत्रारोपः तत्र सोपाधिकत्वम्। प्रकृते तु तथाभावो नाङ्गीक्रियते। अतोऽस्य सोपाधिकत्वं न स्यादिति साधूक्तम्। ननु प्रकृतेऽपि भेदग्रहणदशायां प्रत्येकं कर्तृत्वप्रतीतिरस्तीति सोपाधिकत्वं स्यादिति तत्राह॥ मनो न स्फुरणमिति॥ न च तादात्म्यारोपविरोधिभेदग्रहस्यैव तत्प्रयोजकत्वात् प्रकृते च तदभावात् न तथा प्रतीतिरिति वाच्यम्। अस्यैव तादात्म्यारोपविरोधित्वेनास्मिन् विद्यमाने तादात्म्यारोपस्यैवासम्भवात् तथप्रतीत्यापत्तितादवस्थ्यात्। तादात्म्यारोपस्य कर्तृत्वद्वयप्रतीति-प्रतिबन्धकत्वं दृष्टान्तप्रदर्शनमुखेन खण्डयति॥ इदंसर्पयोरिति॥ न च तादात्म्यग्रहस्य प्रतिबन्धकस्य सत्त्वेन दृष्टान्तासम्प्रतिपत्तिरिति वाच्यम्। गौरोहमिति तादात्म्यग्रहणे सत्येव तादृशानुभवेन तादृशप्रतीतौ तादात्म्यग्रहस्याप्रतिबन्धकत्वात्। अनुभवापलापेऽति प्रसंगात्॥ आद्य इति॥ न चायमनुक्तोपालम्भः मया तादृशस्य सोपाधिकतप्रयोजकस्यानभिधानादिति वाच्यम्। सोपाधिकभ्रमे तत्प्रयोजकताया दृष्टत्वेन तस्यैव वक्तव्यत्वाच्च। न च यदन्वयव्यतिरेकानुविधायितया यत्प्रतीयते तदपेक्षयाऽधिकसत्ताकतद्धर्माश्रयान्तराभावस्यैव सोपाधिकत्वे तन्त्रत्वसंभवात् कथं तदसम्भव इति वाच्यम्। अत्र तदपेक्षयेत्यत्र तच्छब्दः किं प्रथमयत्पदार्थेनान्वेति, द्वितीयेन वा? नाद्यः। रजतादिभ्रमस्य सोपाधिकत्वापत्तेः। तत्रापि यद्दोषप्रधानाद्यपेक्षया रजतं प्रतीयते तद्दोषाद्यपेक्षयाऽधिकसत्ताकरजतान्तराभावात्। न द्वितीयः जपाकुसुमप्रयुक्तभ्रमस्य सोपाधिकत्वाभावापत्तेः। तत्रापि स्फटिके प्रतीयमानापेक्षयाऽधिकसत्ताकतद्धर्माश्रयान्तरस्य सद्भावात्॥ उभयत्रापीति॥ न चेष्टापत्तिरिति वाच्यम्। सोपाधिक भ्रमस्याप्रवर्तकत्वेन नीरक्षीरत्वार्थिनः प्रवृत्यभावापत्तेः। रजतभ्रमस्यापि सोपाधिकत्वापत्तेश्च। एतेनेति परामृष्टं हेतुमाह॥ आद्यइति॥ ॥ द्वितीय इति॥ न चाहमर्थस्य द्व्यंशतयाऽचिदंशे कर्तृत्वसत्त्वेऽपि तद्विशिष्टबुद्धेश्चित्यैक्यं विनाऽहं कर्तेति प्रतीत्यनुपपत्तेः तदर्थमध्यासस्यावश्यकत्वमिति वाच्यम्। अहमर्थस्य द्व्यात्मकतायाः प्रागेव निरस्तत्वात्। तथाननुभवाच्च। कर्तृत्वस्य बुद्धिनिष्ठत्वे बुद्धिः कर्त्रीति प्रतीत्यापादनस्य पूर्वमेव कृतत्वाच्च॥ किञ्चेति॥ करणत्वे हि कारकान्तरप्रयोज्यत्वं स्यात्। कर्तृत्वं तु तदप्रयोज्यत्वम्। तथा च करणत्वकर्तृत्वयोर्विरोधान्नान्तःकरणस्य कर्तृत्वमित्यर्थः। न च विरोधात् करणत्वमेव त्याज्यमिति वाच्यम्। अप्रमितस्वीकारेण प्रमितत्यागायोगादिति॥ अपि चेति॥ न च तत्र बुद्धेरेव कर्तृत्वं भोक्तृत्वं चैतन्यस्येति

(कण्टकोद्धारः)

पूर्वपक्षं कृत्वा भोक्तृत्ववत् कर्तृत्वमप्यङ्गीकर्तव्यम् इत्युक्तम्। न तु बुद्धेरकर्तृत्वमात्मनो वा स्वाभाविकं कर्तृत्वमिति वाच्यम्। तथात्वे पूर्वपक्षासिद्धान्तयोरविशेषप्रसङ्गात्। सिद्धान्त आत्मनो वास्तवकर्तृत्वासाधनात् कर्तृत्वारोपस्य पूर्वपक्षेऽपि भावात्। किञ्च यथा च तक्षोभयथेत्युत्तराधिकरणविरोधः। न च तत्रात्मन औपाधिकं कर्तृत्वमुच्यत इति वाच्यम्। औपाधिकत्वप्रत्यायक पदाभावात् तत्रास्वतन्त्रकर्तृत्वस्यैव साधनाच्च। किञ्च बुद्धेः कर्तृत्वाङ्गीकारे संसारो बुद्धेरेव स्यात्। ततश्च मोक्षोऽपि तस्या एव स्यात् इत्याह॥ किञ्चेति॥ नन्वज्ञानमेव संसारः। अविद्यास्तमयो मोक्षः सा संसार उदाहृत इत्युक्तेः। तथाच कथं बुद्धेः संसारान्वयो मोक्षान्वयो वेत्यत आह॥ अज्ञानमपीति॥ दुःखादिभोगस्य बुद्धिनिष्ठत्वेऽज्ञानस्यापि तन्निष्ठत्वापत्तिरिति भावः॥ एतदिति॥ न च कर्तृत्वादेश्चेतनगतत्वेनैवानर्थत्वं नारोपितेन रूपेणेति वाच्यम्। एवं हि चेतनस्यानर्थकोटिप्रवेशापत्तेः। अत एव चेतनगतं कर्तृत्वादिकमनर्थ इति न बुद्धेरनर्थान्वय इति निरस्तम्। किञ्चारोपितकर्तृत्वस्य संसारत्वे शरीरस्यापि संसारमोक्षान्वयः स्यादित्याह॥ स्थूल इति भ्रमकाल इति॥ तथाच शुद्धात्मनिष्ठस्य मोक्षस्य न बन्धसामानाधिकरण्यमिति भावः। न च शुद्धोपहितयोः स्वाभाविकभेदाभावेन बन्धमोक्षयोः सामानाधिकरण्यमिति वाच्यम्। स्वाभाविकाभेदाभावेन तदसामानाधिकरण्यापातात्। त्वन्मते स्वाभाविकभेदस्य कुत्राप्यभावेन सर्वेषां सर्वसामानाधिकरण्यापत्तेश्च॥ शास्त्रफलमिति॥ शास्त्रोक्तकर्मफलं प्रयोक्तरि प्रयोजककर्तरि भवतीति न्यायार्थः। तेन ऋत्विजामपि फलसाधनकृत्याश्रयत्वात् फलाश्रयत्वप्रसङ्ग इत्यपास्तम्। तेषां प्रयोजककर्तृत्वाभावात्॥ अन्यथेति॥ कृत्यनाश्रये फलाङ्गीकार इत्यर्थः। उपलक्षणमेतत्। फलोपपादकत्वेनापूर्वं पुरुषे न कल्प्येतेत्यपि द्रष्टव्यम्। ननु नायं नियमः शास्त्रफलं प्रयोक्तरीति। जातेष्टिपितृयज्ञयोर्व्यभिचारात्। न च पूतपुत्रकत्वं स्वर्गभागिपितृकत्वं वा फलम्। तच्च कर्तृगामीति न व्यभिचार इति वाच्यम्। तयोः फलत्वेनाश्रवणात्। फलत्वेनाश्रुतयोः फलत्वकल्पने श्रुतत्यागाश्रुतकल्पने स्यातामित्यत आह॥ जातेष्टावपीति॥ उपलक्षणमेतत्। पिण्डपितृयज्ञे पितृगतस्वर्गोऽपीत्यपि द्रष्टव्यम्। न च तयोः कर्तृगतत्वाभावात् न व्यभिचारवारणमिति वाच्यम्। साक्षात्सम्बन्धेन तद्गतत्वाभावेऽपि परम्परासम्बन्धेन तद्गतत्वोपपत्तेः। न हि यावत् फलं तावत् साक्षात्सम्बन्धीति नियमः। वृष्टिकाम इत्यादावभावात्। न चैवमतिप्रसङ्ग इति वाच्यम्। उद्देश्यत्वानुद्देश्यत्वाभ्यां तत्परिहारसम्भवात्। अन्यथा बहुविप्लवापत्तेः। ननु ऋत्विजामपि शास्त्रफलस्य सत्त्वात् कथं प्रयोजककर्तर्येव शास्त्रफलमिति नियम इत्यत आह॥ आर्त्विज्यादेरपीति॥ अत एव परिक्रयः स्वामिनैव कर्तव्यः। स तु दृष्टार्थ इत्युपपादितम्। नन्वध्वर्य्वादेः पशुमानसानीत्यादि शास्त्रफलस्य विद्यमानत्वात् कथं दक्षिणैवेत्यवधारणमिति चेन्न। एवकारेण शास्त्रमुख्यफलस्य वारणात्। यदेव हि विधिवाक्ये कामनाविषयत्वेन फलं श्रूयते तस्यैव मुख्यत्वात्। तस्य च ऋत्विग्गामित्वाभावात्। सत्रे च सर्वे प्रयोजका एवेति न कश्चित् क्षुद्रोपद्रवः।॥ निरस्तत्वादिति॥ प्रथमे बुद्धिशरीरादेरपि फलभाक्त्वप्रसंगात् द्वितीये आत्मनोऽनर्थकोटित्वप्रसंगादित्यर्थः। ॥ अननुगमादिति॥ क्वचित् सत्यकर्तृत्वं क्वचिदारोपितं कर्तृत्वमित्यननुगम इत्यर्थः। ननु कर्तृत्वसामान्यमेव फलभाक्त्वप्रयोजकम्। अतो नाननुगमः। न च शरीरस्यापि फलभोक्तृत्वापत्तिरिति वाच्यम्। कर्तुः फलभाक्त्वनियमानङ्गीकारात्। अजनितफलकर्मकर्तरि व्यभिचारात्। किन्तु फलभाजः कर्तृत्वनियम इति चेन्न। तथा नियमाङ्गीकारे जातेष्टौ पुत्रस्य पिण्डपितृयज्ञे च पुत्रस्य

(कण्टकोद्धारः)

कर्तृत्वापत्तेः। न च कर्तुः फलभाक्त्वनियमांगीकारे व्यभिचार उक्त इति वाच्यम्। फलभाक्त्वयोग्यतया नियमांगीकारे बाधकाभावात्। प्रतिबन्धकाभावे सतीति विशेषणाद्वा न कश्चिद्दोषः॥ अपि चेति॥ न च विज्ञानं यज्ञं तनुते इत्यादि श्रुत्या मनसः कर्तृत्वश्रवणात् ईश्वरनिष्ठकृतिकर्मत्वेऽपि स्वकृतिकर्मत्वानंगीकारान्न कर्तृत्वकर्मत्वयोर्विरोध इति वाच्यम्। विज्ञानं यज्ञं तनुते इत्यस्य ब्रह्मपरत्वात्। अन्यथा मान्त्रवर्णिकमेव च गीयते इति श्रुतिविरोधः स्यात्। विज्ञानं ब्रह्म चेद्वेदेति वाक्यशेषविरोधाच्च। न च वाक्यशेषे मुमुक्षुज्ञेयशुद्धोक्तेः विज्ञानशब्देन च तद्ग्रहणे कर्तृत्वानुपपत्तिरिति वाच्यम्। कर्तृत्वस्य शुद्धत्वाघातकत्वस्याग्रे वक्ष्यमाणत्वात्। ईश्वरस्यापि त्वन्मते कृत्यनुपपत्तेश्च। न चेश्वरेऽविद्यावृत्तीच्छावत् कृतिर्भविष्यतीति वाच्यम्। दृष्टान्तासम्प्रतिपत्तेः। अविद्याकार्यस्य जीव एवाङ्गीकारेणेश्वरे तत्कार्यानुपपत्तेश्च। तथा च मनसः कर्तृत्वे कर्मत्वादिविरोधो दुष्परिहर एव। ॥ तथा मन इति॥ न च त्वन्मतेऽप्यात्मनिष्ठकृतौ अन्तःकरणस्य प्रयोजकत्वात् तदभावे कथं कृतिरिति तद्बोधकश्रुतेरुपचरितार्थत्वं वाच्यमेवेति कथमयमस्माकं दोष इति वाच्यम्। मन्मते जन्यकृतेस्तदपेक्षायामपि अजन्यकृतेस्तदनपेक्षणात् मोक्षे श्रूयमाणायाश्च नित्यत्वात्। किञ्च प्रत्यक्षानुमानागमसिद्धत्वात् कथमात्मनोऽकर्तृत्वमित्याशयवानाह॥ अपि चेति॥ ननु प्रत्यक्षादिसिद्धमपि बाधकात् त्यज्यत इत्यत आह॥ न चेति॥ न च प्रत्यक्षं मनोनिष्ठमेव कर्तृत्वं विषयीकरोति। नात्मनिष्ठमिति वाच्यम्। आत्मनोऽहमर्थत्वस्य मनसस्तदभावस्य च पूर्वमेव साधितत्वात्। न चाद्यानुमान आरोपितानारोपितसाधारणकृतिमत्त्वं वा साध्यते अनारोपितकृतिमत्त्वं वा? नाद्यः। सिद्धसाधनात्। आत्मन्यप्यौपाधिककृतेरङ्गीकारात्। न द्वितीयः। जातेष्टिपितृयज्ञयोः तत्फलभोक्तरि तत्साधनकृत्यनन्वयेन व्यभिचारादिति वाच्यम्। द्वितीयपक्षस्यैव विवक्षितत्वात्। न चोक्तव्यभिचारः। तत्रापि परम्परासम्बन्धेन कृतिमत्त्वस्य सत्त्वात्। अन्यकृतिसाध्यतया प्रमाणाबोधितत्वे सतीति वा विशेषणाद्धेतौ न व्यभिचारः। न चैवं पक्षेऽसिद्धिः। न हि मोक्षोऽन्यकृत्या भवतीत्यत्र किञ्चिन्मानम्। यद्वा विशेषयोर्व्यतिरेकव्याप्तिरेवात्राभिमतेति न कश्चित् दोषः। एवं द्वितीयानुमानेऽपि ज्ञानसमानाधिकरणत्वं अनारोपितज्ञानाधिकरणवृत्तित्वम्। न चानादिभावभिन्नत्वमुपाधिः। तस्याप्यनेनैव पक्षे साधनात् पक्षेतरत्वाच्च। एवं तृतीयेऽपि अनारोपितसम्बन्धेनैव मोक्षसामानाधिकरण्यं विवक्षितम्। न च साध्याप्रसिद्धिः चित्व एव प्रसिद्धत्वात्। व्यतिरेकित्वोपपत्तेश्च॥ न चेति॥ निर्धर्मकत्वं हि धर्माभावः। कर्तृत्वांगीकारे च तद्विरोध इत्यर्थः॥ निर्धर्मकत्वरूपेति॥ न च धर्माभावरूपं निर्धर्मकत्वं स्वरूपातिरेकेण धर्मो न भवतीति न व्याघात इति वाच्यम्। कर्तृत्वेऽपि तथात्वस्य वक्तुं शक्यत्वात्। न च कर्तृत्वं परोपाधिकं कथं स्वरूपमिति वाच्यम्। धर्माभावेऽपि तुल्यत्वात्॥ ज्ञानत्ववदिति॥ न चेष्टापत्तिर्मया ज्ञातृत्वस्यारोपितस्यात्मन्यंगीकारादिति वाच्यम्। भ्रान्तोऽसि। न ह्यत्रात्मनि ज्ञातृत्वांगीकारमात्रमापादितम्। येनेष्टापत्तिर्वक्तुं शक्या स्यात्। किन्तु यथा ज्ञानत्वसाक्षित्वमन्यत्र नांगीक्रियते तथा ज्ञातृत्वादिकमिति। न चात्रेष्टापत्तिर्वक्तुं शक्येति भावः॥ अस्त्यादीति॥ न चात्मा अस्त्यादिरूपोऽतो न तत्रास्तित्वमिति वाच्यम्। सदेवेत्यादौ सत्त्वाश्रयत्वस्यैवोक्तेः॥ आकाशस्येति॥ न च निर्धर्मकत्वश्रुत्यनुसारात् विशेषनिषेधिकापि निर्विकारत्वश्रुतिः सामान्यनिषेधिकेति वाच्यम्। तस्या व्याहतत्वेन तदनुसरणस्यानुचितत्वात्॥ सुप्त इति॥ न च न तु

(कण्टकोद्धारः)

**द्वितीयमस्तीति श्रुत्या तं प्रति श्वासस्यैवाभावेन तत्कर्तृत्वं सुतरामसंभवीति वाच्यम्। तर्हि तयैव श्रुत्या ज्ञानसंस्काराद्यभावापत्तेः। अनुभवबलात् तदंगीकारेण श्रुतिसंकोचे प्रमाणबलात् श्वासादिकमप्यंगीकरणीयमिति। न च प्राणांशस्याहंकारस्य सत्त्वमंगीक्रियतेऽतः कर्तृत्वं श्वासादेर्भविष्यतीति वाच्यम्। तर्ह्यहंकारस्य तदा सत्त्वे तस्य सुप्तावभावेनात्मभिन्नत्वसाधनाभावापातात्। ननु कामः संकल्प इत्यादि श्रुतिः तथाऽत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुरित्यादिका च श्रुतिः आत्मनः कर्तृत्वं प्रतिपादयतीति तद्विरोध इत्यत आह॥ काम इति॥ ननु ध्यायतीवेतीवशब्दात् आत्मनो न कर्तृत्वमित्यत आह॥ ध्यायतीवेति॥ अस्वातन्त्र्येऽपीवशब्दस्य दर्शनादिति भावः। ननु तथाप्यात्मनि कर्तृत्वाभावप्रतिपादक श्रुतिस्मृतिविरोध इत्यत आह॥ अहंकारेति॥ ननु कर्तृत्वसामान्यनिषेध एव किं न स्यादित्यत आह॥ तत्रैवं सतीति॥ केवलपदस्य स्वातन्त्र्यार्थकत्वादिति भावः॥ अन्यथेति॥ कर्तृत्वसामान्यनिषेध इत्यर्थः। उपलक्षणमेतत्। तत्रैव केवलशब्दवैयर्थ्याच्चेत्यपि द्रष्टव्यम्॥ दर्शपूर्णमासादावपीति॥ तस्यापि कर्मरूपत्वात्। क्लिष्टं कर्मेति वाक्याच्चेति भावः। ननु तत्र फलसंबंधेनाक्लिष्टत्वमित्यत आह॥ यदेति॥ फलसंबंधस्य प्रकृतेऽपि संभवादिति भावः। इति कर्तृत्वाध्यास भङ्गः।**

## न्यायामृतप्रकाशः

॥ निर्विकारत्वादिति॥ कर्तृत्वांगीकारे उच्चत्वादिविकारप्राप्तेरिति भावः। अंतःकरणे सति आत्मनः कर्तृत्वमित्यन्वयः स्पष्ट एव। व्यतिरेकं चाह ॥सुषुप्ताविति॥ आत्मनः कर्तृत्वे तस्य सुप्तावपि सत्वात् तत्रापि कर्तृत्वापात इत्यर्थः। बुद्ध्यते अनयेति व्युत्पत्त्या बुद्धिरंतःकरणम् ॥ श्रुत्यादीति॥ ''विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि चे''ति श्रुतौ करणव्युत्पत्त्या विज्ञानशब्दोदितमनस एव कर्तृत्वप्रतीतेः। तथा ''स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीवे''ति श्रुतौ जीवस्यावास्तवकर्तृत्वप्रतीतेः। ''अहंकारविमूढात्मा कर्ताहमिति मन्यत'' इति स्पष्टस्मृतेश्चेत्यर्थः। आत्मनि कर्तृत्वाध्यासांगीकारे भ्रमस्थले रक्तः स्फटिक इति प्रतीतिर्भवति। कदाचित्कुसुमं रक्तमिति साक्षात्काररूपा प्रमा च भवति। यथा वा इदं रजतमिति भ्रमो भवति आपणे कदाचिद्रजतप्रमा भवति एवमिहाप्यंतः करणनिष्ठकर्तृत्वस्यात्मन्यध्यासांगीकारे रक्तः स्फटिक इतिवत्कदाचिच्चैतन्यं कर्त्रिति भ्रमः स्यात्। रक्तं कुसुममितिवत् कदाचित् मनः कर्त्रिति प्रत्यक्षप्रमा स्यात्। नचैवमस्ति। अतो नायं भ्रम इत्याशयेनाह ॥ अत्र ब्रूम इत्यादिना॥ प्रत्येकमिति। प्रत्येकं स्फटिके पुष्पे च रक्तत्वबुद्धिवत् चिति बुद्धौ च कर्तृत्वसाक्षात्कारः कदाचन यदि भवेत्तर्ह्येवायं भ्रमः। न चैवमस्तीति कारिकाशेषः। कारिकां व्याचष्टे ॥ भवितव्यं हीति॥ ननु जपाकुसुमस्थलौहित्यस्य प्रत्यक्षत्ववत् बुद्धिनिष्ठकर्तृत्वस्याप्रत्यक्षत्वान्नैवमित्यत आह ॥ नहीति॥ बुद्धिनिष्ठकर्तृत्वस्यापि साक्षिवेद्यत्वादिति भावः। ननु रक्तः स्फटिकः रक्तं कुसुममितिवत्प्रतीतिद्वयापादनमयुक्तं वैषम्यात्। तत्र ह्यध्यस्यमानरक्तत्वातिरिक्तरक्तत्वाश्रयस्य कुसुमस्य भिन्नस्य सत्वेन धर्म्यैक्यारोपाभावेन धर्ममात्रारोपाद्रक्तद्वयप्रतीतिः इह तु कर्तृत्वादिविशिष्टांतःकरणस्यैव चिदात्मनाऽध्यासांगीकारेण धर्मिविशिष्टधर्म्यारोपस्यैवांगीकारादध्यस्य-

(प्रकाशः)

मानकर्तृत्वातिरिक्तकर्तृत्वाश्रयस्यांतःकरणांतरस्याभावेन न कर्तृत्वद्वयप्रतीतिरिति शंकते ॥नन्विति॥ मनः कर्तृत्वादिविशिष्टं मनः। सोपाधिके हि भ्रमे जपाकुसुमादिरूपोपाधिर्न स्फटिकात्मनाऽध्यस्यते। किंतु तत्र तद्गतधर्मसदृशधर्मांतरम्। निरुपाधिके तु भ्रमे भीषणत्वादियुक्तं सर्पादिकमेव रज्ज्वात्मनाऽऽरोप्यते। न तु सर्पगतभीषणत्वातिरिक्तभीषणत्वान्तरम्। अत्र तु कर्तृत्वादिमदंतःकरणमेव चिदात्मतयाऽध्यस्यते। न तु तद्गतकर्तृत्वसदृशकर्तृत्वांतरम्। अतःसर्पाध्याससदृशोऽयं निरुपाधिक एव भ्रमः स्यान्न सोपाधिकः। त्वया त्वयं भ्रमः सोपाधिकतयांगीकृत इत्यपसिद्धांतः स्यादित्याह ॥अधिष्ठानेति॥ नन्वयमपि सोपाधिकभ्रम एव। न चोक्तरीत्या कर्तृत्वद्वयप्रतीतिप्रसंग इति वाच्यम्। चिन्मनसोर्भेदाग्रहात्कर्तृत्वद्वयप्रतीत्यभावोपपत्तेरित्यत आह ॥मनइति॥ स्फुरणं चैतन्यम् स्फुरति चैतन्यविषयः। तयोः चिन्मनसोर्भेदग्रहदशायामपीत्यर्थः। यदुक्तं चिन्मनसोर्भेदाग्रहान्न कर्तृत्वद्वयप्रतीतिरिति तदयुक्तं भेदग्रहदशायामपि कर्तृत्वद्वयाप्रतीतेरिति व्यतिरेकव्यभिचारमुक्त्वा भेदाग्रहदशायामपि प्रतीतिद्वयसद्भावादन्वयव्यभिचारोपीत्याह ॥इदंसर्पयोरिति॥ ॥अभेदग्रहणेति॥ भेदाग्रहणदशायामपीत्यर्थः। एवमुत्तरत्रापि। अयमितीदमंशापेक्षया अंगुल्या निर्दिश्यायं भीषण इति वदति सर्पो भीषण इति च वदति इत्यनुभवसिद्धमिति ज्ञातव्यम्। ननु मनश्चिदात्मनोरध्यासेपि सोपाधिकारोप एवायं तत्प्रयोजकस्यात्र सत्वादित्याशंक्य निराकरोति ॥नचेति॥ उपाधेरंतःकरणस्य। तथाच सोपाधिकत्वासंभवेपीत्यर्थः ॥अधिष्ठानेत्यादि॥ पुष्पस्य तद्रक्तत्वस्य च व्यावहारिकत्वेनाधिष्ठान-भूतस्फटिकसमसत्ताकत्वात् तथाऽध्यस्यमानप्रातिभासिकस्फटिकगतरक्तत्वापेक्षयाऽधिक सत्ताकत्वाच्च सोपाधिकभ्रमत्वमित्यर्थः। नन्विदं प्रकृते कथमस्तीति चेत् उच्यते। अविद्यावच्छिन्नचैतन्यस्यान्तःकरण-निष्ठकर्तृत्वाध्यासाधिष्ठानत्वेन तस्य व्यावहारिकतयोपाधिभूतबुद्धेस्तत्कर्तृत्वस्य चाधिष्ठानसमसत्ताकत्वादिकं ज्ञातव्यम्। अविद्यावच्छिन्नस्य चैतन्यस्य स्वयं कल्पितत्वेनाधिष्ठानत्वायोगाच्चित एवाधिष्ठानत्वं वाच्यं तथाच नैतत्प्रयोजकलाभ इत्याह ॥आद्य इति॥ द्वितीय इति॥ बुद्धिरूपोपाधिधर्मभूतं कर्तृत्वमात्मन्यध्यस्यत इत्युच्यते। तत्राध्यस्यमानं यदात्मकर्तृत्वं तच्चेद्व्यावहारिकं स्यात्तर्हि बुद्धिरूपोपाधेस्तद्धर्मभूतकर्तृत्वस्य चाध्यस्यमानादधिकसत्ताकत्वं वाच्यं। ततश्च तयोः पारमार्थिकत्वप्रसंगः। बुद्धेस्तत्कर्तृत्वस्य च व्यावहारिकत्वांगीकारेऽध्यस्यमानाधिकसत्ताकत्वायात्मगतकर्तृत्वस्य वा प्रातिभासिकत्वमंगीकार्यं स्यात्। न चेष्टापत्तिरिति वाच्यं वाधकप्रत्ययाभावादित्याशयः ॥उभयत्रापीति॥ प्रयोजकद्वयपक्षेपीत्यर्थः। क्षीररूपोपाधेस्तद्धर्मभूतक्षीरत्वस्य च व्यावहारिकत्वेनाधिष्ठाननीरसमसत्ताकत्वादध्यस्यमानप्रातिभासिकनीरगत-क्षीरत्वापेक्षयाऽधिकसत्ताकत्वेन सोपाधिकभ्रमत्वप्रयोजकसद्भावान्निरुपाधिकभ्रमतयांगीकृतस्यापि नीरे क्षीरत्वाध्यासस्य सोपाधिकत्वापातादिति भावः। बुद्धिश्चिद्भागरहितांतःकरणवृत्तिविशेषः। तथाच केवलं बुद्धिगतं कर्तृत्वं चिदचित्संवलनरूपेऽहमर्थे आरोप्यते। अहमर्थनिष्ठं वा शुद्धात्मन्यारोप्यत इत्यर्थः ॥ततश्चेति॥ बुद्धिगतमहमर्थे आरोप्यत इति पक्षे आरोपितकर्तृत्वस्य मनसि सत्वेन मनः कर्त्रीति प्रतीतिसंभवेपि चैतन्ये आरोपितकर्तृत्वस्याप्यभावेन न चैतन्यं कर्त्रीति प्रतीतिः संभवति। तथाच प्रतीत्यभावो न युक्त इत्यत्र प्रतीतिद्वयाभावोऽयुक्त इत्यर्थः। तथाचैकसत्वेपि द्वयं नास्तीति द्वित्वावच्छिन्नाभाव इति ज्ञातव्यम्। तेन पक्षद्वयेपि मनः कर्त्रीति प्रतीतिसंभवात्कथं मनः कर्त्रीति प्रतीत्यभावोक्तिरिति निरस्तम्। एतेनेत्युक्तं विशदयति

(प्रकाशः)

॥आद्य इत्यादिना॥ बुद्धिगतं कर्तृत्वमहमर्थे आरोप्यत इत्याद्यपक्षे बुद्धिः कर्त्री मनः कर्त्रीति प्रतीतिद्वयं स्यादेवेति दूषणे सत्येव दूषणांतरमिदमिति ज्ञातव्यम्। अहमर्थगतं कर्तृत्वमात्मन्यध्यस्यत इति द्वितीयपक्षे चैतन्यं कर्तृ मनः कर्त्रीति प्रतीतिद्वयं स्यादेवेति दूषणे सत्येव दूषणांतरमाह ॥द्वितीय इति॥ नन्वहं कर्तेति प्रतीत्यन्यथानुपपत्त्याऽऽत्मनि कर्तृत्वाध्यासोंऽगीकार्य इत्यत उक्तमहमर्थस्थेनेति ॥अनध्यस्तेति॥ तत्रैव वास्तवकर्तृत्वांगीकारादिति भावः। कर्तृत्वेपि करणत्वमौपचारिकमिति न वक्तव्यमित्याशयेनोक्तं प्रसिद्धीति। करणत्वेन सर्वैर्ज्ञायमानत्वादित्यर्थः। उपलब्धिं प्रति करणत्वेपि अन्यत्र कर्तृत्वं युक्तमिति चेन्न। चक्षुरादिवत्करणे मनसि द्वैविध्यकल्पनानुपपत्तेरिति भावः। अंतःकरणगतमेव कर्तृत्वमित्यंगीकारे दूषणांतरमाह ॥अपिचेति॥ ननु कर्तृत्वाश्रयबुध्यविवेकमात्रेण जीवस्य कर्तृत्वं मया सिद्धांतितमिति चेत्तत्राह ॥बुद्ध्यात्मनोरिति॥ तथाच त्वन्मते तदधिकरणसिद्धांतानुत्थानप्रसंगइति भावः। फलभाक्ता फलभोक्तृत्वं तयेत्यर्थः। बंधस्य तदपायेन सामानाधिकरण्यादित्येतद्व्याचष्टे ॥कर्तृत्वेति॥ ॥स्यादिति॥ तथाच नात्मनो मोक्षः स्यात्। तथाच "स पात्रं बंधमोक्षयो"रिति वचनविरोध इति भावः। ननु कर्तृत्वादिरूपबंधस्य बुद्धिगतत्वेप्यज्ञान-रूपबंधस्यात्मगतत्वान्मोक्षसामानाधिकरण्यमस्तीति चेत्तत्राह ॥अज्ञानमपि हीति॥ अज्ञानं न स्वरूपेण बंधः। किंतु दुःखादिभोक्तृत्वादिरूपानर्थापादकतया। तथाच दुःखादिभोक्तृत्वाद्यनर्थरूपमुख्यबंधस्य बुद्धिगतत्वाद्बुद्धेरेव मोक्षापात इति भावः ॥मिथ्येति॥ तथाच बुद्धिगतभोक्तृत्वादेर्जीवे आरोपितत्वेन मिथ्याभूतभोक्तृत्वरूपाऽनर्थस्य जीव एव सद्भावाद्बंधमोक्षयोः सामानाधिकरण्यं युक्तमिति भावः ॥एतदिति॥ कल्पितोऽनर्थोऽस्तीति कल्पनाया इत्यर्थः ॥अन्योन्येति॥ कर्तृत्वाध्याससिद्धौ मिथ्याभूतकर्तृत्वाद्बंधत्वसिद्धिः तत्सिद्धौ च मिथ्याभूतबंधमोक्षयोर्जीवसामानाधिकरण्यस्य संभवेन तद्विरोधाभावाद्बुद्धेरेव सत्यभूतकर्तृत्वाद्युपपत्तेरात्मनि तदध्याससिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥सत्यस्यैवेति॥ अन्यथा स्वाप्नब्रह्महत्यादेरप्यनर्थत्वापात इति भावः। सत्यभूतानर्थस्य च बुद्धिनिष्ठत्वेन मोक्षस्य चात्मनिष्ठत्वेन बंधमोक्षयोः सामानाधिकरण्यायोग एवेति ध्येयम्। ननु कर्तृत्वादिबंधवन्मोक्षस्यापि कल्पितस्यैव पुरुषार्थत्वादात्मनि बंधमोक्षयोः सामानाधिकरण्योपपत्तिरिति शंकां भट्टवार्तिकसंमत्या परिहरति ॥तदुक्तमिति॥ स्वप्नसुखवन्मोक्षसुखस्यापि कल्पितत्वमंगीकुर्वाणं बौद्धं प्रत्युच्यते ॥नहीति॥ नहि स्वप्नसुखार्थं कश्चिद्यत्नं करोति यदृच्छया निद्रायां स्वप्नस्य स्वत एव लभ्यमानत्वेन तत्सुखस्यापि तथात्वात्। अतो मौक्तसुखस्यापि कल्पितत्वेन तस्यापि स्वत एव यदृच्छया लभ्यमानत्वसंभवात्साधनानुष्ठानं विहाय तूष्णीमासीतेत्यर्थः। मिथ्याभूतभोक्तृत्वकर्तृत्वादेरनर्थस्य जीवे सद्भावमंगीकृत्य बंधमोक्षसामानाधिकरण्यांगीकारे स्थूलः करोमीत्यादिप्रतीतेर्देहस्यापि मिथ्याभूतकर्तृत्व-भोक्तृत्वादिरूपानर्थान्वयप्राप्तौ मोक्षस्यापात इत्याह ॥स्थूल इति॥ अनर्थः आत्मन इति शेषः। तथाच तद्गत एव बंधो मोक्षश्च न देहगत इति भावः ॥अनर्थकोटित्वेति॥ बुद्ध्युपाधिकात्मस्थभोक्तृत्वस्यात्मनोनर्थत्वे आत्मनोप्यनर्थकोटिनिवेशापत्तेरात्माश्रयः। तथाऽनर्थहानेः पुरुषार्थत्वादात्मनोपि तत्कोटिनिविष्टत्वेन तद्धानिरपि पुरुषार्थः स्यादिति भावः। किंच बुद्धिगतभोक्तृत्वादेः शुद्धात्मन्यध्यासांगीकारे आत्मनि भोक्तृत्वादिप्रतीत्या भवितव्यम्। अस्तीति चेत् भ्रमकाले प्रमाकाले वा? भ्रमकाले चेदहं भोक्तेत्यहमर्थनिष्ठत्वेनैव भोक्तृत्वं प्रतीयते। न शुद्धात्मनि। प्रमाकाले चेत् बुद्धिर्भोक्त्रीति प्रतीयेत। ततः शुद्धात्मनि तद्भ्रमो न युक्त इत्याह

(प्रकाशः)

॥भ्रमकाल इति॥ कृतेस्तत्फलभाक्तया सामानाधिकरण्याच्चेत्युक्तं हेतुं विवृणोति ॥अपिचेति॥ कुत इत्यत आह ॥शास्त्रफलमिति॥ पूर्वतंत्रे तृतीयाध्यायस्थं सूत्रं "शास्त्रफलं प्रयोक्तरि तस्मात्स्वयं प्रयोगः स्यादि"ति। अस्यार्थः विधिनिषेधात्मकशास्त्रफलं स्वर्गनरकादि प्रयोक्तरि कर्मप्रयोक्तरि ततसाधनकर्मकृतिमति यजमान एव। तस्मात्स्वयमेव यजमानोंगप्रधानेषु कर्ता स्यादिति। साधनकृतिः साधनविषयकप्रयत्नः ॥अन्यथेति॥ साधनकृतेः पलभाक्त्वेन सामानाधिकरण्याभावमंगीकृत्य बुद्धेरेव कर्तृत्वादिकं आत्मन एव मोक्ष इत्यंगीकारे बुद्धिकृतश्रवणादेर्हानिः वैयर्थ्यम्। फलाभावात्। श्रवणादिकर्तृत्वाभावेपि आत्मनो मोक्षागम इत्यदृष्टकल्पना स्यादित्यर्थः। ननु शास्त्रफलं प्रयोक्तरीति न नियमः "पुत्रे जाते इष्टिं कुर्या"दित्येवं पुत्रपूतत्वोद्देशेन नतेष्टिः पितुर्विधीयते। तथा पितुः स्वर्गप्राप्त्यर्थं पुत्रं प्रति श्राद्धं विधीयते। एवं जातेष्टिकृतेः पूतत्वरूपफलेन सामानाधिकरण्यं नास्ति। पूतत्वरूपफलस्य पुत्रगतत्वात्। तथा स्वर्गरूपफलस्यापि पितृगतस्य न पुत्रगतश्राद्धकृतिसामानाधिकरण्यमिति व्यभिचार इत्याशंक्याह ॥जातेष्टाविति॥ पित्रर्थो यः पुत्रः तद्गतं पूतत्वादिकं तदनुष्ठातुर्जातिष्ट्यनुष्ठातुः पितुरेव फलम्। कुत इत्यत आह॥ तेनेति॥ जातेष्टिकर्त्रा पित्रा मम पुत्रस्य पूतत्वार्थमिष्टिं करिष्ये इति संकल्पकरणादित्यर्थः। तथाच पूतपुत्रकत्वं पितुरेव फलम्। मम पूतपुत्रकत्वार्थं इष्टिं करिष्य इत्यपि संकल्पः कार्यः। तेन च पुत्रेपि पूतत्वं संपाद्यते। एवं स्वर्गगामिपितृकत्वं श्राद्धकर्तुरेव फलमिति युक्तं शास्त्रफलं प्रयोक्तरीति न्यायेन कृतेः फलभाक्त्वेन सामानाधिकरण्यमिति भावः। ननु पुत्रस्य पित्रर्थत्वेन पूतपुत्रकत्वं पितुरेव फलं तेन तदुद्देशादित्युक्तम्। एवमिहापि आत्मनोंतःकरणार्थत्वेन मुक्तात्मकत्वमपि अंतःकरणस्यैव। तेनांतःकरणेनात्ममोक्षोद्देशादित्यहमपि वदिष्यामीति चेत् मैवमप्रामाणिकं भाषिष्ठा इत्याह ॥नचेति॥ अंतःकरणार्थः तारआत्मको नचेत्यर्थः। प्रत्युतांतःकरणमेवात्मार्थमिति द्रष्टव्यम्। ननु यागविषयककृतिमतां ऋत्विजां स्वर्गफलाभावेन व्यभिचारान्नकृतेः फलभाक्त्वेन सामानाधिकरण्यमित्यत आह॥ आर्त्विज्यादेरिति॥ आर्त्विज्यस्य स्वर्गः फलमेव न भवति। द्रव्यदानेन यजमानपरिक्रीततया यागकर्तॄणां तेषां दक्षिणाया एव फलत्वात्। अतो न व्यभिचार इत्यर्थः। कर्तृत्वस्य पलभाक्त्वेन सामानाधिकरण्यं शंकते ॥नन्विति॥ ॥आरोपितमेवेति॥ आत्मेति विशेषणरहितमित्यर्थः। तथाच जीवे कर्तृत्वसद्भावेन मोक्षोऽपि तस्यैवेति भावः। बंधमोक्षयोः सामानाधिकरण्याय पूर्वं शङ्कितम्। कृतिफलयोः सामानाधिकरण्यायेह पुनराशंकेति भेदः ॥निरस्तत्वादिति॥ आरोपितकर्तृत्वस्य फलभाक्त्वान्वये तंत्रत्वे तस्य स्थूलः करोमीति प्रतीत्या देहादावपि सत्वात्फलभाक्त्वान्वयप्रसंगः। आत्मारोपितकर्तृत्वस्य फलान्वयतंत्रत्वे कर्तृत्वाध्यासे सिद्धे आरोपितस्यापि कर्तृत्वस्य फलान्वयप्रयोजकत्वसिद्धिः तत्सिद्धौ च कृतिफलयोः सामानाधिकरण्याव्यभिचारात्कर्तृत्वाध्याससिद्धिरित्यन्योन्याश्रय इत्येवं निरस्तत्वादिति भावः। आरोपितकर्तृत्वस्य वाऽऽत्मारोपितकर्तृत्वस्य वाऽभावे न फलान्वय इति व्यतिरेकव्याप्तेः संभवति व्यभिचार इत्याह ॥सत्येति॥ फलभोक्तृत्वाच्चेत्येव पाठः। नन्वात्मनि फलान्वये आरोपितकर्तृत्वं तंत्रम्। बुद्धौ च फलभोक्तृत्वान्वये सत्यभूतं कर्तृत्वं तंत्रमित्याशंक्याननुगमेन निराकरोति ॥न चेति॥ अन्यान्यत्वेन क्रोडीकार इति चेन्न। गौरवात्। अन्योन्याभावस्य धर्मिस्वरूपत्वेन पुनरननुगम एवेति। अत एवास्वरसादाह ॥अपि चेति॥ बुध्यभावेपि संसारदशायां कर्तृत्वश्रुतेरित्यर्थमभिप्रेत्याह ॥तथेति॥ बुध्यभावेपि परममुक्तिदशायां पर्यटनादिकर्तृत्वश्रुतेरित्यप्यर्थमभिप्रेत्याह ॥तथेति॥ यद्यप्यत्र स

(प्रकाश:)

तत्रेत्यादिकमेवोदाहर्तव्यं तथापि परममुक्तित्वज्ञापनार्थं परंज्योतिरित्यादिपूर्ववाक्योदाहरणमिति ज्ञातव्यम्। ''प्रत्यक्षैषा कर्तृता जीवसंस्था तथागमादनुमानाच्च सर्वम्। पूर्णं प्रमाणं तत्त्रयं चाविरोधेनैकत्रस्थ''मिति महाभारततात्पर्यनिर्णयहठवादीयवचनं हृदि निधाय तदर्थमेव कारिकया संगृह्णाति ॥अपि चेति॥ अनेन प्रत्यक्षैषेति वाक्योक्तं प्रत्यक्षादिकं विवृतं भवति। श्लोकं व्याकुर्वन्नेव प्रत्यक्षादीनामप्रामाण्यं किं न स्यादित्याशंकां च निराकरोति ॥न चेति॥ प्रत्यक्षेणानुमानैः श्रुतिभिश्च सिद्धे आत्मनः कर्तृत्वादावित्यन्वयः। विमतः अहमर्थभिन्नत्वादिना विमति विषयीभूतः। संमतवत् यजमानवत्। आदिशब्दोक्तलिंगं दर्शयति ॥अज्ञानमित्यादिना॥ आत्ममात्राश्रिताज्ञानसामानाधिकरण्यसिद्धौ आत्मन एव ज्ञातृत्वप्राप्त्या तत्प्रयुक्तं कर्तृत्वमपि तस्यैव सेत्स्यतीति भावः। संमतो निगडः। आदिशब्दोदितेश्वरकर्तृत्वप्रतिपादकं श्रुतिवाक्यं दर्शयति ॥आनंदेति॥ कर्ताविज्ञानात्मा यो वेदेति जीवकर्तृत्वश्रुतेरानंदभुगित्यादीश्वरकर्तृत्व श्रुतेश्च प्रत्यक्षप्राप्तजीवेश्वरकर्तृत्वानुवादपरत्वान्न स्वार्थे तात्पर्यमिति बाधकमाशंक्य निराकरोति ॥न चेति॥ अहमर्थान्यात्मा जीवः। न हि अहं कर्तेति प्रत्यक्षप्रतीतिं विहाय तदन्यात्मकर्तृत्वं प्रत्यक्षप्राप्तं येन श्रुतिरनुवादः स्यात्। अहं कर्तेति प्रत्यक्षं च नात्मकर्तृतावगाहि त्वन्मतेऽस्याहमर्थभिन्नत्वादिति भावः। नन्वात्मचैतन्यस्य निर्धर्मकत्वान्न तस्य कर्तृत्वमित्याशंक्य निराकरोति ॥न चेति॥ ॥निर्धर्मकत्वेति॥ ब्रह्मणि निर्धर्मकत्वरूपधर्मसद्भावे निर्धर्मकत्वोक्तिव्याघातः। तदभावे सधर्मकत्वस्यैव प्राप्त्या निर्धर्मकत्वोक्ति व्याघात इत्यर्थः। ज्ञानत्वादिधर्मवत् ज्ञानकर्तृत्वादिधर्मांगीकारे बाधकाभावान्न निर्धर्मकत्वं ब्रह्मण इत्याह ॥ज्ञानत्ववदिति॥ ॥बुध्यविशिष्टस्येति॥ बुद्धिविशिष्टस्यैव बुद्धिज्ञातृत्वे आत्माश्रयापातादिति भावः ॥निष्क्रियत्वमिति॥ कर्तृत्वांगीकारे क्रियावेश प्राप्तेरिति भावः। निष्क्रियत्वं बाधकमित्यत्रात्मनो धात्वर्थक्रियाशून्यत्वमभिप्रेतं परिस्पदशून्यत्वं वा? नाद्य इत्याह ॥क्रियाया इति॥ ॥अस्त्यादीति॥ अस्ति ब्रह्मेति चेद्वेदेत्यादिवाक्यादिति भावः ॥अप्रयोजकत्वादिति॥ ब्रह्मणः परिस्पंदरूपक्रियाभावेपि ज्ञानादिरूपक्रियानिमित्तं ज्ञातृत्वादिकं किं न स्यात्? ज्ञानादीनामपरिस्पंदरूपत्वेन विरोधाभावादिति भावः ॥निर्विकारत्वमिति॥ कर्तृत्वांगीकारे विकारप्राप्तेरिति भावः। आत्मनो ज्ञानरूपगुणाश्रयत्वेन ज्ञातृत्वांगीकारे द्रव्यांतरत्वापत्तिरूपविकाराप्राप्तेः यथा ह्याकाशस्य संयोगाद्याश्रयत्वेपि न द्रव्यांतरत्वापत्तिरूपो विकारः यथा वाऽऽत्मनस्त्वन्मतेऽज्ञानरूपबंधतद्ध्वंसरूप मुक्त्याश्रयत्वेपि न द्रव्यांतरत्वापत्तिरूपं विकारित्वं तद्वदित्याह ॥आकाशस्येति॥ ॥सुषुप्ताविति॥ मनसोऽभावे मनसोऽभावदशायां सुषुप्तावित्यन्वयः। तथा चात्मनः कर्तृत्वांगीकारे तस्य सुषुप्तावपि सत्वेन तत्रापि कर्तृत्वापात इत्यत्रेष्टापत्तिरित्यर्थः। किंच मनसोऽभावे कर्तृत्वाद्यदर्शनं न मनसः कर्तृत्वं गमयति किंतु निमित्तत्वमेव निमित्तकारणव्यतिरेकेणापि कार्यादर्शनसंभवात्। न हि दंडाभावे घटादर्शनं दंडस्य कर्तृत्वं गमयतीति भावेनाह ॥देहादिवदिति॥ देहाभावे कर्तृत्वादर्शनाद्देहस्यापि कर्तृत्वापात इति भावः ॥श्रुतिरिति॥ ''विज्ञानं यज्ञं तनुते कर्माणी''ति श्रुतौ विज्ञानशब्दोक्तमनसः कर्तृत्वप्रतीतेरित्यर्थः। ननु ''कामः संकल्प'' इत्यादि श्रुतौ कामादीनां मनआद्यात्मकत्वं कथ्यते। मनआद्यात्मकत्वं च तत्कर्तृत्वमेवेति मनसः कर्तृत्वसिद्धिरिति चेत्तत्राह ॥काम इति॥ श्रुतेर्मनःकारणत्वपरत्वादित्यर्थः। श्रुत्या श्रुत्यंतरसंवादेन। तथा च कामादीनां मन आद्यभेदोक्तिः श्रुत्यंतरानुसारेण मनसः कारणत्वपरैव, न कर्तृत्वपरेत्यर्थः ॥युक्तमिति॥ जीवमित्यर्थः। अनया केवलस्यात्मनो भोक्तृत्वाभावावगमान्मनोयुक्तस्यैव च

(प्रकाशः)

तदवगमेनावश्यकत्वान्मनस एव भोक्तृत्वमवगम्यत इति भावः ॥ सहकारितेति॥ आत्मशब्दोदितदेहादिसाधारण-मनस्सहकारेणात्मनो भोक्तृत्वमुच्यत एव। न तु मनसो भोक्तृत्वम्। तथात्वे देहेंद्रिययोरपि भोक्तृत्वापत्तेरिति भावः। ननु ध्यायतीवेति श्रुतौ इव शब्दश्रवणात् अहंकारविमूढः सन् स्वातंत्र्येणाहं कर्तेति मन्यत इत्येवं जीवे स्वातंत्र्येण कर्तृत्वनिवारकत्वादित्यर्थः। ननु वस्तुतोऽकर्ता जीव आत्मानं कर्तारं विमूढः सन्मन्यत इति कर्तृत्वमात्रनिवारकत्वं किं न स्यादित्यत आह ॥ तत्रैवं सतीति॥ आत्मानं केवलं ईश्वरानियतं कर्तारं यः पश्यति न स पश्यतीति ईश्वरानियतकर्तृत्वं मन्यमानस्यैव निंदनात्। सर्वथा कर्तृत्वनिषेधे तु केवलपदवैयर्थ्यादिति भावः। उदाहृतश्रुतिस्मृतीनामस्मदुक्तार्थमनंगीकृत्य जीवकर्तृत्वनिषेधकत्वांगीकारे बाधकमाह ॥ अन्यथेति॥ ॥ उक्तेति॥ कर्ता विज्ञानात्मा यो वेदेदं जिघ्राणीत्याद्युदाहृतनिरवकाशश्रुतिविरोधादित्यर्थः ॥ क्लेशसंबंधादिति॥ क्लेशनियतत्वादित्यर्थः। श्रुतिः ईश्वरादिकर्तृत्वप्रतिपादिका ॥ दर्शेति॥ ''दर्शपूर्णमासाभ्या''मिति श्रुतेरपि स्वार्थतात्पर्यं न स्यात्। तत्रापि यागादिकरणे बह्वायासेन क्लेशसद्भावादित्यर्थः। किंच न कर्तृत्वं क्लेशव्याप्तं किं तु लीलाया अकरणे श्वासादेश्चाकरण एव क्लेशदर्शनात् कर्तृत्वाभाव एव क्लेशव्याप्त इत्याह ॥ लीलादेरिति॥ किंच कर्तृत्वस्य न क्लेशेन संबंधः प्रत्युत फलसंबंध एव श्रूयते। अतः श्रुतेः स्वार्थे तात्पर्यमवश्यमंगीकार्यमिति उक्तश्रुत्यादिबलादात्मन एव कर्तृत्वसिद्धिर्नान्यस्येति भावेनाह ॥ यदा वा इति॥ ॥ फलेति॥ स्वस्थतयाऽवस्थानरूपेत्यर्थः ॥ कतृत्वाध्यासभंगविवरणम्॥

## ३५. देहात्मैक्याध्यासभङ्गः

यच्चोच्यते (आत्मनि देहेन्द्रियाद्यैक्यं तद्धर्माश्चाध्यस्यन्ते) देहेन्द्रियादेरात्मन्यैक्यं तद्धर्माश्चाध्यस्यन्ते। तत्र चाहं ब्राह्मणोऽहं काण इत्यादिप्रत्यक्षं, ब्राह्मणो यजेतेत्यादि श्रुतिर्देहाद्यैक्याध्यासाभावे सुषुप्तौ प्रमातृत्वाद्यदर्शनात् तदन्यथानुपपत्तिश्च मानमिति, तन्न, त्वन्मतेऽहमर्थस्यानात्मत्वेनाहं ब्राह्मण इत्यादेर्देहात्मैक्याविषयत्वात्। देहात्मैक्यस्य प्रत्यक्षत्वे तद्विरोध्यनुमानाद्यप्रामाण्यस्योक्तत्वेन तद्भेदासिद्ध्यापत्तेश्च। परस्परं भिन्नत्वेन निश्चितानां देहेन्द्रियादीनां युगपदेकात्मैक्याध्यासायोगाच्च। त्वन्मते देहात्मनोर्भेदस्या-ध्यस्तत्वेन जीवब्रह्मणोरिव तत्राभेदाध्यासायोगाच्च। मिथ्यात्वं हि अधिष्ठानज्ञाना-बाध्यात्यन्ताभावप्रतियोगित्वं, तद्बाध्यात्यन्ताभावप्रतियोगित्वस्य सत्त्वेऽपि सम्भवात्। अभेदश्च भेदात्यन्ताभाव इति कथं भेदमिथ्यात्वे अभेदः सत्यो न स्यात्? न च देहस्य स्वरूपेणैवाध्यस्तत्वाद् देहादात्मनो न भेदो नाप्यभेद इति वाच्यम्, अध्यस्तादपि रूप्याच्छुक्तेः स्वज्ञानाबाध्यस्य बाधगोचरस्य भेदस्य दर्शनात्। किञ्च–

अहं गेहीतिवच्चाहं देहीत्येव प्रतीयते ।
न तु देहोऽहमस्मीति कदाचित् कस्यचिन्मतिः ॥ १ ॥
ब्राह्मणोऽहं मनुष्योऽहमित्यादिस्तु प्रमैव नः ।
देहभेदयुतो यस्माद् ब्राह्मणादिपदोदितः ॥ २ ॥
कृशोऽहं कृष्ण इत्यादौ कार्श्यादिर्देहसंस्थितः ।
पुत्रादिस्थितकार्श्यादिवदात्मन्युपचर्यते ॥ ३ ॥

प्रतीयते हि मम गृहं मम क्षेत्रमितिवन्मम देहः मम मनः मम चक्षुरिति भेदः। आत्मनि अहं ब्राह्मणोऽहं मनुष्य इत्यादिस्तु प्रमा। देहविशेषविशिष्ट एवं हि ब्राह्मणादिशब्दार्थः, न तु देहविशेषः, देहो ब्राह्मण इति कदाप्यप्रतीतेः। अन्धोऽहमित्यादिधीः प्रमैव, चक्षुश्श्रोत्रादिहीनस्यैवांधबधिरादित्वात्। कृशोऽहमित्यादावपि कृशत्वादिकं रज्जौ सर्पस्थभीषणत्वादिकमिव धर्म्यैक्येन सहाध्यस्यते? किं वा स्फटिके जपाकुसुमलौहित्यमिव तेन विनैव? नाद्यः, धर्म्यैक्याध्यासाभावस्योक्तत्वात्। नान्त्यः, तद्वदेव कार्श्यादिद्वयप्रतीत्यापत्तेः। कृशोऽहं कृष्णोऽहमित्यादिस्तु पुत्रे कृशेऽहं कृश इतिवत् कर्दमलिप्तेऽहं कृष्ण इतिवच्च गौणः। न चायमप्यध्यासः, पुत्रात्कर्दमात्स्वस्य स्पष्टं भेदप्रतीतेः। अन्यथा मंचाः क्रोशन्तीत्यादिरप्यध्यासः स्यात्। पुत्रकार्श्येन दुःखं तु तस्यात्यन्तप्रेमास्पदत्वात्। न च कृशोऽहमित्यैक्यप्रतीत्या शिलापुत्रिकाया देह इतिवत् मम देह इत्ययमेव गौण इति वाच्यम्, मम देह इत्यस्य देहात्मविवेकिनि मुख्यतायाः कृशोऽहमित्यस्य च पुत्रकार्श्ये गौणतायाश्च क्लृप्तत्वात्। तत्र भेदधीः स्पष्टेति चेदिहापि तथा। पश्वादीनामपि देहात्मभेदसाक्षात्कारस्यांगीकार्यत्वात्। तदुक्तम्—

जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ।
भयाभयस्वभोगादौ कारणानि विजानते ॥

अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवेदिति।

तथा हि जातमात्रस्य पश्वादेः स्तन्यपानादौ प्रवृत्त्यादिहेतोरिष्टसाधनत्वाद्यनुमितेर्हेतुः यत् स्तन्यपानं तदिष्टसाधनम्, यथेदम्, यन्नेत्रस्यान्तः

शंकुकण्डूयनं तदनिष्टसाधनम्, यथेदमित्यादिव्याप्तिस्मृतिस्तावन्न देहान्तरास्मृतौ युक्ता। न च मम प्राग्देहान्तरमभूदिति स्मरतः स्वस्यैतद्देहैक्यधीः, किं त्वनेकमणिष्वनुस्यूतं सूत्रमिवानेकदेहेष्वनुस्यूतमात्मानं पश्यतस्ततो भेदधीरेव।

किं च योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरः नप्तॄन् पश्यामीति, योऽहं स्वप्ने व्याघ्रदेहः सोऽहमिदानीं मनुष्यदेह इति च देहभेदधीपूर्वकं स्वस्यैक्यमनुसंदधानः कथं ततो भेदं न जानीयात्? न चेयं विरुद्धधर्मरूपलिंगजन्या भेदधीः परोक्षेति नैक्यापरोक्षभ्रमविरोधिनीति वाच्यम्, प्रत्यक्षे धर्मिणि भेदक- साक्षात्कारस्य भेदसाक्षात्कारव्याप्तत्वात्। इह च व्यावृत्तत्वेन धीस्थदेहादिभेदकस्या- नुवृत्तत्वस्यात्मनि प्रत्यभिज्ञाप्रत्यक्षसिद्धत्वात्। व्यावर्तकसाक्षात्कारस्यैवैक्यापरोक्षभ्रमेण भेदव्यवहार-स्यौपचारिकत्वेन च सह विरोधाच्च। न चायं भ्रमः सोपाधिकः येनाधिष्ठानतत्त्वसाक्षात्कारेऽपि स्यात्।

या तु श्रुतिरुक्ता, तत्र किं लक्षणया देहविशेषैक्याध्यासवान् ब्राह्मणशब्दार्थ इति भावः? किं वा देहविशेषसम्बद्ध एव तदर्थः, सम्बन्धस्त्वन्यस्यासम्भवा-दैक्याध्यासरूप इति? यद्वा देहविशेष एव तदर्थः, आत्मा तु देहैक्याध्यासात्प्रवर्तत इति? नाद्यः। विधौ लक्षणायोगात्, त्वया पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेत्यध्यस्यतीति भाषितत्वेन न्यायसाम्येन भृत्यमित्रादावपि तस्य सत्वेन शूद्रस्वामिनो ब्राह्मणादेर्यागाद्यनधिकारापाताच्च, ब्राह्मणादिकमित्रस्य शूद्रस्याप्यधिकारापत्तेश्च। न च स्वकर्मार्जितेन देहविशेषेणैक्याध्यासवांस्तदर्थः, आवश्यकत्वेन स्वकर्मणा देहविशेषार्जनस्यैव तदर्थत्वोपपत्तेश्च। सुप्तस्य जीवन्मुक्तस्य च देहैक्याध्यासाभावेन 'ब्राह्मणो न हंतव्य' इत्यादेस्तदविषयकत्वापाताच्च। नापि कदाचिदध्यासवांस्तदर्थः, महापातकेन नष्टब्राह्मण्यस्याप्यधिकारापाताच्च। जन्मारभ्य जीवन्मुक्तस्योक्तनिषेधाविषयत्वापाताच्च। अत एव न द्वितीयः। संयोगस्यात्मविभुत्वपक्षे सर्वदेहेषु स्वस्वामिभावस्य च भृत्यदेहे सत्त्वेऽपि इच्छानुविधायित्वस्य चात्या-तुरादिदेहेष्वसत्त्वेऽपि साक्षात्स्वस्वामिभावस्य वा, तदिन्द्रियाश्रयत्वस्य वा, साक्षात्तत्प्रयत्नजन्यक्रियाश्रयत्वस्य वा, तद्भोगायतनत्वस्य वा, तत्कर्मार्जितत्वस्य वा

सम्बन्धान्तरस्य सम्भवात्। न च प्रयत्नादावप्यात्मैक्यभ्रम एव सम्बन्धः, अहं कृतिरित्यप्रतीतेः। आत्मसमवायस्यात्मायुतसिद्धेर्वा सम्बन्धान्तरस्य सत्त्वाच्च। न चानतिप्रसंगाय स्वस्वामिभावादिरैक्याध्यासरूपमूलसम्बन्धाधीनः, वैपरीत्यस्यापि सुवचत्वात्, तत्कर्मार्जितत्वस्यैव मूलसम्बन्धत्वाच्च। कर्मणां तदीयत्वं चानादि-पूर्वपूर्वतदीयकर्माधीनं वा, तदाश्रितप्रयत्नजन्यत्वाधीनं वा। न तु तदीयशरीर-जन्यत्वाधीनमिति नान्योन्याश्रयः। पुत्रकामेष्टिकर्मापि न पुत्रशरीरार्जकम्। किं तु ग्रामकामेष्टिवत् पुत्रकर्मार्जितस्य तस्य स्वसम्बन्धमात्रार्जकम्। न तृतीयः। तस्य जडत्वादिना अनियोज्यत्वाद्, देहविशेषयुक्त एव ब्राह्मणशब्दप्रयोगेण देहस्यातदर्थत्वाच्च। अनेन 'सर्वाण्यपि विधिनिषेधशास्त्राण्यध्यासमूलानी'ति परभाष्यं निरस्तम्।

नापि प्रमातृत्वाद्यन्यथानुपपत्त्याध्याससिद्धिः, तदभावेऽपि सुषुप्तावज्ञानादि-ज्ञातृत्वस्य दर्शनाद्, जागरणादावपि घटादिप्रमातृत्वदशायां तत्कर्मार्जितत्ववत् तदैक्याध्यासस्य तदाऽभावाच्च। एतेन प्रमातृत्वादिकमध्यासमूलमिति परभाष्यं निरस्तम्। चार्वाकादेस्त्वनुमानाभासादिजन्येऽपि देहात्मभ्रमे धर्माद्यभावभ्रम इव प्रत्यक्षत्वाभिमानः। संसारहेतुः देहानुकूलादौ रागादिरपि पुत्रानुकूलादाविव देहस्य प्रेमास्पदत्वात्। अंगुल्या देहं प्रदर्श्यायमहमित्युक्तिरपि अंगारं प्रदर्श्यायं वह्निरितिवत् पृथग्दर्शयितुमशक्यत्वात्। श्रुतिषु देहात्मैक्यनिषेधोऽप्यसत्कारणत्वनिषेधवत् कुवादि- प्राप्तत्वाद्, व्यवहारपर्यन्तं स्फुटतरभेदज्ञानाभावाच्च। दृश्यन्ते हि यमलयोर्व्यावर्तकं पश्यन्तोऽपि व्यवहर्तुमशक्ताः। उक्तम् च–

व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् ।
भेदज्ञानेऽपि चांगारवह्निवत् स्वाविविक्तवत् ॥ १ ॥
भवन्ति व्यवहाराश्च न हि प्रत्यक्षगानपि ।
अर्थान् यथानुभवतः प्रतिपादयितुं क्षमाः ॥ २ ॥ इति

तस्माद् देहादेरात्मैक्येन स्वरूपेण चानध्यस्तत्वाज्जगत्सत्यमेव, न त्वनिर्वाच्यमिति।

देहात्मैक्याध्यासभंगः ॥ ५८ ॥

## अद्वैतसिद्धिः

ननु– 'अहमर्थस्यानात्मत्वे ब्राह्मणोऽहं काण' इत्यादिप्रत्यक्षं देहेन्द्रियादौ आत्मैक्याध्यासे प्रमाणं न स्याद्, ऐक्यबुद्धावात्मनोऽविषयत्वादिति– चेन्न, अहमित्यस्य द्व्यंशत्वेन चिदंशे कर्तृत्वादिविशिष्टान्तःकरणैक्याध्यासवद् ब्राह्मणत्वकाणत्वादिविशिष्टदेहेन्द्रियाद्यैक्याध्यासेनात्मैक्यविषयत्वसंभवात्। तथा चात्मनि देहेन्द्रियाद्यैक्याध्यासो युज्यत एव। नच– एवं देहात्मैक्यस्य प्रत्यक्षत्वे तद्विरोध्यनुमानागमयोरप्रामाण्यप्रसङ्गः, वह्निशैत्यानुमानवत्, श्रूयमाणार्थे 'यजमानः प्रस्तर' इत्यागमवच्च। तथाच न देहात्मनोर्भेदसिद्धिः स्यादिति– वाच्यम्, चन्द्रपरिमाणप्रत्यक्षविरोध्यनुमानागमादिदृष्टान्तेन प्रत्यक्षविरोधिनः परीक्षितागमानुमानादेः प्रामाण्यस्य व्यवस्थापितत्वेन तथापि तयोर्भेदसिद्धिसंभवात्। न च– परस्परभिन्नत्वेन निश्चितानां देहेन्द्रियादीनां युगपदेकात्मैक्याध्यासायोगः, न हि भिन्नत्वेन निश्चितयो रजतरङ्गयोरेकदैकशुक्तिकायामैक्याध्यास इति– वाच्यम्, 'देहादिन्द्रियमन्यद्, इन्द्रियाद् देहोऽन्य' इति भेदबुद्ध्या 'देहोऽहमिन्द्रियमित्यैक्याध्यासासंभवेऽपि ब्राह्मणादन्य काणः काणादन्यः ब्राह्मण इति भेदबुद्ध्यभावेन ब्राह्मणोऽहं काण इत्येकदा ऐक्याध्याससंभवात्, समानप्रकारकभेदधिय एव विरोधित्वात्।

ननु– भेदमात्रस्याप्यध्यस्तत्ववादिनस्तव देहात्मनोर्भेदस्याप्यध्यस्तत्वेन जीवब्रह्मणोरिव तदभेदस्तात्त्विकः स्यात्। मिथ्यात्वं हि अधिष्ठानज्ञानाबाध्यात्यन्ताभावप्रतियोगित्वम्। तद्बाध्यात्यन्ताभावप्रतियोगत्वस्य सत्त्वेऽपि असंभवात्। अभेदश्च भेदात्यन्ताभाव इति कथं भेदमिथ्यात्वे अभेदः सत्यो न स्यात्? न च– देहस्याप्यध्यस्तत्वेन तेन सहात्मनो न भेदो नाप्यभेद इति– वाच्यम्, अध्यस्तादपि रूप्याच्छुक्तेः स्वज्ञानाबाध्यभेददर्शनादिति– चेन्न, भेदस्य मिथ्यात्वेऽपि अभेदो न तात्त्विकः, भावाभावयोरुभयोरपि मिथ्यात्वस्य प्रागेवोपपादितत्वात्। इयांस्तु विशेषः– यदत्राभेदो व्यवहारकालीनेन परीक्षितप्रमाणभावेनानुमानादिना बाध्यते, भेदस्तु देहात्मनोर्न तेन, किंतु चरमवृत्त्येति। न च– एवं गेहीतिवद् 'देही'ति प्रतीति'र्न स्यात्, किंतु देहोऽहमिति– वाच्यम्, देहत्वेन भेदग्रहाद् ब्राह्मणत्वादिना भेदाग्रहाच्च ब्राह्मणोऽहं देह्यहमित्युभयप्रतीत्युपपत्तेः। देवदत्ताद् यज्ञदत्तोऽन्य इति भेदबुद्धावपि तत्त्वेनोपस्थिताद् देवदत्ताद्यज्ञदत्ते 'सोऽय'मित्यभेदभ्रमदर्शनात्।

ननु– ब्राह्मणोऽहं मनुष्योऽहमिति कथमध्यासरूपम्? मनुष्यत्वब्राह्मणत्वादेः शरीरविशिष्टात्मवृत्तित्वेन प्रमात्वस्यैव संभवात्। तदुक्तम्–

(अद्वैतसिद्धिः)

ब्राह्मणोऽहं मनुष्योऽहमित्यादिस्तु प्रमैव नः ।
देहभेदयुतो यस्माद् ब्राह्मणादिपदोदितः ॥

इति– चेन्न, मनुष्यत्वादेर्देहविशिष्टात्मवृत्तित्वे चक्षुरादिगम्यत्वं न स्याद्, देहविशिष्टात्मनश्चक्षुरगम्यत्वात्। न च – एकदेशस्य चक्षुर्गम्यत्वाद् विशिष्टगतजातिः चक्षुषा गृह्यत ति– वाच्यम्, व्यासज्यवृत्तेरुभययोग्यतायामेव योग्यत्वनियमात्। अन्यथा न्द्रियकानैन्द्रियकवृत्तिसंयोगद्वित्वादेः प्रत्यक्षता स्यात्। व्यासज्यवृत्तित्वस्य जातावदृष्टचरत्वात् पृथिवीत्वादिना संकरापत्तेः, तव मते आत्मनोऽणुत्वेन तद्वृत्तित्वेऽतीन्द्रियत्वप्रसङ्गात्। न चैवं 'देहो ब्राह्मणो मनुष्य' इत्यादिप्रतीत्यापत्तिः, अहंत्वसामानाधिकरण्यभ्रमजनकदोषस्यैव तादृक्प्रतीतिप्रतिबन्धकत्वात्। उक्तबाधकैर्देहवृत्तित्वे अनन्यगतिकत्वेन तथा कल्पनात्, 'कृशोऽहं स्थूलोऽह'मित्यादौ कार्श्यादिविशिष्टैक्याध्यासस्यावश्यकत्वाच्च। न च– अयमौपचारिकप्रयोगः पुत्रे कृशे अहं कृश इतिवत्, तदुक्तं–

कृशोऽहं कृष्ण इत्यादौ कार्श्यादिर्देहसंस्थितः ।
पुत्रादिस्थितकार्श्यादिवदात्मन्युपचर्यते ॥

इति– वाच्यम्, एवं सति देहादिभिन्नात्मास्तित्वप्रतिपादिकाया 'अस्तीत्येवोपलब्धव्य' इति श्रुतेरनुवादकतापत्तेः, मम देह इत्यनौपचारिकः, अहं गौर इत्याद्यौपचारिक इत्यत्र विनिगमकाभावाच्च।

ननु– इदं विनिगमकम्, जातमात्रस्य पश्वादेः प्रवृत्त्यादिहेतो रिष्टसाधनताद्यनुमितेर्हेतुर्यत्स्तन्यपानम्, तदिष्टसाधनम्, यथा पूर्वदेहीयं स्तन्यपानमित्यादि व्याप्तिस्मृतिस्तावन्न देहान्तरास्मृतौ युक्ता। न च 'मम प्राक् देहान्तरमभूदि'ति स्मरतस्तस्यैक्यधीः सम्भवति। किंत्वनेकमण्यनुस्यूतसूत्रमिवानेकदेहेष्वनुस्यूतमात्मानं पश्यतः स्वतो भेदधीरत्रेति– चेन्न; पूर्वदेहस्मृतिं विनापि अनुमितिहेतुव्याप्तिस्मृतेः संभवात्। न हि व्याप्त्यनुभव इव व्याप्तिस्मरणसमयेऽपि दृष्टान्तज्ञानापेक्षा, येन तदर्थं तद्देहस्मृतिरपेक्ष्येत।

न च– तथापि 'योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थाविरे प्रणप्तॄननुभवामि, योऽहं स्वप्ने व्याघ्रदेहः, सोऽहमिदानीं मनुष्यदेह इति देहभेदधीपूर्वकं स्वस्यैक्यमनुसन्दधानः

(अद्वैतसिद्धिः)

कथं ततो भेदं न जानीयादिति– वाच्यम्; विरुद्धधर्मरूपलिङ्गधीजन्यभेदधीसंभवेऽपि अपरोक्षाभेदभ्रमे अविरोधात्। न च– प्रत्यक्षे धर्मिणि भेदकसाक्षात्कारो भेदसाक्षात्कारव्याप्तः, इह च व्यावृत्तत्वेन बुद्धिस्थदेहादितो भेदकस्यानुवृत्तत्वस्यात्मनि प्रत्यभिज्ञाप्रत्यक्षसिद्धत्वाद् व्यावर्तकसाक्षात्कारस्यैवैक्यापरोक्षभ्रमविरोधित्वात् निरुपाधिकत्वेन विशेषदर्शनाप्रतिबध्यत्वस्य वक्तुमशक्यत्वात् कथमैक्यभ्रम इति– वाच्यम्, भेदकसाक्षात्कारस्य भेदसाक्षात्कारेण व्याप्तेरैक्यारोपेण सह विरोधस्य चासिद्धेः। नीला बलाकेत्यत्र नीलाद् भेदकस्य बलाकात्वस्य ग्रहेऽपि नीलभेदसाक्षात्काराभावस्य तदभेदसाक्षात्कारस्य च दर्शनात्। न च तत्र दोषप्राबल्यात् तथा, प्रकृतेऽपि दोषप्राबल्यान्नेति केन तुभ्यमभ्यधायि?

एवं 'ब्राह्मणो यजेते'त्यादिश्रुतिरपि ब्राह्मणत्वाश्रयशरीरस्य जडत्वेनानियोज्यतया तदैक्याध्यासापन्नमात्मानं नियुञ्जाना तत्र प्रमाणम्। न च ब्राह्मणत्वाश्रयदेहेन संबन्धान्तरमादायैव नियोज्यत्वोपपत्तिः, तस्यानतिप्रसक्तस्य वक्तुमशक्यत्वात्। तथा हि– न तावत्संयोगः, आत्मनो विभुत्वेन सर्वदेहसाधारण्यात्। नापि स्वस्वामिभावः संबन्धः, पश्वादिसाधारणत्वात्। नापि साक्षात् स्वस्वामिभावः संबन्धः, पश्वादिव्यावृत्तस्य देहादिगतस्वस्वामिभावे साक्षात्त्वस्य वक्तुमशक्यत्वात्। नापीच्छानुविधायित्वम्, आमवातजडीकृते तदभावात्। नापि तदिन्द्रियाश्रयत्वम्, तद्धि तत्संबद्धेन्द्रियाश्रयत्वं वा? तज्ज्ञानजनकेन्द्रियाश्रयत्वं वा? नाद्यः, अतिप्रसङ्गात्। न द्वितीयः, ज्ञानपदेन स्वरूपचैतन्योक्तावसंभवः, अन्तःकरणवृत्त्युक्तौ तेनापि संबन्धार्थमध्यासस्यावश्यकत्वात्। तद्वरं देहस्यैवाध्यासिकः संबन्ध इत्युच्यताम्। अत एव– साक्षात् प्रयत्नजन्यक्रियाश्रयत्वं वा, तद्भोगायतनत्वं वा, तत्कर्मार्जितत्वं वा संबन्ध इति– निरस्तम्, तत्कर्मार्जितत्वस्य पुत्रादिसाधारणत्वाच्च। न च– तत्रादृष्टेन स्वत्वमेवोत्पाद्यते, न तु पुत्रादिरिति– वाच्यम्, ग्रामादिवत् पुत्रस्य सिद्धत्वाभावेन स्वत्वोत्पादनार्थमपि तदुत्पादनस्यावश्यकत्वात्। अन्यथा स्वदेहसुखादिष्वप्यस्यादृष्टेन स्वत्वमेवोत्पाद्यते, न तु स्वदेहादिरित्यपि स्यात्। तथा च पूर्वानुत्पन्नमदृष्टेन स्वत्वसहितमेवोत्पाद्यते। पूर्वोत्पन्ने तु स्वत्वमात्रमिति विभागः।

एतेन – श्रुतिस्थं ब्राह्मणपदं किं लक्षणया देहविशेषैक्याध्यासवत्परम्? देहविशेषसंबन्धपरं वा? संबन्धस्तु अन्यस्याभावादैक्याध्यास एव। यद्वा देहविशेषपरम्? आत्मा तदैक्याध्यासात्प्रवर्तत इति। नाद्यः, विधौ लक्षणाया अयोगात्, पुत्रमित्रादिषु विकलेषु

(अद्वैतसिद्धिः)

सकलेषु वा अहमेव विकलः सकलो वेति अध्यासस्वीकारेण ब्राह्मणमित्रस्य शूद्रस्याधिकारप्रसङ्गात्, शूद्रमित्रस्य ब्राह्मणस्यानधिकारप्रसङ्गाच्च। न द्वितीयः, तदिन्द्रियाश्रयत्वादेः संबन्धान्तरस्यैव संभवात्। न तृतीयः, तस्य जडत्वेन नियोज्यत्वासंभवादिति – निरस्तम्, चरमपक्षे दूषणमनुक्तोपालम्भनम्, प्रथमद्वितीयपक्षयोरेव क्षोदसहत्वेनाङ्गीकारविषयत्वाद्, विधौ लक्षणायाः 'गोभिः श्रीणीत मत्सर'मित्यादौ दर्शनात् स्वीयत्वाद्यप्रतिसन्धाननिबन्धनस्य पुत्रमित्रादिव्यावृत्तस्यैव सर्वानुभवसाक्षिकस्याध्यासस्य प्रयोजकतया नोक्तस्थले अतिप्रसङ्गाप्रसङ्गौ। कादाचित्कस्य तादृशाध्यासस्यैव ब्राह्मणपदप्रयोगनिमित्तत्वेन ब्राह्मणो न हन्तव्य इत्यादेः सुषुप्तविषयत्वादिकमपि संगच्छते। तथा जीवन्मुक्तविषयत्वमपि। तस्यावरणशक्तिनिबन्धनाध्यासाभावेऽपि विक्षेपशक्ति-निबन्धनाध्याससंभवात्। न चैवं कदाचिदध्यासस्य प्रयोजकत्वे महापातकेन नष्टब्राह्मण्य-स्याप्यधिकारप्रसङ्गः, तत्र महापातकस्यैवानधिकारप्रयोजकत्वम्, न तु ब्राह्मण्याभावस्य, 'पतितो ब्राह्मण'इति व्यवहारेण तदभावस्यैवाभावात्। तथा चोक्तं भाष्ये– 'सर्वाणि विधिनिषेधशास्त्राण्यध्यासमूलानी'ति।

प्रमातृत्वाद्यन्यथानुपपत्तिरप्यध्यासे मानम्। कदाचिदध्यासस्यैव प्रयोजकत्वेन सुषुप्तौ तदभावेऽपि ज्ञातृत्वस्य घटादिप्रमाकाले तदभावेऽपि प्रमातृत्वस्य दर्शनात् कथमैक्याध्यासः तत्र प्रयोजक इति निरस्तम्। तदुक्तं भाष्ये– प्रमातृत्वादिकमध्यासमूलमिति। अत एव चार्वाकादीनामनभिसंहितप्रबलागमानुमानादीनां देह एवात्मेति प्रवादः। अन्यथा प्रत्यक्षप्रामाण्यवादिनस्तस्य तादृशव्यवहारानुपपत्तेः। न च– चार्वाकादेरनुमानाभासाज्जाते देहात्मैक्यभ्रमे प्रत्यक्षत्वाभिमान इति– वाच्यम्, प्रत्यक्षेण भेदे गृहीते अनुमाना-भासादिनाऽभेदस्य बोधयितुमशक्यत्वात्। तथा च प्रत्यक्ष एवायमैक्यभ्रमः। अत एवाङ्गुल्या देहं प्रदर्श्य वदत्ययमहमिति। अत एव देहात्मैक्यनिषेधकश्रुतिरप्युपपद्यते, अन्यथा तस्याप्रसक्तप्रतिषेधकतापत्तेः। न च कुसमयप्राप्तनिषेधिका सा, प्रत्यक्षविरुद्धकुसमयस्या-प्यनवकाशात्। तस्मादाभीरसाधारणाद् 'अहं गौर' इत्यादिप्रत्ययादात्मन्यन्तःकरणैक्याध्यासाद् देहतद्धर्माध्यासोऽपीति सिद्धम्।

इत्यद्वैतसिद्धौ देहात्मैक्याध्यासोपपत्तिः॥

## न्यायामृततरङ्गिणी

अहमर्थस्यानात्मत्वे अहं काण इत्यादिप्रत्यक्षमात्मनींद्रियाद्यैक्याध्यासे प्रमाणमिति भवदुक्तमयुक्तं स्यादित्यभिसंधायैक्याध्यासं प्रस्तौति ॥ यच्चोच्यत इत्यादिना ॥ ॥ ब्राह्मण इति ॥ ब्राह्मण्याद्याश्रयशरीरस्य जडत्वेनानियोज्यतया तदैक्याध्यासवंतमात्मानं नियुंजाना श्रुतिरित्यर्थः ॥ त्वन्मत इति ॥ नन्वहमर्थस्य ध्वंशत्वेन कर्तृत्वविशिष्टांतःकरणस्येव काणत्वविशिष्टेंद्रिया-देरप्यात्मन्यध्यासो भविष्यतीति चेन्न। चित्काणेति कदाप्यप्रतीत्याऽहमर्थ एव तदारोपस्य वक्तव्यत्वात्तस्य चानात्मत्वात् ॥ देहेति ॥ ननु चंद्रपरिमाणप्रत्यक्षस्येव देहात्मैक्यप्रत्यक्षस्यापि परीक्षितानुमानादि बाधकं स्यादिति शंकामपाकर्तुमुक्तमुक्तत्वेनेति। चंद्रपरिमाणप्रत्यक्षस्य दूरादिदोषेण स्वार्थनिश्चयपराङ्मुखस्य युक्तोन्येन बाधः। इह तु न तथेति वैषम्यं ॥ परस्परमिति ॥ भिन्नत्वेन निश्चितयोर्वंगरजतयोरेकदैकशुक्तिकायामारोपादर्शनादित्यर्थः। ननु देहादिंद्रिय-मन्यदिंद्रियाद्देहोन्य इति भेदबुद्ध्या देहोहमिंद्रियमित्यैक्याध्यासासंभवेपि ब्राह्मणात्काणोऽन्यः काणाद्ब्रह्मणोऽन्य इति भेदबुद्ध्यभावेन ब्राह्मणोहं काण इत्येकदैक्याध्याससंभव इति चेन्न। ब्राह्मणस्याक्षि काणमिति काणब्राह्मणभेदस्यापि प्रत्यक्षत्वात्। येनांगविकार इति सूत्रे तथोदाहृतत्वाच्च ॥ त्वन्मत इति ॥ भेदमात्रस्याध्यस्तत्ववादिन इत्यर्थः। ननु भेदस्या-ध्यस्तत्वेप्यभेदोप्यध्यस्तोस्तु। उभयोरपि दृश्यत्वेन मिथ्यात्वात्। इयांस्तु विशेषः। यदत्राभेदो व्यवहारकालीनेन परीक्षितप्रमाणभावेनानुमानादिना बाध्यते भेदस्तु देहात्मनोर्न तेन। किं तु चरमवृत्त्येतीत्यत आह ॥ मिथ्यात्वं हीति ॥ ननु यथाकथंचिदत्यंताभावप्रतियोगित्वमेव मिथ्यात्वमस्त्वित्यत आह ॥ तद्बाध्येति ॥ अधिष्ठानज्ञानबाध्येत्यर्थः। रूपवति घटे घटज्ञानबाध्यरूपात्यंताभावसत्त्वेपि रूपस्य सत्यत्वादिति भावः। ननु भेदमिथ्यात्वसिद्ध्यर्थं भेदात्यंताभावस्याधिष्ठानज्ञानाबाध्यत्वेप्यभेदस्याध्यस्तत्वमस्त्वित्यत आह ॥ अभेदश्चेति ॥ अध्यस्तादपीति ॥ अत्यंताभाववद्भेदेपि प्रतियोगिसत्त्वनियमाभावादिति भावः। देहेंन्द्रियादीनां परस्परं भेदप्रत्ययान्न तदात्माभेदप्रत्यय इत्युक्तं। संप्रति देहात्मनोर्भेदावगमान्न तदैक्याध्यास इत्याह ॥ किं चेति ॥ ननु देहत्वेन देहात्मैक्यारोपो वा ब्राह्मणत्वादिना वा। आद्य आह ॥ अहं गेहीति ॥ द्वितीय आह ॥ ब्राह्मण इति ॥ ॥ प्रतीयते हीति ॥ देहत्वेन देहभेदस्यात्मनि प्रतीतेर्न तेन रूपेण भेदारोप इत्यर्थः। अहं ब्राह्मण इति प्रमात्वान्नायमारोप इत्यर्थः। ननु देहब्राह्मणयोः सामान्यविशेषरूपत्वमेवास्त्वित्यत आह ॥ नत्विति ॥ देही ब्राह्मण इति सामान्यविशेषरूपत्वाभावे यथा प्रमाणं नास्ति तथा देहो ब्राह्मण इति सामान्यविशेषरूपत्वे प्रमाणं नास्तीत्यर्थः। ननु ब्राह्मणत्वादेर्देहविशेपविशिष्टात्मवृत्तित्वे तस्य चाक्षुषत्वं न स्यात्।

(तरङ्गिणी)

देहविशिष्टात्मनोऽचाक्षुषत्वात्। न चैकदेशस्य चाक्षुषत्वाद्विशिष्टगतधर्मस्य चाक्षुषत्वमिति वाच्यं। विशिष्टवृत्तेरुभययोग्यतायामेव योग्यत्वनियमादिति चेन्न। अतींद्रियनानापदार्थघटितव्याप्त्यादेरिव ब्राह्मणत्वादेरपि चाक्षुषत्वोपपत्तेः। न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वेति श्रुत्या ब्राह्मणत्वस्य दुर्ज्ञानत्वोक्त्या सहकार्यं तरसहकृतचक्षुर्ग्राह्यत्वोक्तेश्च। अत एव पुरुषे दृष्टे तद्ब्राह्मणत्वे संदिह्यते। मनुष्यत्वमपि आत्मनि गृहीत एव गृह्यते। चंचाद्याकारज्ञानेपि मनुष्यत्वादि संदेहात्। तस्मादात्मा- द्युपनयध्रौव्याद्ब्राह्मणत्वादिकमपि चाक्षुषमेव। तदुक्तं वार्तिके। न हि यद्गिरिशिखरमारुह्यते तन्न गृह्यत एवेति ॥धर्मैक्येति॥ धर्मिभेदस्य प्रत्यक्षसिद्धत्वादित्यर्थः ॥तद्वदिति॥ रक्तः स्फटिको रक्तं कुसुममिति प्रतीतिवदित्यर्थः। एकत्र मुख्यत्वेन क्लृप्तस्यैव मुख्यत्वं, गौणत्वेन क्लृप्तस्य गौणत्वं कल्पयितुं न्याय्यमित्याह ॥ मम देह इत्यादि॥ देहात्मभेदग्रहस्य पश्वादिसाधारणत्वान्न तस्य गौणत्वमित्याह ॥तथेति॥ तदुक्तमिति॥ तृतीयाध्यायेऽनुव्याख्यान इति शेषः। जातमात्राः न तु व्यापारांतरं कृतवंतः। अस्मिन् जन्मनि व्याप्त्यनुसंधानरहिता इत्यर्थः ॥व्याप्तिस्मृतिरिति॥ ननु न व्याप्त्यनुभव इव तत्स्मृतावपि दृष्टांतज्ञानापेक्षा। येनैतदर्थं तद्देहस्मृतिरपेक्ष्येतेति चेन्न। न हि व्याप्तिस्मृतिं प्रति सहचारज्ञान- कारणत्वानुरोधेनाधिकरणग्रहणापेक्षां ब्रूमः। किं तु सामानाधिकरण्यादिगर्भव्याप्तिज्ञानस्य साध्याधिकरणविषयत्वनियमम्। तदिदमुक्तम् ॥इत्यादीति॥ उक्तसाध्यसाधनं सामानाधि- करण्यरूपव्याप्तेरित्यर्थः ॥इह चेति॥ तथा चात्मनि देहभेदोपि प्रत्यक्ष सिद्ध इत्यर्थः ॥व्यावर्तकेति॥ भेदसाक्षात्काराभावेपीत्यर्थः। ननु नीला बलाकेत्यत्र नीलाच्छेदकस्य बलाकात्वस्य ग्रहेपि नीलभेदसाक्षात्काराभावस्य तदैक्यारोपभ्रमस्य च दर्शनादुक्तनियमायसिद्धमिति चेत् केन कालिकव्याप्त्या प्रतारितो भवान्। बलाकायामपि नीलभेदसाक्षात्कारस्य सत्त्वान्न दैशिकनियमासिद्धिः। निशि दोषवशात्तु नीलाभेदप्रत्ययः। नन्विह सर्वदा दोषप्राबल्याद्देहा- त्मैक्यारोप इति चेन्न। भेदकधर्मसाक्षात्कारे सति प्रत्यक्षे च धर्मिणि दोषप्राबल्यात्सर्वदाऽभेदारोप इत्यस्यासिद्धेः। ननु सदातनोपाधिकेऽभेदभ्रमे तथापि व्यभिचार इत्यत आह ॥न चायमिति॥ उपाधिविरहे सतीत्यस्यापि विशेषणान्न व्यभिचार इति भावः। सदातनोपाधौ मानाभावोपि बोध्यः। क्षीरादेरपि नीरविवेकदर्शनात् ॥तत्र किमिति॥ लक्षणया ब्राह्मणशब्दार्थ इति संबंधः ॥विधाविति॥ मुख्यार्थेनैवोपपत्तेः। एतेन गोभिः श्रीणीत मत्सरमिति वेदांतकौमुद्युक्तिप्रतिध्वनिर्निरस्तः। गोभिर्गोविकारैः पयोभिः मत्सरं सोमं श्रीणीत संस्कुरुतेति मंत्रस्य पयसा श्रीणातीति विहितश्रयणानुवदित्वेन तदविधायकत्वाच्च ॥महापातकेनेति॥ न च तत्र महापातकस्यैवानधिकारप्रयोजकत्वमिति वाच्यं। तस्यापि ब्राह्मण्याभावसंपादनद्वारैव

(तरङ्गिणी)

तथात्वात्। द्वयोरपि तथात्वे गौरवात् ॥ तदिंद्रियेति॥ तज्ज्ञानजनकेंद्रियेत्यर्थः। ननु पितृकृतपुत्रेष्टिजन्यपुत्रशरीरस्य पितृशरीरत्वापत्तिरित्यत आह ॥ पुत्रकामेष्टीति॥ ननु ग्रामादेः स्वतः सिद्धत्वेन तत्स्वामित्वमात्रमुत्पद्यतां। पुत्रशरीरस्य स्वतोऽसिद्धत्वात्तत्स्वामित्वार्थमपि तदुत्पत्तेरावश्यकत्वं। अन्यथा स्वदेहसुखादिष्वपि स्वादृष्टेन स्वत्वमेवोत्पद्येतेति चेन्मैवं। पुत्रशरीरादेः पुत्रादृष्टासाधारणकार्यत्वेन तत्र पित्रदृष्टस्याहेतुत्वात्। स्वशरीरादेस्त्वदृष्टांतरासाध्यत्वेन तत्र स्वादृष्टस्य हेतुत्वात्। स्वस्मिन्नसत्यपि पुत्रशरीरादिना पुत्रादेर्भोगदर्शनाच्च। स्वशरीरे तु न तथेति वैषम्यात् ॥ देहविशेषेति॥ ब्राह्मणो यजेतेत्यादित एव देहविशेषविशिष्टो ब्राह्मणशब्दार्थ इत्यवगम्यत इत्यर्थः ॥ एतेनेति॥ अध्यासं विनैवोपपत्त्या तदसंभवेन चेत्यर्थः ॥ जागरणेति॥ जागरेपि घटादिप्रमातृत्वदशायां देहात्मैक्याध्यासो नास्तीत्यर्थः। ननु देहात्मभेदस्य प्रत्यक्षत्वे चार्वाकादेस्तदैक्यसाक्षात्कारो न स्यादित्यत आह ॥ चार्वाकादेस्त्विति॥ ॥ भ्रम इति ॥ अनुमितिरूप इत्यर्थः। ननु देहात्मभेदसाक्षात्कारे सति कथं तस्य लैंगिकमपि तदभेदज्ञानमिति चेत् सन् घट इति सत्यत्वे प्रत्यक्षेपि यथा तव दृश्यत्वादिना मिथ्यात्वधीस्तथेति गृहाण। न च चार्वाकस्यानुमानममानमिति वाच्यम्। तन्मतेऽनादिसंभावनाया एवानुमानस्थानापन्नत्वात् ॥ संसारहेतुरिति॥ प्रेमास्पदत्वमपि स्वस्य भोगायतनत्वादिना। न तु प्रेमास्पदात्मैक्यारोपादिति भावः ॥ अंगुल्येति ॥ चित्रलिखितस्य प्रतिमादावय- महमितिवदुपचारादित्यर्थः। ननु देहात्मभेदस्य प्रत्यक्षत्वे तदभेदं व्युदस्य तद्भेदप्रतिपादिकाया अस्तीत्येवोपलब्धव्य इत्यादि श्रुतेरनुवादकत्वप्रसंग इत्यत आह ॥ श्रुतिष्विति॥ विजातीयज्ञानहेतुत्वात् श्रुतिर्नानुवाद इत्याह ॥ व्यवहारेति॥ उक्तंचेति॥ तृतीयाध्यायेनुव्याख्याने। ननु ज्ञानमेव व्यवहारकारणं चेदस्ति कथं तर्हि व्यावहारेष्वपाटवमत आह ॥ न हीति॥ यथानुभवतः अनुभवानुसारेण। यमलयोर्भेदं पश्यंतोपि मात्रादयः कथमेतौ भिन्नाववगंतव्याविति पृष्टा एवमिति स्वप्रत्यक्षानुसारेण न परान् प्रति प्रतिपादयितुं क्षमंत इत्यनुभवसिद्धमित्यर्थः। क्वचित्तु अर्थाननुभवंतोपीति पाठः। स सुधाविरुद्धः। व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगं युजि। न्यायामृततरंगिण्यां देहातत्मैक्याप्रमाक्षतिः। देहात्मैक्याध्यासभंगः ॥

## न्यायामृतकण्टकोद्धारः

ननु यदि बुद्ध्यैक्यतद्धर्माध्यासौ आत्मनि नांगीक्रियेते तर्हि देहैक्यतद्धर्माध्यासोऽपि न स्यात् समानन्यायत्वात्। तथाच प्रत्यक्षादिविरोधः स्यात्। तस्मात् अन्तःकरणैक्यतद्धर्माध्यासोऽप्यस्वीकर्तव्य इत्यतो

(कण्टकोद्धारः)

दृष्टान्त एवासिद्ध इति वक्तुमनुवदति ॥ यच्चोच्यत इति ॥ अत्र चाहं ब्राह्मण इत्यादि सामानाधिकरण्यादैक्यसिद्धिः। सामानाधिकरण्यप्रत्ययस्य सोऽयमित्यादिवदैक्यविषयत्वादिति भावः ॥ देहैक्याध्यासाभाव इति ॥ यदभावे नियमेन यददर्शनं तत्तत्कारणकमिति व्याप्तिः। यथा दिवाऽभुञ्जानस्य पीनत्वं रात्रिभोजनेन विना न प्रतीयते इति रात्रिभोजनकारणकत्वं पीनत्वस्य तद्वदिति भावः। ॥ त्वन्मत इति ॥ नन्वहमर्थस्यानात्मत्वेऽपि तस्य द्व्यंशत्वेन चिदंशे कर्तृत्वविशिष्टान्तःकरणैक्याध्यासवत् ब्राह्मणत्वकाणत्वविशिष्टदेहेन्द्रियाद्यैक्याध्यासेनात्मविषयत्वसंभवादिति चेन्न। अहमर्थस्य द्व्यंशतायाः प्रागेव निरस्तत्वात्। दृष्टान्तस्यासिद्धेश्च। न ह्यसिद्धेनासिद्धसाधनं युज्यते। स्वरूपासिद्धताया अदोषत्वप्रसंगात् ॥ देहात्मैक्यस्येति ॥ प्रत्यक्षविरुद्धेऽर्थेऽनुमानादिकमप्रमाणं वह्निशैत्यानुमानवदिति मिथ्यात्वानुमानस्य प्रत्यक्षबाधप्रतिपादनावसर उक्तत्वादित्यर्थः। न च चन्द्रमण्डलपरिमाणप्रत्यक्षविरोध्यनुमानादिदृष्टान्तेनानुमानादेः प्रामाण्यं प्रतिपादितमिति वाच्यम्। चन्द्रमण्डलपरिमाणादिविषयप्रत्यक्षस्य स्वयं बाधितप्रायस्यैव विपरीतसंस्कारादिनोत्पन्नत्वेन तत्प्रत्ययस्याकिञ्चित्करत्वादिति तत्रैवोक्तत्वात्। प्रकृतन्तु न तादृशमिति भावः ॥ परस्परमिति ॥ न हि भिन्नत्वेन निश्चितयो रंगरजतयोरेकदैव शुक्त्यैक्याध्यास इति भावः। न च येन रूपेण भेदनिश्चयस्तेन रूपेणैक्याध्यासो मास्तु। येन रूपेण तु न तन्निश्चयः तेन रूपेणैक्याध्यासो भविष्यति। तदिह देहादिन्द्रियमन्यदिति भेदनिश्चयात् देहोऽहमिन्द्रियमित्यध्यासाभावेपि ब्राह्मणात् काणोऽन्य इति भेदनिश्चयाभावेन ब्राह्मणोहं काण इत्यध्यासो भविष्यतीति वाच्यम्। देहत्वेन्द्रियत्वपुरस्कारेण भेदनिश्चये तद्विशेषब्राह्मणत्वपुरस्कारेणापि भेदस्यावश्यकत्वात्। अन्यथा घटत्वेन भेदनिश्चये नीलघटत्वेनैक्याध्यासापत्तेः। न च नीलघटत्वं घटत्वघटितम्। ब्राह्मणत्वं तु न देहत्वघटितमिति वाच्यम्। तथापि विशिष्टाविशिष्टयो र्भेदस्यावश्यकत्वेन नीलघटत्वघटत्वयोर्भेदात् नीलघटत्वं घटत्वव्याप्यमिति तेन रूपेण भेदनिश्चये न नीलघटत्वेनैक्याध्यास इति यदि तदेतत् प्रकृतेऽपि तुल्यम्। ब्राह्मणत्वस्यापि देहत्वव्याप्यत्वात्। ब्राह्मणस्येन्द्रियं काणं न ब्राह्मण इति तेनापि रूपेण भेदप्रत्ययाच्च ॥ त्वन्मत इति ॥ भेदमात्रस्याध्यस्तत्वांगीकारादिति भावः। ननु भेदस्याध्यस्तत्वं कथम्। अभेदाध्यासविरोधियत्किञ्चिदध्यासस्य यत्किञ्चिदध्यासविरोधादर्शनात् इत्यत आह ॥ मिथ्यात्वं हीति ॥ अभेदस्य भेदाभावरूपत्वेन तदध्यस्तत्वं तदध्यासविरोध्येवेति भावः। न च भावाभावयोरपि स्वप्नेऽध्यासो दृश्यते इति वाच्यम्। अभावपदेनात्यन्ताभावस्य विवक्षितत्वात्। स्वप्ने चात्यन्ताभावस्य सत्यत्वादिति सर्वं चैतत् पुरैवोपपादितमित्यलम्। अध्यस्तादपीत्युपलक्षणम्। देहस्य स्वरूपेणाध्यासासिद्धेरित्यपि द्रष्टव्यम्। किञ्चात्मनि देहैक्याध्यासः किं देहोऽहमिति प्रत्ययबलात् ब्राह्मणोऽहं मनुष्योऽहमिति प्रत्ययाद्वा कृशोऽहमिति प्रत्ययाद्वा? नाद्यः। तादृशप्रत्ययाभावादित्याह ॥ किञ्चेति ॥ न द्वितीय इत्याह ॥ ब्राह्मणोऽहमिति ॥ न तृतीय इत्याह ॥ कृशोऽहमिति ॥ ब्राह्मणोऽहमित्यादेः प्रमात्वमुपपादयति ॥ अहं ब्राह्मण इति ॥ नन्वेतावता ब्राह्मणत्वादिकं न देहमात्रवृत्ति। किन्तु देहविशिष्टात्मवृत्ति इत्युक्तं स्यात्। न च तद्युज्यते। किन्तु देहविशिष्टात्मवृत्ति इत्युक्तं स्यात्। न च तद्युज्यते। तथात्वे तस्य चाक्षुषत्वानुपपत्तेः। आत्मनोऽचाक्षुषत्वेन तद्वृत्तिजातेश्चाक्षुषत्वायोगात्। न चैकदेशचाक्षुषत्वेन विशिष्टवृत्तिधर्मस्य चाक्षुषत्वम्। द्वित्वसंयोगादेरपि तथात्वापत्तेः जातेर्व्यासज्यवृत्तित्वानभ्युपगमाच्चेति चेन्न। किमहं ब्राह्मण इति प्रत्यये ब्राह्मणत्वस्य चाक्षुषत्वाभाव

(कण्टकोद्धारः)

आपाद्यते ? देहोब्राह्मण इति प्रत्यये वा ? नाद्यः। अहं ब्राह्मण इति प्रत्ययस्य आत्मविशेष्यकस्य चाक्षुषत्वाभावात् साक्षिरूपत्वस्य मानसरूपत्वस्य वोचितत्वात्। अत एवांधकारेऽपि अहं ब्राह्मणोऽहं मनुष्य इति प्रतीतिः। अन्यथा चाक्षुषप्रत्ययस्यालोकसापेक्षतयांऽधकारे तादृशप्रत्ययाभावप्रसंगात्। न द्वितीयः। तादृशप्रत्ययस्यैवासिद्धेः। न हि कदापि देहो ब्राह्मण इति प्रतीतिः। न च देहे ब्राह्मण्यमस्तीति प्रतीतिरस्त्येवेति वाच्यम्। विशिष्टनिष्ठस्य विशेषणे परम्परासंबंधेनोपनयसंभवात्। तस्मान्न ब्राह्मणत्वादि चाक्षुषम्। न चैवं शास्त्रदृष्टविरोधोदाहरणासंगतिः। तत्र ब्राह्मणत्वस्य चाक्षुषत्वाभिधानादिति वाच्यम्। दृष्टपदेन प्रत्यक्षत्वस्य विवक्षितत्वादिति। ननु कृशोहमिति देहैक्याध्यासः किं न स्यादित्यतस्तस्य सोपाधिकनिरुपाधिकत्वरूपविशेषबाधादध्यासत्वं बाधितमित्याह ॥ कृशोऽहमित्यादावपीति ॥ नान्त्य इति॥ मम देह इति भेदप्रत्ययादिति भावः। तर्हि कृशोऽहमिति व्यपदेशस्य का गतिरित्यतो भेदे भासमाने अभेदव्यपदेशस्यौपचारिकत्वमेवेष्टव्यमित्याह ॥ कृशोऽहमिति॥ नन्वभेदव्यपदेशस्य गौणत्वे भेदस्य प्रत्यक्षसिद्धत्वमावश्यकम्। सिंहो माणवक इत्यादौ तथा दर्शनात्। एवञ्च देहात्मभेदप्रतिपादिकाया अस्तीत्येवोपलब्धव्य इत्यादिश्रुतेरतत्वावेदकत्वं स्यात्। तथा च श्रुतेरप्रामाण्यमिति चेन्न। वादिविप्रतिपत्यादिनिरासकत्वेन दार्ढ्यार्थत्वेन वैयर्थ्याभावात्। तस्यास्फुटतरभेदप्रतिपादकत्वसंभवाच्च। जीवात्मभेदप्रतिपादकत्वपरत्वेन देहात्मभेदप्रतिपादकत्वासंभवाच्च ॥ अन्ययेति॥ भेदे भासमानेऽपि यद्यध्यास इत्यर्थः। ननु पुत्रकार्श्येन कृशोऽहमित्यादेरध्यासाभावे कथं दुःखावाप्तिरित्यत आह ॥ पुत्रकार्श्येनेति॥ ॥ न चेति॥ विनिगमकाभावादिति भावः ॥ ममेति॥ तथा च मुख्यत्वेन विवेकिनि क्लृप्तत्वमेव विनिगमकमिति भावः। विनिगमकान्तरमाह ॥ पश्वादीनामिति॥ एवञ्चात्मनि देहैक्यभ्रम इति श्रुतिस्मृतिलोकप्रवादस्य देहे स्वातन्त्र्यभ्रम इति तात्पर्यं द्रष्टव्यम्। ननु पश्वादीनां देहात्मभेदसाक्षात्कारांगीकारेऽपसिद्धान्त इत्यत आह ॥ तदुक्तमिति॥ ॥ व्याप्तिस्मृतिरिति॥ ननु व्याप्तिस्मरणमनुमितिकारणम्। न च देहादिस्मृतिर्व्याप्तिस्मृतिकारणम्। स्मृतौ संस्कारमात्रस्यैव कारणत्वसंभवात्। तथा च कथं पूर्वदेहस्मृतिरावश्यकीति चेन्न। व्याप्तेः पूर्वशरीर एव गृहीतत्वेन विशिष्टसंस्कारेण केवलव्याप्तिस्मरणायोगात्। न च शरीरांशे संस्कारलोपकारणं किञ्चिदस्ति। किञ्च व्याप्तेरविनाभावरूपाया वा सामानाधिकरण्यरूपाया वा हेतुसाध्याधिकरणघटितत्वात् अधिकरणीभूतशरीरास्मरणे कथं व्याप्तिस्मरणम्। व्याप्तेश्चाधिकरणघटितत्वञ्च – न हि पीनत्वं रात्रिभोजनं विनानुपपन्नमित्यनुपपत्तिज्ञानं प्रयोजकम्। किन्तु यस्य पीनत्वं तस्य रात्रिभोजनं विनेति। तथा च कथमेतादृशानुपपत्तिरूपव्याप्तिस्मरणमधिकरणं विनेति – अकामेनापि स्वीकर्तव्यम्। तथा च पूर्वदेहस्मरणमावश्यकमिति ॥ प्रत्यक्ष इति॥ गंधादिग्रहेपि तदधिकरणे भेदस्याप्रत्यक्षत्वात् प्रत्यक्ष इत्युक्तम्। उपलक्षणमेतत्। व्याप्तिज्ञानं विनापि जायमानत्वादित्यपि द्रष्टव्यम्। ननु प्रकृते भेदकसाक्षात्कारोऽसिद्ध इत्यत आह ॥ इह चेति॥ तथा च व्यावृत्तत्वानुवृत्तत्वविरुद्धधर्मयोः साक्षात्कारो नासिद्ध इति भावः। नन्वस्य सोपाधिकत्वाद्विशेषदर्शनेऽपि स्यादित्यत आह ॥ न चेति॥ सोपाधिकत्वे पीतः शंख इत्यादाविव प्रवृत्यप्रयोजकत्वं स्यादिति भावः। न च नीला बलाकेत्यादौ भेदकस्य बलाकात्वादेः साक्षात्कारेऽपि नीलभेदसाक्षात्कारादर्शनात् भेदकसाक्षात्कारो भेदसाक्षात्कारव्याप्त इत्या सिद्धमिति वाच्यम्। दोषप्राबल्येन

(कण्टकोद्धारः)

भेदकसाक्षात्कारे भेदासाक्षात्कारोपपत्तेः। दोषप्राबल्यादेव भेदकसाक्षात्कारस्याविरोधकत्वोपपत्तेश्च। न च प्रकृते तथा दोषाः। प्रत्युत मम देह इत्याद्यानुकूल्यात् दोषाभाव एवावसीयते। किञ्च दृष्टान्ते भ्रमस्य सोपाधिकत्वात् विशेषदर्शनाप्रतिबध्यत्वम्। न च प्रकृते सोपाधिकत्वमित्युक्तम्। नन्वस्तु तर्हि श्रुतिर्देहैक्याध्यासे प्रमाणमित्यत आह ॥यत्त्विति॥ ॥विधाविति॥ न च गोभिः श्रीणीत मत्सरं सोमेन यजेतेत्यत्र विधावपि लक्षणा दृष्टैवेति वाच्यम्। तत्र मुख्यार्थग्रहणे बाधकवत् प्रकृते तदभावात्। तत्र विरुद्धत्रिकद्वयापत्यादिरूप-बाधकाल्लक्षणाकल्पनम्। न चेह तथा बाधकमस्ति। देहसम्बन्धविशेषवतो ब्राह्मणशब्दार्थत्वादित्युक्तत्वात्। न च संबंधविशेषानिर्वचनम् अनिरुच्यमानत्वात्। ॥त्वयेति॥ न च स्वीयत्वाद्यप्रतिसंधाननिबंधनस्य पुत्रमित्रादिव्यावृत्तस्याध्यासविशेषस्य प्रयोजकत्वात् नायमतिप्रसंग इति वाच्यम्। संबंधविशेषेणैवोपपत्तौ तस्याध्यासरूपत्वानावश्यकत्वात्। अध्यासरूपत्वेऽप्यनुभवसाक्षिको विशेष आदरणीयः। तथाच तेनैवोपपत्तावध्यासकल्पने गौरवं स्यात्। मम देह इति देहेपि स्वीयत्वप्रतिसंधानस्यावश्यकत्वाच्च ॥आवश्यकत्वेनेति॥ एवञ्च यथा नातिप्रसंगस्तथा वक्ष्यते। ॥सुषुप्तस्येति॥ न च मुक्तस्यावरणशक्ति-निबंधनाध्यासाभावेऽपि विक्षेपशक्तिनिबंधनाध्याससंभवात् निषेधविषयत्वं स्यादिति वाच्यम्। विक्षेपशक्तिनिबंधनाध्यासस्य विधिनिषेधविषयत्वाप्रयोजकत्वात्। अन्यथा ईश्वरस्यापि तदापत्तेस्तस्यापि विक्षेपशक्तिनिबंधनाध्याससत्त्वात् ॥पातकेनेति॥ न च पतितेऽपि ब्राह्मण्यमस्त्येव। ब्राह्मण इति व्यवहारात्। अनधिकारश्च महापातकित्वादिति वाच्यम्। अधिकाराप्रयोजकाभावस्यैवानधिकारप्रयोजकत्वे संभवति महापातकित्वस्यानधिकारप्रयोजकत्वे गौरवात्। तस्य ब्राह्मण्याभावसंपादकत्वेनान्यथासिद्धेश्च। अत एव नष्टब्राह्मण इत्यादिव्यवहारः। ब्राह्मण इत्यादिव्यवहारस्तु अतीतब्राह्मण्यापेक्षया गतश्रीके सामन्तादौ राजत्वादिव्यवहारवत्। न च जातेर्नित्यत्वात् कथं नाश इति वाच्यम्। आवयोस्तदसंप्रतिपत्तेः। अत एवेति परामृष्टं हेतुमाह ॥संयोगस्येति॥ ॥आतुरदेहेष्विति॥ आमवातजडीकृतदेहेष्वित्यर्थः ॥साक्षादिति॥ न च भृत्यादिव्यावृत्तं साक्षात्त्वं दुर्निरूपमिति वाच्यम्। तस्यानुभवसाक्षिकस्य जातिरूपस्य वा शरीराद्यप्रयोज्यत्वरूपस्य वोपाधेर्वा निरूपयितुं शक्यत्वात् ॥तदिन्द्रियेति॥ न चात्र तदिन्द्रियत्वं तत्संबद्धेन्द्रियत्वं तज्ज्ञानजनकेन्द्रियत्वं वा। नाद्योऽतिप्रसंगात्। द्वितीये ज्ञानशब्देन चैतन्योक्तावसंभवः। वृत्युक्तौ तथाऽध्यासिक एव संबंधो वक्तव्य इति स एवास्त्विति वाच्यम्। वृत्या सह समवायस्य वाऽन्यस्य वा संबंधस्य सत्यस्यैव संभवात्। यथा चैतत्तथाऽकर एव वक्ष्यते। तद्भोगेत्यत्रापि साक्षात्त्वं द्रष्टव्यम्। अन्यथाऽतिप्रसंगादिति ॥न चेति॥ तथा च लाघवाद्देहादावपि स एवास्तु न तद्बाधक इति वाच्यम् इति शेषः ॥अहमिति॥ तथाच न प्रयत्नादिना ऐक्यभ्रमरूपः संबंध इति क्व लाघवावतार इति भावः। ननु तर्हि प्रयत्नादिना आत्मनः संबंधाभावात् प्रयत्नादेस्तदीयत्वं न स्यादित्यत आह ॥आत्मेति॥ प्रमाणसिद्धः संबंधो बाधकाभावात् सत्य एवेति भावः ॥वैपरीत्यस्यापीति॥ एक्याध्यासस्यातिप्रसंगभंगाय स्वस्वामिभावसंबंध एव मूलमिति भावः। नन्वेवं मूलसंबंधाभावेऽतिप्रसंगः कथं निरसनीय इत्यत आह ॥तत्कर्मेति॥ ननु कर्मणां तदीयत्वे ऐक्याध्यास एव प्रयोजक इत्यत आह ॥कर्मणामिति॥ नन्वेवमन्योन्याश्रयः। शरीरस्य तदीयत्वं तत्कर्मार्जितत्वेन, कर्मणां च तदीयत्वं तदीयशरीरजन्यत्वेनेत्यतो वाऽह ॥कर्मणामिति॥ न चैवमनवस्थेति वाच्यम्।

(कण्टकोद्धारः)

प्रामाणिकत्वेनादोषत्वादिति नानादित्वादिति सूत्रखण्डेन परिहृतत्वादिति भावः। प्रयत्नस्य च तदीयत्वे संबंधविशेषः प्रागेवोक्त इति। ननु तत्कर्मार्जितत्वं न देहेन संबंधः। तस्य पुत्रदेहेऽपि भावादित्यत आह ॥ पुत्रकामेष्टिकर्मापीति॥ ननु ग्रामस्य सिद्धत्वात् तत्र ग्रामकामेष्टेः स्वत्वसंपादनार्थत्वमस्तु। प्रकृते पुत्रस्यासिद्धत्वात् तत्संपादनार्थत्वमपि पुत्रेष्टेर्वक्तव्यम्। अन्यथा यागजन्यादृष्टमपि सुखे स्वत्वसंपादनार्थं न तु तदुत्पत्त्यर्थमित्यापत्तेरिति चेन्न। सुखस्य प्रकारान्तरेणासंभवात्। तत्र इष्टेरुभयार्थत्वम्। पुत्रशरीरस्य च पुत्रादृष्टेनापि संभवात् पुत्रकामेष्टेः स्वत्वसंपादनार्थत्वमेवेति नातिप्रसंगः। यद्वा तन्मात्रकर्मार्जितत्वं तन्मात्रकर्मार्जितत्वम्। पुत्रशरीरं तु उभयकर्मार्जितमिति नातिप्रसंगः। न चैवमसंभवः। स्वदेहस्यापि पत्न्यादिभोजकादृष्टार्जितत्वादिति वाच्यम्। असाधारण्येन वा साक्षात् स्वभोगसाधनत्वेन वा तन्मात्रकर्मार्जितत्वस्यापि विवक्षितत्वान्न कोऽपि दोषः ॥ तस्येति॥ न चास्मिन् पक्षे अनुक्तप्रतिषेध इति वाच्यम्। संभावितत्वेन प्रतिषेधोपपत्तेः। एतेन देहैक्याध्यासनिषेधेन। तथा च देहैक्याध्यासे न श्रुतिः प्रमाणमिति भावः। देहैक्याध्यासे परोक्तार्थापत्तिमपि दूषयति ॥ नापीति॥ ॥ तदभावेऽपीति॥ देहैक्याध्यासाभावेऽपीत्यर्थः। न हि यद्विना यद्भवति तत्तेन विनानुपपन्नमिति युज्यते इति भावः। न च कादाचित्कदेहैक्याध्यासस्य प्रयोजकत्वान्नोक्तदोष इति वाच्यम्। तर्हि मुक्तावपि प्रमातृत्वं स्यात्। प्रयोजकसद्भावे प्रयोज्यस्य सद्भावावश्यंभावात्। ननु देहैक्यभ्रमाभावे कथं चार्वाकादीनां देह एवात्मेति प्रवादः? न चासावनुमानाभासजन्योऽनुमित्याभास एवेति वाच्यम्। चार्वाकादीनां प्रत्यक्षैकप्रमाणवादित्वादित्यत आह ॥ चार्वाकादेस्त्विति॥ प्रत्यक्षत्वाभावेऽपि तदभिमानात् तथाभिलाप इति भावः। ननु देहैक्याध्यासाभावे कथं देहानुकूले रागादिरित्यत आह ॥ देहादाविति॥ प्रेमास्पदत्वं चासाधारणसुखहेतुत्वादिति भावः। नन्वेवमंगुल्या देहं प्रदर्श्यायमहमिति निर्देशो न स्यादित्यत आह ॥ अंगुल्येति॥ नन्वेवं श्रुतिषु देहात्मैक्यनिषेधो न स्यादप्रसक्तत्वादित्यत आह ॥ श्रुतिष्विति॥ न हि प्रत्यक्षप्रसक्तिरेव प्रसक्तिरिति भावः। न च प्रत्यक्षविरुद्धे कुसमयस्यानवसर इति वाच्यम्। आग्रहेण प्रत्यक्षविरुद्धमिथ्यात्व इव कुसमयप्रवृत्त्युपपत्तेरिति भावः। वादार्थमुपसंहरन्ननिर्वचनीयत्वं निराकर्तुमुपोद्घातरूपेणाह ॥ तस्मादिति॥ इति देहात्मैक्याध्यासभंगः।

## न्यायामृतप्रकाशः

आत्मानात्मनोरन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य सर्वे प्रमातृत्वादिव्यवहाराः प्रवर्तंते इति परभाषितमितरेतराध्यासं दूषयितुमनुवदति ॥ यच्चोच्यत इति॥ तद्धर्माः देहधर्माः ब्राह्मण्यकाणत्वाद्याः। आत्मनि देहैक्यतद्धर्मयोरध्यासे प्रत्यक्षं प्रमाणयति ॥ अहं ब्राह्मण इति॥ ब्राह्मण्यस्य देहधर्मत्वेनात्मनि तदध्यासो देहैक्याध्यासं विना न संभवतीति तदैक्याध्याससिद्धिरित्यर्थः। आत्मनींद्रियैक्यतद्धर्मयोरध्यासे प्रत्यक्षं प्रमाणयति ॥ अहं काण इति॥ अस्त्यत्र संप्रदायः। अक्षिसंबंधी यः कृष्णताराद्यसंबद्धत्वादिरूपो विकारविशेषः स काणशब्दार्थः। अयं च चक्षुर्धर्मः। अत एव ब्राह्मणस्याक्षि काणमिति प्रयोगः। तथा ''येनांगविकार'' इति सूत्रे अक्ष्णा काण इत्युदाहृत्य विकृताक्षिमानित्यर्थ इति काशिकायामुक्तत्वात्। एवं चात्राहं काण

(प्रकाश:)

इत्यात्मनि इंद्रियधर्मरूपकाणत्वाध्यास: इंद्रियैक्याध्यासं विना न संभवतीति तदैक्याध्याससिद्धिरित्यर्थ: ॥ब्राह्मणो यजेतेति॥ ब्राह्मण्याद्याश्रयस्य शरीरस्य जडत्वेनानियोज्यत्वात्तदैक्याध्यासवानात्मैव नियुज्यत इति। देहैक्याध्यासेऽर्थापत्तिं चाह ॥देहेति॥ ॥अनात्मत्वेनेति॥ आत्मभिन्नत्वेनेत्यर्थ: ॥देहात्मैक्यस्येति॥ किंतु देहाहमर्थैक्यविषयत्वमेवेति आत्मनि देहैक्याध्यासे नेदं प्रत्यक्षं प्रमाणमित्यर्थ:। चिदचित्संवलनस्य दूषितत्वादहमर्थे ब्राह्मण्यादिविशिष्टदेहैक्याध्यासे आत्मन्यपि स प्राप्त एवेति शंकानवकाश इति हृदयम्। अस्तु देहात्मैक्याध्यास:। तथापि न तत्र प्रत्यक्षं प्रमाणमिति त्वया वक्तुं शक्यमित्याह ॥देहेति॥ ॥तद्विरोधीति॥ देहात्मैक्यावगाहिप्रत्यक्षविरोधीत्यर्थ:। अयमभिसंधि:। पूर्वं तावत्प्रत्यक्षस्य जात्या उपक्रमादिन्यायैश्च प्राबल्यं समर्थ्य तद्विरोध्यनुमानादेरेवाप्रामाण्यमित्युक्तम्। एवं चेह देहात्मैक्यस्य प्रत्यक्षसिद्धत्वे कदापि तद्भेदसिद्धिर्न स्यात्। तत्सिद्धिर्हि देहादीनां व्यावृत्तत्वात्सूत्रानुस्यूतमणिवदात्मनोनुवृत्तत्वात् व्यावृत्तत्वानुवृत्तत्वरूप-विरुद्धधर्माधिकरणत्वरूपानुमानेन ''अस्तीत्येवोपलब्धव्य'' इत्यागमेन च वक्तव्या। देहात्मैक्यस्य प्रत्यक्षप्रमाणस्य पूर्वप्राबल्यस्य समर्थितत्वेन प्रबलतया तद्विरुद्धानुमानागमयोरेवाप्रामाण्यापत्त्या ब्रह्मज्ञानात्पूर्वं व्यवहारदशायामिदानीं तद्भेदसिद्धिरेव न स्यात्। ननु चंद्रपरिमाणप्रत्यक्षस्येव देहात्मैक्यप्रत्यक्षस्यापि अपरीक्षितत्वेन परीक्षितानुमानादिनैव बाध: किंन स्यादिति चेन्न। चंद्रपरिमाणप्रत्यक्षस्य दूरादिदोषेण स्वार्थनिश्चयपराङ्मुखस्य युक्तोन्येन बाध:। न चेह तथाऽस्ति। ब्रह्मज्ञानात्प्राक् व्यवहारदशायां त्वन्मते बाधाभावात्। तदंगीकारे ब्रह्मज्ञानेतरज्ञानबाध्यत्वेन प्रातिभासिकत्वापत्त्या स्वार्थसाधनाय प्रमाणत्वेन प्रत्यक्षोत्त्ययोगात्। न हि प्रातिभासिकरूप्यावगाहि प्रत्यक्षं केनचिद्रूप्यसिद्धये प्रमाणत्वेनोदाहियते। अतोऽनुमानागमाभ्यां इदानीं तद्भेदसिद्धि: सर्वसंमता न स्यात्। अतो न तत्र प्रत्यक्षं प्रमाणमिति ॥ परस्परमिति ॥ त्वया युगपदेवात्मनि देहाद्यैक्याध्यासांगीकारेण देहादिंद्रियमन्यत् इंद्रियाद्देहोऽन्य इति भेदस्यैव दर्शनात् देहोहमिंद्रियमित्येकदैव देहाद्यैक्याध्यासायोगात्। न हि भिन्नत्वेन निश्चितयोर्वंगरजतयोरेकदैव शुक्तिकायामेवारोपो दृष्ट इत्यर्थ:। ननु देहादिंद्रियमन्यत् इंद्रियाद्देहोन्य इति भेदबुध्या देहोहमिंद्रियमित्यैक्याध्यासासंभवेपि ब्राह्मणात्काणोन्य: काणाद्ब्राह्मणोन्य इति भेदबुद्ध्यभावेन ब्राह्मणोऽहं काण इत्येकदा ऐक्याध्यास: संभवतीति चेन्न। ब्राह्मणस्याक्षि काणमिति क्काणब्राह्मणयोर्भेदस्यापि प्रत्यक्षत्वेन एवमप्यारोपस्यासंभवात्। अत एव ''येनांगविकार'' इत्यत्रायमक्ष्णा काण इति काशिकायामुदाहृतत्वेन ब्राह्मणकाणयोरपि भेदस्यैवावगमादित्यालोचनीयम् ॥ त्वन्मत इति॥ भेदमात्रस्याध्यस्तत्ववादिनस्तव मत इत्यर्थ: ॥जीवब्रह्मणोरिव देहात्मनोर्भेदस्याप्यध्यस्तत्वेनेति पूर्वेणैव संबंध: ॥अभेदाध्यासायोगादिति॥ अभेदस्य सत्यत्वं स्यादित्यर्थ:। परस्परविरुद्धयोरिति न्यायादिति भाव:। ननु भेदस्याध्यस्तत्वेप्यभेदोस्तु। उभयोरपि दृश्यत्वेन मिथ्यात्वात्। भेदाभेदयोर्मिथ्यात्वेप्येतावानेव विशेषोंगीक्रियते यदत्र देहात्मनोरभेदो व्यवहारकालीनेन परीक्षितप्रमाणभावेन व्यावृत्तत्वानुवृत्तत्वरूपानुमानादिना ब्रह्मज्ञानेतरेण बाध्यते। भेदस्तु ब्रह्मज्ञान-रूपचरमवृत्त्येतीत्यत आह ॥मिथ्यात्वं हीत्याहु:॥ यद्वा तदेवोपपादयति ॥मिथ्यात्वं हीत्यादिना॥ शुक्तिज्ञानेन रूप्यमेव बाध्यते, न तु तदत्यंताभाव:। एवं चाधिष्ठानभूतशुक्तिज्ञानाबाध्यात्यंताभावप्रतियोगित्वं रूप्येऽस्तीत्यर्थ:। नन्वत्यंताभावेऽधिष्ठानज्ञानाबाध्यत्वं कुतो विशेषणं दीयत इत्यत आह ॥तद्बाध्येति॥ अधिष्ठानज्ञानबाध्येत्यर्थ: ॥सत्वेपीति॥ अत्यंताभावप्रतियोगिन इति शेष:। रूपवति घटे अधिष्ठानज्ञानबाध्यस्य रूपात्यंताभावस्य

(प्रकाश:)

सत्त्वेपि प्रतियोगिनो रूपस्य सत्यत्वदर्शनेन जगतो ब्रह्मज्ञानाबाध्यात्यंताभावप्रतियोगित्वमेव मिथ्यात्वं वाच्यमित्यर्थः। ननु भेदमिथ्यात्वसिद्ध्यर्थं भेदात्यंताभावस्याधिष्ठानज्ञानाबाध्यत्वेपि अभेदस्याध्यस्तत्वमस्तु। न ह्यभेदो भेदात्यंताभावः येनाधिष्ठानज्ञानाबाध्यतया सत्यः स्यादित्यतोऽभेदो भेदात्यंताभावो भवत्येवेत्याह ॥अभेदश्चेति॥ ॥सत्यो न स्यादिति॥ परस्परविरुद्धयोरिति न्यायादिति भावः। तथा च देहात्मभेदस्य मिथ्यात्वं वदताऽधिष्ठानभूतात्मज्ञानाबाध्यात्यंताभावप्रतियोगित्वे वाच्येऽभेदस्य भेदात्यंताभावरूपत्वेनाधिष्ठानज्ञानाबाध्यत्व प्राप्त्या देहात्माभेदस्य सत्यत्वमेव वाच्यमिति तस्याध्यस्तत्वोक्त्ययोग इति भावः। एतदुपलक्षणम्। देहात्मनोरभेदस्याध्यस्तत्वं वदता अधिष्ठानज्ञानाबाध्यात्यंताभावप्रतियोगित्वे वाच्ये भेदस्याभेदात्यंताभावरूपत्वेनाधिष्ठानज्ञानाबाध्यत्वप्राप्त्याऽभेदस्याध्यस्तत्वे कथं देहात्मनोर्भेदः सत्यो न स्यादिति भेदमात्रस्य मिथ्यात्वांगीकारो न युक्त इत्यपि द्रष्टव्यम्। ननु भेदस्य मिथ्यात्वेपि अभेदस्य सत्यत्वं कुतः ? परस्परविरुद्धयोरिति न्यायादिति चेन्न। अयं न्यायो यत्र धर्मी सन् तत्रैव। न हि वंध्यासुतस्य श्यामत्वाभावे गौरत्वं सत्यम् एवं प्रकृते देहस्य रूप्यवत्स्वरूपेणैव बाध्यत्वात्तत्र भेदाभेदयोरुभयोरपि मिथ्यात्वमेवेत्याशंक्य निराकरोति ॥न चेति॥ ॥स्वज्ञानेति॥ शुक्तिज्ञानबाध्यस्येत्यर्थः। तत्र हेतुर्बाधगोचरस्येति। तथा च यथा रूप्यस्य स्वरूपेणैव शुक्तावध्यस्तत्वेपि तत्प्रतियोगिको भेदः शुक्तौ मिथ्याभूतो दृष्टः अत्यंताभाववद्भेदेपि प्रतियोगिसत्वनियमाभावात्। एवं देहस्यापि स्वरूपेणाध्यासेपि आत्मनि तद्भेदोस्तु। तथा च देहस्य स्वरूपेणाध्यस्तत्वात्तत्र भेदाभेदयोरुभयोरपि मिथ्यात्वमित्युक्तमसत्। एवं च तस्य मिथ्यात्वांगीकारेऽभेदस्य सत्यत्वापादनं युक्तमेवेति भावः। कथं प्रमेत्यत आह ॥देहभेद्युत इति॥ तथाचाऽहं ब्राह्मण इत्यस्य ब्राह्मण्योपेतदेहवानित्यर्थो द्रष्टव्यः। आद्य श्लोकं व्याचष्टे ॥प्रतीयते हीति॥ श्लोके देहीत्येव प्रतीयत इत्युपलक्षणम्। इंद्रियभेदोपि प्रतीयते। अतो नेंद्रियैक्याध्यास इत्यपि द्रष्टव्यमित्याह ॥मम मन इत्यादि॥ द्वितीयकारिकां व्याचष्टे ॥आत्मनीति॥ देहभेद्युत इत्यस्यार्थमाह ॥देहविशेषेति॥ वेदाधिकारसंपादकेत्यर्थः। भेदशब्दार्थो विशेषेति। युत इत्यस्यार्थो विशिष्ट इति। चेतन इत्यर्थः। नन्वंध इति चक्षूराहित्यरूपांधत्वस्य देहधर्मत्वेन तस्यात्मन्यध्यासे देहैक्याध्यासोपि सिद्ध एवेत्यतः कारिकोक्तमुपलक्षणपरमित्याशयेनाह ॥अंधोऽहमिति॥ कथं प्रमेत्यत आह ॥चक्षुःश्रोत्रादिहीनस्यैवेति॥ चक्षुःश्रोत्रादिरहितचेतनस्यैवेत्यर्थः। न तु देहस्येत्येवार्थः। शवदेहेंऽधबधिरादिशब्दाप्रयोगादिति भावः। तृतीयकारिकां व्याचष्टे ॥कृष्णोहमिति॥ ॥सहेति॥ धर्मविशिष्टधर्मैक्यारोप इत्यर्थः ॥तेन विनैवेति॥ धर्मैक्याध्यासं विना धर्ममात्रारोप इत्यर्थः ॥उक्तत्वादिति॥ अहं गेहीतिवच्चाहं देहीत्येव प्रतीयत इति धर्मिभेदस्य प्रत्यक्षसिद्धत्वमुक्तमस्तीत्यर्थः ॥तद्वदेवेति॥ तत्र यथा रक्तः स्फटिकः कुसुमं रक्तमिति प्रतीतिद्वयमस्ति तथा देहः कृशः अहं कृश इति प्रतीतिद्वयाभावादित्यर्थः। ननु कृशोहं कृष्णोहमिति प्रतीतेः का गतिरित्यतो नात्र तथा प्रतीतिरस्ति किंतु गौणव्यवहारमात्रमित्याशयेनाह ॥कृशोहमिति॥ इत्यादिस्तु व्यवहार इति शेषः। कर्दमलिप्ते स्वस्मिन्। ननु पुत्रे कृशेऽहं कृश इति तथा कर्दमलिप्ते स्वस्मिन्नहं कृष्ण इत्येतन्न व्यवहारमात्रम्। किंतु स्वस्मिन्कार्श्याद्यारोपरूपं ज्ञानमित्याशंक्य निराकरोति ॥न चायमिति॥ ॥अन्यथेति॥ कृशोऽहमित्यादेर्गौणत्वमनंगीकृत्याध्यासत्वांगीकारे मंचाः क्रोशंति मार्गाश्चलंति चित्रभित्तिलिखिते सिंहेऽयं सिंह इत्यादिरपि लक्षणानामकवृत्त्यभावपक्षे व्यवहारमात्रमेव न

(प्रकाशः)

ज्ञानमित्यंगीकृतं, तदपि न स्यात्। तत्रापि मंचादौ क्रोशनाद्यध्यासस्य वक्तुं शक्यत्वादित्यर्थः। तत्र पुरुषभेदस्य मंचेषु स्पष्टत्वान्न तत्र क्रोशनाध्यास इति यदि तर्हि तत्प्रकृतेपि सममिति भावः। ननु पुत्रकार्श्यस्य स्वस्मिन्नध्यासाभावे कथं तेन दुःखं स्वस्य भवतीति चेत्तत्राह ॥पुत्रकार्श्येनेति॥ वैपरीत्यमाशंक्य निराकरोति ॥न चेति॥ शिलापुत्रिका पाषाणमयी प्रतिमा। तथा च पुत्रादिस्थितकार्श्यादिवत् अहं कृश इत्यादेर्व्यवहारमात्रत्वांगीकारे अयं शिलापुत्रिकाया देह इतिवत् मम देह इत्ययमपि गौणो व्यवहार एव स्यान्न प्रतीतिरित्यर्थः। एकत्र मुख्यत्वेन क्लृप्तस्यैवान्यत्राप्यसति बाधके मुख्यत्वमेव कल्प्यं, गौणत्वेनैकत्र क्लृप्तस्य चान्यत्राप्यसति बाधके गौणत्वमेवेत्याह ॥ममेति॥ इत्यस्य प्रयोगस्य मुख्यतायाः क्लृप्तत्वात् इतरजन्यव्यवहारेपि मुख्यत्वमित्यर्थः। पुत्रकार्श्ये पुत्रे कृशे सति क्रियमाणोहं कृश इत्यादिव्यवहार इत्यर्थः। ननु शिलापुत्रिकाया देह इत्यत्र गौणत्वदर्शनादत्रापि तथाऽस्त्विति चेत् भ्रांतोसि। यदि तत्र शिलापुत्रिकाया मम देह इति प्रतीतिः स्यात् तदैव मम देह इति प्रतीतेरपि गौणत्वं कल्पयामः। न चैवम्। तस्य जडत्वेन मम देह इति तस्याः प्रतीत्यभावात्। अयं शिलापुत्रिकाया देह इत्येव हि व्यवहार इति भावः ॥तत्रेति॥ विवेकिनां व्यवहारे पुत्रकार्श्येन क्रियमाणव्यवहारे चेत्यर्थः। अतस्तत्र मुख्यवामुख्ये इति शेषः ॥तथेति॥ भेदधीः स्पष्टेत्यर्थः। तदेवोपपादयति ॥पश्वादीनामिति॥ जातमात्रा एव, न व्यापारांतरं कृतवंतः अस्मिन्जन्मनि व्याप्त्यनुसंधानरहिता इत्यर्थः ॥यथेदमिति॥ प्राग्भवे मत्कृतस्तनपानमित्यर्थः ॥यथेदमिति॥ प्राग्भवे मत्कृतनेत्रांतःकडूयनमित्यर्थः ॥न देहांतरास्मृतौ युक्तेति॥ स्वीयदेहांतरेत्यर्थः। तथा च यथेदमिति दृष्टांतस्मरणस्य सामानाधिकरण्यरूपव्याप्तिस्मरणस्य च प्राचीनस्वीयशरीरांतरस्मरणं विनाऽयोगेन स्वात्मनस्ततो भेदसिद्धिरिति भावः। ततो भेदधीरिव प्रत्यक्षेण भवतीति शेषः। नप्तॄन् पौत्रपुत्रान्। अनुसंदधानः प्रत्यभिजानन्। ततो देहात् ॥विरुद्धधर्मेति॥ व्यावृत्तत्वानुवृत्तत्वरूपविरुद्धधर्मेत्यर्थः। अयं भावः। यदुक्तमनेकमणिष्वनुस्यूत-सूत्रमिवानेकदेहेष्वनुस्यूतमात्मानं पश्यतः योऽहं बाल्य इति प्रत्यभिज्ञावतश्च ततो भेदधीरिवेति तदयुक्तम्। मम देह इत्यस्या प्रतीतेर्व्यावृत्तत्वानुवृत्तत्वरूपविरुद्धधर्माधिकरणत्वरूपलिंगजत्वेन परोक्षतया कृशोऽह-मित्यादिदेहात्मैक्यापरोक्षभ्रमनिवर्तकत्वं नास्ति। श्वेतत्वानुमितेः पैत्यापरोक्षभ्रमनिवर्तकत्वादर्शनादिति ॥प्रत्यक्षे धर्मिणीति॥ भेदकधर्मसाक्षात्कारोपपादनायेदम्। अयमत्र संप्रदायैकगम्यो विशेषः। प्रत्यक्षे धर्मिणि भेदकविरुद्धधर्मसाक्षात्कारो भेदसाक्षात्कारनियत एव कुत इति चेत् समाने विषयेऽनुमितिसामग्रीतः प्रत्यक्षसामग्र्याः प्रबलत्वात्। यथा हि प्रत्यक्षे धर्मिणि ऊर्ध्वपदार्थे पुरुषत्वव्याप्यकरादिमानयमिति परामर्शः पुरुषत्वानुमिति सामग्री तत्प्रत्यक्षसामग्री च भवति। तत्र किं पुरुषत्वानुमित्योत्पत्तव्यं उत पुरुषत्वप्रत्यक्षेणेति विचारे पुरुषत्वरूपैकविषय एव प्रवृत्तयोरनुमितिप्रत्यक्षसामग्र्योर्मध्येऽनुमितिसमग्रीतः प्रत्यक्षसामग्र्या बलवत्त्वात् प्रत्यक्षमेवोत्पद्यते नत्वनुमितिः। वह्निव्याप्यधूमवानिति परामर्शः स्वानुव्यवसायरूपप्रत्यक्षसामग्री भवति वन्ह्यनुमितिसामग्री च। तत्र परामर्शवह्निरूपभिन्नविषये प्रवर्तमानयोः सामग्र्योर्मध्येऽनुमिति सामग्र्या बलवत्त्वादनुमितिरेवोत्पद्यते न परामर्शप्रत्यक्षम्। नन्वेवं पुरुषत्वव्याप्यकरादिमानयमिति परामर्शः स्वप्रत्यक्षसामग्री अनुमितिसामग्री च भवतीति भिन्नविषयत्वसद्भावात्पुरुषत्वानुमितिरेव स्यादिति चेन्न। प्रत्यक्षसामग्र्याः प्रतिबंधकत्वेनानुमित्यजननादित्याद्यालोचनीयम्। एवं च प्रत्यक्षे देहात्मरूपे धर्मिणि व्यावृत्तत्वानु-

(प्रकाश:)

वृत्तत्वरूपभेदकधर्मसाक्षात्कारस्य भेदप्रत्यक्षसामग्रीत्वाद्भेदसाक्षात्कार एव जायत इति अपरोक्षैक्य भ्रमविरोधित्वमेवेति भावः। ''अज्ञता चाल्पशक्तिश्च दुःखित्वं स्वल्पकर्तृता। सर्वज्ञतादीशगुणविरुद्धा ह्यनुभूतिगा'' इत्यत्र सार्वज्ञ्यादिगुणविरुद्धमज्ञत्वादिगुणजातं स्वात्मन्यनुभवंस्ततो भेदं प्रत्येत्येव। यत्रापि प्रत्यक्षे धर्मिणि भेदकधर्मसाक्षात्कारस्य भेदसाक्षात्कारव्याप्यत्वादितीदमेवोपपादनं द्रष्टव्यम् ॥इह चेति॥ व्यावृत्तत्वेन धीस्थो यः स्वदेहादिः तद्भेदकस्येत्यर्थः। तथा च तद्व्याप्य आत्मनि देहभेदोपि प्रत्यक्षसिद्ध इति भावः। अस्तु वा भेदसाक्षात्काराभावः। तथापि केवलं व्यावर्तकधर्मसाक्षात्कार एव देहात्मैक्यापरोक्षभ्रमविरोधी भेदव्यवहारस्यौपचारिकत्वविरोधी च भविष्यतीत्याह ॥व्यावर्तकेति॥ यद्धीर्यत्र प्रतिबंधिका तत्सामग्र्यपि तत्र प्रतिबंधिकेति न्यायादिति भावः। ननु न विरोधिधर्मसाक्षात्कारस्य भ्रमविरोधित्वम्। भ्रमविरोधिभूतोर्ध्वाग्रत्वादिरूपवृक्षत्वसाक्षात्कारेपि अधोग्रत्वादिभ्रमानुवृत्तिरेवास्ति। अतस्तद्वदस्यापि सोपाधिकभ्रमत्वाद्व्यावर्तकधर्मसाक्षात्कारमात्रस्य नैक्यभ्रमविरोधित्वमित्याशंक्य निराकरोति ॥न चेति॥ अयं – कृशोऽहं ब्राह्मणोऽहमित्यादिः प्रकृतः। प्रतीतिद्वयाभावादिति केचित्। संप्रदायस्तु ''ब्राह्मणोहं मनुष्योहमित्यादिस्तु प्रमैवनः। देहभेद्युतो यस्माद्ब्राह्मणादि पदोदित'' इत्युक्तरीत्याऽयं भ्रम एव न भवति। दूरे सोपाधिकत्वमिति भावः। ननु सोपाधिकत्वभ्रमस्थले विरोधिसाक्षात्कारेपि भ्रमानुवृत्तेस्तन्निवृत्तिः कदेति चेत् उपाधिनिवृत्तिसचिवाधिष्ठानसाक्षात्कार एवेति वदामः जलाद्युपाधिनाशे सति वृक्षाधोऽऽग्रत्वादिभ्रमनिवृत्तेरनुभवसिद्धत्वादित्यवधेयम् ॥श्रुतिरुक्तेति॥ देहैक्याध्याससद्भावे ''ब्राह्मणो यजेते''ति या श्रुतिरुक्तेत्यर्थः। लक्षणया ब्राह्मणशब्दार्थ इति संबंधः। तदर्थः ब्राह्मणशब्दार्थः ॥लक्षणेति॥ लक्षणाया अयोगादित्यर्थः। ''न विधौ परः शब्दार्थ'' इति वचनात् ''ब्राह्मणो यजेते''त्यस्यापि विधिवाक्यत्वेन तत्र लक्षणया व्याख्यानायोगादिति भावः। ब्राह्मणदेहैक्याध्यासवतो यागाधिकारित्वस्यैतत् श्रुत्यर्थत्वे दूषणमाह ॥त्वयेति॥ विकलेषु व्यंगेषु सकलेषु दृढांगेषु सत्सु ॥भाषितत्वेनेति॥ भाष्ये उक्तत्वेनेत्यर्थः ॥भृत्यमित्रादाविति॥ अत्याप्ते सकले विकले वाऽहमेव सकल इत्याद्यध्याससद्भावादित्यर्थः। मित्रग्रहणस्य उत्तरातिप्रसंगकथने उपयोगः ॥शूद्रस्वामिन इति॥ शूद्रं प्रति स्वामिनः, शूद्रभृत्यकस्येत्यर्थः। तथा च ब्राह्मणदेहैक्याध्यासवतो यागाधिकारित्वे शूद्रदेहैक्याध्यासवतो ब्राह्मणस्यानधिकारापाताच्चेत्यर्थः ॥ब्राह्मणादीति॥ ब्राह्मणादिवर्णत्रयं मित्रं यस्येत्यर्थः। तत्रापि ब्राह्मणादिदेहे व्यंगे सांगे वाऽहमेव व्यंग इत्याद्यध्यासेन ब्राह्मणदेहैक्याध्याससद्भावाद्ब्राह्मणमित्रस्य शूद्रस्याप्यधिकारापातादिति भावः। तदर्थः ब्राह्मण शब्दार्थः। भृत्यमित्रादिदेहानां स्वकर्मार्जितत्वाभावान्नोक्तातिप्रसंग इति भावः ॥आवश्यकत्वेनेति॥ देहैक्याध्यासस्यैवाधिकारप्रयोजकत्वं वदतोपि कर्मण आवश्यकत्वादित्यर्थः ॥आर्जनस्यैवेति॥ तथा च स्वकर्मणा देहविशेषार्जनवानेव ब्राह्मणशब्दार्थो न त्वैक्याध्यासोपीत्यर्थः। ततश्च नेयं श्रुतिरध्यासे मानमिति भावः ॥देहैक्येति॥ सुप्तस्य ज्ञानमात्रविलोपेन ब्राह्मणादिदेहैक्याध्यासस्याभावात् तथा जीवन्मुक्तस्य देहात्मविवेकसद्भावेनारोपितब्राह्मण्यस्याभावेन सुप्तजीवन्मुक्तयोः शिरश्छेदे ब्रह्महत्यादिमहापातकाभावप्रसंग इति भावः ॥कदाचिदिति॥ तथा च कदाचिदैक्याध्यासवत एव ब्राह्मणशब्दार्थत्वेन सुप्तजीवन्मुक्तयोरपि कदाचिदैक्याध्याससद्भावेन ब्राह्मण्यसद्भावेन निषेधविषयत्वसंभवान्नोक्तातिप्रसंग इति भावः ॥नष्टेति॥ ''मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्। तत्काल एव चंडालो ब्राह्मणो ब्रह्महत्यये''ति मनुस्मरणादित्यर्थः

(प्रकाशः)

॥ आपातादिति ॥ महापातकाभावदशायां अध्याससद्भावादित्यर्थः ॥ जन्मारभ्येति ॥ तस्य जन्मारभ्य देहात्मभेदज्ञानित्वेन अधिकारप्रयोजकस्य कदाचिदध्यासस्याप्यभावेन तद्धनने प्रत्यवायाभावापातादिति भावः। अत एवेत्युक्तमेव विशदयति ॥ संयोगस्येति ॥ ब्राह्मणादिदेहविशेषसंबंधस्यान्यस्यासंभवादध्यासरूप एव स इत्यधिकारप्रयोजकीभूतः संबंधोऽध्यासरूप एव नान्य इत्युक्तम्। तत्राध्यासातिरिक्तोऽन्य एव संबंधः संभवतीत्याशयेन परिशेषं करोति ॥ संयोगस्येति ॥ सर्वेषु देहेषु शूद्रादिदेहेषु। ततश्च शूद्रादेरप्यधिकारापात इति भावः ॥ स्वेति ॥ तस्य द्विष्ठत्वेन भृत्यदेहेपि सत्वेन तस्याप्यधिकारापात इति भावः ॥ इच्छेति ॥ स्वेच्छानुसारित्वरूपसंबंधस्येत्यर्थः ॥ आतुरादिति ॥ ब्राह्मणानामातुरतादशायां देहस्येच्छानुसारिताभावेनानधिकारापातादिति भावः। न चातुराणां विधिनिषेधविषयत्वमेव नास्तीतीष्टापत्तिरिति वाच्यम्। तथात्वे तद्धनने प्रत्यवायाभावापातात्। तथा ''स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुजित्। आधिव्याधिनिमित्तेन विक्षिप्तमनसोपि तु। गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु। स्मर्तव्यं सततं तत्तु न कदाचित्परित्यजेदि''त्यादि वचनेन तस्यापि विष्णुस्मरणादिविधिविषयत्वेन तत्राधिकारसद्भावात्तद्देहस्य चेच्छाननुसारित्वेनाधिकारप्रयोजकसंबंधाभावादनधिकारापात इति विशेषो द्रष्टव्यः। साक्षादित्यादेः संभवादित्यनेनान्वयः। स्वस्वामिभावसंबंधस्य भृत्यदेहेपि सत्वेन साक्षादित्युक्तम्। देहांतस्थ आत्मा स्वदेहं प्रत्येव साक्षात्स्वामी। भृत्यादिदेहं प्रति तु तस्य स्वदेहानुकूलतया स्वदेहद्वारैव संबंधो न साक्षादिति भावः ॥ तदिंद्रियेति ॥ तज्ज्ञानजनकेंद्रियाश्रयत्वं देहस्यास्तीत्यर्थः। शरीरद्वारा प्रयत्नजन्यचेष्टादिक्रियाश्रयत्वस्य घटादावपि सत्वात्साक्षादित्युक्तम्। स्वशरीरस्यैव साक्षात्प्रयत्नजन्यक्रियाश्रयत्वं नान्यस्येति भावः ॥ संबंधांतरस्येति ॥ इदं च साक्षात्स्वस्वामिभावादिसंबंधपंचकं न भृत्यदेहातिप्रसक्तम्। आतुरादिदेहसाधारणसंबंधांतरमेवाधिकारप्रयोजकमस्तीति नाध्यस्तत्वं देहात्मनोः संबंध इति भावः। संबंधांतरं वदद्भिरपि नाध्यासरूपः संबंधः त्यक्तुं शक्यते। तथाहि साक्षात्प्रयत्नजन्यक्रियाश्रयत्वं संबंध इत्युक्तम्। तत्र प्रयत्नस्य साक्षादेतदीयत्वमेव कुत इति शंकायां प्रयत्नात्मनोरैक्यभ्रम एव संबंध इति वक्तव्यमिति चेन्न। प्रयत्नात्मनोरैक्याध्यासांगीकारेऽहं कृतिरिति प्रतीत्यापत्तेरित्याह ॥ नचेति ॥ किंच प्रयत्नादावपि नात्मैक्य भ्रम एव संबंधः किंत्वित्यत आह ॥ आत्मेति ॥ तार्किकादिरीत्येति शेषः। समवायानंगीकारिवादिमतेनाह ॥ अयुतसिद्धेर्वेति ॥ अंगुलीद्वय- वद्भेदेनानुपलभ्यमानत्वस्येत्यर्थः। तादात्म्यस्येति यावत्। अस्मदभिप्रेत एव तादृशसंबंधे तार्किकाणां समवायसंज्ञेति द्रष्टव्यम्। ननु साक्षात्स्वस्वामिभावादिपंचकेपि साक्षात्स्वस्वामिभावः तदिंद्रियाश्रयत्वादिकं वाऽस्यैव देहस्य कुतः। भृत्यदेहादावपि किं न स्यादित्यतिप्रसंगशंकायां तत्र मूलसंबंधतया ऐक्याध्यास एव वाच्य इति चेन्न। देहैक्याध्यासेपि किं मूलमिति शंकायां स्वस्वामिभावादिसंबंधस्यैव मूलत्वोपपत्तेरिति वैपरीत्यस्यापि वक्तुं शक्यत्वात् इत्याह ॥ नचेति ॥ किंच स्वस्वामिभावादिसंबंधचतुष्टये तत्कर्मार्जितत्वमेव मूलसंबंधोस्त्वित्याह ॥ तत्कर्मेति ॥ तदीयकर्मेत्यर्थः। ननु देहस्य तदीयत्वे यदि तत्कर्मार्जितत्वं मूलसंबंधस्तदा कर्मणामेतदीयत्वं कुत इति पृष्टे तदीयशरीरजन्यत्वादिति वाच्यम्। एवं च शरीरस्यैतदीयत्वे सिद्धे कर्मणामेतदीयत्वसिद्ध्या तत्कर्मार्जितत्वरूपमूलसंबंधसिद्धिस्तत्सिद्धौ च शरीरस्य तदीयत्वसिद्धिरित्यन्योन्याश्रयः स्यादित्यत आह ॥ कर्मणामिति ॥ इदानींतनकर्मणां तदीयत्वस्य तदीयपूर्वकर्माधीनत्वात् तदीयपूर्वप्रयत्नजन्यत्वादुपपत्तेः पूर्वकर्मपूर्वप्रयत्नयोरपि तदीयत्वं तत्पूर्वकर्मतत्पूर्वप्रयत्नाधीन-

(प्रकाशः)

मित्यंगीकारात्। नचैवमनवस्था प्रामाणिकत्वादित्याशयेनोक्तमनादीति। यथोक्तं भगवता सूत्रकारेण ''न कर्माविभागादिति चेन्नानादित्वादि''ति। ननु तत्कर्मार्जितत्वं शरीरस्य तदीयत्वे मूलसंबंध इत्युक्तमयुक्तम्। ''पुत्रकामः पुत्रकामेष्ट्या यजेते''ति वचनात् पुत्रकामेष्टिरूपं यत्पितृकर्म तत् पुत्रशरीरार्जकं भवति। तत्र पुत्रशरीरे पितृकर्मार्जितत्वसद्भावेपि पुत्रशरीरस्य पुत्रीयत्वेन पित्रीयत्वाभावाद्व्यभिचार इत्यत आह ॥पुत्रकामेष्टीति॥ अयमर्थः। पुत्रकामेष्टिरूपं यत्पितृकर्म तदार्जितं पुत्रशरीरं न भवति। किंतु स्वकीयकर्मार्जितमेव। अतो हेतोरेवाभावान्न व्यभिचारः। तर्हि पुत्रकामेष्टिकर्मणो वैयर्थ्यमापन्नमिति चेन्न। पुत्रकर्मणा उत्पन्ने पुत्रे पित्रीयत्वरूपो यः पितृसंबंधस्तन्मात्रार्जकत्वांगीकारात्। तत्र दृष्टांतो ग्रामकामेष्टिवदिति। यथा ''ग्रामकाम इष्टिं कुर्यादि''ति श्रूयते तत्र ग्रामकामेष्टिफलं न ग्रामोत्पत्तिः। तस्य एतदीयेष्टितः पूर्वमेव सिद्धत्वात् किंतु सिद्धे ग्रामे एतदीयत्वमात्रं इष्टिफलमिति मीमांसकैः सिद्धांतितत्वेनेहापि स्वकर्मणैव सिद्धे पुत्रशरीरे एतदीयत्वमात्रस्यैव पुत्रकामेष्टिफलत्वोपपत्तेः । अन्यथा ग्रामोत्पत्तेरेव ग्रामकामेष्टिफलत्वापत्तेरिति। अत्र यद्यपि ग्रामादेः स्वतः सिद्धत्वेन तत्स्वामित्वमेव तत्रेष्ट्या जायते इह तु पुत्रशरीरस्य पुत्रकामेष्टिं तदीयं कर्म च विनाऽनुपपत्त्या पुत्रशरीरस्य तदीयत्वस्य चेत्युभयस्यापि पुत्रकामेष्टिफलत्वादिति सुपरिहरमेव दूषणम्। तथापि प्रौढिवादेनेदं दूषणमुक्तमिति ज्ञातव्यम् ॥तस्येति॥ देहविशेषस्यैव श्रौतब्राह्मणशब्दार्थत्वेन तस्यैव नियोज्यत्वप्राप्तेः। नचेष्टापत्तिः तस्य जडत्वेनानियोज्यत्वादिति भावः। किंच देहविशेषस्यैव ब्राह्मणशब्दार्थत्वे लौकिकप्रयोगविरोधश्चेत्याह ॥विशेषेति॥ युक्ते चेतन इति शेषः ॥प्रयोगेणेति॥ अयं देही ब्राह्मण इति प्रयोगादित्यर्थः ॥अतदर्थत्वादिति॥ ब्राह्मणशब्दार्थत्वाभावादिति भावः ॥एतेनेति॥ ब्राह्मणो यजेतेति विधिनिषेधात्मकशास्त्रस्याध्यासमूलकत्वस्य दूषितत्वेनेत्यर्थः। देहात्मैक्याध्यासाभावे प्रमातृत्वाद्यदर्शनात् तदन्यथानुपपत्तिश्च देहात्मैक्याध्यासे मानमित्युक्तमाशंक्य निराकरोति ॥नापीति॥ कुतो नेत्यत आह ॥तदभावेपीति॥ प्रमातृत्वस्याध्यासमूलकत्वे सुषुप्तावध्यासाभावेन न किंचिदवेदिषमिति परामर्शसिद्धाज्ञानप्रमातृत्वमात्मनोऽनुपपन्नं स्यादित्यर्थः। किंच प्रमातृत्वादावपि पूर्वमस्मदुक्तं यत् तत्कर्मार्जितत्वं तदेव प्रयोजकम् जाग्रदादौ घटादिप्रमातृत्वदशायां तस्य सत्वात्। न देहात्मैक्याध्यासः प्रमातृत्वापेक्षया नियतपूर्वक्षणे ब्राह्मणोहमित्याद्यैक्याध्यासनियमाननुभवादित्याह ॥जागरणादावपीति॥ अवस्थात्रयेपीत्यर्थः। त्वदुक्तं तु नावस्थात्रयगतं प्रमातृत्वं प्रति साधारण्येन प्रयोजकमिति भावः ॥एतेनेति॥ सुषुप्तौ देहैक्याध्यासाभावेपि अज्ञानप्रमातृत्वसद्भावेनाध्यासस्य प्रमातृत्वप्रयोजकत्वाभावादिति भावः। नन्वेवं महता प्रबंधेन देहात्मभेदस्य प्रत्यक्षत्वोपपादनमयुक्तम्। तथात्वे चार्वाकादेर्देहैक्यसाक्षात्कारो न स्यात्। तथाच तन्मूलकः संसारस्तेषां न स्यादित्यत आह ॥चार्वाकादेस्त्विति॥ भ्रमेऽनुमितिरूप इत्यर्थः। तथाच तेषामपि देहात्मभेदसाक्षात्कार एवास्ति। देहात्मैक्यज्ञानं तु न प्रत्यक्षजन्यं किंतु परिदृश्यमानो देह एवात्मा तद्व्यतिरेकेणादर्शनात् यन्नोपलभ्यते तन्नास्तीत्याद्यनुमानाभासजन्यमेव। तत्र च प्रत्यक्षत्वाभिमानस्तेषाम्। यथाहि आनुमानिकार्थप्रतियोगिकतयाऽनुमानवेद्ये धर्माद्यभावे प्रत्यक्षत्वाभिमानस्तेषामस्ति तद्वदित्यर्थः। ननु भवद्रीत्या तेषामपि देहात्मभेदसाक्षात्कारसत्वे लैंगिकमपि तदभेदज्ञानं चार्वाकस्य कथमुत्पद्यत

(प्रकाशः)

इति चेत् सन् घट इत्यादिसत्यताग्राहिप्रत्यक्षसद्भावेपि यथा दृश्यत्वादिना तव मिथ्यात्वधीस्तथेति गृहाण। ननु चार्वाकस्यानुमानममानमिति कथमनुमानादिना तस्य देहात्मैक्यज्ञानं जायत इति चेन्न। तन्मतेऽनादिसंभावनाया एवानुमानस्थानीयत्वात्। यथाह ''धूमादिज्ञानानंतरं वन्ह्यादौ प्रवृत्तिश्च संभावनामात्रादि''ति। ननु प्रत्यक्षैकप्रामाण्यवादिना तेन संभवाना वा कथं प्रमाणतयांगीकृतमिति चेन्न। संभावनापि न तन्मते प्रमाणम्। किंनामोत्कटकोटिकः संशय एव। संशयस्तु न प्रमाणमिति तदंगीकारादित्यालोचनीयम्। ननु देहात्मैक्याध्यासाभावे देहानुकूले रागस्तत्प्रतिकूले च द्वेषोऽनुभवसिद्धो न स्यात्। न चेष्टापत्तिरिति वाच्यं तथात्वे संसाराभावप्रसंगात् तस्यैव च संसारहेतुत्वादिति चेन्न। पुत्रानुकूलप्रतिकूलयोः पितूरागद्वेषवत्परमप्रेमास्पदत्वेनोपपत्तेः। नहि पितुः पुत्रशरीरस्वदेहैक्याध्यासोस्तीत्याशयेनाह ॥संसारहेतुरिति॥ ननु प्रेमास्पदात्मैक्यारोपादेव देहस्य प्रेमास्पदत्वमपीति चेन्न स्वस्वभोगायतनत्वादिनाऽन्यथैवोपपत्तेरिति ध्येयम्। ननु देहात्मैक्याध्यासाभावेंऽगुल्या स्वहृदयदेशं निर्दिश्यायमहमित्युक्तिर्न स्यात्। अस्ति चासौ। अतस्तदन्यथानुपपत्त्या देहात्मैक्याध्यास-सिद्धिरित्यतस्तदुक्तेरन्यथासिद्धिं दर्शयति ॥अंगुल्येति॥ ॥अंगारमिति॥ यद्यप्यंगारो वह्निः ''यथांऽगारानपोह्य भस्मनि जुहुयादि''ति प्रयोगात्। तथापि प्रकृते तदसंभवात् अत्रांऽगारशब्देनांगारव्याप्तं काष्ठं ग्राह्यम् ॥पृथगिति॥ यथा काष्ठव्याप्तो वह्निः काष्ठाद्भेदेन विविच्य प्रदर्शयितुं न शक्यते एवं देहाद्विविच्यात्मनः पृथग्दर्शयितुमशक्यत्वादेव तदुक्तिर्नतु देहात्मैक्याध्यासादित्यर्थः। ननु लोकानां देहात्मैक्याध्यासाभावे ''तं स्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकां धैर्येणे''ति काठके तं जीवं स्वात् स्वकीयात् शरीरात् प्रवृहेत् विविच्य जानीयादिति देहात्मभेदो विधीयते; भेदस्य चैक्यनिषेधरूपत्वात् देहात्मैक्याध्यासाभावे श्रुतेरप्रसक्तप्रतिषेधकत्वापत्तिः। तथा ''ते वै विदंत्यतितरंति च देवमायां नैषां ममाहमिति धीः श्वशृगाल भक्ष्य'' इत्यादिस्मृतीनामप्यप्रसक्तप्रतिषेधकत्वापत्तिः। ममाहमिति धीप्रसक्तेरेवाभावात्। अतो देहात्मैक्याध्यास एवास्ति न तद्भेदप्रत्यक्षमित्याशंक्याह ॥श्रुतिष्विति॥ बहुवचनमाद्यर्थे। श्रुतिस्मृत्यादिष्वित्यर्थः। देहात्मैक्यनिषेधोपि चार्वाकादिवादिप्राप्तत्वादुपपद्यते। तेषां तत्प्राप्तिश्चानुमाना-भासादित्युक्तमेव। ननु वादिप्राप्तनिषेधकत्वं श्रुतेः कुत्र दृष्टमित्यत उक्तं ॥असत्कारणत्वेति॥ ''कुतस्तु खलु सोम्यैवं स्यात्कथमसतः सज्जायेते''ति श्रुत्या शून्यवादिप्राप्तमसत्कारणत्वं निषिध्यते। तद्वदित्यर्थः। समयानामपि प्रवाहतोऽनादित्वान्नात्र कश्चित्क्षुद्रोपद्रवः। किंच ''स्वाच्छरीरात्प्रवृहेदि''त्यस्य स्फुटतरं विविच्य जानीयादित्यर्थः। तथा स्मृतेरपि 'एषां ममाहमिति धीर्नास्ति स्फुटतरविवेकाभावज्ञानं नास्ति किंतु स्फुटतरविवेकज्ञानमेवास्तीति यावत् ते वै विदंती'त्येवार्थः। तथाच श्रुतिषु देहात्मैक्यनिषेधः स्फुटतरभेदाभावज्ञानस्य प्रसक्तत्वाद्युज्यत इत्याशयेनाह ॥व्यवहारपर्यंतमिति॥ श्रुतिषु देहात्मैक्यनिषेध इत्यन्वयः। ननु प्रत्यक्षतो भेदज्ञानसद्भावे तत एव व्यवहारोपि किं न स्यादित्यत आह ॥दृश्यंते हीति॥ अंगारवह्निवत् काष्ठव्याप्तवह्निवत्। ननु ज्ञानमेव व्यवहारकारणं तच्चेदस्ति कथं तर्हि व्यवहारेष्वपाटवमित्यत आह ॥नहीति॥ यथाऽनुभवानुसारेण यमलयोर्भेदं पश्यंतो मात्रादयः कथमेतौ भिन्नाववगंतव्याविति पृष्टाः संत एवमिति स्वप्रत्यक्षानुसारेण न परान्प्रति प्रतिपादयितुं क्षमंत इत्यनुभवसिद्धमित्यर्थः। उत्तरप्रबंधमुपक्षिपन् देहात्मैक्याध्यासनिराकरणमुपसंहरति ॥तस्मादिति॥ देहादेः सर्वस्य जगतः ॥देहात्मैक्याध्यासभंगविवरणम्॥

## ३६. अनिर्वाच्यत्वलक्षणभङ्गः

यच्चोक्तं यद्यप्यनिर्वाच्यत्वं न निरुक्तिविरहः, इदं रूप्यमिति निरुक्तेः। अत एव न निरुक्तिनिमित्तस्य ज्ञानस्यार्थस्य वा विरहः, निमित्तं विना कार्यायोगात्। नापि तयोः सदसद्रूपविशिष्टविलक्षणत्वम्, सदेकरूपत्वेऽपि तदुपपत्तेः। नापि सद्विलक्षणत्वे सत्यसद्विलक्षणत्वम्, सदसद्रूपत्वेऽप्युपपत्तेः। नापि सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे सति सदसद्विलक्षणत्वम्, सतोऽपि सदन्तरविलक्षणत्वात्। नापि सत्त्वे सत्यसत्त्वरूपविशिष्टस्य विरहः, केवलसत्त्वेऽप्युपपत्तेः। नापि सत्त्वराहित्ये सत्यसत्त्वविरहः, सदसत्त्वेऽप्युपपत्तेः। तथापि सत्त्वेनासत्त्वेन सदसत्वेन च विचारासहत्वं वा बाध्यत्वं वा अनिर्वाच्यत्वम्। प्रमाणं तत्र– विमतं सत्त्वरहितत्वे सत्यसत्त्वरहितत्वे सति सदसत्त्वविरहितम्, बाध्यत्वाद् दोषप्रयुक्तभानत्वाद्वेत्यादि व्यतिरेकि। न चाप्रसिद्धविशेषणत्वम्, सत्त्वासत्त्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी, धर्मत्वाद्रूप-रसवत्। सत्त्वमसत्त्वानधिकरणानिष्ठम्, असत्त्वं वा सत्त्वानधिकरणानिष्ठम्, धर्मत्वाद्रूपवदिति वा सामान्यतस्तत्सिद्धेः। किञ्च सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेतेति ख्यातिबाधान्यथानुपपत्तिः प्रवृत्तिबाधान्यथानुपपत्तिश्चात्र मानमिति।

अत्र ब्रूमः– अत्र सत्त्वासत्त्वे सत्ताजातितदभावौ वा? अर्थक्रियाहेतुत्वाहेतुत्वे वा? अबाध्यत्वबाध्यत्वे वा? प्रामाणिकत्वाप्रामाणिकत्वे वा? अशून्यत्वशून्यत्वे वा? ब्रह्मत्वशून्यत्वे वा? अबाध्यत्वशून्यत्वे वा? प्रामाणिकत्वशून्यत्वे वा? परेणांगीकृते सत्त्वासत्त्वे वा? नाद्यद्वितीयौ, शुद्धात्मनि सद्वैलक्षण्यस्य प्रपंचे तदभावस्य चापातात्। न तृतीयः, त्वन्मते तुच्छस्याप्यबाध्यत्वेन तत्र सद्वैलक्षण्यस्यानिर्वाच्यस्य च बाध्यत्वेन तत्रासद्वैलक्षण्यस्य चायोगात्। अत एव न चतुर्थः, अनिर्वाच्यस्याप्रामाणिकत्वेन तत्रासद्वैलक्षण्यायोगात्। न च पञ्चमः, अनिर्वाच्यस्याशून्यत्वेन तत्र सद्वैलक्षण्यायोगात्। न षष्ठः, ममापि प्रपंचे तस्येष्टत्वात्। न सप्तमः, तयोरविरोधेन सत्त्वासत्त्वरूपत्वायोगात् अबाध्यत्वाभावस्यैव लक्षणत्वोपपत्त्या व्यर्थविशेष्यत्वाच्च। किं चात्र शून्यं किं विवक्षितं निरुपाख्यं वा? निस्स्वरूपं वा? नाद्यः, असत्ख्यातिवादेऽपि रूप्यादौ तद्वैलक्षण्य-स्येष्टत्वात्। न द्वितीयः, मिथ्यात्वभंगोक्तरीत्या त्वन्मतेऽपि रूप्यादेः स्वरूपेण

त्रैकालिकनिषेधेन निस्स्वरूपत्वात्। अत एव नाष्टमः, उक्तरीत्या रूप्यादावप्य-सद्वैलक्षण्यायोगात्। न नवमः, मया त्रिकालसर्वदेशीयनिषेधाप्रतियोगित्वप्रतियोगित्वे सत्त्वासत्त्वे इति स्वीकारात्। त्वन्मते चानिर्वाच्यस्य तत्प्रतियोगित्वात्।

किं च रूप्यादौ घटादौ च प्रातिभासिकस्य व्यावहारिकस्य च सत्त्वस्य सद्भावात् कथं सद्विलक्षणत्वम्? पारमार्थिकसद्वैलक्षण्यं विवक्षितं चेत्, पारमार्थिकत्वस्य बाध्यत्वाभावरूपतया लाघवाद् बाध्यत्वमेवानिर्वाच्यत्वं स्यात्। किंच मदनभिमतयोः परस्परनिषेधानात्मकयोः पारिभाषिकयोः सत्त्वासत्त्वयोः राहित्यविवक्षायामिष्टापत्तिः। मदभिमतयोः राहित्यविवक्षायां तु मया लाघवादावश्यकत्वाच्च (चाऽसत्त्वाभाव एव सत्त्वमिति) सत्त्वाभाव एवासत्त्वमिति स्वीकारात्। 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इति न्यायेनैकतरनिषेधस्यान्यतरविधिरूपत्वात् माता बन्ध्येतिवद् व्याघातः। एतेनासद्वैलक्षण्येन सत्त्वसाधने आत्मत्वमुपाधिरिति निरस्तम्। असद्वैलक्षण्यमेव सत्त्वरूपमिति व्याहतेरेवोक्त्या तेन तदसाधनात्। सत्त्वे तद्विरुद्धवैलक्षण्यस्येवात्मत्वस्य तत्र प्रयोजकत्वेनाक्लृप्तत्वाच्च। एतेनानिर्वाच्यवादे विरोधोऽसिद्ध इति निरस्तम्, अन्योन्याश्रयात्। अन्यथा माता वन्ध्येतिवादे विरोधोऽसिद्ध इति स्यात्। ननु निषेधसमुच्चयस्यातात्त्विकत्वान्न विरोधः। सदादिवैलक्षण्योक्तिस्तु तत्तत्प्रतियोगि-दुर्निरूपत्वमात्रप्रकटनाय। न हि स्वरूपतो दुर्निरूपस्य किंचिदपि रूपं वास्तवमस्तीति चेन्न, सत्त्वादिराहित्यस्यातात्त्विकत्वेऽपि सत्त्वादेर्दुर्निरूपत्वमात्रेणानिर्वाच्यत्वे पंचम-प्रकाराविद्यानिवृत्तौ 'नानिर्वाच्यश्च तत्क्षय' इत्यनिर्वाच्यत्वनिषेधायोगात्। सत्त्वादि-वत्तद्राहित्यस्याप्यतात्त्विकत्वे सत्त्वादौ प्रमाणनिरासेन तद्राहित्ये तदुक्तेरयोगाच्च। विधिसमुच्चयस्यैवातात्त्विकत्वान्न विरोध इति सुवचत्वाच्च। किंच निषेधसमुच्चयस्या-तात्त्विकत्वं किमुभयातात्त्विकत्वेन? एकैकातात्त्विकत्वेन वा? नाद्यः, उभयतात्त्विकत्व-वदुभयातात्त्विकत्वस्यापि विरुद्धत्वाद्विधिसमुच्चयस्य तात्त्विकत्वापातेन प्रतियोगि-दुर्निरूपत्वस्यायोगाच्च। अत एव न द्वितीयः, तत्प्रतियोगिन एकस्य विधेस्तात्त्विकत्वा-पातात्। अतात्त्विकं हि तात्त्विकात्यन्ताभावप्रतियोगीत्युक्तम्। किं च हेतूकृतस्य स्वरूपतो दुर्निरूपत्वस्य साध्यस्य वास्तवरूपाभावस्य चातात्त्विकत्वेऽनैकान्त्यस्य सिद्धसाधनस्य चापत्त्या तयोस्तात्त्विकत्वावश्यंभावाद्विरोधः। अपि च स्वरूपतो

दुर्निरूपस्येत्यत्र किमिदं दुर्निरूपत्वं केनापि प्रकारेण वा? केनापि प्रकारेण दुर्निरूपत्वमित्येतत्प्रकारान्यप्रकारेण वा? सत्त्वासत्त्वाभ्यां वा? नाद्यः, केनापि प्रकारेण दुर्निरूपत्वमित्यनेन प्रकारेण दुर्निरूपत्वादुर्निरूपत्वाभ्यां व्याघातात्। अत एव न द्वितीयः। केनापि प्रकारेण दुर्निरूपत्वमित्येतदन्यप्रकारेण दुर्निरूपत्वस्य केनापि प्रकारेण दुर्निरूपत्वमित्यस्मादन्यत्वादसतोऽसत्त्वेनेव कल्पितस्यापि बाधवेद्येन मिथ्यात्वादिना सुनिरूपत्वाच्च। न तृतीयः, तस्य सदसद्वैलक्षण्यावास्तवत्वाहेतुत्वात्। न च ध्वंसानुपलक्षितोपलक्षितसत्तायोगित्वरूपयोर्नित्यत्वानित्यत्वयोः सत्ताहीने सामान्यादावभाववदुत्तरावधिराहित्यभावान्यनिवृत्तिमत्त्वरूपयोर्नित्यत्वानित्यत्वयोः प्रागभावे अभाववद्वा क्वचित् सत्तासत्तयोरभावः स्यादिति केनचिदुक्तं युक्तम्, उक्तयोर्नित्यत्वानित्यत्वयोर्भावाभावानात्मकत्वात्, सत्वासत्वायोस्तु तदात्मकत्वात्, प्रागभावसामान्याद्यनुगतयोर्ध्वंसाप्रतियोगित्वप्रतियोगित्वयोरेव नित्यत्वानित्यत्वरूपत्वाच्च। प्रागभावस्यापि प्रतियोग्येव ध्वंसः, भावस्याभावो निवृत्तिरभावस्य तु भाव एवेति स्वीकारात्। अन्यथा ध्वंसोपलक्षितानुपलक्षितसत्ताराहित्यरूपयोर्नित्यत्वानित्यत्वयोः सामान्यादौ भाववदेकत्र सत्त्वासत्त्वे स्यातामिति स्यात्। न चाध्यस्ते नित्यत्वानित्यत्वयोरिव सत्त्वासत्त्वयोरप्यभावो न विरुद्धौ। धर्मिण एव कल्पितत्वेन विरुद्धयोरपि धर्मयोरभावादिति वाच्यम्, त्वन्मते कल्पितस्यानित्यत्वात्कल्पितत्वरूपहेतोर्विरुद्ध धर्माभावरूपसाध्यस्य च भावाभावाभ्यां व्याघाताच्च।

अथ कल्पितत्वादिकं नित्यत्वादिवन्न धर्मिसत्त्वापेक्षं तर्ह्यसत्त्वमपि तथा, अन्यथा तुच्छस्याप्यसद्बहिर्भावः कल्पितस्यापि दृश्यादृश्यबाध्याबाध्यदुर्निरूपसुनिरूपबहिर्भावोऽपि स्यात्। न च तार्किकमते संयोगतदत्यन्ताभावयोरिव भट्टमते भेदाभेदयोरिव च सत्त्वासत्त्वाभावयोरप्यविरोधोऽस्त्विति वाच्यम्, तद्वदेव सत्त्वासत्त्वयोरेवाविरोधापातात्। अथ संयोगतदत्यन्ताभावादाववच्छेदकभेदेनाविरोधः सत्त्वासत्त्वयोरपि तथात्वे इष्टापत्तिः। स्वकालाद्यवच्छेदेन सत्त्वस्यान्यकालाद्यवच्छेदेनासत्त्वस्य चेष्टत्वादिति चेत्, समः समाधिः। स्वकालाद्यवच्छेदेनासद्वैलक्षण्यस्य कालान्तराद्यवच्छेदेन सद्वैलक्षण्यस्य चेष्टत्वात्। तस्मात्सत्त्वासत्त्वात्यन्ताभावावेकत्र विरुद्धौ।

अपि च सत्त्वादिना विचारासहत्वं किं सत्त्वाद्यनधिकरणत्वम्? सत्त्वात्यन्ताभावाधिकरणत्वं वा? सद्रूपत्वाद्यभावो वा? सत्त्वादेरित्थमिति निर्वक्तुमशक्यत्वं वा? सत्त्वादिना प्रमाणागोचरत्वं वा? नाद्यः, असतोप्यसत्त्वरूपधर्मानधिकरणत्वात्, सत्पदलक्ष्यस्य निर्धर्मकस्य ब्रह्मणोऽपि स्वरूपातिरिक्तं तात्त्विकं सत्त्वं प्रत्यनधिकरणत्वाच्च, अतात्त्विकं सत्त्वं प्रति त्वनिर्वाच्यस्याप्यधिकरणत्वाद्, धर्मिसमसत्त्वं प्रति च ब्रह्मणोऽप्यनधिकरणत्वाद्, अनिर्वाच्यस्याप्यधिकरणत्वाच्च। न द्वितीयः, निर्धर्मके ब्रह्मणि सत्त्ववत्तदत्यन्ताभावोऽपि न, तुच्छेऽप्यसत्त्ववत्तदत्यन्ताभावोऽपि नेति कथंचिदतिव्याप्तिनिरासेऽपि तुच्छब्रह्मणोर्निर्धर्मकत्वेन धर्मवत्त्वादेरेवानिर्वाच्यलक्षणत्वापातात्, निर्विशेषत्वश्रुत्यापि व्याघातेन धर्ममात्रनिषेधायोगेन ब्रह्मणि सत्त्वराहित्ये तदत्यन्ताभावस्य दुर्वारत्वाच्च। न तृतीयः, सामान्यादेरप्यबाध्यत्ववत्त्वेनैवाबाध्यात्मकसद्रूपतया ब्रह्मणः सत्त्वाभावे सद्रूपत्वायोगाद्, ब्रह्मणः सद्रूपत्वे श्रौतसत्पदस्य लाक्षणिकत्वायोगाच्च। न चतुर्थः, त्वन्मते ब्रह्मण्यपि सत्त्वस्येत्थमिति दुर्वचत्वात्। न पंचमः, अखंडार्थनिष्ठवेदान्तैकवेद्यस्य ब्रह्मणोऽपि सत्त्वप्रकारकप्रमाणागोचरत्वात्। अपि च सत्त्वादिराहित्यं न तावत्प्रातिभासिकम्, रूप्यप्रपंचयोर्ब्रह्मवत्पारमार्थिकत्वापातात्। नापि धर्मिसमसत्ताकम्, बाधबोध्यस्य भ्रान्तिसिद्धेन साम्यायोगात्। नापि व्यावहारिकम्, जगति व्यावहारिकत्वे रूप्ये प्रातिभासिकत्वापातेनोक्तदोषात्। रूप्ये व्यावहारिकत्वे च जगति पारमार्थिकत्वापातेनाद्वैतहानेः। अत एव सत्त्वादिराहित्यं न पारमार्थिकं न हि स्वरूपतो दुर्निरूपस्य किंचिदपि रूपं वास्तवमस्तीति स्ववचनविरोधाच्च। किं च श्रुत्या युक्त्या च भेदं निराकुर्वता कथं सदसद्भिन्नत्वरूपं तद्व्याप्तं वाऽनिर्वाच्यत्वं समर्थ्यते? बाध्यत्वम् अनिर्वाच्यत्वमिति तु मिथ्यात्वभंग एव निरस्तम्। अनिर्वाच्यलक्षणभंगः॥

## अद्वैतसिद्धिः

ननु एवमविद्यायां तन्निबन्धनाध्यासे च सिद्धेऽपि न तस्यामनिर्वचनीयत्वसिद्धिः, लक्षणप्रमाणयोरभावात्। तथा हि– किमिदमनिर्वाच्यत्वम्? (१) न तावन्निरुक्तिविरहः, (२) तन्निमित्तज्ञानविरहो वा, (३) तन्निमित्तार्थविरहो वा, (४) तन्निमित्तसामान्यविरहो

(अद्वैतसिद्धिः)

वा। आद्ये अनिर्वाच्य इत्यनेनैव निरुक्त्या 'इदं रूप्य'मिति निरुक्त्या च व्याघातात्। द्वितीये निरुक्तिरूपफलसत्त्वेन तन्निमित्तविरहस्य वक्तुमशक्यत्वात्। अत एव न तृतीयः, अर्थस्य निरुक्तावनिमित्तत्वाच्च। फलसत्त्वादेव न चतुर्थः। नापि (५) सद्विलक्षणत्वे सत्यसद्विलक्षणत्वम्, सदसद्रूपत्वेऽप्युपपत्तेः। अत एव (६) न सत्त्वराहित्ये सत्यसत्त्वविरहः, तथा च लक्षणासम्भव इति- चेन्न, (१) सद्विलक्षणत्वे सति असद्विलक्षणत्वे सति सदसद्विलक्षणत्वम्, (२) सत्त्वासत्त्वाभ्यां विचारासहत्वे सति सदसत्त्वेन विचारासहत्वं वा, (३) प्रतिपन्नोपाधौ बाध्यत्वं वा इत्यादिलक्षणे निरवद्यत्वसंभवात्। न च आद्ये सतोऽपि सदन्तरविलक्षणत्वात् सिद्धसाधनमिति- वाच्यम्, सत्त्वावच्छिन्नभेदस्य सन्नेति प्रतीतिप्रयोजकस्य सद्वैलक्षण्यपदार्थत्वात्। न हि सति सदन्तरभेदेऽपि सन्नेति प्रतीतिः, अतो न सिद्धसाधनम्। एवं च सत्त्वरहितत्वे सति असत्त्वरहितत्वे सति सदसत्त्वरहितत्वमपि साधु।

स्यादेतत्- सत्त्वं तावत् (१) सत्ताजातिर्वा? अर्थक्रियाकारित्वं वा? (३) अबाध्यत्वं वा? (४) प्रामाणिकत्वं वा? (५) अशून्यत्वं वा? (६) ब्रह्मत्वं वा? (७) पराङ्गीकृतं वा? नाद्यद्वितीयौ, शुद्धात्मनि सद्वैलक्षण्यस्य प्रपञ्चे सद्वैलक्षण्याभावस्य चापातात्। न तृतीयः, त्वन्मते तुच्छस्याप्यबाध्यत्वेन तत्र सद्वैलक्षण्यस्यानिर्वाच्यत्वस्य बाध्यत्वेना-सद्वैलक्षण्यस्य चायोगात्। न चतुर्थः, प्रमा ह्यन्तःकरणवृत्तिः, तद्विषयत्वस्य प्रपञ्चेऽपि सत्त्वेन सद्वैलक्षण्यस्य तत्रासत्त्वप्रसङ्गात्। न पञ्चमः, तस्य प्रपञ्चेऽपि विद्यमानत्वेन तद्वैलक्षण्याभावप्रसङ्गात्। न षष्ठः, तद्वैलक्षण्यस्य जगति सत्त्वेनेष्टापत्तेः। न सप्तमः, पराभ्युपगतस्य सत्त्वस्यासत्त्वविरहरूपत्वेन उभयवैलक्षण्योक्त्ययोगात्। अत एव- एतेषां विरहस्यासत्त्वरूपत्वं- निरस्तम्। अथासत्त्वं निरुपाख्यत्वम्? निःस्वरूपत्वं वा? नाद्यः, असदादिपदेनैव ख्यायमानत्वात्, न द्वितीयः स्वरूपेण निषेधपक्षे शुक्तिरूप्यादेरपि निःस्वरूपत्वेनासद्वैलक्षण्यानुपपत्तेरिति- चेन्न, पराभिमतसत्त्वासत्त्वे एव विवक्षिते, न तु पारिभाषिके अतो न तादृक्सदसद्वैलक्षण्योक्ताविष्टापत्तिः। नापि- तयोः परस्परविरुद्धत्वेन एकनिषेधस्यापरविधिपर्यवसन्नतया एकत्रोभयवैलक्षण्यं व्याहतमिति- वाच्यम्, निषेधसमुच्चयस्यातात्त्विकत्वाङ्गीकारात् न व्याहतिः, न ह्यतात्त्विकरजतेन शुक्तेर्विरोधः। न च तर्हि सदादिवैलक्षण्योक्तिः कथम्? तत्तत्प्रतियोगिदुर्निरूपतामात्रप्रकटनाय। न हि स्वरूपतो दुर्निरूपस्य किंचिदपि रूपं वास्तवं संभवति।

(अद्वैतसिद्धिः)

ननु– सत्त्वादिराहित्यस्यातात्त्विकत्वेऽपि सत्त्वादेर्दुर्निरूपत्वमात्रेणानिर्वाच्यत्वे पञ्चमप्रकाराविद्यानिवृत्तौ 'नानिर्वाच्योऽपि तत्क्षय' इति अनिर्वाच्यत्वनिषेधायोगः, सत्त्वादिवत्तद्राहित्यस्याप्यतात्त्विकत्वे सत्त्वादौ प्रमाणनिरासेन तद्राहित्ये तदुक्त्ययोगः, अविरोधाय विधिसमुच्चयस्यैवातात्त्विकत्वस्वीकारश्चेति– चेन्न, पञ्चमप्रकाराविद्यानिवृत्तिपक्षे नैतत्त्रितयविलक्षणत्वमात्रमनिर्वाच्यत्वम्, किंतु मुक्तिकालानवस्थायित्वसहितम्। तथा च मुक्तिकालावस्थायिन्यामविद्यानिवृत्तौ अनिर्वाच्यत्वनिषेधो युज्यते। सत्त्वादिराहित्ये तु अबाधितार्थविषयकप्रमाणोक्तिर्नास्त्येव। ज्ञापकमात्रोक्तिस्तदंशेऽसाधारणी। अतो वादिविप्रतिपत्तिनिरासार्था। अतात्त्विकविधिसमुच्चयापत्तिस्त्विष्टैव। न ह्यतात्त्विकसत्त्वासत्त्वे निषेधसमुच्चयेऽपि विरुध्येते। यत्तु विधिसमुच्चयस्यातात्त्विकत्वपक्षे भ्रान्तिबाधव्यवस्था न स्यादित्युक्तम्, तन्न, अतात्त्विकत्वादेव भ्रान्तेर्बाधस्य सत्त्वप्रतिषेधस्याप्रतिक्षेपात् सत्त्वस्यातात्त्विकत्वाच्च तदुपपत्तेः।

ननु– निषेधसमुच्चयस्यातात्त्विकत्वं किमुभयातात्त्विकत्वाद्वा? एकैकातात्त्विकत्वाद्वा? नाद्यः, उभयतात्त्विकत्ववदुभयातात्त्विकत्वस्यापि विरुद्धत्वात्, विधिसमुच्चयस्य तात्त्विकत्वापाताच्च। एकैकप्रतियोगितात्त्विकत्वापत्तेरेव न द्वितीयोऽपि, तात्त्विकात्यन्ताभावप्रतियोगिन एव अतात्त्विकत्वादिति– चेन्न, उभयातात्त्विकत्वादेव निषेधसमुच्चयस्यातात्त्विकत्वम्। न चोभयतात्त्विकत्ववदुभयातात्त्विकत्वमप्येकत्र विरुद्धम्, वल्मीकादावेकत्र स्थाणुत्वपुरुषत्वयोरतात्त्विकत्वदर्शनात्। न च परस्पर विरहरूपयोरेकत्रोभयोरतात्त्विकत्वं विरुद्धम्, एकत्र तन्त्वादौ घटतत्प्रागभावयोरुभयोरपि अतात्त्विकत्वदर्शनात्। न च प्रतियोगितदत्यन्ताभावयोरेवायं नियमः, नियामकाभावादस्माकमसंप्रतिपत्तेः। वस्तुतस्तु– सत्त्वासत्त्वयोर्न परस्परविरहरूपत्वम्, किंतु परस्परविरहव्याप्यतामात्रम्। न च– तादृशपारिभाषिकसदसद्वैलक्षण्योक्तौ नास्माकमनिष्टम् इति– वाच्यम्, सत्त्वमबाध्यत्वम्, असत्त्वं सत्त्वेन प्रतीत्यनर्हत्वम्, तदुभयवैलक्षण्यं च तव जगत्यसंप्रतिपन्नमिति कथमिष्टापत्त्यवकाशः? इष्टापत्तौ च कथं न मतक्षतिः? अत एव ध्वंसानुपलक्षिततदुपलक्षितसत्तायोगित्वरूपनित्यत्वानित्यत्वयोः सत्ताहीने सामान्यादावभाववदुत्तरावधिराहित्यं नित्यत्वं, भावान्यनिवृत्तिमत्त्वं चानित्यत्वम्, तदुभयाभावः प्रागभाव इव क्वचिद्रूप्यादौ मिथ्याभूते सत्त्वासत्त्वयोरभावः स्यादित्याहुः, उक्तसत्त्वासत्त्वयोः परस्परविरहव्याप्यत्वेऽपि परस्परविरहानात्मकत्वात्। उक्तनित्यत्वानित्यत्ववत्।

(अद्वैतसिद्धिः)

ननु– इदं नित्यत्वानित्यत्वयोर्मिलितयोर्व्यतिरेकः सामान्ये प्रागभावे चास्तीत्युक्तम्, तदयुक्तम्, नित्यत्वस्य सामान्यानुगतध्वंसाप्रतियोगित्वरूपत्वाद्, अनित्यत्वस्य च प्राग्भावानुगततत्प्रतियोगित्वरूपत्वात् प्रागभावस्यापि प्रतियोग्येव ध्वंसः, भावस्यैवाभावो निवृत्तिः, अभावस्य तु भाव एवेति स्वीकारात्। ध्वंसोपलक्षितानुपलक्षित-सत्ताराहित्यरूपनित्यत्वानित्यत्वयोः सामान्यादौ भाववदेकत्र सत्त्वासत्त्वे स्यातामित्यपि स्यादिति– चेन्न, न हि वयं दृष्टान्तमात्रेण सत्त्वासत्त्वव्यतिरेकयोरेकत्र स्थितिं ब्रूमः येन ध्वंसोपलक्षितानुपलक्षितसत्ताराहित्यरूपपारिभाषिकनित्यत्वानित्यत्वयोरेकत्र सामान्यादौ सद्भावनिदर्शनेन सत्त्वासत्त्वयोरेकत्र सत्त्वमुच्यते, किन्तु प्रमाणैः सिद्धे निषेधसमुच्चये सामान्यादिव्यावृत्तनित्यत्वानित्यत्वयोर्निषेधसमुच्चयं दृष्टान्तयामः। एवं च सामान्याद्यनुगतत्वदुक्तनित्यत्वा- नित्यत्वयोर्निषेधसमुच्चयस्यादृष्टान्तत्वेऽपि न क्षतिः। अत एवोक्तमध्यस्ते नित्यत्वानित्यत्वयोरिव सत्त्वासत्त्वयोरप्यभावौ न विरुद्धौ, धर्मिण एव कल्पितत्वेन विरुद्धयोरपि धर्मयोरभावाद्, इति। न चैवं कल्पितस्यानित्यत्वाभ्युपगमविरोधः, तात्त्विकानित्यत्वाभावेऽपि धर्मिसमसत्ताकानित्यत्वसत्त्वेनाभ्युपगमे विरोधाभावात्। न च– कल्पितत्वहेतोर्विरुद्धधर्माभावरूपसाध्यस्य च भावाभावाभ्यां व्याघात इति– वाच्यम्, अतात्त्विकहेतुसद्भावेन तात्त्विकधर्माभावस्य साधनेन व्याघाताभावात्। अत एव स्वरूपतो दुर्निरूपस्य न किंचिदपि रूपं वास्तवं संभवतीति प्राचामुक्तिरपि संगच्छते, व्यावहारिकेणैव दुर्निरूपत्वेन हेतुना व्यावहारिकवास्तवरूपाभावस्य साधनात्। अत एव– दुर्निरूपत्वरूपहेतोर्वास्तवरूपाभावसाध्यस्य चातात्त्विकत्वेऽसिद्धिबाधौ तात्त्विकत्वे व्याघात इति– निरस्तम्, धर्मिसमसत्ताकहेतुसाध्यादिसत्त्वेनासिद्ध्याद्यभावात्, तात्त्विकहेत्वाद्यभावाच्च न व्याघातः। स्वरूपतो दुर्निरूपत्वं च कल्पितत्वमेव।

एतेन– किमिदं स्वरूपतो दुर्निरूपत्वं केनापि प्रकारेण वा? केनापि दुर्निरूपत्वमित्येतदन्यप्रकारेण वा? सत्त्वासत्त्वाभ्यां वा? केनापि दुर्निरूपत्वमित्येतदन्यप्रकारेण वा? सत्त्वासत्त्वाभ्यां वा? नाद्यः, केनापि प्रकारेण दुर्निरूपत्वमित्यनेन प्रकारेण दुर्निरूपत्वादुर्निरूपत्वाभ्यां व्याघातात्। अत एव न द्वितीयः, केनापि प्रकारेण दुर्निरूपत्वमित्येतदन्यप्रकारेण दुर्निरूपत्वस्य केनापि प्रकारेण दुर्निरूपत्वान्यत्वात्, मिथ्यात्वादिना कल्पितस्य सुनिरूपत्वाच्च। न तृतीयः, तस्य सदसद्वैलक्षण्या-

(अद्वैतसिद्धिः)

वास्तवत्वाहेतुत्वादिति– निरस्तम्, तृतीयपक्षस्य क्षोदसहत्वाच्च। तथा हि– सत्त्वासत्त्वाभ्यां दुर्निरूपत्वं हि बाधिततद्द्वयकत्वम्। तच्च धर्मविशिष्टधर्म्यतात्त्विकत्वे हेतुः। तथा च सदसद्वैलक्षण्यमपि धर्मस्तदतात्त्विकत्वे कथं न हेतुः स्यात्? न च– एवं कल्पितस्य दृश्यादृश्यबाध्याबाध्यदुर्निरूपसुनिरूपत्वादिबहिर्भावोऽपि स्यादिति वाच्यम्, तात्त्विकदृश्यत्वाद्यशेषधर्मबहिर्भावस्य कल्पिते इष्टत्वात्, अतात्त्विकस्य दृश्यत्वादेर्व्यावहारिकप्रमाणैर्यथायथमङ्गीकृतस्यैवमप्यविरोधात्। अदृश्यत्वादिकं तु व्यावहारिकं नास्त्येव। प्रातिभासिकं चैतदप्यङ्गीकुर्म एव। एवं च तार्किकमते संयोगतदभावयोरिव भट्टमते भेदाभेदयोरिव सत्त्वासत्त्वाभावयोरप्यविरोध एव। न च– एवं सत्त्वासत्त्वयोरपि तद्वदेवाविरोधः स्यादिति– वाच्यम्, अतात्त्विकयोरविरोधे इष्टापत्तेः, निषेधसमुच्चयस्यापि तात्विकस्यानङ्गीकारेण तत्साम्येन विधिसमुच्चयस्य तात्त्विकस्यापादयितुमशक्यत्वात्। न च तात्त्विकसंयोगतदभावनिदर्शनबलात्तदापादनायम्, दृष्टान्तेऽपि तात्त्विकत्वासंप्रतिपत्तेः।

ननु अनिर्वाच्यत्वं सत्त्वासत्त्वादिना विचारासहत्वम्। तच्च न तावत् सत्त्वाद्यनधिकरणत्वम्, असतो ब्रह्मणश्च निधर्मकत्वेन तत्रातिव्याप्तेः। न च– कल्पितसत्त्वाधिकरणत्वं ब्रह्मण्यपीति– वाच्यम्, तस्य जगत्यपि विद्यमानत्वेन तत्राव्याप्तेः। नापि सत्त्वाद्यत्यन्ताभावाधिकरणत्वम्, निर्धर्मकब्रह्मणः सत्त्ववत्तदत्यन्ताभावस्याप्यभावेन तुच्छेऽप्यसत्त्ववत्तदत्यन्ताभावस्याप्यभावेन कथंचिदतिव्याप्तिनिरासेऽपि तुच्छब्रह्मणोर्निर्धर्मकत्वेन धर्मवत्त्वादेरेवानिर्वाच्यत्वलक्षणत्वापातात्, निर्विशेषश्रुत्यापि व्याघातेन धर्ममात्रनिषेधायोगेन ब्रह्मणि सत्त्वराहित्ये तदत्यन्ताभावस्य दुर्वारत्वात्। नापि सद्रूपत्वाद्यभावः, ब्रह्मणः सत्त्वाभावे सद्रूपत्वाभावेन तत्रातिव्याप्तेः। नापि सत्त्वादेरित्थमिति निर्वक्तुमशक्यत्वम्, ब्रह्मण्यपि सत्त्वस्येत्थमिति निर्वक्तुमशक्यत्वात्। नापि सत्त्वादिना प्रमाणागोचरत्वम्, अखण्डार्थनिष्ठवेदान्तैकवेद्यब्रह्मणोऽपि सत्त्वादिप्रकारकप्रमाणागोचरत्वादिति– चेन्न, सत्त्वादिना विचारासहत्वं सत्त्वाद्यत्यन्ताभावाधिकरणत्वम्। न चातिव्याप्तिः, ब्रह्मणि सत्त्ववत्तदत्यन्ताभावस्याप्यभावाद्, अन्यथा निर्विशेषत्वादिश्रुतिविरोधापत्तेः। न च निर्विशेषत्वरूपविशेषसत्त्वासत्त्वाभ्यां व्याघातेन श्रुतिरन्यपरा, विशेषस्य कल्पितत्वेन तदभावासत्त्वेन तत्सत्त्वाभावेन व्याघाताभावात् स्वाप्नगजतदभाववत्। अत एव– सत्त्वराहित्येऽपि तदत्यन्ताभाव आवश्यक – इत्यपास्तम्।

ननु– एवं विशेषसत्त्वम्, धर्मवत्त्वं वा अनिर्वाच्यत्वमस्त्विति– चेन्न, आस्तां तावदयं सुहृदुपदेशः। उक्तलक्षणस्य निष्पन्नत्वात्। यद्वा– सत्त्वादिना विचारासहत्वं सद्रूपत्वाद्यभावः।

(अद्वैतसिद्धिः)

सत्त्वरूपधर्माभावेऽपि यथा ब्रह्मणः सद्रूपत्वं तथोपपादितमधस्ताद्, अतो न तत्रातिव्याप्तिः। न च– एवं सदात्मके ब्रह्मणि श्रौतसत्पदादौ लाक्षणिकत्वं न स्यादिति– वाच्यम्, सत्त्वधर्मविशिष्टवाचकस्य तस्य निर्धर्मके लक्षणाया आवश्यकत्वात्। न हि निर्धर्मकस्वरूपवाचकत्वं कस्यचिदपि पदस्यास्ति। ननु– सत्त्वादिराहित्यमतात्त्विकमपि न तावत् प्रातिभासिकम्, रूप्यप्रपञ्चयोर्ब्रह्मवत् पारमार्थिकत्वापत्तेः, नापि धर्मिसमसत्ताकम्, बाधबोध्यस्य भ्रान्तिसिद्धेन साम्यायोगात्। नापि व्यावहारिकम्, जगति व्यावहारिकत्वे रूप्ये प्रातिभासिकत्वे चोक्तदोषात्, रूप्ये व्यावहारिकत्वे च जगति पारमार्थिकत्वापातेनाद्वैतहानिरिति– चेन्न, धर्मिसमसत्ताकस्यैव सत्त्वादिविरहस्येष्टत्वात्। न च बाधबोध्यस्य भ्रान्तिसिद्धेन साम्यायोगः, बाधस्याधिष्ठानमात्रगोचरत्वेन रूप्यवत्तत्सत्त्वविरहस्यापि साक्षिसिद्धतया बाधबोध्यत्वाभावात्। न चैवं सत्त्वप्रतीतिविरोधः, अतात्त्विकस्य तस्याप्यङ्गीकारात्। न च– एवं तात्त्विकसत्त्वविरहस्यैव लक्षणत्वपर्यवसानम्, तात्त्विकत्वं चाबाध्यत्वम्, तथा च बाध्यत्वमेव लक्षणमस्त्विति– वाच्यम्, बाध्यत्वस्यान्यविशेषणत्वेनोपात्तस्य लक्ष्येधर्मिण्यनन्वयेन तन्मात्रमुपादायेतरवैयर्थ्यस्य वक्तुमशक्यत्वात्। न च– श्रुत्या युक्त्या च भेदं निराकुर्वता कथं सदसद्भिन्नत्वरूपं तद्व्याप्तं वाऽनिर्वाच्यत्वं समर्थ्यत इति– वाच्यम्, मा विषीद, अतात्त्विकस्यैव तस्य समर्थनात्, बाध्यत्वं तु मिथ्यात्वनिरूपणसमय एव निरूपितम्। तस्मान्न शुक्तिरूप्यप्रपञ्चसाधारणानिर्वाच्यत्वलक्षणानुपपत्तिः।

॥ इत्यद्वैतसिद्धौ अनिर्वाच्यत्वलक्षणम् ॥

## न्यायामृततरङ्गिणी

**प्रपंचेऽनिर्वाच्यत्वं नास्तीति वुक्तुं पराभिमते तद्दृष्टांते शुक्तिरूप्यादौ लक्षणप्रमाणयोरभावान्नानिर्वाच्यत्वमित्यभिसंधाय परपक्षं प्रस्तौति ॥ यच्चोक्तमित्यादिना ॥ ॥ निमित्तमिति ॥ निरुक्तिरूपकार्यस्य सिद्धत्वादिति भावः। तयोः ज्ञानार्थयोः ॥ सदसद्रूपत्वेपीति ॥ त्वदभिमतानिर्वाच्यत्वासिद्धिरिति भावः ॥ सत्वराहित्ये सतीति ॥ एतच्चासत्त्वविशेषणं ॥ सदसत्त्वेपीति ॥ विशेषणाभावाद्विशिष्टाभावोस्तीत्यर्थः ॥ सत्त्वासत्त्वे इति ॥ एकस्मिन्सत्त्वासत्त्वोभयाभावाधिकरणे सदसदात्मकत्वाभावोप्येतदनुमानादेव सिध्यतीति विशिष्टसाध्यप्रसिध्यनुपपादनं न शंकनीयं**

(तरङ्गिणी)

॥ असत्त्वेति ॥ असत्त्वाभावासमानाधिकरणमित्यर्थः ॥ प्रवृत्तीति ॥ ज्ञानवदिच्छाप्रवृत्त्योरपि पुरोवर्तिरजतविषयत्वादिति भावः ॥ शुद्धात्मनीति ॥ तत्र सत्ताजातेरर्थक्रियाकारित्वस्य च प्रपंचे तदभावस्य चाभावादित्यर्थः ॥ तत्रेति ॥ तुच्छे प्रत्युत सत्त्वमेव स्यात् ॥ तत्रेति ॥ प्रत्युत सत्त्वमेव स्यात् ॥ अनिर्वाच्यस्येति ॥ तत्र प्रमाणप्रवृत्तेरभावात् ॥ तयोरिति ॥ शून्यस्यापि त्वन्मतेऽबाध्यत्वादिति भावः। ॥ अबाध्यत्वेति ॥ बाध्यत्वं च पृथक् दूषयिष्यते ॥ असत्ख्यातीति ॥ रूप्यादेः सप्रधानत्वान्निरुपाख्यवैलक्षण्यम्। शुक्तिरूप्यं तु निरुपाख्यमेवेति बोध्यम् ॥ निःस्वरूपत्वादिति ॥ तथा च न रूप्यादावसद्वैलक्षण्यमित्यर्थः ॥ उक्तेति ॥ रूप्यादेः स्वरूपत्वरूपशून्यत्वात् ॥ त्वन्मते चेति ॥ अनिर्वाच्येऽसद्वैलक्षण्यं न स्यादित्यर्थः ॥ लाघवादिति ॥ अबाध्यवैलक्षण्यापेक्षया बाध्यत्वस्य लघुत्वादित्यर्थः ॥ लाघवादिति ॥ परस्परविरहानापन्नयोः सत्त्वासत्त्वयोरंगीकारे तदभावयोरपि पृथगंगीकर्तव्यत्वाद्गौरवम्। मम तु सत्त्वमसत्त्वाभाव एवेति लाघवमित्यर्थः ॥ आवश्यकत्वादिति ॥ भावरूपसत्त्वमंगीकृत्याप्यसत्त्वाभावः पृथगवश्यमंगीकर्तव्यः। तथा च स एव सत्त्वव्यवहारहेतुरस्त्वित्यर्थः ॥ द्वौ नञाविति ॥ सत्त्वनिषेधापेक्षया नञ्द्वयं बोध्यं ॥ एकतरेति ॥ तथा च सत्त्वनिषेधेऽसत्त्वापत्तिर्दुर्वारेति भावः। हेतुसाध्ययोः सामान्यव्याप्तिमूलकः प्रयोज्यप्रयोजकभावोस्ति न तु साध्योपाध्योरित्यर्थः ॥ सत्त्व इति ॥ ॥ एतेनेति ॥ विरोधादनिर्वाच्य वादस्यासिद्धत्वेनेत्यर्थः। ननु विरोधो न दोष इत्यत आह ॥ अन्योन्येति ॥ सिद्धेऽनिर्वाच्यत्वे विरोधस्यादोषत्वं तस्मिंश्चानिर्वाच्यत्ववादसिद्धिरित्यर्थः। ननु रूप्ये निषेधसमुच्चयस्यातात्विकत्वे तत्साधकख्यात्याद्यनुपपत्त्या तस्य सदादिवैलक्षण्यसाधनमयुक्तमित्यत आह ॥ सदादीति ॥ तत्प्रतियोगिनो रूप्यगतसत्त्वादिनिषेधप्रतियोगिनः सत्त्वादेरित्यर्थः। रूप्यं वास्तवसत्त्वादि किंचिद्रूपरहितं स्वरूपतो दुर्निरूपत्वादित्यनुमाने व्यभिचारशंकां वारयति ॥ न हीति ॥ ॥ सत्त्वादीति ॥ अविद्यानिवृत्तावपि सत्त्वादेर्दुर्निरूपत्वमात्रेणानिर्वाच्यत्वमेव वक्तुं युक्तमित्यर्थः। न चाविद्यावृत्तेः पंचमप्रकारत्वपक्षे नैतत्त्रितयविलक्षणत्वमात्रमनिर्वचनीयत्वं किं तु मुक्तिकालानवस्थायित्वसहितम्। तथा च मुक्तिकालावस्थायिन्यामविद्यानिवृत्तावनिर्वाच्यत्वनिषेधो युज्यत इति वाच्यम्। ब्रह्मभिन्नस्य मुक्तिकालान्वयवदनिर्वाच्यविशेषस्याप्यविद्यानिवृत्तेर्मुक्ति कालान्वयसंभवेन तत्रानिर्वाच्यत्वनिषेधायोगात् ॥ सत्त्वादिवदिति ॥ ननु सत्त्वादिराहित्ये प्रमाणोक्तिर्नास्त्येव। ज्ञापकमात्रोक्तिस्तु वादिविप्रतिपत्तिनिरासार्थेति चेन्न। सत्त्वादावपि केषांचिद्विप्रतिपत्तेः ॥ विधीति ॥ न चेष्टापत्तिः। निषेधपक्षपातायोगात् ॥ विधिसमुच्चयस्येति ॥ निषेधसमुच्चयस्यातात्विकत्व इत्यर्थः ॥ अतात्विकं हीति ॥ अतात्विकात्यंताभावप्रतियोगित्वस्य तात्विकेपि सत्त्वादिति भावः। उक्तानुमाने दोषमाह

(तरङ्गिणी)

॥ किं चेति ॥ हेतोरतात्विकत्वे ब्रह्मणि व्यभिचारः साध्यस्य तथात्वे सिद्धसाधनमित्यर्थः ॥ दुर्निरूपत्वमिति ॥ आद्ये सत्वादिना सुनिरूपत्वम्। द्वितीये केनापि प्रकारेण दुर्निरूपत्वमित्यनेन प्रकारेण सुनिरूपत्वमिति व्याघात इत्यर्थः। ॥ अत एवेति ॥ व्याघातादेवेत्यर्थः। केनापि प्रकारेण दुर्निरूपत्वमिति प्रकारेण सुनिरूपत्वं वा? उक्तप्रकारेण दुर्निरूपत्वं वा? आद्ये दोषमाह ॥ केनापीति ॥ केनापि प्रकारेण दुर्निरूपत्वमित्येतस्मात्प्रकारादन्यो यः केनापि प्रकारेण दुर्निरूपत्वमित्येतदन्येन प्रकारेण दुर्निरूपत्वं तेनैव प्रकारेण सुनिरूपत्वात्केनापि प्रकारेण दुर्निरूपत्वमित्येतत्प्रकारान्यप्रकारेण दुर्निरूपत्वं व्याहतं। द्वितीये केनापि प्रकारेण दुर्निरूपत्वमित्यस्य दुर्निरूपत्वे केनापि प्रकारेण दुर्निरूपत्वमित्येतदन्यप्रकारेण दुर्निरूपत्वमित्यस्य दुर्निरूपत्वे केनापि प्रकारेण सुनिरूपत्वमेव प्राप्तमिति व्याघातः ॥ तस्येति ॥ प्रत्युत सदादिवैलक्षण्यवास्तवत्वं प्रत्येव हेतुत्वमिति भावः। ननु ध्वंसप्रतियोगित्वरूपमनित्यत्वमपि प्रागभावे नास्ति। घटध्वंसं प्रति तत्प्रागभावस्याजनकतया तस्य तदप्रतियोगित्वादित्यत आह ॥ प्रागभावस्यापीति ॥ ननु घटादेः प्रतियोगिनः कथं ध्वंसरूपत्वमित्यत आह ॥ भावस्येति ॥ एकत्रेति। ननु न वयं सामान्यादिदृष्टांतैः सत्त्वासत्त्वयोरभावमेव ब्रूमो येन सामान्यादिदृष्टांतेन नित्यत्वानित्यत्ववत्सत्त्वासत्त्वयोरप्येकत्र समुच्चय आपाद्येत। किं तु प्रमाणैः सिद्धे समुच्चये सामान्यादि दृष्टांतयाम इति चेन्न। प्रमाणसिद्धत्वस्यैवासिद्धेः। अन्यथान्योन्याश्रयादित्युक्तत्वात्। सत्त्वासत्त्वोभयाभावसाधने व्याघात इत्यत्र परिहारमाशंक्य निराकरोति ॥ नचाध्यस्त इति ॥ विमतं सत्त्वाभाववदपि तद्विरुद्धासत्त्वाभाववत् कल्पितत्वात्। यत्कल्पितं तत्तदभाववदपि तद्विरुद्धाभाववत् यथाध्यस्तं कल्पितमनित्यत्वाभाववदपि तद्विरुद्धनित्यत्वाभाववत्। तथा च सत्त्वनिषेधेपि न तद्विरुद्धस्यासत्त्वस्य प्राप्तिर्येनासत्त्वस्यापि निषेधे व्याघातः स्यादिति शंकार्थः ॥ त्वन्मत इति ॥ तथा च दृष्टांतासिद्धिरित्यर्थः। न च कल्पिते तात्विकानित्यत्वाभावेपि कल्पितं तदस्तीति वाच्यं। तात्विकनित्यत्वस्य ब्रह्मणीव तत्र दुर्वारत्वापातात् ॥ कल्पितत्वेति ॥ पक्षीभूते कल्पितेऽकल्पितत्वाभाववति तद्विरुद्धकल्पितत्वाभावोस्ति? न वा? आद्ये स्वरूपासिद्धिः। द्वितीये तत्रैव व्यभिचार इति व्याघातः। एवं पक्षे विरुद्धधर्माभावरूपं साध्यमस्ति चेत् तत्र विरुद्ध धर्मविरोधिनः विरुद्ध धर्माभावः तदभावोऽस्ति? न वा? आद्ये साध्यस्य बाधः। द्वितीये तत्रैव व्यभिचार इति व्याघात इत्यर्थः। ननूक्तसाध्ये धर्मिसत्त्वापेक्षेति विरुद्धासत्त्वविशेषणं। तथा चाकल्पितत्वविरुद्धं धर्मिसत्त्वापेक्षं यत्कल्पितत्वं तदभावः पक्षेस्तीति न व्यभिचारः। न वाऽसिद्धिः। कल्पितत्वमात्रस्य हेतूकृतस्य पक्षेपि सत्त्वात्। एवं विरुद्धधर्माभावरूपसाध्यस्य सत्त्वासत्त्वाभ्यामपि न बाधव्यभिचाराविति शंकते ॥ अथेति ॥ तर्ह्यनुमाने इष्टापत्तितिरत्याह

(तरङ्गिणी)

॥ तर्हीति ॥ सत्त्वाभाववत्यध्यस्ते धर्मिसत्त्वापेक्षं यदसत्त्वं तदभावो मम संमतः धर्मिसत्त्वानपेक्षत्वादसत्त्वस्येत्यर्थः। असत्त्वस्य धर्मिसत्त्वापेक्षत्वे कल्पिते विरुद्धयोरपि धर्मयोरभावे च दोषमाह ॥ अन्यथेति ॥ ननु परस्परात्यंताभावरूपयोः संयोगात्यंताभावसंयोगयोरभेद-भेदयोश्चात्यंताभावौ संयोगतदत्यंताभावरूपौ भेदाभेदरूपौ च यथैकत्र वर्तेते तद्वत्तथाविधयोः सत्त्वासत्त्वयोरप्यत्यंताभावावेकत्र स्यातामित्याशंकां परिहरति ॥ न च तार्किकेति ॥ परस्परात्यंताभावरूपयोः समानाधिकरणात्यंताभावप्रतियोगिनोः सामानाधिकरण्यनियमात् संयोगतदत्यंताभावयोरिव सत्त्वासत्त्वयोरपि सामानाधिकरण्यं स्यादित्याह ॥ तद्वदेवेति ॥ ननु सत्त्वासत्त्वयोरेकावच्छेदेनैकत्र वृत्तिरापाद्यते, एकत्र वृत्तिमात्रं वा? नाद्यः। दृष्टांतासिद्धेः। न द्वितीयः। संयोगतदत्यन्ताभावयोरिव भिन्नावच्छेदेन सत्त्वासत्त्वयोरपि वृत्तेः। इयांस्तु विशेषः। संयोगादौ देशोवच्छेदकः सत्त्वादौ तु काल इतीत्याशंकते ॥ अथेति ॥ सत्त्वासत्त्वाभावयोरपि भिन्नकालावच्छेदेनैकत्र सत्त्वादिष्टापत्तिरित्याह ॥ सम इति ॥ नन्वाद्यपक्षे सत्त्वादिकं तात्त्विकं वाऽतात्त्विकं वा धर्मिसमसत्ताकं वा विवक्षितम्? नाद्यः। असद्ब्रह्मणोरतिव्याप्तेरित्याह ॥ असतोपीत्यादिना ॥ द्वितीये दोषमाह ॥ अतात्त्विकेति ॥ तथा चाव्याप्तिरित्यर्थः। तृतीयेऽतिव्याप्त्यव्याप्तिदोषावाह ॥ धर्मीति ॥ ॥ कथंचिदिति ॥ अतिव्याप्तेरपि वक्ष्यमाणत्वादिति भावः। तामेवाह ॥ निर्विशेषत्वेति ॥ विशेषस्य कल्पितत्वे तदभावोपि तत्र नास्तीति तु व्याहत्यादिना निरस्तं। सत्ताजातिरूपसत्त्वरहितस्यापि सामान्यादेः सद्रूपत्ववत्सत्त्वरहितस्यापि ब्रह्मणः सद्रूपत्वमस्त्विति शंकां परिहरति ॥ सामान्यादेरिति ॥ तथा च ब्रह्मण्यतिव्याप्तिरित्यर्थः ॥ ब्रह्मण इति ॥ ननु सत्त्वविशिष्टसद्वाचकस्य सत्यपदस्य धर्मिमात्रबोधकत्वे लक्षणैव। न हि धर्मिस्वरूपमात्रवाचकत्वं कस्यचिदपि पदस्यास्तीति। मैवं। न हि वाच्यविशेषणत्यागे लक्षणा। किंत्ववाच्यपरिग्रहः। अत एव गौरनित्य इत्यादौ न लक्षणा। अत एव स्थलपद्मे पंकजपदस्य न लक्षणेत्याहुः। स्वरूपमात्रलक्षणपदस्याप्यसत्त्वाच्च। तस्माद्गंगापदलक्ष्यमगंगास्वरूपमिव सत्यपदलक्ष्यं ब्रह्मासत्यस्वरूपमिति तत्रातिव्याप्तिरित्यर्थः ॥ बाधबोध्यस्येति ॥ ननु बाधस्याधिष्ठानमात्रगोचरत्वेन रूप्यवत्तत्सत्त्वविरहस्यापि साक्षिसिद्धतया बाधबोध्यत्वमसिद्धमिति चेन्मैवं। घटो नास्तीति वद्रूप्यं नास्ति रूप्यसत्त्वं नास्तीत्यबाधितानुभवेन तत्सत्त्वाभावस्य बाधविषयत्वावश्यंभावात्। ॥ उक्तदोषादिति ॥ रूप्यगतसत्त्वाभावस्य बाधबोध्यत्वं न स्यादित्यर्थः।

॥ अनिर्वाच्यत्वलक्षणभंगः ॥

## न्यायामृतकण्टकोद्धारः

एवं स्वरूपेण वा देहात्मैक्येन वाऽध्यासाभावान्न प्रपञ्चस्यानिर्वचनीयत्वम्। अनिर्वचनीयस्य लक्षणप्रमाणयोरसंभवाच्च। तन्नेति वक्तुं परमतमनुवदति ॥यच्चेति॥ ॥कार्यायोगादिति॥ निर्वचनलक्षणकार्यायोगादित्यर्थः। निर्वचनं तु प्रत्यक्षसिद्धमिति भावः ॥सदेकरूपत्वेऽपीति॥ यथा नराणां नरसिंहविलक्षणत्वं तथा सदेकरूपे सदसद्रूपविलक्षणत्वोपपत्तेरित्यर्थः ॥नापीति॥ सदेकस्वभावविलक्षणत्वे सति असदेकस्वभावविलक्षणत्वमित्यर्थः। अन्यथा दूषणासंगतेरिति ॥नापीति॥ अत्र सद्विलक्षणत्वं नाम यत्किञ्चित्सद्विलक्षणत्वमेवाभिप्रेतम्। पूर्वोक्तयुक्तेरिति ॥नापीति॥ पूर्वलक्षणानामन्योन्याभावघटितत्वात् एतेषां चात्यन्ताभावघटितत्वात् अपौनरुक्त्यम् ॥तथापीति॥ उपलक्षणमेतत्। सद्विलक्षणत्वे सति असद्विलक्षणत्वे सति सदसद्विलक्षणत्वमपि द्रष्टव्यम्। न चैवं सिद्धसाधनम्। सन्नेति प्रतीतिप्रयोजकस्य सद्विलक्षणत्वस्य विवक्षितत्वात्। न च सदन्तरविलक्षणे तथा प्रतीतिरस्ति। येन सिद्धसाधनता स्यात्। एवञ्च सत्त्वरहितत्वे सति असत्वरहितत्वे सति सदसत्त्वरहितत्वमपि साधु। अत्र सत्त्वेन विचारासहत्वं प्रागूर्ध्वं यस्य सत्त्वं न मध्ये तस्य कुतो भवेत्। अन्यथा शुक्तिरूप्यादेः सत्त्वं केन निवार्यते इत्यादिरूपेण द्रष्टव्यम् ॥विमतमिति॥ मिथ्यात्वानुमानविप्रतिपत्यवसरे यत् पक्षतावच्छेदकत्वेनोक्तं तदेवात्र द्रष्टव्यम् ॥बाध्यत्वादिति॥ नन्वनिर्वचनीयत्वेन बाध्यत्वं बाध्यत्वेन चानिर्वचनीयत्वमित्यतोऽन्योन्याश्रय इति चेन्न। श्रुत्यादिनापि तत्सिद्धिसंभवात्। ननु तथापि बाध्यत्वरूपानिर्वचनीयत्वे साध्ये बाध्यत्वं कथं हेतुः साध्याविशेषादित्यत आह ॥सामान्यत इति॥ तथाचाधिकरणविशेषनिष्ठत्वेनासिध्यचा तत्र हेतुवृत्यवृत्तिभ्यां नान्वयित्वासाधारण्ये इति भावः ॥अनुपपत्तिश्चेति॥ यद्यप्यर्थापत्तिर्नानुमानाद्भिद्यते। तथापि भट्टमतानुसारिणा तथोक्तमिति द्रष्टव्यम्। उपलक्षणमेतत्। आगमोऽप्यत्रार्थे नासदासीदित्यादिर्द्रष्टव्यः। एवमनिर्वचनीयत्वे तत एवाध्यस्तत्वमपि स्वरूपेणांगीकर्तव्यमिति भावः। तत्र लक्षणं दूषयितुं पृच्छति ॥अत्रेति॥ लक्षणे इत्यर्थः। सदसत्पदाभ्यां विवक्षिते इति शेषः ॥शुद्धेति॥ तथाचासंभव इति भावः ॥त्वन्मत इति॥ अस्मन्मते तु तुच्छं बाध्यमेवेति त्वन्मते इत्युक्तम्। अत्रापि पूर्वोक्त एव दोष इति भावः। चतुर्थपञ्चमयोरपि तदेव दूषणं द्रष्टव्यम् ॥ममापीति॥ तथाच तादृशानिर्वचनीयत्वसाधने सिद्धसाधनमिति भावः ॥तयोरिति॥ त्वन्मत इति शेषः ॥ममेति॥ मदभिप्रेतसत्त्वासत्त्वविवक्षायां लक्षणेऽसंभवोऽनुमाने बाधादिकं द्रष्टव्यम्। सद्विलक्षणत्वम् इत्यत्राविशेषितसद्विलक्षणत्वं वा विशेषितसद्विलक्षणत्वं वा ? नाद्य इत्याह ॥किञ्चेति॥ ॥द्वितीयमाशंकते॥ पारमार्थिकेति ॥बाध्यत्वमेवेति॥ न चेष्टापत्तिः तस्याग्रे निरसिष्यमाणत्वात् ॥किञ्चेति॥ नन्वनभिमताभिमतपक्षविकल्पेन प्राग्दूषणस्योक्तत्वात् पुनस्तथाविकल्पने पौनरुक्त्यमिति वाच्यम्। पूर्वमनेकपक्षत्वेन विकल्पनात्। अत्र द्वाभ्यामेवेति भेदात्। पूर्वापेक्षया दूषणान्तरं वक्तुं विकल्पनाच्च न पौनरुक्त्यमिति। परस्परेतीष्टापत्तौ हेतुगर्भमत एवाह ॥पारिभाषिकयोरिति॥ सांकेतिकयोरित्यर्थः। एतेनेति परामृष्टं हेतुमाह ॥असद्वैलक्ष्यण्यमेवेति॥ यद्वाऽस्तु तेन तत्साधनं न चात्मत्वमुपाधिः। सत्त्वे तस्यातन्त्रत्वेनाप्रयोजकत्वादित्याह ॥सत्त्व इति॥ ॥अन्योन्येति॥ अनिर्वचनीयत्वसिद्धौ तल्लक्षणे विधिनिषेधयोरविरोधसिद्धिः। ततस्तत्सिद्ध्या लक्षणसंभवात् अनिर्वाच्यत्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥अन्यथेति॥ अनिर्वचनीयत्वसिद्ध्यभावेऽपि विरोधाभाव इत्यर्थः। ननु सत्त्वादिराहित्यस्यातात्त्विकत्वे कथं

(कण्टकोद्धारः)

सदादिवैलक्ष्यण्यम्? तद्राहित्याभावस्य तदात्मकत्वेन व्याप्तत्वादित्यत आह ॥सदादीति॥ सत्त्वादीनां दुर्निरूपत्वमात्रेणैव सदादिविलक्षणत्वरूपानिर्वचनीयत्वोक्तिरित्याशयात् ॥सत्त्वादीति॥ ननु पञ्चमप्रकारा-विद्यानिवृत्तिपक्षे विशेषणत्रयमात्रघटितमनिर्वचनीयत्वं न। किन्तु मोक्षकालानवस्थायित्वघटितश्च। तथा च तादृशाविद्यानिवृत्तौ अनिर्वाच्यत्वनिषेधो युज्यत एवेति चेन्न। तथात्वे सत्वरहितत्वे सतीत्यस्य व्यर्थत्वापत्तेः। उक्तविशेषणेनैव ब्रह्मव्यावृत्तिसंभवात्। न चोक्तविशेषणेनैव तादृशी विवक्षा लब्धेति वाच्यम्। तथापि असत्यतिव्याप्त्यपरिहारात्। न चासद्विलक्षणत्वेन तत्परिहारः तस्याप्यतात्विकस्य तत्र संभवात्। असत्त्वस्य दुर्निरूपत्वेन तदभावस्य तत्र सौलभ्यात्। मोक्षकालावस्थायित्वस्य दुर्निरूपत्वेन तदभावस्य ब्रह्मण्यपि संभवाच्च। तस्माद्यत्किञ्चिदेतत् ॥सत्त्वादिवदिति॥ सत्त्वादिराहित्ये प्रमाणोक्तौ च प्रमाणविषयत्वेन तात्विकत्वावश्यंभावात्। अन्यथा व्याघातात्। न चात्र प्रमाणं नोच्यते। वादिविप्रतिपत्तिनिरासार्थं ज्ञापकमात्रस्यैवाभिधानादिति वाच्यम्। ज्ञापकमात्रेण विप्रतिपत्त्यनिरासात्। अन्यथा बौद्धोक्तज्ञापकेन तवापि शून्ये विप्रतिपत्तिनिरासः स्यात्। ज्ञापकोक्तेः सर्वपदार्थसाधारणत्वेन तव सर्वत्रापि विप्रतिपत्त्यभावापत्तेश्च ॥विधीति॥ न चेष्टापत्तिः। तथात्वे सदसत्वस्वीकार एव श्रेयान् लाघवात्। न च तस्य दुर्निरूपत्वेनाशक्यांगीकारत्वमिति वाच्यम्। अत एव निषेधसमुच्चयवदतात्त्विकस्यांगीकर्तुमुचितत्वात्। दुर्निरूपत्वं हि तात्विकत्वविरोधि। अन्यथा निषेधसमुच्चयोऽपि न स्यादित्युक्तमेव ॥उभयेति॥ ननूभयातात्त्विकत्वं कथं विरुद्धम्? वल्मीकादौ स्थाणुत्वपुरुषत्वयोरुभयोरप्यतात्विकत्वदर्शनात्। न च परस्परविरहरूपयोरुभयोरेकत्रातात्विकत्वं विरुद्धमिति वाच्यम्। तंत्वादौ घटतत्प्रागभावयोस्तादृशयोरप्यतात्विकत्वदर्शनात्। नचात्यंताभावरूपयोस्तादृशयोरेकत्रा-तात्विकत्वं विरुद्धमिति वाच्यम्। नियामकाभावात् सत्त्वासत्त्वयोः परस्पराभावरूपत्वाभावाच्चेति चेन्न। निरुपाधिकसहचारेणात्यंताभावतत्प्रतियोगिनोरेकत्रातात्विकत्वविरोधदर्शनात् निरुपाधिकसहचारस्यैव नियाम-कत्वात्। तदनादरे चातिप्रसंगात्। न च सत्त्वासत्त्वयोः परस्परविरहरूपत्वमसिद्धमिति वाच्यम्। सत्वाभावातिरिक्तस्यासत्त्वस्य दुर्निरूपत्वात्। न च सत्त्वेन प्रतीत्यनर्हत्वमेवासत्त्वं सत्त्वं त्वबाध्यत्वमिति वाच्यम्। असतोऽपि सत्त्वेन प्रतीत्यर्हत्वात्। शब्दाभासादिनाऽसत्त्वेन ज्ञानसंभवात्। यथा चैतत्तथोपपादितमुपपादयिष्यते चेत्यलम् ॥विधीति॥ यत्र यन्निषेधसमुच्चयः अतात्विकस्तत्र तद्विधि-समुच्चयस्तात्विको यथा घटे द्रव्यत्वघटत्वयोरिति व्याप्तेरिति भावः। न च वंध्यासुते गौरत्व-श्यामत्वयोर्निषेधसमुच्चयस्यातात्विकत्वेऽपि विधिसमुच्चयस्य तात्विकत्वाभावात् व्यभिचार इति वाच्यम्। तत्र निषेधसमुच्चयस्यातात्विकत्वासिद्धेः। न च धर्म्यसत्वे कथं तदाधेयनिषेधसमुच्चयस्य तात्विकत्वमिति वाच्यम्। अबाध्यत्वस्यैव तात्विकत्वे तंत्रत्वेन धर्मिसत्त्वस्यातंत्रत्वादिति ॥अतात्विकं हीति॥ अतात्विकात्यंता-भावप्रतियोगित्वरूपस्यातात्विकत्वस्यास्माकमिष्टत्वादिति भावः। नहि स्वभावतो दुर्निरूपस्य किमपि वास्तवरूपं संभवतीत्यनेन स्वभावतो दुर्निरूपत्वं वास्तवरूपाभावे हेतुत्वेन विवक्षितम्। तन्नेत्याह ॥किञ्चेति॥ अनैकान्त्यं ब्रह्मणि। कल्पितवास्तवरूपाभावस्यास्माभिरंगीकृतत्वेन सिद्धसाधनमिति भावः। न च धर्मिसमसत्ताकत्वादेर्हेत्वादौ तंत्रत्वात् नोक्तदोष इति वाच्यम्। अनुभूतिर्नित्यादौ हेत्वादेस्तादृक्ता भावेनासिद्ध्याद्यापातात्। न च व्यावहारिकेण दुर्निरूपत्वेन व्यावहारिकवास्तवरूपाभावः साध्यत इति

(कण्टकोद्धारः)

वाच्यम्। व्यावहारिकत्वस्यापि बाध्यत्वेन पारमार्थिकवास्तवरूपसद्भावप्रसंगादिति विरोध इति तयोरेव वास्तवरूपत्वसंभवात् न किमपि वास्तवं संभवतीत्यनेन विरोध इत्यर्थः ॥ अन्यत्वादिति॥ तथा च व्याघात इति भावः। न केवलं व्याघातोऽपित्वसिद्धिरपीत्याह ॥ असत इति॥ ॥ तस्येति॥ ननु सत्त्वासत्त्वाभ्यां दुर्निरूपत्वं नाम बाधिततद्द्वयकत्वम्। तच्च धर्मविशिष्टधर्म्यतात्त्विकत्वे हेतुः। सदसद्वैलक्ष्यण्यमपि धर्म इति कथं न तस्यातात्त्विकत्वं साधयेदिति चेन्न। एवं हि ब्रह्मणोऽपि निर्धर्मत्वेन बाधिततद्द्वयकत्वेन हेतुनाऽनंदादिधर्मविशिष्टस्यातात्त्विकत्वापातेनानन्दादेरप्यतात्त्विकत्वं स्यात्। न च तत्रापि विशिष्ट-रूपेणातात्त्विकत्वमिष्टमेवेति वाच्यम्। प्रपञ्चस्यापि विशिष्टरूपेणातात्त्विकत्वं न स्वरूपेणेत्यापत्तेः। शुक्तिरूप्यस्यापि तादृशेन हेतुना कल्पितत्वविशिष्टस्य मिथ्यात्वापत्तौ तद्धर्मस्य कल्पितत्वस्यापि अतात्त्विकत्वापत्तेः। कल्पितत्वस्य च कल्पितत्वेऽकल्पितत्वमेव सत्यं स्यादिति। तस्मान्न सत्त्वासत्त्वाभ्यां दुर्निरूपत्वमुभयवैलक्ष्यण्यातात्त्विकत्वे हेतुः। किञ्चोक्तरूपं दुर्निरूपत्वमसिद्धम्। सत्त्वासत्त्वयोरुभयोर्बाधा-दर्शनादिति। ॥ तदात्मकत्वादिति॥ भावाभावात्मकत्वादित्यर्थः। यथा चैतत्तथा प्रागेवोक्तमिति। किञ्चैते पारिभाषिके नित्यत्वानित्यत्वे। व्यवहारप्रयोजके तु नित्यत्वानित्यत्वे सामान्यादिसाधारणे। अन्यथा सामान्यादौ नित्यत्वादिव्यवहारो न स्यात्। तद्व्यतिरेकयोश्च नैकत्र समुच्चयः। पारिभाषिकव्यतिरेकसमुच्चयश्च नास्माकमनिष्ट इत्याह ॥ सामान्येति॥ ननु प्रागभावस्य नानित्यत्वं ध्वंसाभावादित्यत आह ॥ प्रागभावस्यापीति॥ ॥ अन्यथेति॥ परस्पराभावात्मकयोः सत्त्वासत्त्वयोः व्यतिरेकसमुच्चयो यदि पारिभाषिकनित्यत्वानित्यत्व-व्यतिरेकसमुच्चयदृष्टान्तेनांगीक्रियते इत्यर्थः। ननु न वयं दृष्टान्तमात्रेण निषेधसमुच्चयं ब्रूमो येन तेनैव दृष्टान्तेन सत्त्वासत्त्वयोरपि समुच्चय आपाद्येत। किन्तु प्रमाणतः सिद्धे समुच्चये दृष्टान्तमपि वदामः। नैवं सत्त्वासत्त्वयोः समुच्चये प्रमाणमस्तीति चेन्न। निषेधसमुच्चयप्रमाणानामग्रे निराकरिष्यमाणत्वात्। सत्त्वासत्त्वे एकधर्मिनिष्ठे धर्मत्वात् रूपरसवदित्यादेः सुसाधत्वेन विधिसमुच्चयप्रामाणिकत्वस्यापि वक्तुं शक्यत्वात्। प्रमाणबाधादेरुभयत्राविशेषात् ॥ त्वन्मत इति॥ तथा चापसिद्धान्त इति भावः। न च तात्त्विकानित्यत्वाभावेऽपि धर्मिसमसत्ताकानित्यत्वाभ्युपगमेन न सिद्धान्तविरोध इति वाच्यम्। तात्त्विकयोस्तयोस्सर्वत्राप्यभावेन कल्पितयोरभाववचनस्यायुक्तत्वात्। तात्त्विकयोस्तयोरप्रसक्त्या प्रतिषेधानुपपत्तेश्च ॥ कल्पितत्वरूपहेतोरिति॥ न चातात्त्विकहेतुसद्भावेन वास्तवविरुद्धधर्माभावसाधने न व्याघात इति वाच्यम्। कल्पितत्वस्यातात्त्विकत्वेऽकल्पितत्वं तात्त्विकं स्यात्। वास्तवविरुद्धधर्माभावोऽप्यतात्त्विकश्चेत् वास्तवविरुद्धधर्मवत्त्वं तात्त्विकं स्यात्। तथा च व्याघातः। तस्य तात्त्विकत्वे च कल्पिते किमपि तात्त्विकं नेत्यस्य व्याघात एवेति भावः। समानन्यायेनान्यस्यापि तत्र तात्त्विकस्य वृत्तिः प्रसज्येतेति ॥ अन्यथेति॥ असत्त्वादेर्धर्मिसत्तासापेक्षत्व इत्यर्थः। न चासत्कल्पितादेरसत्कल्पितादेर्धर्मस्यांगीकरणान्नासदादिबहिर्भाव इति वाच्यम्। कल्पितत्वादेः कल्पित-त्वेऽकल्पितत्वादिकं सत्यं स्यादित्युक्तत्वात्। अत्यंताभावरूपपरस्परविरहात्मकयोरेकस्य कल्पितत्वे परस्य सत्यत्वनियमात्। किञ्चाबाधाद्यगोचरत्वेन कल्पितत्वादेः सत्यत्वावधारणेन कथं तस्य कल्पितत्वम्? अन्यथा ब्रह्मणोऽपि कथं तन्न स्यादिति ॥ तद्वदेवेति॥ न चातात्त्विकयोस्तयोः समुच्चय इष्ट एवेति वाच्यम्। तथात्वे तन्निषेधेन तद्वैलक्ष्यण्यपर्यन्तधावनानुपपत्तेः। लाघवात् सदसदात्मकत्वस्यैव स्वीकर्तुमुचितत्वात्।

(कण्टकोद्धारः)

अतात्त्विकत्वस्यानिर्वचनीयसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयाच्च। उपसंहरति ॥तस्मादिति॥ ननु न मया सत्त्वासत्त्वाभावरूपमनिर्वचनीयत्वमुच्यते। येनोभयविधिसमुच्चयवदुभयनिषेधसमुच्चयो विरुद्ध इति दूषणं शक्यं स्यादपितु सत्त्वादिना विचारासहत्वम्। तत्कथं विरोध इत्यत आह ॥अपि चेति॥ ॥असतोपीति॥ असतस्त्वया निर्धर्मकत्वेनांगीकारादित्यर्थः ॥सत्पदलक्ष्यस्येति॥ सत्त्वाधिकरणत्वे हि सत्पदवाच्यतैव स्यात्। शक्यतावच्छेदकविशिष्टस्य शक्यत्वनियमात्। अन्यथा घटादेरपि घटादिशब्दवाच्यता न स्यात्। न च तात्त्विकसत्त्वानधिकरणत्वादवाच्यता अतात्त्विकसत्त्वाधिकरणत्वाभावाल्लक्षणाभाव इति वाच्यम्। एवं हि प्रपञ्चस्यापि सत्पदलक्ष्यता स्यात् तात्त्विकसत्त्वानधिकरणत्वात्। लक्षणाभावश्च स्यात् अतात्त्विकसत्त्वाधिकरणत्वात्। तथाचासंभवो वाऽतिव्याप्तिर्वेति भावः। ननु सत्त्वाधिकरणत्वमित्यत्र न सत्त्वं तात्त्विकं नाप्यतात्त्विकं किन्तु धर्मिसमसत्त्वमतो नोक्तदोष इत्यत आह ॥धर्मीति॥ तथा चातिव्याप्त्यसंभवादिति भावः ॥धर्मसत्त्वादेरेवेति॥ नचायं सुहृदुपदेश आस्तामतिव्याप्त्याद्यभावेन लक्षणस्य निर्व्यूढत्वादिति वाच्यम्। व्याहतेरुक्तत्वेन लक्षणस्यासंभवित्वात्। सुहृदुपदेशस्त्विति मन्दत्वप्रदर्शनार्थो लघीयस्युपाये सति गुरुभूतोपायाश्रयणात्। न तु लक्षणादुष्टत्वेनेति भावः। अतिव्याप्तिमप्याह ॥निर्विशेषेति॥ ब्रह्मण इति। सद्रूपत्वस्यैव सच्छब्दप्रवृत्तिनिमित्ततासंभवादिति भावः। न च सत्त्वविशिष्टवाचकस्य कथं निर्धर्मके शक्तिरिति वाच्यम्। निर्धर्मकत्वरूपधर्मभावाभावाभ्यां व्याघातस्योक्तत्वात्। निर्धर्मकत्वविशिष्टत्ववत् सद्रूपत्व-विशिष्टत्वसंभवाच्च। अन्यथा निर्धर्मकपदादेरप्यप्रवृत्तिः स्यादिति ॥बाधेति॥ न च बाधस्याधिष्ठानमात्रगोचरत्वेन सत्त्वादिराहित्यस्य न तद्धीगोचरत्वमिति वाच्यम्। अधिष्ठानमात्रगोचरस्य धर्मिज्ञानतुल्यत्वेन बाधकत्वायोगादित्युक्तत्वात्। तथाच बाधबोध्यस्य धर्मितुल्यत्वे भ्रान्तिबाध व्यवस्था न स्यादिति भावः। उक्तेति। भ्रान्तिबाधव्यवस्थाभावरूपदोषादित्यर्थः। ॥अत एवेति॥ अद्वैतहानेरेवेत्यर्थः ॥किञ्चेति॥ नचातात्त्विकभेदेन तन्निर्वचनसमर्थनम्। श्रुत्यादिना तु पारमार्थिकभेदनिराकरणमिति वाच्यम्। तथात्वेऽनिर्वचनीयत्वस्यापि अतात्त्विकत्वापत्तेः। तस्य बाध्यत्वे च सत्त्वादिकं तात्त्विकं स्यादित्यलं मृतमारणेनेत्युपरम्यते। इति अनिर्वाच्यलक्षणभङ्गः ।

## न्यायामृतप्रकाशः

प्रपंचेऽनिर्वाच्यत्वं नास्तीति वक्तुं पराभिमतदृष्टांते शुक्तिरूप्यादौ लक्षणप्रमाणयोरभावान्नानिर्वाच्यत्वम् इत्यभिसंधाय परपक्षं प्रस्तौति ॥यच्चोक्तमित्यादिना॥ ॥निरुक्तिविरह इति॥ वचपरिभाषण इति धातोः नितरां उक्तिः परिभाषणाख्यव्यवहाररूपा तद्विरह इत्यर्थः। तथाचानिर्वाच्यत्वं नामाव्यवह्रियमाणत्वमित्यभिप्रेतमिति ज्ञातव्यम्। निरुक्तेः व्यवहारादित्यर्थः। तथाच रूप्यादावव्यवह्रियमाणत्वं नास्तीत्यसंभव इति भावः। साक्षान्निरुक्तिरूपव्यवहारनिमित्ताभिप्रायेण ज्ञानस्येत्युक्तम्। परंपरया तदभिप्रायेण अर्थस्येत्युक्तं तस्य ज्ञानद्वारा निमित्तत्वादिति भावः। अत एवेत्युक्तं विशदयति ॥निमित्तं विनेति॥ इदं रूप्यमिति निरुक्तिरूपकार्यस्य प्रत्यक्षसिद्धत्वान्निमित्तमपि ज्ञानादिकं कल्पनीयमिति तद्विरहस्यासंभव इति भावः। तयो

(प्रकाशः)

रूप्यज्ञानतदर्थभूतरूप्ययोः। अर्थज्ञानात्मकोभयविधभ्रमांगीकारेणोभयोरप्यनिर्वाच्यत्वादिति भावः ॥सदसदिति॥ सच्च तदसच्च सदसत् तद्रूपं यद्विशिष्टं तद्विलक्षणत्वमित्यर्थः ॥सदेकेति॥ सदेकस्वभावे प्रपंचे सदसद्रूपविशिष्टवैलक्षण्यस्य प्रतिवाद्यंगीकृतत्वेनास्मदभिमतानिर्वाच्यत्वासिद्धिरिति भावः ॥सदसद्रूपत्वेपीति॥ सद्वैलक्षण्यस्योक्त्याऽसत्वस्याऽसद्वैलक्षण्यस्योक्त्या च सत्वस्यैव प्राप्त्या प्रपंचे सदसद्रूपत्वेऽप्युक्तलक्षणोपपत्त्यास्मदभिमतानिर्वाच्यत्वासिद्धिरिति भावः ॥सतोपीति॥ तथाच सद्विलक्षणत्वांशः परस्येष्ट एवेत्यर्थः। असद्वैलक्षण्यं त्वंगीकृतमेवास्ति। सदसद्रूपवस्तुनोऽप्रसिद्धत्वे तद्वैलक्षण्यस्यापि परेणांगीकृतत्वेन नैतादृशानिर्वाच्यत्वं प्रतिवाद्यनिष्टमित्यर्थः। अन्योन्याभावगर्भलक्षणं दूषयित्वा तद्रीत्यैवात्यंताभावगर्भमपि लक्षणं दूषयति ॥नापीति॥ सत्वे सत्यसत् सद्रूपं यदसत् तत्वरूपं यद्विशिष्टं तद्विरह इत्यर्थः ॥केवलेति॥ प्रपंचे केवलसत्वस्यैवांगीकारेण सत्वे सत्यसत्वरूपविशिष्टविरहस्य प्रतिवादिनः सिद्धत्वादिति भावः ॥सदसत्त्वेपीति॥ सत्वराहित्योक्त्याऽसत्वस्य असत्वविरहोक्त्या च सत्वस्यैव प्राप्त्या सदसद्रूपत्वेऽप्युक्तलक्षणोपपत्त्याऽस्मदभिमतानिर्वाच्यत्वासिद्धिरिति भावः ॥विचारासहत्वमिति॥ "प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्। गाहते तदनिर्वाच्यमाहुर्वेदांतवादिन" इति वचनादिति भावः। लक्षणप्रमाणाभ्यामेव वस्तुसिद्धेरनिर्वाच्यत्वलक्षणं निर्धार्य तत्र प्रमाणं चाह ॥प्रमाणं त्वत्रेति॥ विमतं शुक्तिरूप्यं प्रपंचश्च ॥रहितमिति॥ सत्वादिना विचारासहमित्यर्थः। निरुक्तानिर्वाच्यत्वस्यैवानुमानसाध्यत्वादिति भावः। अन्वयदृष्टांतालाभादाह ॥व्यतिरेकीति॥ तथाचानिर्वाच्यत्वरहिते ब्रह्मणि व्यतिरेकव्याप्तिग्रह इति भावः। निरुक्तानिर्वाच्यत्वरूपसाध्यस्य कुत्राप्यप्रसिद्धत्वेनानुमानस्याप्यप्रसिद्धविशेषणत्वं आशंक्य सामान्य प्रसिद्धिमाह ॥नचेति॥ समानाधिकरणेति॥ एकधर्मिनिष्ठेत्यर्थः ॥असत्वमिति॥ अत्रासत्वाधिकरणमनिष्टमिति न पर्यवसानं कार्यम्। किंतु सत्वं असत्वानधिकरणेऽनिष्ठं नास्तीत्यर्थः। एवं च सत्वस्यासत्वानधिकरणेऽभावसिद्धौ असत्वाभावसामानाधिकरण्यप्राप्त्या सत्वासत्वरहितस्य वस्तुनः सामान्यतः सिद्धिरिति द्रष्टव्यम्। एवमसत्वपक्षकानुमानमपि द्रष्टव्यम् ॥रूपवदिति॥ रूपादेः असत्वानधिकरणवाय्वाद्यनिष्ठत्वात् सत्वानधिकरणशशविषाणाद्यनिष्ठत्वाच्च साध्यमस्तीति द्रष्टव्यम् ॥प्रवृत्तीति॥ पूर्वं असच्चेन्न प्रतीयेतेति ख्यात्यन्यथानुपपत्त्याऽसद्वैलक्षण्यसिद्धिरुक्ता। इदानीं रूप्यमसच्चेन्न तत्र प्रवर्तेत प्रवर्तते च तस्मान्नासदित्येवं प्रवृत्त्यन्यथानुपपत्त्याऽसद्वैलक्षण्यं साधितमिति भेदः। एवं प्राप्ते सिद्धांताभिधानं प्रतिजानीते ॥अत्र ब्रूम इति॥ सदसद्वैलक्षण्यरूपानिर्वाच्यत्वशरीरे प्रविष्टे सत्वासत्वे प्रकारनवकेन विकल्प्य दूषयति ॥अत्र सत्त्वासत्त्वे इत्यादिना॥ ॥परेणेति॥ त्वदपेक्षया परेण प्रतिवादिना मयेत्यर्थः ॥शुद्धात्मनीति॥ शुद्धात्मनि सत्ताजातिरूपसत्वस्य अर्थक्रियाकारित्वरूपसत्वस्य चाभावे शुद्धात्मनोपि सद्वैलक्षण्यस्यापातात् प्रपंचे सत्ताजातेरर्थक्रियाकारित्वरूपसत्वस्यैव सद्भावेन सद्वैलक्षण्याभावापातादित्यर्थः। तथाच सद्विलक्षणतया त्वदभीष्टस्य प्रपंचस्य सत्वापत्तिः सत्वेन त्वदभीष्टस्य च ब्रह्मणः सद्वैलक्षण्यापत्तिरिति भावः ॥तुच्छस्यापीति॥ शशविषाणादेरत्यंतासतस्त्वयासद्वैलक्षण्यं अबाध्यत्वं चांगीकृतमस्ति। तस्य प्रतिपन्नोपाधेरेवाभावेन प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वानंगीकारात्। एवं च तुच्छेऽप्यबाध्यत्वरूपसत्वस्यैव प्राप्त्या तस्य सद्वैलक्षण्यायोगात्। एवं बाध्यत्वमसत्वमित्यंगीकारेऽनिर्वाच्यस्यापि रूप्यस्य बाध्यत्वांगीकारेण तत्रासत्वस्यैव प्राप्त्या त्वदभिमतासद्वैलक्षण्यस्यायोगादित्यर्थः। अत एवेत्युक्तं विशदयति ॥अनिर्वाच्यस्येति॥ रूप्यस्येत्यर्थः।

(प्रकाशः)

त्वन्मते रूप्ये प्रातिभासिकतयाऽप्रामाणभूताविद्यावृत्तिप्रतिबिंबितसाक्षिचैतन्यवेद्यत्वेन प्रमाणभूतांतःकरणवृत्तेस्तत्र त्वयाऽनंगीकारेणाप्रामाणिकत्वांगीकारादित्यर्थः। एवं चाप्रामाणिकत्वमसत्वं चेदनिर्वाच्यिरूप्यस्याप्यप्रामाणिकत्वेनासत्वस्यैव प्राप्तत्वात् त्वदभिमतासद्वैलक्षण्यायोगादिति भावः ॥अशून्यत्वेनेति॥ प्रातिभासिकत्वांगीकारादित्यर्थः। एवं चाशून्यत्वं सत्वं चेदनिर्वाच्ये रूप्येऽशून्यत्वस्य त्वयांऽगीकृतत्वेन सत्वापत्त्या त्वदभिमतसद्वैलक्षण्यायोगादित्यर्थः ॥इष्टत्वादिति॥ ब्रह्मत्वमेव सत्वं चेद्ब्रह्मरूपसद्वैलक्षण्यस्य शून्यरूपासद्वैलक्षण्यस्य प्रपंचेऽस्माभिरंगीकारान्नेदमनिष्टमिति भावः ॥तयोरिति॥ अबाध्यत्वशून्यत्वयोरित्यर्थः ॥अविरोधेनेति॥ शून्यस्य प्रतिपन्नोपाध्यभावेन तद्घटितबाध्यत्वानंगीकारात् शून्येऽबाध्यत्वशून्यत्वयोः सहावस्थानप्राप्त्या सत्वासत्वयोश्चाविपालांगनं विरोधस्य प्रसिद्धत्वेनाविरुद्धयोरनयोर्विरुद्धसत्वासत्वरूपत्वायोगादित्यर्थः। किंचाबाध्यत्वरहितत्वे सति शून्यत्वरहितत्वं अनिर्वाच्यत्वमित्यत्राबाध्यत्वाभाव एवानिर्वाच्यत्वमस्तु ब्रह्मशून्ययोश्चाबाध्यत्वेनातिव्याप्त्यभावात्। अतो विशेष्यभागवैयर्थ्यमित्याशयेनाह ॥अबाध्यत्वाभावस्यैवेति॥ ॥अत्रेति॥ अस्मिन्सप्तमपक्ष इत्यर्थः। निरुपाख्यं सर्वथाऽज्ञायमानमित्यर्थः ॥असदिति॥ त्वया हि शून्यवाद्यभिमतं यदसत्वं तद्वैलक्षण्यमेव तं प्रति रूप्यादौ वक्तव्यम्। तत्र निरूपाख्यरूपासद्वैलक्षण्यं रूप्यादेः शून्यवादिनाऽप्यंगीकृतमस्ति। कथमित्यत उक्तं ॥असत्ख्यातिवाद इति॥ असदेव रूप्यं ज्ञायत इति वाद इत्यर्थः। एवं शुक्तिरूप्यादावज्ञायमानवैलक्षण्यरूपासद्वैलक्षण्यस्य शून्यवादिनोपीष्टत्वादिति भावः ॥उक्तरीत्येति॥ रूप्यादेः पारमार्थिकत्वाकारेण निषेधेंऽगीक्रियमाणे ब्रह्मवत्सद्रूपत्वेनाप्युपपत्तेः। अतः स्वरूपेण निषेधेंऽगीक्रियमाणे निस्स्वरूपत्वमेवांगीकृतमिति निस्स्व रूपवैलक्षण्यरूपासद्वैलक्षण्यं न सिध्यतीत्यर्थः ॥उक्तरीत्येति॥ रूप्यादेरपि निस्स्वरूपत्वरूपशून्यत्वसद्भावेन शून्यवैलक्षण्यरूपासद्वैलक्षण्यायोगादित्यर्थः ॥स्वीकारादिति॥ "त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता। सत्तोच्यतेऽध्यस्ततुच्छे तं प्रति प्रतियोगिनी" इत्युक्तत्वादिति भावः। किमेतावता ममानिष्टमित्यत आह ॥त्वन्मत इति॥ तथाचानिर्वाच्यस्य रूप्यस्य सार्वदेशिकसार्वकालिकनिषेधप्रतियोगित्वांगीकारेणासत्वस्यैव प्राप्त्या तद्वैलक्षण्यायोगादिति भावः। अस्तु वा सत्वं यत्किंचित्। तथापि तद्वैलक्षण्यं न रूप्यप्रपंचयोर्वक्तुं शक्यम्। प्रातिभासिकव्यावहारिकसत्वयोरंगीकारादित्याह ॥किंचेति॥ ॥लाघवादिति॥ पारमार्थिकसद्वैलक्षण्यं नामाबाध्यवैलक्षण्यमेव। तदपेक्षया बाध्यत्वस्यैव लघुत्वेन तदेवानिर्वाच्यत्वं स्यात्। ब्रह्मशून्ययोश्चाबाध्यत्वेन लक्षणस्यातिव्याप्त्यभावात्। अतोऽसद्वैलक्षण्यविशेषणवैयर्थ्यमिति भावः। सत्वराहित्योक्तौ मे माता वंध्येति वत्स्ववचनव्याघात इत्याशयेनाह ॥किंचेति॥ सत्वासत्वराहित्यं वदन् प्रष्टव्यो जायते सत्वासत्वे कीदृशे विवक्षिते इति। मया परस्परप्रतिक्षेपसत्वासत्वांगीकारात् मदनभिमते अन्ये परस्परप्रतिषेधानात्मके पारिभाषिके ब्रह्मत्वशशशृंगत्वादिरूपे तयो राहित्यं विवक्षितमुत मदभिमतयोः सत्वासत्वयो राहित्यम्? नाद्यः। पारिभाषिकं यत् ब्रह्मत्वाख्यं सत्वं यच्च शशशृंगत्वाख्यमसत्वं तद्राहित्यस्य मया प्रपंचेऽप्यंगीकारेणेष्टापत्तेरित्याह ॥मदनभिमतयोरिति॥ न द्वितीय इत्याह ॥मदभिमतयोरिति॥ परस्परप्रतिषेधात्मकयोरित्यर्थः ॥लाघवादिति॥ परस्परप्रतिषेधात्मकं सत्वमसत्वं च नास्तीति वदता परस्परविरहानात्मके सत्वासत्वे भावरूपे लोकविलक्षणे वर्तेते इत्यंगीकृतं स्यात्। एवमंगीकुर्वताऽपि त्वया लोके सत्वासत्वयोर्विरहरूपत्वस्य प्रसिद्धेर्लोकप्रसिद्ध्युल्लंघनस्य च परीक्षकेण कर्तुमशक्यत्वाल्लोकसिद्धे

(प्रकाशः)

परस्परविरहरूपे सत्वासत्वे अपि पृथगंगीकार्ये। अतस्तव गौरवम्। मम तु सत्वमसत्वाभाव एव नतु त्वन्मत इव तदविरोध्यपि किंचिदस्तीत्यतो लाघवमित्यर्थः ॥ आवश्यकत्वादिति ॥ असत्वप्रतिषेधानात्मकं भावरूपं सत्वमंगीकृत्यापि लोकप्रसिद्धिसंरक्षणायासत्वाभावरूपसत्वांगीकारस्तवाप्यावश्यक एव। एवं चावश्यकत्वा-दसत्वाभावरूपमेव सत्वमस्त्वित्यर्थः। ननु अनेन मम को दोष उक्तः स्यादिति चेत् व्याघात इत्याह ॥ द्वौनञाविति ॥ असत्वनिषेधापेक्षयैव द्वौ नञाविति न्यायो न तु सत्वनिषेधापेक्षया। तत्र तु परस्परविरहरूपयोरिति न्यायो द्रष्टव्यः। तथाच द्वौ नञाविति न्यायेनासत्वस्य निषेधे सत्वस्यैव प्राप्त्या पुनः सत्वनिषेधे मे माता वंध्येतिवत्स्ववचनव्याघात इत्यर्थः ॥ असदिति ॥ द्वौ नञाविति न्यायेनाऽसद्वैलक्षण्योक्तौ सत्वमेव प्राप्नोतीत्यस्मदुक्तेरभिप्रायमज्ञात्वा इदं सत् असद्विलक्षणत्वादित्यनुमानमुक्त्वा तत्रात्मत्वमुपाधिरित्याह। तदप्येतेनैव निरस्तमित्यर्थः। एतेनेत्युक्तं विशदयति ॥ असदिति ॥ किंच प्रागसद्वैलक्षण्येन सत्वं साध्यत एव। को दोषः ? न चात्मत्वमुपाधिरित्युक्तमिति वाच्यम्। लोके साध्ये प्रयोजकतया क्लृप्त एवोपाधिर्वाच्यो नान्यः। लोके हि भावत्वे तद्विरुद्धाभाववैलक्षण्यं घटत्वे तद्विरुद्धाघटवैलक्षण्यमेव तंत्रत्वेन क्लृप्तम्। एवं च तत्वे तद्विरुद्धवैलक्षण्यस्यैव प्रयोजकत्वेन दृष्टत्वादिहापि सद्विरुद्धासद्वैलक्षण्यस्यैव प्रयोजकत्वेनावश्यमंगीकार्यत्वात्। तद्वदात्मत्वस्य प्रयोजकत्वेनाक्लृप्तत्वान्नात्मत्वं सत्वे प्रयोजकापरपर्याय उपाधिरित्याह ॥ सत्व इति ॥ ॥ अनिर्वाच्यवाद इति ॥ सत्वासत्वयोर्न परस्परविरहात्मकतया विरोधोस्ति। अनिर्वाच्यरूपतृतीयकोट्यंगीकारेणैव परस्पर-विरहात्मकत्वरूपविरोधस्यैवासिद्धेरित्यर्थः। एतेनेत्युक्तं विवृणोति ॥ अन्योन्येति ॥ अनिर्वाच्यरूपतृतीयकोटिसिद्धौ विरोधाभावसिद्धिः तत्सिद्धौ चानिर्वाच्यसिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥ असिद्ध इति ॥ ॥ स्यादिति ॥ मातृत्वोक्तौ पुत्रवत्वप्राप्त्या पुनर्वंध्येत्युक्तौ व्याघातः। वंध्यात्वोक्तौ पुत्राभाववत्वप्राप्त्या पुनर्मातृत्वोक्तौ व्याघात इति मातृत्ववंध्यात्वयोरपि विरोधो न सिध्येत्। तत्र वंध्यामातृविलक्षणरूपतृतीयकोट्यंगीकारेण विरोधस्य परिहर्तुं शक्यत्वात्। अप्रामाणिकत्वस्य चोभयत्र साम्यादिति भावः ॥ अतात्विकत्वादिति ॥ असत्वनिषेधे सत्वप्राप्त्या पुनः सद्वैलक्षण्योक्तावपि न व्याघातः सद्वैलक्षण्यस्यातात्विकत्वात्। एवं सत्वनिषेधे परस्परविरुद्धयोरिति न्यायेनासत्वप्राप्त्या पुनरसद्वैलक्षण्योक्तावपि न व्याघातः असद्वैलक्षण्यस्यातात्विकत्वादित्यर्थः। ननु रूप्ये सद्वैलक्षण्यस्यासद्वैलक्षण्यरूपनिषेधसमुच्चयस्यातात्विकत्वे रूप्ये ख्यातिबाधान्यथानुपपत्त्या तयोः साधनमयुक्तं स्यात्। नह्यतात्विकसाधनाय प्रमाणोपन्यासो युक्त इत्यत आह ॥ सदादिवैलक्षण्योक्तिस्त्विति ॥ सदादिवैलक्षण्यसाधकख्याति बाधान्यथानुपपत्तिरूपप्रमाणोक्तिस्त्वित्यर्थः। तत्तत्प्रतियोगिनः रूप्यसत्वादि-निषेधप्रतियोगिनः सत्वादेरित्यर्थः। तथाच सच्चेन्न बाध्येत असच्चेन्न प्रतीयेत। प्रतीयते बाध्यते च। तस्मात्सत्वेनासत्वेन च तत्स्वरूपं दुर्निरूपम्। अतः सदसद्वैलक्षण्यरूपानिर्वाच्यत्वव्यवहार इत्यत्रैवार्थापत्तेस्तात्पर्यम्। नतु रूप्ये सद्वैलक्षण्यासद्वैलक्षण्ययोः सत्व इत्याशयः। ननु रूप्यस्य सत्वासत्वाभ्यां दुर्निरूपत्वमात्रेण सदादिवैलक्षण्योक्तिर्वा कुतः ? ख्यात्यन्यथानुपपत्त्या सत्वस्य बाधान्यथानुपपत्त्याऽसत्वस्य संभवेन सदसदात्मकत्वसंभवादित्यत आह ॥ नहीति ॥ स्वतः स्वरूपतः। रूपं धर्मः। तथाच रूप्यस्य स्वरूपत एव दुर्निरूपत्वात्तत्र सत्वमसत्वं सदसदात्मकत्वं वा तद्वैलक्षण्यं वा किमपि रूपं वास्तवं नास्ति येन सदसदात्मकत्वेनाप्युपपत्तिः शंक्येतेति भावः। एवं च रूप्यं सत्वासत्वादिवास्तवकिंचिद्रूपरहितं स्वरूपेण

(प्रकाश:)

दुर्निरूपत्वादित्यनुमानमुक्तं भवतीति ज्ञातव्यम्। सत्वादिराहित्यस्य सदादिवैलक्षण्यस्य। अनिर्वाच्यत्वे रूप्यादे: सदादिवैलक्षण्यरूपानिर्वाच्यत्वोक्ताविित्यर्थ: ॥ निषेधायोगादिति॥ रूप्यादाविवाविद्यानिवृत्तावपि सत्वादेर्दुर्निरूपत्वमात्रेण सदसद्वैलक्षण्यरूपानिर्वाच्यत्वस्यैव वक्तुं शक्यत्वा''न्नानिर्वाच्यश्च तत्क्षय'' इत्यनिर्वाच्यत्वनिषेधायोगादित्यर्थ: ॥ सत्वादिवदिति॥ रूप्यादे: सत्वादौ प्रमाणं नास्ति प्रत्युत तद्वैलक्षण्य एव ख्यातिबाधान्यथानुपपत्तिरूपप्रमाणमस्तीत्युक्त्ययोगात्। उभयोरप्यतात्विकत्वाविशेषे एकत्र प्रमाणं नास्त्यपरत्र तदस्तीत्युक्त्ययोगादिति भाव: ॥ विधीति॥ अर्थापत्त्या सदसद्वैलक्षण्योक्तौ विरोधे अभिहिते निषेधसमुच्चयस्यातात्विकत्वान्न विरोध इति यथोच्यते तथा वयमपि वदाम:। त्वदीयार्थापत्त्या सदसदात्मकत्वमेवास्तु। न च विरोध इति वाच्यम्। तात्विकत्वे हि विरोध:। विधिसमुच्चयस्यास्माभिरतात्विकत्वांगीकारेण विरोधाभावादिति वक्तुं सुशकत्वादिति भाव: ॥ उभयातात्विकत्वेनेति॥ सत्वनिषेधासत्वनिषेधयोरुभयोरप्यतात्विकत्वेन निषेधसमुच्चयोऽप्यतात्विक इत्यर्थ:। एकस्य सत्वनिषेधस्य वा असत्वनिषेधस्य वाऽतात्विकत्वेन निषेधसमुच्चयोऽप्यतात्विक एव। एकसत्वेपि द्वयमिह नास्तीति प्रतीतिसिद्धव्यासज्यवृत्तिप्रतियोगिकाभावाभिप्रायेणेदं ॥ उभयेति॥ सत्वासत्वयोरुभयोरपि तात्विकत्वं यथा विरुद्धं एवमुभयोरतात्विकत्वमपि विरुद्धमेवेत्यर्थ: ॥ विधीति॥ निषेधसमुच्चयस्यातात्विकत्वे तत्प्रतियोगिन: सदसदात्मकत्वरूपविधिसमुच्चयस्य तात्विकत्वं स्यात् परस्परविरुद्धयोरितिन्यायादिति भाव: ॥ प्रतियोगीति॥ विधिसमुच्चयस्य तात्विकत्वे निषेधप्रतियोगिनस्तस्य सदसत्त्वस्य सुनिरूपत्वात्तत्प्रतियोगिदुर्निरूपत्वमात्रप्रकटनाय सदादिवैलक्षण्योक्तिरित्यस्यायोगादित्यर्थ:। अत एवेत्युक्तमेव विशदयति ॥ तत्प्रतियोगिन इति॥ एकातात्विकत्वेन निषेधसमुच्चयस्यातात्विकत्वे यन्निषेधस्तात्विक: तत्प्रतियोगिनोऽतात्विकत्वेपि यन्निषेधोऽतात्विकस्तत्प्रतियोगिनो विधिरूपधर्मस्य तात्विकत्वं स्यादित्यर्थ:। कुत इत्यत आह ॥ अतात्विकं हीति॥ तात्विकपदं किमर्थमिति चेदुच्यते अतात्विकात्यंताभावप्रतियोगित्वमेवातात्विकत्वं चेत्तर्हि तात्विके ब्रह्मण्यप्यतात्विकात्यंताभावप्रतियोगित्वसत्वेनातात्विकत्वापत्ते:। अतस्तात्विकात्यंताभावप्रतियोगित्वं वाच्यम्। एवं च प्रकृते यदासत्वनिषेधस्यातात्विकत्वं तदातात्विकात्यंताभावप्रतियोगित्वं वाच्यं सत्वनिषेधात्यंताभावश्च सत्वमेव। अभावाभावस्य भावत्वात्। तथाच सत्वनिषेधस्यातात्विकत्वे तस्य सत्वनिषेधस्य तात्विकात्यंताभावप्रतियोगित्वे वाच्ये तदत्यंताभावरूपस्य सत्वस्य तात्विकत्वसिद्धिरित्यर्थ:। रूप्यं वास्तवसत्वादिकिंचिद्रूपरहितं स्वरूपतोदुर्निरूपत्वादित्यनुमाने दोषमाह ॥ किंचेति॥ ॥ अनैकांत्यस्य सिद्धसाधनस्यचेति॥ अयमत्र विवेक:। हेतूकृतं स्वरूपतो दुर्निरूपत्वं अतात्विकं तात्विकं वा? नाद्य: ब्रह्मणिं व्यभिचारात्? वस्तुतो ब्रह्मस्वरूपस्य सुनिरूपत्वेनाऽतात्विकस्य स्वरूपतो दुर्निरूपत्वस्य हेतो: सद्भावेन वास्तवरूपाभावरूपसाध्यस्याभावात्। एवमेव वास्तवरूपाभावरूपं यत्साध्यं तदप्यतात्विकं तात्विकं वा ? नाद्य: अतात्विकवास्तवरूपाभावसाधने सिद्धसाधनात्। वास्तवरूपस्यैव तात्विकत्वसिद्धे:। अतो हेतुसाध्ययोरुभयोरपि तात्विकत्वेऽवश्यं वाच्ये तात्विकहेतुसाध्यवत्वेनैव स्वरूपत: सुनिरूपत्वप्राप्त्या हेतुसाध्यवत्त्वरूपवास्तवरूपस्यैव प्राप्त्या च हेतुवाक्यप्रतिज्ञावाक्ययो: हेतुवाक्यप्रतिज्ञावाक्याभ्यां विरोध इत्यर्थ:। ॥ इत्यत्रेति॥ स्वरूपतो दुर्निरूपस्य वास्तवं रूपं किमपि नास्तीत्यत्रोक्तमिदं दुर्निरूपत्वं किं सत्वादिना केनापि प्रकारेणेति विवक्षतमित्यर्थ: ॥ प्रकारान्येति॥ केनापि

(प्रकाशः)

प्रकारेण दुर्निरूपत्वमित्यनेन प्रकारेण सुनिरूपत्वेपि केनापि प्रकारेण दुर्निरूपत्वमित्येतत्प्रकारान्यप्रकारेण दुर्निरूपत्वं विवक्षितं वेत्यर्थः ॥ दुर्निरूपत्वमिति ॥ केनापि प्रकारेण दुर्निरूपत्वमित्यनेन प्रकारेण दुर्निरूपत्वं विवक्षितं सुनिरूपत्वं वा? आद्ये सत्वादिना सुनिरूपत्वात्केनापि प्रकारेण दुर्निरूपत्वव्याघातः। द्वितीये केनापि प्रकारेण दुर्निरूपत्वप्राप्त्या केनापि प्रकारेण दुर्निरूपत्वव्याघात एवेत्यर्थः। अत एवेत्युक्तं विशदयति ॥ दुर्निरूपत्वस्येति ॥ दुर्निरूपत्वप्रकारस्य ॥ केनापि प्रकारेण दुर्निरूपत्वमित्यस्मादन्यत्वादिति ॥ केनापि प्रकारेण दुर्निरूपत्वमित्यस्मादेव प्रकारोऽन्यः सुनिरूपः। तथात्वेऽन्येन प्रकारेण सुनिरूपत्वप्राप्त्या केनापि प्रकारेण दुर्निरूपं न भवतीति यावदित्यर्थः। तथाच केनापि प्रकारेण दुर्निरूपत्वमित्येतस्मात्प्रकारादन्यो यः केनापि प्रकारेण दुर्निरूपत्वमित्येतदन्यप्रकारेण दुर्निरूपत्वरूपः प्रकारस्तेनैव प्रकारेण सुनिरूपत्वात्केनापि प्रकारेण दुर्निरूपत्वमित्येतत्प्रकारान्यप्रकारेण दुर्निरूपत्वमयुक्तम्। उक्तप्रकारादप्यन्यो यः प्रकारः असतोऽसत्वरूपस्तेनैव सुनिरूपत्वात्। तथा कल्पितस्यापि रूप्यस्य उक्तप्रकारान्यो यः प्रकारो मिथ्यात्वादिस्तेनैव सुनिरूपत्वादित्यर्थः। कल्पिते मिथ्यात्वरूपः प्रकारोऽप्रामाणिक इति न मंतव्यं बाधबाध्यत्वादित्याशयेनोक्तं ॥ बाधवेद्येनेति ॥ ॥ तस्येति ॥ सत्वासत्वाभ्यां दुर्निरूपत्वे सदादिवैलक्षण्यस्य वास्तवत्वमेव स्यात्। तथाच सत्वादिना दुर्निरूपत्वस्य सदादिवैलक्षण्यवास्तवत्वं प्रत्येव हेतुत्वेन तद्वैलक्षण्यावास्तवत्वाहेतुत्वादित्यर्थः। सत्वादिराहित्य-निर्वाच्यत्वसाधकानुमाने नाप्रसिद्धिः सत्वासत्वाभावयोरप्येकत्र संभवात्। न च विरुद्धयोरेकत्र सत्वमयुक्तमिति वाच्यम्। यथा हि ध्वंसानुपलक्षिता ध्वंसास्पृष्टा या सत्ता तद्योगित्वं नित्यत्वम्। ध्वंसोपलक्षितसत्तायोगित्वमेव चानित्यत्वम्। एतादृशयोश्च नित्यत्वानित्यत्वयोर्न सामान्ये समावेशोस्ति। तत्र सत्ताजातेरेवाभावे तद्घटितनित्यत्वाद्यभावात्। यथा वा उत्तरावधिराहित्यं नित्यत्वम्। भावान्या या निवृत्तिस्तद्वत्त्वमनित्यत्वम्। घटादिप्रतियोगिकध्वंसस्य भावत्वाभावात्। एवं चैतादृशयोर्वैवक्षिकयोर्नित्यत्वानित्यत्वयोर्न प्रागभावे समावेशोस्ति। उत्तरावधेरेव सत्वेन तद्राहित्यरूपनित्यत्वाभावात्। तथा प्रतियोग्याख्यभावस्यैव प्रागभावनिवृत्तिरूपत्वेन भावान्यनिवृत्तिमत्त्वरूपानित्यत्वस्याप्यभावात्। एवं च यथा नित्यत्वानित्यत्वयोः परस्परपरिहारेणैव लोके सत्वेपि सामान्यादौ तदुभयाभावो दृष्टः एवं सत्वासत्वयोः परस्परपरिहारेणैव लोके सत्वेपि क्वचित्पदार्थविशेषे तयोरभावोपि किं न स्यात्? एवं च सामान्यतः सत्वासत्वरहितवस्तुसिद्धिरिति केनचिदुक्तमाशंक्य निषेधति ॥ नचेति ॥ उक्तयोस्त्वयानिरुक्तयोः। तथाच तयोर्विरोध एव नास्तीति भावः। तर्हि प्रकृतेपि तथाऽस्त्विति न वाच्यमित्याह ॥ सत्वासत्वयोस्त्विति ॥ तदात्मकत्वात् भावाभावात्मकत्वेन विरुद्धत्वादित्यर्थः। तथाच न तदभावयोः एकत्र समावेशो युक्त इति भावः। सामान्यादौ नित्यत्वानित्यत्वाभाववद्युक्तमिति चेन्न। त्वया नित्यत्वादिकं वैवक्षिकं निरुच्य तदभावः सामान्यादौ उक्तः। वस्तुतस्तु ध्वंसाप्रतियोगित्वतत्प्रतियोगित्वरूपनित्यत्वानित्यत्वयोरपि परस्परविरहरूपतया विरोधस्यैव सत्वेन तदभावयोरपि नैकत्र समावेश इत्याशयेनाह ॥ सामान्येति ॥ ध्वंसाप्रतियोगित्वरूपनित्यत्वं सामान्ये ध्वंसप्रतियोगित्वरूपमनित्यत्वं प्रागभाव इति विवेकः। ननु प्रागभावे ध्वंसप्रतियोगित्वरूपमनित्यत्वं नास्ति अभावप्रतियोगिकाभावांतरानभ्युपगमादित्यत आह ॥ प्रागभावस्यापीति ॥ स्वप्रतियोगिकाभावांतरशून्यस्यापीत्यर्थः। तदेव विशदयति ॥ भावस्येति ॥ भावस्य घटादेर्निवृत्तिरभाव एव ध्वंस एव। अभावस्य प्रागभावस्य निवृत्तिस्तु भाव एव प्रतियोगिरूपैव न ततोऽन्येति ध्वंसप्रतियोगित्वरूपानित्यत्वं

(प्रकाश:)

प्रागभावेऽस्तीत्यर्थः। अस्मदुक्तरीत्या नित्यत्वानित्यत्वयोः परस्परविरहात्मकत्वमनभिधाय नित्यानित्यत्वे वैवक्षिके निरुच्य सामान्यादौ तदुभयाभाववत्सत्वासत्वयोरपि क्वचिदभावांगीकारेऽतिप्रसंग इत्याह ॥अन्यथेति॥ तर्ह्येकत्रैव रूप्ये सत्वासत्वे अप्यंगीकार्ये स्याताम्। तथाच सदसदात्मकत्वेनाप्युपपत्तिरस्तु। न च विरोधः। यथा ध्वंसोपलक्षितसत्ताराहित्यं नित्यत्वं ध्वंसानुपलक्षितसत्ताराहित्यं चानित्यत्वं तयोश्च सामान्ये समावेशोस्ति तत्र सत्ताया एवाभावेन उक्तनित्यत्वानित्यत्वयोस्तत्र सत्वेन विरोधाभावात् तद्वद्रूप्येपि सत्वासत्वयोरुपपत्तेरिति भावः। सत्वासत्वोभयाभावसाधने व्याघात इत्यत्र परिहारांतरमाशंक्य निराकरोति ॥नचेति॥ ॥नित्यत्वेति॥ यथा कल्पिते रूप्ये नित्यत्वानित्यत्वयोरभावो न विरुद्धः धर्मिण एवाभावेन विरुद्धयोर्धर्मयोरप्यभावादित्यर्थः। विरुद्धयोः सत्वासत्वयोः विरुद्धयोरपि धर्मयोरभावादित्यस्य कस्यापि धर्मस्याभावादित्यर्थः। तथाच रूप्यं विरुद्धेन अविरुद्धेन वा केनापि धर्मेण शून्यं स्वरूपेण कल्पितत्वादित्यनुमानमुक्तं भवति। नित्यत्वानित्यत्वयोरिवेति दृष्टांत एव त्वन्मतेऽसिद्ध इत्याह ॥त्वन्मत इति॥ ॥विरुद्धधर्माभावरूपसाध्यस्येति॥ कस्यापि धर्मस्याभावरूपधर्मस्येत्यर्थः ॥व्याघाताच्चेति॥ कल्पिते तस्मिन्सधर्मकत्वस्य प्राप्त्या कस्यापि धर्मस्याभावो विरुद्ध इत्यर्थः। ननु कल्पिते रूप्ये उक्तहेतुसाध्ययोर्भावे तयोरेव धर्मयोः सद्भावस्तत्राभावे कल्पितत्वरूपहेतोः साध्यस्य चाभावेन तन्न्यायेनान्येषामपि धर्माणां सत्वप्राप्त्या व्याघात इत्युक्तं कल्पितत्वहेतोर्विरुद्धधर्माभावरूपसाध्यस्य च सत्वं नित्यत्वं यथा धर्मिसत्तासापेक्षं तथा धर्मिसत्तासापेक्षं न भवतीति तयोः सत्वं युक्तम्। इतरेषां तु धर्मिसत्वापेक्षत्वान्न तन्न्यायेन सत्वोक्तिर्युक्तेति चेत् तर्हि सत्वरूपधर्मस्य धर्मिसत्वसापेक्षत्वेनाभावेपि असत्वस्य तथात्वाभावाद्रूप्येऽसत्वमस्तु तद्वैलक्षण्यं कुतोंऽगीकार्यमित्याह ॥अथेति॥ असत्वस्यापि धर्मिसत्तासापेक्षत्वे दोषमाह ॥अन्यथेति॥ असद्वद्विर्भावः स्यादित्यन्वयः। तत्रासत्वं न स्यादित्यर्थः। तुच्छस्य धर्मिण एवाभावादिति भावः। विरुद्धयोरपि धर्मयोरभावांगीकारे दोषमाह ॥कल्पितस्यापीति॥ तथाच त्वदभिप्रेतं दृश्यत्वं बाध्यत्वं सत्वादिना दुर्निरूपत्वं च न स्यादित्यर्थः। प्रकारांतरेण सत्वासत्वाभावयोरविरोधमाशंक्य निराकरोति ॥नचेति॥ सत्वासत्वाभावयोः सद्वैलक्षण्यासद्वैलक्षण्ययोः ॥तद्वदेवेति॥ तथाच सदसदात्मकत्वमेव युक्तमिति भावः ॥तथात्वे इति॥ अविरोधोपपादकस्य कालरूपावच्छेदकभेदस्य सत्वे सत्वासत्वयोरप्यविरोध इष्ट एवेति अविरोधापातादित्यापादनमयुक्तमित्यर्थः। तमेव दर्शयति ॥स्वेति॥ स्वयं यस्मिन्कालेस्ति तदवच्छेदेनेत्यर्थः ॥सम इति॥ सत्वासत्वयोरपि कालरूपावच्छेदकभेदेनाविरोधः सम एवेति सत्वासत्वयोरप्यविरोधोस्त्वित्युक्तेऽस्माकमपीष्टापत्तिरित्यर्थः। तदेव दर्शयति ॥स्वेति॥ स्वाधिकरणकाले स्वस्य सत्वेन तत्रासद्वैलक्षण्यस्यासत्वाभावस्य सद्भावादित्यर्थः। सद्वैलक्षण्यस्य सत्वाभावस्य सत्वासत्वाभावयोर्विरोधोपपादनमुपसंहरति ॥तस्मादिति॥ तथाच निषेधसमुच्चयस्यातात्विकत्वान्न विरोध इत्येतद्युक्तमिति भावः ॥सत्वादिनेति॥ सत्वादिप्रकारकप्रमाणागोचरत्वमित्यर्थः। असत्वानधिकरणत्वस्यासत्यतिव्याप्तिः तस्य स्वरूपत एवाभावेनासत्वाभावानधिकरणत्वादित्याह ॥असत इति॥ किंच सत्वानधिकरणत्वमित्यत्र तात्विकसत्वानधिकरणत्वं विवक्षितं उतातात्विकसत्वानधिकरणत्वं धर्मिसमसत्वानधिकरणत्वं वा? नाद्य इत्याह ॥सत्पदेति॥ तात्विकसत्वरूपधर्मांगीकारे प्रवृत्तिनिमित्तसद्भावेन सत्पदवाच्यत्वमेव स्यान्न लक्ष्यत्वमित्याशयेनोक्तं ॥सत्पदलक्ष्यस्येति॥ न द्वितीयोऽसंभवापत्तेरित्याह ॥अतात्विकमिति॥ व्यावहारिकं प्रातिभासिकमित्यर्थः।

(प्रकाशः)

अनिर्वाच्यस्य गगनादेः रूप्यादेश्च। न तृतीयः ब्रह्मण्यतिव्याप्तेः। धर्मिसमसत्वस्य तात्विकस्य ब्रह्मण्यभावेन तदनधिकरणत्वसद्भावादित्याह ॥धर्मीति॥ अनिर्वाच्येऽसंभवश्च धर्मिसमस्यानिर्वाच्यसत्वस्य प्रातिभासिकत्वाद्य-परपर्यायस्य तत्रापि सत्वेन धर्मिसमसत्ताकसत्वं प्रत्यधिकरणत्वेन तदनधिकरणत्वाभावादित्याह ॥ अनिर्वाच्यस्येति ॥ ॥धर्मवत्त्वादेरेवेति॥ न च तुच्छब्रह्मणोरतिव्याप्तिरिति वाच्यं तयोर्निर्धर्मकत्वांगीकारात् धर्मवत्त्वस्य चानिर्वाच्यमात्रनिष्ठत्वादिति भावः। आदिपदेन बाध्यत्वसंग्रहः। तुच्छब्रह्मणोश्चाबाध्यत्वादिति द्रष्टव्यम्। तथाचोक्तनिर्वचनप्रयासो व्यर्थ इति भावः। ननु सत्वात्यंताभावाधिकरणत्वस्य सत्वादिधर्मशून्ये ब्रह्मण्यतिव्याप्तिः असत्वात्यंताभावानधिकरणत्वस्य नीरूपतयाऽसत्वरूपधर्मानधिकरणे तुच्छेऽतिव्याप्तिश्च कस्मान्न दीयत इत्यत उक्तं ॥निर्धर्मक इत्यादि॥ ॥तुच्छेपीति॥ असति च सचेतसां मूकताया एव शरणत्वादिति भावः। अनुपदमेवातिव्याप्तेरपि वक्ष्यमाणत्वात्कथंचिदित्युक्तम्। ब्रह्मण्यतिव्याप्तिमेवाह ॥ निर्विशेषत्वेति॥ निर्धर्मकत्वाद्ब्रह्मणि सत्वं नास्तीत्येव सत्वावगाहित्वेंऽगीकृते सति तदत्यंताभावाधिकरणत्वं दुर्वारमेव। न च निर्विशेषत्वप्रतिपादकश्रुत्या ब्रह्मणि धर्ममात्रनिषेधान्न सत्वासत्वात्यंताभावाधिकरणमपीति वाच्यम्। निर्विशेषत्वश्रुतेर्धर्ममात्रनिषेधपरत्वांगीकारे निर्विशेषत्वरूपधर्मस्यैव प्रतिपादनेन श्रुतेः स्वव्याघातप्रसंगात् अतस्तत्परिहाराय भावरूपविशेषाभावेऽपि अभावरूपो विशेषोस्तीति श्रुत्यर्थस्त्वया वर्णनीयः। तथाचातिव्याप्तिरिति भावः। सत्वराहित्ये इत्येव पाठः। अंगीकृते सतीति शेषः। न तृतीयः ब्रह्मण्यतिव्याप्तेः। ब्रह्मणि निर्धर्मके सत्वस्याभावेन तद्रूपत्वस्याप्यभावात्। सद्रूपत्वे सत्वस्यैव प्रयोजकत्वादित्याह ॥ब्रह्मणीति॥ ननु सत्ताजातिरहितस्यापि सामान्यादेः सद्रूपत्ववत् सत्वरहितस्यापि ब्रह्मणः सद्रूपत्वं किं न स्यात्? तथाच नातिव्याप्तिरित्यत उक्तं ॥सामान्यादेरपीति॥ ॥अबाध्यत्ववत्त्वेनैवेति॥ अबाध्यत्वरूपसत्ववत्त्वेनैवेत्यर्थः। तथा च सामान्यादेः सत्ताजात्यभावेपि अबाध्यत्वरूपसत्वसद्भावादेव सद्रूपत्वं नान्यथेत्यर्थः। ब्रह्मणः सद्रूपत्वांगीकारे बाधकमाह ॥ब्रह्मणइति॥ ॥लाक्षणिकत्वेति॥ नहि सत्पदलक्ष्यस्य सद्रूपत्वं संभवति। गंगापदलक्ष्यस्य तीरस्य गंगात्वाभावात्। तथात्वे गंगापदलक्ष्यत्वमेव न स्यात्। एवं च सत्पदलक्ष्यतयांगीकृतस्य ब्रह्मणः सद्रूपत्वाभावादतिव्याप्तिः स्यादेवेत्यर्थः ॥त्वन्मत इति॥ तथाच ब्रह्मण्यतिव्याप्तिरिति भावः ॥अखंडार्थेति॥ ब्रह्मणः सत्वप्रकारकप्रमाणगोचरत्वे वेदांतानां सप्रकारकब्रह्मज्ञानजनकत्वापत्त्या निर्विशेषार्थनिष्ठत्वरूपाखंडार्थत्वहानिरित्यर्थः। सत्वासत्वराहित्यरूपमनिर्वचनीयत्वं चेत्तर्हि सत्वराहित्यं कीदृशं विवक्षितमिति प्रष्टव्यम्। किं प्रातिभासिकं किंवा धर्मिसमसत्ताकम् अथवा व्यावहारिकं यद्वा पारमार्थिकम्? नाद्य इत्याह ॥अपिचेति॥ ॥रूप्येति॥ प्रतियोगितदभावयोर्भिन्न-सत्ताकत्वनियमादनिर्वाच्यतयाभिमतयो रूप्यप्रपंचयोः सत्वराहित्यस्य प्रातिभासिकत्वे ब्रह्मणीव सत्वं पारमार्थिकं स्यादिति भावः। व्यावहारिकं सत्वं तु पारमार्थिकसत्वकोटिनिविष्टमिति पारमार्थिकत्वापातादित्येवोक्तमिति हृदयम्। तथाच रूप्यप्रपंचौ पारमार्थिकसत्वोपेतौ प्रातिभासिकसत्वराहित्योपेतत्वात्। यत्प्रातिभासिकयदभावयुक्तं तत् पारमार्थिकतत्प्रतियोगियुक्तम्। यथा घटयुक्तं भूतलमित्यनुमानमुक्तं भवति। न द्वितीय इत्याह ॥नापीति॥ सत्वराहित्यस्य न रूप्यरूपधर्मिसमसत्ताकत्वम्। रूप्यगतस्य सत्वराहित्यस्य नास्ति नासीन्नभविष्यतीति बाधबोध्यस्य त्वन्मते व्यावहारिकत्वेन भ्रांतिसिद्धेन प्रातिभासिकेन रूप्येण साम्यायोगात्। एवं प्रपंचगतं सत्वादिराहित्यमपि न प्रपंचरूपधर्मिसमसत्ताकम्। तस्य नास्तिनासीन्नभविष्यतीति वेदांतजन्य-

(प्रकाशः)

चरमसाक्षात्काररूपबाधबाध्यस्य पारमार्थिकत्वेन भ्रांतिसिद्धेन व्यावहारिकेण जगता साम्यायोगादित्यर्थः। नापि तृतीय इत्याह ॥नापीति॥ प्रपंचरूप्ययोरनिर्वाच्यत्वेपि प्रपंचापेक्षया रूप्यस्य निकृष्टतयावान्तरवैलक्षण्यांगीकारेण सत्वराहित्यस्य जगति व्यावहारिकत्वे रूप्ये तस्य प्रातिभासिकत्वापत्तेः। अस्त्विति चेन्न। रूप्यगतसत्वराहित्यस्य बाधबाध्यस्य प्रातिभासिकेन रूप्येण साम्यायोगात् तथात्वे बाधबाध्यत्वं न स्यादिति भावः। रूप्यगतसत्वराहित्यस्य बाधबाध्यत्वान्यथानुपपत्त्या व्यावहारिकत्वमंगीक्रियत इति चेन्न तथात्वे रूप्यापेक्षया प्रपंचस्याधिकत्वात्तत्र सत्वराहित्यस्य पारमार्थिकत्वापातात्। नचेष्टापत्तिरद्वैतहानेरित्याह ॥रूप्य इति॥ चतुर्थपक्षमतिदेशेन दूषयति ॥अत एवेति॥ रूप्यप्रपंचयोः सत्वराहित्यं न पारमार्थिकं अद्वैतहानेरेवेत्यर्थः। रूप्यगतस्यैव सत्वराहित्यस्य पारमार्थिकत्वांगीकारे दोषांतरमाह ॥नहीति॥ सत्वराहित्याख्यस्यैव वास्तवरूपस्यांगीकारात्स्ववचनविरोध इत्यर्थः। ''नच कयापि युक्त्या मानेन वा भेदनिराकरणं भवति अंगीक्रियमाणत्वादि''ति भगवत्पादवाक्यं मनसि निधायाह ॥किंचेति॥ अभावाभावो भाव एव तद्व्याप्तो वेति मतद्वयसद्भावादाह ॥सदसद्भिन्नत्वरूपमिति॥ ॥तद्व्याप्तमिति॥ सदसद्भिन्नत्वव्याप्तमित्यर्थः। ननु न सदसद्वैलक्षण्यमनिर्वाच्यत्वम्। किं नाम बाध्यत्वमेवेति चेत्तत्राह ॥बाध्यत्वमिति॥ ॥मिथ्यात्वभंग एवेति॥ बाध्यत्वं हि त्रैकालिकनिषेधप्रतियोगित्वं तत्र त्रैकालिकनिषेधस्य तात्विकत्वेऽद्वैतहानेः प्रातिभासिकत्वे सिद्धसाधनात् व्यावहारिकत्वेपि तस्य बाध्यत्वेन तात्विकसत्वाविरोधित्वेनार्थांतरात् अद्वैतश्रुतेरतत्वावेदकत्वापाताच्चेति मिथ्यात्वभंग एव निरस्तमित्यर्थः ॥अनिर्वाच्यत्वलक्षणभंगविवरणम्॥

## ३७. अनिर्वाच्यत्वसाधकानुमानभङ्गः

अनुमानं चायुक्तम्, मिथ्यात्वभंगे उक्तरीत्यांऽशे सिद्धसाधनाद्, अप्रसिद्धविशेषणत्वाच्च, उक्तरीत्या व्याघाताच्च, ब्रह्मवत्सत्त्वराहित्येऽप्यनिर्वाच्यत्वाभावोपपत्त्याऽर्थान्तरत्वाच्च, सत्त्वादिराहित्यस्य प्रातिभासिकत्वादिपक्षेषु दोषस्योक्तत्वाच्च, भेदनिरासानुपपत्तेरुक्तत्वाद्, वक्ष्यमाणरीत्या भ्रान्तिबाधयोरन्यथैवोपपत्त्या विमतं सदसदात्मकं बाध्यत्वाद् व्यतिरेकेणात्मवदित्याद्याभाससाम्याच्च, असदेव रजतं प्रत्यभादिति प्रत्यक्षबाधाच्च। न चैवं मिथ्यैव रूप्यमभादितिप्रत्यक्षेणानिर्वाच्यत्वसिद्धिः, मिथ्याशब्दस्यासत्पर्यायत्वात्। विमतं असत् सत्त्वानधिकरणत्वात्, नृशृंगवदिति सत्प्रतिपक्षत्वाच्च। न च सत्त्वाभावमात्रेणासदितिधीः, त्वत्पक्षे ज्ञानेऽपि सत्त्वाभावेनासदितिधीप्रसंगाद्, असत्त्वाभावेन सदितिधीप्रसंगाच्च, नृशृंगाद्यसत्त्वबुद्धितोऽस्या वैलक्षण्याननुभवाच्च। किं चोक्तेषु सत्त्वासत्त्वपक्षेष्वाद्यद्वितीययोः जगति सत्त्वराहित्यांशे रूप्यादावसत्त्वराहित्यांशे तृतीयचतुर्थयोरुभयत्रापि असत्त्वराहित्यांशे

पंचमे उभयत्रापि सत्त्वराहित्यांशे सप्तमाष्टमनवमेष्वप्युक्तन्यायेनोभयत्राप्यसत्त्वराहित्यांशे बाधः। षष्ठे त्वबाध्यत्वरूपसत्त्वेनोपपत्त्याऽर्थान्तरम्, सामान्यतोऽनिर्वाच्यसाधकानुमानेष्वप्युक्तरीत्या व्याघातार्थान्तरादिकम्।

किं चोक्तसत्त्वासत्त्वपक्षेषु षष्ठान्येष्वंशे बाधः। षष्ठेऽर्थान्तरम्। सत्त्वासत्त्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी न भवतः, परस्परात्यन्ताभावत्वाद् घटत्वाघटत्ववत्। असत्त्वं सत्त्वानधिकरणनिष्ठं न, तत्प्रतिषेधरूपत्वाद्, यथा अनित्यत्वं नित्यत्वानधिकरणनिष्ठं न। एवं सत्त्वं पक्षीकृत्यापि प्रयोक्तव्यमिति सत्प्रतिपक्षत्वम्। घटत्वाघटत्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी, धर्मत्वाद् रूपरसवत्। कल्पितत्वमकल्पितत्वानधिकरणानिष्ठम्, धर्मत्वाद् रूपरसवदित्याभाससाम्यं च परस्परप्रतिषेधानात्मकत्वमुपाधिश्च। एवं च–

अविरुद्धौ रूपरसौ सत्त्वासत्त्वे विरोधिनी ।
अन्यथा सदसद्रूपं स्यात्किंचिद् रसरूपवत् ॥

किं चाद्ये सद्विलक्षणत्वासद्विलक्षणत्वकल्पितत्वाकल्पितत्वदृश्यत्वादृश्यत्वदुर्निरूपत्वादुर्निरूपत्वादौ द्वितीयतृतीययोर्यथाक्रममसद्वैलक्षण्ये सद्वैलक्षण्ये च त्रिष्वपि ज्ञेयत्वव्यवहार्यत्वादौ व्यभिचारः। न चौपाधिकधर्माणामुपाध्यनतिरेकाज्ज्ञानत्वमेव ज्ञेयत्वमिति तदप्यत्यन्ताभावप्रतियोगीति वाच्यम्, तथात्वे दृक्त्वमेव दृश्यत्वाभिधानत्वादिकमेवाभिधेयत्वादिकमिति ब्रह्मण एव दृश्यत्वम्, न तु जडस्य ब्रह्मण इव च घटादेरप्यवाच्यत्वमित्याद्यतिप्रसंगात्। आवाभ्यां षट्पदार्थनियमस्यानंगीकाराच्च वैशेषिकैरप्यौपाधिकधर्माणामभावे सामान्येऽन्तर्भाव इति वा उपाध्यनतिरेकेऽपि घटाद्येव कार्यं न त्वाकाशादीति व्यवस्थित्यर्थं यस्योपाधिना सम्बन्धो न तत्रैवौपाधिकधर्मात्यन्ताभाव इति वा स्वीकृतत्वेनानैकान्त्यतादवस्थ्याच्च।

न च ज्ञेयत्वाद्यपि स्वनिष्ठात्यन्ताभावप्रतियोगि, अन्यथाऽऽत्माश्रयादिति न व्यभिचार इति वाच्यम्, सत्त्वादेरप्यसत्त्वाद्यनधिकरणत्वात्, सत्त्वादिरूपविशेषनिष्ठात्यन्ताभावप्रतियोगित्वसिद्ध्या सामान्यतः सिद्ध्युक्त्ययोगात्, सद्वैलक्षण्यमिथ्यात्वदृश्यत्वादिवच्छब्दप्रतिपाद्यत्वादेरप्यनन्यथासिद्धधीबलेन स्ववृत्तित्वाच्च, अत्यन्ता-

भावप्रतियोगित्वे व्यभिचारस्य दुर्वारत्वाच्च। न च शब्दबोध्यत्वाद्यपि निर्धर्मकात्मनिष्ठात्यन्ताभावप्रतियोगि, आत्मशब्देनैव प्रतिपाद्यतया व्याघातात्, सत्त्वासत्त्वयोरपि तन्निष्ठात्यन्ताभावप्रतियोगित्वेनार्थान्तरत्वाच्च। यदि च सर्वधर्म-राहित्यश्रुत्याऽऽत्मनिसत्ववत्तदत्यन्ताभावोऽपि नेति नार्थान्तरम्, तर्हि शब्दबोध्यत्वा-त्यन्ताभावोऽपि न तत्रेत्यनैकान्त्यतादवस्थ्यम्।

न च सत्त्वमसत्त्वानधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि, अनात्मनिष्ठा-त्यन्ताभावप्रतियोगित्वादसत्त्ववदिति प्रयोगान्नात्मन्यर्थान्तरमिति वाच्यम्, व्याघाताद्य-निरस्ताराद्, अत्यन्ताभावस्य प्रामाणिकत्वे अपसिद्धान्तस्याऽप्रामाणिकत्वे च सिद्धसाधनस्यापाताच्च। अयं च दोषः पूर्वत्रापि द्रष्टव्यः। कल्पितत्वमकल्पितत्वा-नधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि अनात्मनिष्ठात्यन्ताभावप्रतियोगित्वाद-कल्पितत्ववदित्याभाससाम्याच्च, आत्मन इवानात्मनोऽपि सत्त्वासत्त्वराहित्येऽप्य-निर्वाच्यत्वाभावोपपत्त्याऽर्थान्तरत्वाच्च, मिथ्यात्वे त्वद्रीत्या व्यभिचाराच्च। तस्मादप्रसिद्धविशेषणत्वं दुर्वारम्।

एतेन सत्ख्यातिवादिनं प्रति असद्विलक्षणं विमतं सद्विलक्षणम्, बाध्यत्वात् शुक्तिरंजतत्वसंसर्गवदिति, असत्ख्यातिवादिनं च प्रति सद्विलक्षणं विमतमसद्विलक्षणमपरोक्षधीविषयत्वाद्, घटवदितिप्रयोगान्नाप्रसिद्धविशेषणत्वादिकं पक्षधर्मताबलाच्चानिर्वाच्यसिद्धिरिति नवीनोक्तं निरस्तम्, व्याघातबाधाद्यनिस्तारात्। अनिर्वाच्यत्वसाधकानुमानभंगः॥

## अद्वैतसिद्धिः

प्रमाणं च प्रत्यक्षानुमानागमार्थापत्तयः (१) प्रत्यक्षं तावन्मिथ्यैव रजतमभादित्यादि। न च मिथ्याशब्दोऽसत्पर्यायः, वक्ष्यमाणयुक्त्या नृशृङ्गादिसाधारणासत्त्वस्य ख्यायमानरूप्यादौ वक्तुमशक्यत्वात्। न चैतावन्तं कालमसदेव रजतमभादित्यनुभवविरोधः, अनिर्वाच्यत्वैकदेशसत्त्वव्यतिरेकविषयत्वेनैवोपपत्तेः। न चैवं 'सत्यं ज्ञानमनन्तं ब्रह्म'त्यत्रापि सत्यमित्यस्यासत्त्वव्यतिरेकविषयतयैवोपपत्तिः, ब्रह्मणि सद्रूपतायाः प्रागुपपादितत्वेन

(अद्वैतसिद्धिः)

तस्यासत्त्वव्यतिरेकविषयत्वकल्पनाया अनुचितत्वात्। तथा च ब्रह्मणि सत्प्रत्ययस्य रूप्ये असत्प्रत्ययस्य च सत्त्वासत्त्वयोर्बाधकासत्त्वतत्सत्त्वाभ्यां विशेषेण न प्रसङ्गसाम्यम्।

(२) अनुमानं च – 'विमतं सत्त्वरहितत्वे सति असत्त्वरहितत्वे सति सत्त्वासत्त्वरहितम्, बाध्यत्वाद् दोषप्रयुक्तभानत्वाद्वा, यन्नैवं तन्नैवम्, यथा ब्रह्म। न चाप्रसिद्धविशेषणत्वम्, 'सत्त्वासत्त्वे, समानाधिकरणात्यन्ताभावप्रतियोगिनी, धर्मत्वाद्रूपरसवत्, सत्त्वमसत्त्वानधिकरणानिष्ठम्, असत्त्वं वा, सत्त्वानधिकरणानिष्ठम्, धर्मत्वाद्रूपवद्' इति सामान्यतस्तत्सिद्धेः। न च साध्यैकदेशसिद्ध्या अंशतः सिद्धसाधनम्, गुणादिकं गुण्यादिना भिन्नाभिन्नम्, समानाधिकृतत्वादित्यत्रेव सिषाधयिषाबलेन सिद्धसाधनविरहस्योपपादितत्वात्। न च सत्त्वासत्त्वयोः परस्परविरहरूपतया साध्यं व्याहतमिति वाच्यम्, अतात्त्विकत्वेन परस्परविरहानात्मकत्वेन च समाहितत्वात्। भेदस्य तात्त्विकस्यैव निरसिष्यमाणत्वेन न तेन विरोधः। न च ब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वेनानिर्वाच्यत्वाभावोपपत्त्या अर्थान्तरम्, सत्त्वरहितस्य प्रपञ्चस्य सद्रूपत्वे मानाभावेन बाधात्। ब्रह्मणि च शून्यतापत्तिरेव सद्रूपत्वे प्रमाणम्। न च विमतं सदसदात्मकम्, बाध्यत्वाद् व्यतिरेकेण ब्रह्मवदित्याभाससाम्यं, विमतमसत् सत्त्वानधिकरणत्वात्, नृशृङ्गवदिति सत्प्रतिपक्षश्चेति वाच्यम्, ख्यातिबाधान्यथानुपपत्तिलक्षणविपक्षबाधकतर्कस्य वक्ष्यमाणत्वेनाभाससाम्यसत्प्रतिपक्षयोरभावात्। न चासदेव रजतमभादिति प्रत्यक्षबाधः, असदित्यस्य सत्त्वाभावविषयकत्वस्योक्तत्वाद्, अन्यथा ख्यात्यनुपपत्तेः। अत एव मिथ्याशब्दोऽप्यसत्पर्याय इति निरस्तम्। न चैवं ब्रह्मण्यपि सत्त्वाभावेनासदिति बुद्धिः स्यात्, निर्धर्मके सत्त्वरूपधर्माभावविषयकप्रतीतेरिष्टत्वात्, तुच्छत्वविषयकप्रतीतेरापादकाभावात्। न चैवमसत्त्वाभावेन जगति सदिति प्रतीत्यापत्तिः, इष्टापत्तेः। न च नृशृङ्गासत्त्वबुद्धितो नास्या वैलक्षण्यमनुभूयत इति वाच्यम्, एतावता तस्या अपि सत्त्वराहित्यविषयकत्वमस्तु न तु तदनुरोधेन एतस्यास्तुच्छत्वविषयकत्वम्, तुच्छत्वे अत्र बाधकसत्त्वात्, समानाकारप्रतीत्योरपि विचित्रविषयकत्वस्य प्रागेव दर्शितत्वाच्च।

यत्तु– सत्त्वासत्त्वविकल्पेषु आद्यद्वितीययोर्जगति सत्त्वराहित्यांशे रूप्यादावसत्त्वराहित्यांशे, तृतीयचतुर्थयोः उभयत्राप्यसत्त्वराहित्यांशे, पञ्चमे तूभयत्र सत्त्वराहित्यांशे, सप्तमेऽप्युक्तन्यायेन उभयत्राप्यसत्त्वराहित्यांशे, एवमेवाबाध्यत्वशून्यत्वे, प्राणाणिकत्वशून्यत्वे च पक्षे बाधः, षष्ठे त्वबाध्यत्वरूपसत्त्वेनाप्युपपत्त्या अर्थान्तरम् इति तन्न,

(अद्वैतसिद्धिः)

पूर्वोक्तासत्त्वमादायांशतो बाधसिद्धसाधनादेः परिहृतत्वात्। एवं सामान्यतो अनिर्वाच्यत्वसाधकमप्येतदर्थपरतया नेयम्। व्याघातादिपरिहारोऽप्येवमेव।

ननु साध्यप्रसिद्ध्यर्थानुमाने सत्त्वासत्त्वे, 'समानाधिकरणात्यन्ताभावप्रतियोगिनी न भवतः, परस्परात्यन्ताभावत्वात्, घटत्वाघटत्ववत्। असत्त्वं, सत्त्वानधिकरणानिष्ठं न, तत्प्रतिषेधरूपत्वात्, यथा अनित्यत्वं, नित्यत्वानधिकरणानिष्ठं न, एवं सत्त्वमपि पक्षीकृत्य प्रयोक्तव्यम्– इति सत्प्रतिपक्षता, परस्परविरहानात्मकत्वं चोपाधिरिति चेन्न, सत्त्वासत्त्वयोः परस्परविरहानात्मकत्वस्योक्तत्वेन हेतोरसिद्धत्वाद्, उपाधेः साधनव्यापकत्वाच्च, ख्यातिबाधान्यथानुपपत्त्या विपक्षबाधकतर्केण उपाधिसत्प्रतिपक्षयोरनवकाशात्।

यत्तु– नित्यानित्यत्वदृष्टान्ते साधनवैकल्यमुक्तं, तदयुक्तम्, परेण ध्वंसाप्रतियोगित्वतत्प्रयोगित्वयोः परस्परविरहरूपयोः नित्यत्वानित्यत्वयोः सविध एवोक्तेः। यत्तु घटत्वाघटत्वे, समानाधिकरणात्यन्ताभावप्रतियोगिनी, धर्मत्वाद् रूपरसवत्, कल्पितत्वमकल्पितत्वानधिकरणानिष्ठम्, धर्मत्वाद्रूपवदिति चाभाससाम्यम्। सद्विलक्षणत्वासद्विलक्षणत्वकल्पितत्वाकल्पितत्वानधिकरणानिष्ठम्, धर्मत्वाद्रूपवदिति चाभाससाम्यम्। सद्विलक्षणत्वासद्विलक्षणत्वकल्पितत्वाकल्पितत्वदृश्यत्वादृश्यत्वदुर्निरूपत्वादुर्निरूपत्वादौ प्रथमस्य द्वितीयतृतीययोर्यथाक्रममसद्वैलक्षण्ये सद्वैलक्षण्ये च त्रिष्वपि ज्ञेयत्वव्यवहार्यत्वादौ व्यभिचारश्च इति, तन्न, क्षितिः, सकर्तृका, कार्यत्वात्, घटवदित्यनुमाने अङ्कुरः सकर्तृकः कार्यत्वादित्याभाससाम्यं अङ्कुरादौ व्यभिचारो वा यथा न दोषः, तथा धर्मत्वेन हेतुना समानाधिकरणाभावप्रतियोगित्वं साधयतो मम घटत्वाघटत्वादौ साध्यसत्त्वेन व्यभिचाराभावाद् हेतोश्चानाभासत्वात्। न ह्यविरुद्धधर्मत्वादिकं तादृक्साध्यसत्त्वे प्रयोजकम्, किंतु धर्मत्वमात्रम्। न हि दृश्यत्वादिधर्माणां कुत्राप्यभावासंभवः। तदुक्तं– 'न हि स्वरूपतो दुर्निरूपस्य किंचिदपि रूपं वास्तवं संभवती'ति। अत एवात्यन्ताभावप्रतियोगित्वेऽपि न व्यभिचारः। न चात्मनिष्ठात्यन्ताभावप्रतियोगित्वेनार्थान्तरम्, आत्मनो निर्धर्मकत्वेनात्यन्ताभावस्याप्यभावाद्, अनात्मनिष्ठत्वेन विशेषणाद्वा। न चैवं कल्पितत्वमकल्पितत्वानधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि, अनात्मनिष्ठात्यन्ताभावप्रतियोगित्वाद्, अकल्पितत्ववदित्याभाससाम्यम्, अस्याः प्रसक्तेरिष्टत्वात्। मिथ्यात्वे यथा मिथ्यात्वसाधकदृश्यत्वादेर्न व्यभिचारः, तथास्यापि वादिविशेषं प्रति एकदेशसाधनेन साध्याप्रसिद्धिशङ्कापि। तथा हि– सत्ख्यातिवादिनं

(अद्वैतसिद्धिः)

प्रति असद्विलक्षणं विमतं सद्विलक्षणम्, बाध्यत्वात्, शुक्तिरजतसंसर्गवत्। असत्ख्यातिवादिनं प्रति सद्विलक्षणं विमतम्, असद्विलक्षणम्, अपरोक्षधीविषयत्वाद्, घटवत्। पक्षधर्मता-बलादनिर्वचनीयत्वसिद्धिः। यथा च सिद्धसाधनव्याघातादिकं, तथोक्तमधस्तात्। एवं प्रपञ्चनिष्ठव्यतिरेकप्रतियोगित्वं, सत्त्वासत्त्वोभयवृत्ति, प्रपञ्चनिष्ठव्यतिरेकप्रतियोगिमात्र-वृत्तित्वाद्, व्यवहार्यत्ववत्। सदसदुभयवृत्तित्वं, प्रपञ्चनिष्ठव्यतिरेक- प्रतियोगित्ववृत्ति, सत्त्वासत्त्वोभयवद्वृत्त्यशेषवृत्तित्वात्, भेदप्रतियोगित्ववत्। अप्रयोजकत्व- मनुकूलतर्कोक्त्या निरसिष्यते। तस्मादनुमानमत्र मानम्॥

इत्यद्वैतसिद्धौ अनिर्वाच्यत्वसाधकानुमानम्॥

## न्यायामृततरङ्गिणी

॥ मिथ्यात्वभंग इति॥ प्रत्येकमभावानां साध्यत्वेंऽशे सिद्धसाधनं। ऐकाधिकरण्यावच्छिन्नानां साध्यत्वे साध्याप्रसिद्धिः। परस्परविरहरूपाणां सामानाधिकरण्यायोगाद्व्याघात इत्यर्थः ॥ सत्त्वादीति॥ सत्वराहित्यस्य प्रातिभासकत्वे ब्रह्मवत्सत्त्वस्य पारमार्थिकत्वापत्तिरित्यर्थः ॥ भेदेति॥ वैलक्षण्यस्य भेदरूपत्वादित्यर्थः। अनिर्वाच्यसाधकानुमानस्यानुकूलतर्कवत्ताशंकां निरस्यति ॥ वक्ष्यमाणेति॥ प्रत्यक्षाविरोधमाशंक्य परिहरति ॥ न च सत्त्वेति॥ ॥ नृशृंगेति॥ असत्त्वेन निश्चितस्य नृशृंगादेरसत्त्वबुद्धित इत्यर्थः। एतेन तस्यापि सत्त्वराहित्यविषयत्वमस्तु न तु तदनुरोधेनैतस्यासद्विषयत्वमित्यपास्तं ॥ आद्यद्वितीययोरिति॥ सत्ताजातेरर्थक्रिया-कारित्वरूपस्य च सत्त्वस्य जगति सत्त्वात्तदभावरूपस्य च रूप्येपि सत्त्वादित्यर्थः ॥ तृतीयचतुर्थयोरिति॥ बाध्यत्वरूपस्याप्रामाणिकत्वरूपस्य चासत्त्वस्य तव मते प्रपंचे मतद्वयेपि रूप्ये विद्यमानत्वेनोभयत्रापि प्रपंचरूप्ययोरसत्वराहित्यांशे बाध इत्यर्थः ॥ पंचम इति॥ रूप्यप्रपंचयोरशून्यत्वात् ॥ उक्तन्यायेनेति॥ सत्त्वनिषेधेऽसत्त्वापरपर्यायस्य शून्यत्वस्य प्राप्त्या रूप्यप्रपंचयोरसत्त्वराहित्यांशे बाध इत्यर्थः ॥ षष्ठ इति॥ प्रपंचे ब्रह्मत्वरूपसत्त्वाभावेप्यबाध्यत्वरूपं सत्त्वं तत्र न निषिद्धं स्यादित्यर्थः। किं चेत्यादिपूर्ववद्योज्यं ॥ सत्त्वासत्त्वे इति॥ संयोगतदत्यंताभावयोः सामानाधिकरण्याभावान्न तत्र व्यभिचार इति भावः। यथा सत्त्वासत्त्वयोर्न परस्परविरहानात्मकत्वं तथोक्तं ॥ आद्य इति॥ सद्विलक्षणत्वासद्विलक्षणत्वादौ समानाधि-करणात्यंताभावप्रतियोगित्वे सदसदाद्यात्मकं किंचिदापद्येतेत्यर्थः ॥ ब्रह्मण इवेति॥

(तरङ्गिणी)

**अभिधानत्वाभावेन यथा ब्रह्मणोऽवाच्यत्वं तथा तत एव घटादेरप्यवाच्यत्वं स्यादित्यर्थः ॥अत्यंताभावप्रतियोगित्व इति॥ अत्यंताभावप्रतियोगित्वस्याप्यत्यंताभावप्रतियोगित्वे यन्निष्ठात्यंताभाव प्रतियोगित्वमत्यंताभावप्रतियोगित्वस्य तत्रैव व्यभिचार इत्यर्थः। ॥अनिर्वाच्यसाधकानुमानभंगः॥**

## न्यायामृतकण्टकोद्धारः

एवमनिर्वचनीय लक्षणं निराकृत्य तत्र प्रमाणं निराकरणीयम्। तत्रानिर्वचनीये किं प्रत्यक्षं प्रमाणमुतानुमानमथागमः? नाद्यः अनिर्वचनीयमिति प्रत्यक्षाभावात्। न च मिथ्यैव रजतमभादिति परामर्शान्यथानुपपत्या मिथ्यात्वप्रत्ययोऽस्तीति वाच्यम्। तावता मिथ्यात्वसिद्धावपि अनिर्वचनीयत्वासिद्धेः। न च मिथ्याशब्दोऽनिर्वचनीयस्य वाचक इति वाच्यम्। वाचकत्वप्रत्यायकनिगमनिरुक्तादेरभावात्। नापि लक्षकः। मुख्यार्थे बाधकाभावात्। न च तर्हि मिथ्यापदं निरर्थकमापद्यत इति वाच्यम्। असदर्थकत्वोपपत्तेः। न च ख्यायमाने शुक्तिरूप्यादौ कथं शशविषाणादिसाधारणमसत्त्वमिति वाच्यम्। असतोऽपि ख्यातेरुपपादयिष्यमाणत्वात्। किञ्च मिथ्येति प्रत्ययस्यानिर्वचनीयत्वविषयत्वेऽसदेव रजतं प्रत्यभादित्यनुभवविरोधः। न चायमनिर्वचनीयैकदेश सत्त्वव्यतिरेकविषयत्वेनैवोपपन्न इति नानिर्वचनीयत्वविरोध इति वाच्यम्। तथात्वे ब्रह्मणि सत्त्वप्रत्ययस्य असत्त्वव्यतिरेकविषयत्वापत्तेः। सत्त्वाभावेनासदिति प्रत्ययापत्तेश्च निर्धर्मकत्वेनोपपादनं व्याहतमिति। न च ब्रह्मणः सद्रूपत्वात् तत्र सत्वप्रत्ययस्य न विषयान्तरकल्पनमिति वाच्यम्। सत्त्वाभावे सद्रूपताया असंभवात् बाधकाभावान्न सत्त्वप्रत्ययस्य विषयान्तरकल्पनमिति यदि तदेतदत्रापि तुल्यम्। शुक्तिरजतादेरसत्त्वे बाधकानां निराकरिष्यमाणत्वात्। तस्मान्नानिर्वचनीये प्रत्यक्षमिति मनसि निधायानुमानमेव दूषयति ॥अनुमानश्चेति॥ विशेषतोऽनिर्वचनीयत्वसाधकमित्यर्थः ॥अंश इति॥ असत्त्वाभावसाधनांश इत्यर्थः। न च विमतं भिन्नाभिन्नमित्यत्रेव सिषाधयिषया तादृशसाध्यसाधनान्नांशतः सिद्धसाधनमिति वाच्यम्। तत्रैवात्राविशिष्टसाध्यं प्रति हेतोरप्रयोजकत्वाभावादित्युक्तत्वात्। अन्यथाऽतिप्रसंगात् ॥अप्रसिद्धेरिति॥ सामान्यसिद्धेर्दूषयिष्यमाणत्वादिति भावः ॥उक्तरीत्येति॥ असत्त्वाभावस्यैव सत्त्वेन पुनस्तदभावे साध्ये विरोध इत्यादिकयेत्यर्थः। न च निषेधसत्यसमुच्चयस्यातात्विकत्वेन समाधानमुक्तमिति वाच्यम्। अस्यानिर्वचनीयसिद्धयुत्तरकालीनत्वेनान्योन्याश्रयात् ॥ब्रह्मवदिति॥ सद्रूपत्वेन ब्रह्मवदेवानिर्वचनीयत्वसंभवादित्यर्थः। न च ब्रह्मवत् प्रपञ्चस्य सद्रूपत्वे प्रमाणं नेति वाच्यम्। ब्रह्मणोऽपि तदभावप्रसंगात्। श्रुत्यादिकं तूभयत्र तुल्यम्। उपपादितं चैतत् प्रपञ्चमिथ्यात्वानुमानबाधप्रस्तावे। न च ब्रह्मणः सद्रूपत्वाभावे शून्यतापत्तिरेव बाधकमिति वाच्यम्। प्रपञ्चेऽपि तुल्यत्वात् ॥भेदेति॥ न चातात्विकभेदाभ्युपगमाददोष इति वाच्यम्। तथात्वेऽनिर्वचनीयस्याप्यतात्विकत्वापत्तेः। तस्यातात्विकत्वेऽनिर्वचनीयत्वं तात्विकमपद्येत। अन्योन्याश्रयादेरुक्तत्वाच्च ॥वक्ष्यमाणेति॥ न चानुकूलतर्कसद्भावात् नाभाससाम्यमिति वाच्यम्।

(कण्टकोद्धारः)

ख्यातिबाधान्यथानुपपत्यतिरिक्तस्य तस्याभावात्। तस्याश्चाग्रे निरसिष्यमाणत्वात् ॥ असत्त्वाभावेनेति॥ तथाच बाधानन्तरमसदेवेतिवत्सदेवेति प्रत्ययः स्यादित्यर्थः ॥ नृशृंगादीति॥ तथाच बुध्यविशेषे विचित्रविषयत्वं न कल्प्यमन्यथाऽतिप्रसंगादिति भावः। आद्यद्वितीययोः सत्ताजात्यर्थक्रियाकारित्वतदभावयोरित्यर्थः। तृतीय चतुर्थयोः अबाध्यत्वबाध्यत्वप्रामाणिकत्वाप्रामाणिकत्वयोरित्यर्थः। पञ्चमे अशून्यत्वशून्यत्व इत्यर्थः। सप्तमाष्टमनवमेषु अबाध्यत्वशून्यत्वप्रामाणिकत्वशून्यत्वपरांगीकृत सत्त्वासत्त्वेष्वित्यर्थः ॥षष्ठ इति॥ ब्रह्मत्वशून्यत्वपक्ष इत्यर्थः। न च बाध्यत्वं क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वरूपसत्त्वासत्त्वमादाय बाधसिद्धसाधनादेः परिहार इति वाच्यम्। तादृशासत्वस्य शशविषाणादावभावेन प्रागेव दूषितत्वात्। तस्मान्न विशेषतोऽनिर्वचनीयत्वसाधकमनुमानं संभवतीति। उक्तदूषणगणं सामान्यतोऽनिर्वचनीयसाधकेऽतिदिशति ॥सामान्यत इति॥ ॥अंशे बाध इति॥ आद्यद्वितीययोः सत्त्वाभावांशे अन्यत्रत्वसत्त्वाभावांश इत्यर्थः ॥षष्ठ इति॥ सद्रूपत्वेनोपपत्तेरित्यर्थः। सामान्यानुमानेषु सत्प्रतिपक्षत्वाभाससाम्योपाधीन् क्रमेणाह ॥सत्त्वासत्त्व इत्यादिना॥ ॥परस्परेति॥ न चासिद्धिरिति वाच्यम्। लाघवेनासत्त्वाभावस्यैव सत्त्वांगीकारात्। अनेनैव न्यायेनोत्तरत्रासिद्धिपरिहारो द्रष्टव्यः। न च ख्यातिबाधानुपपत्तिरूपविपक्षबाधकतर्कात् न सत्प्रतिपक्षादीति वाच्यम्। तस्याग्रे निरसिष्यमाणत्वात्। न चोपाधेः साधनव्यापकत्वमिति वाच्यम्। सत्त्वासत्त्वयोः परस्परप्रतिषेधात्मकत्वस्य समर्थितत्वात्। परानुमानेषु उपाधिप्रतिकूलतर्कौ दर्शयति ॥एवञ्चेति॥ न चैतावताऽविरुद्धधर्मवत्त्वं सदसद्रूपमेकं स्यादिति प्रतिकूलतर्कश्चोक्तः। तदुभयं न संभवति प्रयोजकश्चोपाधिः न चाविरुद्धधर्मत्वं प्रयोजकं किन्तु धर्मत्वमात्रमिति। तथा तर्कोऽपि न संभवत्यनिष्टप्रसंगत्वाभावादिति वाच्यम्। धर्ममात्रत्वस्योक्तसाध्यप्रयोजकत्वे व्याघातस्य वक्ष्यमाणत्वात्। सदसद्रूपत्वस्येष्टत्वे तद्वैलक्षण्य-पर्यन्तधावनानुपपत्तेश्च ॥ किञ्चेति ॥ न च क्षितेः सकर्तृकत्वे साध्येऽङ्कुरः सकर्तृकः कार्यत्वादित्याभाससाम्यमंकुरादौ व्यभिचारश्च न पक्षसमत्वात् तथा प्रकृतेऽपि पक्षसमत्वात् नोक्तधर्मेषु व्यभिचारादीति वाच्यम्। दृश्यत्वादीनां प्रपञ्चे वस्तुतोऽभावे तेन मिथ्यात्वं न सिध्येत्। कल्पितस्य त्वात्मन्यपि सत्त्वात् कल्पितसद्वैलक्षण्यादौ विवादाभावात् तत्साधनार्थपरप्रयासानुपपत्तेश्च। व्याघातश्च सर्वत्रातिस्फुटः। तथा च क्षितिसकर्तृ-कत्वानुमानेऽङ्कुरादेः पक्षसमत्वान्नैवं बाधकम्। किञ्च सर्वस्यापि पक्षसमत्वेऽयं घटोऽयमघट इत्यादिका कापि व्यवस्था न सिद्ध्यतीति असंकीर्णसर्वव्यवहारोच्छेदश्च। तथाचैवंविधबाधकादुक्तधर्माणां विपक्षत्वे व्यभिचाराद्यभिधानमतिसंलग्नतरम् ॥तथात्वे इति॥ औपाधिकधर्माणामुपाध्यात्मकत्व इत्यर्थः। तथा चानौपाधिकदृश्यत्वादात्मन एव मिथ्यात्वं स्यादित्याशयः। तथा घटादेरप्यवाच्यतापत्तौ शक्याभावात् तत्संबंधरूपा लक्षणापि नेत्याशयः ॥ आवाभ्यामिति ॥ तथा च प्रतीत्यनुरोधेन ज्ञेयत्वादेर्ज्ञानत्वाद्यतिरिक्तत्वमवश्यांगीकरणीयम् आवयोर्बाधकाभावादिति भावः। न्यायमतेऽपि व्यभिचारमुपपादयति ॥वैशेषिकैरपीति॥ वैशेषिकैरित्यस्य इति स्वीकृतत्वेनेत्यनेनान्वयः। अन्यथेति ॥स्वनिष्ठत्व इत्यर्थः॥ तथाच न ज्ञेयत्वादौ व्यभिचारः इत्याशयः ॥सत्त्वादेरपीति॥ स्वनिष्ठत्वे आत्माश्रयादेस्तत्रापि वक्तुं शक्यत्वादिति भावः। किंचात्माश्रयात् ज्ञेयत्वादि न स्वनिष्ठम्। तर्हि दृश्यत्वादिकमपि स्वनिष्ठं न स्यात्। तथा च तस्य मिथ्यात्वं न स्यात्। यदि दृश्यत्वं दृश्यमित्यादिप्रतीतिबलात् तत् स्ववृत्ति तर्हि ज्ञेयत्वं ज्ञेयमित्यादिप्रतीतिबलात् तदपि स्ववृत्तीत्याह

(कण्टकोद्धारः)

॥ असद्वैलक्षण्येति ॥ ॥ अत्यन्तेति ॥ न च तस्यापि पक्षसमत्वम्। तथात्वे यतोऽत्यंताभावप्रतियोगित्वं व्यावृत्तं तत्रैव धर्मत्वस्य व्यभिचार इति भावः ॥ आत्मशब्देनैवेति ॥ आत्मशब्दस्य तदप्रतिपादकत्वे तन्निष्ठात्यन्ताभावप्रतियोगित्वं शब्दप्रतिपाद्यत्वादेर्न स्यात्। भूतले घटाभाव इत्यत्र भूतलशब्दस्य भूतलाप्रतिपादकत्व इवेति भावः। ननु सत्वासत्वयोरप्यभावो नेति सर्वराहित्यश्रुत्या बोध्यते। तथा च कथमात्मनिष्ठात्यंत्याभाव प्रतियोगित्वेनार्थान्तरमित्यत आह ॥ यदीति ॥ तथापि ज्ञेयत्वादौ व्यभिचारः सुस्थ एव। तदत्यंताभावस्यात्मन्य-भावात्। किञ्च सर्वराहित्यबोधनं व्याहतत्वेन श्रुत्यापि कर्तुं न शक्यते। सर्वराहित्यस्यापि सर्वमध्यपतितत्वेन तद्राहित्ये ब्रह्मणः सर्वधर्मवत्त्वापत्तिरिति भावः। व्याघातादीत्यादिशब्देन हेतावनात्मनिष्ठेत्यनेन यत्किञ्चिदनात्मनिष्ठत्वं वा सकलानात्मनिष्ठत्वं वा ? नाद्यः। घटत्वादौ व्यभिचारात्। साध्येऽप्यनात्मनिष्ठेत्यनेन यत्किञ्चिदनात्मविवक्षाया मर्थान्तरम्। द्वितीये दृष्टान्ते साधनवैकल्यमित्यादि संगृहीतम्। उक्तन्याय-मन्यत्रातिदिशति ॥ एतेनेति ॥ ॥ व्याघातेति ॥ पक्षविशेषणसाध्यपदानां व्याघातः। उभयत्रासद्विलक्षणमिति साध्येऽसदेव रजतं प्रत्यभादिति अनुभवविरोधश्चेति भावः। इति अनिर्वाच्यसाधकानुमानभङ्गः ।

## ३८. अनिर्वाच्यसाधकख्यातिबाधान्यथानुपपत्तिभङ्गः

अर्थापत्तावपि सच्चेन्न बाध्येतेत्यत्र किमिदं सत्? सत्ताजातिमद्वा? अर्थक्रियाकारि वा? अबाध्यं वा? अबाध्यत्वावच्छेदकावच्छिन्नं वा? प्रामाणिकं वा? नाद्यद्वितीयौ, त्वन्मते प्रपंचे व्यभिचाराद्, व्यवहारदशायां न बाध्येतेत्यापादनेन 'नेह नाने'ति बाधेन जगतोऽनिर्वाच्यत्वासिद्धेः, व्यवहारदशायामेव जगति यौक्तिकादिबाधस्य दर्शनाच्च, प्रत्यक्षबाधस्य च परोक्षाध्यस्ते अपरोक्षाध्यस्ते नभोनैल्यादौ चाभावात्, सत्तादिराहित्येऽपि ब्रह्मवदनिर्वाच्यत्वाभावोपपत्तेश्च, व्यवहारदशायां बाध्यस्यापि रूप्यस्याद्वैतवत्पारमार्थिकत्वोपपत्तेश्च। न तृतीयः, यदबाध्यम् तदबाध्यमिति साध्यावैशिष्ट्याद्, व्यवहारस्यापाद्यत्वे च बाध्यत्वेनैवासद्व्यावृत्तेरपि सिद्ध्या शेषवैयर्थ्यात्। अत एव न चतुर्थः, प्रामाणिकत्वादन्यस्य तदवच्छेदकस्याभावाच्च। न पंचमः, बाध्यस्यापि बाध्यत्वाकारेण प्रामाणिकत्वात्, सत्त्वेन प्रामाणिकत्व-विवक्षायामात्माश्रयापातात्, मानान्तराप्राप्तस्य तत्त्वावेदकश्रुतिवेद्यत्वेन प्रामाणिकस्य ब्रह्मनिर्विशेषत्वादेरपि त्वन्मते ब्रह्मान्यत्वेन बाध्यत्वेन व्यभिचाराच्च, अबाध्ये अविद्यादिसाधकतया स्वतःप्रकाशमाने चिन्मात्रे वैयर्थ्येन प्रमाणाप्रवृत्त्या प्रामाणिकत्वस्य बाध्यत्वेनैव व्याप्तत्वाच्च, रूप्यादिबाधकस्यातत्त्वावेदकत्वेन तदप्रामाणिकतानापाद-

कत्वाच्च। अतत्त्वावेदकव्यावहारिकप्रमाणबाधितस्यापि रूप्यादेरद्वैतवत्स्वतः प्रामाण्यप्रयुक्तपारमार्थिकत्वोपपत्तेः। न चास्य तत्त्वावेदकाद्वैतश्रुतिबाधः तस्याः भेदश्रुतिवत् प्रत्यक्षप्राप्तव्यावहारिकरूप्यनिषेधानुवादित्वोपपत्तेः।

एतेनासत एव विलक्षणमिह सद्विवक्षितमिति केनचिदुक्तं निरस्तम्। अवधारणस्य सदसद्विलक्षणं न चेदित्यर्थकत्वेन प्रतियोग्यप्रसिद्ध्यापादकासिद्धेः, बाधेनैवानिर्वाच्यत्वसिद्ध्या ख्यात्युक्त्ययोगाच्च। सदसद्विलक्षणं न चेदित्यत्र सत्किं विवक्षितमिति पूर्वविकल्पप्रसरेण घट्टकुटीप्रभातवृत्तान्तापाताच्च। एवं न बाध्येतेत्यत्र बाधः किं ज्ञानेन निवृत्तिः? प्रतिपन्नोपाधौ त्रैकालिकनिषेधो वा? नोभयमपि मिथ्यात्वभंगे उक्तरीत्या आद्ये इष्टापत्तेर्द्वितीये असद्विलक्षणत्वपक्षे बाध्यते चेति विपर्ययापर्यवसानात्।

एवमसच्चेदित्यत्रासत् किं सत्तादिहीनम्? बाध्यं वा? निरुपाख्यं वा? निरुपाख्यत्वावच्छेदकावच्छिन्नं वा? निस्स्वरूपं वा? नाद्यः, सत्तादिहीनस्यात्मादेः प्रतीत्या व्यभिचाराद्रूप्यादौ तस्मादसन्न भवतीति विपर्ययापर्यवसानाच्च। अत एव न द्वितीयः, न तृतीयः, निरुपाख्यं चेन्न ख्यायेतेतिसाध्याविशिष्ट्यात्। न चतुर्थः, निस्स्वरूपत्वाद्यन्यस्य तस्याभावादसत एव ख्यात्यंगीकारेणापादकासिद्धेश्च। न पंचमः पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वस्य निर्धर्मके ब्रह्मण्यपि सत्वेनानिर्वाच्यस्य स्वरूपेण तत्प्रतियोगित्वे वाच्ये शशशृंगादेरपीतोऽन्यस्य निस्स्वरूपत्वस्याभावेन तस्मादसन्न भवतीति विपर्यापर्यवसानात्। किं चासत्त्वं यदि सत्त्वाभावतद्व्याप्यान्यतरत्, तर्ह्यनिर्वाच्यख्यातौ न विपर्ययपर्यवसानं अन्यच्चेदिष्टापत्तिः। एवं न प्रतीयेतेत्यत्र किं प्रतीतिमात्रं विवक्षितम्? सत्त्वेन प्रतीतिर्वा? अपरोक्षप्रतीतिर्वा? सत्त्वेनापरोक्षप्रतीतिर्वा? नाद्यः, असतोऽप्रतीतावसद्वैलक्षण्यज्ञानायोगाद्, असत्प्रतीतिनिरासानुपपत्तेश्च, असत्पदस्यानर्थकत्वे प्रयुक्तपदानां सम्भूयकारित्वेनासन्न प्रतीयते इति वाक्यस्याबोधकत्वापाताच्च। असतोऽसत्वेनाप्रतीतावसद्व्यवहारानुपपत्तेश्च। तदुक्तम्–

असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि ।
तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥ इति ।

द्वितीयेऽपि सा किं प्रमारूपा निषिध्यते? भ्रमरूपा वा? नाद्यः, इष्टापत्तेः। न द्वितीयः, उक्तन्यायेनासतः प्रतीतिसिद्धौ सतोऽसत्वेनेवारूप्यस्य च रूप्यत्वेनेव भ्रान्तित्वादेवासतः सत्त्वेन प्रतीत्युपपत्तेः। तदुक्तम्– 'असतः सत्प्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वादि'ति। येन पुंसा शशशृंगाभावो न निश्चितः, तस्य शशशृंगमस्तीतिवाक्याभासाज्ज्ञानोत्पत्तेश्च। न ह्यत्र 'घढधष्'– इत्यादिनिरर्थकेष्विव पदार्थधीरेव वा कुंडमजाजिनम्' – इत्याद्यपार्थकेष्विवान्वयधीर्वा नास्ति विपरीतबोधकेषु योग्यताभावेऽपि अयोग्यत्वज्ञानाभावमात्रेण योग्यताभ्रमेण वा आकांक्षासन्निधिभ्यां ज्ञानोत्पत्तेरनुभवात्। अन्यथा प्रवृत्त्यादेरयोगात्। योग्यताहीनाद्वाक्याज्ज्ञानानुत्पत्तौ च तद्धीनात्प्रतिवादिवाक्याद्धीरेव न स्यादिति कथा बधिरकलहः स्यात्।

ननु– शशशृंगादिशब्दाद्विकल्पमात्रमेव जायते, उक्तं हि योगसूत्रे– 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इतीति चेन्न, विकल्पस्येच्छादिवज्ज्ञानान्यवृत्त्यन्तरत्वेऽनुभवविरोधात् प्रवृत्त्ययोगाच्च। न हि शशशृंगस्यासत्त्वाज्ञानदशायां तदस्तित्वज्ञानस्य गोशृंगास्तित्वज्ञानान्मात्रयापि विशेषोऽनुभूयते। असति वृत्त्यन्तरवज्ज्ञानस्यैवोपपत्तेश्च। अन्यथा शुक्तिरूप्यादेरपि विकल्पमात्रं न तु प्रतीतिरिति स्यात्। विकल्पस्य ज्ञानविशेषत्वे त्विष्टापत्तिः। वस्तुशून्य इति च कोऽर्थः किं किमप्यनुल्लिखन्निति? असदेवोल्लिखन्निति वा? आद्ये अनुभवविरोधः, व्यवहारानुपपत्तिश्च। न ह्ययं घटादिवत्किमप्यनुल्लिखन्ननुभूयते। द्वितीये सिद्धं नः समीहितम्। न चेयमपि धीरनिर्वाच्यविषया। निस्स्वरूपस्य शशृंगादेरप्यनिर्वाच्यत्वे हि रूप्यादेः कुतो वैलक्षण्यमाशास्यते? निरुपाख्यादिति चेन्न, तस्य दुर्बोधत्वादित्युक्तत्वात्। तादृशाद्वैलक्षण्यस्येष्टत्वाच्च, अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हीति त्वन्मतेऽपि तत्राध्यस्तस्यास्तित्वस्यानिर्वाच्यत्वेऽपि शशशृंगमसदितिवाक्य इव शशशृंगमस्तीतिवाक्ये शशशृंगशब्देनासत एव प्रतीतेश्च। 'तद्धेक आहुरसदेवेदमग्र आसीदि'ति श्रुत्याऽप्यसतः सत्त्वप्रतीतेश्च।

एतेन शशशृङ्गशब्दो निश्चितानन्वयत्वादपार्थक इति चिन्तामण्युक्तं निरस्तम्, अपार्थकशब्देनाप्रत्यायकोक्तावनन्वयानिश्चयदशायां प्रवृत्तिपर्यंतप्रतीत्यनुभवविरोधात्,

तेनात्यन्तिकनिषेधयोग्याप्रतीतौ असच्छशशृङ्गमित्यादौ समभिव्याहृतस्यासत्पदस्यानन्वयापाताच्च। असत्प्रत्यायकत्वोक्तौ चेष्टापत्तेः। एतेनैव शशशृङ्गादिशब्दानां संगतिग्रहणासम्भवादबोधकतेत्यात्मतत्त्वविवेकोक्तं निरस्तम्, यौगिकशब्दानामवयवसंगत्यतिरेकेण पृथक्संगत्यनपेक्षतया सतो वाऽसतो वाऽर्थस्य बोधनसम्भवात्। एतेनैव शशशृंगशब्दस्य शशे शृंगाभावोऽर्थ इति वार्तिकोक्तं निरस्तम्, तत्र तस्याशक्तेः, नास्तीत्यस्य पौनरुक्त्यापाताच्च। न तृतीयः, यदसत् तन्न प्रतीयते इति व्याप्तिज्ञानस्य प्रत्यक्षतावश्यम्भावात् शशशृंगाद्यत्यन्ताभावस्याप्रत्यक्षत्वापातेनासतोऽसत्त्वासिद्धेश्च। न चतुर्थः, भ्रान्तित्वादेव तदुपपत्तेः सन्मात्राविषयकं अपरोक्षज्ञानमपरोक्षभ्रमौ वा असद्विषयकः सत्त्वानधिकरणविषयकत्वादसद्विषयकपरोक्षज्ञानवदित्याद्यनुमानैरप्यसतः अपरोक्षप्रतीतिसिद्धेश्च।

नन्वसतोऽपरोक्षधीश्चेत् शशशृंगादेरपि सा स्यात् न चासद्विशेषस्य सा सद्विशेषत्वे असत्त्वायोगादिति चेन्न, दुष्टेन्द्रियस्य रूप्यसंस्कारसाचिव्यवत् शशशृंगादिसंस्कारसाचिव्याभावाद्, असतः सत्यादसत्त्वरूपेण सद्वैलक्षण्यरूपेणापरोक्षप्रतीत्यविषयत्वरूपेण नृशृङ्गशशशृङ्गादानामेवान्योन्यं नृशृङ्गादिशब्दैरेव परोक्षप्रतीतिव्यवहारविषयत्वरूपेण शशशृङ्गस्यैव कदाचिदेव परोक्षप्रतीतिविषयत्वरूपेण च विशेषेणेवानेनापि बौद्धेन सत्त्वानपेक्षेण विशेषेणासत्त्वाव्याघाताच्च।

एतेन सर्वसामर्थ्यहीनस्यासतः सता ज्ञानेनासम्बन्धाद्विषयत्वरूपधर्मानाश्रयत्वाद्, भाति ज्ञायत इति कर्तृत्वकर्मत्वाद्ययोगाच्च, नापरोक्षधीरिति निरस्तम्, अतीतादेः स्मृत्यनुमित्यादिकं प्रति विषयत्वादिवदसतोऽसद्वैलक्षण्यं प्रति प्रतियोगित्ववद् व्यवहारं परोक्षज्ञानं च प्रतिविषयत्वकर्तृत्वकर्मत्वादिवदपरोक्षप्रतीत्यविषयत्वरूपसाध्यवत् सर्वसामर्थ्यवैधुर्यरूपसाधनवच्चापरोक्षभ्रान्तिविषयत्वस्याप्युपपत्तेः। यदि तत्रानुमित्यादावेव तद्विषयकत्वं न त्वतीतादौ विषयत्वम्, तर्हीतोऽपि तथास्तु तत्सत्त्वानपेक्षं चेदिदमपि तथा न हि सत्त्वेन भ्रान्तिः सत्त्वसापेक्षा, अन्यथा सद्विलक्षणत्वेऽपि सा न स्यात् सम्बन्धादावसद्वैलक्षण्यादपि लाघवेन सत्त्वस्यैव तन्त्रत्वाद्, दुष्टाच्छब्दादसति सत्त्वे परोक्षभ्रान्तिवद् दुष्टादिन्द्रियात् सत्त्वेनापरोक्षभ्रान्त्युपपत्तौ परोक्षप्रतीतिस्वीकारेणापरोक्षप्रतीतिनिषेधे विशेषहेत्वभावाच्च।

एतेन प्रवृत्तिविषयत्वान्यथानुपपत्त्या असद्वैलक्षण्यसिद्धिरिति निरस्तम्, इदमंशस्यासद्रूप्यात्मना प्रतीतत्वमात्रेण तदर्थिप्रवृत्तिविषयत्वोपपत्तेः। न चापरोक्षज्ञानस्याद्येनेन्द्रियसन्निकर्षेण च जन्यत्वादसतश्च हेतुत्वसन्निकर्षयोरयोगान्नापरोक्षधीरिति वाच्यम्, अपरोक्षप्रमाया एवार्थादिजन्यत्वाद्रूप्यसंस्कारसचिवस्य दुष्टेन्द्रियस्याधिष्ठानसन्निकर्षादेवाधिष्ठानस्यासद्रजतात्मना प्रतीत्युपपत्तेश्च। अन्यथा अनिर्वाच्यपक्षेऽप्ययं दोषः स्यात्। न हि धीमात्रशरीरं रूप्यं स्वज्ञानात्प्रागस्ति।

किं चानिदंरूपे प्रातिभासिके च रूप्ये यदिदन्त्वं यच्च व्यावहारिकत्वं भाति तदुभयं न तावत् सत् नाप्यनिर्वाच्यम् तथात्वे हि तस्यासद्वैलक्षण्यार्थं प्रातिभासिकसत्त्वाय च सत्त्वप्रतीत्या भाव्यमेवं तदपि सत्त्वमनिर्वाच्यं चेत्तस्यापि सत्त्वप्रतीत्या भाव्यमित्यनवस्थापातात्। तस्मादिदन्त्वव्यावहारिकत्वयोरसत्त्वं वाच्यम्। एवं रूप्यमसद्विलक्षणं धीकालेऽस्ति चेत्तस्य स्वरूपेण त्रैकालिकनिषेधायोगादिदन्त्वाकारेण वा पारमार्थिकत्वाकारेण वा निषेधो वाच्यः, तयोरप्यसद्विलक्षणत्वे स्वरूपेण निषेधायोगात्पारमार्थिकत्वाकारेण निषेधे चानवस्थानात्तयोरसत्त्वं वाच्यम्। ते च सत्त्वेनापरोक्षे इति कथमसतः सत्त्वेनापरोक्षज्ञानाभावः। तदुक्तम्–

अन्यथात्वमसत्तस्माद् भ्रान्तावेव प्रतीयते ।<br>
सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ॥<br>
तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः । इति

टीकायां त्विदन्त्वसत्त्वयोः सत्त्वायोगादनिर्वाच्यत्वे च तथैव प्रतीतौ प्रवृत्त्ययोगात्सत्त्वेन भाने च तस्मिन्नपि सत्त्वे सत्त्वादिविकल्पप्रसारेणानवस्थानादिदन्त्वव्यावहारिकत्वयोरसत्त्वमित्युक्तम्। न च तत्र त्वत्पक्षेप्यसति रूप्ये यत्सत्त्वं भाति, तस्य सत्त्वायोगादसत्त्वे च तथैव भाने प्रवृत्त्ययोगात् सत्त्वेन भाने च तस्मिन्नपि सत्त्वे उक्तविकल्पप्रसरेणानवस्थेति वाच्यम्, परमतेऽनिर्वाच्यसत्त्वस्य सत्त्वेनाभावे प्रातिभासिकत्वासिद्धिवत् मन्मते असतः सत्त्वस्य सत्वेनाप्रतीतावसत्त्वासिद्धेरभावात्।

किं च प्रत्येकं सत्त्वासत्त्वयोरनुपपत्तौ सदसदात्मकमस्तु निषेधसमुच्चयवत् विधिसमुच्चयस्याप्यतात्त्विकत्वेनाविरोधसम्भवात्। एवं चतुर्थप्रकाराकल्पनाल्लाघवं त्वत्पक्षे

असदेव रूप्यमभादितिबाधकस्य सद्वैलक्षण्यमिवात्रापि सद्रूप्यमितिभ्रमस्यासद्वैलक्षण्यं विषयोऽस्तु। यद्वा त्वत्पक्षे सदसद्विलक्षणे रूप्येऽनिर्वाच्यम्। सत्त्वमिवात्रापि सदसदात्मके रूप्ये सदसदात्मकं सत्त्वं भ्रान्तौ प्रतीयताम्। भ्रान्तित्वे च त्वत्पक्षेऽनिर्वाच्य-विषयत्वमिवात्रापि सदसद्विषयत्वं तंत्रमस्तु। अन्यथा नित्यकाम्येऽपि नित्यत्वादेः प्रत्येकमनुपपत्त्या भिन्नाभिन्ने च गुणगुण्यादौ भेदादेः प्रत्येकमनुपपत्त्योभयबहिर्भावः स्यात्।

किं चासद्विलक्षणं चेन्न बाध्येत, सद्विलक्षणं चेन्न प्रतीयेतेत्यर्था-पत्त्यानिर्वाच्यत्वाभाव एव किं न स्यात्। न चाबाधाप्रतीत्योः सत्त्वासत्त्वे तंत्रे लाघवात्, न त्वसद्विलक्षणत्वसत्त्वविलक्षणत्वे गौरवादिति युक्तम्। अबाधाप्रतीति-प्रतियोगिन्योर्बाधप्रतीत्योरेव हि प्रथमं प्रयोजकं चिन्त्यतां प्रथमोपस्थितत्वात् कल्पकत्वाच्च। भावप्रयोजकाभावादेवाभावोपपत्तौ प्रयोजकान्तरस्यानन्वेषणीयत्वाच्च। बाधप्रतीत्योश्चासत्त्वसत्त्वे तन्त्रे लाघवात्, न तु सद्विलक्षणत्वासद्विलक्षणत्वे गौरवात्। तथा चाबाधाप्रतीती प्रत्यसद्विलक्षणत्वसद्विलक्षणत्वे तन्त्रे। एवं चोक्तरीत्या सत्त्वात्प्रतीतिरसत्त्वाद् बाध इति विधिसमुच्चयः स्यात्। नृशृंगादौ सद्वैलक्षण्यवदसत्त्वस्य भावेपि बाधाभावः प्रसक्त्यभावात्। एवं चासद्विलक्षणं चेन्न बाधः स्यात् सद्विलक्षणं चेन्न भायादिति भवत्वनिर्वाच्यविलक्षणम्।

अनिर्वाच्यसाधकख्यातिबाधान्यथानुपपत्तिभंगः।

## अद्वैतसिद्धिः

**ख्यातिबाधान्यथानुपपत्तिसमर्थनम् :-** अर्थापत्तिरपि ख्यातिबाधान्यथानुपपत्त्यादिरूपा तत्र प्रमाणम्। तथा हि– विमतं रूप्यादि सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत, बाध्यते प्रतीयतेऽपि, तस्मात् सदसद्विलक्षणत्वादनिवचनीयम्। ननु– सत्ताजात्यर्थक्रिया-कारित्वादिकमनङ्गीकारपराहतं त्वन्मते व्यभिचारि च। न च व्यवहारदशाबाध्यत्वमापाद्यम्, तथा सति 'नेह नाने'ति श्रौतनिषेधेन व्यवहारदशायामबाध्यस्य जगतोऽनिर्वच-नीयत्वासिद्धिप्रसङ्गाद्, यौक्तिकबाधस्य व्यवहारदशायामपि दर्शनाच्च। अबाध्यत्वरूपं

(अद्वैतसिद्धिः)

सत्त्वमापाद्याविशिष्टम्, प्रामाणिकत्वं तु ब्रह्मनिष्ठानिर्विशेषत्वादौ तत्त्वावेदकश्रुतिवेद्ये ब्रह्मभिन्नतया बाध्ये व्यभिचारीति सत्त्वानिरुक्तिः– इति। मैवम्, सत्त्वं ह्यत्र प्रामाणिकत्वम्, प्रामाणत्वं च तत्त्वावेदकत्वम्, तच्च लक्षणया शुद्धब्रह्मबोधकवेदान्तवाक्ये न तु निर्विशेषत्वादिधर्मप्रतिपादके अतो न तत्र व्यभिचारः। न च स्वतः प्रकाशमाने ब्रह्मणि चिन्मात्रे वैयर्थ्येन प्रमाणाप्रवृत्त्या प्रामाणिकत्वाबाध्यत्वयोर्व्याप्तिग्रहो न स्यात्, प्रत्युत ब्रह्मभिन्न एव प्रामाणिकत्वसत्त्वेन तस्य बाध्यत्वेनैव सह व्याप्तिः स्यादिति– वाच्यम्, ब्रह्मणः स्वप्रकाशत्त्वेऽपि व्यवहारप्रतिबन्धकाज्ञाननिवृत्त्यर्थं प्रमाणप्रवृत्तेः सफलत्वात्। अत एव न बाध्यत्वेन सह प्रामाणिकत्वस्य व्याप्तिः, ब्रह्मणि व्यभिचाराद्विरोधाच्च। न हि तत्त्वमावेदयता वेद्यमतत्त्वं नाम।

ननु– रूप्यादिबाधकस्य तत्त्वावेदकत्वे अद्वैतहानिः अतत्त्वावेदकत्वे तन्निबन्धनं रूप्यादेरप्रामाणिकत्वं न स्यादिति चेन्न बाधकस्यातत्त्वावेदकत्वेऽपि रूप्याद्यप्रामाणिकत्वे प्रयोजकतैव बाध्यान्यूनसत्ताकत्वस्यैव बाधकत्वे तन्त्रत्वात्। अत एव अतत्त्वावेदकव्यावहारिकप्रमाणबाधितस्यापि रूप्यादेरद्वैतवत् स्वतः प्रामाण्यप्रयुक्तपारमार्थिकत्वमस्तु। न चास्य तत्त्वावेदकाद्वैतश्रुतिबाधः, तस्याः भेदश्रुतिवत् प्रत्यक्षप्राप्तव्यावहारिकरूप्यनिषेधानुवादितयोपपत्तेरिति निरस्तम्, अधिकरणानात्मकत्वपक्षे द्वैतनिषेधस्यापि व्यवहारिकत्वोपपादनाच्च।

केचित्तु– सदित्यसत एव विलक्षणमिह विवक्षितम्। न च– असत एवेत्यवधारणस्य सदसद्विलक्षणं न चेदित्यर्थपर्यवसानेन प्रतियोग्यप्रसिद्ध्या आपादकाप्रसिद्धिरिति वाच्यम्, प्रतियोगिप्रसिद्धेरनुमानेन प्रागेव साधितत्वात्। न च सदसद्विलक्षणं न चेदित्यत्र सत् किमिति पूर्वविकल्पप्रसरः, प्रामाणिकत्वरूपसत्त्वे दोषानवकाशात्। न च बाधेनवानिर्वाच्यत्वसिद्ध्या ख्यात्युक्त्ययोगः, तस्या अर्थापत्त्यन्तरत्वात्, आकरे एकत्वोक्तिस्तु प्रयोजनवाक्यादिति कण्ठतस्तात्पर्यतश्चेति– आहुः

यद्वा– अबाध्यत्वमेव सत्त्वम्, न च– तर्ह्यापाद्यावैशिष्ट्यम्, अबाध्यत्वं हि त्रैकालिकनिषेधाप्रतियोगित्वम्। तेन च विपरीतप्रमाविषयत्वाभाव आपाद्यत इति नापाद्यावैशिष्ट्यम्। व्यवहारस्यापाद्यत्वेन वा नापाद्यावैशिष्ट्यम्। न च बाध्यत्वेनैवासद्व्यावृत्तेरपि सिद्ध्या अनिर्वचनीयत्वसिद्धिपर्यवसानेन शेषवैयर्थ्यम्, न प्रतीयेतेत्यत्र विपर्यये दृश्यत्वेनैव

(अद्वैतसिद्धिः)

सद्वैलक्षण्यसिद्ध्या न बाध्येतेत्युक्तिरप्ययुक्तेति वाच्यम्, बाध्यत्वदृश्यत्वयोरेकैकस्य सदसद्व्यावृत्त्युभयसाधकत्वं यद्यपि संभवति तथाप्येकैकस्य एकैकदेशव्याप्यत्वग्रहदशायामुभयोः साफल्याद्, उभयव्याप्यमप्येकैकमेकदेशसाधकत्वेनोपन्यस्यतः प्रति एकैकसाधकत्वस्य दोषावहत्वाभावात्। अर्थापत्तिद्वयं वैतत्, एकत्वोक्तिस्तु असतो बाध्यत्वं सतोऽप्यात्मनो दृश्यत्वमङ्गीकुर्वतः परस्य मते एकैकेन उभयसाधनासंभवनिबन्धना।

ननु– न बाध्येतेत्यत्र बाधः किं बाधकज्ञानेन निवृत्तिः ? त्रैकालिकनिषेधो वा ? नाद्य इष्टापत्तिः। द्वितीये असद्विलक्षणत्वपक्षेण बाध्यते चेति विपर्ययापर्यवसानमिति– चेन्न, उभयथाप्यदोषात्। न चाद्य इष्टापत्तिः, ज्ञाननिवर्त्यत्वे श्रुत्यादिसंमतेरुक्तत्वात्। द्वितीयेऽपि नासद्विलक्षणत्वेन विपर्ययापर्यवसानम्, प्रतिपन्नोपाधिस्थनिषेधप्रतियोगित्वस्यासत्यसंभवेना-सद्वैलक्षण्यस्यैव विपर्ययपर्यवसानप्रयोजकत्वात्।

असच्चेदित्यत्रापि यद्यप्यसत्त्वं न सत्ताजातिराहित्यम्, सत्ताहीने सामान्यादौ व्यभिचारात्। यत्त्वात्मनि व्यभिचारादित्युक्तं परैः। तन्न, तन्मते आत्मनि सत्तायाः सत्त्वेनापादकस्यैवाभावाद्, अस्मन्मते च तत्र दृश्यत्वस्यैवाभावेनापाद्यस्यैवाभावात्। नापि बाध्यत्वम्, शुक्तिरूप्यादौ व्यभिचारापत्तेः, तथापि निरूपाख्यत्वं निःस्वरूपत्वं वा असत्त्वम्। न च – निरुपाख्यत्वं ख्यात्यभावः तथा चापाद्यावैशिष्ट्यमिति वाच्यम्, निरुपाख्यत्वस्य पदवृत्त्यविषयत्वरूपत्वात्। ननु– निःस्वरूपत्वं स्वरूपेण निषेधप्रतियोगित्वम्, तच्च प्रपञ्चसाधारणमिति तत्र व्यभिचारः, न च पारमार्थिकत्वाकारेण निषेधो न स्वरूपतः प्रपञ्चस्येति वाच्यम्, निर्धमकब्रह्मण्यपि तेन रूपेण निषेधात्तस्यापि मिथ्यात्वापत्तेरिति चेन्न। मिथ्यात्वलक्षणे प्रतिपन्नोपाधाविति विशेषणबलात्तत्र नातिव्याप्तिरित्युक्तत्वात्। यस्मिन्नपि पक्षे प्रपञ्चस्य स्वरूपेण निषेधः, तदा अप्रतिपन्नोपाधिकत्वे सति स्वरूपेण निषेधप्रतियोगित्वं निःस्वरूपत्वम्। न चैतत् प्रपञ्चेऽस्ति, येन तस्मादसन्न भवतीति विपर्ययपयवसानं न स्यात्।

ननु न प्रतीयेतेत्यत्र प्रतीतिसामान्यविरहस्तावदापाद्यते, तदयुक्तम्, असन्नृश्रृङ्गमित्यादि-वाक्यादसतोऽपि प्रतीतेः, अन्यथा असद्वैलक्षण्यज्ञानायोगः, असत्प्रतीतिनिरासायोगश्च, असत्पदस्य अनर्थकत्वे प्रयुक्तपदानां सम्भूय कार्यकारित्वायोगे बोधकत्वानुपपत्तिः, असतोऽसत्त्वेनाप्रतीतौ असद्व्यवहारानुपपत्तिः, तदुक्तम्–

(अद्वैतसिद्धिः)

असद्विलक्षणज्ञप्तौ ज्ञातव्यमसदेव हि ।
तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥

इति– चेन्न, प्रतीत्यभावेऽपि असतो असन्नृशृङ्गमिति विकल्पमात्रेणैव सर्वोपपत्तेः। तदुक्तम्– 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति। न च – विकल्प इच्छादिवत् ज्ञानान्यवृत्तिर्वा ? ज्ञानविशेषो वा ? आद्ये अनुभवविरोधप्रतीत्ययोगौ, द्वितीये असतः प्रतीतिरागतैव। वस्तुशून्य इत्यत्रापि किमपि नोल्लिखतीति वा ? असदवोल्लिखतीति वा ? आद्ये अनुभवविरोधः, द्वितीये इष्टापत्तिरिति वाच्यम्, विकल्पस्य ज्ञानान्यवृत्तित्वे बाधकाभावात्, शशविषाणमनुभवामीत्यप्रत्ययाच्च। वस्तुशून्यता च सोपाख्यधर्मानुल्लेखित्वम्, अतो न कोऽपि दोषः। विकल्पस्य ज्ञानत्वे तु तदन्यज्ञानविषयत्वाभाव आपाद्यः। शुक्तिरूप्यादेरसत्त्वे च प्रतीतिविषयत्वं विकल्पान्यप्रतीति विषयत्वं वानुपपन्नमित्य-निर्वाच्यत्वसिद्धिः। यद्वा– सत्त्वेन प्रतीत्यभाव एवापाद्यः।

ननु– प्रमारूपतादृक्प्रत्ययाभावापादनमिष्टमेव। न ह्यसतः सत्त्वेन प्रतीतिः केन चित् प्रमोच्यते। न च तादृग्भ्रान्तिविरहः तादृक्प्रतीतिसामान्यविरहो वाऽऽपाद्यः, येन पुंसा शशे शृङ्गाभावो नावगतः, तस्य गोशृङ्गमस्तीति वाक्यादिव शशशृङ्गमस्तीति वाक्यादपि भ्रान्तिदर्शनात्, न हि घढधषादिशब्दवदत्र पदार्थानुपस्थापकत्वम्, न वा कुण्डमजाजिनमित्यादिवदन्वयाबोधकत्वम्, अयोग्यताज्ञानाभावस्य योग्यताभ्रमस्य वा आकाङ्क्षादिसामग्रीसध्रीचीनस्य सत्त्वाद्, अन्यथा प्रतीत्याद्यभावाप्रसङ्ग इति चेन्न, 'इदं रजत'मिति प्रात्यक्षिकभ्रमवद् अस्याप्यनिर्वाच्यविषयत्वात्। न च अस्याप्यनिर्वाच्यत्वे रूप्यात् भेदो न स्यादिति वाच्यम्, को हि अनिर्वाच्यादनिर्वाच्यं भेत्तुमध्यवसितः ? यमेवमाक्षिपसि, किंतु निःस्वरूपात्। यथा च सत्त्वेन न निःस्वरूपविषयत्वं यथोक्तं प्राक्। न चैवं शशशृङ्गादेरनिर्वाच्यत्वे निःस्वरूपत्वोच्छेदः, शशशृङ्गमस्तीत्यत्र शशे शृङ्गारोपेण शशीयत्वारोपेण वा अनिर्वाच्यविषयत्वेऽपि 'असन्नृशृङ्ग'मित्यादिवाक्य-श्रवणसमनन्तरं विकल्प्यमानाखण्डशशशृङ्गादेरनिर्वाच्यानात्मकस्य निःस्वरूपत्वात्। न चात्र निःस्वरूपत्वादिविकल्पः, उक्तोत्तरत्वात्। न च– 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि।' इति त्वन्मते तस्याध्यस्तस्यास्तित्वस्यानिर्वाच्यत्वेऽपि 'शशशृङ्गमसदिति वाक्यादिव 'शशशृङ्गमस्ती'ति वाक्येऽपि शशशृङ्गशब्देनासत एव प्रतीतिरिति वाच्यम्,

(अद्वैतसिद्धिः)

अस्तित्वस्यानिर्वाच्यत्वेन शशशृङ्गपदाभ्यां तदधिष्ठानमवश्यं वक्तव्यम्। अत्यन्तासच्चानधिष्ठानमिति न शशशृंगपदाभ्यां तदुपस्थितिः, दृष्टान्तीकृतवाक्ये तु नानिर्वाच्यं किंचिदपि प्रतीयत इति नाधिष्ठानज्ञानापेक्षेति वैषम्यात्। अत्यन्तासत्यपि ज्ञानमित्यादि तु अस्त्यादिवदसमभिव्याहृतशशशृंगमसदिति वाच्यपरम्। न च – 'तद्धैक आहुः असदेवेदमग्र आसी'दिति श्रुत्या असतः सत्त्वेन प्रतीतिरिति वाच्यम्, यथा नानया असतः सत्त्वप्रतिपादनं तथोक्तं मिथ्यात्वलक्षणे।

तार्किकास्तु– शशशृङ्गादिपदानामपार्थकतैवेति वदन्ति। न चानन्वयनिश्चयविरहदशायां प्रवृत्तिपर्यन्तानुभवविरोधः, अनन्वयनिश्चयदशायामेवाबोधकतोक्तेस्तद्विरहदशायामपि नाखण्डशशशृङ्गादिबोधकत्वम्, किंतु सन्मात्रगोचरव्यधिकरणप्रकारकज्ञानं वा, सदुपरागेणासद्गोचरज्ञानं वा। केवलासज्ज्ञाने सामग्रीविरहात्। तदुक्तं बौद्धाधिकारे– 'सङ्गतिग्रहणाभावात् शशशृङ्गादिपदानामबोधकते'ति। न च यौगिकशब्दानामवयवसङ्गत्यतिरेकेण पृथक्सङ्गत्यनपेक्षत्वम्, अवयवशक्तिप्राधान्येन बोधने अखण्डासद्बोधनस्याशक्तत्वाद्, अवयवानां स्वशक्त्यपुरस्कारेणाप्रत्यायकत्वात्। न हि पाचकादिः पाकादिमबोधयन् बोधयति। न च तर्हि शशशृङ्गमसच्छशशृङ्गं नास्तीत्यादिवाक्यानामबोधकत्वम्, तेषां शशे शृङ्गाभावबोधकत्वात्। एषा तु बोधकता न शशशृङ्गपदमात्रे, किं तु नास्तीतिपदसमभिव्याहृते। अतो न नास्तीति पौनरुक्त्यरूपशङ्काभासाद्यवकाश इति। यद्वा– अपरोक्षप्रतीत्यभाव आपाद्यः। न च यदसत्तन्न प्रतीयत इति व्याप्तिज्ञानस्य प्रत्यक्षमावश्यकम्, अतश्चासतोऽपि प्रत्यक्षत्वम्, अन्यथा असतोऽपि असत्त्वबुद्धिर्न स्यात्, तथा च शशशृङ्गादेः प्रत्यक्षत्वमेवेति– वाच्यम्, साक्षादित्यनिषेध्यतयेति चापरोक्षप्रतीतिविषयविशेषणात्। उक्तस्थले च ज्ञानविषयतया निषेध्यतया च विषयत्वमिति नास्ति विशिष्टाभावस्यापाद्यस्यासंभवः। यद्वा– सत्त्वेनापरोक्षप्रतीतिविषयत्वाभाव आपाद्यः। न च इदं रूप्यमित्यादि भ्रान्त्या अत्यन्तासदेव सत्त्वेन प्रतीयत इति वाच्यम्, अत्यन्तासतस्तादृशप्रतीतिविषयत्वे सामग्र्यभावात्। इन्द्रियसन्निकर्षो हि प्रत्यक्षे सामान्यसामग्री, न चासति सोऽस्ति। न च प्रातिभासिकत्वपक्षे रूप्यादेः प्रतीतिपूर्वकालेऽसत्त्वेन कथं सन्निकर्षरूपप्रत्यक्षसामग्रीसंभव इति वाच्यम्, अस्मिन्मते ज्ञातैकसति रूप्यादौ साक्ष्यपरोक्षे अज्ञाननाशकान्तःकरणवृत्तिप्रयोजकसन्निकर्षानुपयोगात्। न हि तवापीश्वरसाधारणप्रत्यक्षमात्रे सन्निकर्षो हेतुः। न च प्रमायां निर्दुष्टेन्द्रियसन्निकर्षो

(अद्वैतसिद्धिः)

हेतुः, न तु भ्रमे, स हि दोषसहितेन्द्रियादेव भविष्यतीति वाच्यम्, सन्निकर्षो हि इन्द्रियवत्सामान्यसामग्री, तदनपेक्षस्येन्द्रियस्याजनकत्वमित्युक्तत्वात्। न च तर्हि शाब्दबोधसामान्यसामग्र्या योग्यताज्ञानादेरभावात् कथं परोक्षविकल्पः स्यात्? अयोग्यताज्ञानविरहो हि सामान्यसामग्री, न तु योग्यताज्ञानम्, असंसर्गाग्रहरूपायोग्यताज्ञानविरहस्य विशिष्टज्ञाने आवश्यकत्वात्। स चासद्बोधके वाक्येऽस्त्येव। न हि शशशृंगे असत्त्वं नास्तीति जानानः शशशृङ्गमसदित्यवगच्छति। एतन्निबन्धन एवापरोक्षप्रतीतौ प्रद्वेषः।

एतेन सन्मात्राविषयकापरोक्षज्ञानमसद्विषयकम्, सत्त्वानधिकरणविषयकप्रतीतित्वादसद्विषयकपरोक्षप्रतीतिवत्। न च अत्र प्रातिभासिकसाधारणसद्विवक्षायामाश्रयासिद्धिः। परमार्थसद्विवक्षायां मात्रपदवैयर्थ्यमिति वाच्यम्, भ्रममात्रस्यैवाधिष्ठानीभूतपरमार्थसद्विषयतया मात्रपदं विना आश्रयासिद्धेर्दुष्परिहरत्वादिति निरस्तम्, सामग्रीविरहेण बाधात्, शाब्दत्वस्योपाधित्वाद्, धर्मादिकमपरोक्षप्रतीतिविषयः प्रतीतिविषयत्वादित्याद्याभाससाम्याच्च। किंचासतो रूप्यस्यापरोक्षप्रतीतिविषयत्वे शशशृङ्गादेरप्यपरोक्षप्रतीतिविषयत्वं स्याद्, विशेषाभावात्, सविशेषत्वे असत्त्वव्याकोपात्।

ननु– सदसतोः सत्ता निःस्वरूपत्वादिनैव नृशृङ्गशशशृङ्गादीनामपि परस्परं नृशृंगशशशृंगादिशब्दैरेव परोक्षप्रतीतिव्यवहारविषयत्वादेर्विशेषस्यासत्त्वाविरोधिनो बुद्धिसिद्धस्य संभवः। न च सर्वसामर्थ्यहीनस्यासतः सता ज्ञानेन कथं संबन्धः? विषयत्वस्य तत्र वक्तुमशक्यत्वाद्, भाति प्रतीयत इत्यादिकर्तृकर्मत्वादिविरोधाच्चेति वाच्यम्, अतीतादेः स्मृत्यनुमित्यादिविषयत्वादिवदुपपत्तेः। न च तत्र प्रतीत्यादेरेव विषयत्वम्, तावतैव तत्र विषयताव्यवहार इति– वाच्यम्, समं ममापीति चेत्, मैवम्, शशशब्दस्य नरि भ्रमदशायां नृशृंगशब्देनेव शशशृंगशब्देनापि नृशृंगस्य प्रतीयमानत्वेन नृशृंगादिशब्दैरेव प्रतीयमानत्वादेरपि परस्परविशेषस्य वक्तुमशक्यत्वात्। न च दुष्टेन्द्रियादे रूप्यसंस्कारसाचिव्यवच्छशशृंगसंस्कारसाचिव्याभावात् तस्यापरोक्षभ्रमाविषयत्वम्, अन्यथा तवाप्यनिर्वाच्यान्तरमेव तत्र कथं नोत्पद्येतेति वाच्यम्, संस्कारस्य न तावत्प्रतीतौ साक्षादुपयोगः, स्मृतित्वापत्तेः, किंत्वर्थोत्पत्तिद्वारा। तथा च संस्कारनियामकतापि अनिर्वाच्यतापक्ष एव न त्वसद्विषयतापक्षे। वस्तुतस्तु संस्कारस्तावत् तात्त्विकरजतादिगोचर एव

(अद्वैतसिद्धिः)

प्राथमिकरजतादिभ्रमे प्रयोजकः सर्वमते, स चासद्रूप्यशशशृङ्गादिसर्वसाधारण एव, तदविषयत्वाविशेषात्। तथा च कथं स नियामको भवतु?

**प्रवृत्तिविषयत्वान्यथानुपपत्तिः।** एवं प्रवृत्तिविषयत्वान्यथानुपपत्तिरपि प्रमाणम्। इदमंशस्यासद्रूप्यात्मना प्रतीतौ सामग्रीविरहस्योपपादनात्। ननु– अनिदं रूपे प्रातिभासिके यदिदंत्वं व्यावहारिकसत्त्वं च तद्द्वयं न तावत् सद् अद्वैतव्याकोपात्, नाप्यनिर्वाच्यम्, तथा सति तस्यासद्वैलक्षण्यार्थं प्रातिभासिकत्वाय सत्त्वेन प्रतीत्या भाव्यम्। एवं च तदपि सत्त्वमनिर्वाच्यं चेत्, तस्यापि सत्त्वेन प्रतीत्या भाव्यमित्यनवस्था, तथा च तयोरसत्त्वं वाच्यम्। तदुक्तम्– अन्यथात्वमसत्तस्माद् भ्रान्तावेव प्रतीयते।

सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ॥
तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः । इति ।

टीकायामपि इदंत्वसत्त्वयोः सत्त्वायोगादनिर्वाच्यत्वे इदंत्वेन रूप्यावगाहि तदप्रतीतौ प्रवृत्त्ययोगात् सत्त्वेन भाने च तस्मिन्नपि सत्त्वादिविकल्पप्रसरेणानवस्थानादिदंत्व-व्यावहारिकसत्त्वयोरसत्त्वमित्युक्तमिति चेन्न, तयोरसत्त्वे अपरोक्षप्रतीतिविषयत्वे सामग्र्यभावादेर्बाधकस्योक्तत्वाद् अनिर्वाच्यत्वमेव। न च तथा सत्त्वेन प्रतीत्या भाव्यम्, इष्टापत्तेः। न चैवमनवस्था, सत्त्वस्य सदिति प्रतीतावतिरिक्तसत्त्वस्यानपेक्षणात्, अन्यथा त्वत्पक्षेऽप्यसति रूप्ये यत्सत्वं प्रतीयते तस्य सत्त्वायोगात् असत्त्वे च तथैव प्रतीतौ प्रवृत्त्यनुपपत्तिः, सत्त्वेन प्रतीतावनवस्था च स्यात्।

न च– सत्त्वे सत्त्वासत्त्वयोरौदासीन्येऽपि असतः सत्त्वेन प्रतीत्या प्रवृत्त्युपपत्तेः असति प्रतीतस्य सत्त्वस्य सत्त्वेनाप्रतीतावपि असत्त्वसिद्धेश्च नास्माकं काप्यनुपपत्तिः, तव तु रूप्यादिसत्त्वस्य सत्त्वेनाप्रतीतौ प्रवृत्त्युपपत्तावपि प्रातिभासिकत्वानुपपत्तिरिति– वाच्यम्, एवं हि तत्सत्त्वं स्वरूपतो न सत्, तुच्छत्वाद्, विज्ञानतोऽपि न सत्, सत्त्वेनाप्रतीतेः। तथा च असति कथं तन्निबन्धनो व्यवहारः। न च प्रतिभासकाले सत्त्वे स्वरूपतो निषेधप्रतियोगित्वं न स्यात्, पारमार्थिकत्वेन निषेधप्रतियोगित्वे अनवस्थैवेत्यसत्त्वमेव रूप्यादीनामिति वाच्यम्, प्रतीतिकाले सत्त्वेऽपि स्वरूपतो निषेधस्य पारमार्थिकत्वेन निषेधेऽप्यनवस्थापरिहारस्य चोक्तत्वात्। नापि प्रत्येकात्मकत्वे अनुपपत्त्या

(अद्वैतसिद्धिः)

उभयात्मकतैवास्त्विति वाच्यम्, दत्तोत्तरत्वाद्, भ्रमत्वानुपपत्तेश्च। न चानिर्वाच्यविषयत्वेन यथा तव मते भ्रमत्वं, तथा सदसदात्मकत्वे यत् सत्त्वं तद्विषयत्वेन भ्रमत्वमस्तु, एवं तर्हि 'सच्चासच्च रजत'मित्याकारताया दुर्निवारत्वापत्तेः। न च असदेव रूप्यमिति बाधस्य सद्वैलक्षण्यविषयत्ववत् सद्रजतमिति भ्रमस्याप्यसद्वैलक्षण्यमेव विषयोऽस्तु, तथा च प्रातीतिकमपि सत्त्वं मास्त्विति– वाच्यम्, तथा सति बाधेन भ्रमविषयसत्त्वानपहारे बाधकत्वव्यवहारोच्छेदप्रसङ्गाद्, अगृहीतासत्त्वस्यापि इदं रजतं सदिति प्रतीतेश्च। न हि पुनरगृहीतसत्त्वस्यासद्रूप्यमभादिति प्रत्ययः, बाधस्य प्रसक्तिपूर्वकत्वात्।

ननु– असद्विलक्षणं चेन्न बाध्येत, सद्विलक्षणं चेन्न प्रतीयेत, अतोऽनुपपत्त्या अनिर्वाच्यत्वाभाव एव किं न सिध्येत्, न च– बाधाप्रतीत्योर्लाघवात् सत्त्वासत्त्वे प्रयोजके, न त्वसद्वलक्षण्यसद्वैलक्षण्ये, गौरवादिति वाच्यम्, बाधप्रतीत्योरेव प्रथमोपस्थितयोः प्रयोजकजिज्ञासायामसत्त्वसत्त्वयोः प्रयोजकत्वं कल्प्यते, लाघवात्, प्रथमोपस्थितत्वाच्च, न तु सद्विलक्षणत्वादेः गौरवात्, चरमोपस्थितत्वाच्च। तदनन्तरं च भानप्रयोजकाभावादेवाभानोपपत्तौ न प्रयोजकान्तरकल्पना। नृशृङ्गादेरसत्त्वेऽपि न बाधः, प्रसक्त्यभावादिति– चेत्, मैवम्, सत्त्वं न तावत् प्रतीतिप्रयोजकम्, रूप्यस्य उभयमतेऽप्यप्रतीत्यापत्तेः, नाप्यसत्त्वं बाधप्रयोजकम्, उभयमतसिद्धासति बाधादर्शनात्, रूप्ये चासत्त्वस्याद्याप्यसिद्धेः, प्रत्युतासत्त्वेऽनुपपत्तेर्वक्ष्यमाणत्वात् गौरवं प्रामाणिकम्। तस्मात् सिद्धं ख्यातिबाधान्यथानुपपत्त्या अनिर्वाच्यत्वमिति।

इत्यद्वैतसिद्धौ ख्यातिबाधान्यथानुपपत्तिः।

## न्यायामृततरङ्गिणी

**॥ व्यवहारदशायामिति ॥ नेह नानेति श्रुत्या व्यवहारदशायां प्रपंचबाधाभावादापाद्यस्य विपर्ययेऽपर्यवसानमित्यर्थः ॥ व्यवहारेति ॥ तथा च व्यभिचार इत्यर्थः ॥ शेषेति ॥ ख्यात्यनुपपत्त्याऽसद्व्यावृत्तिसाधनवैयर्थ्यमित्यर्थः ॥ अत एवेति ॥ शेषवैयर्थ्यादेव ॥ मानांतरेति ॥ ननु निर्विशेषत्वादिबोधकं न प्रमाणं। किं तु लक्षणया शुद्धब्रह्मबोधकमेवेति चेन्न। निर्विशेषत्वस्याप्रामाणिकत्वे सविशेषत्वस्य प्रामाणिकत्वापातात्। न चोभयोरप्रामाणिकत्वम्।**

(तरङ्गिणी)

विरोधात् ॥॥ अबाध्य इति। ननु ब्रह्मणः स्वप्रकाशत्वेपि व्यवहारे प्रतिबंधकाज्ञाननिवृत्त्यर्थं प्रमाणापेक्षास्तीति चेन्न। एतादृशाप्रामाणिकत्वस्य जगति इष्टत्वात्। रूप्यादीति। तथा च बाध्यत्वाप्रामाणिकत्वयोर्व्याप्त्यग्रहान्न बाध्यत्वेन प्रपंचेऽप्रामाणिकत्वं सिद्धतीत्यर्थः ॥ अतत्वावेदकेति॥ रूप्यवत्प्रपंचस्यापि पारमार्थिकत्वमेवास्त्वित्यर्थः। रूप्यादेस्तत्वावेदक-बाध्यत्वेनाद्वैताद्वैषम्यमाशंक्य निराकरोति ॥ न चास्येति॥ श्रुतेर्भिन्नविषयत्वेन न रूप्यादिबाधकत्वमित्याह ॥ तस्या इति॥ प्रतियोगीति॥ तत्प्रसिद्धिसाधकानुमानस्य प्रागेव निरस्तत्वात् ॥ बाधेनैवेति॥ न चार्थापत्त्यंतरे तात्पर्यं। एकत्वोक्तिविरोधात्। न च प्रयोजनैक्यात्तथोक्तिः। तेनासद्वैलक्षण्यमात्रसाधनात् ॥ इष्टापत्तेरिति॥ रूप्ये न ज्ञाननिवर्त्यत्वं। किं तु शुक्त्यज्ञानादावेवेत्यर्थः ॥ द्वितीय इति॥ बाध्यत्वेन सद्वैलक्षण्यं यस्य रूप्यादेः सिषाधयिषितं तस्यासद्वैलक्षण्यपक्षेऽसद्वैलक्षण्यांगीकारे रूप्यादौ त्रैकालिकनिषेधप्रतियोगित्वरूपं बाध्यत्वं न स्यात्। उक्तरूपबाध्यत्वेऽसत्त्वस्यैव प्रयोजकत्वादित्यर्थः ॥ रूप्यादाविति॥ रूप्यादेः सत्ताहीनरूपसत्त्ववत्त्वादित्यर्थः ॥ अत एवेति॥ रूप्यादेर्बाध्यरूपासद्रूपत्वेन विपर्ययापर्यवसानात् ॥ तस्येति॥ निरुपाख्यत्वावच्छेदकस्य सन्नेति रूप्यस्यापि स्वरूपेण निषेधपक्षे निःस्वरूपादित्यर्थः। यत्तु प्रतिपन्नोपाधौ स्वरूपेण निषेधप्रतियोगित्वं निःस्वरूपत्वं न वै तद्रूप्यादाविति। तन्न। असतोपि प्रतिपन्नोपाधेरुक्तत्वात् ॥ विपर्ययेति॥ रूप्यादेः सत्त्वाभाववत्त्वात्। शशशृंगमस्तीति वाक्येपि शाब्दबोधसामग्रीं व्युत्पादयति ॥ विपरीतेति॥ ॥ अन्यथेति॥ ज्ञानानुत्पादे योग्यताहीनादिति प्रतिवादिवाक्ये पि योग्यतासंशयोस्तीति मन्यते। ॥ कथेति॥ बधिराणां कलहेन तुल्या कथा स्यात् परस्परवाक्यार्थस्य परस्पराज्ञानादित्यर्थः। यद्यपि नागमतया वादिवाक्यं बोधकम्। तथापि व्याप्त्यादिस्मारकत्वेनोपयोगोस्त्येव ॥ अनुभवविरोधादिति॥ शशविषाणमस्तीति शब्दाच्छशविषाणं जानामीत्यनुभवादित्यर्थः। न चानुभवामीति न प्रत्यय इति वाच्यम्। शब्दात्स्वर्गमनुभवामीत्यनेन तुल्ययोगक्षेमत्वात् ॥ अन्यथेति॥ तथा च प्रतीत्या रूप्यादेरसद्वैलक्षण्यं न सिध्येदिति भावः ॥ निःस्वरूपस्येति॥ अनिर्वाच्यत्वेनेष्टस्य रूप्यादेरनिर्वाच्यान्निःस्वरूपाद्भेदानुपपत्तेरन्यस्य च भेदप्रतियोगिनोऽभावात् रूप्यादीनां कुतः सकाशाद्वैलक्षण्यमिष्यते। तथा च रूप्यादेरपि निःस्वरूपत्वमेव प्राप्तमित्यर्थः ॥ तस्येति॥ निःस्वरुपभिन्नस्य निरूपाख्यस्याभावादिति मिथ्यात्वभंगे उक्तमित्यर्थः। नन्वपरोक्षज्ञानाविषयादखंडाच्छशभृंगाद्वैलक्षण्यं, रूप्यादेराशास्यत इत्यत आह ॥ तादृशादिति॥ तावतापि रूप्यादेरसद्विशेषविलक्षणत्वेप्यसद्वैलक्षण्यं न सिध्यतीत्यर्थः ॥ अत्यंतासत्यपीति॥ नन्वस्तित्वस्यानिर्वाच्यत्वेन शशभृंगपदाभ्यां तदधिष्ठानमवश्यं वक्तव्यं। अत्यंतासच्च नाधिष्ठानमिति

(तरङ्गिणी)

न शशशृंगपदाभ्यां तदुपस्थितिः। दृष्टांतीकृतवाक्ये तु नानिर्वाच्यं किंचिदपि प्रतीयत इति नाधिष्ठानज्ञानापेक्षेति वैषम्यम्। अत्यंतासत्यपि ज्ञानमित्यादित्वस्त्यादिपदसमभिव्याहृतशशशृंगमसदिति वाक्यपरम्। तस्माच्छशशृंगमस्तीत्यत्र शशे शृंगारोपः शृंगे च शशीयत्वस्यारोप इत्यनिर्वाच्यमेव शृंगमिति चेन्मैवम्। अश्वादावत्र गोशृंगमस्तीति विशिष्टस्येव शशशृंगस्य विशिष्टस्यैवानुभूयमानत्वात्। समस्तपदप्रतिपाद्यस्यैवापरपदार्थेन्वयस्यौचित्याच्च। असच्छशविषाणं प्रत्याश्रयत्वेन प्रतीतस्याश्वादेरिदंपदार्थस्यैवाधिष्ठानत्वसंभवेन सर्वथा निरधिष्ठानत्वासंभवादस्तित्वस्यासदधिष्ठानत्वेपि न दोषः ॥शशशृंगमस्तीति॥ अत्रेति शेषः ॥एतेनेति॥ अत्यंतासत्यपि शब्दस्य ज्ञानजनकत्वेनेत्यर्थः ॥शशशृंगशब्द इति॥ व्योमकमलशब्देन समानत्वादस्योदाहरणं ॥यौगिकेति॥ न च यौगिकशब्दानामवयवशक्तिप्राधान्येन बोधकत्वादखंडासद्बोधनमशक्यमिति वाच्यं। अवयवानां स्वशक्त्यसंसृष्टरूपस्य पदार्थांतरान्वयाभिमुखस्य सतः पाचकादेरिवाखंडस्यासतोप्यखंडस्य बोधनसंभवात् ॥वार्तिकेति॥ खपुष्पवार्तिके तत्सिध्यधिकरणे उक्तं। कथं तर्हि खपुष्पं तत्सिद्धांत इत्यत्राभावावगतिः मरुभूमिवदत्र जलमित्यादिवदित्यवेहि। न ह्यत्राप्यभावः शब्द शक्य इति ॥प्रत्यक्षतेति॥ व्याप्तिज्ञानस्य सद्विषयकत्वनियमादिति भावः ॥शशशृंगादीति॥ प्रतियोगिनमनंतर्भाव्याभावप्रत्यक्षस्यादर्शनादित्यर्थः। ननु साक्षादित्यनिषेध्यतयेति चापरोक्षप्रतीतिविषयविशेषणात्रोक्तदोष इति चेन्न चतुर्थपक्षनिरासेन निरसिष्यमाणत्वात् ॥सन्मात्रेति॥ अधिष्ठानज्ञानाबाध्यमत्र सद्विवक्षितं। तेन प्रातिभासिकस्यापि परमते सद्विशेषतयाश्रयासिद्धिरिति परास्तं। भ्रममात्रस्यैवोक्तसद्रूपाधिष्ठानविषयतयाश्रयासिद्धिर्मा भूदिति मात्रपदं। न च शाब्दत्वमुपाधिः। अनुमिति भ्रमे साध्याव्याप्तेः। व्यतिरेकव्याप्तौ निश्चितव्यापकाभाववति व्याप्यसंदेहेन संदिग्धव्यभिचाराच्च ॥संस्कारेति॥ शब्दाभासादिजन्यस्य ज्ञानस्य न संस्कारजनकत्वं प्रमाजन्य एव संस्कारो हेतुरिति प्रागुक्तत्वाद्वा। अन्यथा तवाप्यनिर्वाच्यगोचरसंस्कारादनिर्वाच्यांतरमेव कथं नोत्पद्येत। यत्तु संस्कारस्य न तावत्साक्षात्प्रतीतावुपयोगः। स्मृतित्वापत्तेः। किंत्वर्थोत्पत्तिद्वारा। तथाच संस्कारनियामकताप्यनिर्वाच्य पक्ष एवेति। तन्न। अर्थस्य स्मृतित्वापत्त्या तुल्ययोगक्षेमत्वात्। ॥नृशृंगादिशब्दैरेवेति॥ शब्दशक्तिभ्रमविरहकाल इति शेषः। तेन शशशब्दस्य नरि भ्रमदशायां नृशृंगशब्देनेव शशशृंगशब्देनापि नृशृंगस्य प्रतीयमानत्वेन नृशृंगशब्देनैव प्रतीयमानत्वं न तस्य विशेष इति निरस्तं ॥अन्यथेति॥ सत्त्वप्रकारकभ्रांतेः सत्त्वसापेक्षत्वे तव मतेपि रूप्यस्य सद्विलक्षणत्वात् सा भ्रांतिर्नस्यादित्यर्थः ॥संबंधादाविति॥ तथाच तव मतेपि रूप्यस्य ज्ञानेन संबंधः। भातीत्यादौ कर्तृत्वादिकं च न स्यात् ॥दुष्टादिति॥ स्वरूपयोग्यस्य

(तरङ्गिणी)

सहकारिविशेषसमवधाने सति कार्यविशेषजनकत्वदर्शनादिंद्रियस्याप्यसन्निहिततत्तादिज्ञानजनकत्वेन योग्यत्वात् ॥प्रमाया एवेति॥ न च सन्निकर्षोपि सामान्यसामग्र्यैवेति वाच्यं। सन्निकर्षे सति क्वाप्यप्रमाया अदर्शनेन प्रत्युत प्रमाया एव दर्शनेनेंद्रियवदुभयानुगत्यभावेन सन्निकर्षस्य सामान्यसामग्रीत्वाभावात्। अत एवोक्तं मणिकृता। असन्निकृष्टमपि दोषवशाद्भासत इत्युपेयमिति ॥अन्यथेति॥ अपरोक्षज्ञानमात्रे सन्निकर्षस्य हेतुत्वे ॥अयंदोष इति॥ अनिर्वाच्यस्यापरोक्षज्ञानं ह्यविद्यावृत्तिर्वा तत्प्रतिबिंबितः साक्षी वा। नोभयमपि सन्निकर्षजन्यं। तथात्वे अनिर्वाच्यत्वे ॥तस्येति॥ रूप्ये प्रतीतस्येदंत्वस्य व्यावहारिकत्वस्य च सत्त्वेन प्रतीतिं विना प्रातिभासिकत्वासंभवादित्यर्थः ॥तदपीति॥ रूप्ये प्रतीतेदंत्वादौ यत्सत्यं प्रतीतं तस्याप्यनिर्वाच्यस्य प्रातिभासिकत्वाय सत्त्वान्तरवत्तया प्रतीतिर्वाच्या। एवं सत्त्वे प्रतीतसत्त्वस्यापि प्रातिभासिकत्वाय सत्त्वांतरवत्तयेत्यनवस्था ॥तयोरपीति॥ रूप्ये निषिध्यमाने इदंत्वपारमार्थिकत्वे सती वाऽसद्विलक्षणे वाऽसती वा। आद्ये निषेधायोगः। द्वितीयेऽनवस्था। असद्विलक्षणयोः स्वरूपेण निषेधायोगात्तयोरपि पारमार्थिकत्वांतरेण निषेधो वाच्यः। तद्गतपारमार्थिकस्याप्यसद्विलक्षणत्वे पारमार्थिकत्वांतरेणेत्यनवस्था। तृतीये असतः सत्त्वेनापरोक्षप्रतीतिर्दुर्वरित्याह ॥तेचेति॥ रूप्ये निषिध्यमाने इदं पारमार्थिकत्वे ॥सत्त्वेनापरोक्षेइति॥ सत्त्वनिषेधस्य सत्त्वप्रसक्तिपूर्वकत्वात्प्रकृते च परिशेषात्प्रत्यक्षरूपैव प्रसक्तिरिति भावः ॥अन्यथात्वमिति॥ अन्यप्रकारत्वमन्यरूपत्वमिति यावत्। अनिदंरूपे इदंत्वमव्यावहारिके व्यावहारिकत्वं। तस्य अपारमार्थिके निषिध्यमानस्य पारमार्थिकत्वादेः। सुधायां तु शुक्तिकेदमंशस्य रजतत्वसंसर्गो रजतस्य चेदंता संसर्गोऽन्यथात्वशब्दार्थः। सत्त्वशब्देन रजते शुक्तिकासत्त्वसंसर्ग इति व्याख्यातम्। अत्रानिर्वचनीये रूप्ये प्रतीयमानयोरिदं त्वव्यावहारिकत्वयोः। तत्र निषिध्यमानपारमार्थिकत्वस्यासत एवापरोक्ष्यमनवस्थाभयात्परं प्रति स्वयमापादितम्। सुधायां तु इदं तारजतत्वयोरितरेतरसंसर्गस्य रजते शुक्तिकासत्त्वसंसर्गस्य चानिर्वचनीयस्य तथैव प्रतीतौ प्रवृत्त्ययोगाव्द्यावहारिकतया प्रतीतिर्वाच्या। तद्व्यावहारिकतायाः सत्त्वे उक्तसंसर्गद्वयस्य प्रातिभासिकत्वायोगादसत्या एव तस्या आपरोक्ष्यमायातम्। तस्या अप्यनिर्वाच्यत्वे तथैव तस्याः प्रतीतौ प्रवृत्त्ययोगादनिर्वाच्यायास्तस्याः व्यावहारिकत्वेनापरोक्ष्यं वाच्यम्। अनिर्वचनीयव्यावहारिकतागतव्यावहारिकत्वस्य सत्त्वे तदाश्रयव्यावहारिकताया अनिर्वाच्यत्वायोगादसदेव व्यावहारिकत्वमपरोक्षतया प्रतीयत इति वाच्यम्। तद्व्यावहारिकत्वस्याप्यनिर्वाच्यत्वे उक्तरीत्यानवस्थेत्युक्तमित्याह ॥टीकायांत्विति॥ इदंत्वमिदंत्वसंसर्गः। सत्वं सत्वसंसर्गः ॥सत्त्वायोगादिति॥ इदंत्वादिसंसर्गद्वयस्यानिर्वाच्यत्वविरोधात्। न हि यस्य सत्त्वं सत्तदनिर्वाच्यमिति

(तरङ्गिणी)

संभवतीत्यर्थः ॥ प्रवृत्तीति॥ नह्यनेनानिर्वाच्यं क्वचिदर्थक्रियासूपयुज्यमानं दृष्टं। येन तद्भावं प्रतीत्यापि प्रवर्तेत ॥ सत्त्वेनेति॥ व्यावहारिकत्वेनेत्यर्थः ॥ सत्वं इति॥ व्यावहारिकत्वे। अत्र पक्षद्वयेपीदं त्वादेरेवासत्त्वमुक्तम्। अनवस्थोपपादनभेदेन तु पक्षभेद इति बोध्यम् ॥ अनिर्वाच्येति॥ सद्विलक्षणस्येत्यर्थः। एतेन सत्त्वस्य सत्त्वप्रतीतावतिरिक्तसत्त्वानपेक्षेति निरस्तम्। सत्त्वप्रतीतिं विना सत्त्वस्वरूपासिद्धेः ॥ असतःसत्त्वस्येति॥ ननु तत्सत्वं स्वरूपतो न सत्। विज्ञानतोपि न सत्। सत्त्वेनाप्रतीतेः। तथाच सति कथं तन्निबंधनो व्यवहार इति चेन्न। सत्त्वेनाप्रतीतस्यासतोपि सत्त्वस्य प्रतीतिमात्रादेव व्यवहाराद्युपपत्तेः। नहि मम मतेप्यर्थो हेतुः। येनासतोर्थस्य स्वरूपसिध्यर्थं सत्त्वेन तज्ज्ञानमपेक्षेतेति। ननु रूप्यस्य सदसदात्मकत्वे सद्रूप्यमिति ज्ञानस्य भ्रमत्वं न स्यात्। रूप्यस्य सद्रूपत्वादित्यत आह ॥ असदेवेति॥ तव मते रूप्यस्यासद्विलक्षणत्वेप्यसदेव रूप्यमिति बाधस्य भ्रमत्वं यथा नायाति तस्य तत्र विद्यमानसद्वैलक्षण्यविषयत्वात् एवं सद्रूप्यमिति भ्रमस्याविद्यमानासद्वैलक्षण्य विषयत्वेन भ्रमत्वमक्षतमेव। तथाच प्रातीतिकमपि तत्र सत्त्वं मास्तु बाधोऽसत्त्वविषयकोस्तु ॥ सदसदात्मकत्वमिति॥ सदसदात्मकत्वं यत्सत्वं तद्भ्रांतौ विषयोस्तु। नन्वेवं सच्चासच्चरजत-मित्याकाराप्रतीतिः स्यात्। न। वस्तुतो रजतस्य तथात्वेपि प्रतीतेस्तदाकारत्वाभावात्। अन्यथा तव मतेपि सदसद्विलक्षणमित्याकारा प्रतीतिः स्यात्। बाधकालेत्विष्टापत्तिरित्याह ॥ अन्यथेति॥ ॥ प्रथमोपस्थितत्वादिति॥ अभावापेक्षया भावस्य प्रथमं बुद्धिस्थत्वात् ॥ कल्पकत्वादिति॥ भावप्रयोजककल्पनानंतरमभावेन जिज्ञासा भवतीति भावप्रयोजककल्पनाभावे प्रयोजकस्य कल्पिका भवतीत्यर्थः ॥ बाधप्रतीत्योरिति॥ न च प्रतीतौ न सत्त्वं तंत्रम्। उभयमतेपि रूप्येऽभावादितिवाच्यम्। रूप्य एव सत्त्वस्य प्रतीत्यापाद्यमानत्वात्। तदिदमाह ॥ सत्त्वात्प्रतीतिरिति॥ नन्वसत्त्वं न बाधे प्रयोजकम्। नृशृंगादावसत्त्वेपि बाधादर्शनादित्यत आह ॥ नृशृंगादाविति॥ यथा तव मते नृशृंगादावबाध्ये बाधप्रयोजकत्वेनाभिमतस्य सद्वैलक्षण्यस्य सत्त्वेपि तस्य यथाबाधं प्रति प्रयोजकत्वाक्षतिः तथाऽसत्त्वस्य नृशृंगादौ सत्त्वेपि न क्षतिरित्यर्थः। ॥ अनिर्वाच्यसाधकख्यातिबाधान्यथानुपपत्तिभंगः ॥

## न्यायामृतकण्टकोद्धारः

अनिर्वचनीयेऽर्थापत्तिं दूषयितुं विकल्पेन पृच्छति ॥ अर्थापत्तावपीति॥ ॥ त्वन्मत इति॥ प्रतिवादिनो मते प्रपञ्चस्याबाध्यत्वादिति भावः। ननु व्यवहारदशायां न बाध्येत्यापादनकरणान्न व्यभिचारः। प्रपञ्चस्य

(कण्टकोद्धारः)

व्यवहारदशायामबाध्यत्वादित्याह ॥ व्यवहारदशायामिति ॥ अत्र बाध्यते च व्यवहारदशायां तस्मात्सद्विलक्षणमिति विपर्ययपर्यवसानं कर्तव्यम्। तत्र नेहनानेति श्रुत्या वा बाध्यत्वं? युक्त्या वा? प्रत्यक्षेण वा? नाद्य इत्याह ॥ नेहेति ॥ तथा व्यवहारदशायां प्रपञ्चस्याबाधनात् तत्प्रत्यायकपदादेस्तत्राभावात्। तथा च विपर्ययापर्यवसानं दूषणमिति भावः। द्वितीय आह ॥ व्यवहारदशायामेवेति ॥ तथाच प्रपञ्च एव त्वन्मते व्यभिचार इति भावः। क्वचित् यौक्तिकाबाधस्येति पाठः। तदापि विपर्ययापर्यवसानमेवेति भावः। तृतीय आह ॥ प्रत्यक्षेति ॥ तथा च तदंशे विपर्ययापर्यवसानमेवेति। उपलक्षणमेतत्। घटाद्यंशे प्रत्यक्षबाधाभावेन व्यभिचारश्चेत्यपि बोध्यम् ॥ शेषेति ॥ असच्चेन्न प्रतीयेतेत्यंशस्येत्यर्थः ॥ अत एवेति ॥ शेषवैयर्थ्यादेवेत्यर्थः। असतः परेण बाध्यत्वानंगीकारादित्यर्थः ॥ प्रामाणिकादन्यस्येति ॥ न च प्रामाणिकत्वमेव तदवच्छेदकमस्त्विति वाच्यम्। तस्यानुपदमेव निरसिष्यमाणत्वात् ॥ बाध्यस्यापीति ॥ तथाच बाध्य एव व्यभिचार इत्यर्थः ॥ आत्माश्रयादिति ॥ सत्त्वलक्षणे सत्वस्य प्रवेशादित्यर्थः ॥ मानान्तरेति ॥ न चात्र प्रामाणिकत्वमेव सत्त्वम्। प्रमाणत्वं च तत्वावेदकत्वम्। तदपि लक्षणया स्वरूपमात्रबोधकत्वम्। न च निर्विशेषत्वादिविशिष्टबोधक आगमस्तादृशः। अतो न व्यभिचारः। निर्विशेषत्वादिधर्मे स्वरूपमात्रपरागमाबोध्यत्वेन तत्र प्रामाणिकत्वाभावादिति वाच्यम्। तादृशप्रामाणिकत्वस्याप्रसिद्धत्वेनापादनप्रयोजकव्याप्तेरसंभवाद्विशिष्टबोधकेऽपि प्रामाणिकत्व व्यवहारेण तादृशपरिभाषाकरणे निमित्ताभावाच्च। तादृशसद्वैलक्षण्यस्य ब्रह्मण्यपि सुसाधनत्वाच्च। प्रपञ्चेऽपि तद्वैलक्षण्यस्येष्टत्वाच्चेति दिक् ॥ अबाध्य इति ॥ तथाच विरुद्धत्वमिति भावः। न च स्वप्रकाशत्वेन प्रकाशार्थं प्रमाणप्रवृत्त्यनंगीकारेऽप्यज्ञाननिवृत्यर्थं प्रमाणप्रवृत्तिः सफलेति वाच्यम्। प्रकाशमानेऽज्ञानासंभवस्योपपादितत्वात्। अज्ञानाविरोधित्वे प्रकाशत्वायोगस्योक्तत्वाच्च। किञ्च रूप्यादिबाधस्तत्वावेदक उतातत्वावेदकः? आद्येऽद्वैतहानिः। द्वितीय आह ॥ रूप्यादीति ॥ न च अप्रामाणिकतापादकत्वे न तत्वावेदकत्वं तन्त्रम्। किंतु बाध्यन्यूनसत्ताकत्वमेव। तथाच रूप्यादिबाधस्यापि अप्रामाणिकतापादकत्वं भविष्यतीति वाच्यम्। तथात्वे वल्मीके स्थाणुत्वभ्रमस्य पुरुषत्वभ्रमबोध्यत्वप्रसंगात्। किंच भ्रमत्वज्ञापनं हि बाध्यत्वम्। न च भ्रमेण भ्रमत्वज्ञापनं संभवतीति तत्वावेदकत्वमेवाप्रामाणिकतापादने प्रयोजकमास्थेयमत एवाह ॥ अतत्वेति ॥ न च निषेधस्य व्यावहारिकत्वमिष्टमेवेति वाच्यम्। निषेधस्य बाध्यत्वे प्रपञ्चस्य सत्यत्वापत्यादेरुक्तत्वात्। एतेनेति परामृष्टं हेतुमाह ॥ अवधारणस्येति ॥ न चानुमानेन प्रतियोगिप्रसिद्धिरापादितैवेति वाच्यम्। अनुमानानां सम्यक् प्रागेव निरस्तत्वात् ॥ बाधेनैवि ॥ न च तर्कान्तरोक्त्यर्थं ख्यात्युपन्यासो वा येनाबाध्यत्वेऽसत्वव्याप्तिर्वान ज्ञाता तं प्रति वा सार्थकत्वमिति वाच्यम्। असतोऽपि ख्यातेरुपपादयिष्यामाणत्वेन तर्कांतरोक्त्यादेरसंभवात् ॥ सदिति ॥ न च प्रामाणिकत्वमेव सत्त्वमिति वाच्यम्। तस्य पूर्वं दूषितत्वात्। ननु चाबाध्यत्वमेव सत्त्वम्। न चापाद्यापादकयोरविशेषः। त्रैकालिकनिषेधाप्रतियोगित्वमबाध्यत्वम्। विपरीतप्रमाविषयत्वाभावो द्वितीयमबाध्यत्वम्। यद्वा तद्व्यवहारो वा आपाद्यत इति। न चाबाध्यत्वेनैवासद्व्यावृत्तिसिद्ध्या शेषवैयर्थ्यमिति वाच्यम्। तस्य तर्कान्तरोपदर्शनार्थत्वादिति चेन्न। विपरीतप्रमाविषयश्च भवतीति विपर्ययापर्यवसानेन तर्कस्याभावत्वात्। विपरीतप्रमाविषयत्वाभावस्य प्रमाणविरुद्धत्वाभावेनेष्टापादनत्वाच्च। ब्रह्मणो निर्धर्मकत्वेनापाद्यापादकयोस्तत्राभावेन व्याप्त्यसंभवाच्च। कल्पितयोः प्रपञ्चेऽपि भावाच्च। तर्कान्तरत्वार्थं च

(कण्टकोद्धारः)
ख्यात्युक्तौ एकत्वेनोक्त्ययोगाच्च। न ह्येकस्मिन्ननुमाने हेतुद्वयं क्रियत इति। नहि त्वद्वाक्यमाप्तवाक्यतया बोधकम्। येन व्याख्यानतो विशेषप्रतिपत्तिः स्यात्। क्वचिदपि भिन्नत्वेनोक्त्यभावाच्च। तस्य तर्कान्तरत्वाभावस्य वक्ष्यमाणत्वाच्च। एवमापादकं दूषयित्वाऽपाद्यमपि दूषयति ॥ एवं नेति॥ एतच्च सर्वं मिथ्यात्वभंग एवोपपादितमिति नेह तन्यत इति ॥ द्वितीय इति॥ असत्त्वस्योक्तबाध्यत्वानतिरेकादिति भावः। नचासतः प्रतिपन्नोपाधौ निषेधप्रतियोगित्वस्यासंभवात् तद्वैलक्षण्यमेव बाध्यत्वप्रयोजकमिति वाच्यम्। तस्यासत्यपि प्रतिपादितत्वात् तदतिरेकेणासत्वानिर्वचनाच्चेति। एवं सच्चेन्न बाध्येतेत्यंशं दूषयित्वाऽसच्चेन्न प्रतीयेतेत्यंशं दूषयितुं पृच्छति ॥ एवमिति॥ सत्ताहीनस्यापीति॥ नन्वात्मनि व्यभिचारः किं त्वन्मतरीत्या मद्रीत्या वा? नाद्यः। त्वन्मत आत्मनि सत्तायाः सत्त्वेनापादकाभावात्। न द्वितीयः। मन्मते तत्र दृश्यत्वस्यैवाभावेनापाद्यसत्त्वादिति चेन्न। उभयथाप्यदोषात्। मया तत्र सत्ताजातेरनंगीकारात् परं प्रत्यात्मनि दृश्यत्वस्योपपादितत्वाच्च। यथा चैतत्तथा दृश्यत्वभंगे द्रष्टव्यम् ॥ रूप्यादाविति॥ असदेव रजतं प्रत्यभादित्यनुभवबाधादिति भावः ॥ अत एवेति॥ विपर्ययापर्यवसानादेवेत्यर्थः ॥ अन्यथाविज्ञातस्येति॥ बाधपक्षे आत्मनि व्यभिचारादेवेत्यर्थः ॥ निरुपाख्यं चेदिति॥ न च निरुपाख्यत्वं नाप्रतीयमानत्वम्। किंतु शब्दवृत्त्यविषयत्वम्। तथाच कथं साध्याविशेष इति वाच्यम्। असतः पदवृत्त्यविषयत्वे निरुपाख्यपदप्रयोगस्य तत्राभावापत्तेः। किञ्चासतोऽपि असत्पदवाच्यत्वात् कथं पदवृत्त्यविषयत्वम्? न च निर्धर्मकस्य कथं वाच्यत्वमिति वाच्यम्। तर्हि निरुपाख्यत्वमपि कथम्? तत्र धर्मिसत्तासापेक्षमिति यदि तदेतदत्रापि तुल्यम्। ख्यात्यंगीकारेण पदवृत्तिविषयत्वांगीकारेणेत्यर्थः ॥ इतोऽन्यस्येति॥ नन्वप्रतिपन्नोपाधिकत्वे सति स्वरूपेण निषेधप्रतियोगित्वं निःस्वरूपत्वम्। तच्च न प्रपञ्चे न वा शुक्तिरूप्यादाविति विपर्ययपर्यवसानोपपत्तिः। मिथ्यात्वलक्षणे च प्रतिपन्नोपाधाविति विशेषणबलान्नासत्यतिव्याप्तिर्न वा ब्रह्मण्यतिव्याप्तिरिति चेन्न। असतोऽपि भ्रमप्रतिपन्नोपाधिसंभवात्। ब्रह्मणश्च स एवाधस्तादिति श्रुत्यैव प्रतिपन्नोपाधेः सत्वात्। तथा च दत्तेऽपि विशेषणे नासतो व्यावृत्तिरिति विपर्ययापर्वसानमेवेति ॥ किञ्चेति॥ सत्त्वाभावतद्व्याप्तान्यतरस्य शुक्तिरूप्यादावंगीकारेण तस्मान्नासदिति विपर्ययापर्यवसानमित्यर्थः ॥ असत इति॥ अभावज्ञाने प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य कारणत्वादिति भावः ॥ असदिति॥ निराकरणे निराकार्यज्ञानं कारणम्। निराकार्या चासद्विशिष्टा प्रतीतिः। न च विशेषणप्रतीतौ विशिष्टप्रतीतिः संभाविनीति भावः ॥ असत्पदस्येति॥ तथाचासच्चेन्न प्रतीयेतेति वाक्यस्याबोधकत्वात्तद्वैयर्थ्यम्। न चासत्पदस्याबोधकत्वेऽपि इतरपदसमुदायस्य बोधकत्वं भविष्यतीति वाच्यम्। तत्पदजन्यबोधस्यासद्वैलक्षण्यासाधकत्वेन प्रकृतानुपयोगित्वात् ॥ असत इति॥ व्यवहारस्य व्यवहर्तृ-व्यधीजन्यत्वादिति भावः। न चासद्विषयकविकल्पांगीकारेण सर्वस्योपपत्तिरिति वाच्यम्। विकल्पस्य प्रतीत्यतिरिक्तस्य वक्तुमशक्यत्वात्। सत्त्वस्योपपादयिष्यमाणत्वात्। नचास्तु विकल्पस्य ज्ञानत्वं तथापि तदन्यज्ञानविषयत्वं निषिध्यते इति वाच्यम्। विकल्पोऽनुभवः स्मरणं वा। उभयथापि शुक्तिरूप्यादेस्तदन्यज्ञानविषयत्वाभावेन इष्टापादनत्वात्। प्रतीयते चेति विपर्ययपर्यवसानायोगाच्च। ॥ इष्टेति॥ मयापि शुक्तिरूप्यादेः सत्त्वेन प्रमाविषयत्वानंगीकारादित्यर्थः ॥ भ्रान्तित्वादेवेति॥ अन्यथा भ्रान्तित्वमेव न स्यात्। न चासतः सत्त्वेन प्रतीत्यभावेऽपि अनिर्वचनीयविषयत्वेन भ्रान्तित्वं भविष्यतीति वाच्यम्।

(कण्टकोद्धारः)

अनिर्वचनीयत्वस्याद्याप्यसिद्धयाऽन्योन्याश्रयात्। असदेवेदमित्यनुभवेनानिर्वचनीयत्वाभावस्यैवानिर्णीतत्वाच्चेति। किञ्च सत्त्वेन प्रतीत्या नासद्वैलक्षण्यं साधयितुं शक्यम्। असत्यपि सत्त्वेन प्रतीतिविषयत्वसत्वादित्याह ॥येनेति॥ ननु तद्वाक्यादनुभव एव न भवत्यत आह ॥नहीति॥ तथात्वेऽनुभवविरोध इति भावः। ननु योग्यताभावादयोग्यतानिश्चयसद्भावाच्च कथं तद्बोधकमित्यत आह ॥विपरीतेति॥ न ह्ययोग्येऽयोग्यतानिश्चयः सर्वदाऽस्तीति नियमः। यदा स नास्ति यदा वा योग्यताभ्रमोऽस्ति तदाऽयोग्यादप्यनुभवो दुरपह्नव इति भावः ॥अन्यथेति॥ अयोग्याद्बोधानंगीकार इत्यर्थः ।

प्रतारकवाक्यात्प्रवृत्तिदर्शनात् तस्याश्च स्वसमानप्रकारकस्वसमानविषयकज्ञानसाध्यत्वात् तादृशज्ञानस्य च वाक्यातिरिक्त प्रमाणाजन्यत्वादिति भावः। बाधकान्तरमाह ॥योग्यताहीनादिति॥ विकल्पः किं ज्ञानान्यत् मानसं वृत्यन्तरं ज्ञानविशेषो वा? आद्य आह ॥विकल्पस्येति॥ विकल्पस्थले जानामीत्यबाधितानुभवात् विकल्पोऽपि ज्ञानम्। अन्यथा तद्विरोधः स्यादित्यर्थः ॥प्रवृत्तीति॥ तस्याज्ञानसाध्यत्वादिति भावः। द्वितीय आह ॥विकल्पस्येति॥ तथा च न तेनासद्वैलक्षण्यसिद्धिरिति भावः ॥द्वितीये॥ असदेवोल्लिखन् इति पक्ष इत्यर्थः ॥निःस्वरूपस्येति॥ निःस्वरूपत्वस्यैवासत्त्वात् निःस्वरूपस्यानिर्वचनीयत्वेऽसद्वैलक्षण्यमनिर्वाच्यस्य न स्यादित्यर्थः। न च नृभृंगमसदिति वाक्यश्रवण समनंतरं विकल्प्यमानाखण्डानिर्वाच्यानात्मक नृभृंगादेर्वैलक्षण्यमुच्यते। नृभृंगमस्तीत्यत्र तु नरि शृंगमनिर्वाच्यम्। तस्मिंश्च सत्त्वमप्यनिर्वाच्यमेवेति वाच्यम्। उभयत्र नृभृंगपदप्रतिपाद्यस्यैकस्यैवानुभवेन विशेषकल्पनायां प्रमाणाभावात्। न च नृभृंगमस्तीत्यत्र सत्त्वस्यारोप्यतयाऽधिष्ठानाक्षेपे नासतस्तदयोगात् नृभृंगपदेनान्यदेव प्रत्याय्यते। नैवमितरत्रेति वाच्यम्। असतोऽप्यनिर्वाच्यवदधिष्ठानत्वसंभवात्। नचासन्न प्रतीयत एवेति वाच्यम्। अस्यानिर्वाच्यसिद्ध्युत्तर-कल्प्यत्वेनान्योन्याश्रयात्। अनिर्वचनीयं चेन्न प्रतीयेतेत्यपि वक्तुं शक्यत्वाच्च। तस्मान्निःस्वरूपाद्वैलक्षण्यं वक्तव्यम्। सर्वथाऽसतो ज्ञानानंगीकारेऽपसिद्धान्त इत्याह ॥अत्यन्तासत्यपीति॥ न चेदमस्त्यादिपद-समभिव्याहृतपरमिति वाच्यम्। नास्त्यादिपदसमभिव्याहृतपरत्वे बाधकाभावात्। अन्यथा सच्चेन्न प्रतीयेतेति वाक्यमबोधकं स्यात्। अस्त्यादिपदसमभिव्याहाराभावादित्युक्तत्वात् ॥तद्वैक इति॥ यथाऽनेनासतः सत्त्वं प्रतीयते तथा मिथ्यात्वलक्षणभंग एवोक्तम्। अपार्थकशब्देनाप्रत्यायकत्वं वा आत्यंतिकनिषेधयोग्या प्रतीतिर्वा असत्प्रत्यायकत्वं वा? नाद्य इत्याह ॥अपार्थकेति॥ नचानन्वयनिश्चयदशायामबोधकत्वमुच्यत इति वाच्यम्। तस्य योग्येऽप्यनन्वयभ्रमदशायां सत्त्वेन तस्याप्यपार्थकत्वापातात्। न चानन्वयानिश्चयदशायामपि व्यधिकरणप्रकारकज्ञानमात्रजनकत्वमिति वाच्यम्। तस्याप्यसद्विषयतामन्तरेण दुःसम्पादत्वादित्यन्यत्रोक्तत्वात्। द्वितीय आह ॥तेनेति॥ तथाचानुभवविरोध इति भावः। तृतीय आह ॥असदिति॥ ॥यौगिकेति॥ नचैवमखण्डासद्बोधाभावापत्तिरिति वाच्यम्। यत्रोपदेशादिनाऽखण्डे शक्तिग्रहस्तत्र तस्याप्युपपत्तेः। यत्र तु न तद्ग्रहस्तत्र योगवृत्या बोधसंभवादिति। न चात्र शशे शृंगाभावबोधन मात्रमेवेति वाच्यम्। तथा सति शशशृंगमसदिति सामानाधिकरण्यानुपपत्तेः। प्रयोगान्तरे गवीत्यधिकरणान्तरप्रतीत्या शशस्य तदप्रतीतेश्चेति दिक् ॥वार्तिकोक्तमिति॥ तत्सिध्यधिकरणवार्तिकोकोक्तमित्यर्थः ॥तत्रेति॥ न च नास्तीति-पदसमभिव्याहारबलात् तथा प्रतीतिरतो न पौनरुक्त्यादीति वाच्यम्। तावताऽखण्डस्यैव प्रतियोगित्वप्रतीतेः।

(कण्टकोद्धारः)
अन्यथा विशिष्टाभावो न सिद्ध्येतेति। तस्मात्सिद्धमेतत्तदसतोऽपि सत्त्वेन प्रतीतिरस्तीति न तयाऽसद्वैलक्षण्यसाधनं युक्तमिति।

अस्तु तर्हि असत्त्वेन प्रत्यक्षतः प्रतीयेतेति तृतीयः पक्ष इत्यत आह ॥न तृतीय इति॥ तथाच यथाकथंचिदपरोक्षप्रतीतिविषयत्वस्यासत्यपि सत्त्वात् न तेनासद्वैलक्षण्यसाधनं युक्तमिति भावः। नन्वनिषेध्यतया साक्षादपरोक्षतया प्रतीत्यभाव आपाद्यत इति चेन्न। तत्किं प्रमाभावो वा भ्रांत्यभावो वा? नाद्यः इष्टापत्तेः। न द्वितीय इत्याह ॥न चतुर्थ इति॥ न च तादृशप्रत्यक्षसामग्र्यभावात् कथं तादृशप्रत्यक्षम्? इन्द्रियार्थसंनिकर्षो हि प्रत्यक्षसामग्री। न चासता संनिकर्षः संभवतीति वाच्यम्। तार्किकाणां मते योगीन्द्रियादिनाऽतीतादेरिव तव प्रातिभासिकेनेव प्रत्यक्षस्याभावेनेवासता संनिकर्षाभावेऽपि तज्ज्ञानजननोपपत्तेः। न च तत्र योगजधर्मादिर्नियामकोऽथवा स एव संनिकर्ष इति वाच्यम्। प्रकृतेपि दोषस्य नियामकत्वात्। तस्यैव वा संनिकर्षत्वात्। किञ्च प्रमायामेव निर्दोषेन्द्रियसंनिकर्षो हेतुः। न चेंद्रियवत् संनिकर्षस्यापि जन्यप्रत्यक्षसामान्यसामग्रीत्वमिति वाच्यम्। इन्द्रियजन्यत्वमात्रेण तदुपपत्तौ संनिकर्षस्यापि सामान्यसामग्रीत्वे मानाभावात्। अत एव मणिकृदाह ॥इंद्रियत्वेनेंद्रियजन्यं ज्ञानं प्रत्यक्षमिति। अन्यथा संबन्धिभिन्नसंबंधस्यैव संनिकर्षत्वात् तस्य चा भावप्रत्यक्षादावभावात् अभावादि प्रत्यक्षाभावापत्तौ बहुविप्लवः स्यात्। किञ्च न हि संनिकर्षः संनिकर्षत्वेन कारणमननुगमात्। किन्त्ववान्तरव्यापारत्वेन। प्रकृतेऽपीन्द्रियस्य कारणत्वनिर्वाहार्थं कश्चिदवान्तरव्यापारो भविष्यतीति न कश्चित् क्षुद्रोपद्रवः। अपि च विषयेन्द्रियसंनिकर्षः कारणम्। प्रकृते च सोऽस्त्येव। मुक्तेरेव विषयत्वात्। यथा चैतत्तथा विषयत्वनिर्वचने प्रपञ्चितमित्यलम्।

किञ्च प्रत्यक्षेणासतो ज्ञानाभावे शब्देनापि तत् कथं स्यात्। योग्यताज्ञानविरहात्। नचायोग्यताज्ञानविरहः शाब्दत्वावच्छिन्नसामग्री। सा च प्रकृतेऽस्त्येवेति वाच्यम्। लाघवेन योग्यतादेरेव हेतुत्वमिति वक्तुं शक्यत्वात्। अत एवाह ॥सन्मात्राविषयकमिति॥ न च सर्वस्यापरोक्षज्ञानस्य प्रातिभासिकसाधारणविषयत्वात् तदविषयकमपरोक्षज्ञानमसिद्धम्। सत्पदेन पारमार्थिकसत्वविवक्षायां मात्रपदवैयर्थ्यमेवेति वाच्यम्। सत्पदेन पारमार्थिकत्वविवक्षायामपि सर्वस्याप्यधिष्ठानीभूतब्रह्मविषयत्वेन सद्विषयत्वान्मात्रपदाभावे आश्रयासिद्ध्यनुद्धारात्। न च सामग्रीविरहेण बाध इति वाच्यम्। तस्या उपपादितत्वात्। न च शाब्दत्वमुपाधिरिति वाच्यम्। प्रत्यक्षत्वतुल्यत्वेन शाब्दत्वस्य साध्यव्यापकताऽनिश्चयादप्रयोजकत्वाच्च। न च धर्मादिकमपरोक्षप्रतीति विषयः। प्रतीतिविषयत्वादित्याभाससाम्यमिति वाच्यम्। तस्यानाभासत्वात्। धर्मादेरपि यत्किञ्चित्प्रत्यक्षविषयत्वात्। न चास्मदादिप्रत्यक्षविषयत्वे साध्ये आभासत्वमिति वाच्यम्। तत्रास्मदादियोग्यत्वस्योपाधित्वात्। न च साधनव्यापकत्वं धर्मादेरस्मदादियोग्यत्वे धर्मादिकं साक्षात्कारोमीति प्रत्ययापत्तेः। योग्यतायाः फलबलकल्प्यत्वादिति दिक्।

॥सविशेषत्व इति॥ यत् सविशेषं तन्नासत्। यथा घटादीति व्याप्तेरिति भावः ॥दुष्टेन्द्रियस्येति॥ तथाच संस्काराभावात् न शशशृंगादिप्रत्यक्षमिति भावः। ननु संस्कारस्य भ्रमोपयोगिता कथम्? न तावत्प्रतीतौ। संस्कारजन्यत्वे स्मृतित्वापत्तेः। नापि रजतोत्पत्तौ। रजतोत्पत्त्यंगीकारेऽनिर्वचनीयता-

(कण्टकोद्धारः)

पक्षानुसरणमिति चेन्न। प्रतीतावेवोपयोगं ब्रूमः। न च स्मृतित्वापत्तिः। संस्कारजन्यत्वेन स्मृतित्वे संस्कारलिंगकानुमितेः प्रत्यभिज्ञायाः संस्कारध्वंसस्य च स्मृतित्वापत्तेः। किञ्चारोप्यज्ञानजननद्वाराऽस्तु भ्रमोपयोगिता। आरोप्यज्ञानं च स्मरणरूपमिति न कश्चिद्दोषः। न च भ्रमे आरोप्यज्ञानं न कारणमिति वाच्यम्। अन्वयव्यतिरेकसिद्धत्वात्। नचारोप्यस्यासत्यत्वात् तस्य च प्रागननुभवात् कथं संस्कारस्य तत्स्मारकत्वमिति वाच्यम्। लाघवेनारोप्यतावच्छेदकप्रकारकज्ञानस्यैव भ्रमकारणत्वेन तादृशस्य सत्यरजतानुभवसाध्यत्वसंभवेनोक्तदोषाभावात्। समानविषयकत्वस्य गौरवेण त्याज्यत्वात्। एतेन संस्कारस्तात्त्विकरजतादिगोचर एव प्राथमिकरजतादिभ्रमे प्रयोजकः। स चासद्रूप्यशशशृंगादिसर्वसाधारण एव तदविषयत्वाविशेषात्। तथाच कथं स नियामक इति परास्तम्। असद्रूप्याविषयत्वेऽप्यारोपसमानप्रकारकत्वेन रजतसंस्कारस्य रजतारोपप्रयोजकत्वं न शशशृंगारोपप्रयोजकत्वमिति व्यवस्थोपपत्तेः। भिन्नविषयकव्याप्तिस्मृतेरनुमिताविव शक्तिग्रहस्य शाब्दानुभव इव भिन्नविषयकस्यापि प्रयोजकत्वोपपत्तेः। न ह्यावयोर्मते सामान्यलक्षणा अस्ति। तथाच शशशृंगादिविषयारोपे संस्कार साचिव्याभावादिति यदुक्तं न साधूक्तम्। किञ्चासद्विशेषस्यास्तु भ्रांतिविषयत्वम्। न च सविशेषत्वे सत्त्वायोग इति वाच्यम्। असतः सविशेषत्वस्यावश्यमंगीकार्यत्वादित्याह ॥असत इति॥ प्रतीत्यविशेषेऽन्यविशेषमंगीकृत्य विशेषांतरानंगीकरणे हेत्वभावादिति भावः ॥नृशृंगेति॥ न च शशशब्दस्य नृशब्दभ्रमदशायां नृशृंगशब्देनेव शशशृंगशब्देनापि नृशृंगस्य प्रतीयमानत्वेन नृशृंगादिशब्देनैव प्रतीयमानत्वरूपो विशेषोऽसिद्ध इति वाच्यम्। अभ्रमदशाविशिष्टस्यैव प्रतीयमानत्वस्य विशेषव्यवस्थापकत्वात्। अन्यथा घटादावपि घटादिशब्दैरेव प्रतीयमानत्वादिरूपो विशेषो न स्यात्। घटस्य पटत्वभ्रमदशायां घटशब्देन पटस्य प्रतीयमानत्वादिति तत्रापि वक्तुं शक्यत्वात्। नचैवमेवेति वाच्यम्। घटादेर्घटत्वादिरूपोपि विशेषो न स्यात्। भ्रमदशायामन्यथाप्रतीयमानत्वादिति यत्किञ्चिदेतत् ॥एतेनेति॥ असतोऽपि धर्माश्रयत्वप्रतिपादनेनेत्यर्थः। यद्वा परोक्षप्रतीतिविषयत्वांगीकारेणेत्यर्थः। एतदेव स्पष्टयति ॥अतीतादेरिति॥ ॥अन्यथेति॥ सत्त्वेन भ्रान्तेः सत्त्वसापेक्षत्व इत्यर्थः। तथा च त्वन्मतेऽपि रूप्यविषयिणी सत्त्वभ्रांतिर्न स्यात्। तस्य सद्विलक्षणतया सत्त्वाभावेन सता ज्ञानादिना संबंधाभावादित्यर्थः। ननु संबंधादावसद्वैलक्षण्यमेव प्रयोजकं न सत्त्वमित्यत आह ॥संबंधादाविति॥ उपलक्षणमेतत्। लाघवेनासत्त्वाभावस्यैव सत्त्वादित्यपि द्रष्टव्यम्। ननु तथाप्यसदपरोक्षप्रतीतौ कारणाभावात् कथमपरोक्षप्रतीतिरित्यत आह ॥दुष्टादिति॥ न च तदिन्द्रियसंनिकर्षस्य तत्प्रत्यक्षे कारणत्वात् तदभावे कथं तत्प्रत्यक्षमिति वाच्यम्। दत्तोत्तरत्वादित्यलम्। उक्तन्यायमन्यत्रातिदिशति एतेनेति। एतेनेति परामृष्टहेतुमाह ॥इदमंशस्येति॥ न च सामग्रीविरहात् कथं तथाप्रतीतिरिति वाच्यम्। तस्या उपपादयिष्यमाणत्वात् उपपादितत्वाच्चेति भावः ॥अपरोक्षप्रमाया एवेति॥ वस्तुतस्तु विषयस्य क्वापि प्रत्यक्षे न हेतुत्वम्। संनिकर्षहेतुत्वेनान्यथासिद्धत्वात्। अत एव यत्रार्थं विनापि संनिकर्षस्तत्र तं विनापि प्रत्यक्षोदयः प्रत्यभिज्ञादौ। तथाचार्थस्याकारणत्वात्तदभावेऽपि प्रत्यक्षोदयो युक्तः। संनिकर्षोऽपि न यत्किञ्चित्संनिकर्षः कारणम्। किन्तु विषयसंनिकर्षः। विषयश्च शुक्तिकैवेति तत्संनिकर्षोऽस्त्येव। यत्संनिकृष्टकरणेन यज्ज्ञानं जन्यते तस्य तद्विषयत्वात्। तथाच भ्रमरूपेऽपि प्रत्यक्षे सर्वापि सामग्र्यस्त्येवेति भावः। एतदेवाभिप्रेत्याह ॥रूप्येति॥

(कण्टकोद्धारः)

न च यावदुल्लेख्यसंनिकर्षः कारणं गौरवादिति भावः ॥अन्यथेति॥ यावदुल्लेख्यसंनिकर्षस्य कारणत्व इत्यर्थः। न च रजतज्ञानस्य साक्षिरूपत्वात् नार्थादिजन्यत्वमिति वाच्यम्। रजतज्ञानस्य साक्षिरूपत्वासम्मतेः। चक्षुषा रजतमद्राक्षमित्यनुभवेन चाक्षुषत्वस्यैव युक्तत्वादिति भावः। किञ्च प्रतीयमानस्य रजतस्य सत्त्वप्रातिभासिकत्वयोरनुपपत्तेरसत्वमेवास्थेयम्। तथा च कथमसतः सत्त्वेनाप्रतीतिरित्याह ॥किञ्चेति॥ प्रकारांतरेणानवस्थामाह ॥एवं रूप्यमिति॥ टीकोक्तानवस्थायां प्रतिबंदिं परिहर्तुमनुवदति ॥टीकायांत्विति॥ टीकायांत्वित्युक्तमिति संबंधः ॥न चेति॥ टीकोक्तानवस्थापक्ष इत्यर्थः ॥मन्मत इति॥ न च सत्त्वस्य सत्त्वेनाप्रतीतौ कथं व्यवहार इति वाच्यम्। घटोऽयमित्यादौ घटत्वादौ घटत्वादेः स्वरूपेण प्रतीत्या घट त्यादि व्यवहारवत् सत्त्वस्यापि स्वरूपेण प्रतीत्या व्यवहारोपपत्तेः। न च स्वरूपमपि न सदिति वाच्यम्। ोषवशादसत एव प्रतीत्युपपत्तेः। न च सत्त्वस्य सत्त्वासत्त्वौदासीन्येन कथं तस्यासत्त्वसिद्धिरिति वाच्यम्। बाधकप्रत्ययेन तत्सिद्ध्युपपत्तेरिति। उपलक्षणमेतत्। त्वन्मते सत्त्वावान्तरप्रातिभासिकसत्त्ववत् मन्मतेऽसत्वावान्तरासत्त्वाभावात् त्वन्मते सदित्युक्तौ प्रातिभासिकत्वादिसंदेहवत् शृंगमित्युक्तौ नृशृंगसंदेहवत् मन्मतेऽसत्त्वमित्युक्तौ असत्सत्त्वसंदेहाभावात् न प्रवृत्त्यनुपपत्तिरित्याद्यपि द्रष्टव्यम् ॥किञ्चेति॥ न चेष्टापत्तिः। चतुर्थप्रकाराभावेन पञ्चमप्रकाराभावप्रसंगात्। नन्वेवं सदसदात्मकत्वे सद्रूप्यमिति भ्रमो न स्यात्। तस्य सत्त्वात् सति सत्त्वज्ञानस्य यथार्तत्वादित्यत आह ॥असदेवेति॥ तथाचासद्वैलक्षण्यविषयत्वेन भ्रमत्वोपपत्तिरिति भावः। न चैवं बाधकेन भ्रमविषयानपहारे तस्य बाधकत्वमनुपपन्नमिति वाच्यम्। भ्रमविषयीकृता-सद्वैलक्षण्याभावविषयत्वेन तदपहारसंभवात्। न चागृहीता सत्त्वस्यापि सद्रूप्यमिति प्रतीतेर्नासद्वैलक्षण्यं भ्रमविषयः। न ह्येवमगृहीतसत्त्वस्यासदेवेति बुद्धिरस्त्यतः सत्त्वाभावविषयत्वं बाधकस्य युक्तमिति वाच्यम्। न ह्यसत्त्वाभावत्वप्रकारकप्रतीतिमापादयामो येनासत्त्वज्ञानं विनापि सदिति बुद्धेर्जायमानत्वात् असत्वाभावविषयत्वं न स्यात्। तदभावत्वप्रकारकज्ञाने हि तत्प्रतियोगिज्ञानापेक्षा न तु स्वरूपेण न वान्यप्रकारेण ज्ञाने। अन्यथा प्रमेयत्वेनाभावज्ञानेऽपि तदपेक्षा स्यात्। प्रकृते चासत्त्वाभावः स्वरूपेण भासते इति काऽनुपपत्तिः। न हि सदित्यत्र सत्वेऽपि धर्मान्तरमवभासते। न ह्यसत्त्वं सत्त्वाभावरूपं येनासत्त्वज्ञानं सत्त्वज्ञानपूर्वकं स्यात्। सार्वदैशिकसार्वकालिकनिषेधप्रतियोगित्वस्यैवासत्त्वात्तदभावरूपत्वाच्च सत्त्वस्य तज्ज्ञानस्यैवासत्त्वज्ञानपूर्वकत्वमिति वैपरीत्यमेवेति। प्रकारान्तरेण भ्रमत्वं समर्थयते ॥यद्वेति॥ नन्वेवं सदिति प्रतीतेर्भ्रान्तित्वं न स्यादित्यत आह ॥भ्रान्तित्वे चेति॥ ॥अन्यथेति॥ एकैकात्मकत्वे विरोधादुभयबहिर्भावश्चेदित्यर्थः। न चेष्टापत्तिः। यथाकथञ्चिदुभयत्वोपपत्तौ उभयबहिर्भावस्यायुक्तत्वात्। एकस्य तूभयत्वे संयोगपृथक्त्वमित्यधिकरणविरोधश्च ॥अनिर्वाच्यत्वाभाव एवेति॥ सदसदात्मकत्वापत्त्येयर्थः ॥बाधप्रतीत्योश्चेति॥ न च सत्त्वासत्त्वे न प्रतीतिबाध प्रयोजके। शुक्तिरजतस्य सत्त्वाभावेऽपि प्रतीयमानत्वात्। शशविषाणादेश्चासतो बाधादर्शनादिति वाच्यम्। एवं हि सद्विलक्षणत्वमपि बाधकं न स्यात् शशविषाणादेस्तददर्शनात्। सद्विलक्षणविशेषस्य तथात्वेऽसद्विशेषस्यैव तथात्वमस्तु। असत एव बाध्यत्वस्य समर्थितत्वाच्च ।

(कण्टकोद्धारः)

एवमसद्विलक्षणमपि न प्रतीतिप्रयोजकम्। ब्रह्मणोऽसद्विलक्षणत्वेऽप्यवेद्यत्वेन प्रतीत्यभावात्। ब्रह्म वृत्तिव्याप्यमपि नेति सर्वथायोगाच्च। तस्मात् सत्वासत्वे एव प्रतीतिबाधप्रयोजके लाघवादिति साधूक्तम्। नन्वेवं शशशृंगादेरपि बाधः स्यादित्यत आह ॥नृशृंगादाविति॥ प्रसक्तिसत्त्वे बाधस्येष्टत्वादिति भावः। उक्तमर्थं कारिकया संगृह्णाति ॥एवञ्चेति॥ इति अनिर्वाच्यसाधकख्यात्यन्यथानुपपत्तिभंगः ।

## ३९. अनिर्वाच्यसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभङ्गः

नन्वत्यन्तासत्त्वे कथं निषेधप्रतियोगित्वम्? तथा चात्यन्तिकनिषेधप्रतियोगित्वरूपबाध्यत्वमेव सत्यसति चानुपपद्यमानमनिर्वाच्यत्वं कल्पयतीति नवीना इति चेन्न, किमिह कथम् असत्त्वस्यात्यन्तिकनिषेधप्रतियोगित्वरूपत्वेन तदप्रतिक्षेपकत्वात् प्रागभावादिदशायामसत एव घटादेस्तत्प्रतियोगित्वदर्शनेन तस्य रूपादिवद्धर्मिसत्त्वानपेक्षत्वाच्च, असत्त्वाभावादपि लघुत्वेन तत्र सत्त्वस्य तंत्रतया तद्धीनस्यानिर्वाच्यस्याप्रतियोगित्वापाताच्च, त्वन्मतेऽप्यसतोऽसद्वैलक्षण्यं प्रति प्रतियोगित्वाच्च, असतोऽपि 'नासदासीदि'ति श्रौतनिषेधप्रतियोगित्वाच्च। यदि च कुत्रचित्कदाचित्सत एवासत्त्वम्, तर्हि कुत्र चित्कदाचिदसत एव सत्त्वमिति नित्यसर्वगतानां सत्त्वं न स्यात्। आत्यन्तिकं सत्त्वमसत्त्वनिरपेक्षं चेदात्यन्तिकमसत्त्वमपि सत्त्वनिरपेक्षम्, अन्यथा ध्वंसः स्वाधिकरणे प्रतियोगिसत्वापेक्ष इत्यत्यन्ताभावोऽपि तथा स्यात्। अत्यन्ताभावश्च स्वकाले प्रतियोगिसत्त्वापेक्ष इति ध्वंसोऽपि तथा स्यात्। प्रतियोगिनो सत्त्वेऽपि प्रतियोगित्वस्य सत्त्वं च ध्वंसादिदशायां प्रतियोगिनोऽवर्तमानत्वेऽपि प्रतियोगित्वस्य वर्तमानत्ववत् शशशृङ्गादेरसत्वेऽपि परोक्षज्ञानादिकं प्रति विषयत्वस्य सत्त्ववद्, असद्वैलक्षण्यं प्रति प्रतियोगित्वस्य सत्त्ववत्, त्वत्पक्षे प्रतियोगिनः सद्विलक्षणत्वेऽपि बाधगोचरस्य निषेधप्रतियोगित्वस्य सत्त्ववच्च युक्तम्। यदि तु तत्र प्रतियोगित्वविषयत्वे न धर्मिसत्त्वापेक्षे तर्हीहापि तथा। यदि च तत्र ध्वंसादौ तत्प्रतियोगिकत्वमेव वर्तमानमसद्विषयकज्ञाने च तद्विषयकत्वमेव सद्, असद्वैलक्षण्ये च तत्प्रतियोगित्वमेव सत्, न तु प्रतियोगित्वं वर्तमानं सद्वा न वा विषयत्वं सत्, तर्हीहाप्यत्यन्ताभावे तत्प्रतियोगित्वं सत्, न तु प्रतियोगित्वमित्यस्तु। न

चाभावविरहत्वं प्रतियोगित्वम्, सादृश्यपृथक्त्वादिप्रतियोगिष्वव्याप्तेः, येनासतः प्रतियोगित्वं न स्यात्। किं तु तज्ज्ञानहेतुज्ञानविशेषविषयत्वं तच्चासतोऽप्यस्ति, अन्यथा अभावावधित्वं प्रतियोगित्वमिति निरवधिकोऽत्यन्ताभावो निष्प्रतियोगिकः स्यात्।

एतेन प्रतियोगिस्मृतिरूपहेत्वभावादसत्प्रतियोगिकाभावधीरयुक्तेति निरस्तम्, शब्दाभासादिनाऽनुभूतस्य स्मृतिसम्भवाद् भ्रमविषयवच्च प्रतियोगिनोऽप्रामाणिकत्वेऽपि भ्रमवदभावस्य प्रामाणिकत्वं युक्तम्। न हि प्रमाणस्पृष्टत्वमेव तत् असतोऽप्यसत्त्वेन तत्स्पृष्टत्वात्, किं तु सत्त्वेन।

नन्वथापि योग्यानुपलब्ध्या अभावो ग्राह्यः योग्यता च प्रतियोगितद्-व्याप्येतरप्रतियोग्युपलम्भकसामग्री, असति च प्रमासामग्री नास्तीतिदोषसहित-ज्ञानसामग्रीरूपा सा वाच्या तस्यां च सत्यां नासतोऽनुपलम्भः, उपलम्भस्यैव सत्त्वाद् अनुपलम्भदशायां च तज्ज्ञानसामग्रीरूपा योग्यतैव नास्तीति कथमसदभावधीः ?

दुष्टोपलम्भसामग्री शशशृंगादियोग्यता ।
तस्यां नानुपलम्भोऽस्ति नास्ति सानुपलम्भने ॥

इति कुसुमांजल्युक्तेरिति चेन्न, या ह्यनुपलब्धिर्यत्र यत्सत्त्वविरोधिनी, तस्या एव योग्यानुपलब्धित्वात् तस्याश्चासत्यपि भावात्। शृंङ्गानुपलब्धिर्हि महत्वे सत्युद्भूतरूपशृंगसत्त्वविरोधिनी न हि प्रतियोगिप्रत्यक्षत्वम् अभावप्रत्यक्षत्वे तन्त्रम्, स्तम्भे पिशाचान्योन्याभावस्याप्रत्यक्षत्वापातात्, जलपरमाणौ पृथिवीत्वाभावस्य प्रत्यक्षत्वप्रसंगाच्च। कथमन्यथा शशशृंङ्गं नास्तीत्यबाधितधीः ? न च शशे शृङ्गं नास्तीत्यर्थ इति चिन्तामण्युक्तं युक्तम्, शशशृंगोल्लिखिता भूरित्यादावप्रसिद्ध-विशेषणत्वोक्त्ययोगाद्, गवि शशशृंगं नास्तीत्यधिकरणान्तरोपादानाच्च शशे शृंगं नास्तीत्यर्थकल्पनेऽपि भूतले घटो नास्तीतिवदसतः संसर्गस्य निषेध्यकोटिनिवेशाच्च, अन्यथा संसर्गस्य सत्त्वापातादु, गोशृंगं नास्तीतिवद् विशिष्टप्रतियोगित्वप्रतीतेरुक्तरीत्या बाधकाभावेन अन्यथाव्याख्यानायोगाच्च।

एतेन न प्रतियोगिधीमात्रमभावधीहेतुः, तन्निर्विकल्पकादप्यभावधीप्रसंगात्, किं तु प्रतियोगितावच्छेदकावच्छिन्नतद्धीः। न च शशीयत्वावच्छिन्नशृङ्गधीरस्तीति सामग्र्यभावादेव बाधकान्न व्यधिकरणधर्मावच्छिन्नाभावधीरिति चिन्तामण्युक्तं निरस्तम्, शब्दाभासादिना तद्धीसम्भवात्। अन्यथा तंतुषु पटो नास्तीत्यस्यापि तंतुसमवेते पटत्वं नास्तीत्यर्थ इति प्रागभावादेरपि स्वसमानकालीनप्रतियोगित्वं स्यात्। एतेनैव सप्तमभावो नास्तीत्यादेः द्रव्यादिषड्लक्षणात्यन्ताभावे भावत्वसामानाधिकरण्यं नास्तीत्यर्थ इति निरस्तम्। शुक्तिरूप्यतादात्म्यवत् संसर्गवच्चात्यन्तासतोऽपि सप्तमपदार्थादेः पररीत्या प्रसक्तस्य निषेधसम्भवे कुसृष्टिकल्पनायोगात्। किं चेह भूतले घटो नास्तीति धियः संसर्गाभावो विषयः, न तु घटाभावः इह भूतले घटो नास्तीत्यत्र संयोगो निषिध्यत इत्युदयनोक्तेः भूतले घटोऽस्तीति बुद्धेस्तत्सम्बन्धविषयत्वेन नास्तीति बुद्धेरपि तदभावविषयत्वाच्च।

किं च न तावदयं घटप्रागभावो ध्वंसो वा प्रतियोगिसमानकालीनत्वात्। नाप्यत्यन्ताभावः, कदाचित्तत्र घटस्य सत्त्वात्। यदि चैतत्कालावच्छेदेनात्यन्ताभावस्तर्ह्यत्यन्ताभावातिरिक्तः प्रागभावादिर्न सिद्ध्येत्। संयोगस्य तु भूतत्वे ध्वंसः भावित्वे प्रागभावः कदाप्यभावे त्वत्यन्ताभाव इत्यसतः संसर्गस्य प्रतियोगित्वसिद्धिः। न च घटे सन्नेव संसर्ग इह निषेध्यः तस्यापि घटतुल्यत्वेन प्रागभावादिविकल्पप्रसरात्। यत्तूक्तं वर्धमाने घटात्यन्ताभाव एवायं घटकालेत्वसम्बन्धान्न भाति घटात्यन्ताभावस्य भूतलेन सह सम्बन्धश्च तत्संयोगध्वंसादिः। अथवा प्रतियोगिभेदेनैव प्रतियोगितावच्छेदकभेदेनाप्यभावभेदात् संयुक्तघटाभावोऽयं विशिष्टान्तराभाववदुत्पादविनाशशीलोऽन्य एवेति। तत्र नाद्यः, अभावाधिकरणयोः सम्बन्धान्तरमन्तरेण तदुपश्लिष्टस्वभावरूपक्लृप्तसम्बन्धत्यागेन संयोगध्वंसादेः सम्बन्धत्वकल्पने आवश्यकसंयोगध्वंसादेरेव तद्धीविषयत्वोपपत्तेः। अन्यथा घटस्य कपालेष्वत्यन्ताभाव एव घटकाले त्वाश्रयाश्रयिभावध्वंसादिरूपसम्बन्धाभावादप्रतीतिरिति घटात्यन्ताभावः केवलान्वयी स्यात्। न द्वितीयः, संयोगस्य निषेध्यकोटित्वादिष्टसिद्धेः दंडे सत्यपि पुरुषाभावेन दंड्यभाववद् भूतलघटसंयोगे सत्यपि घटाभावे संयुक्ताभावस्यादर्शनेन क्लृप्तैः संयोगध्वंसादिभिरेव सर्वोपपत्तौ उत्पादविनाशशीलसंयुक्ताभावान्तरकल्पनायोगाच्च। तस्मादसतोऽपि निषेध्यत्वं युक्तम्।

अनिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभङ्गः॥

## अद्वैतसिद्धिः

केचित्तु बाध्यत्वं सत्यसति चानुपपन्नमिति अनिर्वाच्यत्वमिति आहुः। न च अतीते तत्कालासति ध्वंसप्रतियोगित्ववत् सर्वदा असत्यप्यत्यन्ताभावप्रतियोगित्वं स्यात्, तथा च बाध्यत्वं नात्यन्तासत्त्वविरोधीति वाच्यम्; कालान्तरसत्तायाः कालान्तरसत्तां प्रत्यनुपयोगेऽपि विद्यमानतादशायामेव घटादौ ध्वंसप्रतियोगात्वम्; 'अनित्यो घटो स्ती'ति प्रतीतेः न तु ध्वंसादिकाले घटे ध्वंसप्रतियोगित्वम्; तदानीं घटादीनामेवाभावात्। न च तर्हि घटो न ध्वंसप्रतियोगीति प्रत्ययः स्यात्; न, रूपवानित्यस्यापि प्रसङ्गात्। अथ यावत्सत्त्वं रूपसत्त्वान्नैवम्, समं प्रकृतेऽपि। वस्तुतस्तु, ध्वंसकालेऽपि घटो ध्वस्तः इति ध्वंसप्रतियोगिता घटे प्रतीयत एव। तथा चानिर्वाच्यत्वेऽपि प्रतियोगित्वादिकमनुपपन्नमेवेति– चेत्, सत्यम्, सत्त्वमेव यत्किञ्चित्कालाबाध्यत्वरूपं तत्र प्रयोजकम्, न तु त्रिकालाबाध्यत्वरूपम्; गौरवात्। न च तर्हि कथं सति बाध्यत्वमनुपपन्नम्; न सन्मात्रे, किन्तु परमार्थसतीत्यवेहि। तथा चानिर्वाच्यतापक्षे नानुपपत्तिः। न च तर्हि कथमसद्वैलक्षण्यप्रतियोगित्वमसति कथं वा नासदासीदिति श्रौतनिषेधः। असत्त्वं तावन्निस्वःरूपत्वम्। तद्वैलक्षण्यं सत्स्वरूपत्वं तच्च निष्प्रतियोगिकमेव। श्रुत्यर्थोऽपि तदेव। तथा च नास्ति प्रतियोगित्वप्रतिपत्तिः। न च शशशृङ्गं नास्तीति प्रत्यक्षत एवासति निषेधप्रतियोगित्वमनुभूयत इति– वाच्यम्, योग्यानुपलब्धिस्तावदभावग्राहिका। योग्यता च शशशृङ्गादीनां दोषघटिता वाच्या। तस्यां नानुपलम्भः। अनुपलम्भे च न सेति योग्यानुपलब्धेरसंभवात्। तदुक्तं–

दुष्टोपलम्भसामग्री शशशृंगादियोग्यता ।
तस्यां नानुपलम्भोऽस्ति नास्ति सानुपलम्भन ॥ इति ।

न च– प्रतियोगिसत्त्वविरोध्यनुपलब्धिरेव तद्ग्राहिका, सा च प्रकृतेऽस्त्येवेति वाच्यम्, स्तम्भात्मनि योग्यत्वप्रतिसद्ध्या पिशाच उपलम्भापादनं संभवति। शशशृङ्गास्तित्वं न योग्यतया व्याप्तम्। यद्बलात्तेन उपलम्भ आपाद्येत। तथा च नात्रप्रतियोगिसत्त्वविरोधिनी अनुपलब्धिः। अत एव पिशाचादीनां भेदः प्रत्यक्षः नात्यन्ताभावः। न च शृङ्गादिकं योग्यतया व्याप्तमेवेति वाच्यम्, तावता हि शृङ्गाभाव एव योग्यानुपलब्धिसंभवः, न त्वलीकाभावे। एवञ्च शशशृङ्गं नास्तीत्युल्लिखन्त्या अपि बुद्धेः शशे शृङ्गाभाव एव विषयः। गवि शशशृंगं नास्तीस्यस्या अपि गवाधिकरणकशृङ्गेशशीयत्वाभावो विषयः,

(अद्वैतसिद्धिः)

अनन्यगतिकत्वात्। अत एव गोरनन्वयोऽपि नास्ति, शशशृङ्गादेरुपस्थित्यभावात् न तदभावग्रह इति तार्किकरीत्या उक्तत्वाच्च। अत एव सप्तम पदार्थत्वनिषेधस्यासंभवात् पदार्थाः षडेवेत्यत्र कुसृष्टिव्याख्यानम्।

न च 'घटो नास्तीति बुद्धेर्घटसंसर्गाभाव एव विषयः, न तु घटाभावः, पूर्वं तत्र घटस्य सत्त्वेन तदत्यन्ताभावस्याभावात्, प्राक्प्रध्वंसाभावयोः प्रतियोगिकाले असम्भावितत्वाद् भेदस्य घटापसरणानपसरणयास्तुल्यत्वात्, संसर्गोऽपि न तात्त्विकः, प्रतियोगिनि पूर्ववद् ध्वंसाद्यनुपपत्तेः, किंतु असन् संसर्ग इति वाच्यम्, उक्तमत्रोदयनाचार्यैः– यन्निबन्धना हि यत्प्रतीतिः तदभावनिबन्धनैव तदभावप्रतीतिः। इह च घटास्तित्वप्रतीतिः संयोगनिबन्धना, तदभावप्रतीतिः संयोगाभावनिबन्धनैव। स च संयोगस्तात्त्विक एव। न च ध्वंसादिविकल्पः, घटानयनात् प्राक् संयोगप्रागभावस्य घटे अपसारिते संयोगध्वंसस्य सत्त्वात्। न हि घटे अन्यत्र नीते तद्देशे घटसंयोगोऽस्ति, येन प्रागभावादिर्व्याहन्येत। तथा च संसर्गप्रतियोगिकाभावस्वीकारेऽपि नासत्प्रतियोगिकाभावसिद्धिः।

वस्तुतस्तु– घटप्रतियोगिकत्वेनैवाभावस्यानुभवान्नायं संयोगप्रतियोगिको भवितुमर्हति। एवं च सति (१) कालविशेषसंसर्ग्यत्यन्ताभावो वा (२) उत्पादविनाशशीलः तुरीयः संसर्गाभावो वा (३) भूतलादिसंयुक्तस्य घटस्य विशेषणाभावप्रयुक्तविशिष्टाभावो वा अङ्गीकरणीयः। न च– अत्राद्य ध्वंसादरुच्छदः कपालेऽपि घटान्यकालसंसर्गिणैवात्यन्ताभावेन तद्व्यवहारोपपत्तिरिति वाच्यम्, 'दण्डी गौरश्चलतीति विलक्षणव्यवहारत्रये द्रव्यगुणकर्माणि विलक्षणानि हेतुर्यथा, तत्रात्रापि नास्ति नष्टो भविष्यतीति विलक्षणव्यवहार-त्रयस्यैकेनात्यन्ताभावेनोपपादयितुमशक्यत्वाद्विलक्षणाभावत्रयसिद्धिः। समयविशेषसंसर्गश्च तत्समयावच्छिन्नं स्वरूपमेव संयोगध्वंसादिर्वा। न च संयोगादिध्वंसादिनैवावश्यकेन तर्हि प्रतीत्युपपत्तिरिति वाच्यम्, घटप्रतियोगिकत्वेनानुभवानुपपत्तेरुक्तत्वात्। न च कपालेऽपि घटध्वंसादिः संबन्धस्थानीयोऽस्तु, एक एवात्यन्ताभावो व्यवहारयत्विति वाच्यम्, विलक्षणव्यवहारत्रयानुपपत्त्या दत्तोत्तरत्वात्। अत एव द्वितीयतृतीयपक्षावपि क्षोदसहौ, घटप्रतियोगिकत्वानुभवस्यान्यथा उपपादयितुमशक्यत्वात्। एतेन दण्डसत्त्वेऽपि पुरुषासत्त्वा-द्दण्डचभावदर्शनादस्तु तत्र विशिष्टाभावः, न चात्र संयोगसत्त्वे संयोग्यभावो दृष्टः, तथा च न विशिष्टस्याभावः, किंतु विशेषणस्यैवेति निरस्तम्, संयोगिप्रतियोगिकत्वेनानुभवात्।

(अद्वैतसिद्धिः)

संविदेव हि भगवती वस्तूपगमे शरणमिति। तस्मान्निषेधप्रतियोगित्वान्यथानुपपत्त्यापि अनिर्वाच्यत्वसिद्धिः। इत्यद्वैतसिद्धौ निषेधप्रतियोगित्वानुपपत्त्याऽनिर्वचनीयत्वसमर्थनम्।

## न्यायामृततरङ्गिणी

॥प्रागभावादीति॥ यस्तु प्रागभावादिदशायां घटादेस्तत्प्रतियोगित्वमेव नास्तीत्याक्रोशति सतु शास्ता यदूनां भविता। कंसवधाख्यानमित्यादिवचः श्रावणीयः। योऽपि चानागत-वर्तमानातीतावस्थाः क्रमेणाविर्भावयंस्तिरोभावयंश्चानिर्वाच्यो घटः कालत्रयेप्यनुस्यूत इत्याह सतु करके भग्ने पातुं करकांतरं नाददीत ॥सत्त्वस्येति॥ ब्रह्मणि बाधप्रसंगस्त्वसद्विलक्षणत्वस्य बाध्यत्वे तंत्रत्वेपि समान इति भावः। नन्वनिर्वाच्येपि सत्त्वमस्ति। न। बाधानुपपत्तेः। पारमार्थिकसत्त्वाभावाद्बाधो भविष्यतीति चेत् तर्हि पारमार्थिकसत्त्वाभावरूपमसत्त्वमेव बाध्यत्वात्सिद्धं ॥अन्यथेति॥ कुत्रचित्सत एवान्यत्र सत्त्वमिति कल्पने ॥सत्त्वं चेति॥ युक्तमित्यनेन संबध्यते। भ्रमविषयोपि प्रामाणिक इत्यत आह ॥नहीति॥ ॥दुष्टेति॥ दोषयुक्ता। तस्यां दुष्टसामग्र्यां सत्यां शृंगानुपलंभो नास्ति शृंगस्यैवोपलंभात्। शृंगानुपलंभने सा शृंगोपलंभकसामग्री नास्ति। तथाच योग्यतायां नानुपलब्धिरनुपलब्धौ च न योग्यतेत्यर्थः ॥शृंगानुपलब्धिरिति॥ नचैवं शृंगाभावग्राहिण्येव योग्यता नतु शशशृंगाभावस्येति वाच्यम्। शृंगसामान्याभावग्रहसामग्र्या एव विशेषाभाव ग्रहसामग्रीत्वात् ॥अभावप्रत्यक्षत्व इति॥ अन्योन्याभावस्यात्यंताभावस्य च। ननु शृंगाभावग्रहसामग्र्यैव कथं शशशृंगाभावग्रह इत्यत आह ॥कथमन्यथेति॥ प्रतीतिबलादेव तथा कल्प्यत इत्यर्थः। प्रतीतेरन्यथासिद्धिमाशंक्य निराकरोति ॥नच शशइति॥ शशशृंगशब्दस्य शशे शृंगमित्यर्थत्वे शशशृंगोल्लिखिता भूरित्यादावपि विशकलितपदार्थसत्त्वादप्रसिद्धिर्नस्यात् ॥गवीति॥ शशान्वितशृंगस्य गवि निषेधप्रतीतेः। अन्यथा गोपदार्थानन्वयप्रसंगात्। एतेन गवाधिकरणकशृंगे शशीयत्वं नास्तीत्यर्थः। तेन न गोपदार्थानन्वय इति निरस्तं। गोरेवाधिकरणत्वप्रतीतेः ॥भूतल इति॥ भूतले घटसंसर्गविशेषो सन्नेव यो निषिध्यते तथा शशेपि शृंगसंसर्गो सन्नेवेत्यर्थः। ननूभयत्रापि घटमात्रं शृंगमात्रं च निषिध्यतामित्यत आह ॥अन्यथेति॥ ॥शब्दाभासेति॥ एतच्चोपलक्षणं। शृंगे शशीयत्वग्रहस्यैव शशीयत्वावच्छिन्न शृंगग्रहत्वात् ॥संसर्गाभावोविषय इति॥ ननु यन्निबंधना यत्प्रतीतिस्तदभावनिबंधनैव तदभावप्रतीतिः। इह च घटास्तित्वप्रतीतिः संयोगानिबंधनेति तदभावप्रतीतिः संयोगाभाव-निबंधनैव। स च संयोगस्तात्विक एवेत्यत आह ॥भूतले घटोस्तीति॥ न हि भूतले

(तरङ्गिणी)

घटोस्तीति बुद्धिः संयोगमात्रविषया। किं तु भूतलघटसंयोगाविषया अतोऽभावधीरपि तत्संयोगविषयैव। स च संयोगो सन्नेव। तदिदमुक्तं ॥तत्संबंधेति॥ ॥तदभावेति च॥ ॥प्रागभावादिर्न सिध्येदिति॥ नास्ति नष्टो न भविष्यतीति विलक्षणव्यवहारोपि तत्तत्काल-रूपविशेषवैलक्षण्यादिति भावः ॥संसर्गस्येति॥ अत एव भूतले घटो नास्तीति धीः। अन्यथा घटो नास्तीत्येव स्यात् ॥अन्य एवेति॥ अत्र एव शब्दात्परं वा शब्दानुषंगः। तेन पक्षत्रयं बोध्यं ॥न द्वितीय इति॥ द्वितीयतृतीय समुदाये द्वितीयशब्दः ॥इष्टेति॥ असत्त्वात्संयोगस्य ॥दंड इति॥ दंडी नास्तीति बुद्धिं प्रति विशेषणासंकीर्णविशेष्यस्याभावप्रतियोगित्वानुभववदिह संयोगासंकीर्णस्य घटस्याभावप्रतियोगित्वाननुभवात्संयोगमात्रस्यैवाभावप्रतियोगित्वं कल्प्यत इत्यर्थः। क्लृप्तैरित्यादिना तृतीयपक्षनिराकरणम्।

अनिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभङ्गः।

## न्यायामृतकण्टकोद्धारः

अत्यंतासत्त्वं किमात्यन्तिकनिषेधप्रतियोगित्वातिरिक्तं वा तदेव वा ? नाद्यस्तदसंभवस्योक्तत्वात्। न द्वितीय इत्याह किमिहेति। तथाच न साध्यसाधनभावः संभवति। साध्याविशेषादिति भावः। ननु तथापि धर्मिणोऽसत्त्वे कथं धर्माणां सत्त्वम् ? तत्सत्वस्य रूपादिवत् धर्मिसत्तासापेक्षत्वादित्यत आह ॥प्रागभावादिदशायामिति॥ न च घटादेरपि विद्यमानतादशायामेव प्रतियोगित्वम्। अनित्यो घटोऽस्तीति प्रतीतेः इति वाच्यम्। तथासत्यविद्यमानतादशायां घटो न ध्वंसप्रतियोगीति प्रतीतिः स्यात्। घटो ध्वस्तो नास्तीति च प्रतीतेः भ्रांतित्वापत्तेश्च। न चैवमेवेति वाच्यम्। बाधकाभावात्। न च ध्वंसकालेऽपि घटस्य कारणात्मना सत्त्वात् तत्र प्रतियोगित्वोपपत्तिरिति वाच्यम्। घटावस्थाया एव ध्वंसप्रतियोगित्वेन तस्यासत्त्वात्। अत एव घटो ध्वस्तः कपालं चास्तीति च प्रतीतिः। किञ्च विषयत्वादिधर्माणामिव प्रतियोगित्वादीनामपि अबाधितप्रतीत्याऽसति सत्वांगीकारे किं बाधकम् ? येनासतः प्रतियोगित्वं न स्यात्। अन्यथाऽसतः प्रतियोगित्वानंगीकारे बाधकमाह ॥असत्त्वाभावादपीति॥ तन्त्रतया तंत्रत्वापत्या त्वन्मत इति शेषः। तेन नापसिद्धान्तादीति भावः। न च किंचित्कालाबाध्यत्वरूपमेव सत्त्वं प्रयोजकं न तु त्रिकालाबाध्यत्वरूपं गौरवादिति वाच्यम्। एवं हि अनिर्वाच्याविरोधिनः सत्त्वस्य प्रयोजकत्वेऽसत्वाविरोधिनः प्रतीतत्वरूपस्य सत्त्वेन प्रतीतत्वरूपस्य वा मयापि प्रयोजकस्य वक्तुं शक्यत्वात्। न च सत्त्वमेव नेति वाच्यम्। त्वदुक्तेऽपि तथाभावस्य वक्तुं शक्यत्वात्। किञ्चित्कालाबाध्यत्वस्यासत्यपि वक्तुं शक्यत्वाच्च ॥त्वन्मतेऽपीति॥ न चासत्त्वं निःस्वरूपत्वं तद्वैलक्षण्यं च सस्वरूपत्वं तच्च निष्प्रतियोगिकमेवेति वाच्यम्। शुक्तिरजतादेः स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वपक्षे निःस्वरूपत्वेन सस्वरूपत्वानुपपत्तेः। असद्वैलक्षण्येन ज्ञाने प्रतियोगित्व-बुद्धेरनिवारणाच्च ॥असतोऽपीति॥ न च श्रुत्यर्थोऽपि स एवेति वाच्यम्। एवं हि नासदासीदित्यस्य सस्वरूपमासीदित्यर्थः स्यात्। तथा च सन्नासीदित्यनेन विरोध इति श्रुत्यर्थः परस्परव्याहतः स्यात्।

(कण्टकोद्धारः)

विपक्षबाधकेनाप्यसतः प्रतियोगित्वं समर्थयते ॥यदि चेति॥ वैषम्यं शंकते ॥आत्यंतिकेति॥ आत्यंतिकमसत्त्वमपीति॥ अत्यंताभावप्रतियोगित्वस्यैवासत्वादिति भावः ॥अन्यथेति॥ यदि क्वचिदसत्त्वं क्वचित्सत्वसापेक्षमिति आत्यंतिकासत्त्वमपि सत्वसापेक्षं स्याच्चेत्तर्हि अतिप्रसंग इत्यर्थः। ननु तथापि धर्मिणोऽसत्त्वे धर्मसत्त्वं कथमंगीकर्तव्यं कुत्राप्यदृष्टत्वादित्यत आह ॥प्रतियोगिनोऽसत्वेऽपीति॥ यथा चैतत्तथा प्रागेवोपपादितम् ॥न चेति॥ न चासतो विरहरूपत्वं युक्तम्। तथा सत्यसत्वहानेरिति वाच्यमिति शेषः ॥सादृश्येति॥ नचाभावप्रतियोगित्वस्येदं लक्षणमिति वाच्यम्। अन्योन्याभावप्रतियोगिन्यव्याप्तेः। न च संसर्गाभावप्रतियोगित्वस्य लक्षणं असदभावश्चात्यंताभाव एवेति संसर्गाभाव एवेति वाच्यम्। अभावस्य विरह इत्यत्र षष्ठ्यर्थस्य संबंधमात्रत्वेऽतिप्रसंगात् प्रतियोगित्वादिरूपत्वे चात्माश्रयात् स्वरूपविशेषत्वे च ध्वंसादिदशायां स्वरूपाभावेन प्रतियोगित्वाभावापत्तेः। किंत्वित्यादिना निरुच्यमानमेव प्रतियोगित्वं वाच्यमिति तच्चासतोऽप्यस्तीति कथं न प्रतियोगित्वमिति भावः। अत्र येनासतः प्रतियोगित्वं न स्यात्तादृशं प्रतियोगित्वलक्षणम्। न चेदं तथा। सादृश्यादिप्रतियोगिष्वव्याप्तेरिति योज्यम्। अन्यथाऽसंमतिप्रसंगादिति ॥अन्यथेति॥ यद्यभावविरहत्वमव प्रतियोगित्वं तदाऽतिप्रसंग इत्यर्थः ॥एतेनेति॥ असतः प्रतियोगित्वोपपादनेनेत्यर्थः। यद्वा वक्ष्यमाणेनेत्यर्थः। नन्वसतः प्रतियोगिनोऽप्रामाणिकत्वे तदभावस्याप्यप्रामाणिकत्वं स्यादिति चेत् किमसद्यदाऽप्रामाणिकं तदभावोऽप्रामाणिक इति विशेषव्याप्तिमवलंब्योच्यते उत निरूपकस्य यद्धवति तन्निरूप्यस्येति सामान्यव्याप्तिम् ? नाद्यः स्वपरासम्मतेः। न द्वितीय इत्याह ॥भ्रमविषयवच्चे॥ ननु तथाप्यसतः प्रामाणिकत्वं स्यात् प्रमाणज्ञानविषयत्वादित्यत आह ॥न हीति॥ ननु तथापि शशशृंगाद्यभावो ज्ञातुं न शक्यते सामग्र्यभावादिति शंकते ॥नन्विति॥ प्रतियोगितद्व्याप्येत्यादिका न योग्यानुपलब्धिः। संयोगाभावप्रत्यक्षेऽभावात्। प्रतियोगितद्व्याप्येतरसंयोगोपलंभक संबंधिद्वयप्रत्यक्षस्य संयोगाभावप्रत्यक्षस्थले अभावात् किंतु तर्कितप्रतियोगित्वसत्वविरोधिन्यनुपलब्धिर्योग्यानुपलब्धिः। सा च प्रकृतेऽस्तीत्याह ॥या हीति॥ न च शशशृंगास्तित्वं न योग्यतया व्याप्तम्। अतस्तदुपलंभापादनमशक्यमेवेति वाच्यम्। महत्व-समानाधिकरणोद्भूतरूपवदवयवास्तित्वस्य स्वयोग्यतया व्याप्ततया शशशृंगास्ति त्वस्यापि तथात्वे योग्यताया आवश्यकत्वेन तदुपलंभापादनसंभवात्। अत एवाह ॥महत्वे सतीत्यादि॥ ननु प्रतियोगिप्रत्यक्षाभावे कथं तदभावप्रत्यक्ष इत्यत आह ॥न हीति ॥॥स्तंभ इति॥ नन्वन्योन्याभावप्रत्यक्षे प्रतियोगिप्रत्यक्षस्यातंत्रत्वेऽपि संसर्गाभावप्रत्यक्षे तत्तंत्रत्वमेव। अन्यथा धर्माद्यभावस्य आत्मनि प्रत्यक्षत्वापातादिति चेन्न। उक्तानुपलब्धिमत्त्वेनैवाभावमात्रस्य प्रत्यक्षत्वेऽतिप्रसंगाभावे सति प्रतियोगिप्रत्यक्षत्वस्यापि प्रयोजकत्वकल्पने गौरवात्। धर्माद्यभावस्योक्तानुपलब्धिरहितत्वेनैव न प्रत्यक्षत्वम्। न हि योग्यवृत्तिजातेरिव योग्यवृत्तिगुणस्यापि प्रत्यक्षत्वम्। गुरुत्वादेरतथात्वात्। अत एव टीकाकारीयं योग्यानुपलब्ध्युपपादनमविकलम् अनुमानप्रकाशे। तथाच योग्यानुपलब्धिसत्वात् शशशृंगाभावप्रत्यक्षोपपत्तिः ॥कथमन्यथेति॥ यद्यसच्छशशृंगप्रतियोगिको गवाद्यधिकरणकोऽभावो नांगीक्रियत इत्यर्थः। यथाकथंचित् तत्रापि प्रसिद्धेः संपादयितुं शक्यत्वात्। नचाखण्डशशशृंगादिप्रायेणाप्रसिद्धिकथनमिति वाच्यम्। अखण्डस्याप्रतीतौ तादृशाभिप्रायासंभवात्। प्रतीतौ च प्रकृतेऽप्यनुभवसिद्धाखण्डाभावप्रतीतिसंभवे तद्विरुद्धकल्पनानौचित्यात् ॥गवीति॥ न च गवाधिकरणे

(कण्टकोद्धारः)

शृंगेशशीयत्वं नास्तीत्यर्थः इति वाच्यम्। शशपदस्य शृंगपदेन समस्तत्वेन नञाऽन्वयायोगात् प्रतीतपदान्वयपरित्यागे बाधकाभावेनाऽन्यथाऽन्वयपरिकल्पनायोगाच्च ॥ शशइति॥ न च दृष्टान्तोऽसंप्रतिपन्न एवेति वाच्यम्। घटसंसर्गस्यारोपेपि तस्यान्यत्र सत्वे प्रमाणाभावस्यान्यत्रोपपादितत्वात्। एवं योग्यानुपलब्धिरूपं कारणमुपपाद्य प्रतियोगितावच्छेदक प्रकारक प्रतियोगिज्ञानरूपकारणमप्युपपादयति ॥ एतेनेति ॥ ॥ अन्यथेति ॥ एवं सामग्र्युपपत्तावपि असत्प्रतियोगिकाभावोनांगीक्रियते प्रतीतेरन्यविषयत्वं कल्प्यते तदेत्यर्थः। न च पटत्वाभावप्रतीतितो भविष्यतीत्यादि विलक्षणप्रतीत्या प्रागभावादिः स्वसमानकालीनप्रतियोगिको नांगीक्रियते इति वाच्यं तर्हि प्रकृतेऽपि विलक्षणप्रतीत्यैवासदभावः स्वीकर्तव्य इति तुल्यम् ॥ एतेनैवेति ॥ असदभावप्रतीत्युपपादनेनेत्यर्थः। ॥ शुक्तिरूप्येति ॥ यथाच तयोरसत्त्वं तथाऽन्यत्र सत्त्वे प्रमाणाभावेनोपपादितम्।

प्रकारान्तरेणासत्प्रतियोगिकोऽभावः स्वीकर्तव्य इत्युपपादयति ॥ किञ्चेति॥ ननु घटसंयोगाभावविषयत्वे घटसंयोगो नास्तीति प्रतीतिः स्यात्। घटस्य प्रतियोगित्वानुभवो विरुद्ध्येत। बाधकाभावेऽप्यनुभवस्यान्य-विषयत्वेऽतिप्रसंगादित्यत आह ॥ किञ्चेति॥ तथा च बाधकस्य सत्त्वादन्यविषयत्वं स्वीकर्तव्यमिति भावः। न च संयोगाभावपक्षेऽपि घटास्तित्वप्रयुक्तनास्तित्वप्रतीतेः संयोगप्रागभावप्रध्वंसान्यतरविषयत्वमेवेति नासत्प्रतियोगिकत्वमिति वाच्यम्। यत्र घटसंयोगो नाभून्न भविष्यति तत्र नास्तीति बुद्धेः प्रागभावादिविषयत्वासंभवात्। न चैवं घटस्यैवासतोऽभावः किं न स्यात् तथासत्यनुभवोऽप्यनुकूलितः स्यात्। किं संयोगाभावग्रहणेनेति वाच्यम्। क्वचिद्विद्यमानस्यैव घटस्यान्यत्रात्यंताभावप्रतीत्या तस्यासत्त्वासंभवात् संयोगाभावपर्यन्तधावनस्योचितत्वात् ॥ यदि चेति॥ उपलक्षणमेतत्। भूतलसंयुक्तत्वादिविशेषणाभाव-प्रयुक्तविशिष्टाभावतुरीयात्यंताभावावपि ग्राह्यौ। अत्र चोदयनवचनविरोधे घटमात्रप्रतियोगिकत्वानुभवविरोधे च सति दूषणांतरमाह ॥ तर्हीति॥ न च विलक्षणव्यवहारादिना तत्सिद्धिरिति वाच्यम्। विलक्षणव्यवहारस्याप्यंगीकृतत्रितया भावेनैवोपपत्तावतिरिक्तकल्पनायां मानाभावात्। ननु घटसंयोगाभावपक्षे कथमसदभावसिद्धिरिति तत्राह ॥ संयोगस्यत्विति ॥ ॥ तस्यापीति॥ न च घटे सत एव संसर्गस्य यत्र देशांतरे घटसंयोगो न वृत्तस्तत्राभावः किं न स्यादिति वाच्यम्। अप्रसक्तस्य निषेधप्रतियोगित्वासंभवेनारोपितस्यैव प्रतियोग्यधिकरणसंसर्गस्य प्रतियोगित्वसंभवेन तदन्यस्य तत्कल्पने गौरवात्। अत्यंताभावपदप्रयोगसामर्थ्यादपि असत एव प्रतियोगित्वं ज्ञायत इति भावः। विद्यमानस्यैवाभाव इत्यत्र वर्धमानोक्तं दूषयितुमनुवदति ॥ यत्त्विति॥ प्रतियोगितावच्छेदकभेदेनापीति। अन्यथैकघटप्रतियोगिकानां प्रागभावादीनामभेदापातात्। न च प्रतियोगिभेदाभावेऽपि प्रतियोगिताभेदात्तद्भेद इति वाच्यम्। तद्भेदस्यैव ज्ञातुमशक्यतया तेन तदनिर्वाहात्। ततः प्रतियोगितावच्छेदकभेदेनाभावभेदोवाच्यः। एवं च प्रागभावादीनामपि भेदः संभवति। उत्तरकालावच्छिन्नघटत्वस्य प्रागभावप्रतियोगितावच्छेदकत्वात्। पूर्वकालावच्छिन्नघटत्वस्य ध्वंसप्रतियोगिता-वच्छेदकत्वात्। तादात्म्यावच्छिन्नघटत्वस्यान्योन्याभावप्रतियोगितावच्छेदकत्वात्। संसर्गावच्छिन्नघटत्वस्यात्यंता भाव प्रतियोगित्वात्। एवं च कृते रूपत्वतत्तद्रूपत्वादि प्रतियोगितावच्छेदकभेदात् सामान्या-भावविशेषाभावयोर्भेदसिद्ध्या वायौ पृथिव्यादि यः प्रत्येकरूपाभावे निश्चितेऽपि रूपत्वावच्छिन्नस्य तस्यानिश्चयात् वायौ रूपं नवेति संशयोऽप्युपपद्यत इति भावः। अन्य एवेत्यनंतरं वेत्यनुषंगात् पक्षत्रयं बोध्यम् ॥ अवश्यकेति ॥

(कण्टकोद्धारः)

उपलक्षणमेतत्। क्लृप्तत्वाच्चेत्यपि ग्राह्यम् ॥अन्यथेति॥ यदि संयोगप्रागभावादिविषयत्वं नांगीक्रियत इत्यर्थः ॥न द्वितीय इति॥ उपलक्षणं चैतत्। न तृतीय इत्यपि द्रष्टव्यम् ॥संयोगस्येति॥ घटमात्र-प्रतियोगिकत्वानुभवविरोधश्चेत्यपि इष्टव्यम् ॥दण्ड इति॥ तत्रैव विशिष्टाभावो यत्र विशेषणे सति विशेष्यविरहप्रयुक्तविशिष्टाभावप्रतीतिः। अन्यथा विशेष्याभावः क्वापि न सिद्ध्येदिति भावः। क्लृप्तैरित्यादिना तृतीयनिराकरणम्। तस्मादसतोऽपि प्रतियोगित्वसंभवात् न तदन्यथाऽनुपपत्त्याऽनिर्वचनीयत्वसिद्धिरिति उपसंहरति ॥तस्मादिति॥

इति अनिर्वाच्यसाधकनिषेधप्रतियोगित्वाऽन्यथानुपपत्तिभङ्गः

## ४०. श्रुत्यर्थापत्तिभङ्गः

**नापि 'नासदासीन्नो सदासीत्तम आसीदि'ति श्रुत्यर्थापत्तिरनिर्वाच्ये मानं तत्र हि सदसच्छब्दौ पंचभूतपरौ प्रसिद्धपरत्वे 'नासदासी' दित्यस्याप्रसक्तप्रतिषेधत्वापातात् तदानीमित्यस्य वैयर्थ्याच्च। नो सदासीदित्यनेनैव सिद्धत्वेन नासीद्रज इत्यादेर्वैयर्थ्याच्च 'न सत्तन्नासदुच्यत' इत्यादौ भूते प्रयोगाच्च 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सदिति वायुरन्तरिक्षं चासदि'ति श्रुतेश्च। अन्यथा 'आनीदवात'मिति वाक्य शेषोक्तं प्रलये सद् ब्रह्माप्यनिर्वाच्यं स्यात्। ख्यात्यन्तरभंगस्त्वन्यत्र द्रष्टव्यः। श्रुत्यर्थापत्तिभंगः।**

### अद्वैतसिद्धिः

'नासदासीन्नो सदासी' दित्यादिश्रुतयोऽप्यनिर्वाच्यत्वे प्रमाणम्। न च अत्र सदसच्छब्दौ पञ्चभूतपरौ, 'न सत्तन्नासदुच्यत' इत्यादौ भूते प्रयोगाद्, 'यदन्यद्वायोरन्तरिक्षाच्चैतत् सद्वायुरन्तरिक्षं चेत्यस'दिति श्रुतेश्चेति वाच्यम्, प्रसिद्धपरत्वे संभवति अप्रसिद्धपरताया अयुक्तत्वात्। न हि भूते सदसच्छब्दौ प्रसिद्धौ, किंतु पारमार्थिकापारमार्थिकयोरेव। न च 'नासदासी'दित्यत्राप्रसिद्धप्रतिषेधापत्तिः, नो सदासी' दित्यनेन सद्भिन्नत्वे उक्ते असत्त्वस्यापि प्रसक्तेः। न च तदानीमित्यस्य वैयर्थ्यम् 'नासीद्रजो नो व्योमे'ति रजोनिषेधादावेव तदन्वयात्। न हि रजःप्रभृतीनां सर्वदा अनस्तित्वम्। न च 'नो सदासी' दित्यनेनैव रजःप्रभृतिनिषेधे सिद्धे पृथङ्निषेधानुपपत्तिः, 'नो सदासी' दित्यत्र सच्छब्दस्य परमार्थसत्परत्वेन व्यावहारिकसतो रजःप्रभृतेर्निषेधस्य ततः प्राप्त्यभावात्। आनीदवातं स्वधया ैकमिति वाक्यशेषाद् ब्रह्मणोऽपि अनिर्वाच्यत्वप्रसङ्गः 'तम आसी' दिति वाक्याद्

(अद्वैतसिद्धिः)

अविद्याया इवेति चेत्, श्रुत्यन्तराविरोधाय सदेकं ब्रह्म सदासीन्न सदसद्विलक्षण-मित्यर्थपर्यवसानात्।

इति अद्वैतसिद्धौ नासदासीदित्यादिश्रुत्यर्थापत्तिः।

## न्यायामृततरङ्गिणी

**अनिर्वाच्यसाधकनिषेधप्रतियोगित्वान्यथानुपपत्ति भंगः। ॥पंचभूतेति॥ पृथिव्यप्तेजांसि सच्छब्दानि वाय्वाकाशावसच्छब्दौ ॥अप्रसक्तेति॥ न च नो सदासीदित्यनेन सद्भिन्नत्वे उक्तेऽसत्त्वस्य प्रसक्तिरिति वाच्यम्। श्रुत्या प्रसक्तस्य श्रुत्या निषेधायोगात्। अन्यथा षोडशिग्रहणे विकल्पो न स्यात्। अत एव न तौ पशौ करोतीत्यत्र नञः प्रतिषेधार्थत्वे स्थिते तस्य प्राप्तिपूर्वकत्वादाज्यभागायोश्च पशौ शास्त्रादन्येन प्राप्तेरभावाच्छास्त्रप्राप्तस्य च सर्वथा निषेधायोगात्पशावाज्यभागयोर्विकल्प इति दशमेऽभिहितम्। असतोऽप्रसक्तेर्न निषेध इति स्वोक्तिविरोधश्च ॥तदानीमित्यस्येति॥ असतः सदा सत्त्वात्। न च तदानीमित्यस्य रजः प्रभृतिभिरन्वय इति वाच्यम्। सच्छब्दस्य पंचभूतपरत्वे तदानीमित्यस्य सर्वान्वयेन वाक्यार्थसंभवे प्रक्रमभंगकल्पनायोगात्। अत एव तदानीं प्रलयकालेऽवस्थितं तदस्य मूलकारणं तन्नासदित्यादिना तदानींशब्दस्यासदाद्यन्वयो माधवीयभाष्येऽभिहितः। सच्छब्दस्य प्रसिद्धसत्यपरत्वे दोषमाह ॥नो सदिति॥ न च नासदासीदित्यस्य पारमार्थिकसत्यपरत्वेन व्यावहारिकसतो रजः प्रभृतेर्निषेधस्य ततः प्राप्त्यभाव इति वाच्यम्। तर्हि प्रातिभासिकनिषेधार्थमन्यद्वाच्यं स्यात् ॥ब्रह्मापीति॥ न च तदेकं ब्रह्म सदासीन्न तु सदसद्विलक्षणमासीदित्यर्थे न ब्रह्मणोऽनिर्वाच्यत्वप्रसंग इति वाच्यम्। तर्हि तदनंतरवाक्याभिहिते तमसि सदादिवैलक्षण्याभाव एव सन्निधानादन्यायेन। न तु सदादिवैलक्षण्यम्। ॥श्रुत्यर्थापत्तिभंगः॥**

## न्यायामृतकण्टकोद्धारः

॥प्रसिद्धपरत्व इति॥ न च नोसदासीदित्यनेन सद्भिन्नत्वे उक्तेऽसत्वस्यापि प्रसक्तिरिति वाच्यम्। नासदासीदित्यस्य प्राथमिकत्वेन तदर्थबोधसमये उत्तरवाक्यर्थस्य बुद्ध्यनारूढत्वेन तत्प्रयुक्तप्रसक्त्ययोगात्। तावताप्यसत्वनिषेधसंभवे धर्मिणोऽप्रसक्तत्वेन तन्निषेधायोगाच्च॥ तदानीमिति॥ न च तदानीमित्यस्य रज आदिनैवान्वय इति वाच्यम्। प्रथमप्रतीतान्वयपरित्यागे कारणाभावात्॥ नो सदासीदिति॥ न च सच्छब्दः

(कण्टकोद्धारः)
परमार्थं वाची। तेन न रजआदीनां निषेधप्रसक्तिरिति वाच्यम्। तथात्वे परमार्थस्योत्तरत्रानीदवातमित्यनेन सत्त्वाभ्युपगमेनात्र तन्निषेधे व्याघातात् रज आदीनां व्यावहारिकत्वासिद्धेश्च। भूतपरत्वस्यैव न्यायत्वाच्च। अत एव श्रुतिस्मृतिरूपशास्त्रप्रसिद्धिं दर्शयति॥न सदिति॥॥अन्यथेति॥ यदि परिशिष्टस्य तमः शब्दवाच्यस्यानिर्वचनीयत्वं तदेत्यर्थः। न च श्रुतिविरोधात्तदनिर्वाच्यत्वं वक्तुमशक्यमिति वाच्यम्। तर्हि आसीदिति तमसोऽपि सत्त्वप्रतिपादकश्रुतिविरोधात् तस्याप्यनिर्वाच्यत्वमिति तुल्यम्। प्रमाणांतरविरोधस्तूभयत्र तुल्य इति। इति श्रुत्यर्थापत्तिभंगः।

## ४१. स्वाभिमतान्यथाख्यातिसमर्थनम्

तस्मादनिर्वाच्यख्यात्यसम्भवाद् उद्बुद्धरूप्यसंस्कारसचिवं दुष्टेन्द्रियं स्वसन्निकृष्टं शुक्तीदमंशमत्यन्तासद्रूप्यात्मना गृह्णातीत्यन्यथाख्यातिरेव युक्ता। रूप्यस्यासत्त्वे चासदेव रूप्यमभादिति प्रत्यक्षम्, विमतमसत् सत्त्वानधिकरणत्वान्नृशृङ्गवत्, अप्रमा असद्विषयिका सत्त्वानधिकरणविषयकत्वात्, सन्मात्राविषयकत्वे सति सविषयकत्वाच्च असद्विषयकपरोक्षज्ञानवद् इत्याद्यनुमानं च मानम्। न चैवमसत्ख्यात्यापत्तिः, मन्मते रूप्यस्यासत्त्वेऽपीदमंशस्य सत्त्वेन बाह्यमत इवेदं रूप्यमितिज्ञाने भातस्य सर्वस्याप्यसत्त्वाभावात्। अन्यथा अद्वैतिमतेऽपि सदन्यप्रतीतेरसतश्च परोक्ष-प्रतीतेस्तार्किकमते शुक्तिः रूप्यं चेत्युभयतादात्म्यस्य वा संसर्गस्य वाऽसत एव प्रतीतेर्बाह्यमतापत्तिः।

ननूभयं तादात्म्यं चेत्यतोऽधिकस्य तस्याभावात्तयोश्च सत्त्वान्नासतः ख्यातिरिति चेन्न, रूप्यतादात्म्यस्य रूप्यत्वसंसर्गस्य चेदमंशनिष्ठत्वेनाग्रहणे इदं रूप्यं चेतिज्ञानाकारापातेनेदं रूप्यत्वेन ज्ञातमित्यनुव्यवसायायोगात्, पुरोवर्तिनिष्ठाभेदाग्रहे प्रवृत्त्यनुपपत्तेश्च सन्मात्रविषयकत्वे अप्रामाण्यायोगाच्च। न च तथात्वेऽपि तदभाववति तत्प्रकारकत्वरूपमप्रामाण्यमविरुद्धमिति वाच्यम्, तत्प्रकारकत्वस्यापि तद्वैशिष्ट्य-विषयकत्वरूपत्वेनासत इदंरूप्यत्ववैशिष्ट्यस्य प्रतीतेर्दुर्वारत्वात्। न च तद्विशेषणज्ञान-जन्यत्वं तत्प्रकारकत्वं तस्यापि तद्वैशिष्ट्यविषयकत्वव्याप्तत्वात्, तद्वैशिष्ट्यस्याभानेऽनु-व्यवसायविरोधस्योक्तत्वाच्च। ईश्वरज्ञानस्य निष्प्रकारकत्वेन निर्विकल्पकत्वापाताच्चेति।

स्वाभिमतान्यथाख्यातिसमर्थनम्।

## अद्वैतसिद्धिः

**असत्ख्यातिभङ्गः** तस्मादनिर्वाच्यख्यातिरेव प्रमाणसंभवात्, न त्वसदन्यथाख्यातिः, प्रमाणविरहात्। न चासद्भाने असदेव रजतमभादिति प्रत्यक्षं मानम्, अनन्तरोक्तबाधकेन सद्वैलक्षण्यविषयकत्वात्। न चेदं प्रत्यक्षमपि, त्वयापि हि असदात्मना सतः प्रत्यक्षत्वमङ्गीक्रियते। न चात्र पूर्वकालीनभानविषये रजते असत्त्वमिति ज्ञानम् असदात्मना सद्विषयीकरोति।

न च 'विमतमसत्, सत्त्वानधिकरणत्वात्, शशशृङ्गवत्। विमता अप्रमा असद्विषयिणी, सत्त्वानधिकरणविषयकत्वात्, सन्मात्रविषयकत्वे सति सविषयकत्वात्, नृशृङ्गमसदित्यादि-वाक्यजन्यपरोक्षवदिति'– अनुमानं तत्र मानम्। पूर्वोक्तयुक्त्या तत्र बाधात्। प्रथमानुमाने शब्दैकसमधिगम्यत्वस्य द्वितीयतृतीययोः परोक्षत्वस्योपाधित्वाच्च। किंचासत्ख्यात्यङ्गीकारेण बौद्धमतप्रवेशापत्तिः। न च सदुपरागो विशेषः, तथाप्यसत्ख्यात्यापत्तेः तदवस्थत्वात्। न च – तार्किकैरपि असतः संसर्गस्य भानाङ्गीकारेण तेषामप्येवमापाद्येतेति वाच्यम्, तथाङ्गीकारे तेषामपि तथैव। वस्तुतस्तु– तेषामपि सत्संसर्गभान एव निर्भरता। शुक्ती रूप्यं तत्तादात्म्यं चेत्यतोऽन्यस्य रजतभ्रमे अविषयत्वात्, तेषां च सत्यत्वात्। न च तर्हि भ्रमत्वानुपपत्तिः, व्यधिकरणप्रकारकत्वेन तत्त्वात्। न च रजतप्रतियोगिकसंसर्गस्य शुक्त्यनिष्ठत्वादसत्संसर्गभानं विना व्यधिकरणप्रकारकत्वमेव न स्यादिति वाच्यम्, तत्किमायुष्मन्नसत्संसर्गः शुक्तिनिष्ठः, येन तद्विषयत्वं व्यधिकरणप्रकारकत्वाय अङ्गीकुरुषे? तस्माद् भासमानवैशिष्ट्यप्रतियोगित्वं न प्रकारत्वम्, किंतु ज्ञानविषययोः, स्वरूपसंबन्धविशेषः। स च स्वरूपसंबन्धः सन् वा संसर्गो भासतामसन्वा, उभयथापि समान एव। न च शशशृङ्गमसदित्यादिवाक्यैरसत्यपि परोक्षप्रतीतेस्त्वयाङ्गीकारेण तवाप्यसत्ख्यात्यापत्तिः, तत्र हि न प्रतीतिः, किंतु विकल्पमात्रमित्युक्तत्वात्। तस्मान्नासत्ख्यातिः। इत्यसत्ख्यातिभङ्गः।

**अन्यथाख्यातिभङ्गः–** नाप्यन्यत्र स्थितस्य रूप्यस्य भानादन्यथाख्यातिः, अत्यन्तासतइवान्यत्र सतोऽप्यपरोक्षप्रतीतिप्रयोजकसन्निकर्षानुपपत्तेस्तुल्यत्वात्। न च संस्कारस्मृतिदोषाणां प्रत्यासत्तित्वम्, रजतप्रत्यक्षमात्रे रजतसंयोगत्वेन कारणत्वावधारणात्, सन्निकर्षान्तरसत्त्वेऽपि तदभावे रजतप्रत्यक्षोत्पत्तेर्वक्तुमशक्यत्वात्। न च लौकिकप्रमारूपप्रत्यक्षएवतस्य कारणत्वम्, अस्य विभागस्य स्वशिष्यानेव प्रत्युचितत्वात्, गौरवकरत्वात्, निर्विकल्पकसाधारण्याभावाच्च।

(अद्वैतसिद्धिः)

रजतेन्द्रियसन्निकर्षजस्य रजते रजतत्वप्रकारकज्ञानस्य भ्रमत्वानुपपत्तेः। 'इमे रङ्गरजते' इति भ्रमे विद्यमानोऽपि रजतसन्निकर्षो जनको न भवति, अनुमिताविव क्वचिद्विद्यमानोऽपि विषयः। अथानुमितेर्विषयजन्यत्वे प्रत्यक्षत्वापत्तिः, अतीते अनागते च विषये अनुमितिर्न स्यादिति बाधकम्, रजतप्रत्यक्षस्य रजतसन्निकर्षजन्यत्वे प्रमात्वापत्तिः, असन्निकर्षे च तत्प्रत्यक्षं न स्यादिति बाधकं प्रकृतेऽपि तुल्यम्। यदि तु दोषमहिम्ना रजतसन्निकर्षस्य रङ्गज्ञानांशे जनकत्वम्, रङ्गसन्निकर्षस्य च रजतज्ञानांशे, तदा रजतज्ञानांशे तत्सन्निकर्षाजन्यत्वात् प्रमात्वाभाववत् प्रत्यक्षत्वाभावोऽपि स्यात्। तस्मात् 'इमे' इत्येवेन्द्रियजन्यम्, 'रङ्गरजते' इति तु स्मृतिरूपमविद्यावृत्त्यात्मकमनिर्वचनीयत्वादित्यन्यत्र विस्तरः। इत्यन्यथाख्यातिभङ्गः।

## न्यायामृततरङ्गिणी

**असदेवरूप्यमभादितीति॥ न चासदात्मना सदभादिति बाधस्याकारः स्यादिति वाच्यम्। एकदेशबाधेनैव विशिष्टबाधसंभवात् ॥विमतमित्यादि॥ न चाद्यानुमाने शब्दैकसमधिगम्यत्वं द्वितीयतृतीययोश्च परोक्षत्वमुपाधिरिति वाच्यम्। प्रथमोपाधौ शाब्दज्ञानानुव्यवसायविषये नृशृंगादौ द्वितीये तथाविधानुव्यवसायादौ साध्याव्याप्तेः। उपाधिमति ब्रह्मणि तज्ज्ञाने वा साध्याभावादप्रयोजकत्वं च ॥इदमंशनिष्ठत्वेनाग्रह इति॥ रूप्यतादात्म्ये रूप्यत्वसंसर्गे चेदमंशनिष्ठत्वमसदेवेत्यर्थः ॥इष्टाभेदेति॥ पुरोवर्तिनीष्टाभेदस्यासत्त्वात्। भेदाग्रहस्य त्वप्रयोजकत्वात् ॥सन्मात्रेति॥ न च व्यधिकरणप्रकारकत्वेनाप्रामाण्यमिति वाच्यम्। व्यधिकरणप्रकारकत्वं हि तदुल्लेखित्वं वा तस्य ज्ञानेन स्वरूपसंबंधो वा। उभयमपि व्यधिकरणं प्रकारं व्यधिकरणत्वेनोल्लिखति ज्ञानेप्यस्ति। तस्मात्तथाविधप्रकारस्य पुरोवर्तिनिष्ठत्वेन ग्रहणमेव व्यधिकरणप्रकारकत्वम्। तच्चासदेवेत्यसद्विषयसत्तानिश्चयत्वेनैवाप्रामाण्यमिति वयमालोचयामः ॥तस्यापीति॥ तद्वैशिष्ट्यविषयकत्वावच्छेदेनैव विशेषणज्ञानस्य जनकत्वादित्यर्थः ॥उक्तत्वादिति॥ इदं च रूप्यं च जानामीति तदाकारापत्तेरुक्तत्वात् ॥निष्प्रकारकत्वेनेति॥ विशेषणज्ञानजन्यत्वाभावान्निष्प्रकारकत्वापातेनेत्यर्थः। स्वाभिमतान्यथाख्यातिसमर्थनम्॥**

## न्यायामृतकण्टकोद्धारः

नन्वेवमनिर्वचनीयख्यात्यनभ्युपगमेऽख्यातिपक्षस्वीकारेऽनुभवविरोधादि स्यादित्यत आह ॥ तस्मादिति ॥ अन्यथाख्यात्यंगीकारान्नानुभवादिविरोधः। ननु च वार्तिकाभिमतान्यथाख्यातिस्वीकारेऽपसिद्धान्त इत्यतोऽन्यथैवान्यथाख्यातिस्वरूपमभिहितम् ॥ शुक्तीदमंशमिति ॥ असदिति स्वरूपकथनम्। असत्त्वस्य बाधैकवेद्यत्वेनऽन्यथाख्यात्यवेद्यत्वात्। ननु रूप्यस्यासत्त्वे प्रमाणाभावात् कथं तदसत्त्वमित्यत आह ॥ रूप्यस्यासत्त्व इति ॥ ॥ असदेवेति ॥ नचानन्तरोक्तबाधकेनोक्तप्रत्यक्षं सद्वैलक्षण्यमात्रविषयकमिति वाच्यम्। बाधकस्य परिहृतत्वात्। भ्रांतेरपि असद्वैलक्षण्यविषयकत्वसंभवेन भ्रांतित्वानुपपत्तेश्च। न चेदं पूर्वविरुद्धम्। असद्रूप्यात्मना सतो भानमन्यथाख्यातिरित्युक्तम्। तथात्र सतः स्फुरणमस्तीति वाच्यम्। अत्रासदेव रूप्यमभादिति वा इदमसद्रूप्यात्मनाभातीति वा प्रत्यक्षस्यानेनोपलक्षणान्नोक्तदोषः ॥ विमतमिति ॥ न च हेतुसाध्ययोरविशेष इति वाच्यम्। अन्योन्याभावात्यंताभावविषयत्वेन भेदात्। असत्पदवाच्यत्वस्य सिषाधयिषितत्वे दोषाभावाच्चेति। न च प्रथमानुमाने शब्दैकगम्यत्वमुपाधिरिति वाच्यम्। असतोऽपि प्रत्यक्षत्वस्योपपादितत्वेन साध्याव्यापकत्वात्। असति शब्दवत् करणान्तरस्यापि संभवाच्च। न च द्वितीयतृतीयानुमानयोः परोक्षत्वमुपाधिरिति वाच्यम्। पूर्वोक्तयुक्त्यैव साध्याव्यापकत्वात्। अप्रयोजकत्वेनानुपाधित्वाच्च ॥ मन्मत इति ॥ सदुपरागेणासद्भानं सर्वैरप्यंगीकरणीयम्। अन्यथा भ्रमानुपपत्तेरन्यत्रोपपादितत्वादिति भावः ॥ अन्यथेति ॥ यदि यथाकथञ्चिदसद्भानमात्रेणासत्ख्यातिस्तदाऽतिप्रसंग इति भावः। न च सदन्यप्रतीतावप्य सतोऽप्रतीतेर्नासत्ख्यातिरिति वाच्यम्। सदन्यत्वातिरिक्तासत्त्वस्य निर्वक्तुमशक्यत्वादिति पूर्वमेवोक्तत्वात्। न च मया परोक्षस्थले विकल्पमात्रमंगीक्रियतेऽतो नासत्ख्यातिरिति वाच्यम्। विकल्पस्य ज्ञानातिरिक्तस्य वक्तुमशक्यत्वस्य प्रागेवोपपादितत्वात्। तार्किकमतेऽसत्ख्यातिं परिहर्तुं शंकते ॥ नन्विति ॥ अत्र वक्तव्यम्। रूप्यतादात्म्यं वा रजतत्वसंसर्गो वा शुक्तिनिष्ठत्वेन गृह्यते न वा ? आद्ये तस्यासत्त्वेन नासत्ख्यातिपरिहारः। न च तस्यात्र सत्त्वेऽपि देशांतरेऽसत्त्वान्नासत्ख्यातिरिति वाच्यम्। अत्र भातस्य देशांतरे सत्त्वे प्रमाणाभावादित्यन्यत्रोपपादितत्वात्। द्वितीय आहरूप्यतादात्म्यस्येति ॥ रूप्यत्वेनेति ॥ प्रकारत्वस्य तृतीयार्थत्वात् तस्य च संसर्गघटितत्वादिति भावः ॥ तस्यापीति ॥ तद्विशेषणत्वस्य भासमानतद्वैशिष्ट्यप्रतियोगित्वरूपत्वादिति भावः ॥ ईश्वरज्ञानस्येति ॥ न च तत्र भासमानवैशिष्ट्यप्रतियोगित्वमेव प्रकारत्वमिति न निर्विकल्पकत्वापत्तिरिति वाच्यम्। तथात्वे तस्यैव सार्वत्रिकत्वेन प्रकारत्वे संभवति अस्याव्यापकस्यानुपादेयत्वादिति भावः। तस्माद्दोषमहिम्ना शुक्तीदमंशं रूप्यात्मनाऽवगाहत इत्यन्यथाख्यातिरिति वाच्यम्। न च रजतप्रत्यक्षे रजतसंयोगत्वेन कारणत्वात् तदभावे कथं तत्प्रत्यक्षमिति वाच्यम्। लाघवात् संनिकर्षत्वेनैव कारणत्वात्। संयोगस्यत्वस्य जातित्वेप्यसामान्यरूपत्वात्। संनिकर्षस्य च यस्य कस्यचित् संभवात् दोषवशादसंनिकृष्टस्यापि प्रत्यक्षे भानेऽतिप्रसंगाभावाच्च। प्रमायां तथा कारणत्वाच्च। न च गौरवम्। भ्रमस्य प्रकारान्तरेणोपपादयितुमशक्यत्वे गौरवस्य प्रामाणिकत्वात्। न च संनिकर्षजन्यत्वे प्रमात्वापत्तिरिति वाच्यम्। संस्कारादिरूपसंनिकर्षजन्यत्वेऽपि व्यधिकरणप्रकारकत्वेन भ्रमत्वसंभवात्। अत एव इमे रंगरजते इति ज्ञानस्य

(कण्टकोद्धारः)
प्रमात्वापत्तिरिति परास्तम्। तस्यापि व्यधिकरणप्रकारकत्वेन भ्रमत्वात्। तस्य च बाधैकवेद्यत्वात्। न चैवं तार्किकाभिमतान्यथाख्यातिस्वीकारेऽपसिद्धान्त इति वाच्यम्। उभ्युच्चयवादत्वेनापसिद्धान्तत्वाभावात्। संनिकर्षाभावप्रयुक्ततदभावमात्रस्य खण्डितत्वात्। प्रतीतस्य रजतस्यान्यत्र सत्त्वानंगीकारेण तदभावाच्चेत्यलं पल्लवेन। इति स्वाभिमतान्यथाख्याति समर्थनम्।

## ४२. आविद्यकरजतोत्पत्तिभङ्गः

यच्चेदमुच्यते अध्यस्तमज्ञानोपादानकं तत्त्वज्ञाननाश्यं चेति। तन्न, तथात्वे रूप्यमुत्पन्नं नष्टं चेति धीप्रसंगेन त्रैकालिकनिषेधायोगात्। न चार्थक्रियाकारित्वादि-रूपलौकिकपारमार्थिकत्वाकारेण तथा निषेधः रूप्यं नासीदस्ति भविष्यतीति स्वरूपेणैव निषेधात्, पारमार्थिकत्वस्यापि रूप्यवत् प्रतीतत्वेन तत्काले सत्त्वाच्च। नाप्ययं निषेध आपणस्थरूप्यस्य, 'नेह नानास्ती'ति निषेधाय तात्त्विकप्रपंचान्तरापातात्, तस्याप्रसक्तेश्च। अन्यथाऽन्यथाख्यात्यापत्तेः। आभासस्य प्रसक्तिरेव पारमार्थिकस्य निषेधे तंत्रमिति चेन्न, यत्प्रतीतं तन्नास्तीत्यनुभवविरोधात्, प्रतिपन्नोपाधाव-निषिद्धस्यासस्य मिथ्यात्वासिद्धेश्च। निवृत्तिज्ञान इव त्रैकालिकनिषेधज्ञानेऽपि प्रसक्तस्याभासस्य निषेधसम्भवे निषेधं प्रत्यवच्छेदकमधीस्थं पारमार्थिकमनवच्छेद-कस्याभासस्य धीस्तु निषेधधीहेतुरिति वैयधिकरण्यकल्पनायोगाच्च, अनारोपपूर्वक-निषेधस्यानुपपत्तेश्च! न च तत्रापि बुद्धिपूर्वकारोपकल्पना, यस्यारोपस्तस्यैव निषेध इति मते निषेधस्य प्रसक्त्यर्थं बुद्धिपूर्वकारोपकल्पनेऽपि त्वन्मते तदयोगाद्, घटे स्मृते तदारोपं विनैवेह घटो नास्तीतिज्ञानस्यानुभवात्। न चाभासप्रसक्त्याऽनाभासस्यापि प्रसक्तिः, आभास इत्यप्रसक्तेः। न च रजतत्वाकारेणानाभासस्यापि प्रसक्तिः, आभासानाभासानुगतसामान्याभावात् फलबलेन व्याप्तिज्ञाने सामान्यस्य प्रत्या-सत्तित्वेऽपि अतिप्रसंगेनान्यत्र तदभावाच्च।

किं चाध्यस्तं न सोपादानकं सकर्तृत्वस्याप्यापाताद्, अविद्यालक्षण-भंगेऽध्यस्तस्याज्ञानोपादनकतया निरासाच्च। इदं रूप्यमिति रूप्यानुविद्धस्येदमंशस्यैव दोषादिवशात् सत्यविकाराविरोधेन रूप्यात्मना मिथ्याविकाररूपविवर्तसम्भवे तदननु-

**विद्धस्याज्ञानस्योपादानत्वायोगाच्च। परोक्षधीरप्यज्ञानविरोधिनीत्युक्तत्वेन श्वेतत्वेनानुमिते शंखे श्वैत्यज्ञानाभावेन पीतत्वभ्रमायोगाच्च, त्वन्मते बिबप्रतिबिंबयोरैक्यस्य प्रत्यक्ष तया ऐक्याज्ञानाभावेनोपाधिवशादपि तत्र भेदभ्रमायोगाच्च। घटत्वेन साक्षात्कृते घटे घटत्वाज्ञानाभावेन पटोऽयमितिवाक्याभासाद् भ्रमानुत्पत्तिप्रसंगाच्च। अयं घट इत्यत्राग्निना सिंचेदितिवदन्वयविरोधिनो धर्मस्यानुपादानेनान्वयधीर्युक्तैव, साक्षिवेद्येऽज्ञानसुखादावज्ञानाभावेन तत्र ज्ञानाभावत्वदुःखाभावत्वादिभ्रमायोगाच्च। परोक्षतत्त्वज्ञानस्याज्ञाननिवर्तकत्वे शंखे श्वैत्यानुमित्याऽप्यज्ञाननिवृत्तौ भ्रमानुत्पत्त्यापाताद्, अपरोक्षतत्त्वज्ञानस्य च परोक्षे अभावेन परोक्षाध्यासस्यानिवृत्त्यापाताच्च, रूप्यं दृष्ट्वाऽधिष्ठानतत्त्वज्ञानं विना निवृत्तस्य पुंसोऽज्ञाननिवृत्त्यभावेन मिथ्यात्वेनाधिष्ठानतत्त्वज्ञानैकनिवर्त्ययोः रूप्यज्ञानाकाराविद्यापरिणामयोर्निवृत्त्यभावेन रूप्यधीसामग्रीसद्भावेन रूप्यप्रतीतेर्दुर्वारत्वाच्च। न च सर्वज्ञानानां स्वगोचरशूरत्वाद्यथाभ्रान्ति तदर्थोंगीकार्य इति युक्तम्, अर्थतत्त्वव्यवस्थापकस्य बाधस्यैवानुसर्तव्यत्वेनानेवंविधस्य भ्रमस्यातथात्वाद्, अन्यथा तदर्थस्य तात्त्विकत्वापातात्। आविद्यकरजतोत्पत्तिभंगः।**

## अद्वैतसिद्धिः

तच्चानिर्वचनीयमज्ञानोपादानकम्, तत्त्वज्ञानेन नाश्यं च। ननु– एवं 'रूप्यमुत्पन्नं नष्टं चे'ति धीप्रसङ्गः, त्रैकालिकनिषेधप्रतीतिश्च न स्यादिति चेन्न, उत्पादविनाशप्रतीतिरियं भ्रान्तिसमये आपाद्यते? बाधसमये वा? नाद्यः, पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया ग्रहस्यैव तत्र प्रतिबन्धकत्वाद्, विरोधिज्ञानानुदयेन रूप्यस्याविनाशाच्च। न द्वितीय, अत्यन्ताभावग्रहस्यैव प्रतियोगिग्रह इव तदुत्पादविनाशग्रहेऽपि प्रतिबन्धकत्वात्। न हि कुत्रापि कदापि अत्यन्ताभावाधिकरणत्वेन प्रतीते उत्पादविनाशप्रतीतिरस्ति। न च त्रयाणां सत्त्वे कथमत्यन्ताभावबुद्ध्या विनाशबुद्धिप्रतिबन्धः? विनाशबुद्ध्यैवात्यन्ताभावबुद्धिः किमिति न प्रतिबध्यते? नियामकाभावादिति वाच्यम्, फलबलेनात्यन्ताभावधीसामग्र्या एव बलवत्त्वेन तस्यैव विनिगमकत्वात्। न च तर्हि उत्पादाद्यधिकरणे अत्यन्ताभावः कथम्? प्रतीतिमुपलभस्व, यथा अपरोक्षप्रतीत्याद्यन्यथानुपपत्त्या सिद्धोत्पादादिकस्य त्रैकालिकनिषेधप्रतियोगित्वं विषयीक्रियते।

(अद्वैतसिद्धिः)

यद्वा— न स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वम्, किंतु पारमार्थिकत्वाकारेण। न च पारमार्थिकसत्त्वस्यापि प्रतिभाससमये प्रतीतत्वेन न त्रैकालिकनिषेधप्रतियोगित्वं संभवति रजतप्रतियोगित्वेनानुभवविरोधश्चेति वाच्यम्, प्रतीतिकालप्रतीतं पारमार्थिकत्वमपि प्रातीतिकमेवेति न तत् निषिध्यते, किंत्वन्यत्र वृत्त्येवेति तेनाकारेण रजतस्यैव निषेध इति न तत्प्रतियोगित्वेऽनुभवविरोधोऽपि। ननु यद्यपि प्रसक्तिर्ज्ञानम्, सा च स्मृतिरूपा पारमार्थिकत्वस्यास्त्येव तथापि निषेध्यताप्रयोजकपारमार्थिकत्वाकारेण प्रातिभासिकस्य प्रसक्तिर्नास्तीति चेन्न। व्यधिकरणधर्मावच्छिन्नप्रतियोगिको ह्ययमभावः, तत्प्रतीतौ च न विशिष्टप्रसक्तिरुद्देश्या, प्रत्येकप्रसक्त्यैव तत्प्रतीत्युपपत्तेः। निर्विकल्पकादभावप्रतीतिरिष्टापत्त्यैव परिहरणीया।

यद्वा— लौकिकपरमार्थरजतस्यैव तत्र त्रैकालिकनिषेधः। न च तर्हि 'नेह नाने'ति निषेधायापि तात्त्विकप्रपञ्चान्तरोररीकारापत्तिः, नेह नानेति निषेधस्थले किंचनेति पदसन्दंशात् प्रतीयमानसर्वनिषेधस्यावश्यकतया निषेध्यत्वेन प्रपञ्चान्तरकल्पनाया गौरवकरत्वात्, प्रकृते तु सर्वत्वेन प्रतियोग्यनुल्लेखाद् आपणस्थरूप्यनिषेधस्य इदम्यावश्यकत्वेनाप्रतीतनिषेधकल्पनैव युक्ता। न चान्यथाख्यातिभिया तस्याप्रसक्तौ कथं तन्निषेधः? अपरोक्षत्वाभावेऽपि स्मृतिरूपतत्प्रसक्तेः संभवात्। एतेन अधीस्थं पारमार्थिकत्वमवच्छेदकम्, अनवच्छेदकस्याभासस्य धीस्तु निषेधधीहेतुरिति परास्तम्। न च आरोपपूर्विकैव निषेधधीः, तस्यानारोपात् कथं तदभावप्रत्यय इति वाच्यम्, आरोपस्य हेतुतायां मानाभावेन प्रतियोगिस्मरणाधिकरणानुभवादिनैव तदुपपत्तेः। अत एव न बुद्धिपूर्वकतदारोपोऽपि। अन्यथाख्यातेः सामग्र्यभावेनासत्ख्यातिवत् प्रागेव निरासादारोपस्य विशेषादर्शनजन्यत्वेन बुद्धिपूर्वकत्वानुपपत्तेश्च।

किंचाभासप्रसक्तिरेव तत्प्रसक्तिः। ननु आभास इत्यप्रसक्ते रजतत्वाकारेणाभासानाभासयोः प्रसक्तिः वाच्या, सा चानुपपन्ना, उभयोरेकसामान्याभावात्, फलबलेन व्याप्तिग्रहे सामान्यस्य प्रत्यासत्तित्वेऽपि अन्यत्रातिप्रसङ्गेन तदभावाच्चेति चेन्न, शुक्तिरूप्यस्यापणरूप्येण प्रातीतिकस्य सामान्यस्याभावे तदर्थिप्रवृत्त्यनुपपत्त्या तदुभयसामान्यस्यैकस्यावश्यकत्वात्। तेन सामान्येन प्रत्यासत्त्या आपणरूप्ये ज्ञानं न ब्रूमः, किंतु प्रतियोगितावच्छेदकप्रकारकं ज्ञानं प्रतियोग्यविषयकमपि अभावप्रतीत्युपयुक्तं संवृत्तमिति।

(अद्वैतसिद्धिः)

अतो न सामान्यप्रत्यासत्तिनिबन्धनातिप्रसङ्गावकाशः। यत्तु व्याप्तिग्रहे सामान्यप्रत्यासत्तिमङ्गीकृत्यातिप्रसङ्गेनान्यत्र तदनङ्गीकरणं, तदाशीविषमुखे अंगुलिं निवेश्य वृश्चिकाद्भयनाटनम्। प्रमेयत्वेन व्याप्तिं परिच्छिन्दन् सर्वज्ञः स्यादिति व्याप्तिग्रह एवातिप्रसङ्गस्य प्राचीनैरुक्तत्वात्। इदं च यथाश्रुतप्राचीनग्रन्थानुसारेणोक्तम्। अन्योन्याभावमादाय तु लौकिकपरमार्थरजतस्य निषेध्यत्वं प्राग्व्याख्यातं न विस्मर्तव्यम्।

न च सोपादानत्वे सकर्तृकत्वापत्तिः, इष्टापत्तेः। ननु एवमपि रूप्यस्य कथमज्ञानमुपादानम्? तदनुविद्धतया अप्रतीतेः, इदमंशानुविद्धतया प्रतीतेरङ्गुलिनिर्देशाचेलाञ्चलबन्धनादितश्चेदमंश एव सत्यविकाराविरोधेन मिथ्याविकारात्मना विवर्तत इत्यङ्गीक्रियतामिति– चेन्न, शुक्त्यज्ञानस्य तावदन्वयव्यतिरेकाभ्यां कारणत्वमावश्यकमिति उपादानमपि तदेवास्तु। तत्कल्पनाया एवाभ्यर्हितत्वाद्, उपादानान्तरासिद्धेः। किंच शुक्तिज्ञानमज्ञानं नाशयद्रूप्यमपि नाशयति। तच्च तदुपादानत्वं विना न घटते, निमित्तनाशस्य कार्यनाशं प्रत्यप्रयोजकत्वाद्, उपादेये उपादानानुवेधनियमाभावात्, 'रूपं घटः' 'कपालो घट' इत्यप्रतीतेः, कथंचिदनुवेधस्य जडत्वादिनात्रापि संभवात्। अनवच्छेदकतया इदमंशे इदमंशानुविद्धतया प्रतीतिरेव तदनुविद्धतया प्रतीतिः। कार्यकारणयोरभेदादंगुलिनिर्देशादिकमप्युपपद्यते। न च– परोक्षज्ञानस्याप्यज्ञाननाशकतया श्वैत्यानुमित्या अज्ञाने नाशिते पीतभ्रमानुदयः स्यात्, उपादानाभावादिति वाच्यम्, विषयगताज्ञानस्य परोक्षवृत्त्याऽनाशात्। न च अपरोक्षवृत्तेरज्ञाननाशकतायामपि 'घटोऽय'मिति साक्षात्कृते पटोऽयमिति वाक्याभासाद् भ्रमानुत्पत्तिप्रसङ्गः। न ह्यत्र वह्निना सिञ्चतीत्यत्रेवान्वयविरोध्युपस्थितिरस्ति, येनेष्टापत्तिरवकाशमासादयेदिति वाच्यम्, यदा हि घटत्वं पटत्वविरुद्धतयाऽवगतं, तदा हि तद्दर्शनं विरोधिदर्शनमेवेति कथं नेष्टापत्त्यवकाशः? यदा घटत्वस्य पटत्वविरुद्धतया न ज्ञानम्, तदा घटत्वज्ञानेन तदज्ञाननाशेऽपि पटत्वविरुद्धतया अज्ञातविशेषाज्ञानस्य सत्त्वात्तदुपादानक एव भ्रम इति न काप्यनुपपत्तिः।

न च साक्षिवेद्याज्ञानसुखादौ ज्ञानाभावत्वदुःखाभावत्वारोपौ न स्याताम्, अज्ञानरूपोपादानाभावादिति– वाच्यम्, दुःखाभावभिन्नत्वेन ज्ञानाभावभिन्नत्वेन दुःखत्वविरुद्धधर्मवत्तयाऽज्ञानत्वविरुद्धधर्मवत्तया वा अधिष्ठानज्ञानं भ्रमनिवर्त्तकम्। तच्च विरोधभेदादि न साक्षिगम्यम्, किंत्वनुपलब्धिगम्यम्। तथा च तदज्ञानमेव भ्रमोपादानम्।

(अद्वैतसिद्धिः)

न च परोक्षाध्यासो न परोक्षज्ञानेन निवर्तेत, तस्याज्ञानानिवर्तकत्वादिति वाच्यम्, परोक्षाध्यासे हि प्रमातृगताज्ञानमेवोपादानम्। तच्च परोक्षज्ञानेनापि निवर्तत इत्युक्तत्वात्। न च रूप्यं दृष्ट्वाऽधिष्ठानतत्त्वज्ञानं विना निवृत्तस्य पुंसोऽज्ञाननिवृत्त्यभावेन रूप्यतज्ज्ञानयोरविद्यापरिणामयोरनिवृत्त्या रूप्यधीसामग्री सद्भावेन तद्धीर्दुर्वारैवेति वाच्यम्, रूप्यं तद्धीश्च उत्पन्ने तावदुदीच्यज्ञानेन उपादाने विलीयते। उपादानस्य निवृत्तिः परं न भवति, अधिष्ठानतत्त्वज्ञानाभावात्। रूप्य बुद्ध्यन्तरोत्पत्तिस्तु इदमाकारान्तःकरणवृत्तिसद्भावेनानुत्पन्नाधिष्ठानतत्त्वसाक्षात्कारस्य भवत्येव। तदभावे तद्विलम्बादेव विलम्ब इति न काप्यनुपपत्तिः। तथा च सर्वप्रत्ययानां स्वगोचरशूरत्वात् प्रतीतिकाले रजतस्य विद्यमानता सिद्धा। न चैवं तात्त्विकत्वमपि सिध्येत्, तस्यापि प्रातीतिकत्वादिति वाच्यम्, अपरोक्षप्रतीत्या तावत् त्रिकालाबाध्यत्वरूपं तात्त्विकत्वं विषयीकर्तुं न शक्यत इत्युक्तत्वात्। परोक्षप्रतीत्या विषयीकृतमपि तात्त्विकत्वं प्रातीतिकमेव, कालान्तरबाधेन पुनरतात्त्विकत्वस्य संभवात्। इत्याविद्यकरजतोत्पत्त्युपपत्तिः।

## न्यायामृततरङ्गिणी

**॥ तथात्व इति॥ ननूत्पादादिप्रतीतिरियं भ्रांतिकाले आपाद्यते बाधसमये वा। नाद्यः। पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया ग्रहस्यैव प्रतिबंधकत्वात्। न द्वितीयः। अत्यंताभावग्रहस्यैव प्रतियोगिग्रह इवैतदुत्पादादिग्रहे प्रतिबंधकत्वात्। न हि तदत्यंताभावाधिकरणत्वेन प्रतीते उत्पादविनाशप्रतीतिरस्ति। मैवम्। इदानीमुत्पन्नरूप्याभेदेनेदं विशिष्टरूप्ये उत्पत्त्यादिप्रत्ययस्य चोदितत्वात्। समारोप्यधर्मस्यैव विषये प्रतीतेश्च। उत्पादादिप्रत्ययेनैवात्यंताभावप्रतीतिप्रतिबंधसंभवेन बाधासिद्धेश्च। न हि तदुत्पत्त्यधिकरणे तदत्यंताभावधीरस्ति। ॥ पारमार्थिकत्वस्यापीति॥ ननु न प्रतीतिकालप्रतीतं पारमार्थिकत्वं निषिध्यते किंत्वन्यत्र वृत्तेरेवेति तेनाकारेण रजतस्यैव निषेध इति चेन्न। येनाकारेणानिषेधस्तेन रूपेण प्रतियोगिप्रसक्तौ पारमार्थिकत्वस्य रूप्यतुल्यत्वात्। न च व्यधिकरणधर्मावच्छिन्नाभावप्रतीतौ न विशिष्टप्रसक्तिरुद्देश्या। प्रत्येकप्रसिध्यैव तत्प्रतीत्युपपत्तेरिति वाच्यम्। तथापि निषिध्यमानस्य निषिध्यतावच्छेदकवैशिष्ट्येन प्रतीतिं विना निषेधायोगेन निषिध्यमानस्यानिर्वचनीयस्य तदवच्छेदकपारमार्थिकत्ववैशिष्ट्यज्ञानमवर्जनीयमिति पारमार्थिकत्वमपि रजततुल्यमेव ॥ नेह**

(तरङ्गिणी)

नानेति ।। प्रातिभासिकनिषेधस्य व्यावहारिकविषयत्वे व्यावहारिकनिषेधस्य तात्त्विकविषयत्वं स्यात् । ।। तस्येति ।। आपणस्थरूप्यस्य । ननु भ्रमेणैव तत्प्रसक्तिरस्त्वित्यत आह ।। अन्यथेति ।। नन्वप्रसक्तस्यैवापणस्थरूप्यस्य निषेधोस्तु तथापि नातिप्रसंग इति शंकते ।। आभासस्येति ।। यत्प्रतीतमिति प्रतीतिनिषेधयोर्वैयधिकरण्यस्य त्वयांगीकृतत्वात्तव तत्सामानाधिकरण्यप्रतीतिविरोध इत्यर्थः ।। प्रतिपन्नेति ।। शुक्तौ प्रतीतरूप्यस्यानिषिद्धत्वात् ।। प्रसक्तस्येति ।। न च तस्य स्वरूपेण निषेधे तस्यासत्त्वापत्तिः । इष्टत्वात् ।। निषेधसंभव इति ।। निषेधज्ञानजनकप्रतियोगिप्रसक्तिविषयस्यैवाभावाप्रतियोगित्वात् । एतेन स्मृतिरूपा प्रसक्तिः संभवतीति निरस्तम् । नन्वधिकरणे निषेध्यारोपं विनैव प्रतियोगिस्मरणाधिकरणानुभवादिनैव निषेधज्ञानमस्त्वित्यत आह ।। अनारोपेति ।। अन्यथा तस्य बाधत्वानुपपत्तेः । तदुक्तं प्रसक्तप्रतिषेधात्मा बाधो ख्यातौ न युज्यत इति ।। तत्रापीति ।। ।। अनाभासेति ।। ।। निषेधस्य प्रसक्त्यर्थमिति ।। निषेधोपपादकप्रसक्त्यर्थं ।। त्वन्मत इति ।। अन्यथाख्यातिभयादिति भावः ।। तदारोपमिति ।। स्मर्यमाणघटारोपं विना । नन्वाभासस्य प्रसक्त्याऽनाभासस्य प्रसक्तिः । किमिदं रजतमित्याकारेण वा रजतमित्याकारेण वा । नाद्य इत्याह ।। आभास इतीति ।। इदं रजतमित्यप्रसक्तेः । द्वितीयमाशंक्य निराकरोति ।। न चेति ।। ननु शुक्तिरूप्यस्यापणस्थरूप्येण प्रातीतिकस्य सामान्यस्याभावे तदर्थिप्रवृत्त्यनुपपत्त्या तदुभयसामान्यमेकमावश्यकमिति प्रतियोगितावच्छेदकप्रकारकज्ञानं प्रतियोग्यविषयकमप्यभावप्रतीत्युपयुक्तं संवृत्तमिति मैवमित्याह ।। आभासेति ।। उभयानुगतसामान्यं किमाभास एव वाऽनाभास एव वोभयावच्छेदेनोभयरूपं वा । नाद्यौ । उभयोराभासत्वस्यानाभासत्वस्य वाऽऽपातात् । न तृतीयः । दृष्टविरोधादबिभ्यतैकमनुगतं रूप्यमेव तथेति स्वीकर्तव्यत्वात् । तेन सामान्येनापणस्थरूप्यस्यैव पुरोवर्तिनि प्रतीतिसंभवाच्च । प्रवृत्तिं प्रति तु न रूप्यत्वसामान्यं हेतुः । किं तु रूप्यज्ञानमेव । नन्वाभासानुगतसामान्याभावेप्यनाभासस्य रजतत्वसामान्य प्रत्यासत्त्या भानमस्तु । न चान्यथाख्यात्यापत्तिः तस्य स्वरूपेणैव भानात् । पुरोवर्तितादात्म्येन भानस्यान्यस्यानिर्वचनीयत्वादित्यत आह ।। फलबलेनेति ।। अतिप्रसंगः सार्वज्ञादिप्रसंगः ।। सकर्तृकत्वस्येति ।। न चेष्टापत्तिः । जीवस्येश्वरस्य वा तत्कर्तृत्वासंभवात् । ननु भट्टमते क्षित्यादेरकर्तृकत्वेपि सोपादानत्ववद्रूप्यस्यापि तथास्त्वित्यत आह ।। अविद्येति ।। सोपादानत्वेप्यज्ञानोपादानत्वं नाध्यस्तस्य संभवतीत्याह ।। इदमिति ।। ।। तदननुविद्धस्येति ।। एतेन शुक्त्यज्ञानमन्वयव्यतिरेकाभ्यां कारणमिति तदेवोपादानमिति निरस्तम् । अन्वयव्यतिरेकयोर्निमित्ततायामुपपत्तेः ।। परोक्षधीरिति ।। न च प्रमातृगताज्ञाननाशेपि विषयगतं तदस्तीति वाच्यं । पीतभ्रमकाले शंखे श्वैत्यासिध्या श्वेतार्थिप्रवृत्त्यनुपपत्तेः । भ्रमानुत्पत्तिप्रसंगे इष्टापत्तिं परिहरति

(तरङ्गिणी)

॥अयं घट इत्यत्रेति॥ ननु यदा घटत्वं पटत्वविरुद्धतया वगतं तदातद्दर्शनं विरोधिदर्शनमेवेति कथं नेष्टापत्त्यवकाशः। यदा घटत्वस्य पटत्वविरुद्धतया न ज्ञानं तदा घटत्वज्ञानेन तदज्ञाननाशेऽपि पटत्वविरुद्धत्वाज्ञानस्य सत्त्वात्तदुपादानक एव भ्रम इत्यत आह ॥युक्त्यैवेति॥ घटत्वस्य पटत्वविरुद्धतयावगमेऽपि पुरोवर्तीदंत्वपटत्वयोर्विरुद्धत्वानवगमादाप्तगौरवादयं पट इति वाक्याभासात्पुरोवर्तिनि पटत्वबुद्धेरनुभवसिद्धत्वात्सा युक्त्यैव ॥साक्षिवेद्य इति॥ न चाज्ञानस्य सुखादीनां च स्वरूपेण साक्षिवेद्यत्वेपि ज्ञानाभावभिन्नत्वे दुःखाभावभिन्नत्वादिना न तद्वेद्यत्वं। किंत्वनुपलब्धिवेद्यत्वं। तथा च तदज्ञानमेव भ्रमोपादानमिति वाच्यम्। अज्ञानत्वस्याभावविलक्षणत्वादिरूपतयाऽज्ञानत्वेनावगतेऽज्ञाने सुखत्वस्यानुकूलत्वादिरूपतया सुखत्वेनावगते च सुखादौ ज्ञानाभावदुःखाभावत्वाद्यारोपस्यानुभूयमानत्वात् ॥परोक्षेति॥ न च परोक्षाध्यासं प्रति प्रमातृगताज्ञानमेवोपादानं तच्च परोक्षज्ञानेनापि निवर्तत इति वाच्यं। श्वैत्यानुमित्या प्रमातृगताज्ञाननाशे सति शंखे पीताध्यासो न स्यात् ॥रूप्यं दृष्ट्वेति॥ ननु रूप्यतद्धियावुदीच्यज्ञानेन स्वोपादाने प्रविलीयेते॥ उपादाननिवृत्तिः परं न भवति। अधिष्ठानतत्वज्ञानाभावात्। रूप्यबुध्यंतरोत्पत्तिस्त्विदमाकारांतःकरणवृत्तिसद्भावेऽनुत्पन्नाधिष्ठाने तत्वसाक्षात्कारस्य भवत्येव। तदभावे तु तद्विलंबादेव विलंब इति। मैवं। प्रविलयः किं ध्वंसो वा पिशाचादिवत्तिरोधानं वा। आद्ये तस्य पुनरुत्पत्त्यसंभवात्तज्ज्ञानासंभवः। न द्वितीयः। पिशाचादिवद्रूप्येतिरोधानशक्तेरभावात् ॥खगोचरेति॥ स्वविषयव्यवस्थापकत्वादित्यर्थः ॥अर्थेति॥ भ्रमभिन्नज्ञानस्यैव स्वविषयशूरत्वमित्यर्थः ॥तात्विकत्वेति॥ न चापरोक्षप्रतीत्यां त्रिकालाबाध्यत्वरूपं तात्विकत्वं न विषय इति वाच्यं। स्वकाले सत्ताग्राहकस्य त्रिकालेऽसत्त्वाभावग्राहकत्वस्योक्तत्वात्।
॥आविद्यकरजतोत्पत्तिभंगः॥

## न्यायामृतकण्टकोद्धारः

किञ्च रूप्यस्यानिर्वचनीयत्वे उत्पत्यादिकं स्वीकर्तव्यम्। तच्चानुभवविरुद्धं त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वविरुद्धं चेति वक्तुं परमतमनुवदति ॥यच्चेदमिति॥ ॥तथात्व इति॥ ननूत्पादादिप्रत्ययः कदाऽपाद्यते। भ्रांतिकाले बाधकाले वा। नाद्यः पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया ग्रहस्यैव प्रतिबंधकत्वात् विरोधिज्ञानानुदयेन रूप्यस्याविनाशाच्च। न द्वितीयः। अत्यंताभावप्रतियोगित्व ग्रहस्यैव प्रतियोगित्वग्रह एव उत्पादादिग्रहेऽपि प्रतिबंधकत्वादिति चेन्नैवम्। प्रमाणेनानिर्वचनीयत्वे सिद्धे उत्पादादौ च सिद्धे प्रतिबंधकल्पना। न चैवम्। अनिर्वचनीयप्रमाणानां निरस्तत्वात्। उत्पादादौ प्रमाणाभावाच्च। नचापरोक्षाभासान्यथानुपपत्त्या तत्सिद्धिरिति वाच्यम्। असत्त्वेऽपि तदुपपत्तेः। अन्यथा शशशृंगस्यापि सत्त्वं

(कण्टकोद्धारः)

प्रतिबंधकसद्भावात् प्रतीत्यभाव इति स्यात्। किञ्च उत्पात्तादिग्रह एव भ्रांतिबाधादौ प्रतिबंधकः स्यात्। फलबलस्य चान्यथाप्युपपादितत्वात्। प्रतीतिमात्रशरीरत्वेन विरोधिज्ञानानुदयेऽपि विनाशस्य वक्तुं शक्यत्वेन प्रतीतेरावश्यकत्वाच्चेति ।।पारमार्थिकत्वस्यापीति।। न च यत्प्रतीतं प्रातिभासिकं पारमार्थिकत्वं तन्न निषिध्यते। किंत्वन्यगतमेव। व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमादिति वाच्यम्। तेन मिथ्यात्वासिद्धेः। अन्यगतपारमार्थिकत्वेनाभावेऽपि स्वगतपारमार्थिकत्वेन सत्त्वसंभवात्। किंच निषेध्यताप्रयोजकपारमार्थिकत्वेन प्रसक्तेरभावात् कथं तथा निषेधधीः। न च व्यधिकरणधर्मावच्छिन्नाभावे विशिष्टप्रसक्तिर्न तंत्रं किन्तु प्रतियोगिप्रसक्तिमात्रमिति वाच्यम्। निर्विकल्पकादपि अभावधीप्रसंगात्। न चेष्टापत्तिः। किंचिदस्तीति ज्ञानानंतरं घटो नास्तीति निषेधधीप्रसंगात्। तस्मात् पारमार्थिकत्वेन निषेधः। ननु नायं प्रतीतस्य निषेधः। येनोत्पादादिना विरोधः। किं त्वापणस्थस्येत्याशंक्य निषेधति ।।नापीति।। ।।नेहेति।। न च सर्ववाचककिञ्चनेतिपदात् प्रतीयमानस्यापि निषेधसंभवे तात्विकप्रपञ्चान्तरकल्पने गौरवम्। प्रकृते च न सर्वत्वेन प्रतियोग्युल्लेख इत्यतोऽप्रसक्तनिषेधकल्पना युक्तेति वाच्यम्। भ्रांतोऽसि प्रतीयमानस्य सत्त्वेन त्रैकालिकनिषेधासंभवे चोदिते किञ्चनपदान्निषेध इत्यस्यायुक्तत्वात् बाधकवशाद्विशेषपरत्वस्यैव युक्तत्वात्। प्रकृतेऽपि सामान्यनिषेधात् प्रतीतस्यापि निषेध इति वक्तुं शक्यत्वाच्च। न चानुपपत्त्याऽप्रसक्तस्यापि निषेध इति वाच्यम्। अन्यथाख्यातेरुपपादितत्वेन तदभावात् ।।अन्यथेति।। आपणस्थस्य प्रसक्त्यंगीकार इत्यर्थः। न चापरोक्षप्रसक्त्यभावात् नान्यथाख्यातिः। स्मृतिरूपप्रसक्तेर्विद्यमानत्वान्निषेधोपपत्तिश्चेति वाच्यम्। अपरोक्षप्रसक्तिसंभवे तत्त्यागायोगात्। न चान्यथाख्यातिसामग्र्यभावान्नापरोक्षप्रसक्तिरिति वाच्यम्। तस्या उपपादितत्वात्। प्रतीतस्यैव त्रैकालिकनिषेधानुभवाच्च। अत एवाह ।।यत्प्रतीतमिति।। आपणस्थरूप्यनिषेधांगीकारे प्रतीतरूप्यमिथ्यात्वासिद्धिरूपदूषणांतरमाह ।।प्रतिपन्नोपाधाविति।। ।।उपलक्षणमेतत्।। तद्वत् प्रपञ्चमिथ्यात्वासिद्धिश्चेत्यपि द्रष्टव्यम् ।।निवृत्तिज्ञान इवेति।। न च स्मृतिरूपधीस्थत्वात् कथमधीस्थतेति वाच्यम्। बाधसमये भ्रांतिव्यतिरिक्तस्मृत्यसिद्धेः। न च स्मृतिः कल्प्यत इति वाच्यम्। भ्रांत्यैव निषेधसंभवे स्मृतिकल्पने गौरवात्। ।।अनारोपितेति।। तथाच तत्राभासप्रसक्तेरप्यभावात् निषेधो न स्यादिति भावः ।।घट इति।। नचैवमापणस्थरूप्यस्याप्रसक्तस्यैव निषेधोपपत्तिरिति वाच्यम्। यत्प्रतीतं तन्नेत्यनुभवविरोधस्योक्तत्वात् ।।न चेति।। न चेदं पुनरुक्तमिति वाच्यम्। प्रकारांतरेणाभासप्रसक्त्याऽनाभासप्रसक्तिरित्यस्य दूष्यमाणत्वात्। अत्रानाभासप्रसक्तिः किमाभासत्वेनाथवाऽभासानाभास साधारणेन रजतत्वसामान्यलक्षणप्रत्यासत्या ? नाद्य इत्याह ।। आभास इतीति ।। उपलक्षणमेतत्। आभासत्वस्यानाभासनिष्ठत्वाभावेन तेन रूपेण तज्ज्ञानासंभवाच्चेत्यपि द्रष्टव्यम्। द्वितीयमाशंक्य निषेधति ।।नचेति।। न चाभासानाभाससाधारणसामान्याभावे रजतार्थिनस्तत्र प्रवृत्तिर्नस्यादिति वाच्यम्। रजतार्थिप्रवृत्तौ हि रजतत्वप्रकारकज्ञानं कारणम्। तावन्मात्रेण प्रवृत्युपपत्तेः। न त्वाभासानाभाससाधारणं सामान्यं कारणम्। तद्विलंबेन कार्यविलंबाभावात् ।। फलबलेनेति ।। पर्वतीयधूमेन वह्न्यनुमितिरूपफलबलेनेत्यर्थः। नचैवं प्रमेयत्वेन व्याप्तिं परिच्छिन्दन् सर्वज्ञः स्यादिति वाच्यम्। तेन रूपेण सार्वज्ञस्येष्टत्वात्। तत्तदसाधारणधर्मप्रकारकतत्तद्धर्मिविशेष्यकसर्वज्ञानस्यैवानिष्टत्वात् ।। अतिप्रसंगेनेति ।। ननु न वयं सामान्यप्रत्यासत्याऽपणस्थरूप्यज्ञानं वदामो येनातिप्रसंगः स्यात् किं नाम।

(कण्टकोद्धारः)

प्रतियोगितावच्छेदकप्रकारकं प्रतियोग्यविषयकमेवेति चेन्न। प्रसक्त्यभावान्न निषेध इति वदन्तं प्रति प्रतियोगितावच्छेदकप्रकारकप्रतियोग्यविषयकज्ञानोपपादनस्य व्यधिकरणत्वात्। त्वया प्रतियोगिभूतापणस्थरूप्यस्मरणस्योपपादितत्वेन व्याहतत्वाच्च। न च प्रतियोगितावच्छेदकप्रकारकज्ञानादिकमेव तत्प्रसक्तिरिति वाच्यम्। समानविषयप्रसक्तिसंभवे भिन्नविषयकप्रसक्तेर्हेतुत्वे गौरवात्। नचान्योन्याभाव लौकिकपारमार्थिकरजतस्य निषेध्यत्वं प्रागुक्तं स्मर्तव्यम् तत्र दोषाभावादिति वाच्यम्। तत्रापि तादात्म्यप्रसक्तेरावश्यकत्वात्। अत्र रजतं नेत्युल्लेखानुपपत्तेश्च। सविस्तरमस्य पक्षस्य प्रागेव दूषितत्वाच्चेत्यलम्।

॥ सकर्तृकत्वस्येति॥ यत् सोपादानकं तत् सकर्तृकमिति व्याप्तेरिति भावः। न चेष्टापत्तिः। यावद्विशेषबाधेन सकर्तृकत्वस्य बाधात्। न चेश्वरः कर्ता। तस्य तत्र रजतज्ञानाभावात्। तज्ज्ञाने च भ्रांतत्वापत्तेः। तदंगीकारे च सार्वज्ञश्रुतिविरोधः। तज्ज्ञानाभावे च न तत्कर्तृत्वम्। नापि जीवः कर्ता तस्योपादानादिविषयकज्ञानादेरभावात्। तथा च नेष्टापत्तिरिति भावः। ॥ इदं रूप्यमिति॥ उपलक्षणमेतत्। अंगुलिनिर्देशाच्चेलेन्धनादितश्चेत्यपि द्रष्टव्यम्। नचोपादानांतरासिद्धेरज्ञानस्यैव तत्कल्पना युक्ता। तस्यान्वयव्यतिरेकसिद्धकारणत्वात्। रूप्यनाशजनकनाशप्रतियोगित्वाच्च। नहि निमित्तनाशात् कार्यनाशोऽस्तीति वाच्यम्। इदमंशस्यैवोपादानत्वसंभवादुक्तयुक्तेः तस्यापि कारणत्वात्। निमित्तनाशादपि कार्यनाशो दृष्ट एव। अपेक्षाबुद्धिनाशादपि कार्यनाशो दृष्ट एव। अपेक्षबुद्धिनाशात् द्वित्वनाशात्। न च निमित्तनाशात् द्रव्यनाशो न दृष्ट इति वाच्यम्। तंतुसंयोगनाशात् पटनाशदृष्टेः। न च सोऽसमवायिकारणमिति वाच्यम्। आवयोर्मते समवयाभावेन निमित्तत्वस्यैवावश्यकत्वाच्च। न चोपादानस्य नोपादेयानुविद्धत्वनियमो रूपं घट इति प्रतीतेरभावादिति वाच्यम्। घटरूपयोरुपादानोपादेयभावासिद्धेः। ययोरुपादानोपादेयभावस्तयोरस्त्येवासाधारणधर्मपुरस्कारेणानुविद्धत्वादि। यथा मृद्धट इत्यादि। न च रूप्याज्ञानयोः कदाप्यनुविद्धत्वमस्ति। रूप्यमज्ञानं, अज्ञानं रूप्यमिति वाऽप्रतीतेरिति ॥ परोक्षधीरपीति॥ न च परोक्षधिया विषयगताज्ञानानाशात् पीतत्वभ्रमस्य तदुपादानकत्वसंभव इति वाच्यम्। विषयगताज्ञानसद्भावे प्रमाणाभावादित्युक्तत्वात् प्रमातृगताज्ञानेनैव सर्वस्योपपत्तेः। यथा चैतत्तथा सर्वमुपपादितम् ॥ त्वन्मत इति॥ न चोपाधिनिवृत्तिसहितमेव ज्ञानमज्ञानविरोधीति वाच्यम्। ज्ञानस्याज्ञाननाशकत्वेऽन्यानपेक्षणात् ॥ घटत्वेनेति॥ न चेष्टापत्तिः। अस्य वाक्यात् अयं पटत्वेन ज्ञायत इत्यनुभवविरोधात्। नन्वन्वयबोधविरोध्युपस्थितेः विद्यमानत्वात् कथमन्वयबोधोऽन्यथा वह्निना सिञ्चेदित्यत्रापि अन्वयबोधापत्तिरित्यत आह ॥ अयमिति॥ नन्वत्रापि पटत्वविरुद्धघटत्वोपस्थितेर्विद्यमानत्वात् कथमन्वयबोधः ? न च घटत्वं पटत्वविरुद्धत्वेन नावगतमिति वाच्यम्। तर्हि विरोधाज्ञानस्यैव भ्रमोपादनत्वसंभवादिति चेन्न। वाक्ये विरुद्धोपस्थितेरभावेन व्याघाताभावेनान्वयबोधोपपत्तेः। न च प्रत्यक्षविरुद्धधर्मोपस्थितिरेवान्वयबोधप्रतिबंधिकेति वाच्यम्। वादिवाक्यादन्वयबोधाभावे कथाबधिरकलहः स्यादिति तादृशोपस्थितेरप्रतिबंधकत्वात्। विरोधाज्ञानेनाविरुद्धत्वभ्रमेऽपि पटत्वभ्रमासंभवाच्चेति दिक् ।

॥ साक्षिवेद्य इति॥ ननु यज्ज्ञानं भ्रमनिवर्तकं तदज्ञानं भ्रमोपादानम्। प्रकृते च दुःखाभावभिन्नत्वेन वाऽज्ञानाभावभिन्नत्वेन वा दुःखत्वविरुद्धधर्मवत्तया वाऽधिष्ठानज्ञानं भ्रमनिवर्तकम्। तच्च न साक्षिवेद्यमिति

(कण्टकोद्धारः)

तदज्ञानमेवापादानम्। तस्यानुपलब्धिगम्यत्वेन साक्षिवेद्यत्वाभावादिति चेन्न। अधिष्ठानासाधारणधर्मज्ञानं भ्रमनिवर्तकम्। न च दुःखाभावभिन्नत्वादिकमसाधारणम्। तस्य घटादिसाधारणत्वात्। किञ्च दुःखाभावभिन्नत्वादिनाऽज्ञाने अज्ञानत्वादिना ज्ञाने भ्रमानिवृत्तिप्रसंगः। अपि च येनेन्द्रियेण प्रतियोगी गृह्यते तदिंद्रिययोग्यतयाऽभावस्य नानुपलब्धत्वम्। एवञ्च साक्षिवेद्यतया तदज्ञानसंभवः। शुक्त्यादावपि रजताभावभिन्नत्वादिज्ञानस्यैव भ्रमनिवर्तकत्वापत्तेश्च। न चेष्टापत्तिः। शुक्तित्वेन ज्ञाने भ्रमतादवस्थ्यापत्तेरिति दिक् ॥ परोक्षेति॥ न च परोक्षाध्यासे प्रमातृगताज्ञानमेवोपादानम्। तच्च परोक्षतत्त्वज्ञाने निवर्तत एवेत्युक्तमेवेति वाच्यम्। प्रमातृगताज्ञानातिरिक्ताज्ञानसद्भावे प्रमाणभावादित्युक्तत्वात् ॥ रूप्यमिति॥ नन्वत्र ये रूप्यतज्ज्ञाने उत्पन्ने तयोरनुवृत्तिरापाद्यतेऽथवा तज्जातीययोरुत्पत्तिः ? नाद्यः। उदीच्यज्ञानेन तयोर्निवृत्तत्वात् नद्वितीयः। इष्टापत्तेरिति चेन्न। मन्मते ज्ञानद्वयस्य युगपदुत्पत्यवस्थानयोः संभवेन उदीच्यज्ञानेन तयोर्नाशासंभवात् अत एवोक्तमानंदबोधेन सुखदुःखयोरेकदैवोत्पत्तेरिति। उदीच्यज्ञानेन कथञ्चिद्भ्रमनाशसंभवेऽपि रूप्यनाशासंभवाच्च। न च रूप्यमनुवर्तत एवेति वाच्यम्। प्रातीतिकत्वविरोधात्। नचाज्ञानोपादानकमुदीच्यज्ञानेन नश्यतीति वाच्यम्। अंतःकरणादेरपि नाशापत्तेरिति। अत एवाह अधिष्ठानतत्त्वज्ञानैकनिवर्त्ययोरिति ॥ अन्यथेति॥ सर्वज्ञानानां स्वविषयत्व इत्यर्थः। तदर्थस्य भ्रांतिविषयीकृतस्य। न च त्रिकालाबध्यत्वरूपं तात्विकत्वं न भ्रांतिविषयीकृतस्य। न च त्रिकालाबाध्यत्वरूपं तात्विकत्वं न भ्रांतिविषयः। प्रत्यक्षस्य वर्तमानमात्रग्राहित्वात् भ्रांतिग्राह्यत्वे वा तस्योदीच्यज्ञानबाध्यत्वेनातात्विकत्वादिति वाच्यम्। एतावता ज्ञानमात्रं न स्वविषयव्यवस्थापकं किंत्वबोध एवेति। एवं च प्रतीतिकाले बाधितस्यापि यदि सत्ता तदा सर्वदा सत्ता स्यात् व्याघातस्याविशेषादिति भावः। इति आविद्यकरजतोत्पत्तिभंगः ।

## ४३. भ्रमस्य अद्वैत्यभिमतज्ञानद्वयात्मकत्वभङ्गः

यच्चेदमुच्यते अधिष्ठानांशे इन्द्रियजन्यान्तःकरणवृत्तिरध्यस्तांशे तदजन्याविद्यावृत्तिरितिज्ञानद्वयम्। न चैवमख्यात्यापत्तिः, तादात्म्यस्यापि भानादिति। तन्न, त्वन्मते इदमंशस्याप्यध्यस्त्वेनेदमितिज्ञानं द्व्यात्मकमिदं रूप्यमितिज्ञानं त्र्यात्मकं स्वाप्नशुक्त्यादाविदं रूप्यमितिज्ञानं चतुरात्मकमिति प्रसंगात्, शंखे पीतत्वे पश्यामीति पीतत्वांशे चाक्षुषत्वादिजातिविशेषस्यानुव्यवसायाच्च, रूप्यज्ञानस्याविद्यावृत्तित्वेन प्रातिभासिकत्वे प्रतिभासावश्यम्भावादध्यस्तविषयज्ञानस्य चाध्यस्तत्वनियमादविद्यावृत्तेरप्यविद्यावृत्त्यन्तरप्रतिबिंबितचैतन्यवेद्यत्वमेवं तस्य तस्यापीत्यनवस्थानाच्च, अज्ञानस्य रूप्याकारज्ञानात्मना परिणामे रूप्यमितिप्रतीतेर्ज्ञानगताकारेणैवोपपत्तेः, भ्रमस्य चातीतादिज्ञानवदर्थाभावेऽपि सम्भवाद्रूप्याकाराविद्यावृत्तिवैयर्थ्याच्च, दोषाणां स्वाश्रय-

जन्य एवातिशयहेतुत्वेनेन्द्रियदोषप्रयुक्तभ्रमत्वाश्रये करणान्तराजन्ये च रूप्यज्ञाने इन्द्रियकरणत्वस्य दुर्वारत्वाच्च। अन्यथा त्वचा शंखं चक्षुषा च शुक्तिसादृश्यं ज्ञात्वा निमीलितनेत्रस्य नेत्रगतदोषात् पीतत्वरूप्यादिभ्रमः स्यात्। रूप्येदमंशयोस्तादात्म्य-भानेनाख्यातिवैषम्येऽपि ज्ञानैक्यानुभवविरोधस्याख्यातिपक्षदोषस्य साम्याच्च।

एतेन विषययोरध्यस्तेनाभेदेनैकत्वापन्नत्वात्, ज्ञानयोरप्यैक्यमुपचरितमिति निरस्तम्, ज्ञानैक्यानुभवविरोधाद्, एकविषयकधारावाहिकज्ञानानामप्यैक्यानुभवा-पाताच्च, कल्पितस्यार्थैक्यस्य ज्ञानैक्योपचाराहेतुत्वाच्च। एतेन यथेदमंशावच्छिन्न-चैतन्याविद्याविवर्तत्वाद्रूप्यमिदंत्वेन भाति, तथेदंवृत्त्यवच्छिन्नचैतन्याविद्याविवर्तत्वाद्रूप्य-ज्ञानमिदंज्ञानत्वेन भातीति निरस्तम्। बाधकालेऽर्थयोरिव ज्ञानयोरपि भेदधीप्रसंगाद् इदंवृत्तेर्ज्ञातैकसत्त्वेन तदवच्छिन्नचैतन्येऽज्ञानाभावाच्च, शुक्तितत्त्वं जानतः इदं वृत्तितत्वं चाजानतः पुंसः रूप्यनिवृत्तावपि तज्ज्ञानानुवृत्तिप्रसंगाच्च, अबाधितज्ञानैक्यानुभव-विरोधाच्च। न चेन्द्रयेणाध्यस्तस्यासंप्रयोगो बाधकः तस्य प्रमायामे वापेक्षितत्वेनाप्रमायां दोषमपेक्ष्यैवेन्द्रियस्य हेतुत्वोपपत्तेः रूप्यं प्रत्यप्यंगुल्यग्रनिर्देशचेलांचलबन्धनादिना शुक्तेरेवाधिष्ठानत्वेन तदवाच्छन्नचैतन्यस्यानधिष्ठानत्वाच्च।

न चाविद्यावृत्तेर्ज्ञानत्वाभावाज्ज्ञानैक्यधीः परोक्षाध्यासे चैतन्यप्रतिफलना-भावेनाध्यस्तांशे जानामीत्यनु(व्यवसाया)भवायोगात्, ज्ञाने अपवादादप्रामाण्यमित्यस्या योगाच्च, विवरणेऽन्तःकरणपरिणामे ज्ञानत्वोपचारादित्युक्त्या तद्वृत्तावपि ज्ञप्तित्वाभावाच्च प्रकाशचैतन्यस्य प्रतिफलनोपाधित्वस्य चाविद्यावृत्तावपि सत्त्वाद् अज्ञाननिवर्तकत्वस्य च धारावाहिकद्वितीयाद्यन्तःकरणवृत्तावप्यभावात्। न च वृत्तिभेदेऽपीदं रूप्ययोरिदमंशा-वच्छिन्नसाक्षिवेद्यत्वेन फलैक्येन ज्ञानैक्यधीः परोक्षभ्रमे अपरोक्षैकरसचैतन्यरूपफलैक्या-भावात्, त्वन्मते इदंरूप्ययोः यथाक्रममिदं रूप्याकारान्तःकरणाविद्यावृत्तिप्रतिबिंबिताभ्यां वा तदभिव्यक्ताभ्यामिदमंशानवच्छिन्नतदवच्छिन्नाभ्यामिदमंशरूप्याधिष्ठानचैतन्याभ्यां वा वेद्यत्वेनावच्छिन्नस्य फलस्य भिन्नत्वाच्च। अफलचिन्मात्राभेदस्य च सर्वत्र सत्वात्। न हि रूप्यं प्रतीवेदमंशं प्रत्यपीदमंशावच्छिन्नचैतन्यमधिष्ठानम्, आत्माश्रयात्। नापीदमंशं प्रतीव रूप्यं प्रत्यपीदमंशावच्छिन्नमधिष्ठानम्, इदं रूप्यमितिधीविरोधात्। एतेनेद-

मंशावच्छिन्नचैतन्यस्यवेदंवृत्तौ रूप्यवृत्तौ च प्रतिफलनात् ज्ञानैक्यमिति निरस्तम्। क्रमिकयोरिदमितिज्ञानयोरप्यैक्या पातात्, समूहालम्बनज्ञानस्यापि भेदापाताच्च, तस्यातदकाररूप्यवृत्तौ प्रतिफलनायोगाच्च। अन्यथा रूप्याधिष्ठानेदं वृत्तिप्रतिफलित-चितइव रूप्यप्रतीतिसम्भवाद्रूप्याकाराविद्यावृत्तिव्यर्था, तस्माज्ज्ञानैक्यानुभवविरोधो दुष्परिहरः। तिक्तो गुड इत्यादावपि मधुरो गुडः सुरभिचन्दनमित्यादाविव ज्ञा(मा)नान्तरोपनीतविशेषणविषयकमेव ज्ञानम्। तस्माच्छुक्तिरूप्याद्यपि नानिर्वाच्यं सुतरां जगदिति पारमार्थिकमेव तदिति।

भ्रमस्याद्वैत्यभिमतज्ञानद्वयात्मकत्वभंगः।

## अद्वैतसिद्धिः

तस्मादधिष्ठानांशे अन्तःकरणवृत्तिः अध्यस्तांशे चाविद्यावृत्तिः। तस्यां च तादात्म्यस्य भानात् नाख्यातिमतप्रवेशः।

ननु– एवमिदमशंस्याप्यध्यस्तत्वेन इदमिति द्व्यात्मकम्, इदं रूप्यमिति च त्र्यात्मकम्, स्वप्ने इदं रूप्यमिति ज्ञानं चतुरात्मकं च स्यादिति चेन्न, इदंत्वस्याध्यस्तत्वेऽपि नेदमिति द्व्यात्मकम्, इदंत्वाद्यधिष्ठानस्य स्वप्रकाशकत्वात्। न हि वयं सर्वत्राध्यासे द्व्यात्म्यकतां ब्रूमः, अपि त्वन्तःकरणवृत्तिसव्यपेक्षाधिष्ठानप्रकाशे। अत एव नेदं रूप्यमिति त्र्यात्मकम्, स्वप्ने तु चतुरात्मकत्वशङ्का सर्वथाऽनुपपन्ना, इदं रूप्ययोरप्यध्यसनीयत्वाद्, अविद्यावच्छिन्नचैतन्यरूपाधिष्ठानस्य स्वप्रकाशत्वात्। न च रूप्यज्ञानस्याचाक्षुषत्वे 'रूप्यं पश्यामी'ति चाक्षुषत्वानुभवविरोधः, चाक्षुषेदंवृत्त्यवच्छिन्नचैतन्यस्थाविद्यापरिणामत्वेन चाक्षुषत्वोपचाराद्, अनुभवत्वमात्रानुभव एव 'आत्मनं पश्यामी' त्युल्लेखदर्शनाच्च। ननु रूप्यज्ञानस्याविद्यावृत्तित्वेन प्रातिभासिकतया प्रतिभासावश्यंभावेनाध्यस्तविषयज्ञानस्य चाध्यस्तत्वनियमेनाविद्यावृत्तेरपि अविद्यावृत्तिप्रतिबिंबतचैतन्यवेद्यत्वम्, एवं तस्यापि तस्यापीत्यतवस्थितिरिरिति– चेत्, सत्यमेतत्। न पुनरनवस्था, अविद्यावृत्तिप्रतिभासके चैतन्ये अविद्या वृत्तेः स्वत एव उपाधित्वेन वृत्त्यन्तरानपेक्षत्वात्।

ननु– अज्ञानस्य रूप्याकारज्ञानात्मना परिणामे रूप्यमिति प्रतीतेर्ज्ञान-गताकारेणैवोपपत्तावतीतविषयकज्ञानन्यायेन वोपपत्तौ रूप्यरूपाविद्यापरिणामकल्पना न युक्तेति

(अद्वैतसिद्धिः)

चेन्न, ज्ञानाकारेणैव सविषयकत्वे साकारवादप्रसङ्गात्। अतीतविषयवदुपपादनेऽपि अपरोक्षत्वानुपपत्तेरुक्तत्वात्। न च दोषाणां स्वाश्रय एवातिशयहेतुत्वेन चक्षुर्गतदोष जन्यो भ्रमः कथमचाक्षुषः स्यात्? अन्यथा त्वचा गृहीते शङ्खे चक्षुषा गृहीते रूप्यसादृश्ये च निमीलितचक्षुषोऽपि पीतभ्रमरूप्यभ्रयोरापत्तेरिति वाच्यम्, दोषाणां स्वाश्रय एवातिशयजनकत्वमित्यस्यैवासिद्धेः नियामकाभावात्। न चोक्तातिप्रसङ्गो नियामकः, स्वसंबन्धिनि कार्यजनकत्वाङ्गीकारेणानतिप्रसङ्गात्। संबन्धश्च स्वाश्रयजन्यज्ञानविषयत्वरूपः। स च न तद्वति संस्कारविषयग्रहीन्द्रियजन्याधिष्ठानज्ञानस्यापरोक्षभ्रमहेतुत्वात् त्वचा गृहीते तदभावात् सादृश्यं गृहीत्वा चक्षुर्निमीलनस्थले इदंवृत्तिसद्भावे प्रमाणाभावेन नातिप्रसङ्गापादनं शक्यम्। तत्सत्त्वे इष्टापत्तिरेव। ननु एवं वृत्तिभेदज्ञानैक्यानुभवविरोधः। न च अध्यस्तेनाभेदेन विषययोरेकतापन्नत्वात् ज्ञानयोरैक्यमुपचर्यत इति वाच्यम्, एवमेकत्वप्रतिपादकप्रयोगसमर्थनेऽपि अनुभवविरोधस्यापरिहारादिति चेन्न, विषययोरभेदाध्यासे ज्ञानयोरप्यभेदाध्यास इत्यस्य उपचारशब्दार्थत्वेनानुभवविरोधाभावात्। न च तर्हि धारावाहिकज्ञानेष्वैक्याध्यासापत्तिः विषयैक्यज्ञानस्यारोपनिदानस्य सत्त्वादिति वाच्यम्, आरोपस्य कारणानापाद्यत्वात्। न च विषयैक्यस्य ज्ञानैक्याध्यासनिमित्तत्वं न दृष्टमिति वाच्यम्, पूर्वोक्तयुक्त्या ज्ञानभेदे सिद्धे अपूर्वकल्पनायामपि दोषाभावात्। यद्वा यथेदमंशावच्छिन्नचैतन्यगताविद्यापरिणामत्वात् रूप्यमिदंत्वेन भाति, तथेदमाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यगताविद्यापरिणामत्वेन रूप्यज्ञानमिदंज्ञानत्वेन भाति। न च तर्हि बाधकाद्विषययोरिव ज्ञानयोरपि भेदधीप्रसङ्गः, विषयभेदग्रहज्ञानभेदग्रहयोर्भिन्नसामग्रीकत्वेनापादनस्याशक्यत्वात्। केचित्तु भ्रमकाले विषयैक्यग्रहनियमवत् न ज्ञानैक्यग्रहनियमः, तं विनापि प्रवृत्त्याद्युपपत्तेः, तथा च बाधकाले न तदनैक्यग्रहनियमोऽपीति आहुः। न च इदं वृत्तेर्ज्ञातैकसत्त्वेन तदवच्छिन्नचैतन्यगताज्ञानमेव नास्तीति वाच्यम्, वृत्तेः साक्षिवेद्यत्वेन यद्यपि तद्गोचराज्ञानं नास्ति, तथापि तदवच्छिन्नचैतन्ये शुक्त्यवच्छिन्नगोचराज्ञानसत्त्वात्। तथा च इदं वृत्तिराश्रयावच्छेदिका न तु विषयावच्छेदिकेति वस्तुस्थितिः। अत एव शुक्तितत्त्वं जानतः इदंवृत्तितत्वं चाजानतो रूप्यनिवृत्तावपि तदज्ञानानुवृत्तिप्रसङ्ग इति निरस्तम्, शुक्तितत्त्वाज्ञानस्यैव उभयपरिणामत्वात्, इदमंशस्तदाकारवृत्तिश्च एतद्द्वयमाश्रयमात्रावच्छेदकमित्युक्तत्वात्। न चैवमपि अबाधितज्ञानैक्यानुभवविरोधः, अध्यस्तेन सहेन्द्रियासंप्रयोगस्यैव बाधकत्वात्। न च सन्निकर्षः प्रमासामग्री, करणानां प्राप्यकारित्वनियमेन सन्निकर्षस्यापि सामान्यसामग्रीत्वात्। न हि दृष्टा छिदा दारुवियुक्तकुठारेणेत्यन्यत्र विस्तरः।

(अद्वैतसिद्धिः)

यत्तु शुक्तिरेव विवर्ताधिष्ठानमस्तु, न चैतन्यमिति, तन्न, अधिष्ठानस्य भ्रमजनकाज्ञानविषयत्वेन तदकल्पिततया सत्यत्वनियमात्, शुक्तेश्च मिथ्यात्वात्। यद्वा अविद्यावृत्तेर्न ज्ञानत्वम्, अतः ज्ञानैक्यधीः, ज्ञानत्वस्याज्ञाननिवर्तकमात्रवृत्तित्वात्। न च– एवं धारावाहनस्थले द्वितीयादिज्ञाने ज्ञानत्वं न स्यादिति– वाच्यम्, तस्यापि तत्तत्कालविशिष्टग्राहकत्वेनागृहीतग्राहकतया ज्ञाननिवर्तकत्वात्। वस्तुतस्तु– यावन्ति ज्ञानानि तावन्त्यज्ञानानीति व्यवहितज्ञानेनैवाव्यवहितज्ञानेनापि अज्ञाननिवर्तनादिति न काप्यनुपपत्तिः। परोक्षस्थलेऽपि प्रमातृगताज्ञाननिवृत्तिरस्त्येवेति तत्र जानामीति प्रत्ययः। तेन सहाभेदग्रहात् परोक्षभ्रमेऽपि जानामीति प्रत्ययः। न च विवरणे अन्तःकरणपरिणामे ज्ञानत्वोपचारात् इदं वृत्तेरपि ज्ञानत्वोक्तौ विवरणविरोधः, तस्य प्रकाशत्वनिबन्धनज्ञानपद-प्रयोगविषयत्वमित्येतत्परत्वात्, न त्वज्ञाननिवर्तकत्वनिबन्धनज्ञानपदप्रयोगोऽप्यौपचारिक इति तस्यार्थः। तथा चाविद्यावृत्तौ यत्र ज्ञानपदप्रयोगः, तत्रोपचारिक एव। न च अविद्या वृत्तेरज्ञानत्वे ज्ञानस्यौत्सर्गिकं प्रामाण्यमिति विरुध्येत, निरपवादनियमस्यैव संभवादिति वाच्यम्, इच्छाजनकवृत्तिमात्रस्य ज्ञानत्वमभिप्रेत्य उत्सर्गत्वोक्तेः। यद्वा– वृत्तिभेदेऽपि इदंरूप्ययोरिदमंशावच्छिन्नचैतन्यप्रकाश्यत्वेन फलैक्यात् ज्ञानैक्यधीः। न च परोक्षभ्रमे अपरोक्षैकरसचैतन्यरूपफलैक्याभावात् कथं तन्निबन्धनज्ञानैक्यानुभव इति वाच्यम्, तत्र फलैक्यमप्युपचर्य ज्ञानैक्योपचार इत्येव विशेषात्। ननु त्वन्मते यथाक्रममिदं-रूप्याकारान्तःकरणवृत्त्यविद्यावृत्तिप्रतिबिम्बिताभ्यां वा तदभिव्यक्ताभ्यां वा, इदमंशा-वच्छिन्नतदनवच्छिन्नाभ्यामिदमंशरूप्याधिष्ठानचैतन्याभ्यां वा, वेद्यत्वेनावच्छिन्नफलस्य भेदात् कथं फलैक्यम्? अनवच्छिन्नफलीभूतचिन्मात्राभेदस्य सर्वत्र समानत्वात्। नहीदमंशेऽपि तदवच्छिन्नमेव चैतन्यमुपादानम्, आत्माश्रयात्। न वा रूप्ये इदमंशानवच्छिन्नमुपादानम्, 'इदं रूप्य'मिति प्रतीत्यनुपपत्तेरिति चेन्न, अविद्यावृत्तिस्तावन्नाज्ञाननाशिका, किंत्वन्तःकरणवृत्तिरिदमाकारा। तथा च तदभिव्यक्तचैतन्यमेव रूप्यमभिव्यनक्तीति फलैक्यसंभवात्। न ह्यवच्छेदकभेदेन फलभेदः किंतु व्यञ्जकभेदेन। तथा च परमार्थसच्चैतन्यमधिष्ठानमध्यस्तज्ञानस्य। तच्च द्विविधं व्यावहारिकसत् प्रातिभासिकसच्चेति। तदुक्तं– 'प्राग् व्यावहारिकसत्त्वविषयत्वात् प्रत्यक्षं नागमबाधकमिति'। परमार्थसत्त्वमादाय त्रिविधं सत्त्वम्। इति भ्रमस्य वृत्तिद्वयत्वोपपत्तिः।

## न्यायामृततरङ्गिणी

॥त्वन्मत इति॥ नन्विदमंशस्याध्यस्तत्वेपि नेदमिति द्व्यात्मकम्। इदंत्वाधिष्ठानस्य च स्वप्रकाशत्वात्। न हि वयं सर्वत्राध्यासे द्व्यात्मकतां ब्रूमः। अपि त्वंतःकरणवृत्तिसापेक्षाधिष्ठानप्रकाशा इति। मैवम्। इदमंशाधिष्ठानस्य स्वयंप्रकाशः इदमंशावच्छिन्नस्य वृत्तिकृत इति द्व्यात्मकता स्पष्टैव ॥स्वाप्नेति॥ ननु स्वप्ने शुक्तीदमंशरूप्ययोरुभयोरप्यध्यस्तत्वादविद्यावच्छिन्नचैतन्यरूपाधिष्ठानस्य स्वप्रकाशत्वान्न च रूपत्वमिति चेन्मैवं। स्वप्ने इदमंशस्याबाधेन तदंशे उत्कृष्टाऽविद्यावृत्तिः। रूप्यस्य स्वप्न एव बाधेन तदंशेऽपकृष्टा सेति द्व्यात्मकता अविद्याधिष्ठानचिन्मात्रे स्वयं प्रकाशः स्वप्नाधिष्ठानेऽविद्यावच्छिन्नेऽविद्या वृत्तिप्रयुक्तः प्रकाश इति चतुरात्मताया दुर्वारत्वात् ॥चाक्षुषत्वादीति॥ न च चाक्षुषेदं वृत्त्यवच्छिन्नचैतन्यस्याविद्यापरिणामत्वेन चाक्षुषत्वोपचार इति वाच्यम्। इदं पश्यामीतिवत् पीतं पश्यामीत्यनुभवेनोपचारकल्पने मानाभावात् ॥अध्यस्तत्वनियमादिति॥ तथा च न केवलसाक्षिभास्यत्वमिति भावः ॥अनवस्थानादिति॥ नन्वविद्यावृत्तिप्रतिभासके चैतन्येऽविद्यावृत्तेः स्वत एवोपाधित्वेन वृत्त्यंतरानपेक्षत्वान्नानवस्थेति चेन्मैवं। अविद्यावृत्तेः प्रातिभासिकतया प्रतीतिं विना सत्त्वायोगेन तत्प्रतीतौ तस्यासत्त्वं सत्त्वे च तस्या उपाधित्वमित्यन्योन्याश्रयात्। ननु ज्ञानाकारेणैव सविषयकत्वे साकारवादापातोऽतीतविषयवदुपपादनेप्यपरोक्षत्वानुपपत्तिरित्यत आह ॥ज्ञानगताकारेणैवेति॥ ज्ञानस्वरूपमात्रेणेत्यर्थः। अविद्यावृत्तेः परोक्षवृत्तिविलक्षणाकारत्वेनार्थं विनाप्यपरोक्षत्वोपपत्तेः ॥अन्यथेति॥ दोषाणां स्वाश्रयजन्य एवातिशयाधायकत्वाभावे ॥पीतत्वेति॥ पीतत्वादिविषयोऽविद्यावृत्तिरूपो भ्रमः स्यात् ॥ज्ञानैक्यानुभवविरोधादिति॥ एकत्वप्रयोगसमर्थनेप्यनुभवविरोधस्यापरिहारात्। ॥एकविषयेति॥ एकविषयकप्रत्यक्षानुमित्यादीनामप्यैक्यापातादित्यपि बोध्यं ॥कल्पितस्येति॥ बाधकालेऽर्थैक्याभावेपि ज्ञानैक्यानुभवादित्यर्थः ॥बाधकाल इति॥ इदं वृत्त्यवच्छिन्नचैतन्यतादात्म्येनाननुभवादित्यपि बोध्यं ॥भेदधीप्रसंगादिति॥ न च भेदग्रहसामग्रीभेदान्न भेदग्रहः। कदाचिदपि बाधकाले वृत्तेर्भेदग्रहस्यासिद्धेः। सर्वदा भेदग्रहसामग्रीविरहस्य वक्तुमशक्यत्वात्। तन्न। न हि प्रवृत्त्यादिप्रतिबंधार्थं वृत्तिभेदग्रहमाचक्ष्महे। किं तु बाधेनार्थयोरिव ज्ञानयोरपि भेदग्रहं। अर्थतथात्वव्यवस्थापकत्वाद्बाधस्य ॥इदं वृत्तेरिति॥ नन्विदं वृत्तेर्ज्ञातैकसत्त्वेन तदवच्छिन्नचैतन्यविषयकाज्ञानाभावेपीदं वृत्त्यवच्छिन्नचैतन्याश्रितं शुक्त्यवच्छिन्नचैतन्यगोचरमज्ञानमस्त्येव। तथा चेदं वृत्तिराश्रयावच्छेदिका। न तु विषयावच्छेदिकेति। मैवं। अधिष्ठानावरणं विनाऽन्यथाभावरूपविवर्तायोगात्। आवरणं च तद्विषयकत्वं विना न युक्तमितीदं वृत्तिविषयकाज्ञानस्यैव वक्तव्यत्वात् ॥शुक्तितत्वमिति॥ ननु शुक्ति-

(तरङ्गिणी)

तत्वाज्ञानस्यैवोभयपरिणामित्वाच्छुक्तितत्वज्ञाने च तदज्ञाननाशाद्रूप्यतद्वृत्त्योर्निवृत्तिरिति। मैवं। अज्ञानद्वयविवर्तत्वोक्त्यायोगात् ।। रूप्यं प्रतीति ।। रूप्यमुद्दिश्य। ननु मिथ्याभूतशुक्तेर्नाधिष्ठानत्वं। सत्यस्यैवाधिष्ठानत्वात्। मैवं। शुक्तेरपि सत्यत्वात्। त्वन्मते शुक्त्यवच्छिन्नचैतन्यस्यापि तात्विकत्वाभावाच्च ।। अविद्यावृत्तेरिति ।। अज्ञाननिवर्तकस्यैव ज्ञानत्वादिति भावः ।। परोक्षेति ।। अविद्यावृत्तिस्तु न ज्ञानं। तत्प्रतिफलितचैतन्यमपि परोक्षाध्यासेनास्तीति किं कृतस्तत्र जानामीति व्यवहारः स्यादित्यर्थः ।। अपवादादिति ।। इदं वृत्तेः सर्वत्र प्रमात्वादविद्यावृत्तेरज्ञानत्वाज्ज्ञाने प्रमात्वनियम एव स्यादित्यर्थः। न चात्र ज्ञानपदेनेच्छाजनकवृत्तिरेव विवक्षितेति वाच्यं। अविद्यावृत्तेर्ज्ञानत्वाभावे इच्छाजनकत्वस्यैवासंभवात्। किं च किमविद्यावृत्तेर्मुख्यज्ञानत्वं नास्त्यौपचारिकमपि वा। आद्य आह ।। विवरण इति ।। व्याख्यातमेतत्। द्वितीयं त्वविद्यावृत्तावप्यस्तीत्याह ।। प्रकाशकेति ।। इच्छादिविलक्षणवृत्तित्वेनैव चैतन्यप्रतिफलनोपाधित्वात् ।। फलैक्येनेति ।। भासकचैतन्यं फलं ।। ।। तदभिव्यक्ताभ्यामिति ।। एतच्चाधिष्ठानचैतन्यविशेषणं ।। एतेनेति ।। इदं रूप्याधिष्ठानयोश्रितोर्भेदेन ।। क्रमिकयोरिति ।। एतेन नावच्छेदकभेदेन फलभेदः किं तु व्यंजकभेदेनेति निरस्तं। तस्य चैतन्यस्य ।। अन्यथेति ।। अतदाकारवृत्तावप्यन्याधिष्ठान-चैतन्यप्रतिफलने। ननु यत्र विशेष्यस्य रसनाद्यवेद्यत्वं तत्र रासनस्य रसादेः कथमध्यास इति विशेष्यांशे व्यावृत्तिरिति भ्रमे वृत्तिद्वयसिद्धिरित्यत आह ।। तिक्त इति ।। विशेष्योपनयसहकृतं रसनादिविशेष्ये विशेषणवैशिष्ट्यं गृह्णातीत्येकमेव ज्ञानं। अन्यथा मधुरो गुड इत्यादावपि वृत्तिद्वयस्वीकारापत्तिस्तुल्यन्यायत्वादित्यर्थः।

व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगं युजि।
न्यायामृततरंगिण्यामनिर्वाच्यस्य खंडनं।
।। भ्रमस्याद्वैत्यभिमतज्ञानद्वयात्मकत्वभंगः ।।

## न्यायामृतकण्टकोद्धारः

किञ्चाविद्यकरजतोत्पत्तिस्वीकारेऽख्याति पक्षप्रवेशो वृत्तिद्वयस्वीकारवैयर्थ्यं चेति परकीयमतमनुवदति ।। यच्चेदमिति ।। तादात्म्यस्येति ।। शुक्तिरजततादात्म्यस्येत्यर्थः। अख्यातिपक्षे च न तादात्म्यं भासते। अतो न तत्पक्षनिक्षेप इत्यर्थः। अत्र हि तादात्म्यं किमिदं वृत्तौ भासते रजतमिति वृत्तौ वा? वृत्यन्तरे वा? नाद्यः चक्षुस्संनिकर्षजन्यांतःकरणवृत्तौ तादात्म्यभानसामग्र्यभावात् इदमित्यत्र रजततादात्म्यानुल्लेखाच्च। तदनुल्लेखेऽपि तद्भानेऽतिप्रसंगात्। अत एव न द्वितीयोऽपि। नापि तृतीयः। इदं रजतमिति

(कण्टकोद्धारः)

वृत्यतिरिक्ततादात्म्यविषयकवृत्तेरनुभवबाधितत्वात् गौरवाच्च। न च तादात्म्यव्यवहारजनकत्वेन वृत्तिद्वयस्य तादात्म्यभानत्वोपचार इति वाच्यम्। तस्याख्यातिपक्षेऽपि सत्त्वेन तत्पक्षे पातस्यापरिहारात्। न चेदं वृत्युपनीतमिदंतादात्म्यमविद्यावृत्तौ भासत इति वाच्यम्। तथोल्लेखापत्तेः। स्मृतरजततादात्म्यस्येदंवृत्तावेव भानसंभवे वृत्तिद्वयस्वीकारानापत्तेश्चेति दोषे सत्यपि दोषान्तरमाह ॥त्वन्मत इति॥ न चेदमंशस्य न द्व्यात्मकतेति वाच्यम्। स्वप्रकाशत्वेन कारणानपेक्षणेऽपि अध्यासस्याधिष्ठानस्फुरणमारोप्यस्फुरणमिति द्व्यात्मकत्वापरिहारात्। न हि निरधिष्ठानको भ्रमः। तथात्वे जितं सौगतैरिति। न च सर्वत्राध्यासे द्व्यात्मकत्वं नांगीक्रियते। किंत्वंतःकरणवृत्तिसापेक्षाधिष्ठानप्रकाश एवेति वाच्यम्। नियामकाभावे नास्याप्रयोजकत्वात्। त्वन्मते सन् घट इत्यादीनां द्व्यात्मकता च न स्यात्। तथाच सदित्यधिष्ठानब्रह्मरूपसत्ताया अनुवेध इति स्ववचनविरोधः ॥स्वाप्नेति॥ तत्राधिष्ठानव्यक्तेरप्यध्यासात् चतुरात्मकतेति द्रष्टव्यम्। न चेष्टापत्तिः। अनुभवविरुद्धानेकात्मकत्वेऽतिप्रसंगात् ॥शंख इति॥ न च चाक्षुषेदं वृत्यवच्छिन्नचैतन्यस्याविद्यापरिणामत्वेन चाक्षुषत्वोपचारः। अनुभवत्वमात्रनिबंधनश्च पश्यामीति व्यवहारः आत्मानं पश्यतीतिवदिति वाच्यम्। अध्यस्तमविद्यापरिणाम इत्यस्य प्रागेव दूषितत्वात्। चक्षुषा रूपं पश्यामीत्यादावपि तथात्वप्रसंगाच्च। पश्यामीत्यस्य प्रत्यक्षत्वमात्रनिबंधनत्वेऽपि चक्षुषा पश्यामीत्यस्य तन्मात्रनिबंधनत्वायोगाच्च। ॥रजतज्ञानस्येति॥ न च शुद्धचैतन्यवेद्यत्वान्नानवस्थेति वाच्यम्। निर्दोषज्ञानवेद्यत्वेऽध्यस्तानुपपत्तेः। रजतस्यैव शुद्धचैतन्यवेद्यत्वेऽविद्यावृत्तिवैयर्थ्याच्च। न चाविद्यावृत्तिरेव रजतप्रतिभासचैतन्यप्रतिबिम्बनोपाधिः स्वप्रतिभासकचैतन्यप्रतिबिंबनोपाधिरपीत्यतो नानवस्थेति वाच्यम्। स्वस्यैव स्वप्रतिभासक चैतन्यप्रतिबिंबनोपाधित्वे आत्माश्रयात्। अन्यथा रजतस्यैव रजतप्रतिभासकचैतन्यप्रतिबिंबनोपाधित्वेऽविद्यावृत्तिवैयर्थ्यात्। रजत वृत्योरविद्यापरिणामत्वेन स्वच्छत्वे विशेषाभावात्। तस्मात् स्वभिन्नमेव स्वप्रतिभासकचैतन्यप्रतिबिंबनोपाधिरिति वक्तव्ये कथं नानवस्थेति चिन्तनीयं सूरिभिः ॥अज्ञानस्येति॥ न च ज्ञानगताकारेणैव सविषयत्वे साकारवादापत्तिरिति वाच्यम्। ज्ञानाकार एवार्थाकार इत्यभ्युपगमे तथात्वात्। परोक्षासद्ज्ञानस्थले ज्ञानाकारेणैव सविषयत्वांगीकाराच्च। न हि तत्राप्यसदाकारपरिणामोऽसतः सत्वापत्तेः ॥भ्रमस्य चेति॥ नचार्थाभावेऽपरोक्षत्वानुपपत्तिरिति वाच्यम्। प्रातिभासिकत्वेऽपि तुल्यत्वात्। संनिकर्षद्वाराह्यर्थसत्तोपयोगिनी। न च प्रातिभासिकत्वपक्षे संनिकर्षसंभवः। अविद्यमानस्यापि दोषवशादपरोक्षत्वोपपत्तेरुक्तत्वाच्च। किंच रजतज्ञानस्येंद्रियजन्यत्वमवश्यं स्वीकर्तव्यम्। इंद्रियदोषप्रयुक्तभ्रमत्वाश्रयत्वात् कारणांतराजन्यत्वाच्च। न चाप्रयोजकत्वं दोषाणां स्वाश्रयजन्य एवातिशयहेतुत्वात् क्रियायाः सकरणकत्वनियमाच्चेत्याह ॥दोषाणामिति॥ न च दोषाणां स्वाश्रयजन्यज्ञानविषये कार्यजनकत्वनियम इति वाच्यम्। विषयपर्यन्तधावने गौरवात् दोषात् भ्रम उत्पन्न इत्यनुभवविरोधाच्च। नहि दोषादिंद्रियजन्यज्ञानविषये कार्यमुत्पन्नमित्यनुभव इति भावः ॥अन्यथेति॥ यद्यध्यस्तज्ञानस्येंद्रियजन्यत्वं नांगीक्रियत इत्यर्थः। न च संस्कारविषयग्राहीन्द्रियजन्याधिष्ठानज्ञानस्य भ्रमहेतुत्वात्। त्वचा गृहीते तदभावान्नोक्तदोष इति वाच्यम्। एवमपि चक्षुषा किंचिदिति ज्ञानानंतरं निमीलितनेत्रस्य पीतत्वभ्रमापत्तेः। चक्षुषा पीतत्वं भातमित्यनुभवविरोधाच्च। इंद्रियजन्यत्वांगीकारेणैवातिप्रसंगपरिहारेऽधिष्ठानज्ञानस्य तथा हेतुत्वकल्पने गौरवाच्च। न च सादृश्यमात्रं गृहीत्वा निमीलितनेत्रस्येदंवृत्यभावेनैव रूप्यज्ञानाभावस्तत्सत्व इष्टापत्तिरिति वाच्यम्। किंचिदिदमिति ज्ञानानंतरं

(कण्टकोद्धारः)

निमीलितनेत्रस्य इदं रूप्यमिति ज्ञानाभावस्यानुभवसिद्धत्वेनेष्टापादनासंभवात्। तस्मादिंद्रियजन्यत्वमेव स्वीकर्तव्यमिति भावः ॥ज्ञानैक्येति॥ न च ज्ञानयोरप्यैक्याध्यासात् नैक्यानुभवविरोध इति वाच्यम्। अनुभवसिद्धेन ज्ञानैकत्वेनोपपत्तौ तदसिद्धज्ञानचतुष्टयस्वीकारेणानुभवविरोधपरिहारे गौरवात्। विषयैक्यानुभवमात्रेण ज्ञानैक्याध्यासे व्यभिचारमप्याह ॥एकविषयेति॥ अनारोपितविषयैक्यस्य ज्ञानैक्योपचारहेतुत्वे दृष्टेऽपि कल्पितस्य न तदृष्टमित्याह ॥कल्पितस्येति॥ ननु ज्ञानैक्यानुभवो भ्रम एव। यथा रूप्यमिदंत्वेन दोषाद्भाति। तथा रजतज्ञानमिदं ज्ञानत्वेन भाति। अतो नैक्यानुभवविरोध इति मतांतरमुक्तदोषेण दूषयितुमनुवदति ॥एतेनेति॥ बुद्धिस्थेन उक्तवक्ष्यमाणदूषणगणेनेत्यर्थः ॥बाधकाल इति॥ नचार्थभेदज्ञानभेदग्रहसामग्र्योः एककालत्वाभावात् भिन्नसामग्रीकत्वाच्च नार्थभेदग्रहकाले ज्ञानभेदग्रहो भवतीति वाच्यम्। अर्थाभेदारोपस्यैव ज्ञानाभेदारोपहेतुत्वेन तद्भेदग्रहकाले तद्भेदग्रहसामग्र्या आवश्यकत्वात् कदाचित् कस्यापि ज्ञानभेदग्रहापादनाद्वा न चेष्टापत्तिरनुभवविरोधात्। न च भ्रमकालेऽर्थैक्यग्रहवत् न ज्ञानैक्यग्रहः। तदभावेऽपि प्रवृत्युपपत्तेरतो नार्थभेदग्रहकाले ज्ञानभेदग्रह इति वाच्यम्। ज्ञानैक्यानुभवानुरोधेन तदभेदग्रहस्यापि भावात्। नहि प्रयोजनाधीना ज्ञानानुत्पत्तिः अनिच्छतोऽपि दुर्गंधादिज्ञानदर्शनात्। अत एव वक्ष्यति ॥अबाधितेति॥ ॥इदं वृत्तेरिति॥ न च वृत्यवच्छिन्नचैतन्ये ज्ञानाभावेऽपि वृत्यवच्छिन्नेदमंशनिष्ठशुक्तित्वाज्ञानेनैव तादृशारोप इति वाच्यम्। तथात्वे रूप्यवत् रजतज्ञानस्यापीदंत्वेन भानं स्यात् इदमंशनिष्ठाज्ञानपरिणामत्वाविशेषात् तदज्ञानपरिणामस्य तदभेदेन भाननियमाच्च। अनेनेदमंशैक्यस्यानुभवानारूढस्योपपादनेऽपि तदारूढज्ञानैक्यस्यानुपपादनाच्च ॥शुक्तितत्त्वमिति॥ नचोभयस्यापि शुक्तितत्त्वाज्ञानपरिणामत्वात् शुक्तितत्वज्ञानेनोभयनिवृत्तिरिति वाच्यम्। उभयोः शुक्तितत्त्वज्ञानपरिणामत्वस्य निरस्तत्वात्। ॥अबाधितेति॥ इदं न रजतमितिवत् नेदं ज्ञानं रजतज्ञानमिति बाधाभावादिति भावः। ननु प्रत्यक्षबाधाभावेऽपि यौक्तिकबाधोऽस्तीत्याशंक्य निषेधति ॥नचेति॥ ॥तस्येति॥ न च करणानां प्राप्यकारित्वनियमेन संनिकर्षस्य सामान्यसामग्रीत्वमेवेति वाच्यम्। भ्रमस्येंद्रियजन्यत्वानुभवेनातिप्रसंगाभावेन भूमातिरिक्तस्थल एव तादृशनियमस्य स्वीकर्तव्यत्वात्। अधिष्ठानप्राप्तेश्च प्रकृतेऽपि सत्त्वाच्च। विशेषप्राप्तेश्च प्रमायामेवापेक्षितत्वाच्च ॥ रूप्यं प्रतीति॥ अत्र रूप्यं प्रति शुक्तेरेवाधिष्ठानत्वेनेत्यन्वयः। न चाधिष्ठानस्य सत्यत्वनियमात् न शुक्तेरेवाधिष्ठानत्वमिति वाच्यम्। युष्मदित्यादि भाष्योक्तान्योन्यतादात्म्यान्योन्यधर्माध्यासायोगप्रसंगात् रूप्यतद्धानयोरिदंत्वतज्ज्ञानत्वाध्यासस्य त्वयैवोक्तत्वेन पूर्वोत्तरविरोधप्रसंगाच्च ॥नचेति॥ अज्ञाननिवर्तकस्यैव ज्ञानत्वादविद्यावृत्तेस्तदभावान्न ज्ञानत्वमिति भावः ॥परोक्षेति॥ न च परोक्षवृत्तेरज्ञाननिवर्तकत्वात् तदैक्याध्यासात् परोक्षाध्यासे जानामीत्यनुभव इति वाच्यम्। परोक्षवृत्तेरज्ञाननिवर्तकत्वेऽभिव्यक्तापरोक्षैकरसचैतन्यासंभेदेन विषयस्य परोक्षत्वं स्यात्। न च प्रमातृगताज्ञाननिवर्तकत्वम्। अज्ञानद्वैविध्यस्य प्रागेव निरस्तत्वात्। शुद्धचैतन्यस्याज्ञाननिवर्तकत्वाभावेन श्रुत्यादिना ज्ञानत्वप्रतिपादनं तत्र न स्यात्। न च प्रकाशकत्वरूपज्ञानत्वस्य तत्रापि संभव इति वाच्यम्। अविद्यावृत्तावपि तद्व्यवहारकारणत्वादिरूपस्य ज्ञानत्वस्य संभवात्। ज्ञानपदस्यानेकार्थत्वापत्तेश्च। व्यवहारस्य तुल्यत्वेन मुख्यत्वामुख्यत्वयोर्विनिगमकाभावात् ॥ज्ञान इति॥ न चेच्छाकारणवृत्तिमात्रे ज्ञानत्वमित्यभिप्रायेण

(कण्टकोद्धारः)

तदुक्तिरिति वाच्यम्। इच्छाजनकवृत्तित्वस्यैव मुख्यज्ञानत्वेनानुभवविरोधापरिहारात् ॥ विवरण इति॥ न च विवरणं प्रकाशकत्वरूपज्ञानत्वाभिप्रायमिति वाच्यम्। अंतःकरणवृत्यतिरिक्तस्य प्रकाशत्वाभावेन तस्यैव प्रकाशकत्वात्। यथा चांतःकरणवृत्यतिरिक्तविषयप्रकाशो नास्ति तथोक्तं पुरस्तात् ॥ अज्ञानेति॥ न च धारावाहिकद्वितीयादिवृत्तौ तत्तत्कालादिविशिष्टवस्तुग्राहित्वेनागृहीतग्राहित्वादज्ञाननिवर्तकत्वमस्त्येवेति वाच्यम्। अस्याविद्यावृत्तावपि वक्तुं शक्यत्वेन ज्ञानैक्यानुभवविरोधापरिहारात्। न ह्यविद्यावृत्या रजतं गृहीतमेव गृह्यते अपूर्वस्यैवोत्पन्नस्य ग्रहात्। नचाविद्यावृत्तेश्चैतन्यप्रतिबिंबनोपाधित्वमेवेति वाच्यम्। धारावहनद्वितीयादिबुद्धावपि तुल्यत्वात् ॥ न चेति॥ अत्र फलैक्येन ज्ञानैक्यधीरिति कोऽर्थः। फलैक्येन ज्ञानैक्यमुपचर्यते वा प्रमीयत इति वा आरोप्यत इति वा? नाद्यः कार्यैक्येन ज्ञानैक्योपचारस्याख्यातिवादेऽपि सत्वादनुभवविरोधाच्च। न द्वितीयो वास्तवज्ञानैक्यस्य त्वयाऽनंगीकारात्। अन्यथा वृत्तिद्वयाभ्युपगमविरोधः। न तृतीयो बाधकाले ज्ञानभेदप्रतीतिप्रसंग इति चेदस्यापि दूषणे सत्येव दूषणांतरमाह ॥ परोक्षभ्रम इति॥ न च तत्रापि फलैक्यमुपचर्य ज्ञानैक्यमुपचर्यत इति वाच्यम्। अनुभवाविरोधेनैकज्ञानत्वे संभवति उपचारोपचारकल्पनाया अन्याय्यत्वात्। अन्यथाऽतिप्रसंगात् ॥ इदंरूप्ययोरिति॥ नचेदमाकारांतः करणवृत्तेरेवाविद्यानिवर्तकत्वात् तदभिव्यक्तचैतन्यमेव रूप्यमप्यभिव्यनक्तीति वाच्यम्। तथात्वे रूप्याकाराविद्यावृत्तिवैयर्थ्यप्रसंगादिति ॥ एतेनेति॥ परोक्षभ्रमे चैतन्यप्रतिफलनाभावेन ज्ञानैक्यानुभवो न स्यादिति दूषणेनेत्यर्थः ॥ क्रमिकयोरिति॥ तत्रापीदमंशावच्छिन्नस्यैव द्वये प्रतिफलनादिति भावः ॥ समूहेति॥ तत्रापि तत्तदाकारवृत्तिभेदस्य फलैक्यस्य च सत्त्वादिति भावः ॥ तस्येति॥ इदमंशावच्छिन्नचैतन्यस्येत्यर्थः। अतदाकारवृत्तौ अनिदमाकारवृत्तौ। रूप्याकारवृत्तावित्यर्थः ॥ अन्यथेति॥ यदीदमंशावच्छिन्नचैतन्येनैव रजतभानमित्यर्थः। उपपादितमैक्यानुभवमुपसंहरति ॥ तस्मादिति॥ ननु तिक्तो गुड इत्यत्र कथं ज्ञानैक्यम्। तिक्तत्वादेस्तस्मिन् जन्मन्यननुभूतत्वेनोपनयाभावादित्यत आह ॥ तिक्त इति॥ स्मृत्युपनयासंभवेऽपि अनुभवेनोनयसंभवादिति भावः। परमप्रकृतमुपसंहरति ॥ तस्मादिति॥ इति भ्रमस्याद्वैत्यभिमतज्ञानद्वयात्मकत्वभंगः ।

## ४४. सत्तात्रैविध्यभङ्गः

यच्चेदमुच्यते– ब्रह्म पारमार्थिकं सद्, जगद् व्यावहारिकम्, शुक्तिरूप्यादि-प्रातिभासिकमिति सत् त्रिविधमिति। तन्न, स्वाप्नशुक्तौ चाध्यस्तरूप्यादेरुपसंग्रहाय प्रातिभासिकादपि निकृष्टस्य सत्त्वस्य पंचमप्रकारस्याव्याहारिकस्याज्ञानध्वंसस्य चोपसंग्रहायापारमार्थिकस्य व्यावहारिकादप्युत्कृष्टस्य सत्त्वस्य च वाच्यत्वेन त्रैविध्या योगात्।

किं चायं विभागो न तावत्तात्त्विकः, ब्रह्मैव तात्त्विकमित्यस्य भंगात्। नाप्य तात्त्विकः, तात्त्विकस्य ब्रह्मणोऽतात्त्विकत्वात्। शुक्तेःरूप्यादिव बाधगम्यस्य विभागस्य

तात्त्विकत्वावश्यसंभावात्। अन्यथा विभागश्रुतेरतत्त्वावेदकत्वं स्यात्। एवं च–

अयं विभागः सत्यश्चेदपसिद्धान्त आपतेत् ।
मिथ्या चेत्कृतकृत्योऽहं त्वयैव स्वोक्तदूषणात् ॥
व्यावहारिकसत्योऽपि बाध्योऽबाध्योऽथवा भवेत् ।
उक्तो दोषश्चोभयत्र सर्वमेतेन दूषितम् ॥

सम्भवति हि विश्वमिथ्यात्वब्रह्मनिर्विशेषत्वादावप्येवं विकल्प्य दूषणम्।

ननु– अत्र परमार्थसदेव सत् इतरद्वयं सद्विलक्षणमेव सत्त्वेन भ्रान्तिबाधविलम्बाविलम्बाभ्यांतद्भेद इत्यभिप्रेतम्? किं वा सत्त्वस्यैवाऽवान्तरभेद इति? नाद्यः, त्वन्मते रूप्याभावे रूप्यधिय इव सत्त्वाभावे सत्त्वबुद्धेरयोगाद्, उत्पत्त्यादौ लाघवेन कदाचित्सत्त्वस्यैव तंत्रतया सत्त्वहीनस्य रूप्यादेरुत्पत्त्याद्ययोगाच्च, व्यावहारिके प्रातिभासिकादर्थगतविशेषाभावे तत्रार्थक्रियादेः श्रुतीनां व्यावहारिकविषयत्वेन प्रामाण्यस्य चायोगाच्च। दीर्घभ्रान्तिहेतुत्वे नभो नैल्यभ्रमहेतोरिवाप्रामाण्यातिशय एव स्यात्। नान्त्यः, असतः साधकत्वभंगे आरोपितानारोपितानुगतं सामान्यं नास्तीत्युक्तत्वात्। व्यावहारिकस्य चानारोपितविशेषत्वेऽस्मदभिमतसिद्धेः।

किं च पारमार्थिकापारमार्थिकयोर्नतावद् बाधाबाधाभ्यां भेदः, मिथ्यात्वभंगे उक्तरीत्याऽध्यस्तेऽपि स्वरूपाबाधस्य ब्रह्मण्यप्याकारबाधस्य सत्त्वात् जगद्बाधकस्य च सप्रकारकत्वे तस्यैव प्रकारस्याबाध्यत्वापातात्। निष्प्रकारकत्वे च बाधकत्वायोगाद्, व्यावहारिकप्रातिभासिकयोरपि न तावन्मायिकत्वाविद्यकत्वाभ्यां भेदः, नाप्यर्थक्रियाकारित्वतदभावाभ्यामादानादिनिर्वाहकत्वतदभावाभ्यां वा भेदः, अर्थगतविशेषाभावे तदयोगात्, स्वाप्नेऽपि कुम्भादौ स्वाप्नजलाहरणाद्यर्थक्रियाकारित्वादेः सत्त्वाच्च। व्यावहारिकस्य तस्य विवक्षायां चात्माश्रयात्। नापि ब्रह्मधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां भेदः, त्वन्मते रूप्यादेरपि शुक्त्यवच्छिन्नब्रह्मधीबाध्यत्वात्। ब्रह्मण्यध्यस्तस्य प्रातिभासिकस्य क्षणिकत्वादेरपि ब्रह्मधीबाध्यत्वाच्च। नापि ब्रह्मप्रमाबाध्यत्वतदन्यप्रमाबाध्यत्वाभ्यां भेदः, त्वन्मते ब्रह्मज्ञानस्यैव प्रमात्वात्। नापि प्रमाबाध्यत्वभ्रान्तिबाध्यत्वाभ्यां भेदः, भ्रान्तिबाध्यत्वस्य ब्रह्मण्यपि सत्त्वात्। नापि

शुद्धब्रह्मधीबाध्यत्व- तदन्यधीबाध्यत्वाभ्यां भेदः, शुद्धशब्देन भ्रान्तिदशायामज्ञाताधिष्ठानभूतविशेष्यमात्रोक्तौ तज्ज्ञानस्याबाधकत्वात्, तत्कालाज्ञानेन द्वितीयाभावादिना विशिष्टस्योपलक्षितस्य चोक्तौ वेदान्तानामखंडार्थत्वहानेः, द्वितीयाभावादेः पारमार्थिकत्वापाताच्च। एतेन महावाक्यजन्यधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा चरमधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा भेद इति निरस्तम्। महावाक्यजन्यस्य चरमस्य चाखंडार्थवेदान्तजन्यतया निष्प्रकारकत्वेन बाधकत्वायोगात्। सप्रकारकत्वे च तस्य प्रकारस्य तात्त्विकत्वापत्तेः। अत एव न निष्प्रकारकबाध्यत्वसप्रकारकबाध्यत्वाभ्यां भेदः। नापि पारमार्थिकविषयधीबाध्यत्वव्यावहारिकविषयधीबाध्यत्वाभ्यां भेदः, अन्योन्याश्रयात्। नाप्यन्योन्येतरत्वाभ्यां भेदः, भेदकाभावे इतरेतरत्वस्यैवायोगाद्, अन्योन्याश्रयाच्च। तस्माज्जगतः सत्यत्वात् समन्वयाध्यायोक्तन्यायैः सत्यजगत्कर्तृत्वाद्यनन्तगुणे ब्रह्मणि वेदान्ताः प्रमाणमिति। सत्तात्रैविध्यभंगः।

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां
शिष्येण व्यासयतिना संगृहीते न्यायामृते
प्रथमः परिच्छेदः॥

## अद्वैतसिद्धिः

ननु– एवं सत्त्वत्रैविध्यविभागो नोपपद्यते, प्रातिभासिकादप्यपकृष्टस्य स्वाप्नरूप्यस्य व्यावहारिकादप्युत्कृष्टाया अविद्यानिवृत्तेः सद्भावादिति चेन्न, स्वाप्ने प्रातिभासिकनिकृष्टत्वे प्रमाणाभावात्। तथा हि प्रातिभासिकत्वं हि प्रतिभासमात्रसत्त्वम्, तच्च स्वप्नजागरयोः समानम्। ननु जागरे अधिष्ठानतावच्छेदकेदमंशस्याधिकसत्ताकत्वम्, स्वप्नकाले तस्यापि प्रातिभासिकत्वमित्येव निकृष्टत्वमिति चेन्न, स्वप्ने हि इदमो नाधिष्ठानावच्छेदकत्वम्, तुल्यवदारोप्यत्वात्। तत्राधिष्ठानमविद्यावच्छिन्नमेव चैतन्यमिति वक्ष्यते। अविद्यानिवृत्तेः पञ्चमप्रकारतापक्षे संसारकालीनसत्त्वस्यैवायं विभाग इति न न्यूनता। यद्वा– अविद्यानिवृत्तेः सत्त्वाभावेन सत्त्वविभागे न तदसंग्रहनिबन्धनो दोषः। वस्तुतस्तु– अविद्यानिवृत्तिः ब्रह्मस्वरूपा अनिर्वचनीया वेति न विभागन्यूनता। न च विभागस्य तात्त्विकत्त्वे अपसिद्धान्तः,

(अद्वैतसिद्धिः)
अतात्त्विकत्वे त्रिविधत्वं गतमेवेति वाच्यम्, ब्रह्मातिरिक्तमतात्त्विकमिति वदतो विभागातात्त्विकत्वस्येष्टत्वात्। न च तर्हि तात्त्विकत्रैविध्यहानिः, को हि त्रैविध्यस्य तात्त्विकत्वं ब्रवीति? किंतु व्यावहारिकत्वमेव। न च तात्त्विकस्य ब्रह्मणोऽतात्त्विकाच्छुक्तिरूप्याद् बाधाधिगम्यस्य विभागस्य कथमतात्त्विकत्वमिति वाच्यम्, बाधबोध्यत्वं न तात्त्विकत्वे प्रयोजकम्, किंत्वबाध्यत्वम्। तच्च न ब्रह्मातिरिक्तवृत्ति, नेह नानेत्यादिना बाधात्। न च त्रिविधसत्त्वाङ्गीकारे ब्रह्मैव सदिति स्वमतविरोधः, तस्य परमार्थसद् ब्रह्मैवेत्येतत्परत्वात्। एतेन विश्वमिथ्यात्वब्रह्मनिर्विशेषत्वादावप्येवं विकल्प्य दूषणमित्यपास्तम्।

ननु– अत्र परमार्थसदेव सदितरद् द्वयं सद्विलक्षणमेव सत्त्वेन भाति, बाधविलम्बाविलम्बाभ्यां तद्भेद इत्यभिप्रेतम्? उत वा सत्त्वस्यैवावान्तरभेद इति? नाद्यः, त्वन्मते रूप्याभावे रूप्यधीरिव सत्त्वाभावे सत्त्वबुद्धेरयोगात्। कदाचिदपि सत्त्वाभावे तुच्छवदुत्पत्त्याद्ययोगात्, व्यावहारिके प्रातिभासिकादर्थगतविशेषाभावेन तत्रार्थक्रियादेः श्रुतीनां तद्विषयत्वेन प्रामाण्यस्य चायुक्त्यापातात्। प्रत्युत नभो नैल्यभ्रमहेतोरिव अर्थभ्रान्तिहेतुत्वेनाप्रामाण्यनिश्चय एव स्यात्। नान्त्यः, आरोपितानारोपितसाधारण-सामान्यधर्माभावाद्, व्यावहारिकस्यानारोपितविशेषत्वे इष्टापत्तेश्चेति चेन्न, द्वितीयपक्षस्यैव क्षोदक्षमत्वात्। तथा हि अबाध्यत्वरूपमारोपितानारोपितयोः सामान्यम्। अन्यदा बाध्येऽपि स्वकालाबाध्यत्वमात्रेणारोपितेऽपि तस्य संभवात्, आरोपितानारोपितयोरेकसामान्याभावे प्रवृत्त्याद्यनुपपत्तेरुक्तत्वात्। अत एवोक्तम्–

आकाशादौ सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या।
तत्सम्पर्कात् सत्यता तत्र चान्या व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र ॥ इति।

यथा प्रातिभासिकरजते ज्ञातैकसदेकं रजतत्वम्, लौकिकपरमार्थरजते चाज्ञातसदपरं रजतत्वम्, तदुभयानुगतं चारोपितानारोपितसाधारणं रजतत्वं रजतशब्दालम्बनम्, एवमाकाशादावारोपितैका सत्यता, चिदात्मनि चानारोपिताऽपरा, तदुभयसाधारणी चान्या व्यावहारिकी सत्यता सत्यशब्दालम्बनमिति भावः। सद्विशेषत्वेऽपि व्यावहारिकस्य प्रपञ्चस्य नानारोपितविशेषत्वम्, येनेष्टापत्तिरवकाशमासादयेत्, सत्त्वस्यानारोपितत्वात्मकत्वाभावात्। सत्त्वाङ्गीकारादेव नोत्पत्त्यादिविरोधोऽपि। न च– स्वरूपेण बाध्यत्वं प्रपञ्चेऽपि नास्ति,

(अद्वैतसिद्धिः)

तुच्छत्वप्रसङ्गात्, पारमार्थिकत्वाकारेण बाध्यत्वं निर्धर्मकतया ब्रह्मण्यप्यस्तीति कथं कदाचिद्बाध्यत्वमादाय व्यावहारिकत्वादिस्थितिरिति वाच्यम्, मिथ्यात्वरूपसाध्यनिरुक्तावेवास्य दत्तोत्तरत्वात्।

यत्तु– सप्रकारकस्यैव ज्ञानस्य प्रपञ्चबाधकत्वं वक्तव्यम्, निष्प्रकारकत्वे बाधकत्वायोगात्, तथा च सप्रकारस्तात्त्विक एव स्यात्– इति, तन्न, स्वरूपोपलक्षणोपलक्षित स्वरूपविषयकव्यावृत्ताकारज्ञानस्यैव निष्प्रकारकत्वेपि बाधकत्वमित्यस्यापि प्रागेवोक्तत्वात्। स्वरूपोपलक्षणनिबन्धनव्यावृत्ताकारत्वेऽपि यथा नाखण्डार्थत्वक्षतिः तदप्युक्तमधस्तात्।

ननु– व्यावहारिकप्रातिभासिकयोर्बाध्यत्वाविशेषे किंन्निबन्धनो भेदः? न तावन्मायिकत्वाविद्यकत्वाभ्यां भेदः, मायाविद्ययोरभेदात्। अर्थगतविशेषाभावे तदयोगाच्च। नाप्यर्थक्रियाकारित्वाकारित्वाभ्यां विशेषः, स्वाप्नघटादौ स्वाप्नजलाहरणाद्यर्थक्रियादर्शनात्। न चार्थक्रियायां व्यावहारिकत्वं विशेषणम्, अन्योन्याश्रयात्, स्वाप्नाङ्गनालिङ्गनादौ प्रातिभासिके व्यावहारिकसुखजनके अतिव्याप्तेश्च। नापि ब्रह्मज्ञानबाध्यत्वतद्भिन्नज्ञानबाध्यत्वाभ्यां विशेषः, त्वन्मते रूप्यादेरपि शुक्त्यवच्छिन्नब्रह्मधीबाध्यत्वाद्, ब्रह्मण्यध्यस्तस्य क्षणिकत्वादेरपि प्रातिभासिकस्य ब्रह्मधीबाध्यत्वेनातिप्रसङ्गाच्च। नापि ब्रह्मप्रमाबाध्यत्वतदन्यप्रमाबाध्यत्वाभ्यां विशेषः, त्वन्मते ब्रह्मज्ञानस्यैव प्रमात्वात्। नापि प्रमाबाध्यत्वभ्रान्तिबाध्यत्वाध्यां विशेषः, भ्रान्तिबाध्यत्वस्य ब्रह्मण्यपि सत्त्वात्। नापि पारमार्थिकविषयधी-बाध्यत्वव्यावहारिकविषयधीबाध्यत्वाभ्यां विशेषः, अन्योन्याश्रयात्। नाप्यन्योन्येतरत्वाभ्याम्, भेदकाभावे इतरत्वस्यैवायोगाद्, अन्योन्याश्रयाच्चेति– चेन्न, सप्रकारकनिष्प्रकारक-ज्ञानबाध्यत्वाभ्यां शुद्धब्रह्मधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा महावाक्यजन्यधीबाध्यत्व-तदन्यधीबाध्यत्वाभ्यां वा स्वबाधकधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा भेदसंभवात्। शुद्धशब्देन निर्धर्मकाधिष्ठानमात्रमेवात्र विवक्षितम्। न च– निर्धर्मकं यद् वस्तुगत्या तज्ज्ञानं भ्रमकालेऽपि, निर्धर्मकत्वविशिष्टस्य तदुपलक्षितस्य वा ज्ञानं चेद्विवक्षितं, तदा अखण्डार्थताहानिः, प्रकारीभूतनिर्धर्मकत्वद्वितीयाभावादेस्तात्त्विकत्वापत्तिश्चेति – वाच्यम्, निर्धमकं यद् वस्तुगत्या तन्मात्रगोचरज्ञानस्य विवक्षितत्वात्, तस्य च भ्रमकालेऽभावात्। निधर्मकत्वादि-स्तद्बुद्धावुपायत्वमात्रम्, न तु तद्बुद्धौ विषयत्वम्। अतो नाखण्डार्थताहानिप्रकार-तात्त्विकत्वापत्ती। निष्प्रकारकत्वेऽपि संशयादिनिवर्तकत्वमुपपादितमेव। तस्मादज्ञानोपादानकं जगत् मिथ्येति सिद्धम्।

(अद्वैतसिद्धिः)

उपाधिबाधप्रतिपक्षशून्यं विपक्षबाधागमसव्यपेक्षम् ।
दृश्यत्वमव्याहतमम्बरादिमिथ्यात्वसिद्धौ सुदृढं हि मानम् ॥

तदेवं दृश्यस्य प्रपञ्चस्य मिथ्यात्वात्तदतिरिक्तब्रह्मरूपाखण्डार्थनिष्ठवेदान्तवाक्यं परतत्त्वावेदकम्। सखण्डार्थविषयकं सर्वमतत्वावेदकमेवेति। यद्यपीदं ब्रह्मज्ञानाव्यवहितभ्रमविषये प्रातिभासिके व्यावहारिकलक्षणमतिव्याप्तम्। प्रातिभासिकलक्षणं चाव्याप्तम्; तथापि करणसंसर्गिदोषप्रयुक्तत्वं तदसंसर्गिदोषप्रयुक्तत्वं च तयोर्लक्षणं निरवद्यम्। इति सत्त्वत्रैविध्योपपत्तिः।

अविद्यातत्कार्यात्मकनिबिडबन्धव्यपगमे ।
यमद्वैतं सत्यं प्रततपरमानन्दममृतम् ॥
भजन्ते भूमानं भवभयभिदं भव्यमतयो ।
नमस्तस्मै नित्यं निखिलनिगमेशाय हरये ॥ १ ॥

अनादिसुखरूपता निखिलदृश्यनिर्मुक्तता ।
निरन्तरमनन्तता स्फुरणरूपता च स्वतः ॥
त्रिकालपरमार्थता त्रिविधभेदशून्यात्मता ।
मम श्रुतिशतार्पिता तदहमस्मि पूर्णो हरिः ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीचरणशिष्यश्रीमधुसूदन सरस्वतीविरचितायामद्वैतसिद्धौ सपरिकरप्रपञ्चमिथ्यात्वनिरूपणं नाम प्रथमः परिच्छेदः॥ १ ॥

## न्यायामृततरङ्गिणी

**॥ स्वाप्नशुक्ताविति ॥ स्वप्ने बाधाबाधाभ्यामपकर्षोत्कर्षौ। एतेन स्वप्नेपीदमंशस्य नाधिष्ठानतावच्छेदकत्वं। तुल्यवदारोप्यत्वात्। किं त्वविद्याया इति निरस्तं। इदमंशस्य तदनवच्छेदकत्वेपि स्वप्ने बाधाभावेन तत्राध्यस्तरूप्यादुत्कृष्टत्वात् ॥ पंचमप्रकारेति ॥ न च संसारकाले सत्त्वस्यायं विभाग इति वाच्यं। मुक्तिदशानुगतब्रह्मसत्त्वासंग्रहापातात्।**

(तरङ्गिणी)

यत्त्वविद्यानिवृत्तौ सत्त्वमेव नास्तीति न तत्संग्रह इति। तन्न। तस्यास्तुच्छत्वापत्तेः। ब्रह्मस्वरूपत्वे त्वसाध्यत्वं ॥तात्विकस्येति॥ ब्रह्मणः शुक्तिरूप्यात् विभागस्यातात्विकत्वे ब्रह्मणोपि रूप्यवदतात्विकत्वं स्यात्। क्वचिच्छुक्तिरूप्यादि वेति पाठः। स त्वयुक्तः। ननु बाधगम्यत्वं न तात्विकत्वे प्रयोजकं। किं त्वबाध्यत्वं। तच्च न ब्रह्मातिरिक्ते। नेह नानेति श्रुतिविरोधादित्यत आह ॥अन्यथेति॥ अस्थूलमनण्वित्यादिप्रपंचाद्विभागश्रुतिः। नेह नानेति श्रुत्यर्थस्तूक्तः। सत्त्वस्यानुगतस्याभावत्तदवांतरभेदो न संभवतीत्याह ॥नांत्य इति॥ ननु संक्षेपशारीरके—

आकाशादौ सत्यता तावदेका ।<br>
प्रत्यङ्मात्रे सत्यता काचिदन्या ॥<br>
तत्संपर्कात्सत्यता काचिदन्या ।<br>
व्युत्पन्नोयं सत्यशब्दस्तु तत्र ॥

यथा प्रातिभासिकरजते ज्ञातैकसदेकं रजतत्वं लौकिकपरमार्थरजते चापरं रजतत्वं तदुभयानुगतं चारोपितानारोपितसाधारणं रजतत्वं रजतशब्दावलंबनं एवमाकाशादावारोपितैका सत्यता। चिदात्मनि चानारोपितापरा। तदुभयसाधारणी चान्या व्यावहारिकी सत्यता सत्यशब्दावलंबनमित्युक्तत्वेनारोपितानारोपि तयोरपि सामान्यमस्तीति चेन्मैवम्। उभयानुगतसामान्यस्योभयात्मकताया विरोधस्योक्तत्वात्। व्यावहारिकं किमारोपितकोटावुत्कृष्टं वाऽनारोपितकोटौ वा। आद्ये श्रुत्यादेरुत्कृष्टभ्रांतिहेतुत्वं। द्वितीये अव्यावहारिकस्येति। उभयबहिर्भावे च विरोध इति भावः। अबाध्यस्य पारमार्थिकत्वे दोषमाह ॥जगद्बाधकस्येति॥ तथाच जगद्बाधकज्ञानविषयीभूतप्रकारस्य पारमार्थिकत्वं स्यादित्यर्थः ॥तदभावादिति॥ मायाया मायिकत्वस्याविद्याया आविद्यकत्वस्याभावात् ॥प्रातिभासिकत्वाच्चेति॥ व्यावहारिकत्वाभावात् ॥असाधारणस्येति॥ तत्तद्देहावच्छेदेन नियतस्य ॥व्यावहारिकत्वाच्चेति॥ प्रातिभासिकत्वाभावात् ॥त्वयैवेति॥ रूप्यस्य मायिकत्वं वर्णयता ॥अर्थगतेति॥ अर्थे विशेषे सति तन्निबंधनावर्थक्रियाकारित्वतदभावौ। नत्वर्थक्रियाकारित्वतदभावरूप एवार्थे विशेष इत्यर्थः ॥आत्माश्रयादिति॥ स्वप्नांगनालिंगनादौ प्रातिभासिकेपि व्यावहारिकार्थक्रियादर्शनादित्यपि बोध्यं ॥ब्रह्मधीति॥ अधिष्ठानधीबाध्यत्वादध्यस्तस्य ॥त्वन्मत इति॥ तथाच ब्रह्मपदं व्यर्थं। ननु ब्रह्ममात्रगोचरा या धीस्तद्बाध्यत्वं विवक्षितं। तादृशी चरमवृत्तिरेवेत्याशंक्य निराकरोति ॥तज्ज्ञानस्येति॥ विशेष्यमात्रगोचरज्ञानस्याबाधकत्वादित्याशंक्य निराकरोति ॥चरमधीति॥ ॥महावाक्येति॥ तादृशज्ञानस्याप्रसिद्धिरित्यपि बोध्यं ॥अन्यथा स्वापेक्षया स्वस्येतरत्वप्रसंगः। ननु व्यावहारिकगतेनेतरत्वेन प्रातिभासिक इतरत्वसिद्धिः प्रातिभासिकगतेन च तेन

(तरङ्गिणी)

व्यावहारिकेतत्सिद्धिरिति भेदकाभावेपीतरत्वसिद्धिरित्यत आह ।। अन्योन्याश्रयाचेति ।। परिच्छेदार्थमुपसंहरन्वक्ष्यमाणमुपक्षिपति ।। तस्मादिति ।।

जात्याद्युक्तबलेक्षणानुमिति सत्सूत्रागमानायतो ।
न्यक्कारच्छिदसिद्धिपूर्वसकलाभासाक्षपक्षक्षितं ।।
ब्रह्मैवेदमिति श्रुतिप्रमुखसन्मातृप्रियत्वच्युतं ।
दृश्यत्वादिकुवादिहेतुवटकं कोवाऽऽद्रियादद्रिहृत् ।। १ ।।
विश्वं भद्रमवन्ति यद्दिविषदः सत्यं तदित्यादिकं ।
श्रुत्या तर्कमुदर्क एव बहुलाभद्रादिशब्दं श्रिता ।।
शंकासिद्धिमहांशुकाहनकशाशंकालवोत्सर्गतः ।
प्रामाण्येन दृढे क्षणेन विमतेस्तत्वं चितीवस्थितं ।। २ ।।
शुकादिदिग्गोभिरपींद्रसंपदो यदिच्छयाकाकणिकाधरीकृताः ।
सवल्लवीपल्लववेल्लितांगुलिर्मुरद्विषंस्तुष्यतु मे वचः श्रिया ।।
व्यासाद्रिसृततर्कांबुपूरैः पक्षयुगंयुजि ।
न्यायामृततरंगिण्यां सत्तात्रैविध्यखंडनं ।। ४ ।।

।। सत्तात्रैविध्यभंगः ।।

नविद्याभीराभीरवगतिबिभत्साभिरबुधा ।
जिगीषाभिः किंतु स्ववचसिशुशुत्साभिरकृपि ।।
तरंगिण्याख्यां तां बुधजनघनः सूक्तिसलिलैः ।
नयेत्पूर्णप्रज्ञोदितनिगमसिद्धांतजलधिम् ।। ५ ।।
सद्योजातजटाजपावनसरिद्गोदावरीतीरतो ।
गव्यूतिर्वसतिः सतां कुलवतामंबापुरी तत्र ये ।।
व्यासाख्या उपमन्युगोत्रजबुधास्तेष्वास्त यो मुद्गलः ।
स्तत्राजायत ये मुरारिचरणा व्यासाभिधाना बुधाः ।। ६ ।।
तेभ्योऽजायतविश्वनाथ इति यस्सज्ज्ञानरत्नाकरः ।
स्तस्मादाविरभूत्सुरद्रुमयशा आचार्यनारायणः ।।
रामाचार्य इतीरितस्तदनुजो यस्तत्ववादां बुधेः ।
आनीत्सतरंगिणीमिहपरिच्छेदोयमाद्योपि यः ।। ७ ।।

इति श्रीव्यासरामाचार्यविरचितायां न्यायामृततरंगिण्यां
प्रथमः परिच्छेदः ।। १ ।।

## न्यायामृतकण्टकोद्धारः

ननु तथापि सत्रैविध्यान्यथानुपपत्याऽनिर्वचनीयत्वं स्वीकर्तव्यमेव। तत्कथमनिर्वचनीयाभाव इत्यतोऽसिद्धेर्नासिद्धं साध्यत इति वक्तुं परमतमुपन्यस्यति ॥यच्चेदमिति॥ सत्रैविध्येप्रमाणाभावात्। न हि प्रत्यक्षादिप्रमाणेन तथा कस्यापि प्रतीतिरिति दूषणे सत्येव दूषणांतरमाह ॥स्वाप्नेति॥ न च जागरप्रातिभासिकात् स्वाप्नप्रातिभासिकत्वस्य निकृष्टत्वे प्रमाणाभावः प्रतिभासमात्रशरीरत्वस्याविशेषादिति वाच्यम्। प्रातिभासिकत्वाविशेषेऽप्येकत्राधिष्ठानतावच्छेदकेदमंशस्यारोप्यादधिकसत्त्वमपरत्र समसत्त्वमिति विशेषसद्भावात्। न च स्वप्ने नेदमंशस्याधिष्ठानतावच्छेदकत्वं किंत्वविद्यावच्छिन्नचैतन्यस्यैवाधिष्ठानत्वेनाविद्याया एवावच्छेदकत्वादिति वाच्यम्। तथात्वेऽविद्या रूप्यमिति भ्रमापत्तेः। न ह्यधिष्ठानानुल्लेखी भ्रमो दृष्टः। अन्यथाऽधिष्ठानत्वेन ब्रह्मसिद्धिर्न स्यात्। स्वप्नेऽविद्याया अप्यारोप्यत्वेन शुक्तिवदधिष्ठानतावच्छेदकत्वायोगात्। न च संसार समानकालीनसत्त्वस्यैव विभागात् पञ्चमप्रकाराविद्यानिवृत्तिपक्षे तस्यास्तदसमानकालीनत्वान्न विभागन्यूनतेति वाच्यम्। बहुजीववादपक्षे तस्यास्तत्समकालीनत्वात्। तस्याश्च तत्पक्ष एव संभवात्। अन्यथा संसारनिष्ठसत्त्वस्यैव विभागापत्या विभागन्यूनत्वापरिहारात्। नचाविद्यानिवृत्तेः सत्त्वाभावेन सत्त्वविभागे तदसंग्रहो न दोषायेति वाच्यम्। तस्या अपि दृश्यत्वादिना जगद्वत् सत्त्वस्यावश्यकत्वात्। असत्त्वे च मोक्षाभावः। श्रवणादिसाध्यत्वं च न स्यात्। न चाविद्यानिवृत्तिर्ब्रह्मरूपा वाऽनिर्वचनीया वेति न विभागन्यूनतेति वाच्यम्। ब्रह्मरूपत्वे श्रवणादिसाध्यत्वं न स्यात्। सदा मुक्तत्वापत्तेश्च। अनिर्वचनीयत्वेऽनिर्वचनीयस्य निवृत्तिनियमात् मुक्तस्य संसारित्वापत्तेरिति दिक् ॥बाधगम्यस्येति॥ न च बाधगम्यत्वं न तात्विकत्वे प्रयोजकम्। किं त्वनिषेध्यत्वम्। विभागस्तु ब्रह्मातिरिक्तत्वात् नेह नानेति निषेधादिति वाच्यम्। निषेध्यत्वे बाधगम्यत्वानुपपत्तेः। नहि स्वेनैव विधीयते निषिध्यत इति संभवति। अन्यथाऽधिष्ठानस्यापि निषेध्यत्वे तात्विकत्वाभावप्रसंगात्। विरोधस्याविशेषात्। इष्टापत्तेश्च। तात्त्विकविभागस्यैवास्माकमनिष्टत्वात्। अत एवाह ॥कृतकृत्योहमिति॥ एतेन मिथ्यात्वादावपि विकल्पदूषणनिराकरणमपहस्तितम्। किञ्च सत्रैविध्यं तदा स्याद्यदि सत्त्वसामान्यं स्यात्। सामान्येनोद्दिष्टस्य हि विशेषविभागः। न च सत्त्वसामान्यं त्वया वक्तुं शक्यम्। इति दूषयितुं विकल्पेन पृच्छति ॥किञ्चेति॥ ॥त्वन्मत इति॥ सर्वथा वस्त्वभावे तत्प्रत्यक्षानभ्युपगमादिति भावः ॥लाघवेनेति॥ असद्विलक्षणत्वाद्यपेक्षया सत्त्वस्य लघुत्वादिति भावः ॥व्यावहारिक इति॥ लाघवेनार्थक्रियादौ सत्त्वस्यैव तंत्रत्वादिति भावः ॥असत इति॥ न चारोपितानारोपितसामान्याभावे रजतार्थिनः शुक्तिरूप्यादौ प्रवृत्तिर्न स्यादिति वाच्यम्। न हि सामान्यमिति ज्ञानं प्रवर्तकम्। तदभावेऽपि इष्टतावच्छेदकरजतत्वप्रकारकज्ञानमात्रात् प्रवृत्युपपत्तेः। आश्रयाभावे सामान्यायोगाच्च। अतिप्रसंगानां चासतः साधकताभंग उक्तत्वादिति भावः ॥व्यावहारिकस्य चेति॥ न च सद्विशेषत्वेऽप्यनारोपितविशेषत्वाभावान्नेष्टापत्तिरिति वाच्यम्। अनारोपितत्वातिरिक्तस्य तस्य निर्वक्तुमशक्यत्वात्। न चाबाध्यत्वमेव सत्त्वमिति वाच्यम्। तस्यानारोपितत्वव्याप्यत्वेनारोपितत्वे तदयोगात्। न ह्यारोपितमबाध्यं च संभवति। न च स्वकालाबाध्यत्वमध्यस्तस्याप्यस्तीति वाच्यम्। पुरुषविशेषं प्रति तत्कालेऽपि बाध्यात्। अंतत इश्वरं प्रति बाधसंभवाच्चेति दिक्। एवं सामान्याभावान्न विशेषविभागः। भेदकाभावाच्च न विशेषविभाग इत्याह ॥किञ्चेति॥ अत्र स्वरूपाबाधस्याध्यस्तेऽपि सत्त्वात् आकारबाधस्य च ब्रह्मण्यापि सत्त्वादित्यन्वयः।

(कण्टकोद्धारः)

इदं च मिथ्यात्वनिरुक्तिभंग एवोपपादितमिति तेनैवानुसंधेयम् ॥प्रकारस्येति॥ न च प्रकारोपि तेनैव बाध्यत इति वाच्यम्। बाधितप्रकारकज्ञानस्य बाधकत्वायोगात्। अन्यथाऽतिप्रसंगात् ॥निष्प्रकारकत्वे चेति॥ न च स्वरूपोपलक्षणोपलक्षितस्वरूपविषयताकव्यावृत्ताकारज्ञानस्य निष्प्रकारकत्वेऽपि बाधकत्वमिति वाच्यम्। निष्प्रकारकत्वे व्यावृत्ताकारत्वायोगात्। सप्रकारस्यैव व्यावृत्ताकारत्वेन दर्शनात् अन्यथोपपत्तेश्च नादृष्टकल्पना उपलक्ष्ये विशेषाभावेन उपलक्षितत्वायोगस्योक्तत्वाच्च। उपलक्षणस्य बाध्यत्वे तस्य व्यावृत्ताकारोपलक्षकत्वायोगाच्च। बाध्यत्वेऽपसिद्धान्तः। ब्रह्मणो निराकारत्वेन व्यावृत्ताकारज्ञानायोगाच्च। अखण्डार्थत्वहानेश्च। यथा चैतत्तथोपपादितमधस्तात्।

इदानीं व्यावहारिकप्रातिभासिकयोर्भेदकं खण्डयितुमाह ॥व्यावहारिकेति॥ ॥मायेति॥ मायाविद्याजन्यत्वतदधीनत्वयोः मायाविद्ययोरयोगादात्माश्रयादिति भावः ॥मायिकस्येति॥ तथाचातिव्याप्तिरिति भावः ॥असाधारणस्येति॥ आविद्यकस्येत्यर्थः। न च दुःखादिकमपि प्रातिभासिकमिति वाच्यम्। तथात्वे ब्रह्मधीबाध्यत्वायोगात् ॥त्वयैवेति॥ एकाज्ञानवादिनेत्यर्थः ॥नापीति॥ न च पौनरुक्त्यं सामान्यविशेषाभ्यां विशेषोपपत्तेः ॥अर्थेति॥ अवच्छेदकाभावेऽर्थक्रियाकारित्वादेर्गृहीतुमशक्यत्वं तत्सत्वे तयोरेव भेदकत्वसंभव इति भावः। व्यावहारिकेति स्वलक्षणे स्वस्य प्रवेशादिति भावः। न च यद्वस्तुगत्या निर्धर्मकं तन्मात्रगोचरं ज्ञानं शुद्धज्ञानं विवक्षितम्। तच्च भ्रमकाले नास्ति। निर्धर्मकत्वादेः स्वरूपसत एवोपेक्षीणत्वान्ना-खण्डार्थत्वहानिरपीति वाच्यम्। तादृशज्ञानस्यासिद्धेः। शब्दस्य वा प्रत्यक्षस्य वा तदजनकत्वात्। नापि तादृशधियो बाधकत्वम्। शुक्तिनिर्विकल्पकस्यापि बाधकतापत्तेः। निर्धर्मकत्वादेर्ज्ञानाविषयस्य बाधकत्वप्रयोजकत्वे शुक्तित्वादेरपि तथात्वापातात्। तद्विषयत्वे चाखण्डार्थत्वहान्यादेर्दुर्वारत्वात्। निर्धर्मकत्वादेः स्वव्याहत्यादिना उपायत्वासंभवाच्च। निष्प्रकारकत्वे संशयाद्यनिवर्तकत्वस्य प्रागेवोक्तत्वाच्च। एतेनेति परामृष्टं हेतुमाह ॥महावाक्येति॥ उपलक्षणमेतत्। शब्दस्य निष्प्रकारज्ञानजनकत्वासंभवाच्चेत्यपि द्रष्टव्यम् ॥अत एवेति॥ निष्प्रकारकस्य बाधकत्वायोगादेवेत्यर्थः ॥अन्योन्येति॥ पारमार्थिकत्वस्यैव निरुच्यमानत्वादिति भावः ॥भेदकेति॥ ननु चेतरत्वादेव भेदकानुमानमित्यत आह ॥अन्योन्येति॥ परमप्रकृतमुपसंहरति ॥तस्मादिति॥ जगतो मिथ्यात्वप्रमाणाभासानां दूषितत्वादित्यर्थः। तस्मात् कृत्स्नमपि वेदान्तवाक्यं तत्वावेदकमेव। न तु किञ्चित्तत्त्वावेदकं किञ्चिदतत्त्वावेदकमिति विभाग इति ॥ इति सत्तात्रैविध्यभंगः।

इति श्री पाण्डुरङ्गि आनन्दभट्टारकविरचिते
न्यायामृतकण्टकोद्धारे प्रथमः परिच्छेदः

# APPENDIX - I

The Authors and the works quoted in
Nyāyāmṛtam, Advaitasiddhi and the three commenteries.

## The Authors ग्रन्थकर्तारः

१. काशिकाकारः - तर - १४१
२. खण्डनकृत् - सिद्धि - १३३
३. भारतीतीर्थः - न्या - ३
४. वार्त्तिककृत् -(कुमारिलः)
सिद्धिः - १०१, १३२, तर - ११४
५. वार्त्तिककृत् - (सुरेश्वरः) - न्या - ३,
सिद्धि-६२, २५९, ३३७
६. वाचस्पतिमिश्रः - न्या-४४३, ४८८,
सिद्धि-४४५, ४९६
७. विष्णुपादाचार्यः - प्र-१६४

## The works ग्रन्थाः

१. अनुव्याख्यानम् - प्र-४८३
२. अमरकोशः - न्या-२०४
३. इष्टसिद्धिः - प्र-५३
४. उपदेशसाहस्री - न्या-३, सिद्धि-१०
५. कुसुमाञ्जलिः - न्या-६२२
६. कौमुदी - (अद्वैतग्रन्थः) न्या-७,
७. खण्डनम् - न्या-१२९
८. खण्डनखण्डनम् - न्या-१३१
९. छान्दोग्यभाष्यम् - ४८७
१०. जैमिनीयसूत्रम् - तर-२७०
११. प्रणिधानसूत्रम् - तर-७३
२. बृहदारण्यकम् - तर-२१४
३. भारतम् - न्या-२६९, २०३
१४. महाभाष्यम् - सिद्धि-१०१, तर-१७५
१५. मोक्षधर्मः - न्या-४८७, सिद्धिः - ४९५
१६. सुरेश्वरवार्त्तिकम् - सिद्धि-६२, तर-७०,
२६१, न्या-४१५
१७. कुमारिलवार्त्तिकम् - त-२०, १०८, १०९,
१०२, १४१, १७१, १९१, २६४, न्या-
१२८, प्र-१५८
१८. विवरणम् - न्या-२५५, २९८
१९. विष्णुपुराणम् - न्या-२५७
२०. वासिष्ठवार्त्तिकामृतम् - सिद्धि-२७७
२१. संक्षेपशारीरकम् - तर-२७०
२२. सिद्धान्तबिन्दुः - सिद्धि-२७७
२३. हरिवंशम् - न्या-३९३

# APPENDIX - II
## न्यायामृते सङ्ग्रहश्लोकाः

**'मिथ्यात्वहेतूनां प्रतिकूलतर्काः' इति प्रकरणे**

१. अधिष्ठानस्य कात्स्न्र्येन ज्ञानेऽज्ञाने च न भ्रमः ।
ज्ञाताज्ञातविभागस्तु निर्विशेषे न युज्यते ।। ५६
२. प्रधानमिव धीमात्रादधिष्ठानमपि भ्रमे ।
हेतुस्सुगतरीत्या स्यादबाधस्तु द्वयोस्समः ।। ५७
३. लोकेऽधिष्ठानवत् सत्यो दोषादिर्भ्रमकारणम् ।
दृष्टोऽतो ब्रह्मवत्सत्यो दोषादिस्स्याज्जगद्भ्रमे ।। ५९

सामान्येन मिथ्यात्वे श्रुतिनिरासप्रकरणे

४. शब्दार्थतद्योग्यतयोस्तुल्यत्वाद्योग्यता सती ।
न चेद्वेदोऽप्रमाणं स्याद् वृषलोद्वाहमन्त्रवत् ।।९८

द्वैतप्रत्यक्षस्य अद्वैतश्रुतिबाधकत्वखण्डनभङ्गप्रकरणे

५. प्रत्यक्षाप्रसक्तं चेदप्रसक्तनिषेधता ।
श्रुतेः स्यात्तत्प्रवृत्तं चेत्तद्बाधः सुस्थिरः श्रुतेः ।।

६. अर्थापत्तिः स्वकीयं च भेदं गृह्णाति तं विना ।
अयुक्तेस्तव दृग्दृश्यसंबन्धानुपपत्तिवत् ।। १३१

एकमेवाद्वितीयमिति श्रुत्यर्थविवरणप्रकरणे

७. अधिकं हि विजातीयं सजातीयं समं भवेत् ।
गुणादिकं तु स्वगतं तदभेदोऽत्र निषिध्यते ।। १६७

नेह नानेति श्रुत्यर्थभङ्गप्रकरणे

८. वाक्यशेषस्य धर्माख्यविशेषे पर्यवस्यति ।
किञ्चनेति हि शब्दोऽयम् अक्ताशब्दो घृते यथा ।।
१८५

९. नानेत्यस्य विनार्थत्वाद्विनाभूतं निषिध्यते ।
अविनाभूतमस्तीति सत्तैवार्थात्तु लभ्यते ।। १८५

१०.अन्यथा राघवेणाहं भास्करेण प्रभा यथा ।
व्याख्याऽत्र यादृशी तादृक् नेह नानेति च श्रुतेः ।।
१८६

दृष्टिसृष्टिभङ्गप्रकरणे

११.निर्बाधप्रत्यभिज्ञानात् ध्रुवं विश्वमिति श्रुतेः ।
स्वक्रियादिविरोधाच्च दृष्टिसृष्टिर्न युज्यते ।। २७२

एकजीवाज्ञानकल्पितत्वभङ्गप्रकरणे

१२.एकजीवमतं शब्दयुक्तिप्रत्यक्षबाधितम् ।
तदप्रमाणतायां तु सोऽपि जीवो न सिद्ध्यति ।।
२८९

भावरूपाज्ञानप्रत्यक्षभङ्गप्रकरणे

१३.अभाव इव भावेऽपि ज्ञानाज्ञानविरोधिता ।
न जानामीत्यतश्चोद्यपरिहारौ समौ तयोः ।।३२५

अविद्यानुमानभङ्गप्रकरणे

१४.पक्षदृष्टान्तानुगतं प्रकाशत्वं न विद्यते ।
शब्दसाम्येन चेत् पृथिव्या गोत्वात् श्रृङ्गं
समापतेत् ।। ३६४

अज्ञानस्य चिन्मात्राश्रितत्वभङ्गप्रकरणे

१५.विरोधाद् धर्मिमानेन बाधात् श्रुतिविरोधतः ।
भ्रान्त्यैकाधिकरण्याच्च नाज्ञानं शुद्धिचिद्गतम् ।।
४१२

सर्वज्ञस्य अज्ञानाश्रयत्वभङ्गप्रकरणे

१६.सर्वं हि यो विजानीते तस्य कुत्रापि नाज्ञता ।
न हि यो यद्विजानीते स तत्राज्ञानवान् भवेत् ।।
४३८

अज्ञानस्य जीवश्रितत्वभङ्गप्रकरणे

१७.अविद्याजीवयोर्यत्र व्यपेक्षा तन्निरोधकः ।
अन्योन्यसंश्रयो नो चेदन्योन्याधीनताहतिः ।।
४४३

१८.यद्युत्पत्तिज्ञप्तिमात्रे प्रतिबन्धेन दोषता ।
तर्हि स्याच्चैत्रमैत्रादेरन्योन्यारोहणादिकम् ।।४४४

अविद्याविषयभङ्गप्रकरणे

१९.स्वप्रभत्वेनापरोक्षव्यवहारार्हे आत्मनि ।
तद्योग्यत्वाभावरूपमविद्यावरणं कथम् ।। ४५०

२०.मोहभानार्थमज्ञानभानं यदि च कल्प्यते ।
अज्ञाते मोहहानिश्च तदर्थं किं न कल्प्यते ।।
४५१

२१.साक्षी स्वविषयेऽज्ञानविरोधी न भवेद्यदि ।
तद्वेद्ये सुखदुःखादावज्ञानं केन वार्यते ।। ४५२

अहमर्थस्य अनात्मत्वभङ्गप्रकरणे

२२.अहमर्थे परामर्शो न चेत् स कथमात्मनि ।
अहं ज्ञानान्नान्य आत्मपरामर्शो हि दृश्यते ।।
४८४

२३.अज्ञोऽहमित्याद्यध्यक्षात् तदात्मानमिति श्रुतेः ।
चिति बुद्धौ च कर्तृत्वसाक्षात्कारः कदाचन ।।
५२४

२४.बन्धस्य तदपायेन कृतेस्तत्फलभाक्तया ।
सामानाधिकरण्याच्च न बुद्धेः कर्तृता मता ॥
५२५

२५.अहं करोमीत्यध्यक्षात् फलभाक्त्वादिलिङ्गतः ।
कर्ताऽऽत्मेत्यादिवाक्याच्च स्थितं कर्तृत्वमात्मनः ॥
५२७

२६.अहं गेहीतिवच्चाहं देहीत्येव प्रतीयते ।
न तु देहोऽहमस्मीति कदाचित् कस्यचिन्मतिः ॥

देहात्मैक्याध्यासभङ्गप्रकरणे

२७.ब्राह्मणोऽहं मनुष्योऽहमित्यादिस्तु प्रमैव नः ।
देहभेद्युतो यस्माद् ब्राह्मणादिपदोदितः ॥ ५५०

२८.कृशोऽहं कृष्ण इत्यादौ कार्श्यादिर्देहसंस्थितः ।
पुत्रादिस्थितकार्श्यादिवदात्मन्युपचर्यते ॥
५४६, ५५०

अनिर्वाच्यत्वसाधकानुमान भङ्गप्रकरणे

२९.अविरुद्धौ रूपरसौ सत्त्वासत्त्वे विरोधिनी ।
अन्यथा सदसद्रूपं स्यात्किंचिद् रसरूपवत् ॥
५९१

सत्तात्रैविध्यभङ्गप्रकरणे

३०.अयं विभागः सत्यश्चेदपसिद्धान्त आपतेत् ।
मिथ्या चेत्कृतकृत्योऽहं त्वयैव स्वोक्तदूषणात् ॥

३१.व्यावहारिकसत्येऽपि बाध्योऽबाध्योऽथवा भवेत् ।
उक्तो दोषश्चोभयत्र सर्वमेतेन दूषितम् ॥ ६५५

अद्वैतसिद्धौ सङ्गहश्लोकः

रज्जुसर्पादिवद्विश्वं नाज्ञातं सदिति स्थितम् ।
प्रबुद्धबुद्धिसृष्टत्वात् सुषुप्तौ न लयश्रुतेः ॥ २७७

## APPENDIX - IIIA

## द्वैताकरग्रन्थेभ्यः उदाहृताः श्लोकाः

अनुव्याख्यानादुदाहृताः श्लोकाः

१. यथा चोलनृपः सम्राडद्वितीयोडस्ति भूपतिः ।
इति तत्तुल्य नृपतिनिवारणपरं वचः ॥
न तु तद्भ्रातृतत्पुत्रकलत्रादिनिवारकम् ।
एक एवाद्वितीयोऽसावाकाशे सवितेति वत्
एकमेवाद्वितीयं सदग्र इत्यपि योज्यताम् ।
(न्या. १६७)

२. यथा दृष्टया प्रसन्नः सन् राजा बन्धापनोदकृत् ।
एवं दृष्टः स भगवान् कुर्याद् बन्धविमोचनम् ॥
(२५६)

३. अतीतानागताश्चैव यावन्तः सहिताः क्षणाः ।
अतोप्यनन्तगुणिताः जीवानां राशयः पृथक् ॥
(२८८, २९२)

४. अपादानत्वमेवास्य यद्युपादनतेष्यते ।
अङ्गीकृतं तत्पितृवन्न तु विश्वात्मना भवः ।
(प्र. ४०५)

५. अहमित्येव यो वेद्यः स जीव इति कीर्तितः ।
स दुःखी स सुखीचैव स पात्रं बन्धमोक्षयोः ॥
(न्या. ४९०)

६. असद्विलक्षण ज्ञस्यै ज्ञातव्यमसदेवहि ।
तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥
अन्यथात्वमसत्तस्मात् भ्रान्तावेव प्रतीयते ।
सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ॥
तस्यानिर्वचनीयत्वे स्यादेव हि अनवस्थितिः ॥
(न्या. ५९९, ६०२)

७. दुर्घटत्वे भूषणं चेत्स्यादविद्यात्वमात्मनः ।
अन्धंतमोप्यलंकारो नित्यदुःखं शिरोमणिः ॥
(न्या. ४४४)

८. निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेत् ।
मिथ्याविशेषोऽप्यज्ञानसिद्धिमेवह्यपेक्षते ॥
(न्या. ४५३)

इतरद्वैताकरग्रन्थेभ्यः उदाहृताः श्लोकाः

९. नित्यानन्दः परो विष्णुः तमाप्तः सुप्त उच्यते ।
संप्राप्य तमजं जीवः कामयेन्नैव किञ्चन ।
न च स्वप्नसमभ्रान्तिज्ञानं याति कदाचन ।
सुषुप्तौ च किमज्ञानान्मुक्तौ प्राप्तो जनार्दनम् ॥
(बृहदारण्यकभाष्यकम्) (तर. २१३)

१०.निहितो भगवान् यत्र हिता नाड्यः प्रकीर्तिताः।
नानावर्णो हरिस्तासु नानारूपी व्यवस्थितः ।
तासां मध्ये सुषुम्ना च तत्र सुप्तिं व्रजत्ययम् ।
ता एव कण्ठदेशस्थाः जीवस्तत्र व्यवस्थितः ।
स्वप्नान् पश्यति जाग्रद्वद् भयं च प्रतिपद्यते ॥
अ इत्यादिश्यते विष्णुरविद्या तन्निरीक्षणम् ।
तेन स्वप्नानयं पश्येत् जीवो जागरितं तथा ॥
(बृहदारण्यकभाष्यम्) (तर. २१४)

११.तेनाश्लिष्टः स्वपुत्राणां दायादानां न वै पिता ।
तेषां दुःखाददुःखित्वात् न माता लोकमान्यपि ॥
अलोकमान्नो लोको देषोऽपि स्वाधिकारतः ।
वर्षणादेर्व्युत्थितत्त्वान्न देवो देवमान्यपि ॥
-अवेदमानान्नो वेदः पापी पापफलाप्ययात् ।
अपापः श्रमणश्चापीत्यादि
(बृहदारण्यकभाष्यम्)(तर. २१५)

१२.भूमा नारायणाख्यः स्यात् स एवाहं कृतिः स्मृतिः ।
जीवस्थस्त्वनिरुद्धो यः सोऽहंकार इतीरितः ॥
अणुरूपोऽपि भगवान् वासुदेवः परो विभुः ।
आत्मेत्युक्तः स च व्यापी
(छान्दोग्यभाष्यम्,) (न्या. ४८७)

१३.अनिरुद्धो हि लोकेषु महानात्मा परात् परः ।
योऽसौ व्यक्तत्वमापन्नो निर्ममेच पितामहम् ॥
सोहङ्कार इति प्रोक्तः सर्वतेजोमयो हि सः ॥
मोक्ष धर्मः (न्या. ४८७)

१४.महत्तत्त्वाद्विकुर्वाणाद् भगवद्वीर्य चोदितात् ।
क्रियाशक्तिरहंकारः त्रिविधः समपद्यत ॥
वैकारिकस्तैजसश्च तामसश्चेत्यतो भवः ।
मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥
(स्मृतिः,) (न्या. ४८७)

१५.उपाधिभेदाद् घटत इति चेत् स स्वभावतः ।
अज्ञानतो वा द्वैतस्य सत्यता स्वत एव चेत् ॥
अनवस्थितिरज्ञानहेतौ वा अन्योन्यसिद्धता ।
चक्रकापत्तिरथवा (उपाधिखण्डनम्) (प्र. ४३८)

## APPENDIX - III B
## अद्वैताकरग्रन्थेभ्यः उदाहृताः श्लोकाः

सुरेश्वर वार्तिकादुदाहृताः श्लोकाः

१. परागर्थप्रमेयेषु या फलत्वेन संमता ।
संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥
(न्या. ३, १-१-१५९)

२. यत्प्रसादादविद्यादि सिद्ध्यतीव दिवातिशम् ।
तमप्यपह्नुतेऽविद्या नाज्ञानस्यास्ति दुष्करम् ॥
(सिद्धि. ६२, तर-७०)

३. तत्त्वमस्यादिवाक्योत्थसंयग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥
(सिद्धि. २५९)

४. प्रत्यग्याथात्म्यधीरेव प्रत्यगज्ञानहानिकृत् ।
सा चात्मोत्पत्तितो नान्यत् ध्वान्तध्वस्तावपेक्षते ॥
(सिद्धि. २५९, तर. २६१)

५. जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥
२७४,

६. न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः ।
कालाद्यनवधानत्वान्न ह्यात्मस्थमतीतभाक् ॥
(सिद्धि. ३३७)

७. न भूतकालस्पृक्प्रत्यङ् नचागामिस्पृगीक्ष्यते ।
स्वार्थदेशः परार्थोऽर्थो विकल्पस्तेन संस्मृतः ॥
(सिद्धि. ३३७)

८. न चेदनुभवव्यक्तिः सुषुप्तस्थाऽभ्युपेयते ।
नावेदिषं सुषुप्तोऽहमिति धीः किं बलाद्भवेत् ॥
(सिद्धि. ३३७)

९. अविद्याया अविद्यात्व इदमेव तु लक्षणम् ।
मानाधातासहिष्णुत्वमसाधारणमिष्यते ॥
(न्या. ४०६)

१०.राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥
(न्या. ४१५)

**संक्षेपशारीरकशारीरकादुदाहृताः श्लोकाः**

११.आश्रयत्वविषयत्वभागिनी
निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो
नाश्रयोभवति नादि गोचरः ॥
(न्या. ३३७, ४१२, सिद्धि. ४१६)

१२.बहु निगद्य किमत्र वदाम्यहं
श्रुणुत संग्रहमद्वयशासने ।
सकलवाङ्मनसातिगता चितिः
सकलवाङ्मनसव्यवहारभाक् ॥ (सिद्धि. १४)

१३.अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदा नितरां तद्विपरीतयोः ॥
(सिद्धि. १०२, तर. १०७, प्र. १२४)

**अन्याद्वैताकरग्रन्थेभ्यः उदाहृताः श्लोकाः**

१४.घटैकाकारधीस्था चिद्धटमेवावभासयेत् ।
घटस्य ज्ञातता ब्रह्मचैतन्येनावभासते ॥
(न्या. ३) (उपदेशसाहस्री)

१५.समारोप्यस्य रूपेण विषयो रूपवान् भवेत् ।
विषयस्य तु रूपेण समारोप्यं न रूपवत् ॥
(वाचस्पतिः) (न्या. ४८८, सिद्धि. ४९६)

१६.अविद्यायोनयो भावाः सर्वेमी बुद्बुदा इव ।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥
(सिद्धि. २७७, वासिष्ठवार्त्तिकामृतम्)

१७.तत्तेदन्ते स्वतान्यत्वे त्वत्ताहन्ते परस्परम् ।
प्रतिद्वन्द्वितया लोके प्रसिद्धे नास्ति संशयः ॥
(न्या. ५७)

१८.यावत्किञ्चिद्भवेदेतदिदं शब्दोदितं जगत् ।
इदं सर्वं पुरा सृष्टेरेकमेवद्वितीयकम् ॥
(न्या. १६५)

१९.वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयश्शिलादितः ॥
तदा सद्वस्तुना भेदत्रयं प्राप्तं निवार्यते ।
ऐक्यावधारणाद्वैतप्रतिषेधस्त्रिभिः क्रमात् ॥
(न्या.१६६, सिद्धि. १६८)

२०.स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम् ।
तच्चोभयं विनाऽविद्यासंबंधं नैव सिद्ध्यति ॥
(न्या. ४३९)

२१.स्वेनैव कल्पिते देशे व्योम्नि यद्वद्घटादिकम् ।
तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः
(न्या. ४४३, सिद्धि. ४४५)

२२.प्रश्नविश्रान्तिभूमित्वाच्चोद्यं तमसि नोचितम् ।
न बुद्धिमन्तः पृच्छन्ति न जानामीति वादिनम् ॥
(न्या. ४४४)

२३.आकाशादौ सत्यता तावदेका
प्रत्यङ्भावे सत्यता काचिदन्या ।
तत्संपर्कात्सत्यता तत्र चान्या व्युत्पन्नोऽयं
सत्यशब्दस्तु तत्र (सिद्धि. ६५७)

२४.उपाधिबाधप्रतिपक्षशून्यं
विपक्षबाधागमसव्यपेक्षम् ।
दृश्यन्तमव्याहृतसम्बरादि मिथ्यात्वसिद्धौ
सुदृढं हि मानम् (सिद्धि. ६५७)

# APPENDIX - IV A
## न्यायामृते अद्वैतसिद्धौ व्याख्यानत्रये च उदाहृतानि जैमिनीयसूत्राणि

१. चातुर्वर्ण्यमविशेषात् (VI-1-7-25) (प्र-१२३, (तर. १०६, कण्ट. ११६)
२. एकत्वयुक्तमेकस्य श्रुतिसंयोगात् (III-1-7-13) (तर. १०८, प्र. १२५)
३. शिष्ट्वातु प्रतिषेधः स्यात् (X-8-4) (कण्ट. १२१)
४. आधाराग्निहोत्रमरूपत्वात् (II-2-5-13)
५. पशुचोदनायामनियमोऽविशेषात् (VI-8-10-30, (तर. १७४)
६. छागो वा मन्त्रवर्णात् (VI-8-10-31) (तर. १७४, कण्ट. १७९, प्र. १८२)
७. प्रतिषेधः प्रदेशे अनारभ्य विधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् (VIII-८-१-१), (तर. १७३, कण्ट. १७८, प्र. १८२)
८. पौर्णमासीवदुपांशुयागः स्यात् (II-2-4-9) (प्र. १८१)
९. अधिकारे च मन्त्रविधिरतदाख्येषु अविशिष्टत्वात्, (III-2-8-20) (तर. १९१, कण्ट. १९७)
१०. सन्दिग्धेषु वाक्यशेषात्, (I-4-19-29) (तर. १९२, कण्ट. १९८, प्र. २०१)
११. आनन्तर्यमचोदना (III-1-14-24) (न्या. २०९, प्र. २१८)
१२. पदकर्माप्रयोजकं नयनस्य परार्थत्वात् (IV-1-10-25) (तर. २११, कण्ट. २१६)

## तरङ्गिणी कण्टकोद्धारप्रकाशेषु विस्तृततया निरूपितानि पूर्वमीमांसाधिकरणानि

१. शूद्रस्य अनधिकाराधिकरणम् (VI-1-7), (तर. १०६, प्र. १२३)
२. ग्रहसम्मार्जनाधिकरणम्, (III-1-7) (कण्ट. ११९, प्र. १२५)
३. अतिरात्रे षोडशिग्रहनिषेधस्य विकल्पताधिकरणम्, (X-8-3) (प्र-१२७)
४. चित्रादिशब्दानां यागनामताधिकरणम् (I-4-3) (तर. १३७, कण्ट. १५१, प्र. १५७)

५. आघाराद्यपूर्वताधिकरणम् (II-2-5)
६. छागस्यैवाग्नीषोमीयपशुताधिकरणम् (VI-8-10) (तर. १७४, कण्ट. १७९, प्र. १८२)
७. प्रदेशानारभ्य विधानयोर्निषेधस्य पर्युदासाधिकरणम् । (X-8-1) (तर. १७३, कण्ट. १७८, प्र. १८२)
८. उपांशुयाजापूर्वताधिकरणम्, (II-2-4) (प्र. १८१)
९. आग्नीध्रोपस्थाने प्रकृतानां मन्त्राणां विनियोगाधिकरणम् (III-2-8) (तर. १९१, कण्ट. १९७, प्र. २०१)
१०. वाक्यशेषेण सन्दिग्धार्थनिरूपणाधिकरणम् (I-4-19) (तर. १९२, कण्ट. १९८, प्र. २०१)
११. हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणम् । (III-1-14) (प्र. २१८)
१२. गवानयनस्य पदकर्माप्रयुक्तताधिकरणम् । (IV-1-10) (तर. २११, कण्ट. २१६)

# APPENDIX - IV B
## पूर्वमीमांसाकरग्रन्थेभ्यः उदाहृताः श्लोकाः

१. प्रतीतिव्यतिरेकेण विवक्षान्या न विद्यते ।
नित्यत्वाद्वेदवाक्यानां श्रुतोऽतो नाविवक्षितः ॥
ऋग्वेदादिसमूहेषु क्षेत्रज्ञा ये प्रतिष्ठिताः
तेषां वाऽयमभिप्रायः स्याद्विवक्षाविवक्षयोरिति ॥
स्यात्कर्मैकत्वयुक्तं यद्विधानं वापि वैदिकम् ।
द्रव्यस्यैकस्य तज्ज्ञेयमनुष्ठेयं च कर्तृभिः ॥
व्यक्तीरुद्दिश्य यत्कर्म स्वजात्याद्युपलक्षिताः ।
विहितं गुणभावेन तत्सर्वार्थं प्रतीयते ।
श्रुतमात्रस्य सर्वस्य नानुष्ठेयत्वमिष्यते ।
विधानविनियोगी हि तत्रापेक्ष्यौ श्रुतौ श्रुतौ ॥
मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति ।
लोकदृष्टीः प्रतिघ्नन्ति वचनव्यक्ति पांसुभिः ॥
सर्वप्रकारमन्विष्टं वचनव्यक्तिभिः पृथक् ।
न शक्यते विधानं तदेकत्वं न ग्रहीष्यते ॥
(तर. १०९-११०)

२. प्रमाणस्याप्रमाणत्वकल्पना च द्विदोषभाक्
प्रमाणत्वं प्रतीतं यदुज्ज्वलं तदपुन्हतम् ॥
एकस्तावदयं दोषः स्यात्प्रतीतिविपर्ययात् ।
तथा तदप्रमाणत्वं यदभावप्रमाणकम् ॥
भावेपि सत्यभावेन विनैव परिकल्प्यते ।
सोपि स्यादपरो दोषः प्रमाणार्थविपर्ययात् ॥
तया तदप्रमाणत्वं यदभावप्रमाणकम् ।
भावेऽपि सत्यभावेन विनैव परिकल्प्यते ॥
सोऽपि स्यादपरो दोषः प्रमाणार्थविपर्ययात् ।
अङ्गीकृत्यपि तौ दोषौ पूर्वकत्वेन हेतुना ॥
प्रयोगान्तरकालेच पुनर्दोषद्वयं भवेत् ।
यदभावप्रमाणत्वं पूर्वमेतस्य कल्पितम् ॥
सम्प्रत्यपन्हुवानस्य दोष एको हि जायते ।
प्रत्यक्षं दृढरूपं च यत्पुरस्तात् निराकृतम् ॥
उपजायेत दोषोऽन्यः तदुज्जीवयतः पुनः ।
एवमेकत्र चत्त्वारो वाक्ये दोषाः प्रदर्शिताः ॥
(तर. ११२)

तत एव प्रसज्येरन् द्वितीयेऽपि प्रकल्पिते ।
एवमेवाष्टदोषोऽपि यद्व्रीहियववाक्ययोः ।

विकल्प आश्रितस्तत्र गतिरन्या न विद्यते
व्रीहौ कृते यवस्योक्तेः प्रमात्वत्यागकल्पने ।
यवे नैवं चेति दोषाः व्रीहेश्चैवं द्वयेष्टते ॥
(तर. ११२, ११३)

३. असन्निकृष्टवाचाहि द्वयमत्र जिहासितम् ।
ताद्रूप्येण परिच्छेदः तद्विपर्ययतोपिच ॥
विषयाविषयौ ज्ञात्वा तेनोत्सर्गापवादयोः ।
बाधाबाधौ विवेक्तव्यौ न तु सामान्यदर्शनात् ॥
अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते ।
अन्यश्च परिपूर्णेन समस्ताङ्गोपसंहृतौ ॥
(न्या. १२९, सिद्धि. १२२)

४. विरुद्धवत्प्रतीयन्ते आगमा अत्र ये मिथः ।
तत्र दृष्टानुसारेण तेषामर्थोन्ववेक्ष्यते ॥
(न्या. १२९, सिद्धि. १३२)

५. श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने
लक्षणावाक्यभेदादिदोषो नानुमितेह्यसौ ॥
(तर. १३८)

६. नावान्तरक्रियायोगादृते वाक्योपकल्पितम् ।
गुणद्रव्यैः कथं भावैः गृण्हन्ति प्रकृताः क्रियाः॥
(तर. १३८)

७. गुणवाक्योपपत्त्यर्थं समभिव्याहृतेन च ।
अनाख्यानार्थवादाच्च नामधेयत्वमाश्रितम् ॥
(तर. १३९)

८. प्रत्यक्षाद्युपयोगं तु वर्णमात्रादितः पुरः ।
शास्त्रार्थज्ञानवेलायां मत्वा तल्लक्षणं कृतम् ॥
(तर. १४१)

यथा च चोदनाशब्दो वेदिक्यामेव वर्तते ।
शब्दज्ञानार्थविज्ञानशब्दौ शास्त्रे तथा स्थितौ ॥
(तर. १४१)

प्रमितस्य प्रमाणे हि नापेक्षा जायते पुनः ।
ताद्रूप्येण परिच्छिन्ने प्रमाणं निष्कलं परम् ॥
विपरीतपरिच्छिन्ने नावकाशः परस्य तु ।
मूले तस्य ह्यनुत्पन्ने पूर्वेण विषयो हृतः ॥
(तर. १४१)

उत्सर्गश्चापवादश्च सर्वत्रैवोपलक्ष्यते
तत्र नोत्सर्गमात्रेण सर्वमेवावरुध्यते ॥
(तर. १४२)

योहि सामान्यदृष्टेन व्यवहारं निनीषति ।
तृष्णाच्छेदो भवेत्तस्य मृगतृष्णा जलैरपि ॥
(तर. १४२)

सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैः सह
एकवाक्यतया युक्तमुपदेशं प्रतन्वते ॥
(तर. १४२)

९. मीमांसालक्षणस्तर्कः सर्ववेदसमुद्भवः ।
सोऽतो वेदोरुमाप्राप्तकाष्ठादिलवणात्मवत् ॥
(तर. १५०)

१०.तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः ।
देवता सन्निधिस्तत्र दुर्बलं तु परस्परम् ॥
प्रकृतानामसद्भावात् गम्यते नानुवादिता ।
यागो विष्ण्वादिसंयुक्तै र्नहि वाक्यैर्विधीयते ॥

११.अग्निष्टोमपशुः कोऽपि छागो वेति च संशये ।
विशेषाश्रवणात् कोऽपि छागो मन्त्रे विशेषणात्॥
(प्र. १८३)

१२.एकदेशापवादेन कल्प्यमाने च बाधके ।
न सर्वसाधनं युक्तमिति न्यायविदः स्थितिः ॥
(न्या. १८५)

१३.क्रतुकार्यविशेषोऽयं मन्त्रस्यास्योपदिश्यते ।
सामान्यप्राप्त्यपेक्षश्च विशेषो नित्यमिष्यते ॥
(तर. १९१)

१४.यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥
(न्या. २०९)

१५.किं प्राप्तं यद्यपेक्षत्वात् पदस्य पदिनी स्वतः ।
योग्यत्वात् संन्निधेश्चेहाप्यंगं स्यादेकहायनी

श्रुत्यास्याः क्रयशेषत्वेप्यन्यथानुपपत्तितः ॥
सन्निधेरितराङ्गत्वमपि स्यात् पशुधर्मवत् ।
प्रकृत्यर्थत्वबोधेपि शेषाणामुपदेशतः ।
विकृत्यर्थत्वमप्येषामतिदेशे न चेष्यते ॥
क्रयार्थायाः प्रसङ्गेन पांसुग्रहणसंभवात् ।
नदुर्बलप्रमाणेन कल्पनीया तदर्थता ॥ (तन्त्रसार)
(प्र. २१८, तर. २१२)

न तावदेकवाक्यत्वं दृश्यते योग्यता समा ।
अवान्तरकथं भावस्तदानीं न च गम्यते ॥
(तर. २१२, १३)

१६.यदि न स्यात् ततः किं स्यात् ।
स्याच्चेत् तन्नास्तिको हतः ॥
(यदि न्याय) (कण्ट. २१६)

## न्यायामृते अद्वैतसिद्धौ व्याख्यानत्रये च तत्र तत्र उल्लिखिताः पूर्वमीमांसाविचाराः

१. यागे व्रीहिभिः यजेतेति व्रीहीणां तण्डुलपिष्टपुरोडाशद्वारा हेतुत्वबोधनवत् (तर. ७८)
'ननु निदिध्यासनसाध्यब्रह्मापरोक्षे श्रवणादेः हेतुत्वे एकार्थत्वात् विकल्पः स्यात्' इति आक्षेपपरिहारार्थम्' उपरितनपूर्वमीमांसाप्रकारमुदाहृत्य इहापि उत्तरद्वारा पूर्वस्य हेतुत्वसम्भवात् न विकल्पः इत्युक्तम् ।

२. 'स्वर्गकामो यजेत' इत्यादिविधेः उपजीव्याग्निविद्यावद्विषयकत्वेनेव' (न्या. ९८)
द्वैतनिषेधस्य स्वोपजीव्ययोग्यतादीतरविषयकत्वेन संकोचः इति निरूपणावसरे उपरि निर्दिष्ट मीमांसा विचारः प्रस्तुतः ।

३. तदुक्तं टीकाकृद्भिः 'उत्पादकाप्रतिद्वन्द्वित्वादि'ति । (सिद्धि. १०१)
उपजीव्यस्य न बाधः इति निरूपणावसरे उपरितनं वाक्यमुदाहृतम्

४. मानान्तरप्राप्त्या वा यथा वायु क्षेपिष्ठत्वादौ, विरोधाद्वा यथा आत्मवपोत्खननादौ, उद्देश विशेषणत्वादिना वा यथा गृहैकत्वादौ (न्या. ९९)
उपलक्षिते द्वितीयाभावे श्रुतेः तात्पर्यं नास्ति इति अद्वैतिनः अभिप्रायस्य निरूपणावसरे उपरितनपूर्वमीमांसान्यायाः उदाहृताः ।

५. 'अर्थवादाधिकरणे वायुक्षेपिष्ठादिवाक्यानां स्वार्थे तात्पर्याभावेन प्रामाण्याभावेपि लक्षितप्राशस्त्यद्वारेण विधेः इति कर्तव्यतासमर्थकतया विध्यर्थे तात्पर्यात् प्रामाण्यमुक्तम्'

६. यथा आत्मवपोत्खननादाविति । अर्थवादाधिकरण एव प्रजापतिरात्मनो वपामुदखिददित्यादेः प्रमाणान्तरविरुद्धार्थतया स्वार्थे न तात्पर्यम् । (कण्ट. ११८)

७. उपांशुयाज वाक्यमध्यस्यविष्ण्वादिवाक्यवत् (न्या. १६५, तर. १७१)
द्वैतवाक्यमध्यस्याद्वैतवाक्यं पूर्वोत्तरद्वैतवाक्यानुसारेण नेयमिति निरूपणाय अयं पूर्व-मीमांसाविचारः प्रस्तुतः

८. यदिन्यायः, पदिन्यायः (कण्ट. २१६)

# APPENDIX - V

## इतरग्रन्थेभ्यः उदाहृताः श्लोकाः विषयाश्च

१. सद्दशादृष्ट चिन्ताद्याः स्मृतिबीजस्य बोधकाः (तर. ७३)

२. इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यश्रुतत्वाद्वेदो मामयं चालयिष्यति ॥ (तर. १४१)

३. एक एवाद्वितीयोऽसावश्वमेधः क्रतुष्वपि ।
एक एवाद्वितीयोऽसौ प्रणवो मन्त्र उच्यते ॥ (न्या. १६६)

४. ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः ।
अद्वितीयो महाविष्णुः पूर्णात्वात्पुरुषः स्मृतः ।
भेदाभेदनिवृत्यर्थमेव शब्दोऽवधारकः ॥ (न्या. १६७)

५. ब्रह्मादयो हि भूतानि तेषामन्तर्गतो हरिः ।
समस्स सर्वभूतेषु य एवं वेद तत्त्ववित् ॥ (न्या. १८४, महाभारतम्)

६. भवेदेकत्र संयोग इव शब्दो विरुद्धयोः ।
धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षिते । (न्या. १८१)

७. कविर्नृचक्षा, अभिषीमचष्ट ऋतस्य यौना विधृते मदन्ती
नाना चक्राते सदनं यथावेः समानेन क्रतुना संविदाने ॥ (ऋ.सं. III-54-6) (तर. १९४)

८. शश्वन्तो हि शत्रवो रारधुष्टे भेदस्य चिच्छर्धतो विन्द रन्धिम् ।
मर्ता येन स्तुवतो यः कृणोति तिग्मं तस्मिन्निजहि वज्रमिन्द्र (ऋ.सं. VII-18-18) (तर. १९५)

९. आवदिन्द्रं यमुना तृत्सवश्च, प्रात्र भेदं सर्वताता मुषायत् ।
अजासश्च शिग्रवो यक्षदश्च बलिं शीर्षाणि जभ्रुरश्व्यानि । (ऋ.सं. VII-18-19) (तर. १९५)

१०. एवं ज्ञाने तु भगवाननादिः पुरुषोत्तमः ।
प्रसीदति ततस्तिस्मिन् प्रसन्ने क्लेशसंक्षयः ॥

११. उभे सत्ये क्षत्रियाद्यप्रवृत्ते मोहो मृत्युः सम्मतोऽपि कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादादमृतत्वं ब्रवीमि (भारतम्, न्या. ७६९)

१२. यदिदं श्रुणोमि मृत्युर्हि नास्तीति तवोपदेशम् ।
देवासुरा अचरन् ब्रह्मचर्यममृत्येव तत्कतरन्नु सत्यम् ॥ (सनत्सुजातीय तर. २७०)

१३. यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ (सिद्धि. ३२९)

१४. अनुकूलेन तर्केण सनाथे सति सनाथे ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसंभवः ॥ (प्र. ३९०)

१५. मयश्च शंबरश्चैव महामायाधरौ तथा ।
पार्जन्यवारुणी माये व्यधत्तां वारिविक्षरे ॥ (न्या. ३९३, हरिवंशम्)

१६. ऋ शगताविति धातोस्तु पूर्वावगतवत्सदा ।
स्थितेर्ब्रह्मर्तमित्युक्तमनृतं परिणामतः ॥ (कण्ट. ३९७, प्र. ३९९)

१७. अन्यश्च परमो राजन् तथान्यः पञ्चविंशकः ।
तान्यहं वेद सर्वाणि न त्वं वेत्त परंतप ॥ (न्या. ४१६)

१८. न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित् प्रवर्तते ।
यादृच्छिक त्वात् स्वप्नस्य तूष्णीमास्येत पण्डितैः । (वार्तिके बौद्धं प्रति)

